ब्रह्ममुनिग्रन्थमालायाः पुष्पसंख्या ६२

# निरुक्तसम्मर्शः

## आचार्यशैल्यनुसारि विवेचनात्मकं निरुक्तभाष्यम्

—

रचयिता प्रकाशकश्च—

स्वामी ब्रह्ममुनिः परिव्राजको विद्यामार्तण्डः

( गुरुकुलकांगडीविश्वविद्यालयस्थः )

—

पुस्तकप्राप्तिस्थानम्—

आर्य साहित्य मण्डल लि०, अजमेर

१९१७

# सम्मतयः—

वैदिकसाहित्ये यास्कीयनिरुक्तस्य गौरवशालि स्थानं सर्वेषामेव वैदिक-वाङ्मयाध्येतॄणां सुविदितमस्ति । अस्य निरुक्तस्य परिशीलनमन्तरा कोपि वेदोदधेरवगाहनं विधातुं न पारयति, निरुक्तस्योपरि प्राचीनैरर्वाचीनैश्चानेकै-र्भाष्यकारैर्भाष्याणि विरचितानि सन्ति । निरुक्ते बहवः सन्दर्भा नितान्तं दुर्बोधाः सन्ति, केचित् सन्दर्भास्तु केनापि भाष्यकारेण स्पष्टतया व्याख्यातुं नापार्यन्त । स्वामिवर्येण ब्रह्ममुनिना निरुक्तस्य स्वप्रतिभोत्थं नवीनं भाष्यं विरचितम्, अस्य भाष्यस्य मया प्रथमाध्यायस्य प्रथमः पादोऽवलोकितोऽस्ति । स्वामिवर्यैः कृतमिदं भाष्यं प्रत्नभाष्येभ्यो बहुत्र भिद्यते, इदं भाष्यमत्यन्तं सरलया गिरा निबद्धमस्ति । मूलग्रन्थस्य व्याख्यानं विस्तृतं विशदं चास्ति । संस्कृतभाषायाः सामान्यमपि ज्ञानमधिकुर्वाणोऽध्येताऽस्य भाष्यस्य साहाय्येन निरुक्तं सम्यक्तयावबोद्धुं पार-येत् । यास्काचार्याः स्वकीयस्थापनानां समर्थनेऽनेकत्र वेदमन्त्रान् नोदाहरन्, मन्त्रोदाहरणाभावे प्रतिपाद्यविषयस्य स्पष्टीकरणं न सम्भवति । स्वामिवर्यैः श्रीब्रह्ममुनिमहाभागैरेषा न्यूनताऽपि दूरीकृता वर्तते । यत्र यास्काचार्यैर्वेदमन्त्राणा-मुदाहरणं न दत्तं तत्रापि स्वामिवर्येण संहिताभ्यः समुचिता वेदमन्त्रा मन्त्रखण्डा वा समुपन्यस्ताः सन्ति, येन ग्रन्थस्य परिशीलनं नितान्तं सरलं बोधकरं च जायते । इदं भाष्यं सर्वेषामेव निरुक्ताध्ययनकर्तॄणां कृतेऽत्यन्तमुपयोगि भविष्यति । छात्राः—अध्यापकाश्चोभयेऽप्यनेन भाष्येण महान्तं लाभमादास्यन्ते । अस्य भाष्यस्य निर्माणेन स्वामिपादाः सर्वेषां वेदाध्यायिनां धन्यवादार्हाः सन्ति । आशासेऽस्य भाष्यस्य निरुक्ताध्येतृवर्गे भूयान् प्रचारो भविष्यति ।

प्रियव्रतः (वेदवाचस्पतिः)
आचार्यः
गुरुकुलकांगडीविश्वविद्यालस्य

—

आर्यजगति सुप्रख्यातविपश्चिद्भिः स्वामिब्रह्ममुनिविद्यामार्तण्डमहाभागैर्निर्मितस्य 'निरुक्तसम्मर्शः' इत्याख्यस्य निरुक्तसंस्कृतभाष्यस्य प्रथमाध्यायगतप्रथमपादस्य पञ्चमाध्यायस्य च कतिपयानि स्थलानि कतिपयघण्टापर्यन्तं निरन्तरं मया तन्मुखादाकर्णितानि सावधानम्, नितान्तं प्रहृष्टोऽहमभवं मान्यस्वामिमहोदयैः वेदमन्त्राणां तत्खण्डानां वाऽऽध्यात्मिकाधिभौतिकाधिदैविकदृष्ट्या विविधं व्याख्यानं कृतं स्वकीयप्रतिभया । साम्प्रतं निरुक्ते येऽर्था उपलभ्यन्ते तदतिरिक्तानामितरार्थानामपि मान्यपरिव्राजकमहाभागैः स्वकीयवैदुष्यबलेन प्रतिभया च प्रदर्शनमकारि निघण्टुपठितपदनामसाहाय्येनेत्यवलोक्य विचारशीला विपश्चित आश्चर्यमिश्रितं हर्षं नूनमनुभविष्यन्ति तेन च ते वेदानां गाम्भीर्यं सम्यगवगमिष्यन्ति । मान्यस्वामिमहाभागानामनेन निरुक्तभाष्येण निरुक्तविषयिणीनामनेकभ्रान्तीनां निवारणं भविष्यति वेदार्थज्ञाने च भूयः साहाय्यं लप्स्यते येन स्वाध्यायशीला विद्वांसो लाभान्विता भविष्यन्तीत्यत्र न संशीतिलवोऽपि मे मनसि । प्रशस्यस्वामिमहाभागानां परिश्रमो मौलिकता चोभेऽत्यन्तमभिनन्दनीये ।

धर्मदेवो विद्यामार्तण्डः
(देवमुनिर्वानप्रस्थः)
आनन्दकुटीरम्, ज्वालापुरम्

---

सुप्रसिद्धविदुषाऽऽचार्यश्रीस्वामिब्रह्ममुनिना यास्कीयनिरुक्तस्य "निरुक्तसम्मर्शः" इति नाम्ना निर्मितं नूतनं भाष्यमवलोक्य नितरां प्रसन्नतानुभूयते मया । स्वामिमहोदयेन निर्मितानामन्येषां ग्रन्थानां समानमेवास्यापि भाष्यस्य शैली नवीनोहापोहेन गवेषणया च समुपेता । आर्षवैदिकपद्धतिमनुसरता ग्रन्थकृतात्राव्यैर्व्याख्याकारैरुपेक्षितानां कठिनस्थलानां स्पष्टीकरणार्थं विशेषतः प्रयतितम् । भाष्यमेतद् वैदिकपद्धतिदृष्ट्या नूनमत्युपयोगि संग्रहणीयं च भविष्यतीति मदीयो विचारः ।

डा० मङ्गलदेवः शास्त्री विद्यामार्तण्डः,
वाराणसेयसंस्कृतविश्वविद्यालयस्य पूर्वोपकुलपतिः,
वाराणसेयप्राच्यानुसन्धानपरिषदधिष्ठाता ।
इंग्लिशिया लाईन, वाराणसी २

# प्राक्कथनम्

मन्त्रार्थानां प्रकाशकं दीपकमिव खलु निरुक्तं शास्त्रम्, तस्य शाब्दिकमान्तरिकं च स्वरूपं प्रदर्श्यते ।

## शाब्दिकं स्वरूपं तावत्—

औषधस्य यथा रासायनिके द्वे स्थाने भवतः, एकं निर्माणस्थानं यत्र नानाविधानामोषधीनां वटीचूर्णादिकमौषधं निर्मीयते, द्वितीयं विश्लेषणस्थानं यत्र निर्मितस्य वटीचूर्णादिकस्यावयवाः पृथक् पृथक् क्रियन्ते परीक्षणार्थं यत् का का कियती कियती चौषधिर्वर्ततेऽस्मिन्नौषधे । तथैव शब्दविषयके द्वे शास्त्रे स्तः, तत्रैकं व्याकरणं येन शब्दस्य मूलभागान् गृहीत्वा शब्दो निर्मीयते, द्वितीयं निरुक्तं येन पूर्वतो निर्मितस्य शब्दस्यावयवाः पृथक् पृथक् क्रियन्ते तदर्थज्ञानाय । 'निर्' इत्युपसर्गपूर्वको वचिः पृथक्करणार्थे प्रयुज्यते, अत्र वेदः प्रमाणम् "यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत्" ( अथर्व० ९ । ८ । १० ) हे रोगिन् ! अहं चिकित्सकः सर्वेषां रोगाणां विषं त्वत्तो निरवोचं पृथक् कृतवान्—करोमि । एवं पूर्वतो वर्तमानस्य पुरातनस्य शब्दस्य विभागकरणशास्त्रं निरुक्तम् । इति निरुक्तस्य शाब्दिकं स्वरूपम् ।

आन्तरिकं स्वरूपं खलु द्विविधं परिमाणात्मकं विषयात्मकं च ।

## परिमाणात्मकं स्वरूपम्—

केचन निरुक्तं द्वादशाध्यायि शास्त्रं मन्यन्ते, केचित् त्रयोदशाध्यायकम्, अपरे चतुर्दशाध्यायसंवृत्तं पठन्तीति तथैव भिन्नभिन्नहस्तलेखा उपलभ्यन्ते । तद्यथा—द्वादशाध्यायान्ते "संव०····२९ वर्षे मासे वैशाखे बुधदिने समाप्तं शुभमस्तु" ( जोधपुरस्थपुरातत्त्वानुसन्धानमन्दिरस्य ५५७३ इतिसंख्याकायां हस्तप्रतिकायाम् * ) "त्रयोदशाध्यायात्मकं निरुक्तम्" ( बडोदास्थे प्राच्यविद्या-

---

* 'समाम्नायः' आरभ्य 'ताद्भाव्यमनुभवति' इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे" (सत्यव्रतः सामश्रमी) "भगवता यास्केन समाम्नायं नैघण्टुकनैगमदैवतकाण्डरूपेण त्रिविधं गवादिदेवपत्न्यन्तं निर्ब्रुवता नैगमदेवताकाण्डपठितानि पदानि प्रत्येकमुपादाय निरूपितानि" (देवराजयज्वा) ।

मन्दिरे ४५४० इतिसंख्याकायां हस्तप्रतिकायां १७०५ शके लिखितायाम् ) "त्रयोदशाध्यायाः—इत्युत्तरषट्कं समाप्तम्" ( अलवरस्थपुरातत्त्वमन्दिरस्य हस्त-प्रतिकायाम् ) तथा सर्वत्र चतुर्दशाध्यात्मका निरुक्तग्रन्था बहव उपलभ्यन्ते, यथा—बडोदाप्राच्यविद्यामन्दिरे २४८, ११७९७, २३३८, १५४८ इतिसंख्यायुक्ताः । जोधपुरे, अलवरे चापि संख्यारहिताः खलु बहवो ग्रन्थाश्चतुर्दशाध्यायात्मका दृष्टाः । स्कन्दमहेश्वरभाष्यपुस्तके त्रयोदशाध्यात्मकं सभाष्यं निरुक्तम्, दुर्गाचार्यभाष्यमपि त्रयोदशाध्यायपर्यन्तमेवास्ति परन्तु तत्र भाष्यपुस्तके चतुर्दशोऽध्यायः पाठरूपेणैव मुद्रितस्तु खल्वस्ति । स्वामिदयानन्देन त्रयोदशाध्यायस्य चतुर्दशाध्यायस्य च मन्त्रद्वयसम्बद्धं निरुक्तस्थं व्याख्यानमुद्घृतं तद्यथा—"सृण्येव जर्भरी तुर्फरी" ( ऋ० १० । १०६ । ६—"द्विविधा सृणिर्भवति भर्ता च हन्ता च" निरु० १ । १४ ऋग्वेदादिभाष्यभूमिकाया उपासनाप्रकरणे ) तथा "जातवेदसे सुनवाम सोमं····" ( ऋ० १ । ९९ । १ ) तत्र खल्वृग्भाष्ये "जातवेदस इति जातमिदं सर्वम्····" इति सर्वं निरुक्तव्याख्यानं दत्तम् । तत्र स्वामिना खल्वभावध्यायौ किलैक एवाध्यायः पञ्चाशत्खण्डात्मकस्त्रयोदशोऽध्यायो मतः परिशिष्टं यदुच्यते । तथा च सायणेनापि चतुर्दशाध्यायपर्यन्तं निरुक्तं मतं तत्रत्यं व्याख्यानं तेन दत्तम् "द्वा सुपर्णा द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ" (निरु० १४ । ३०) इत्यादि निरुक्ते गतम्—अस्य मन्त्रस्य व्याख्यानमनुसन्धेयम्" ( ऋ० १ । १६४ । २० सायणः ) अन्यत्रापि कश्चिन्निरुक्तग्रन्थे स एक एव त्रयोदशोऽध्यायश्चतुष्पादेव मतः । एवं द्वादशाध्यात्मकं निरुक्तं यद्वा सपरिशिष्टमित्यत्र सपरिशिष्टमिति पक्षो गरीयान् ।

### विषयात्मकं निरुक्तस्वरूपम्—

निघण्टुग्रन्थस्य यथोचितं व्याख्यानपुस्तकं यद्वा भाष्यं निरुक्तम् । निरुक्तस्य प्रथमोऽध्यायस्तु नैरुक्तप्रक्रियाभिधायी भूमिकारूपः, द्वितीयतृतीयाध्याययोः खलु निघण्टुग्रन्थस्य प्रथमद्वितीयतृतीयाध्यायानामेकार्थान्यनेकपदानि यथायोग्यं व्याख्यातानि तत्प्रकरणं च नैघण्टुकमिति नामतो घोषितं निरुक्ते यास्केन । निघण्टु-ग्रन्थस्य चतुर्थोऽध्यायस्त्रिखण्डात्मको निरुक्तस्य चतुर्थपञ्चमषष्ठाध्यायेषु व्याख्यातो यास्केन यस्य नैगमं काण्डं नाम दत्तं यत्रैकपदान्यनेकार्थानि सन्ति । यथा—'धन्व' शब्दो नैघण्टुककाण्डेऽन्तरिक्षनामसु पठितः "धन्व—अन्तरिक्षनाम" ( निघ० १ । ३ ) पुनः स एव 'धन्व' शब्दो नैगमकाण्डे पदनामसु चापि पठितः "धन्व पदनाम" ( निघ० ४ । २ ) अत्रास्यानेकार्थवत्त्वात्, नैघण्टुककाण्डगतस्य 'अन्तरिक्षस्य' अर्थस्य सूचना दत्ता "धन्वान्तरिक्षं धन्वन्त्यस्मादापः" ( निरु०

५ । ५ ) तत्र "तिरो धन्वाति रोचते" (ऋ० १० । १८७ । २—निरु० ५ । ५) इति यास्कोदाहृते मन्त्रे न केवलमन्तरिक्षमेवार्थो धन्वशब्दस्य, अन्यथा पदप्रकरणे पठनस्य वैयर्थ्यमापद्यते पिष्टपेषणदोषश्च भवति । अस्मिन्नेव मन्त्रे धन्वशब्दः प्रयुज्यतेऽन्यत्र मन्त्रेषु न, इत्यपि नास्ति । बहुषु मन्त्रेषु धन्वशब्दः प्रयुज्यते । पुनश्च धन्वशब्दस्य नान्तरिक्षाद् भिन्नोऽर्थं इत्यपि न, अन्यत्र मन्त्रेषु धन्वशब्दस्य मरुप्रदेशः, धनुश्चार्थः स्पष्टोऽस्ति, तद्यथा मरुप्रदेशार्थे "धन्वंनि प्रपा असि" (ऋ० १० । ४ । १) "·····धन्वाञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवातम्" (ऋ० १ । ३८ । ७) धनुषोऽर्थे "इषुर्न धन्वन् प्रति धीयते" (ऋ० ९ । ६९ । १) "·····धन्वना । तस्य साध्वीरिषवो·····" (ऋ० २ । २४ । ८) उदाहृतमन्त्रादन्यत्र मन्त्रे धन्वशब्दस्य नान्तरिक्षमर्थं इत्यपि न, अन्यत्र मन्त्रे धन्वशब्दस्यान्तरिक्षमर्थः स्पष्टतरः । तद्यथा—"अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्" (ऋ० १।३५।८) अन्तरिक्षार्थप्रदर्शनाय यास्कोदाहृतो मन्त्रस्तु दविष्ठः खलु दशममण्डलस्थः । तस्माद् यास्केन तथाविधो मन्त्र उदाहृतो यस्मिन् धन्वशब्दोऽनेकार्थकः । इत्थं नैगमप्रकरणेऽनेकार्थयोजना तत्तत्स्थलेऽस्मिन् भाष्ये द्रष्टव्या । निघण्टुग्रन्थस्य पञ्चमोऽध्यायः षट्खण्डात्मकः स च निरुक्ते सप्तमाध्यायमारभ्य द्वादशाध्यायपर्यन्तं व्याख्यातो दैवतकाण्डनामतः । यत्र देवतारूपस्य दिव्यवस्तुनो वर्णनं क्रियते स्वरूपं परिभाषा वा प्रदर्श्यते "तद्यानि नामानि प्राधान्यस्तुतीनां तद्दैवतमित्याचक्षते तदुपरिष्टाद् व्याख्यास्यामो नैघण्टुकानि नैगमानीह" (निरु० अ० १ पा० ६ ख० २०) अन्ते च परिशिष्टप्रकरणं निघण्टुगतपदानां व्याख्यानात् परिशिष्टं परितः शिष्टं सर्वतो भिन्नं नैघण्टुकनैगमदैवतेभ्यो निर्वचनेभ्यः सर्वतो भिन्नं निरुक्तस्य त्रयोदशचतुर्दशाध्यायात्मकं त्रयोदशाध्यायात्मकमेव वा पादचतुष्कं पञ्चाशत्खण्डात्मकमस्ति, तद्विवरणं तु तद्भाष्यप्रसङ्गे आगमिष्यति ।

## निरुक्तस्य फलनिर्देशः—

"अथाननुवितेऽर्थेऽप्रादेशिके विकारे—अर्थनित्यः परीक्षेत, न संस्कारमाद्रियेत" (निरु० अ० २ पा० १ ख० १) इत्यादिग्रन्थः । तत्र निर्वचप्रकारः—'कूपः' बहुनीचैर्गतो जलाशयः "कूपः कुपानम्" (निरु० ३ । १९) कुपानं कुत्सितं कठिनं पानं जलपानं यस्माद् भवति काठिन्येन जलपानस्य स्थानम् । व्याकरणे तु "कुयुभ्यां च पः—दीर्घश्च" (उणा० ३ । २७) 'जामाता' इति "जा अपत्यं तन्निर्माता" (निरु० ६ । ९) व्याकरणे तु "नप्तृ·····जामातृमातृपितृदुहितृ" (उणा० २ । ९६) इति निपातनम् । 'श्रोणि' इति "श्रोणिः श्रोणतेर्गतिचला-

कर्मणः ओषधिमतीव मच्छसः" ( नि० ४ । ३ ) व्याकरणे तु "....शु....ध्यो निच्—निः" ( उणा० ४ । ५१ ) 'द्वाः—द्वारः' "अथापि वर्णोपजनः....द्वारः" ( नि० २ । २ ) "द्वारो....वारयतेर्वा" ( नि० ८ । १० ) दकारोपजनेन वारणार्थे । व्याकरणे तु बाहुलकः शब्दः ।

## निरुक्ते भिन्नभिन्नवादवादिनां नामनिर्देशाः—

औपमन्यवः, औदुम्बरायणः, वार्ष्यायणिः, शाकटायनः, गार्ग्यः, आग्रयणः, आग्रायणः, और्णवाभः, कात्थक्यः, क्रौष्टुकिः, स्थौलाष्ठीविः, गालवः, चर्मशिराः, तैटीकिः, मनुः, शाकपूणिः, शाकल्यः, हारिद्रविकम्, आख्यानम्, ऐतिहासिकाः, नैरुक्ताः, याज्ञिकाः, पूर्वे याज्ञिकाः, नैदानाः, परिव्राजकाः, अधिदैवम्, अधिभूतम्, अधियज्ञम्, अध्यात्मम् ।

दैवतकाण्डे क्वचित् क्वचिदाङ्गलभाषायां देवतानां विवरणं यदस्ति तत्खलु श्रीमता 'डा० डी० डी० सोनी एम्, एस्, सी' इत्याख्येन कमलानगरदिल्ली-निवासिना कृतं स एव तद्विषये यशोभागेवमुत्तरदायी च ।

एतस्य विरचने गुरुकुलकांगडीविश्वविद्यालयप्रभृतीनां पुस्तकभवनेभ्यो यथा-लाभो गृहीतस्तेषामधिकारिणामाभारं मन्येऽहम्, होशयारपुरस्थविश्वेश्वरानन्द-वैदिकशोधसंस्थानग्रन्थभवनात्तु लाभविशेषं प्राप्तवान् तत्सर्वाधिकारिणामाचार्य-विश्वबन्धुमहामनसां त्वत्यन्तकृतज्ञोऽहम् ।

## विज्ञप्तिः—

एतस्य "निरुक्तसम्मर्शः" इतिनामकस्य निरुक्तभाष्यस्य विरचनं सत्यनेक-निरन्तरयोगार्थं बहुवर्षेषु साध्यं किलैकाकिना मया कृतमेकस्मिन्नेव वर्षे, यतः "को हि जानाति कस्याद्य मृत्युकालो भविष्यति" ( महाभारत० शान्ति० मो० अ० २७७ । १४ ) इति शैघ्र्याद् भाष्यकरणे बहूनि स्खलनानि जातानि । तत्र काश्चनाशुद्धयो मदीयानवधानतो जाताः, काश्चिदशुद्धयो मुद्रापणीयपुस्तक-लेखकानवधानतया वा सुलेखप्रतिकायां कृतास्ता आगताः, काश्चना-शुद्धयो मुद्रणाक्षराणामुपनिबन्धकैः कृताः सन्ति, रेफानुस्वारमात्राणां मुद्रण-काले त्रुटनादक्षराणां पतनाच्चाशुद्धयो जाताः । अन्ते शुद्धाशुद्धपत्रं दत्तमस्ति रेफानुस्वारमात्राणां त्रुटनादशुद्धिप्राचुर्यं जातं तन्नात्र परिगणितं तत्स्वयं विचार्य विज्ञाः पठन्तु । इति ।

स्वामी ब्रह्ममुनिः परिव्राजको विद्यामार्तण्डः ।

# निरुक्तसम्मर्शः

## [ आचार्यशैल्यनुसारि विवेचनात्मकं निरुक्तभाष्यम् ]

### प्रथमोऽध्यायः

तत्र

### प्रथमः पादः



समाम्नायः समाम्नातः स व्याख्यातव्यः ।

भा०—'समाम्नायः' इति विशिष्टो वैदिकपदवर्गो गवादिर्देवपत्न्यन्तः । 'समाम्नातः' क्रियाभिधायी। तत्र समाम्नाये 'सम्' इति शब्दः 'आम्नायः' इत्यनेन सह समासं प्राप्तः । आम्नायो वेदः "तद्वचनादाम्नायस्य प्रामाण्यम्" ( वैशे० १।१।३ ) * इति यथा "कुगतिप्रादयः" ( अष्टा० २।२।१८ ) प्रादिसमासः । तत्र "प्रादयः क्तार्थे" ( महाभाष्ये ) संसिद्धः—आम्नाये समाम्नायः, संसिद्धः—सम्यक् सिद्धः—प्रसिद्धः स्वविशिष्टस्वरूपेण संसिद्धः प्रसिद्धः—आम्नाये—ऋषीणां दृष्टिं प्रति स समाम्नायः स खलु समाम्नातः सम्यक् समन्तादभ्यस्तः संगृहीतः † सन्दर्भेऽस्मिन्निघण्टुनामकेऽनेकपदैकार्थतयाप्येकपदानेकार्थतया चेत्येवंविधया वर्गीकृतः स इदानीमत्र निरुक्ते ग्रन्थे व्याख्यातव्यः,—मया व्याख्यास्यते इति निरुक्तकार-वचनम् ।

तमिमं समाम्नायं निघण्टव इत्याचक्षते ।

भा०—तमेतं समाम्नायं वेदे सम्यक् सिद्धं गवादिदेवपत्न्यन्तं पदवर्गं 'निघण्टवः' । इति नामतो व्यक्तीरवलम्ब्य कथयन्ति समाम्नातारः संग्रहीतारो वैदिकाः प्राक्तनाः ।

---

* अत्र निरुक्तेऽपि "आम्नायवचनादहिंसा प्रतीयेत" (निरु० १।५)

† "म्ना अभ्यासे" (भ्वादि०) 'अभ्यासः—आभिमुख्येनादानम् । 'अभि अस्' 'अस्' धातुरादानार्थोऽत्र भौवादिकः" अस गतिदीप्त्यादानेषु" (भ्वादि०) ।

निघण्टवः कस्मान्निगमा इमे भवन्ति ।

भा०—तत्रैत्र निघण्टवः खल्वेते किमर्थमुक्ताः, उच्यते—यतो ह्येते निगमा भवन्ति, निगम्यन्ते नितरां ज्ञायन्ते मन्त्रार्था यैस्ते तथाभूताः सन्ति * ।

छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः ॥

भा०—छन्दोभ्यः—मन्त्रेभ्यः सम्यगाहृत्याहृत्य पृथक्पृथक्स्थानतः समानीय समानीय संगृहीताः सन्तः पृथक्श्रुतितोऽर्थनिश्चयहेतुत्वात् खलु निगमा निगन्तवः सन्तः सन्दर्भे ह्येकस्मिन् निहन्यमाना नैकट्येन पठ्यमानाः सन्तो वर्णव्यापत्त्या निघण्टव उच्यन्ते—इत्येवमौपमन्यवो नैरुक्त आचार्यो मन्यते ।

अपि वा हननादेव स्युः † समाहता भवन्ति यद्वा समाहृता भवन्ति ।

भा०—'अपि वा' विकल्पसम्भावनायाम् । अथवा न निगन्तवः सन्तो निघण्टवो वर्णव्यापत्त्या मन्तव्याः किन्तु यथास्वरूपं 'हन्' धातोरेव निघण्टवः'

---

* 'निगमाः' इति प्रयोगोऽप्प्रत्ययान्तः करणकारके "ग्रहवृदृनिश्चिगमश्च" (अष्टा० ३।३।५८) अकर्तरि कारकेविधानात्, दुर्गादिभिः कर्तरि कृतोऽर्थो न युक्तः॥

† मूलपाठ एष एव, अत्र सन्धिमवलम्ब्य भाष्यकारा एकादेशरूपमाकारं कल्पयित्वा 'वाऽऽहननादेव' इति पठन्ति, अर्थासाङ्गत्ये कल्पनया भवितव्यम् । अतू 'हन्' धातुः प्रयोगेऽभीष्टः स सोपसर्गोऽपि भवितुमर्हति न हि 'आङ्' उपसर्ग एवाभीष्यते 'समाहताः भवन्ति' अत्र 'सम्' उपसर्गस्यापि योगात् । तस्मात् केवलेन धातुनिर्देशेन भवितव्यम् । भाष्यकाराः स्वाभिप्रायेण सन्धिं कल्पयन्ति, यथा "…नोपपद्यते युगपदु…" अत्र दुर्गाचार्येण 'नोपपद्यतेऽयुगपदु…' (अ) अकारो मतः, पक्षे नापि मतः.। "वाऽऽहननादेव स्युः" इति स्कन्दमहेश्वरभाष्येऽपि कल्पितो दुर्गाचार्यवत् तद्वत् तस्य कल्पनया भवितव्यमेव दुर्गाचार्यभाष्यस्य पश्चात् स्कन्दमहेश्वरभाष्यमस्ति, उक्तंहि तद्भाष्यारम्भे "पूर्वटीकारैर्बर्बरस्वामिभगवद्दुर्गप्रभृतिभिर्विस्तरेण व्याख्यातस्य…" (स्कन्दमहेश्वरभाष्यम्) मूलपाठस्तु "अपि वा हननादेव स्युः" इत्येव, वैदिकयन्त्रालयस्य मुद्रितमूलपुस्तकेऽस्ति हि पाठ एषः, भवेत् स ऋषिदयानन्दाभिमतः । हस्तलिखितमूलपुस्तकेषु पाठ एष विद्यते हि तत्र । प्राच्यविद्यामन्दिरे बड़ौदास्थे—

संख्या १२३८ "वा हननादेव स्युः"

इति शब्दः स्यात्, तत्र हकारस्य घकारः खलु न्याय्यः 'घनः' आदिवत् समाहृताः खल्वेते सम्यग् व्यवस्थानेनाहृताः पठिताः—उच्चारिताः—घोषिताः—प्रथिताः प्रसिद्धीकृताः "आहत्य तृचो यच्छात्वं तद्वतिदिवयेतानाहत्य वा" ( तृज्वत्क्रोष्टुः । अष्टा० ७ । १ । ९५) इत्यत्र महाभाष्यम्—आहत्येति—उच्चार्योद्घोष्य—इति कैयटप्रदीपः ) नि० इति उपसर्गः 'सम्-सम्यक्' तथा 'आ—समन्तात्' उभावर्थौ प्रकाशयति तस्माद्धि निघण्टवः । 'यद्वा समाहृता भवन्ति' अथवा ते निघण्टवश्छन्दोभ्यः समाहृताः सम्यक् समन्तात् खलु निष्कासिता निःसारिताः, निःसारणात् समानयनात् ते निघण्टवः—इति प्रसिद्धीकृताः, उक्तं हि यथा पूर्वं 'समाहृत्य समाहृत्य समाम्नातास्ते निगन्तवः सन्तो निघण्टवः' गमधातौ समाहरणं हेतुः तत्र निघण्टुशब्दे हन् धातोरपि गतिरर्थोऽस्ति "हन हिंसागत्योः" ( अदादि० ) गतिश्चात्र प्राप्तिर्गृह्यते, गतेस्त्रयोऽर्थाः 'ज्ञानगमनप्राप्तयः' समाहरणं हि प्राप्तिः, समाहृता हि ते छन्दोभ्यः, स एव हेतुः 'गमधातोर्निष्पन्ने 'निगन्तवः' इति शब्दे स एव हेतुर्हनधातोर्निष्पन्ने 'निघण्टवः' इति शब्देऽपि पुनरावृत्तः 'यद्वा समाहृता भवन्ति' हन्धातौ गमधातो गतिमर्थं दृष्ट्वा । इति त्वेषोऽर्थसमाधिरर्थप्रदर्शनं वा 'ऋषिदर्शनात्' इतिवत्, 'निघण्टवः' शब्दस्य साधुत्वे गमेर्वा हनेर्वा पक्षद्वयमेव स्थितम्, हनेः पक्षो यास्केन स्वीकृतः साधितो वा । समाहृता भवन्ति यद्वा समाहृता हेतुद्वयमत्र हनधातौ सङ्गच्छते । वस्तुतस्त्वत्र पूर्वोक्तं समाहरणमप्युपचीयते—उपादीयते वा 'समाहृताः' इति सदृशशब्दसाहचर्यात् खल्वर्थसाहचर्यम् । न हि तृतीयः पक्षस्तद्विचारप्रसङ्गे मन्तव्यः । 'हननादेव स्युः' उक्तं पक्षान्यां न तु 'हरणादेव स्युः' इत्युक्तम् । एवकारश्च सिद्धपक्षस्य स्थापनाय प्रयुक्तः ।

तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्ग-निपाताश्च तानीमानि भवन्ति ।

भा०—तत्पुनर्यानि ह्येतानि लोके वेदे च प्रसिद्धानि लौकिकवाक्येषु वैदिक-

---

संख्या ४५३९ (४०) प्रतिलिपिः १७०५ शक० "वा हननादेव स्युः"
संख्या ११७९७ प्रतिलिपिकालः १६८१ शक० "वा हननादेव स्युः"
जोधपुरस्थे राजस्थानप्राच्यविद्याप्रतिष्ठाने—
संख्या ५५७३ "वा हननादेव स्युः"
होश्यारपुराख्यनगरस्थे विश्वेश्वरानन्दवैदिकशोधसंस्थाने—
संख्या १७५ । १६४६ शके "वा हननादेव स्युः" ।

वाक्येषु चोपयुक्तानि चत्वारि पदजातानि * पदकुलानि पदरूपाणि शब्दस्वरूपाणि सन्ति नामानि—आख्यातानि—उपसर्गाः—निपाताश्च तानि खल्विमानि सन्दर्भेऽस्मिन् निघण्टुशब्दवाच्यानि भवितुमर्हाणि। परन्तु तत्र नामानि पुनराख्यातानि हि स्वतन्त्राणि स्वातन्त्र्येण प्रयोगं प्राप्तुं स्वकीयार्थं च विधातुं शक्नुवन्ति, तस्मादत्र निघण्टुग्रन्थे छन्दोभ्यः समाहृत्य "गौः, ग्मा...." इत्यारभ्य "देवपत्न्यः" इत्यन्तं नामानि तथाऽऽख्यातानि च पठितानि। न खलूपसर्गा निपाताश्च तेषामस्वातन्त्र्यात्। कश्चिदाख्यातैः सह संयुक्तास्तूपसर्गा समाहृताः। यथा "आ वयति" अत्ति कर्मसु ( २। ८ ) "निवपन्तु, अवतरति, आतिरत्" वधकर्मसु ( २। १९ ) "विवासति" परिचरणकर्मसु ( ३। ५ )। कश्चिच्च नामभिः सह संयुज्यन्ते। यथा—"अभिख्या" प्रज्ञाननामसु ( ३। ९ ) "विपन्यवः" मेधाविनामसु ( ३। १५ ) "उपजिह्विका" द्विशो नामसु ( ३। २९ ) निपाताः खलु नामवाचकतया केचन समाहृतास्तद्यथा "ऋतम्" उदकनामसु ( १। १२ ) "शश्वत्, कुवित्" बहुनामसु ( ३। १ ) "हिकम्, नुकम्, सुकम्" सर्वपदसमाम्नाये ( ३। १२ ) "आनुषक्" पदनामसु ( ४। ३ ) परन्तु नैपातिकार्थपराः स्वतन्त्रा नोपलभ्यन्ते। अत्र निरुक्ते ह्युपसर्गा निपाताश्च विशिष्टाः सङ्कलितास्तेषामर्थविशेषज्ञापनाय।

तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि।

भा०—तत्र खलु नामादिषु नाम्न आख्यातस्य च लक्षणं प्रकृष्टं दिशन्ति प्रविभज्य स्थिरी कुर्वन्ति ह्याचार्याः, यत् खलु भावप्रधानं—क्रियाप्रधानं क्रियामेव प्राधान्येन यत् पदं लक्षयति ज्ञापयति तदाख्यातम्, आख्याते हि कृतं क्रियामणं करिष्यमाणं च वृत्तमिति, न हि तद् द्रव्यं सत्त्वं नाम वा ब्रवीति तदा नामपदं गौणं

* "सुप्तिङन्तं पदम्" (अष्टा० १।४।१४) इति तु नामाख्यातयोः साक्षाद् घटते "अव्ययादाप्सुपः" (अष्टा० २।४।८२) न साक्षात्पदत्वमुपसर्गेषु निपातेषु चोपलभ्यते परन्तूपसर्गनिपातयोरपि पदत्वं मत्वा कार्याणि विधीयन्ते। यथा—"आ ते कारो शृणवामा वचांसि...." (ऋ० ३।३३।१०) "पदात्—'आ' इत्युपसर्गादुत्तरस्य 'तव' इत्यस्य 'ते' अन्वादेशः "तेमयावेकवचनस्य" (अष्टा० ८।१।२२) तथा "शन्नो देवीरभिष्टये...." (यजु० ३६।१२) अस्मदो बहुवचनस्य 'नः' अन्वादेशः "बहुवचनस्य वस्नसौ" (अष्टा० ८।१।२१) 'शम्' निपातं पदं मत्वा कृतः। दुर्गाचार्येणान्यथा लिखितं व्याकरणे द्वे एव पदे यथा सुबन्तं तिङन्तं च।

भवति । सत्त्वप्रधानानि नामानि—सत्त्वं द्रव्यस्वरूपं प्रधानं येषु सत्त्वं द्रव्यमेव लक्षयन्ति ज्ञापयन्ति तानि नामानि भवन्ति, न हि तानि भावं क्रियां प्रदर्शयन्ति व्यञ्जयन्ति वा तदा क्रिया तु गौणी हि ।

तद् यत्रोभे भावप्रधाने भवतः ।

भा०—पुनर्यत्र पदसमूहे वाक्ये खलूभे नामाख्याते प्रयुक्ते स्यातां ते उभे क्रियाप्रधाने भवतः, क्रिया हि वाक्यस्यात्मा स्वरूपं वा तस्याः साध्यत्वात् । किं तदा नाम स्वरूपाद्धीयते ? न खलु हीयते स्वरूपात् किन्तु क्रियामनुसरत् तिष्ठति, तदा क्रियैवाभिप्रेयते दुःखमपाकर्तुं सुखं चाप्तुम् । भवतु तथोभाभ्यां युक्ते वाक्ये क्रियायाः प्रधानता परन्त्वत्र तत्कथनस्य कः प्रसङ्गः, नाम्नो लक्षणमथाख्यातस्य चापि लक्षणं तु कृतं हि पूर्वं तयोः परिज्ञानार्थम् ? इदं तर्हि क्रियायाः माहात्म्यं प्रदर्शितं भवति यत् क्रियावत् सद् यद्वा क्रियावत्त्वात् सत्त्वं द्रव्यं नामपदं भवति तथा क्रियातो निष्पन्नं च नाम पदं भवतीति सूच्यते हि "नामान्याख्यातजानि" ( निरु० १ । १२ ) ।

पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीति ।

भा०—क्रियायाः पूर्वप्रवर्तनादारभ्यापरप्रवर्तनपर्यन्तां क्रियामाख्यातेन पदेनैकेन कथयति ह्याख्यातज्ञः प्रयोक्ता वा, यथा व्रजति पचति । व्रजति कर्तृस्थक्रियायाः पचति कर्मस्थक्रियाया उदाहरणम् । व्रजति—इति कथने पूर्वव्रजनमारभ्य यावदन्तिमं व्रजनं स्यात् तावत् प्रवृत्ताः खलु व्रजनान्तर्गताः क्रियाः क्रियाभागा गन्तव्यमभिलक्ष्य ये भवन्ति ते सर्वेऽप्येकेनाख्यातेन 'व्रजति' पदेनोच्यन्ते । परन्तु व्रजता जनेन गन्तव्यमनभिलक्ष्य या क्रिया विधीयेत यथा व्रजन् सन् मार्गसमीपस्थक्षेत्रोद्यानेभ्यः फलादीनि त्रोटयति चोरयति चोरयित्वा भुङ्क्ते च रक्षकः स्वामी वा पृच्छति रे किं करोषि ? तदा 'व्रजामि' इति न वक्तुं शक्नोति । 'पचति' इति कथने पूर्वपचनमारभ्य यावदन्तिमं पचनं स्यात् तावत् प्रवृत्ताः पचनान्तर्गताः क्रियाः क्रियाभागाः पाकमभिलक्ष्य ये भवन्ति ते सर्वेऽप्येकेनाख्यातेन 'पचति' पदेनोच्यन्ते । परन्तु पचनकाले पाचकः कुक्कुरं ताडयति स च तीव्रं बुक्कति तच्छब्दं श्रुत्वा स्वामी पृच्छति रे पाचक ! किं करोषि ? तदा स 'पचामि' इति न वक्तुं शक्नोति ।

उपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरिति ।

भा०—उपक्रमः—आदिः, अपवर्गः—समाप्तिः । आदिमारभ्य समाप्तिपर्यन्तं भावं मनसि पिण्डीकृतं सत्त्वभूतं सत्त्वमिव कल्पितं सत्त्वनामभिराचष्टे * तद्वेत्ता यथा 'व्रज्या' कर्तृस्था 'पक्तिः' कर्मस्था । तदा भावः क्रिया नाम भूत्वा नामवल्लिङ्गसुब्विभक्तिभाग् भवति, इत्याख्यातस्यापवादः ।

अद इति सत्त्वानामुपदेशो गौरश्वः पुरुषो हस्तीति ।

भा०—अमुकम्—इति नाम गृहीत्वा यदमुकं वस्तु—इति कथनं सत्त्वानां भवति खलूपदेशः यथा गौः, अश्वः, पुरुषः, हस्ती—इत्युदाहरणम् ।

भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीति ।

भा०—भवति—धातुसामान्यनिर्देशः—क्रियासामान्यनिर्देशः प्रवर्तते क्रिया—इति भावस्योपदेशः, यथा—आस्ते शेते व्रजति तिष्ठति—इत्युदाहरणम् ।

इन्द्रियनित्यं वचनमौदुम्बरायणः ॥ १ ॥
तत्र चतुष्ट्वं नोपपद्यते ।

भा०—औदुम्बरायण आचार्यो ब्रवीति वचनम्—उच्यते यत् तद्वचनं ध्वनिर्ध्वनिरूपः शब्दस्त्विन्द्रियनित्यः, इन्द्रिये नित्यं यत्तदिन्द्रियनित्यं वचनं यावदिन्द्रियेणवागिन्द्रियेणोच्यते यावच्छ्रोत्रेन्द्रियेण श्रूयते तावदेव तस्य नित्यत्वं वर्तमानत्वं वचनस्य ध्वनेरुत्पत्तिविनाशधर्मित्वात् । तत्र किमित्युच्यते—तथाभूते वचने ध्वनावुच्चारणाच्छ्रवणात् प्रागूर्ध्वञ्चाविद्यमाने नामाख्यातोपसर्गनिपाता इति चतुर्विधत्वं नोपपत्तुमर्हति । स्थितानामेव विभागेन भवितव्यम्, विभागो ह्यपेक्षाकृतो भवति, नाम्न उच्चारणकाले श्रवणकाले वा गौरादि नाम भवति, न खलु तस्मिन्नेव काले भवत्याख्यातं पदं गच्छति प्रभृति, एवमाख्यातस्योच्चारणकाले श्रवणकाले वा भवत्याख्यातमेव न हि गौः प्रभृतिनाम न चोपसर्गनिपातौ, उपसर्गस्योच्चारणश्रवणकाले भवति खलूपसर्गः 'आ' प्रभृतिरेव. न तदानीमेव भवत्याख्यातं गच्छतिप्रभृति, निपातोच्चारणश्रवणकाले निपातो भवति 'च, वा' आदिः, न तदानीं नाम यद्वाऽऽख्यातं पदं भवति 'च' इति योगेन 'रामश्च लक्ष्मणश्च, भुङ्क्ष्व चाधीष्व च । इत्याक्षेपः शब्दस्य ध्वनिरूपत्वे प्रहितः ।

युगपदुत्पन्नानां वा † शब्दानामितरेतरोपदेशः शास्त्रकृतो योगश्च ।

---

* उक्तं हि सत्त्वप्रधानानि नामानि ।

† 'वा' इति निपातो दुर्गाचार्येण समुच्चयार्थे मतः, स्कन्दमहेश्वरभाष्ये पक्ष-

भा०—युगपदुत्पन्नानां वा शब्दानां स्वीकारेऽथवा पूर्वतः सर्गादौ युगपदुत्पन्नाः शब्दाः सन्तीति मन्तव्ये—इतरेतरोपदेशः शास्त्रकृतो योगश्च 'नोपपद्यते' इत्यनुवर्तते । इतरेतरोपदेशोऽन्योऽन्यस्याश्रयाश्रयिभावकथनं यथा शब्दसमूहे वाक्ये तथा व्युत्पाद्यमाने शब्दे च भवति । वाक्ये खलूच्यतेऽयं कर्ताऽस्येदं कर्मकरणमिदं चास्य क्रिया व्रजति पचति—इति । शब्दव्युत्पत्तौ—कर्तरि प्रथमा कर्मणि द्वितीया विभक्तिः, कर्मणि भावे चात्मनेपदं तत्र यक् प्रत्ययो विकरणं यकि किति स्यादाकारस्य—ईकारो दीयते "घे विभाषा" ( अष्टा० ६।४।४३ ) खनधातोर्नकारस्य विकल्पित आकारः 'खायते, खन्यते' झलि किति प्रत्ययेऽनुनासिकलोपः 'गतः गत्वा, मतः, मत्वा' अस्मिन् काले वर्तमाने भूते भविष्यति वाऽर्थे लकारोऽयं प्रत्ययः, अस्मिन् प्रत्यये सत्येभिर्लोपागमवर्णविकारैर्भवितव्यमितीतरेतरोपदेशो नोपपद्यते तेषां शब्दानां पूर्वत एव युगपदुत्पन्नत्वात् खलु पूर्वतः खलूत्पन्नं वस्तु कथमन्येन पुनरुत्पाद्येत । पूर्वं आक्षेपः शब्दानां व्वनिरूपत्वे—आसीत् । शब्दानां पूर्वतो युगपदुत्पद्यमानतास्वीकारे खल्वाक्षेपोऽयम् । तत्रैव शब्दानां युगपदुत्पत्तिमत्त्वे 'शास्त्रकृतो योगश्च नोपपद्यते' आक्षेपोऽपरः । शास्त्रं-वेदः, * वेदप्रतिपादितो योगो नियोगोऽनुष्ठेयविधिर्वा नोपपद्यते यदि ते शब्दा

---

व्यावृत्त्यर्थः स्वीकृतः, अस्माभिस्तु पक्षान्तरेऽप्याक्षेपपरो विकल्पार्थोऽङ्गीकृतः । "युगपदुत्पन्नानां····" इति प्रसङ्गे दुर्गाचार्येण पूर्वस्यां व्याख्यायां सन्धावेकादेशं पूर्वरूपं प्राप्तमकारं मत्वा 'अयुगपदुत्पन्नानाम्' इति पाठः कल्पितः खल्वाक्षेपपरः, द्वितीयायां व्याख्यायां 'युगपदुत्पन्नानाम्' इति पाठो मतः समाधानपरः । 'शास्त्रकृतो योगः' इति वचनं स्कन्दमहेश्वभाष्ये चतुर्धा कल्पितं पूर्वकल्पनायां षष्ठयन्तं 'शास्त्रकृतः' पदं मतम्, अन्यत्र त्रिषु स्थानेषु अथवा, अथवा इति कृत्वाऽर्थोऽपि चतुर्विधो वैकल्पिकः कृतः । किमनेन वाग्जालेनेव वर्णनेन ? आचार्यशैल्या तु "व्याप्तिमत्त्वात् शब्दस्याणीयस्त्वाच्च" इत्यत्र हेतौ पञ्चमीविधानात् खलु समाधाने द्वे । "तत्र चतुष्ट्वं नोपपद्यते शास्त्रकृतो योगश्च" इति पाठे त्वाक्षेपद्वयेन हि भवितव्यम् । तथा ह्यस्मद्भाष्ये विव्रियते तत्र पश्यन्तु विपश्चितः ।

* केचिन्मन्यन्ते शास्त्रशब्दो नवीनोऽस्ति, ते मन्येरन् परन्तु शास्त्रशब्दो न नवीनः "शास्त्रप्रमाणका वयम्" (महाभाष्ये) अपि तु वेदे शास्त्रशब्द उपलभ्यते "न हि षस्तव नो मम शास्त्रे अन्यस्य रण्यति ।" (ऋ० ८।३३।१६) यद्येवं भवतु शास्त्रशब्दपुरातनः परन्तु वेदवाचको न पुरातनः तदपि प्रतिविधीयते—अस्ति वेदवाचकः शास्त्रशब्दः पुरातनः, वेदान्तदर्शने "शास्त्रयोनित्वात्" (वेदा० १।१।२) अत्र शास्त्रं स्पष्टं हि वेदवाचकम्, उक्तं च शाङ्करभाष्येऽपि

युगपदुत्पन्नाः सन्तोऽनुष्ठातृन् प्रत्यनुष्ठेयानां नियोगं विधानं ज्ञापयेयुः । न हि पूर्वतः सकृदुत्पत्तिमन्तः सन्तो यथाधिकारं शासनमुपदेष्टुमर्हाः, तैर्यथादेशं यथाकालं यथापात्रं नोपदेष्टुं शक्यम् । यथा "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" ( यजु० ४०।२ ) "त्यक्तेन भुञ्जीथाः" ( यजु० ४०।१ ) इति प्रथम-मध्यमपुरुषाभ्यां विधानम् "तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि" ( ऋ० ६। १६।११ ) वर्तमानकालस्य विधानम् "ओं क्रतो स्मर" ( यजु० ४०।१५ ) सम्बोध्य विधानं कथं स्याद्यत्वे, इत्यपर आक्षेपः ।

व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके । तेषां मनुष्यवद्देवताभिधानं पुरुष-विद्यानित्यत्वात्, कर्मसम्पत्तिर्मन्त्रो वेदे ।

भा०—शब्दा व्याप्तिमन्तः सन्ति न हि ध्वन्यात्मका ध्वनिकाले हि वर्त-मानाः शब्दशास्त्रज्ञैर्मन्यन्ते किन्तु व्याप्तिमन्तः स्वीक्रियन्ते, ध्वनिर्नोच्चारणात् प्रागूर्ध्वं वा श्रूयेतेति न क्षतिः । ते तु व्याप्ताः सन्ति तज्ज्ञातृणां मनसि तथाऽऽ-काशगुणत्वाच्चाकाशे व्याप्ताः सन्त्याकाशवत् । तस्मात्तेषां नामाख्यातोपसर्ग-निपातात्मकं चतुष्ट्वं सिध्यति हि—इति चतुष्ट्वानुपपन्नतायाः समाधानम् । पुनश्च युगपदुत्पत्तिमत्त्वे शब्दानामितरेतरोपदेशो नोपपद्यते—इत्याक्षेपः कृतः सोऽपि समाधीयते शब्दानां व्याप्तिमत्त्वादेव वाक्ये कर्तृकर्मक्रियाणां सापेक्ष इतरेतरोप-देशस्तथा व्युत्पत्तौ प्रकृतिप्रत्ययवर्णागमलोपविकारपर इतरेतरोपदेशोऽपि शब्दानां व्याप्तिमत्त्वात् सिध्यति, तदिदं शब्दशास्त्रेऽप्युक्तम् "इतरेतराश्रयं प्रत्यये भाव-वचने तस्माच्च प्रत्ययः, सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वम्" ( अष्टा० १ । ३ । १—महाभाष्य व्या० ) अथ च शास्त्रकृतो योगो वेदविहितो नियोगो विधानमपि यथादेशं यथाकालं यथापात्रं सृष्टेरारम्भे वेदशब्दानां युगपदु-त्पत्तिमत्त्वे सम्भवति हि सुतरां तेषामणीयस्त्वात्, ते वेदशब्दा अणीयांसः सन्ति न हि स्थूला ध्वन्यात्मकाः किन्तु ज्ञानात्मकाः सन्ति । न हि तथा सन्ति यथा-कृत्वा खल्वाक्षेपः कृतः, ते तु स्थिताः सन्ति वेदशब्दाः परमेश्वरे ज्ञानिषु च "विद ज्ञाने" ( अदादि० ) 'शास्त्रकृतो योगश्च नोपपद्यते' इत्यस्य समाधानम् । पुन-रुपसंह्रियते समाधानद्वयं सविवरणं यत् 'शब्देन संज्ञाकरणं व्यवहारार्थं लोके,

---

"महत ऋग्वेदादेः शास्त्रस्य" । "शास्त्रकोविदः" (अथर्वपरिशिष्ट० ६२।४।६) "बह्वृचाः शास्त्रकोविदः" (६) "सेनापत्यं च राज्यं च वेदशास्त्रविदर्हति" (मनु० १२।१००) ।

तेन व्याप्तिमता शब्देन संज्ञाकरणं संज्ञा—संज्ञानं यथा 'प्रज्ञा—प्रज्ञानम्' संज्ञानस्य करणं—संज्ञापनं नामाख्यातादिरूपं तथा वाक्ये कर्तृकर्मक्रियादिरूपं पदे प्रकृति-प्रत्ययवर्णागमलोपविकारप्रायं व्युत्पत्तिरूपं भवति व्यवहारार्थं लोके। वेदे तु तेषां शब्दानामणीयस्त्वात् ते ज्ञानात्मकाः सन्ति न स्थूला ध्वन्यात्मका यतः परमात्मज्ञानं हि वेदाः, तत्र देवताभिधानं मनुष्यवत्—मन्त्रेषु देवतानां खल्व-भिधानं यथाविधं यथाकर्म प्रतिपादनं तन्मनुष्यवत्—मनुष्याः सन्त्यधिकृता अस्मिन् मनुष्यानधिकृत्य मनुष्यनिमित्तं प्रवृत्तं सार्वकालिकं सार्वदेशिकं सर्व-विषयकमर्थात् तत्र मन्त्रेषु यावन्त्यभिधानानि देवतानां पृथिव्यन्तरिक्षद्युलोक-स्थानां स्वरूपकर्मपराणि प्रतिपादनानि तानि मनुष्यवन्ति मनुष्याणां ज्ञानाय कर्मानुष्ठानाय हि सन्ति, अतः पुरुषस्य ज्ञानस्वामिनः परमात्मनो * या विद्या-त्रयी तस्याः खलु नित्यत्वादेव † मन्त्रः कर्मसम्पत्तिः कर्मणां सम्पत्तिः सम्पन्नता योग्यता यस्मिन् तथाभूतोऽस्ति, तस्माच्छास्त्रकृतो योगो वेदोक्तो विधिरनुष्ठातुं योग्यो भवति हि ‡।

षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरि-णमते वर्धतेऽपक्षीयते विनश्यतीति।

---

* पुरुषशब्देनात्र परमात्मा गृह्यते तत्र हेतवः—

१ "मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात्" मनुष्यशब्दः पुनः पुरुष-शब्दः-अत्र मनुष्यपुरुषावेकस्मिन् वाक्ये प्रयुक्तौ भिन्नभिन्नार्थवत्त्वादेव।

२ कर्मसम्पत्तिर्मन्त्रो वेदे' पुरुषविद्याया अनित्यत्वमित्यर्थे हेतुप्रदर्शनमप्रास-ङ्गिकमस्थानकम्।

३ निघण्टौ मनुष्यनामसु पुरुषशब्दो न पठितः 'मनुष्याः' इति तु मनुष्य-नामसु पठ्यते। •

४ निरुक्ते पुरुषः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य "यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥" इत्यपि निगमो भवति॥ (निरु० २।३)

† विद्याशब्दवाच्यस्य वेदवाक्यहेतुकस्य विज्ञानस्य नित्यत्वाद् देशान्तरेष्व-विपर्ययात् (स्कन्दमहेश्वरभाष्ये वैकल्पिकोऽर्थः)।

‡ इदं वचनं गहनविषयकं तदुक्तं सत्यव्रतेन सामश्रामिणा-प्रसङ्गसङ्गत्या वैदिक गूढतत्त्वान्यपीह बहूनि प्रतिपादितानि "पुरुषविद्यानित्यत्वात् कर्मसम्पत्ति-र्मन्त्रो वेदे" इत्येवमादीनि चिन्तनीयानि"। (निरुक्तालोचनम्)।

भा०—षट्संख्याकाः खलु भावविकारा भवन्ति 'भावः' इति शब्देन यद्यपि सत्ता महासामान्यं पदार्थो द्रव्यं चेत्येवमादयोऽपि प्रोच्यन्ते, ते यथाशास्त्रं स्वस्वक्षेत्रमनुवर्तमानाः प्रयुक्ताः स्युः, किन्त्वत्र भावशब्देन क्रिया हि लक्ष्यते, उक्तं हि पूर्वं 'भावप्रधानमाख्यातम्'—क्रियाप्रधानमाख्यातं भवति 'विकाराः' इति कथने भवति सन्देहः, न हि क्रियाया विकारा भवन्ति, क्रिया नान्यां क्रियां प्रवर्तयति "कर्म कर्मसाध्यं न विद्यते" ( वैशे० १ । १ । ११ ) इति दर्शनम् । भवतु तत्र तथा, अत्र निरुक्ते तन्नापेक्ष्यते, यदग्रे हीदमुच्यते "जायते....." इत्यादीनामेतेषामेव विकारा अतोऽन्ये भावविकारा भवन्ति । तस्मादत्र भावशब्देन क्रिया हि लक्ष्यते, यत्स्पष्टं हि 'जायते' इति क्रिया पुनस्तस्या अपि विकारः कथ्यते । अत एवात्र भावशब्दो न द्रव्यादिपरः किन्तु क्रियापरः । भावो द्रव्यं चेत् स्यात् पुनस्तस्य विकाराः 'जायते' इत्याद्याः क्रियाः कथं स्युर्द्रव्यस्य विकाराः, किन्तु द्रव्याणि हि द्रव्यस्य विकारा भवन्ति, यथा मृत्तिकाया विकारा घटादयः स्वर्णस्य विकाराः कटकादयः, तस्मादपि निरुक्तेऽत्र भावशब्दः क्रियावाचकः । यथा ह्यत्र निरुक्तशास्त्रे भावशब्दः क्रियावाचकोऽस्ति, द्रव्यवाचको न । तथैवात्र विकारशब्दो न विक्रियमाणत्वं द्रव्याधिष्ठितमिवास्ति किन्तु व्यक्तिवाचकः । भावविकारा भावव्यक्तयः क्रियाव्यक्तयः सन्ति । यथा "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि" ( वैशे १ । १ । ७ ) इति कर्मव्यक्तयः प्रतिपादिताः । 'कर्माणि तु द्रव्यनिष्ठव्यापाराः, क्रियाः खल्वाख्यातनिर्देश्या असंख्येयाः प्रवृत्तयः, पुनस्ताभ्योऽप्यन्या व्यक्तयः क्रियासन्तानानि भवन्ति—इति मन्यते वार्ष्यायणिराचार्यः । ते भावविकाराः सन्ति क्रमशः षट् 'जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति'—इति ।

> जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति ।

भा०—'जायते' इति भावः सर्वेषां भावानां पूर्वो भावः खलु जातत्वं जायमानत्वं अन्यत्वं वेत्यस्य पूर्णत्वं समाप्तिं न सूचयति किन्तु तस्यादित्वमेव ज्ञापयति यज्जायते, जनिक्रियाया आरम्भिकं रूपं दर्शयति समाप्तं रूपं न, चिराज्जायमाने होरा वा सर्वदिनं वा व्यतीयात् तदापि जायते—इत्युच्यते यावज्जनिक्रियायाः समाप्तिर्न भवेत् । एवं 'जायते' इति स्वस्मादपरभावमग्रिमभावं न सूचयति न तस्य प्रतिषेधमपेक्षते ।

> अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् ।

भा०—'जायते' इत्यस्यानन्तरः 'अस्ति' इति भावस्तु जातस्य द्रव्यस्य निश्चयं विद्यमानत्वं यद्वा जातस्योत्पन्नस्य सत्ताङ्गीकरणमाचष्टे ज्ञापयति साधयति, पूर्वभावं जायमानत्वं त्वपेक्षतेऽपरभावं विपरिणममानत्वं नाचष्टे न प्रतिषेधति ।

विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारम् ।

भा०—'अस्ति' इत्यस्यानन्तरः 'विपरिणमते' भावः, सतो द्रव्यस्य स्वरूपादपरिवर्तमानस्य तद्धर्मानुरूपमन्यस्वरूपत्वमाचष्टे । 'वर्धते, अपक्षीयते' इत्येतावपि यद्यपि 'परिणमते' इति शब्देन वक्तुं शक्येते, वर्धनमपि परिणामोऽपक्षीयमाणत्वमपि परिणामो लोकदृष्ट्याऽस्ति, परन्तु विपरिणामो विशिष्टः परिणामः स च न ह्यङ्गपरिणामः, उक्तं ह्येतत् तत्त्वादप्रच्यवमानस्य स्वरूपादपरिवर्तमानस्य जायमानानन्तरम् 'अस्ति' इति—अस्तित्वं स्वरूपं तस्य जातस्य सतोऽस्तित्ववतस्तथैवावस्थितत्वादग्रे वर्धनाच्च पूर्वो यो विकारश्चेष्टनं स्वास्तित्वस्य प्रदर्शनार्थं रक्षणार्थं चाहारग्रहणादिप्रवृत्तिरत्र 'विपरिणमते' इति शब्देन गृह्यते-उच्यते । जात एव खलु स्वास्तित्वरक्षणार्थं चेष्टते स्तन्यं पातुं मुखमुद्घाटयति—इत्येष विकारो विपरिणमते शब्देनात्रोक्तो भवति । आहारग्रहणादिचेष्टनरूपाद् विपरिणामादेवाग्रे वर्धते हि । 'विपरिणमते' इति तथाभूतेन भावेन भवितव्यं यश्च भावः 'अस्ति' इति भावादुत्तरः स्याद् 'वर्धते' इति भावात् पूर्वो भवेत् । स विपरिणमते, इति भावः 'अस्ति' भावस्य कार्यं 'वर्धते' भावस्य कारणं भवेत् । न तु वर्धनानन्तरं कृष्णत्वादिकं पक्वलक्षणं विपरिणामो योऽन्यैः प्रदिष्टः । स च स्वस्मात्पूर्वं भावमस्तित्वं त्वपेक्षते परन्तु स्वस्मात्परं भावं वर्धनं न ह्याचष्टे न च प्रतिषेधति ।

वर्धत इति स्वाङ्गाभ्युच्चयं सांयोगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वा ।

भा०—'वर्धते' इति 'स्वाङ्गाभ्युच्चयम्' इति स्थाने 'स्वाङ्गानामभ्युच्चयम्' इति पाठेन भवितव्यम् । स्वाङ्गानां सांयोगिकानामर्थानामभ्युच्चयं खलु 'वर्धते' इति शब्देनाचष्टे । तत्र स्पष्टीकरणं क्रियते यद् वर्धते शरीरेण वा वर्धते विजयेन यदा स्वाङ्गानां शिरोहस्तपादपृष्ठोदराणामभ्युच्चयः स्वस्वांशोपरिचयनं भवति तदा शरीरेण वर्धते—इत्युच्यतेऽथ यदा सांयोगिकानां पदार्थानां पुत्रादिसम्बन्धिनां गृहयानभूभागादीनां बाह्यवस्तूनामभ्युच्चयो वस्तुवस्तुसंयोगाधिक्यं भवति तदा विजयेन प्रभुत्वेन वर्धते—इत्युच्यते स्वस्मात्पूर्वभावं त्वपेक्षतेऽपरमपक्षीयमाणं नाचष्टे न प्रतिषेधति ।

अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम् ।

भा०—'अपक्षीयते' इत्येष भाव एतेन 'वर्धते' इत्यत्र यदुक्तं स्वाङ्गानां सांयोगिकानां चाभ्युच्चयम्—इत्येतेन प्रकारेण विधानेन वा प्रतिलोमं व्याख्यातो विज्ञेयो वैपरीत्येनावचयो ह्रासो वा स्वाङ्गानां शिरोहस्तपादोदरवक्षसामपकर्षोऽथ बाह्यवस्तूनां पुत्रादिसम्बन्धिनां धनगवाश्वादीनां चावचयः क्षयः सः 'अपक्षीयते' इति पदेनोच्यते । स पूर्वं भावं त्वपेक्षते किन्त्वपरं भावं 'विनश्यति' इत्येत नाचष्टे न च प्रतिषेधति ।

विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ २ ॥

भा०—विनश्यति–इति–अपरभावस्यान्तिमभावस्यादिमं रूपमाचष्टे नश्यमानत्वमाचष्टे, न तु नष्टमाचष्टे न प्रतिषेधति । अपक्षीयमाणस्य परिणामो नाशः । नष्टेन पुनरुत्पादेन भवितव्यं यन्नष्टं तत् कारणात्मना बीजात्मना, सत्त्वात्मना वा तु स्थितम्, न हि सर्वथा नाशः कस्यापि भवतीति न्यायात् 'जनित्वा म्रियते मृत्वा च जायते' इति प्रतिपादनात् । तस्मात् 'विनश्यति' इत्यन्तिमभावस्यादिमाचष्टे इतियुक्तम् ।

अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथावचनमभ्यूहितव्याः ।

भा०—अतः षड्भ्यः 'जायते' इत्येवमादिभ्यो भावविकारेभ्यो भावव्यक्तिभ्यः क्रियाव्यक्तिभ्योऽन्ये भावविकारा अन्या भावव्यक्तयोऽन्याः क्रियाव्यक्तयः सामान्यार्थपरा विशेषार्थपरा वा । तत्र सामान्यार्थपराः 'जायते' इत्यस्य भावस्य 'उत्पद्यते' उद्भवति, अभिव्यज्यते । 'अस्ति' इत्यस्य 'भवति, विद्यते वर्तते' । 'विपरिणमते' इत्यस्य 'चेष्टते, यतते, ईहते' ; 'वर्धते' इत्यस्य 'एधते' 'उपचीयते, पुष्यति' । 'अपक्षीयते' इत्यस्य 'ह्रसति, जीर्यते, हीयते' । 'विनश्यति' इत्यस्य 'म्रियते, प्रध्वस्यते, प्रैति' । विशेषार्थपराः 'जायते' इत्यस्य 'निर्मीयते, पच्यते, क्रियते' । 'अस्ति' इत्यस्य 'तिष्ठति शेते, आस्ते' । 'विपरिणमते' इत्यस्य 'गच्छति, म्लायते, पतति' । 'वर्धते' इत्यस्य 'पुष्यति, फलति, उच्चीयते' । 'अपक्षीयते' इत्यस्य 'क्षरति, स्रवति, च्यवते' । 'विनश्यति' इत्यस्य 'विलीयते, लुप्यति' । इत्येवमादयो भावविकारा भावव्यक्तयस्तेषामेव षण्णां विकाराणां व्यक्तयोऽन्या बह्व्यो भवन्ति ते भावविकारास्ता भावव्यक्तयः क्रियाव्यक्तयो यथावाक्यं यथाप्रसङ्गं लक्ष्याः ।

न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति ।

भा०—'प्र, परा, अप.....' इत्येवमादय उपसर्गाः—निर्बद्धाः—अबद्धाः—नामाख्याताभ्यामसम्बद्धाः, ताभ्यां पृथक्प्रयुक्ताः स्वतन्त्रा अर्थान् न निर्ब्रुवन्ति न प्रकाशयन्ति, यथा नामानि वाऽऽख्यातानि पृथक् पृथक् प्रयुक्तानि स्वतन्त्राणि निजार्थान् निर्ब्रुवन्ति—इति शाकटायन आचार्यो मन्यते । यद्येवं तर्ह्येषां प्रयोगेण न भवितव्यम्, अथाप्रयोज्यास्तदा नापि 'उपसर्गाः' इति संज्ञातस्तेषां प्रसिद्धिर्भवेत् । उपसृज्यन्ते—उपयुज्यन्ते हि नामाख्याताभ्यां सहार्थविधाने—इति हेतोस्तेषामर्था अपि मन्तव्याः । उच्यते । एषां प्रयोगः क्रियते नामाख्यातयोर्नाम्न आख्यातस्य तु कर्म-व्यापारोऽर्थे प्रवर्तनं प्रयोगस्तस्योपसम्बन्धं द्योतयन्ति नामपदमाख्यातपदं च संस्कुर्वन्ति संवृद्धं कुर्वन्ति—इति शाकटायनो मन्यते । न तु तेषामर्थस्वातंत्र्यम् ।

उच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् ।

भा०—उत्कर्षत्वापकर्षत्वगता विविधा अर्था भवन्त्येषामुपसर्गाणां यत्ते नाम्नि तथाऽऽख्याते च निजार्थानुपसृजन्तीति हेतोरेषामुपसर्गाः संज्ञेति गार्ग्यो नैरुक्तो मन्यते । कुतः । उच्यते । यतो ह्येषु योऽर्थस्तमिमे प्रब्रुवन्ति प्रकृष्टं कथयन्ति । नाम्न आख्यातस्य चार्थविशिष्टत्वकरणमिति गार्ग्यमतम् । शाकटायनमते नामाख्यातयोरेव संस्करणम्, यथा गृहस्योपरि चतुर्दिक्षु कोणप्रकोणयुक्ताभिरिष्टकाभिः परिधिनिर्माणं सीम्नो बन्धनं भवति । गार्ग्यमते तु नामाख्यातयोरर्थे विशिष्टत्वकरणं निजार्थनिवेशनम्, यथा गृहस्याभ्यान्तरे गवाक्षवातायनालयनिधानादिनिर्माणं भवति । गार्ग्योऽस्ति नैरुक्तस्तस्मात् तस्य मतं पोष्यते यास्केनात्रोदाहरणानि दत्त्वा ।

आ इत्यर्वागर्थे प्र परेत्येतस्य प्रातिलोम्यम् ।

भा०—'आ' उपसर्गः—अर्वागर्थे—क्रियाया नाम्नो वा स्वकीयदिशि यदा प्रवृत्तिर्दर्शयितव्या भवति तदा स्वादिकप्रवृत्तौ 'आ' इत्युपसर्गं प्रयोक्ता प्रयुङ्क्ते—'आगच्छति, आक्रमते, आदत्ते' 'आसमुद्रात्, आपर्वताद् राजशासनम्, इति लोके । अथ वेदे—"स देवाँ एह [ आ—इह ] वक्षति" ( ऋ० १ । १ । २ ) "वायवायाहि दर्शते....." ( ऋ० १ । २ । १ ) "आयने [ आ—अयने ] ते परायणे दूर्वा रोहन्तु....." ( ऋ० १० । १४२ । ८ ) । 'प्र, परा उपसर्गौ तु 'आ' इत्यस्य प्रातिलोम्येऽनर्वागर्थे परार्थे दूरार्थे प्रयुङ्क्ते प्रयोक्ता—प्रसरति, परा-

गच्छति, प्रकृष्टः, प्राचार्यः, परागतिः, पराकाष्ठा, इति लोके । अथ वेदे-"धियो यो नः प्रचोदयात्" ( ऋ० ३ । ६२ । १० ) "प्रेषितो वामबोधि" ( ऋ० ७ । ७३ । ३ ) "दिवो मूर्धानः प्रस्थिताः" ( ऋ० ९ । ६९ । ८ ) "परा हीन्द्र धावसि" ( ऋ० १० । ८६ । २ ) "आयने ते परायणे [ परा-अयने ] दूर्वा ..." ( ऋ० १० । १४२ । ८ ) ।

अभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यम् ।

भा०—'अभि' उपसर्गः 'आभिमुख्यमर्थं निर्ब्रवीति–शत्रुमभिगच्छति, अभिपश्यति, पर्वतमभि, वृक्षमभि । इति लोके । अथ वेदे-"त्वामभि प्रणोनुमो ( ऋ० १ । ११ । २ ) "अभिकृत्य सपत्नान्" ( ऋ० १० । १७४ । २ ) 'प्रति उपसर्गोऽस्य प्रातिलोम्यं वदति' 'प्रतिगच्छति, प्रतिददाति, प्रतिहन्ति, प्रतिहर्ता, प्रतिसन्धाता–इति लोके । अथ वेदे "प्रत्यावर्तयेमाः" ( ऋ० ६ । ४७ । ४१ ) "प्रतिष्म रिषतो दह" ( ऋ० १ । १२ । ५ ) ।

अति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यम् ।

भा०—'अति, सु' एतौ–अभिपूजितार्थे प्रशंसार्थे प्रयुज्येते–अतिशोभते, अतिरोचते, अतिसंयमी, अतिविद्वान्, इति लोके । अथ वेदे "मनो रुहाणा अतियन्त्यापः" ( ऋ० १ । ३२ । ८ ) "अतिसृष्टा अग्नयो दिव्याः" ( अथर्व० १६ । १ । १ ) सुपठति वेदम्, सुगच्छति हंसः, सुशोभनः, सुदर्शनः, सुबुद्धिः, इति लोके । अथ वेदे-"अस्मान् सु तत्र चोदय" ( ऋ० १ । ९ । ६ ) "सु देवो असि वरुण" ( ऋ० ८ । ६९ । १२ ) 'निर्, दुर्' उपसर्गौ–एतयोः प्रातिलोम्यं निन्दामाहतुः । निर्दहति वातप्रेरितोऽग्निः, निर्गमय दुष्टम्, निष्क्रियो जनः, निःसारः, निर्बुद्धिः, उष्ट्रो दुर्धावति, दुर्वदति काकः, दुर्बुद्धिः, दुष्प्रवृत्तिः, इति लोके । अथ वेदे-"निदो निरयन्तश्चिदारत" ( ऋ० १ । ४ । ५ ) "यं मे दुरिन्द्रो" ( ऋ० ८ । ३ । २१ ) "स नो बोधि पुर एता सुगेषूत दुर्गेषु" ( ऋ० ६ । २१ । १२ ) ।

न्यवेति विनिग्रहार्थीयौ उदित्येतयोः प्रातिलोम्यम् ।

भा०—'नि, अव' एतावुपसर्गौ विनिग्रहार्थं विशिष्टनियमनार्थमाहतुः, निगृह्णाति, नियुक्तः, नियानम्, निधानम्, अवगृह्णाति, अवरोहति, अवधानम्, अवधिः, इति लोके । अथ वेदे-"नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै" ( ऋ० १ । ८ । २ ) "अपामिदं न्ययनम्" ( ऋ० १० । १४२ । ७ ) "निकामे निकामे नः पर्जन्यः" ( यजु० २२ । २२ ) "मायाभिरिन्द्र मायिनं त्वं

शुष्णमवातिरः" ( ऋ० १।११।७ ) "यत्रावरोधनं दिवः" ( ऋ० ९ । ११३ । ८ ) 'उद्' उपसर्गः 'नि, अव' इत्येतयोः प्रातिलोम्यमुत्सर्जनं ब्रूते उद् गृह्णाति, उदेति, उच्छृङ्खलः, उत्कृष्टः, उद्गाता, इति लोके । अथ वेदे—"अत्रिमश्विना वनीतमुन्निन्यथुः" ( ऋ० १ । ११६ । ८ ) "ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे" (ऋ० । १० । १ । १) "चित्रं देवानामुदगात्" (ऋ० १ । ११५ । १) "उत्कूलमुद्वहो भवोदुह्य प्रति धावतात्" ( अथर्व० १९ । २५ । १ ) ।

समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यम् ।

भा०—'सम्' उपसर्गः खल्वेकीभावं साकल्यं समानार्थत्वं चाह । सङ्गच्छते, संगृह्णाति, संवदन्ते, संग्रहः, सम्मनाः, इति लोके । अथ वेदे "सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्" ( ऋ० १० । १९१ । २ ) "उग्रो वा···· मामेषु सन्तनिः" ( ऋ० ५ । ७३ । ७ ) "असुन्वामिन्द्र संसदम्" (ऋ० ८ । १४ । १५ ) "माता भवतु सम्मनाः" ( अथर्व० ३ । ३० । २ ) 'वि, अप' एतौ तत्प्रातिलोम्यं पृथग्भावं ब्रूतः । 'विगृह्णाति 'विवदन्ते, विग्रहः, विमुखः अपवदति, अपसरति, अपवादः, अपाङ्गः, इति लोके । अथ वेदे "इन्द्रो····वि गोभिरद्रिमैरयत्" ( ऋ० १ । ७ । ३ ) व्यूर्णुते दाशुषे वार्याणि ( ऋ० ६ । ५० । ८) "अयं यो वक्रो विपरुर्व्यङ्गो····" ( अथर्व० ७ । ५६ । ४ ) "विश्वकर्मा विमनाः····" (ऋ० १०।८२।२) "अपावरद्रिवो विलम्" (ऋ० १।११।५) "अपां विलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद् ववार" (ऋ० १।३२।११) "धनुः शत्रोरपकामं कृणोति" ( ऋ० ६।७५।२ ) ।

अन्विति सादृश्यापरभावमपीति संसर्गमुपेत्युपजनं परीति सर्वतो भावमधीत्युपरिभावमैश्वर्यं वैवमुच्चावचानर्थान् प्राहुस्त उपेक्षितव्याः ॥ ३ ॥

'अनु' उपसर्गः सादृश्यं च पश्चाद्भावं चाह यथा—पितुरनु पुत्रेण भवितव्यम्, गुरुमनुगच्छेच्छिष्यः, इति लोके । अथ वेदे "ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु" ( ऋ० १।१५।५ ) "अनुव्रतः पितुः पुत्रो····" ( अथर्व० ३।३०। २ ) "गावो न गव्यूतीरनु" ( ऋ० १ । २५ । १६ ) 'अपि' उपसर्गः संसर्गं सम्मिश्रणमाह "भुंक्ष्वाऽपि शृणु, पठापि पाठय, भोजने घृतमपि स्यात्, इति लोके । अथ वेदे—"पुनर्वर्धन्ते अपियन्ति" ( ऋ० १।१४०।७ ) "ग्रीवायां बद्धो अपि कक्ष आसनि" ( ऋ० ४।४०।४ ) 'उप' उपसर्गः—उपजनार्थमाह 'उपमिमीते, उपदधाति, उपकुरुते, उपमन्त्री, उपचयः, इति लोके । अथ वेदे "उपा-

तिष्ठन्त गिर्वणो०" (ऋ० १।११।६) "अग्ने देवाँ इहावह । उप यज्ञं हविश्च नः" ( ऋ० १ । १२ । १० ) अस्ति ज्यायान् कनीयस उपारे" ( ऋ० ७।८६।६ ) 'परि' उपसर्गः सर्वतोभावमाह । परिक्राम्यति, परिधत्ते, परिषिञ्चति, परिधिः, परिक्रमा, इति लोके । अथ वेदे "युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः" ( ऋ० १।६।१ ) परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः" ( ऋ० १।१०। १२) "भूमिं पिन्वन्ति पयसा परिज्रयः" (ऋ० १।६४।५) "औच्छत् सा रात्री" परितक्म्या" ※ ( ऋ० ५।३०।१४ ) "अधि उपसर्गः–उपरिभावमैश्वर्यं स्वामित्वं चाह । पर्वतमधिशेते, अधिनायकः, अधिष्ठाता, अधिराजः, अधिपतिः, अधिब्रह्म-दत्ते पञ्चालाः, इति लोके । अथ वेदे–"ये नाकस्याधि रोचने दिवि देवास आसते" ( ऋ० १।१९।६ ) सुतासो अधि बर्हिषि" ( ऋ० १।१६।६ ) "अतः परि-ज्मन्ना गहि दिवो वा रोचनादधि" ( ऋ० १।६।९ ) यो अस्याध्यक्षः परमे व्योमन्" ( ऋ० १०।१२९।७ ) प्राची दिगग्निरधिपतिः" ( अथर्व० ३।२७।१ ) उक्तदिग्दर्शनवदुच्चावचानर्थानुत्कर्षापकर्षपरानर्थान् प्रवदन्ति ह्युपसर्गास्ते–इमे–उपगत्य प्रयोगान् प्रयोगप्रदेशानुपगत्येक्षितव्या ज्ञातव्या भिन्नभिन्नार्थविधायका उपसर्गाः ।

इति प्रथमाध्याये प्रथमः पादः ।

---

## द्वितीयः पादः

---

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोप-संग्रहार्थेऽपि पदपूरणाः ।

भा०—'अथ आनन्तर्ये', नामाख्यातोपसर्गाणां कथनानन्तरं निपाता उच्यन्ते । 'निपाताः' इति संज्ञा, तस्या अन्वर्थतां दर्शयत्याचार्यः,–उत्कृष्टावकृष्टार्थेषु नानार्थेषु निपतन्ति निविशन्ते नियतिमवलम्ब्य विशन्ति–इति हेतोर्निपाता एते । न ह्युपसर्गा इव ते सर्वत्राख्यातैर्नामभिः सहार्थबाहुल्ये युज्यन्ते । कतिपये ह्यर्था एतेषाम् । ते निपाता अपि वा–उपमार्थेऽपि वा कर्मोपसंग्रहार्थेऽन्यस्य व्यापारोपादानार्थेऽपि वा ते पदपूरणा वाक्यस्यालङ्कारका भवन्ति ॥

तेषामेते चत्वार उपमार्थे भवन्ति । इवेति भाषायां चान्व-ध्यायं च, अग्निरिवेन्द्र इवेति ॥

---

※ "परित एनां तक्म" (निरु० ११।२५) ।

भा०—तेषां मध्ये चत्वारो निपातास्तूपमार्थे भवन्ति । 'इव' इति निपातो भाषायां लोके चापि तथाऽन्वध्यायं वेदे–इत्यर्थः । 'अध्याय:' संज्ञायां निपातनात् "अध्यायन्यायोद्यावसंहाराश्च" ( अष्टा० ३ । ३ । १२२ ) अनेनाधिकरणार्थे उदाहरणम्—"अग्निरिव मन्यो त्विषितः" ( ऋ० १० । ८४ । २ ) । "विजेषकृदिन्द्र इवा····मन्यो" ( ऋ० १० । ८४ । ५ ) ।

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥

हे मन्यो ! आन्तरिक पराक्रम ! यद्वा पराक्रमिन् नायक ! त्वं यथाऽग्निस्त्विषितो ज्वलितो भवति तथा त्विषितो ज्वलितः सन् शत्रुं सहस्व तद्बलमपबाधस्व त्वं नोऽस्माकं, सेनानीर्भव तथा हे सहुरे ! सहनशक्तिसम्पन्न ! हूतो भव । शत्रून् हत्वा वेदो धनमस्मभ्यं वितर, ओजो बलं विमिमानो विशेषेण सम्पादयन् मृधः संग्रामान् विनुदस्व विदलय ।

'विजेषकृदिन्द्र इवा' इति मन्त्रोऽग्रे ( निरु० ६ । श० ११८ । खं० २९ ) व्याख्यास्यते तत्र द्रष्टव्यः ।

नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायम् "नेन्द्रं देवममंसतः·····" ( ऋ० १० । ८५ । १ ) इति परिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति ॥

भा०—'न' इति प्रतिषेधार्थीयो लोके, वेदे तूभयार्थकः प्रतिषेधार्थकश्चोपमार्थकश्च, "नेन्द्रं देवममंसत" इत्यत्र प्रतिषेधार्थीयः, यं खलु प्रतिषेधति तस्य पुरस्तात्–तस्मात् पूर्वमुपचारो व्यवहारः प्रयोगः, इन्द्रं देवं प्रतिषेधति । मन्त्र एष व्याख्यास्यते "वि हि सोतोरसृक्षत नेन्द्रं देवममंसतः" ( निरु० अ० १३ । खं० ५ ) ।

"दुर्मदासो न सुरायाम्" ( ऋ० ८ । २ । १२ ) इत्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते ॥

भा०—'दुर्मदासो न सुरायाम्' इत्यत्र मन्त्रे तूपमार्थीयो नकारोऽस्ति, येनोपमा दीयते तस्योपरिष्टादर्थादग्रे व्यवहारः प्रयोगः कृतः 'दुर्मदासो न' 'दुर्मदाः–इव' इत्यर्थः । समग्रमन्त्रस्तदर्थश्च—

हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् ।
ऊधर्न नग्ना जरन्ते ॥

हे इन्द्र ! पीताः सोमा हत्सु हृदयेषु स्थिताः—युध्यन्ते परस्परं पातारं हर्षयितुं स्पर्द्धन्ते सुमदप्रभावात्, दुर्मदासो न सुरायाम् यथा दुर्मदाः—ग्लानभावाः सुरायां पीतायां परस्परं ग्लानप्रभावात् पातारं ग्लेपयन्ति—दुर्मत्तं कुर्वन्ति । अथवा, ऊधर्न नग्नाः "नग्ना वाङ्नाम" (निघ० १।११) अकारोऽत्र मत्वर्थीयः, वाग्मिनः स्तोतार इन्द्रं परमात्मानं गुणैःपूर्णं जरन्ते स्तुवन्ति "जरते स्तुतिकर्मा" (निघ० ३। १४ ) यथा ऊधो गोर्दुग्धस्थानं दुग्धपूर्णं दृष्ट्वा स्तुवन्ति दुग्धकामाः ।

अत्रोपमार्थीयो नकारोऽस्ति येनोपमा दीयते तस्योपरिष्टादग्रे व्यवहारः प्रयोगः कृतः 'दुर्मदासः' सन्ति ते दुर्मदा इव ।

चिदित्येषोऽनेककर्मा । आचार्यश्चिदिदं ब्रूयादिति पूजायाम् । आचार्यः कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा । दधिचिदित्युपमार्थे कुल्माषांश्चिदाहरेत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति ॥

भा०—'चित्' इत्येष निपातोऽनेककर्मा, उपमार्थकः सन्नपि सोऽनेकार्थकः, अत्रोपमार्थप्रदर्शने प्रसङ्गतस्तस्यान्येऽर्था अपि निर्दिश्यन्ते । यथा 'आचार्यश्चिदिदं ब्रूयात्' एतन्महत्त्वपूर्णं विद्याविषयं खल्वाचार्यो हि वक्तुं शक्नुयात् । इति कथनेऽत्र चित् तस्याचार्यस्य पूजां प्रशंसां प्रकटयति । आचार्यः पूजनीयः प्रशंसनीयो भवति कुतोऽत्रोच्यते यतो ह्याचार्य आचारं सदाचारं गुणाचारं ग्राहयति—अर्थान् शास्त्रस्यार्थान् शिष्येषु समन्तान्निवेशयति बुद्धिं चापि संवर्धयति । 'दधिचित्' इति प्रयोगे 'चित्' उपमार्थीयोऽस्ति दधिसदृशं रूपेण गुणेन विरेचननिरोधनाय तक्रादि वस्तु, बिल्वचूर्णादिकमौषधं वा । वेदं च "वीळुचिदारुजत्नुभिर्गुहाचिदिन्द्र वह्निभिः" ( ऋ० १।६।५ ) "गर्भः शिरिणायां चिदक्तुना" ( ऋ० २।१०।३ ) "कुमारश्चित् पितरम्" ( ऋ० २ । ३३ । १२ ) "चतुरश्चिद् ददमानाद् विभीयादनिधातोः" ( ऋ० १ । ४१ । ९ ) अथ चैषः 'चित्' निपातोऽवकुत्सितार्थेऽपि वर्तते । 'कुल्माषांश्चिदाहर' गृहमागतस्यातिथेः सत्कारो गृहिणा कर्तव्यः, गृहे यदि कस्मादपि कारणाद् भोजनं न स्यात् खाद्यमन्नं न भवेत् तदा कश्चनातिथिर्बुभुक्षितो ब्रवीति कुल्माषाँ चिदाहर—कुल्माषान् कुत्सितमाषान् लोकेऽर्धपक्वमोठराजमाषा ये ह्युच्यन्ते तानेवानयोदरपूर्तिस्तु स्यात् । "कुल्माषा वातला रूक्षाः" ( सुश्रुते० अ० ४६ ) "माषाकृतिमन्तो राजमाषा इत्यन्ये, अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः । कुल्माषा इति कथ्यन्ते शब्दशास्त्रपण्डितैः ( शब्दार्थे चिन्तामणि कोषे ) एते कुल्माषा, प्राणकुलेषु गृहेषु प्राप्नुवन्ति हि यद्वा प्राप्तुं शक्यन्ते हि खाद्याभावेऽपि ॥

नु इत्येषोऽनेककर्मेदं नु करिष्यतीति हेत्वपदेशे कथं नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति । "वृक्षस्य नु ते पुरुहूत वयाः" ( ऋ० ६ । २४ । ३ ) वृक्षस्येव पुरुहूत शाखाः । वयाः शाखा वेतेर्वातायना भवन्ति । शाखाः खशयाः शक्नोतेर्वा ॥

भा०—'नु' इत्येष निपातोऽनेकार्थकः 'इदं नु करिष्यति' हेतुदर्शनं, किमर्थं करिष्यति—इत्यत्र हेतुं निर्दिशति । पुनः प्रश्नः 'कथं नु करिष्यति' इत्यनुपृष्टे—पुनः पृष्टे करिष्यमाणस्य विषयस्य कारणे प्राप्ते ज्ञाते सत्यपि पुनः प्रकारः पृच्छ्यते कथं तर्हि—केन प्रकारेण करिष्यति ? अनुपृष्टे सति पुनः पृष्टे 'चित्' निपातः प्रयुक्तः । तथा 'ननु' एतदकार्षीत्, इति च 'अनुपृष्टे', 'न' इत्यनेन युक्तः, 'नु' निपातोऽनुपृष्टे प्रयुक्तः 'ननु' आश्चर्यपूर्वकोऽनुप्रश्ने 'अच्छ' अहो तदेतत्कठिनं कार्यं कृतवान् ? 'नु' इति निपातः उपमार्थेऽपि भवति, उपमार्थो हि प्रकृतः तत्र प्रसङ्गतोऽन्येऽप्यर्थाः कथिताः । तत्रोपमार्थे यास्को वैदिकमुदाहरणं ददाति—"वृक्षस्य नु...."इति ।

समग्रमन्त्रस्तदर्थश्च—

अक्षो न चक्र्योः शूर बृहन् प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः ॥

हे बहुप्रकारेण हूयमान ! आहूयमान ! स्तूयमान ! इन्द्र ! बृहत् महत् ! शूर ! तव मह्ना महिमा रोदस्योर्द्यावापृथिव्योर्मध्ये प्रररिचे परिवृद्धोऽस्ति चक्रयोर्मध्येऽक्षदण्ड इव, तथा तव पूर्वीः—ऊतयो रक्षणशक्तयो वृक्षस्य, वयाः शाखा इव विरुरुहुः सर्वस्मिन् जगति विरूढाः—विविधं प्रसृताः—व्याप्ताः सन्ति ॥

वयाः शाखाः "वी गतिव्याप्ति...." ( अदादि० ) इत्यस्य प्रयोगः । यतो वातायनाः—वातेन—अयना गन्त्र्यो गमनशीलाश्चलनस्वभावाः । वियन्ति गच्छन्ति ता वयाः, कथं गच्छन्ति—वातेनेति गमनप्रक्रिया प्रदर्शिता । 'शाखाः' इति प्रसक्तशब्दस्यापि निर्वचनं क्रियते खशयाः—खे—आकाशे ताः शेरतेऽवलम्बन्ते, आद्यन्तविपर्ययेण शब्दसाम्यमभिलक्ष्य निर्वचनम् । 'शक्नोतेर्वा' यद्वा शकधातोः ककारस्य खकारभावो वर्णव्यापत्त्या शाखाः शक्नुवन्ति स्वकीयया छायया रक्षितुं प्राणिनः ।

प्रज्ञातानां प्रसिद्धानां चतुर्णां निपातानामुदाहरणानि दत्तानि खल्वाद्यार्थेणोपमार्थे, अथेदानीं द्वितीयेऽर्थे कर्मोपसंग्रहे केषाञ्चिन्निपातानामुदाहरणानि प्रदर्शयितुं कर्मोपसंग्रहः कः कथ्यते—इति प्रथमं परिभाषते यास्कः;—

अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात् स कर्मोपसंग्रहः ॥

भा०—अथ यस्यान्येनान्याभ्यामन्यैः सह—आगमात्—प्रयोगात् खल्वर्थ-पृथक्त्वं विज्ञायते प्रतीयते लक्ष्यते परन्तु न ह्यौद्देशिकं स्वाश्रयभूतं स्वतन्त्र-लक्षणकृतं यथा सत्त्वप्रधानं नाम पुरुषो गौः, यद्वा भावप्रधानमाख्यातं गच्छति पचति—इति वद् विगृह्य प्रयोगपृथक्त्वमाश्रित्य यथा भवति । नाम यद्वाऽऽख्यात-मन्तरेण न स्वतन्त्रं प्रयुज्यते, नाम यद्वाऽऽख्यातमाश्रित्य तद्व्यापारमुपसंगृह्णाति-उपसमादत्ते तथाभूतः कश्चिदर्थे प्रयुक्तो निपातः स कर्मोपसंग्रहार्थीयः । आश्रयस्य नाम्न आख्यातस्य वा कर्म—व्यापारः प्रवर्तनं, * तस्योपसंग्रहणमुपयोजनमिति कर्मोपसंग्रहः, स चानेकविधः—समुच्चयः, विनिग्रहः, विद्याप्रकर्षः, प्रतिषेधः, विचिकित्सा' । अनन्तरमेव वक्ष्यमाणानाम् 'च, वा, आ, अह, ह, किल, मा, खलु, शश्वत्, नूनम् इति निपातानाम् ॥

यथा—

चेति समुच्चयार्थ उभाभ्यां सम्प्रयुज्यते—"अहं च त्वं च वृत्रहन् संयुज्याव" ( ऋ० ८ । ६२ । ११ ) इति ॥

भा०—'च' इति निपातः समुच्चयार्थ कर्मोपसंग्रहवर्ती । उभाभ्यां पूर्वापराभ्यां सह सम्यक् प्रयुज्यतेऽत्र 'अहं त्वम्' इत्यनयोः समुच्चयः कर्मोपसंग्रहः—उभयोः व्यापारस्य प्रवृत्तेर्वोपयोजनं खलु 'संयुज्याव' इत्यस्मिन् कर्मणि व्यापारे प्रवृत्तौ वा । समग्रो मन्त्रस्तदर्थश्च—

अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥

हे वृत्रहन् पापनाशक ! इन्द्र ! अहं जीवस्त्वं चैश्वर्यवान् ! संयुज्याव संयुक्तौ भवेव सनिभ्यः—आ यावदवधि सनीनां सम्भजनीयानामानन्दानां स्यात् । अराति-

---

* 'कर्म'शब्दो निघण्टुनिरुक्तशास्त्रयोर्द्विविधतया प्रयुज्यते, आख्यातपदेषु व्यापारार्थकः 'पश्यतिकर्माणो धातवः—पश्यतिव्यापाराः' 'ज्वलतिकर्माणो धातवः-ज्वलतिव्यापाराः' । नामभिः सह स कर्मशब्दो न प्रयुज्यते, यथा 'ज्वलतोनाम-धेयानि' 'उदकनामानि' सर्वत्रैव दृश्यते । परन्तु नामाख्यातयोर्मिश्रिते प्रसङ्गे तु तत्राख्यातस्य प्रधानत्वात् कर्मशब्दः प्रयुज्यते, तदा कर्मशब्दस्य-आख्याते व्यापारो नाम्नि तद्गुणप्रवृत्तिर्लक्ष्यते ।

वा 'अदानं च दानाभावो दोषोऽपि हेऽद्रिवन् वज्रवन् ! शूर नावावयोरनु मंसतेऽनुमन्येत, यत इन्द्रस्य तव रातयो दानानि भद्राः—भद्राणि कल्याणकराणि सन्ति ॥

एतस्मिन्नेवार्थे "देवेभ्यश्च पितृभ्य आ" ( ऋ० १० । १६ । ११ ) इत्याकारः ।

भा०—एतस्मिन् समुच्चयार्थे हि 'आ' निपातः 'उभाभ्यां सम्प्रयुज्यते' देवेभ्यश्च पितृभ्यश्चेत्यर्थः । समग्रो मन्त्रस्तदर्थश्च—

यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥

यः खल्वग्निः कव्यवाहनः कव्यं पक्वमन्नं वहति प्रापयति पक्वं कृत्वाऽन्नं स पितॄन् वृद्धजनान् सत्करणीयान् ऋतावृधः—सत्यवर्धकान् यजति, स एव हव्यानि होतुं योग्यानि घृतादीनि देवेभ्यश्च प्रवोचाति समन्त्रपाठं यजति ॥

वेति विचारणार्थे "हन्ताहं पृथिवीमिमां निदधानीह वेह वा" ( ऋ० १० । ११९ । ९ ) ॥ ४ ॥

भा०—'वा' इति निपातो विचारणायां प्रयुज्यते 'इह वा—विचारणाऽत्रोपसंग्रहः 'निदधानि' इति क्रियायै—अधिकरणकारकत्वेनाधारप्रदानाथ 'वा' निपातः, 'निदधानि' इति कर्मणि व्यापारः प्रवर्तनम्, तदुपसंग्रहस्ततुपयोजनं विचारणा वा लक्ष्यते । समग्रो मन्त्रस्तदर्थश्च—

हन्ताहं पृथिवीमिमां निदधानीह वेह वा । कुवित् सोमस्यापामिति ॥

सोमस्य रसं कुविद् बहुखल्वपां पीतवान् तेनाहं बहुबलवान् जातः, हन्तारेऽहमिमां पृथिवीमिहात्र निष्ठापयानि यद्वा—इह निष्ठापयानि । सोमस्य परमात्मन आनन्दरसं बहु पीतवान् तेनाहमिमां पृथिवीं पार्थिवीं तनूं निजामिह योगे निष्ठापयानि योगयुक्तां कुर्यामिह योगे वा ॥

अथापि समुच्चयार्थे भवति ॥ ४ ॥ "वायुर्वा त्वा मनुर्वा त्वा" ( तै० सं० १ । ७ । ७ । २ ) ।

समग्रमन्त्रस्तदर्थश्च—

वायुर्वा त्वा मनुर्वा त्वा * गन्धर्वाः सप्तविंशतिः ।
ते अग्रे अश्वमायुञ्जंस्ते अस्मिन् जवमादधुः ॥

अन्यश्च स एव 'वा' निपातः, समुच्चयार्थेऽपि भवति, यथा "वायुर्वा त्वा मनुर्वात्वा" ।

---

* यजुर्वेदे तु "वातो वा मनो वा गन्धर्वाः" इति पाठः (यजु० ९।७)

संसाराश्वस्य समष्टिवायुजवत्वात् शरीराश्वस्य मनो जववत् जविष्ठं मन उक्तं हि वेदेऽन्यत्र । समष्टिवायुना साकं पञ्चमहाभूताः, मनसा साकं दशेन्द्रियाणि दश प्राणाश्च सह विंशतिर्गन्धर्वा गच्छन्ति चरन्ति च संसारं शरीरं ते अग्रेऽश्वं संसाराश्वं शरीराश्वं योजितवन्तोऽस्मिन् बलं चाधापितवन्तः, तत्राग्रगामी वायुश्च मनुश्च मनश्चास्ति। अत्र मनुशब्दस्यार्थो शरीराश्वे योजितवन्तोऽस्मिन् बलं मनोऽस्ति यथान्यत्र वेदे साहचर्यं वर्तते "कथं वातो नेलयति कथं न रमते मनः" ( अथर्व० १०।७।३७) अनयोः संयोजने समुच्चयः कर्मोपसंग्रहः, तस्मिन् 'च' निपातः, प्रयुक्तः ।

अह इति च ह इति विनिग्रहार्थीयौ पूर्वेण संयुज्येते—
अयमहेदं करोत्वयमिदं ह करिष्यतीदं न करिष्यतीति ॥

भा०—'अह, ह' इति निपातौ विनिग्रहार्थीयौ स्तः, तौ पूर्वेण सम्प्रयुज्येते यं विनिगृह्णीतः, विनिग्रहः—नियमनं यथा—'अयम्—अह—इदं करोतु'—अयमेव 'यज्ञदत्तः' इदं कार्यं यजनादि करोतु नान्य इत्यर्थः । देवदत्तोऽयमिदं ह इदमेव 'पात्रमार्जनं' करिष्यति नेदं देवयजनम् । अत्र विनिग्रहो नियमनं कर्मोपसंग्रहो यं खलु 'अह, ह' निपातौ दर्शयतः, स्वप्रयोगात् पूर्वं विनिगृह्णीतः, करोति क्रियायाः कर्तृव्यापारं कर्म व्यापारं च विनिगृह्णाति पृथक् पृथक् । अह, ह च निपातः ।

अथाप्युकार एतस्मिन्नेवार्थे-उत्तरेण—मृषेमे वदन्ति सत्यमु ते वदन्त्यपि पदपूरण इदमु, तदु ॥

भा०—अथ च 'उ' निपातः खल्वेतस्मिन् विनिग्रहार्थे किलोत्तरेण वाक्यगतेनोत्तरेण वचनेन सह सम्प्रयुज्यते यद्वचनं विनिगृह्णाति यथा 'मृषेमे वदन्ति सत्यमु ते वदन्ति' सत्यं हि नासत्यम् । अथ च 'उ' निपातः पदपूरणः सन् प्रयुज्यते पदं पदस्थानं पूरयति सोऽर्थं नापेक्षते 'इदमु, तदु' । वेदे तु स वाक्यालङ्कार इति तद्यथा—

इदमु त्यत् पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ (ऋ० ४।५१।१)

---

शतपथ ब्राह्मणेऽपि यजुर्वेदानुसारी पाठः (शत० ५।१।४।८) निरुक्ते यास्कदृष्टो तैत्तिरीयसंहितायाम् 'त्वा' अधिकपाठः तथा 'वा' समुच्चयार्थः प्रतीयते, यजुर्वेदपाठे न समुच्चयार्थः प्रतीयते, यथा स्वामिदयानन्देन 'वा' शब्दस्तत्र 'इवार्थे मतः' "इवार्थेऽपि वा प्रयुज्यते" (अव्ययार्थनिबन्धनग्रन्थे) ।

मन्त्रार्थः—

इदमेव तद् पुरुतममतिप्रभूतं खलुप्रोरूपं ज्योतिः पूर्वस्यां दिशि वयुनवत् प्रज्ञानवत् ज्ञापनवत् स्वात्मानं परं च ज्ञापयतीति तथाभूतधर्मवद् तमसः— उपरि तिष्ठति। नूनं निश्चयेन प्रतिदिनं प्रवर्तमानास्ता उषसो दिव आदित्यस्य दुहितरो विभातीः प्रकाशयन्तीः सतीर्जनाय अन्यमानाय प्राणिने गातुं गमनं व्यवहारप्रापणं कुर्वन्ति ॥

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः।
उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रः ॥ ( ऋ० १।६२।६ )

मन्त्रार्थः—

इन्द्रस्य प्रयक्षतमस्य प्रकृष्टप्रशंसनीयस्य दस्मस्य दर्शनीयस्य यद्वा शत्रूणां क्षयितुस्तदेव दंसोदंसनीयं कर्म क्रियमाणं कर्म चारुतममतीव सुन्दरमस्ति, यत् खलूपह्वरे—उपयुक्ते भूप्रदेशे मधुरजला नद्यो नदीः—चतस्रः उपराः—दिशः उपराः—दिशः" ( निघ० १।६ ) अपिन्वन्—असिञ्चन् सिञ्चन्ति ॥

हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे, कथं हि करिष्यतीत्यनुपृष्ठे, कथं हि व्याकरिष्यतीत्यसूयायाम् ॥

भा०—'हि' इत्येष निपातोऽनेकार्थकः, तत्र 'इदं हि करिष्यति' इति हेतु-कथने—हेतुनिर्देशे यत्त्वं तिष्ठ तावदिदं हि तव कार्यं करिष्यति, स्थितौ 'इदम्' इति शब्देन सह प्रदर्शने हि प्रयुक्तः। 'कथं हि करिष्यति' अनुपृष्टे पुनः पृष्टेऽर्थे कार्यं क्रियमाणं तु यत् करोति तत्तु त्यजत्येव न तत्समासमपि, न तदर्थं साधन-सञ्चयः। कथं हि व्याकरिष्यति' इति खल्वसूयायां निन्दायाम्, करिष्यति चेत्—शीघ्रतया साधनसञ्चयमन्तरेण कथं हि विरुद्धं करिष्यति न सम्यक् करिष्यति इति निन्दा व्याकरिष्यमाणस्य व्याकुर्वतः कर्तुः ॥

किलेति विद्याप्रकर्ष एवं किलेत्यथापि न ननु इत्याताभ्यां सम्प्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवम् ॥

भा०—'किल' इत्येष निपातो विद्याप्रकर्षे सम्प्रयुज्यते, तद्यथा वेदप्रवचनं श्रुतं भवतः—एवं किल एवं तु भवान् वेदपरागः प्रवक्तरि विद्याप्रकर्षोऽनुमीयते। विद्याप्रकर्षो ज्ञानप्रभूतत्वं प्रभूतज्ञानवत्त्वं वा वेदस्य संग्रामकौशलस्येतिहासस्य लौकिकवस्तुप्रयोगस्य। 'न' इत्येतेन सह 'ननु' इत्येतेन सह च सम्प्रयुज्यते 'किल' निपातोऽनुपृष्टे—पृष्टस्य पश्चात् प्रत्युत्तरे सामान्ये नकारात्मके 'न किल

यस्त्वयोक्तमेवात्र, तथाऽभ्युपगमे नकारात्मकेऽग्रे वार्तालापमाप 'ननु किलैवं त्वयोक्तं भवेत् तर्हि स्यादेष दोषः....." इत्यादि०।

मेति प्रतिषेधे मा कार्षीर्मा हार्षीरिति च, खल्विति च
खलु कृत्वा खलु कृतमथापि पदपूरण एवं खलु तद् बभूवेति ॥

भा०—मा 'निपातः' प्रतिषेधे नकारे सम्प्रयुज्यते 'मा कार्षीः' न कुर्याः मा 'हार्षीः, न हरेः' 'खलु' इत्यपि प्रतिषेधे 'खलु कृत्वा—न कृत्वा, खलु कृतम्—न कृतम्। पदपूरणोऽपि वाक्यालङ्कारूपोऽपि भवति। 'एवं खलु तद् बभूव'—एवं तद् बभूव। "मित्रं कृणुध्वं खलु मृळता नो" ( ऋ० १०। ३४। १४ ) मित्रं कुरुत नोऽस्मान् सुखयत।

शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट
एवं शश्वदित्यस्वयं पृष्टे ॥

भा०—'शश्वत्' इति निपातो विचिकित्सार्थीयो भाषायां न तु वेदे, विचिकित्सा शङ्कागर्भितविचारणा। 'शश्वदेवम्' अनु पृष्टे—प्रश्नस्योत्तरानन्तरं पुनः प्रश्ने सन्दर्भपूर्वकमुच्यते पुरस्तात्प्रयोगे—'अच्छ—एवम्—भवतु—एवम्' 'एवं शश्वत्' अस्वयं पृष्टे—अन्येन कथिते कस्मिंश्चिद्विषये जाते सन्देहे, उपरिष्टात् प्रयोगे 'एवं शश्वत्'—एवं स्यात्? एवं किं भवितुं शक्यते? *

---

* 'शश्वत्' इति निपातो विचिकित्सार्थीयो लोके प्रयुज्यते-इत्युक्त्वा निरुक्तकारेण यास्केनालङ्कृतं किन्तु वेदे विचिकित्सार्थीयो वाऽन्यार्थीय इति नोक्तम्, तर्हि किमर्थं लोकप्रयुक्तः 'शश्वत्' निपातो दर्शितः? लोकवेदयोः समानार्थत्वे भिन्नार्थत्वे च खलूदाहरणदानेन यद्वा वेदे हि प्रयुज्यमानस्योदाहरणेन भवितव्यम्। एवं तु निरुक्तकारस्य 'शश्वत्' प्रसङ्गोत्थापनमसमञ्जसं प्रतीयते, परन्तु नासमञ्जसं यतो भाषायां लोके वा खलु 'शश्वत्' निपातो विचिकित्सार्थीयोऽस्ति परन्तु वेदे तु 'नूनम्' निपातो विचिकित्सार्थीयः स च भाषायामपीति तु साधारण्येन सिद्ध्यति हि, परन्तु विशेषतस्तु सिद्ध्यतीदं यत् 'शश्वत्' भाषायां निपातो भवतु विचिकित्सार्थीयो, वेदे तु विचिकित्सार्थीयो न विद्यते 'शश्वत्' निपातः। वेदे 'शश्वत्' न निपातत्वेन प्रयुज्यते, किन्तु नामपदं 'शश्वत्' सत्त्वप्रधानमस्ति सुब्विभक्तिभिश्च व्यवह्रियते, तद्यथा—"यश्च पणिरभुजिष्ठो यश्च रेवाँ अदाशुरिः। धीराणां शश्वतामहं तदपागिति शुश्रुमः॥" (अथर्व० २०।१२८।४) अत्र षष्ठीबहुवचने 'शश्वतां सदातनानां सतां धीराणां मध्ये स्वयमभोक्ताऽन्यस्मै

नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणाश्च ॥

भा०—'नूनम्' निपातो भाषायां लोके विचिकित्सार्थीयोऽस्ति वेदे तूभयविषयको विचिकित्सार्थे पदपूरणे चागच्छति । विचिकित्सा शङ्कागर्भितविवेचना सत्त्वेऽसत्त्वे वा ।

अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्साञ्चकार स इन्द्र एत्य परिदेवयाञ्चक्रे ॥ ५ ॥

भा०—अगस्त्यो यजमानः, इन्द्रो यज्ञस्य देवो यस्मै हविः समर्प्यते, मरुतः—ऋत्विजः । एते त्रयो यज्ञस्याधिनायका भवन्ति, सर्वत्रापि यज्ञे देवाय हविर्निरूप्यते सङ्कल्प्यते, परन्तु दीयते त्वृत्विग्भ्यः, ते खल्वृत्विजः पुनर्देवाय प्रयच्छन्तीतिक्रमः सर्वत्र यज्ञे कर्मकाण्डरूपे तथाधिदैविके—आधिभौतिके—आध्यात्मिके च प्रवर्तते । अत्र विशेषत आध्यात्मिके यज्ञे सङ्गतिरस्ति । अवतरणिका निरुक्तकारेण दत्ता 'न नूनम·····' इति मन्त्रप्रसङ्गे यश्च मन्त्रो वक्ष्यमाणस्तृतीयपादस्यारम्भे । अवतरणिका—'अगस्त्य इन्द्राय·····' इति । अगस्त्यो यजमानो योऽगान् वृक्षानोषधिवनस्पतीन् स्त्यायति संगृह्णाति—अगस्त्यः, यजमानो नानाविधानोषधिवनस्पतीन् होतुं रक्षति हि, इन्द्रो वृष्टियज्ञस्य प्रसिद्धो देवोऽस्ति, मरुतः—ऋत्विजः "मरुतः—ऋत्विक् नाम" ( निघं० ३।१८ )। आध्यात्मिकयज्ञेऽगस्त्यो जीवात्मा सोऽपि अगं वृक्षं संसारवृक्षं स्त्यायति संगृह्णाति । उक्तं यथा वेदे "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति·····" ( ऋ० १।१६४।२० ) जीवात्मा भोगरूपं फलं भुञ्जानः संसारवृक्षं स्त्यायति संगृह्णाति । तथा "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थ सनातनः" ( कठो० वल्ली ६ । १ ) शरीरमूर्ध्वमूलोवृक्षोऽस्त्यूर्ध्वमुखत्वात्, अवाक्शाखश्च हस्तपादरूपत्वादश्वत्थोऽस्थिरो वृक्ष एष तं जीवात्मा स्त्यायति संगृह्णाति हि न

---

खल्वदाता च नीचो जनोऽस्ति । तथा "नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते" (साम० पू० प्र० १ । दशति० ५।१०) अत्र चतुर्थ्येकवचने 'शश्वते जनाय-शाश्वतिकायामराय जनाय स्वस्यामरत्वाय मुक्तत्वसाधनाय "शश्वत् शाश्वतिकः" (निरु० ४।१६) अपि च "अप्रसन्न ससतो बोधयन्ती शश्वत्तमा गात् पुनरेयुषीणाम् (ऋ० १।१२४।४) अत्र उषाः शश्वत्तमा शाश्वतिकतमा सदातनितमा कथिता "शश्वत्तमा-शाश्वतिकतमा (निरु० ४।१६) निघण्टावपि नामपदं मतम् "शश्वत् बहुनाम" (निरु० ३।१)

स्वकुमिच्छति हि । तस्य जीवात्मनो यजमानभूतस्य मरुत ऋत्विजः सन्ति प्राणाः "प्राणा वै मरुतः" ( ऐ० ब्रा० ३।१६ ) इन्द्रो देवस्तु परमात्मा । आध्यात्मिके यज्ञे खल्वेतद् वर्णनमालङ्कारिकमित्थं यद् गर्भे जीवात्मा स्तुतिप्रार्थनारूपस्य हविषो निरूपणं सङ्कल्पमिन्द्राय परमात्मने कृतवान् परन्तु गर्भाद् बहिरागत्य सर्वाभिप्रायान् मरुद्भ्यः प्राणेभ्यः सम्प्रदातुमैच्छत् तेषां पोषणे ह्युन्मुखो जातः । परमात्मानं तु विस्मृतवान् हि, यथाऽग्रे निरुक्ते गर्भोपनिषदि च प्रचर्च्यते "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः । नानायोनिसहस्राणि मयोषितानि यानि वै । अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः । सांख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम् । जातश्च वायुना स्पृष्टस्तन्न स्मरति" ( निरु० १४।७ ) तथैव गर्भोपनिषदि "मृतश्चैव जन्म चैव पुनः पुनः । महादुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् । यदि योन्याः प्रमुच्येऽहं प्रपद्ये महेश्वरं····। ध्याये ब्रह्म सनातनम् । अथ योनिद्वारसम्प्राप्तो····जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति ।" ( गर्भोप० ४ ) पुनरालङ्कारिकभाषायां स इन्द्रः परमात्माऽऽगत्य परिदेवयाङ्कके-उपालम्भं दत्तवान् यत् 'न नूनमस्ति····' इति मन्त्रद्वारा ॥

इति द्वितीयः पादः ।

---

## तृतीयः पादः

---

न नूनमस्ति नो श्वः कस्तद् वेद यदद्भुतम् ।
अन्यस्य चित्तमभिसञ्चरेण्यमुताधीतं विनश्यति ॥ *
( ऋ० १ । १७० । १ )

न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन् द्यवि द्युरित्यह्नो नामधेयं द्योतत इति सतः श्व उपाशंसनीयः कालो ह्यो हीनः कालः, कस्तद् वेद यदद्भुतं कस्तद् वेद यदभूतम् । इदमपीतरदद्भुतमभूतमिव । अन्यस्य चित्तमभिसञ्चरेण्यम् । अभिसञ्चारि, अन्यो नानेयः । चित्तं चेततेः । उताधीतं विनश्यतीति, अप्याध्यातं विनश्यति । आध्यातमभिप्रेतम् ॥

---

* ऋषिः—अगस्त्यः । देवता—इन्द्रः ।

**वक्तव्यम्—**

भा०—मन्त्रे द्वौ नकारौ प्रतिषेधार्थीयौ निपातौ, तयोर्द्वाभ्यामाश्रयाभ्यां भवितव्यं हि । उत्तरस्य नकारस्याश्रयस्तु 'श्वः' इत्येतत्साहचर्यात् 'अद्य'—अद्यतनं द्वितीयस्य प्रतिषेधस्याश्रयो भवितुं शक्यः, पुनश्च 'न नूनमस्ति' 'अस्ति' इति तु वर्तमानकालस्य क्रिया तदाश्रयोऽद्य सम्प्रतिकालः, स सर्वथा युक्तः । 'श्वः' तथा 'अस्ति' इत्याभ्यां खलु 'अद्य' इत्याकांक्षा स्वाभाविकी न्याय्या वा ।

**मन्त्रार्थः—**

इन्द्रः कथयति—मदर्थं सङ्कल्पितं खल्वद्य-सम्प्रति नास्ति तर्हि श्वः खल्वपि न भवेत् । इति विचिकित्सा शङ्कागर्भितविचारणा सा च 'नूनम्' निपातेन व्यज्यते । श्वोऽनागतं कालं को जानीयाद् यस्खल्वद्भुतमभूतं न सम्मुखं भविष्यद्-वृत्तिकं यन्न भूतम् । लोके यदद्भुतमुच्यते तदपि त्वभूतमेव न पूर्वं भूतमदृष्टमिव तत् । तस्य—अन्यस्य—त्वभिन्नस्य परस्य चित्तं खल्वभिसञ्चारि किमप्यभिलक्ष्य सञ्चरणशीलं प्रतिज्ञातमपि न पूरयति । उताप्यधीतमाध्यातं विनश्यति, आध्या-तमभिप्रेतम् । प्रतिज्ञातं पूरयितुमिच्छता जनेनाध्यातं धारितं प्रतं विस्मृतं भवति यद्वा सङ्कल्पितं वस्तु विनश्यति वस्तुनोऽस्थिरधर्मवत्त्वात् । अत्र विचि-कित्सायाः शङ्कागर्भितविचारणायाः स्थानानि सहेतुकानि । अद्यतनं दातव्यं सङ्कल्प्य यद्यद्य हि न दत्तं श्वो दास्यते तत्र विचिकित्सा शङ्कागर्भितविचारणा भवति यद् भविष्यतो विषयस्याभूतस्य को जानीयात् को मन्येत दास्यते न वा दास्यते—इति । द्वितीया विचिकित्सा पुनरप्यन्यस्य दातुर्जनस्य चित्तं लोभात् सञ्चरणशीलं सत् खलु न दद्यात्—इति । तृतीया विचिकित्सा, दातुं विस्मरेद्वा । चतुर्थी विचिकित्सा, उपस्थितायां स्मृत्यामपि दातव्यं वस्तु विनश्येदिति । पञ्चमी विचिकित्सा तदापि कदाचित्—मृत्युर्भवेत् । मनुष्यस्य स्वभावो यद् विपत्तिकाले तदुद्धरणाय विविधं शुभसङ्कल्पं धारयति यदस्माद् विमुच्याहमिदं शिवं कृत्यं करिष्यामि, परन्तु निवृत्ते विपत्तिकाले तच्छिवं कृत्यं न स्मरति । तस्माद् यदद्यतनं कर्तव्यं तदद्यैव कुर्यात्, अद्यतनं कार्यं प्रमादादद्य न करिष्यति चेत्-श्वः कर्तुं शक्ष्यते का प्रत्याशा, श्वो जीवनं तिष्ठेन्न वा तिष्ठेत्, स्थितेऽपि जीवने शक्तिरवशिष्येत न वा, स्थितायां शक्तावपि साधनं तिष्ठेन्न वा, सति साधनेऽपि कार्पण्यं प्रवर्तेत मनसि, अकार्पण्येऽपि विस्मरेद् दातुम्, सत्यां स्मृतावपि कार्य-कालात् पूर्वं वस्तु विनष्टं भवेत्, इति बहूनि विचिकित्सास्थानानि, तस्मात् "अद्यैव कुरु तच्छ्रेयो मा त्वां कालोऽत्यगान्महान् । को हि जानाति कस्याद्य

मृत्युकालो भविष्यति ॥" ( महा० मोक्ष० २७७।१४ ) इति शिक्षा मन्त्रतः स्वाभाविकी प्राप्यते । *

निरुक्तय:—अद्य–अस्मिन् द्यवि, 'अस्मिन्' शब्दात् 'स्मिन्' विभक्तिं पृथक्कृत्य 'अ' अवशिष्टः 'द्यवि' अपि सप्तमी, तयोः समानाधिकरणे कर्मधारये समासे सति समासान्ते टचि च 'अद्य' शब्दः कल्पितः । 'द्युः' च "अहर्नाम" ( निघ० १ । १९ ) प्रसङ्गतः 'द्यु' शब्दस्य निर्वचनं क्रियते । 'द्योतते' इति क्रियायाः कर्तुः सदात्मनो वर्तमानस्य नाम द्युः । "द्युत दीप्तौ" (भ्वादि०) ततः 'डः' प्रत्ययो डिदभिमतः "आङ्परयोः खनिशृभ्यां डिच्च" ( उणा० १ । ३३ ) बाहुलकात् । 'श्वः' उपाशंसनीयोऽनन्तरः प्रतीक्ष्यमाणः कालो दिवसः । ह्यो हीनः कालो गतोऽतो ह्यनन्तरः कालः । हीनो व्यतीतस्त्यक्तो गतो वा कालः "ओहाक् त्यागे" ( जुहो० ) "ओहाङ् गतौ" ( जुहो० ) । अन्यस्य नानेयस्य, अन्यो नानेयो न स्वाधीनः—आत्मनो भिन्नः परोऽन्यः । नञ्पूर्वात् 'णीञ्' धातोः 'ड्यः' प्रत्ययः—अन्यः ॥

अथापि पदपूरणाः ॥ ६ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥
( ऋ० २ । ११ । २१ )

सा ते प्रतिदुग्धां वरं जरित्रे । वरो वरयितव्यो भवति । जरिता गरिता । दक्षिणा मघोनी मघवती । मघमिति धननामधेयं मंहतेर्दानकर्मणः । दक्षिणा दक्षतेः समर्द्धयतिकर्मणो व्यृद्धं समर्द्धयतीति । अपि वा प्रदक्षिणागमनाद् दिशमभिप्रेत्य दिग्घस्तप्रकृतिः, दक्षिणो हस्तो दक्षतेरुत्साहकर्मणः । दशतेर्वा स्याद् दानकर्मणः । हस्तो हन्तेः प्राशुर्हनने । देहि स्तोतृभ्यः कामान् । मास्मानतिदंहीर्मास्मानतिहाय दाः । भगो नो अस्तु बृहद् वदेम स्वे वेदने, भगो भजतेः । बृहदिति महतो नामधेयं परिवृढं भवति । वीरवन्तः कल्याणवीरा वा । वीरो वीरयत्यमित्रान् वेतेर्वा स्याद् गतिकर्मणो वीरयतेर्वा ॥

भा०—'नूनम्' इति निपातः 'नूनं सा ते प्रतिवरम्' इति मन्त्रे पदपूरणे वाक्यालङ्कारे वर्तते ।

* समग्रसूक्तस्य विशिष्टं विवरणं तु मयारचिते 'वेद में इतिहास नहीं' इति ग्रन्थे यद्वा 'वैदिक वन्दन' इति पुस्तके पश्यन्तु ।

मन्त्रार्थः—

हे इन्द्र ! सा मघोनी मघवती धनवती दक्षिणा "मघं धननाम" ( निघ० २ । १० ) तव जरित्रे स्तोत्रे, जरिता गरिता स्तोता "गृणाति–अर्चतिकर्मा" ( निघ० ३ । १४ ) तस्मै स्तोत्रे वरं यो वरयितव्यो भवति तं खलु प्रतिदुग्धां तस्य वरस्य दोहनं करोतु । मघमिति मंहतेर्दानकर्मणः "मंहते दानकर्मा" ( निघ० ३ । २० ) मघं धनं हि दीयते चादीयते च । दक्षिणा दक्षतेः समर्धयतिकर्मणः समर्धनार्थात् "दक्ष वृद्धौ" ( भ्वादि० ) व्यृद्धं कृशं समर्धयति हि यतः । अपि दक्षिणा प्रदक्षिणागमनात् प्रदक्षिणो प्रगतो दक्षिणां प्रदक्षिणो हस्तस्तेन गमनं प्रापणं यस्यास्तस्माद् दक्षिणा तद्धितार्थः प्रशब्देन वर्ण्यते दिशमभिप्रेत्य, दक्षिणां दिशमभिलक्ष्य यतो दक्षिणदिक्कः प्रगता प्राप्ता भवति यजमानाद् दक्षिणदिक्कः प्रतिग्रहीतारं प्रगता भवति तस्माद् दक्षिणा, दक्षिणादिक् च हस्तप्रकृतिः, हस्तः प्रकृतिनिमित्तं कारणं यस्या हस्तप्रकृतिका दक्षिणा, कतरो हस्त दक्षिणो हस्तः स प्रकृतिर्दक्षिणदिशः पूर्वाभिमुखस्थितस्य दक्षिणहस्तगता दिग् दक्षिणा, पुनर्दक्षिणो हस्तः, दक्षिणस्तु दक्षतेरुत्साहकर्मणः "दक्ष शीघ्रार्थे" ( भ्वादि० ) शीघ्रार्थो ह्युत्साहार्थः "द्रुदक्षिभ्यामिनन्" ( उणा० २।५१ ) दक्षते शैघ्र्यमाचरति–उत्सहते स दक्षिणो हस्तः, हस्तः पुनर्हन्तेः प्राशुर्हनने, हनने ताडने पीडने मर्दने श्रमविधाने हस्त एव प्राशुः प्रकृष्टो व्यापनशीलः शीघ्रकारी वाऽस्ति । अतएव हे इन्द्र ! त्वं स्तोतृभ्यः शिक्ष–स्तोतृभ्यो दक्षिणाया वरान् कामान् भोगान् शिक्ष देहि "शिक्षति दानकर्मा" ( निघं० ३।२० ) माऽतिधग्–अस्मानतिहाय–अतिक्रम्य त्यक्त्वा धग् देहीर्दाः, 'धग्-धक्' इति प्रयोगे दंह धातु दानार्थको मतो निरुक्तकारेण छान्दसः । अनुवादे लुङ्लकारः । भगो हे भगवन् ! यो भगं भजनीयं महदैश्वर्यं स्वरूपैश्वर्यमध्यात्मज्ञानरूपं नोऽस्माकं भवतु, यतो वयं सुवीराः सुगताः प्राप्ता वीरा यैस्ते वीरवन्तो यद्वा सु-प्रशस्ता वीरा येषां तथाभूताः कल्याणवीराः सुखदपुत्रवन्तः सन्तो विदथे स्वे वेदने स्वकीये स्तवने स्तुतिप्रसङ्गे तव प्रशंसनं लोकहितं बृहत्तमं महद् वदेम । वीरो वीरयति–वि, ईरयति विशेषेण कम्पयति विक्षिपति विचालयति शत्रून् । विपूर्वक ईरधातुरत्र "ईर कम्पने" ( अदादि० ) "ईर क्षेपे" ( चुरादि० ) वेतेर्वा गतिकर्मणः 'वी-रक्' ( उणा० २।१३ ) शत्रोः क्षेपकः । 'वीरयते वा' "वीर विक्रान्तौ" (चुरादि०) वीरयते शत्रुषु विक्रमं कुरुते वीरः ।

सीमिति परिग्रहार्थीया वा पदपूरणे वा । "प्र सीमादित्यो असृजत्" ( ऋ० २ । २८ । ४ ) प्रासृजदिति वा,

प्रासृजत् सर्वत इति वा। "विसीमतः सुरुचो वेन आवः" ( यजु० १३ । ३ ) इति च । व्यवृणोत् सर्वत आदित्यः । सुरुच आदित्यरश्मयः सुरोचनात् । अपि वा सीमेत्येतदनर्थमुपबन्धमाददीत पञ्चमीकर्माणम्-सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विसीव्यति देशाविति ॥

भा०—'सीम्' इत्येष निपातः परिग्रहार्थीयः, परिग्रहः सर्वतो ग्रहणं सर्वदेशित्वं सर्वत्र प्रवर्तनम् । तस्मात् सर्वत्र प्रवृत्तिमत्त्वेऽर्थे भवति, यद्वा पदपूरणे वाक्यालङ्कारे प्रयुज्यते । यथा 'प्र सीमादित्यो असृजत्' इत्यत्रोभयार्थयोजना यास्केन दर्शिता 'प्रासृजत्' इति कथित्वा पदपूरणे 'प्रासृजत् सर्वतः' इति चोक्त्वा परिग्रहार्थे । समग्रमन्त्रस्तदर्थश्च—

प्रसीमादित्यो असृजद् विधुर्ता ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न विमुञ्चन्त्येते वयो न पप्तू रघुया परिज्मन् ॥

आदित्य आदितो वर्तमानो विश्वस्य विधर्त्ता परमात्मा यद्वा आदित्यः सूर्यः खल्वृतं सत्यं सत्यनियमं प्रसृष्टवान् यद्वा सर्वत्र प्रसृष्टान् तस्मात् तदधीनस्य वरुणस्यावरकस्य मेघस्य सिन्धवो यन्ति, न श्राम्यन्ति न वहनादुपरमन्ति किन्तु पक्षिण इव रघुया क्षिप्रं गन्तारः परिज्मन् भूमावधि पतन्ति ।

द्वितीयमुदाहरणं च 'विसीमतः सुरुचो वेन आवः' तस्य समग्रो मन्त्रस्तदर्थश्च—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

पुरस्तात् सृष्टेः प्राक् प्रथमं जज्ञानं जनकरूपं प्रकाशस्वरूपं ब्रह्मासीत्, पुनस्तद्विरचितो वेन आदित्यः सुरोचनान् रश्मीन् वि—आवः—सर्वतो विस्तारितवान् मर्यादातो विस्तारितवान् वा, अस्याधीने बुध्न्याः—अन्तरिक्षभवाः—उपमानकारिणो रश्मयो विष्ठाः सर्वत्र विष्ठिताः सतः स्थूलस्यासतः सूक्ष्मस्य जगतो योनिं गृहमाश्रयस्थानमन्तरिक्षमुपमाः—उपमातृर्वि वः—विवृणोति प्रकटयति ।

अत्र 'सीमतः' इत्यस्यार्थः सर्वतः कृतः, 'सीम्' निपातः परिग्रहार्थीयः, तस्य 'सर्वतः' इत्यर्थस्तु पूर्ववत् स्वतन्त्रोऽस्ति हि पुनः 'सीम्' अस्याग्रे 'अतः' अनर्थकः 'सीम्' इत्यस्य निपातपक्षे । अतएव द्वितीयं पक्षं गृह्णाति निरुक्तकारो यत् 'सीमतः' इत्यत्र 'सीम्' निपातात् 'अतः' एतदनर्थकं स्वरूपतोऽर्थतश्चोपबन्धनं प्रत्ययरूपं पञ्चम्यर्थकं भवेत् । परन्तु 'सीम्' इति न मकारान्तो निपातः । किन्तु 'सीमा' इत्येतत् स्यात् खलु नाम पदं ततः पञ्चम्यर्थकं तस् प्रत्ययः—

उपयुक्तः । तत्र प्रत्यये सति पञ्चम्यां तथा 'सीमन्' इति नामवाचकस्य 'सीम्नः' इति रूपं भवति तथा ह्यत्र 'सीमतः' इति रूपं छान्दसं ह्रस्वमत्र । 'सीमातः मर्यादातः' इति मन्तव्यः । यतः सीमा भवति मर्यादा, विषीव्यति वियोजयति हि द्वौ देशौ प्रदेशौ । *

त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्धनामेत्येके ॥ ७ ॥

ऋ॒चां त्व॒: पोष॑मास्ते पुपु॒ष्वान् गा॑य॒त्रं त्वो॑ गायति॒ शक्व॑रीषु ।
ब्र॒ह्मा त्वो॒ वद॑ति जातवि॒द्यां य॒ज्ञस्य॒ मात्रां॒ वि मि॑मीत उ त्वः ॥
( ऋ० १० । ७१ । ११ )

इत्यृत्विक्कर्मणां विनियोगमाचष्टे-ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी गायत्रमेको गायति शक्वरीषूद्गता । गायत्रं गायतेः स्तुतिकर्मणः । शक्वर्य ऋचः शक्नोतेः । तद् यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते । ब्रह्मैको जाते जाते विद्यां वदति । ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति । ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतः । यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः । अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयत इति वा अपि वाधीयाने युरुपबन्धः, अध्वर इति यज्ञनाम । ध्वरति हिंसाकर्मा तत्प्रतिषेधः ॥

भा०—'त्व' इत्येतत् सर्वनाम विनिग्रहार्थीयं भवत्यनुदात्तं सदपि "त्व त्वत् नेम सम सिम" [ पाणिनीयगणपाठे सर्वनामसु ] विनिग्रह एकदेशित्व-मेकदेशवृत्तिर्वा तदर्थको विनिग्रहार्थीयः कश्चिदेक इत्यर्थः । यथा महाभाष्य-व्याकरणे पतञ्जलिनोक्तम् "उत त्व पश्यन्न ददर्श वाचमुत''''अपि खल्वेकः पश्य-न्नपि न पश्यति" ( महाभाष्य व्या० अ० १ । पा० १ । आ० १ ) एके पुनराचार्या नैरुक्ता वा 'त्व' इति—अर्धनामेति—अर्धस्य पर्यायं मन्यन्ते, तद्विषयेऽग्रे निरुक्तकारः स्वयं वक्ष्यति 'त्वो नेम इत्यर्धस्य" ( निरु० ३ । २० ) अत्र तु विनिग्रहर्थीयः कश्चिदेकः, 'त्वः' उदाह्रियते "ऋचां त्वः''''" मन्त्रः । ऋत्विजां कर्मविषये विनियोगं विभज्य नियोजनं निबन्धनमेकैकस्य प्रवृत्तिमस्य कथयति । मन्त्रार्थः—

तेषां त्वः—एको होता खल्वृचां पोषं पुपुष्वानास्ते—ऋचां यत् पोषणं † धारणं

---

* 'सीमिति सीमेत्येतद्' इत्यनेन पाठेन भवितव्यं पूर्वः सीमिति 'लुप्तो वाऽ ध्याहर्तव्यः । "अपि वा सीमित्येतत्" (स्कन्दमहेश्वरभाष्यम्)

† "पुष धारणे" । (चुरादि०)

देवतार्चनं देवतास्तवनं यत ऋग्भवति खल्वर्गचनी देवतायाः स्तवनी तस्माद् देवतार्चनं देवतास्तवनमेव ह्वृचां पोषः पोषणं तद् देवतार्चनं पुपुष्वान् * धारयन्नाराधयन्नास्ते होता, इति होतृकर्म । उच्यते हि "यद्वा स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्याह्वयति तदेव होतुर्होतृत्वम्" ( ऐ० १ । २ ) त्वः—एक उद्गाता शक्करीषु शक्करीनाम्नीषु खल्वृक्षुगायत्रं देवताविषयं गानं गायति गायत्रं स्तुत्यर्थकाद् गैधातोः प्रयोगः, शक्वर्यश्च शक्करीनाम्न्यः—ऋचो भवन्ति शक्नुवन्ति यतः, यदाभिर्वृत्रं मेघं हन्तुमशकत् तच्छक्करीणां शक्करीत्वम्—इति विज्ञायते—ब्राह्मणे, तथा च ब्राह्मणम् "एताभिर्वा इन्द्रो वृत्रमशकद्धन्तुं तद्यदाभिर्वृत्रमशकद्धन्तुं तस्माच्छक्वर्यः" [ कौ० २३।२ ] त्वः—एको ब्रह्मा जातविद्यां जाते जाते कर्मणि—उच्चारणकर्मणि होमकर्मणि च विद्यां ज्ञानं वदति । उक्तं यथा "यज्ञस्य हैष भिषग् यद् ब्रह्मा यज्ञायैव तद्भेषजं कृत्वा हरति" [ ऐ० ५ । ३४ ] ब्रह्मा श्रुततो वेदज्ञानात् परिवृढः परिवृद्धो भवति, वेदत्रयीं चतुरो वेदान् वा जानातीति यतः सः, यथा ब्रह्म † वेदचतुष्टयं विद्यात्रयं वा परिवृढं सर्वज्ञानाद् भवति तस्य सर्वोत्कृष्टशास्त्रत्वात् तथा सर्वोत्कृष्टशास्त्रज्ञत्वात् स ब्रह्मा परिवृढः । त्वः—एकोऽध्वर्युर्यज्ञस्य मात्रां विमिमीते हि, यज्ञे—इतिकर्तव्यतायाः परिमाणं हव्यद्रव्यस्य क्रियाविधानं चाध्वर्युर्विशिष्टरूपेण नियतं करोति । अध्वर्युः खल्वध्वरयुर्भवति, अध्वरं युनक्ति संयुक्ते ‡ यद्वा—अध्वरस्य नेता + प्रापको प्रहीता, अध्वरं कामयते यो वा, × अध्वरमधीयानेऽध्वरं योऽधीते, † इत्यत्र 'युः' प्रत्ययः । अध्वरो यज्ञो भवति, 'ध्वृ' धातुर्हिंसार्थः । "ध्वरति वधकर्मा" ( निघ० २।१९ ) तत्प्रतिषेधोऽध्वरः यज्ञो हिंसारहितो भवति ॥

---

* लडर्थे क्वसुश्छान्दसः ।

† "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" (मनु १ । २३) ।

‡ अध्वरं युनक्ति 'अध्वर–युज-कुः' "कुभ्रं मश्च" (उणा० १ । २२) इति कुः प्रत्ययः पुनः "डिच्च" (उणा० १ । ३३) डित्त्वात् टिलोपः । अध्वरयुः ।

+ अध्वरस्य प्रापकः प्रचालकः "या प्रापणे" (अदादि०) प्रापकः प्रचारकः प्रेरयिता । तस्मादेव 'नेता' इति शब्देन प्रापकः प्रचारकः प्रेरको लक्षितः ।

× आत्मनोऽध्वरं कामयते—इच्छतीति । "सुप आत्मनः क्यच्" (अष्टा० ३ । १ । ८) पुनः "क्याच्छन्दसि" (अष्टा० ३ । २ । १७०) अनेन 'युः' प्रत्ययः 'सुम्नयुः' इति वत् ।

† "तदधीते तद्वेद" (अष्टा० ४ । २ । ५९) छान्दसः 'उः' प्रत्ययः ।

निपात इत्येके तत्कथमनुदात्तप्रकृति नाम स्यात्। दृष्टव्ययं तु भवति। "उत त्वं सख्ये स्थिरपीतमाहुः" (ऋ० १०। ७१। ५) इति द्वितीयायाम्। "उतो त्वस्मै तन्वं विसस्रे" (ऋ० १०। ७१। ४) इति चतुर्थ्याम्।

भा०—'त्वः' इति निपातोऽस्ति, इत्येके—आचार्या मन्यन्ते। कुतः। इत्युच्यते। अनुदात्तप्रकृति नाम न भवति—अनुदात्तधर्मकमनुदात्तस्वरं नाम न भवति, कथं हि खलु स्यादनुदात्तधर्मकं नाम, * तस्मात्तस्यानुदात्तस्वरत्वात् स निपात एवेति पूर्वपक्षः। अथ समाधानम्—यत् 'त्व' इति दृष्टव्ययं तु भवति—नाम खलु दृष्टव्ययं भवति, दृष्टश्च व्ययो विभक्तिपरिणामः त्वशब्दस्य। निपातस्त्वव्ययं भवति, उक्तं च "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥" (महाभाष्य ध्या० १।१।६) त्वशब्दस्य लिङ्गवचनविभक्तिरूपो व्ययो वेदे मन्त्रेषु वा दृश्यते, † तद्यथा—"उत त्वं सख्ये स्थिरपीतमाहुः" इत्यत्र द्वितीयायां विभक्तौ 'त्वम्' इति शब्दः, समग्रमन्त्रश्च व्याख्यातः प्रथमस्य षष्ठे पादे विंशे खण्डे। तत्र स द्रष्टव्यः। "उतो त्वस्मै तन्वं विसस्रे" इत्यत्र चतुर्थ्यां विभक्तौ 'त्वस्मै' शब्दः। समग्रो मन्त्रश्च व्याख्यातोऽग्रे प्रथमस्य षष्ठे पादे—एकोनविंशे खण्डे।

अथापि प्रथमाबहुवचने॥ ८॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे॥
(ऋ० १०। ७१। ७)

अक्षिमन्तः कर्णवन्तः सखायः। अक्षि चष्टेः, अनक्तेरित्याग्रायणः। तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते। कर्णः कृन्तते निकृत्तद्वारो भवति। ऋच्छतेरित्याग्रायणः। ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते, मनसां प्रजवेष्वसमा बभूवुः। आस्यदघ्ना अपरे उपकक्षदघ्ना अपरे। आस्यमस्यतेः। आस्यन्दत एतदन्नमिति वा। दघ्नं दघ्यतेः स्रवतिकर्मणः। दस्यते र्वा स्याद्वि-

* नाम शब्दोऽन्तोदात्तो भवति "फिषोऽन्त उदात्तः" (फिट् सू० १।१)

† 'त्वः' इति—अनुदात्तस्वरोऽपि भवति ह्यपवादात्।
"त्वत्वसमसिमेत्यनुच्चानि" (फिट् सू० ४।६)

दघ्नतरं भवति प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे स्नानार्हाः ।
ह्रदो ह्रादतेः शब्दकर्मणः-ह्लादते वा स्याच्छीतीभावकर्मणः ॥

भा०—जनाः खलु सन्त्यक्षिमन्तो नेत्रवन्तः कर्णवन्तस्तु सखायः समानख्यानाः समानं पश्यन्ति समानं शृण्वन्ति च तथाभूतबाह्यरूपकाः सन्ति परन्तु मनसां प्रजवेषु मनसामिति बहुवचनं व्यक्तिबहुत्वमपेक्ष्य यद्वा मनोबुद्धिचित्ताहङ्काराणां ज्ञानगमनप्राप्तिषु * असमाना भवन्ति । तत्र दृष्टान्तः, यथा ह्रदाः—जलाशयाः † भवन्त्यादघ्नासः—आस्यदघ्नाः ‡ मुखप्रमाणाः—मुखपर्यन्ताः, उपकक्षास उपगतकक्षाः × कक्षपर्यन्ताः, अप्येके स्नात्वाः + प्रस्नेयाः स्नानार्हाः—पुरुषनिमज्जनयोग्याः—ददृश्रे—ददृशिरे दृश्यन्तेऽल्पमध्यमप्रभूतजलवन्तो दृश्यते तथा मनोजवेषु मनसां ज्ञानगमनप्राप्तिषु भिन्नभिन्ना निकृष्टमध्यमोत्तमज्ञानादिमन्तो भवन्ति ।

निरुक्तयः—अक्षि शब्दः—चष्टेः "चक्षिङ् दर्शने" ( अदादि० ) इति धातोर्यद्वाऽनक्तेः "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रुधादि० ) इति—आग्रायण आचार्यो मन्यते, अक्ष्णा दृश्यते—इति तु स्पष्टमेव तस्मात् 'चक्षिङ् दर्शने' धातुस्तु प्रत्यक्षं लक्ष्यते, परन्तु अञ्जू धातुर्न दर्शनार्थस्तत्र प्रयोगः कथमिति स्पष्टीकरोति यदेतेऽक्षिणी नेत्रे व्यक्ततरे इव भवत इति कश्चिद् ब्राह्मणे प्रसिद्धिः । अक्षिणी सर्वेष्विन्द्रियेषु व्यक्ततरे स्पष्टतरे भवतः प्रत्यक्षी कर्तुं यतो व्यक्ते हि साधने नेत्रे स्तः । 'कर्णः कृन्ततेर्निकृत्तद्वारो भवति' कर्णशब्दः "कृती छेदने" ( तुदादि० ) इति धातोरस्ति प्रयोगो यतो निच्छिन्नं द्वारमस्य भवति यद्वा 'ऋच्छतेः' इत्याग्रायणो मन्यते "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" ( तुदा० ) इति 'ऋच्छ धातोः' किंवा "ऋ गतिप्रापणयोः" ( भ्वादि० ) तस्य खल्वृच्छ-

* "जवति गतिकर्मा" (निघं० २।१४) "हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु" (यजु० ३४।६)

† ह्रदस्तडागो जलाशयः "ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च" (राजनिघण्टु०)

‡ 'आस्य' इत्यस्य 'स्य' लोपश्छान्दसः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" (अष्टा० ५।२।३७)

× "कुगतिप्रादयः" (अष्टा० २।२।१८) "प्रादयः क्तार्थे" (महाभाष्य०)

+ "कृत्यार्थे तवैकेन्केन्यत्वनः" (अष्टा० ३।४।१४) इति 'त्वन्' प्रत्ययः, आद्युदात्तो नित्स्वरः ।

रूपाकारस्य ग्रहणं स्यात् । ऋच्छ 'धातुर्लक्षितो दुर्गभाष्ये 'ऋ' धातुर्लक्षितः स्कन्दमहेश्वरभाष्ये । धातोर्वर्णनं क्रियते हि 'क्तिः' यद्वा 'श्तिप्' इति प्रत्ययेन, श्तिपः शित्त्वात् सार्वधातुकत्वं पुनः सार्वधातुकत्वे तूभयोरपि 'ऋच्छतेः' इति कथनं समानम् । वाक्यार्थे तु भेदोऽस्ति 'ऋच्छतेः' इत्यत्राग्रयणः प्रमाणं प्रयच्छति "ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते" 'ऋच्छन्ति—इव ह्येतौ कर्णौ खे * ऽभिव्यक्ताः सन्तः शब्दा एतावपि च—उदगन्तां प्रत्युद्गच्छतः—इव शब्दग्रहणाय—विचार्यमाणे ज्ञायते खे कर्णाविति दुर्गाचार्यः । 'ऋच्छन्ती † इव खे श्रोत्रनामके ‡ इव—आकाशे कर्णविलक्षणे श्रोत्रे—उदगन्तां शरीरस्य शिरसो वोर्ध्वंगते—उच्चैः स्थिते' ( इति स्कन्दमहेश्वरभाष्यम् ) दुर्गाचार्यस्यार्थविधाने 'खे' आकाशे सप्तमी । स्कन्दमहेश्वरभाष्ये 'खे' श्रोत्रे प्रथमाद्विवचनम् । दुर्गाचार्यभाष्ये तु ब्राह्मणवचनस्य पदार्थस्पष्टत्वं स्कन्दमहेश्वरभाष्ये पदार्थस्पष्टत्वं नास्ति । कस्यचिद् गुप्तस्य लुप्तस्य वा ब्राह्मणस्य वचनमिदं वास्तविकोऽर्थः क इति न वक्तुं शक्यते, पूर्वापरप्रसङ्गस्य पर्यालोचनमन्तरेण ×। परन्तु केनचिच्छब्दानुरूपेणार्थेन भवितव्यम् । खे उभे आकाशात्मके श्रोत्रे "श्रोत्रं नान्यदाकाशात्" ( न्याय० ३ । १ । ५९ वात्स्यायनः ) खे उभे छिद्ररूपे श्रोत्रे "छिद्रं खमित्युक्तम्" ( गो० उ० २ । ५ )

---

* 'खे'—आकाशे सप्तम्यन्तं पदम् । पूर्वरूपसन्धिकरणात् । पुनश्च प्रत्युद्गच्छतः—इव, कुत्रेति स्पष्टीक्रियते खे—कर्णाविति—खे—आकाशे ह्युद्गच्छतः शब्दग्रहणायेति दुर्गाचार्यः ।

† शतृप्रत्ययान्तं पदं नपुंसकलिङ्गं प्रथमाद्विवचनम् ।

‡ स्वविषयं प्रति—इत्याकांक्षा ।

× स्कन्दमहेश्वरभाष्ये दुर्गभाष्यस्यालोचना कृता यत् 'खे उदगन्ताम्' 'खे'—उद् इति सन्धेरभावात् प्रगृह्यमेकारान्तं द्विवचनमिदं भवेदिति न तु 'खे' सप्तम्यन्तं तद्दृष्टौ दुर्गाचार्यभाष्यं सप्तम्यन्तं मत्वाऽस्ति । परन्तु 'खे' इति प्रथमाद्विचनं दुर्गाचार्यभाष्ये ऽप्यनुमातुं शक्यते । तद्यथा "एतौ कर्णौ खेऽभिव्यक्ताः" इत्यत्र 'खेऽभि' पूर्वरूपं न कल्प्यते किन्तु 'खे अभिव्यक्ताः' इति पाठः स्यात्, यथा वा स्कन्दमहेश्वरभाष्ये दुर्गपाठो दत्तः 'खे व्यक्ताः' तदा तु सप्तम्यन्तमेव पदमिति न वक्तुं शक्यते किन्तु प्रथमाद्विवचनमपि 'खे कर्णौ' खे इत्यपि वक्तुं शक्यते । 'खे' इत्यस्य सप्तम्यां नार्थो विहितो दुर्गेण । 'एतौ कर्णौ खे' खलु कर्णौ स्तः, तौ प्रति शब्दा ऋच्छन्ति—इत्युक्तम् । परन्तु 'ऋच्छति' इति क्रियायाः कर्तृत्वं शब्देषु चिन्तनीयम् । श्रोत्रयोस्तूचितम् ।

ऋच्छन्ती इव स्वविषयं शब्दं प्रापयन्ती—इव—उद्गमन्तां सर्वेन्द्रियाणामुपरिगते स्तः, शब्दं ते शृणुतः, शब्दश्चाकाशस्य गुणः, आकाशश्चोपरि वर्तते तस्मादाकाशोन्मुखे उपरिस्थिते श्रोत्रे । पुनर्निर्वचनप्रसङ्गे—आस्यमस्यतेः "असु क्षेपणे" ( दिवादि० ) धातोर्ण्यत् ( अष्टा० ३ । १ । १२४ ) कृत्यप्रत्ययोऽधिकरणे "कृत्यल्युटो बहुलम्" ( अष्टा० ३ । ३ । ११३ ) अस्यते क्षिप्यतेऽन्नमस्मिन्निति, अस्यति क्षिपति चर्वयित्वाऽन्नमुदरे, एवमधिकरणे कर्तरि यद्वा "आस्यन्दतेः" स्यन्दू प्रस्रवणे" ( भ्वादि० ) इति धातोराङ्पूर्वकात् "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इति 'ड:' प्रत्ययः, डित्वात् टिलोपः । आस्यं सिद्धं रूपम्, आस्यन्दते वा—एतदन्नम्, 'आङुपसर्गे सामर्थ्याण्णिजर्थमभिदधाति स्यन्दधातुः । एतदास्यं मुखं खल्वन्नं प्रस्रावयति शुष्कमप्यन्नमार्द्री करोति । 'दघ्नं दघ्यतेः स्रवतिकर्मणः । दस्यतेर्वा स्याद् विदस्ततरं भवति' । दघ्नं दघनम्, अकारलोपश्छान्दसः, दघनं स्रवणं प्रवहणं प्रगमणं * । आस्ये दघ्नं दघनं स्रवणं प्रवहणं येषां ते ह्रदा जलाशयाः, तत्र जलाशयेषूत्तिष्ठतो जनस्यास्ये मुखे तत्स्रवणं प्रवहणं जायते । मुखप्रमाणास्ते ह्रदाः । यद्वा 'दास्यतेः † स्यात्' "दसु उपक्षये" ( दिवा० ) उपक्षयोऽल्पक्षयः । ततो डन्नच् प्रत्ययश्छान्दसः । डित्वात् टिलोपे सति दघ्नं रूपम् । आस्ये दघ्नमुपक्षयोऽल्पक्षयो येषां ते मुखावधिपर्यन्ताल्पन्यूनत्ववन्तो ह्रदाः, तदेतत्परिमाणं विदस्ततरं विशिष्टं सापेक्षं दस्ततरं स्नानार्हं निमज्जनयोग्यमपेक्ष्य तु दस्ततरमुपक्षीणमुपन्यूनं न हि न्यूनतमं यतस्ततो न्यूनमुपकक्षं परिमाणम् । यद्वा 'दास्यतेः' "दस दंशदर्शनयोः" ( चुरादि० ) णिजन्तो भावे लक्ष्यते दर्शनार्थः । आस्येऽभिमुखं दघ्नं दासो दर्शनं येषां ते ह्रदाः, यतस्तत्परिमाणं विदस्ततरं विशिष्टं दृष्टतरं भवत्युपकक्षं स्नानार्हं निमज्जनयोग्यं चापेक्ष्य, उपकक्षं स्वल्पदृश्यं स्नानार्हं निमज्जनयोग्यं स्वदृश्यमिव, विशिष्टदृश्यं तु मुखगतमेव भवति ह्रदो ह्रादतेः शब्दकर्मणो ह्रादते वा स्याच्छीतीभावकर्मणः "ह्राद अव्यक्ते शब्दे च" (भ्वादि०) शब्दार्थकस्य ह्रादधातोः 'ह्रदः' उपधाह्रस्वत्वं छान्दसम् । स्वगत्या स्नानावगाहनादिभिः शब्दयन्ति हि यद्वा 'ह्राद' धातुः शीतीभावे वैदिको लक्षितो यास्केन तस्यैव प्रयोगः, शीतो हि ह्रदो भवति, शीतता ह्यपां धर्मः, उक्तं हि "अप्सु शीतता" ( वैशेषिक० २ । २ । ५ ) तदा लस्य रेफः, रलयोरभेदो मन्यते हि शब्दशास्त्रे । धातुस्तु "ह्लादी सुखे"

---

* "दघ्नोति गतिकर्मा" (निघं० ३।१४) परन्तु 'दघ्यतेः' इति कथनादत्र यास्केन दिवादिगणीयः स्रवणार्थे दघ धातुर्मतः ।

† 'दस्यतेः' इति पाठः स्यात् ।

( भ्वादि० ) शीतता शान्तिः—तापशान्तिः, सुखमिति च वक्तुं शक्यते तदा लौकिक इाद् धातोरपि प्रयोग एव सम्भवति ॥

अथापि समुच्चयार्थे भवति "पर्याया इव त्वदाश्विनम् ।" ( शां० ब्रा० १७ । ४ ) आश्विनं च पर्यायाश्च ॥

भा०—निपातानां कर्मोपसंग्रहार्थप्रदर्शनप्रसङ्ग आसीत् । तत्र 'त्व' इति खल्वनुदात्तस्वरवत्त्वात् सन्दिग्ध आसीत्, तद्विषये निर्णीतं यास्केन यदनुदात्तस्वरः सन्नपि 'त्वः' शब्दो न निपातः किन्तु सर्वनामपदं तत्र पदत्वाद् विभक्तिविषयाः सुप्प्रत्ययाः प्रदर्शिताः । इति तु गतं पुनः स एव निपातविषयः प्रवर्तते । अथ चानन्तरं वक्ष्यमाणः 'त्वत्' निपातः समुच्चयार्थे भवति "पर्याया इव त्वदाश्विनम्" ( शां० कौ० १७ । ४ ) यास्केन समुच्चयार्थः स्पष्टीक्रियते 'आश्विनं च पर्यायाश्च" । 'इव' इति पदपूरणो निपातो मध्ये पतितः, तस्मात् 'त्वत्' इत्यनेन सन्निकृष्टः—'आश्विनम्' शब्दस्तं निरुक्तकारः सन्निकृष्टमवलम्ब्य वर्णयति 'आश्विनं च पर्यायाश्च' समुच्चिनोति चकारं द्विरावृत्य * निपातानां गतिस्त्रैविध्यमस्तीति प्रतिज्ञातं यास्केन, तत्र 'उपमार्थः' कर्मोपसंग्रहार्थः, पदपूरणश्च भवति निपातः । तत्र—उपमार्थः कर्मोपसंग्रहार्थश्चेति गती द्वे तूक्ते, अथेदानीं पदपूरणार्थता दर्श्यते तत्रोच्यते—

अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ॥९॥

भा०—निपातानां पदपूरणत्वं प्रस्तोतुमथ शब्दः प्रयुज्यते । ये निपाताः प्रवृत्तेऽन्यैः पदैः प्रजाते प्रकृष्टतया जाते प्रपूरिते गतेऽर्थेऽमिताक्षरेषु छन्दोरहितेषु गद्यसन्दर्भेषु खल्वागच्छन्ति वाक्यपूरणा वाक्यालङ्कारकास्ते हि मिताक्षरेषु नियताक्षरेषु छन्दःसु पद्येषु भवन्त्यनर्थकाः पदपूरणाः पद्यालङ्कारकास्ते सन्ति 'कम्, ईम्, इत्, उ' इति चत्वारो निपाताः । तेषामत्रोदाहरणानि क्रमशो दीयन्ते—

"शिशिरं जीवनाय कम्" † शिशिरं जीवनाय । शिशिरं शृणातेः शम्नाते वा ॥

---

* "सप्तभिः पुत्रैरदितिरुपप्रैत् पूर्व्यं युगम् । प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत् ॥" (ऋ० १०।७२।९) अत्र त्वत् समुच्चयार्थः कथमुपेक्षितो मन्त्रो यास्केनेति चिन्तनीयम् ।

† केचिदत्र पूर्णं मन्त्रमुदाहरन्ति—"निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृका-

भा०—अत्र 'कम्' निपातः पदपूरणः। शिशिरं खलु "शॄ हिंसायाम्" (क्र्यादि०) इति धातोर्थद्वा 'शम्' हिंसार्थको वैदिको धातुस्तस्य प्रयोगोऽस्ति यतो हि खलूक्तं "शम्नाति वधकर्मा" (निघ० २। १९) उभाभ्यामपि धातुभ्यां डिरच् प्रत्ययः सनवद्य मतः—

समग्रमन्त्रस्तदर्थश्च—

निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृकादिव।
बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम्॥

त्वक्त्रं त्वचस्त्राणं वस्त्रं तद्रहिता दरिद्रा जाङ्गला वा जना पुनरपि भूरितोका बहुसन्तानवन्तो वृकादिव हेमन्ताद् भृशं बिभ्यतः सन्तः पुनः पुनर्वाश्यन्ते यदस्माकं जीवनाय शिशिरं भवतु शीतनाशनहेतु॥

"एमेनं सृजता सुते।" (ऋ० १।९।२) आसृतैनं सुते॥

भा०—एमेनम्, 'आ–ईम्–एनम्'। 'आ' क्रियायोगे–आसृजत, 'ईम्' इति निपातः पदपूरणस्तदर्थानाभिधानात्—

समग्रमन्त्रस्तदर्थश्च—

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये॥

हे जनाः! सुते निष्पन्ने जगति–एनं सोमौषधिरसं मन्दिमानन्दकरं मन्दिने मन्द आनन्दः प्रशस्तो यस्यास्ति तस्मै–इन्द्राय राज्ञे यजमानाय खल्वासृजत, यो राजा यजमानो विश्वानि सर्वाणि कर्माणि यज्ञकर्माणि तथा चक्रिं शासनकर्म चक्रये कृतवान् तस्मै॥ अत्र 'ईम्' पदपूरणः॥

"तमिद् वर्धन्तु नो गिरः" (ऋ० ९। ६१। १४) तं वर्धयन्तु नो गिरः। स्तुतयो गिरो गृणातेः॥

भा०—'इत्' निपातः पदपूरणः स्पष्टः। गिरः स्तुतयो भवन्ति। अत्र 'गॄ' धातुः स्तुत्यर्थे वैदिकः। "गृणाति अर्चतिकर्मा" (निघ० ३। १४)।

समग्रमन्त्रस्तदर्थश्च—

---

दिव। बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम्" अप्रसिद्धशाखं वचनमिदम्। प्रसिद्धं वचनं त्वृग्वेदे–"मुञ्चामि त्वा हविषा जीवनाय कम्" (ऋ०१०। १६१।१) अत्र मन्त्रेऽपि 'कम्' पदपूरणः। यास्केन स्पष्टविवरणप्रदर्शनार्थं पूर्वोक्तं वचनं युक्तं मतम्।

तमिद् वर्धन्तु नो गिरो वत्सं सं शिश्वरीरिव। य इन्द्रस्य हृदं सनिः ॥

यः खल्विन्द्राय जीवात्माने हृदयंप्रति हृदये सनिः सम्भजनीयः सोमः परमात्मानन्दरसस्तं नोऽस्माकं गिरः स्तुतयो वर्धयन्तु यथा संगत्य शिशुवत्यो धेन्वो वत्सं वर्धयन्ति ॥

"अयमु ते समतसि" ( ऋ० १ । ३० । ४ ) अयं ते समतसि ॥

भा०—अत्र 'उ' निपातः पदपूरणः स्पष्टोऽर्थानभिधानात् ।
समग्रमन्त्रस्तदर्थश्च—

अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥

हे इन्द्र ! अयं सोमस्तवास्ति तुभ्यं वास्ति । यं सोमं त्वमतसि निरन्तरं प्राप्नोषि कपोतो गर्भधिमिव यथा कपोतो गर्भस्य धारयित्रीं गर्भधारणाकांक्षावतीं वदन्तीं कपोतीं तद्वत्त्वं नोऽस्माकं वचनं प्रार्थनामोहसे प्राप्नोषि ॥

इवोऽपि दृश्यते-सुविदुरिव, सुविज्ञायेते इव ॥

भा०—'इव निपातोऽपि पदपूरणो दृश्यते, 'दृश्यते' इति कथनेन वाक्यपूरणः, न तु छन्दस्सु तथाकृत्वा ब्राह्मणस्योदाहरणं दत्तम् 'सुविदुरिव—सुविदुर्यज्ञं ब्राह्मणाः ।' सुविज्ञायेते इव—सुविज्ञायेते यज्ञो नक्षत्रं च ब्राह्मणैः ( दुर्गभाष्ये ) "न वै सुविदुरिव मनुष्या यज्ञं तस्मान्न सर्वं ऋध्नुवन्ति यद् दक्षिणां ददाति यज्ञस्य समृद्ध्यै: "यद्वा न वै सुविदुरिव मनुष्या नक्षत्रं····" दर्शपौर्णमासप्रकरणे काठके ( स्कन्दमहेश्वरभाष्ये ) "पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ 'प्रत्यक्षौ' न सुविज्ञायेते" आधानप्रकरणे ( स्कन्दमहेश्वरभाष्ये "परोक्षप्रिया इव हि देवाः" ( शत० २४ । ६ । ११ । २ ) इत्यप्युदाहरणमुत्प्रेक्ष्यम् ॥

अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये ॥ १० ॥

"नेज्जिह्मायन्त्यो नरकं पताम ॥" ( ऋ० खिल० १० । १०६ । १ ) इति । नरकं न्यरकं नीचैर्गमनं नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा ॥

भा०—अत्र च 'न' इत्येष निपातः 'इत्' इत्येतेन सह परिभयेऽर्थे सम्प्रयुज्यते । परिभयं परितो भयं कुतोऽप्यनिवार्यं भयम् । निपातसमुदायार्थप्रदर्शनायारम्भः द्वयोर्निपातयोः समुदायः 'नेत्' उदाहरणं चास्य "नेज्जिह्मायन्त्यो नरकं पताम ॥" अत्र दुर्गभाष्ये सूचितं यत् 'केचिद् भाष्यकारा मूलपाठे पूर्णामृचमुदाहरन्ति परन्तु यास्कशैल्या तु' एतावानंश एवोदाहरणयोग्यः, यत्र कश्चिद्

पूर्णाया ऋचो व्याख्यानं करोति तत्र पूर्णामृचं स पठति, अन्यथा तदंशमेव पठति ।

पूर्णा खल्वृक् तदर्थश्च—

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभि र्नेज्जिह्मायन्त्यो नरकं पताम ॥

एके गृहस्था आहुतिभिः—इतो लोकात् स्वर्लोकं प्राप्नुवन्ति, एके सवनेषु सोमान्—अभिषुण्वन्तः तमेव स्वर्लोकं सचन्ते सेवन्ते, केचन शचीभिः स्तुतिभिः परमात्मानमर्चयन्तः स्वः सचन्ते, उतापि केचिद् दक्षिणाभिर्दानैः स्वः सचन्ते । एवं वयं धर्मेण सुसन्तानमुत्पादयन्त एव तिष्ठेम नेत्—अन्यथा पापाचरणेन नरकं पताम—पतेम ॥

नरकपतनस्य परिभयमनुभूयते नेत्—अन्यथाऽवश्यमनिवार्यं नरके पतनम् । नरकं नि—अरकं नीचैर्गमनम्, नि—नीचैः, अरकं गमनं गतेः स्थानम् । "ऋ गतौ" यद्वा 'न—रकम्' नास्ति रकं रमणमल्पमपि स्थानं यस्मिन् । इति 'रम धातोः 'डकच्' प्रत्ययो बाहुलकात् ॥

अथापि न चेत्येष इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे नचेत् सुरां पिबन्तीति । सुरा सुनोतेः एवमुच्चावचेष्वर्थेषु निपतन्ति ते उपेक्षितव्याः ॥ ११ ॥

भा०—अथ त्रयाणां निपातानां समुदायः—'न, च' इत्येतौ निपातौ पूर्वमेकीकृत्य 'नच' इत्येष द्विनिपातसमुदायः 'इत्' इत्येतेन सम्प्रयुज्यतेऽनुपृष्टे पुनः पृष्टे "नचेत् सुरां पिबन्ति" अत्रोदाहरणे । पूर्वं केनचित् पृष्टमदीक्षिता अपि यज्ञं द्रष्टुमागन्तुमर्हन्ति किम् ? कस्मिंश्चिद् यज्ञे सोमपानं प्रवर्तते सुरापाणां निषेधश्च तत्र प्रवेष्टुम्, निमन्त्रिता अपि केचन जना नागताः, तदा पृच्छ्यते ते नागताः, आं नागताः, पुनः पृच्छ्यते कुतो नागताः, पुनरुत्तरं दीयते—'न चेत् सुरां पिबन्ति'—सुरां न पिबेयुस्तदैवागच्छेयुस्ते तु सुरां पिबन्ति, सुरापाने प्रसक्ता मत्ता वा तेभ्यो न धर्मो रोचते ।

सुरा सुनोतेः "षुञ् अभिषवे" ( स्वादि० ) इत्यस्माद् धातोः प्रयोगः । किं विकृत्याभिषूयते सा "सुसूधागृधिभ्यः क्रन्" ( उणा० २।२५ ) एवम्प्रकारेण भिन्नभिन्नार्थेषु निपाता निपतन्ति नियोगमर्हन्ति निविशन्ते वा तस्मात् ते निपातास्ते तथार्थेषु तत्तद्वाक्यं सन्दर्भं चोपगम्येक्षितव्या लक्षयितव्या ज्ञातव्याः ।

इति प्रथमाध्याये तृतीयः पादः ।

## चतुर्थः पादः

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च। तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च, न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ॥

भा०—इत्थं लक्षणतो लक्षितानि चत्वारि पदजातानि यान्यनुक्रमेण गतानि वर्णितानि वा नामाख्यातोपसर्गनिपातरूपाणि, तत्र नामादिषु नामानि खल्वाख्यातजानि क्रियाजन्यानि—धातुजानि सन्तीति शाकटायनो वैयाकरणो मन्यते तथा चैष नैरुक्तसिद्धान्तः। सर्वाणि नामानि न धातुजानि—इति गार्ग्यो नैरुक्तो मन्यते तथा च वैयाकरणानां च शाकटायनं विहायान्ये बहवो मन्यन्ते ॥

सर्वनाम्नामाख्यातजत्वे—आक्षेपाः—

तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि, यथा गौरश्वः पुरुषो हस्तीति ॥

भा०—तत्पुनर्येषु नामसु—उदात्तादिस्वरः प्रकृतिप्रत्ययकृतः संस्कारश्चोभावार्थविधाने शक्तौ सङ्गतौ प्रादेशिकेन स्वस्वप्रविभक्तस्थाननिर्देशकृतेन गुणेन * लक्षणेन युक्तौ स्यातां तानि नामानि त्वाख्यातजानि परन्तु तानि यानि संविज्ञातानि संज्ञारूपेण प्रसिद्धानि यथा 'गौः, अश्वः, पुरुषः, हस्ती' इत्येवमादीनि कथं स्युः ? नाख्यातजानि—इत्याकांक्षात्र । इति प्रथम आक्षेपो न सर्वाणि नामान्याख्यातजानीति वादिनाम् । एतस्य समाधानं चाग्रे "यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ।" इत्यग्रे व्याख्यास्यते ॥

---

* "प्रदेशः क्रिया तदभिधायको धातुः स गुणः, धातुरूपेणान्वितौ स्वरसंस्कारौ" (दुर्गभाष्ये) तदयुक्तं न हि धातुमेवाश्रित्य स्वरसंस्कारौ भवतः, प्रत्ययमाश्रित्यापि स्वरसंस्कारौ भवत एव । "प्रदेशोऽर्थस्तस्मिंस्तस्मिन् भवः प्रादेशिको गुणः क्रिया गुणः ।" (स्कन्दमहेश्वरभाष्ये) इति कथनमपि न सम्यक्, न खलु स्वरसंस्कारावर्थमाश्रयतः किन्तु धातुप्रत्ययावेवाश्रयतस्तावेव विकुर्वाते । पुनः प्रदेशो न 'अर्थः', अर्थस्य पर्यायो वा । अर्थस्तु परीक्षणीयः साध्यः, तत्साधने साधनभूतौ स्वरसंस्कारौ, उक्तं हि निर्वचनप्रसङ्गे "अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत" (निरु० २।१) अतोऽत्र प्रदेशः प्रविभक्तस्थाननिर्देशः स्पष्टः । अर्थशब्दात् प्रदेशशब्दः पृथक् पठितः ।

द्वितीय आक्षेपः—

अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत् कर्म कुर्यात् सर्वं तत्सत्त्वं तथाऽऽचक्षीरन्, यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद् यत् किञ्चिद् तृद्यात् तृणं तत् ॥

भा०—यदि पुनः सर्वाणि नामान्याख्यातजातानि भवेयुस्तदा यः कश्चन * तत्र—तथाभूतं कर्म कुर्यात्—तत् सर्वं वस्तुजातं तथानामत आचक्षीरन् नाम्नामाख्यातजत्वं मन्यमाना आचार्याः, न च तथाऽऽचक्षते । 'अश्नुतेऽध्वानमित्यश्वः' इति यः कश्चनाध्वानमश्नुवीताश्वः स वक्तव्यो भवेदुष्ट्रादिरपि । यत् किञ्चित् तृद्यात् तृणं तत् स्यात् कुशकाशादिरपि ।

अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः सम्प्रयुज्यते तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १२ ॥

भा०—पुनरपि यदि सर्वाणि नामान्याख्यातजानि भवेयुस्तदा यावद्भिर्भावैः—भावः—क्रिया 'भावप्रधानमाख्यातम्' इत्युक्तत्वात्—यावतीभिः क्रियाभिः सम्प्रयुज्यते नाम तावतीभिः क्रियाभिस्तावतीः सर्वाः क्रिया आश्रित्य तथा तथा नामधेयस्य वाचकस्य प्रतिलब्धिः प्रसिद्धव्यवहारो भवेत् । तदा तु स्थूणा स्तम्भनी, सा यथा तिष्ठतेः स्थूणा, तथैव दरे गर्ते शयनात् स्याद् दरशया, तथा गृहवंशः सज्यते संयोज्यतेऽस्यामिति यतस्तदा सञ्जनी, इत्यादिनामभिर्वाच्या स्यात् ।

चतुर्थ आक्षेपः—

अथापि य एषो न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैतान्याचक्षीरन् पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वं तर्दनमिति तृणम् ॥

भा०—अभ्यश्चापां नाम्नामश्वादीनां न्यायवान् शब्दव्युत्पत्तिरूपः कार्मनामिकः, कर्म क्रिया व्यापारो वा तत्कृतं नाम तत्र भवस्तत्सम्बद्धः संस्कारः प्रकृतिप्रत्ययात्मको योग्यसमाचारो भवेत्, तेन यथा प्रतीतार्थानि ज्ञातार्थानि नामानि प्रतीता ज्ञाता अर्था येषां तानि नामानि स्युस्तानि खल्वाचक्षीरन्नाचार्यास्त-

---

* 'च' अत्र 'चन' इत्यर्थे । अग्रे वाक्ये ह्यस्मिन् 'किञ्चित्' शब्दस्य साहचर्यात् ।

त्रिः । तद्यथा—पुरुषः पुरि शेते—इति स पुरिशयः । अश्वः—अश्नुतेऽध्वानम्—इति स्यात्—अष्टा, तर्दतेऽनेन तृणं तत् तर्दनम्, इत्यपि कथयेयुः, न च तथा कथयन्ति ।

पञ्चम आक्षेपः—

अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेति ॥

भा०—पुनश्च निष्पन्ने प्रसिद्धेऽभिव्याहारेऽभिलक्षितप्रयोगे—पुनरभिलक्ष्य विचारयन्ति या पृथिवीति प्रसिद्धा लोके सा प्रथनात् विस्तरणात् खलु, तर्हि को ह्येनामप्रथयत् कश्चाधारो यत्राप्रथयत् ।

षष्ठ आक्षेपः—

अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायन एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च ॥

भा०—अथ खल्वननुगतार्थे धातुप्रत्ययोः स्थाननिर्देशनेन रहिते शब्दे विकारे शब्दप्रयोगे पदेभ्यो बाह्याख्यातपदेभ्यः कस्य चिन्नामपदस्येतरानर्धान् भागान् संस्कृतवान् निर्मितवान् शाकटायनः । तद्यथा—'एतेः कारितं च' इण्धातोर्णिजन्तं रूपम्—आययति—इति—'आययम्' इत्यस्यान्तकरणं यकारादिम्—'यम्' पुनः 'अस्' धातोः शुद्धं सकारादिं 'च' अस्तीति 'सत्' 'सत्—यम्' इति सत्यम् । सन्तं वर्तमानं पदार्थं यद्वा सद् वर्तमानं वस्तुतत्त्वमाययति प्रापयति तत् सत्यम् । इत्थं णिजन्तादिण्धातोरन्तिमोऽर्धो भागः 'यम्' पुनः 'अस्' धातोः शुद्धम्—अविकृतं निर्विभक्तिकं मूलं प्रातिपदिकभूतं पदरूपेणाविकृतं वा 'सत्' गृहीत्वा पूर्वरूपं कृतं तत्समुदितं 'सत्यम्' इति रूपसाधनं क्रीडामात्रम् ।

सप्तम आक्षेपः—

अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद् भावात् पूर्वस्य पूर्वस्य प्रदेशो नोपपद्यते-इति तदेतन्नोपपद्यते ॥ १३ ॥

भा०—अपि च भावः क्रिया खलु सत्त्वं नामपदमाश्रयति नाम्नि हि क्रिया भवतीति कथयन्ति हि शब्दविदः क्रियाविदो वा, भावात् पश्चाद्भूताद् यः खलु भावो नाम्नः पश्चाद् भवति तस्माद् भावात् तत्पूर्वस्य सत्त्वरूपस्य नाम्नः प्रदेशो भावादाख्यातात् प्रविभक्तस्थानकथनं यदाख्यातजानि नामानि—इति नोपपद्यते न युज्यते ।

अथेदानीं सप्तानामप्याक्षेपाणां यथाक्रमं समाधानमुच्यते, तत्र प्रथमाक्षेपस्य समाधानम्—

> यथो हि नु वा * एत्ततद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ॥

भा०—यथो हि–यथाकृत्वा स्वपक्षमवलम्ब्य खलु नु वा–प्रश्नः–आक्षेपः कृतः 'एतत्' इति प्रश्ननिर्देशार्थम् "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां····" सर्वाणि नामान्याख्यातजानि न सन्ति–इति पक्षमवलम्ब्योक्तं यत्र तु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तानि नामानि त्वाख्यातजानि नान्यानि सन्त्याख्यातजानीति मतं पूर्वपक्षिणः, भवतु तथा मतं पूर्वपक्षिणः। तेनास्माकं न क्षतिः, यतोऽस्माकं मतं तु सर्वं प्रादेशिकं सर्वमपि नामजातं पदं प्रादेशिकेन गुणेन स्वरसंस्कारसम्पन्नमत आख्यातजमिति स्वरसंस्काराभ्यां सम्पन्नत्वादाख्यातजे नाम्नि सति पूर्वपक्षिणः खलूपालम्भोऽनुपालम्भः–आक्षेपोऽनाक्षेपः। 'स्वरसंस्कारौ प्रादेशिकेनान्वितौ स्याताम्' इति तु हेतुं नाम्न आख्यातजत्वे पूर्वपक्षी मतवान् हि। तत्र 'अश्वप्रभृतयः प्रादेशिकेन गुणेनान्विताः स्वरसंस्कारयुक्ताः सन्ति न तद्रहिताः, भवन्तु ते प्रसिद्धव्यक्तिवाचकाः, सन्ति तु प्रादेशिकस्वरसंस्कारयुक्ताः। 'अश्वः' इत्यत्र 'अश्–वः', इति द्वौ प्रदेशौ, स्वरसंस्कारयोः। 'अश्' धातुः 'वः' इति प्रत्ययः 'अश्वः' इत्याद्युदात्तो निति प्रत्यये धातोः स्वरः। इतियथा सर्वं नामजातं प्रादेशिकम्। लोके यानि व्यक्तिवाचकत्वेन प्रसिद्धानि नामानि तानि प्रादेशिकस्वरसंस्कारवशतः प्रसिद्धानि नान्यथा, अन्यथात्वे तु स्यादर्थसंकरोऽन्धपरम्परा वाऽऽपद्येत। तस्मात् "यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतितश्च तदूह्यम्" ( महाभाष्य व्या० )।

द्वितीयाक्षेपस्य समाधानम्—

> यथो एतद् यः कश्च तत्कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्निति, पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकषां यथा तक्षा परिव्राजको जीवनो भूमिज इति ॥

भा०—यथा हि द्वितीय आक्षेपः क्रियते यत् सर्वाणि नामानि सन्ति चेदाख्यातजानि तदा यः कश्च तत्कर्म कुर्यात् सर्वमपि वस्तुजातं तन्नामभाग्भवेत्,

---

* 'अथापि' इति शब्दस्तु निरुक्ते प्रयुज्यते-आक्षेपार्थम् 'यथो हि नु, यथो एतत्' इति समाधाने।

न खल्वेकमेव नियतं प्रसिद्धं वस्तु तन्नामभाग्भवेत्—तन्नामतः कथयेयुः। यः कश्चनाध्वानमश्नुवीत तमश्वं कथयेयुः स स्यादुष्ट्रः खर ऋषभो वा सोऽप्यश्वो वक्तव्यः। स एष आक्षेपोऽपि सर्वाणि नामान्याख्यातजानि—इति मतं निर्बली-करोति। इत्यत्र प्रतिविधीयते यत् पूर्वपक्षिणा स्वीकृते—आख्यातजे नाम्नि खल्वप्याक्षेप एष प्रक्राम्यति—यथा "तक्षा, परिव्राजकः, जीवनः, भूमिजः" इति नामानि खल्वाख्यातजानि मतान्यपि नियतानि नामानि सन्ति। यः कश्चन तक्षति तक्षन् स न तक्षा कथ्यते किन्तु शिल्पी हि तक्षा कथ्यते। एवं यः कश्चन परिव्रजति स न परिव्राजक उच्यते किन्तु नियतः संन्यासी हि परिव्राजक उच्यते। जीवयति यः प्रत्येकं न जीवनः किन्तु वायुर्वा जलं वा नियत्या हि जीवन उच्यते। तथा भूमिजोऽपि नियतं नाम मङ्गलग्रहो नान्यो भूमितो जातो-भूमिजः। तथा पङ्कज इत्यादिरप्युत्प्रेक्ष्यम्। यथा पूर्वपक्षिणा मतान्याख्यातजानि नामानि नियतानि सन्ति भिन्नभिन्नवस्तूनां तथैव—'अश्वप्रभृतयोऽप्येकैकस्य वस्तुनो नियतानि नामानि सन्ति। तस्मादाक्षेपो निर्बलः। वस्तुतस्तु पश्यामः समान-कर्मणां नामधेयप्रतिलम्भमेकेषां भवति न चैकेषां भवति तत्कर्मबाहुल्यादेवेति पश्यामो वयं तस्मादाक्षेपो न युक्तः॥

तृतीयाक्षेपस्य समाधानम्—

एतेनैवोत्तरः प्रत्युक्तः॥

भा०—एतेनैव तृतीय आक्षेपो निराकृतो विज्ञेयः, यद् यावद्भिर्भावैस्तदुप-लक्षयेत् तावद्भिर्भावैस्तस्य नामधेयं स्यात्, तत्र 'स्थूणा, दरश्या, सञ्जनीः' आदि-नामान्यपि स्युः। इत्यत्रोच्यते—एतेन प्रकारेणैव प्रश्नः समाहितः स्यात्। न हि बहुभिराख्यातैर्नाम प्रसिद्ध्यति प्रधानमाख्यातं तत्र नामधेयत्वे लक्ष्यते खल्वेषा लोकप्रवृत्तिः॥

चतुर्थाक्षेपस्य समाधानम्—

यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैतान्याचक्षीर-न्निति। सन्त्यल्पप्रयोगाः कृतोप्यैकपदिका यथा व्रततिर्दमूना जाटच्य आट्णारो जागरूको दर्विहोमीति॥

भा०—प्रतीता अर्थाः—यैर्वचनैस्तानि—अर्थप्रत्यायकानि यथा सन्ति तैरपि तानि वस्तूनि वक्तव्यानि, "पुरुषः पुरिशयः" इत्येवं यथा, तथाविधा अल्प-प्रयोगाः सन्ति ये ह्येवं विब्रियन्ते, पुनश्च कृतः कृदन्तोऽप्यैकपदिकाः—एकस्मिन् पदेऽपि वृत्तिपराः—विवरणपराः सन्ति शब्दस्वाभाव्यात्, पूर्वपक्षिमते प्रसिद्धे

ह्याख्यातजत्वेऽपि यत्र प्रतीतार्थानि पदानि यैरन्यः पदैरर्थाः प्रतीतिं गच्छन्ति—यथा 'व्रततिः' इत्यस्यार्थो न प्रतीयतेऽर्थप्रत्यायकैः पदैर्विव्रियते 'व्रततिर्वृणोतेः' ( दुर्गः ) व्रततिः 'वरणाद् वारणाद्वा' ( स्कन्दस्वामी ) वृक्षं वरयित्री स्थानं वारयित्री वल्ली लता, व्रतं वरणमावरणं तनोति करोति—इति व्रततिः, दमूनाः—दममनाः—अग्निः 'दम' धातोः 'ऊनसि', "दमेरूनसिः" ( उणा० ४ । २३५ ) जाट्यो जटासमूहो जाटस्तद्वान् जटावान्—यप् प्रत्ययः "रूपादाहतप्रशंसयो र्यप्" (अष्टा० ५ । २ । १२०) वा० अन्येभ्योऽपि दृश्यते । आट्णारः "तुषारादयश्च" ( उणा० ३ । १३९ ) इति बाहुलकात् "अट गतौ" ततः 'आरण्' प्रत्ययः नुट् च प्रत्ययस्य । जागरूकः "जागरूकः" ( अष्टा० ३ । २ । १६५ ) निपातनात् । "दर्विहोमी दर्व्या यो जुहोति" तस्मादेष आक्षेपोऽपि न युक्तः ।

पञ्चमाक्षेपस्य समाधानम्—

> यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति, भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः-प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः ॥ अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते ॥

भा०—यथैवैष आक्षेपः—निष्पन्ने प्रयोगेऽभिविचारयन्ति—इति तत्र योगपरीक्षणं शब्दविवेचनं क्रियते । पृथिवीति प्रथनाद् भवेत्, दर्शनेन पृथुः, क एनां प्रथितवान् । न कश्चन । अन्यैर्लोकस्थजनैरप्रथिता खलु । आधारोऽपि न कश्चन लोकेऽत्र । एवं रीत्या तु सर्वेऽपि दृष्टप्रवादाः साक्षात् प्राप्तचर्चाः—अन्यथाक्षेपयोग्या भवन्ति, "ज्वलनाज्ज्वलत्—अग्निः" कोऽज्वलयत्, उन्दनादुदकं क औन्दयत्, इत्यादि ।

षष्ठाक्षेपस्य समाधानम्—

> यथो एतत्पदेभ्यः पदेतरार्द्धान् सञ्चस्कारेति योऽनन्वितेऽर्थे सञ्चकार स तेन गर्ह्यः सैषा पुरुषगर्हा न शास्त्रगर्हा, इति ॥

भा०—यथा चैतदुक्त आक्षेपो यत् पदेभ्यः पदस्येतरार्धभागान् संस्कृतवान्—इति, यस्त्वन्वितेऽर्थे संस्कृतवान् स तु न गर्ह्यः स्यात्, यः शब्दार्थपरीक्षणं शास्त्रं न जानीयात् स एवाननन्वितेऽर्थे संस्करोति स एव गर्ह्यो न तु शास्त्रं संस्कारशास्त्रं वा निर्वचनशास्त्रम् । शास्त्रं तु न गर्ह्यं तस्मात् पदेभ्यः पदेतरार्धसंस्कारे न दोषः, एषा खलु परम्परा यदर्थानुरूपं पदं संस्करोति विद्वान् कथमेषोऽर्थोऽस्य पदस्य

जातः, तद्वैतत् त्र्यक्षरं हृदयमिति, 'हृ' इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च 'द' इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च । 'यम्' इत्येकमक्षरमेति स्वर्गं लोकं य एवं वेद, ( शत० १४ । ८ । ४ । १ ) अत्र ब्राह्मणे "हृदयम्" इति पदं धातुत्रयात् साधितं 'हृ' हरणे 'दा' दाने 'इण्' गतौ । अस्मै हृदयाय बाह्या उपहारा उपह्रियन्ते भोज्यलेह्यपेयाश्च दीयन्ते—एवमुपहारेणाहारदानेन चेदं हृदयं यथावदनुष्ठानाय स्वर्गं सुखमेति प्राप्नोतीति तस्माद् हृदयं नाम । तथैव "सत्यम्" अस्, इण्, इति धातुद्वयात् साधितं, सन्तं यथास्वरूपं पदार्थमाययति प्रापयति ज्ञापयतीति सत्यम् ।

सप्तमाक्षेपस्य समाधानम्—

यथो एतदपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति ॥ ( बिल्वं भरणाद्वा भेदनाद्वा ) ॥ १४ ॥

भा०—यथा चैतदुक्त आक्षेपो यत् पूर्वोत्पन्नानां सत्त्वानां नाम्नां तदाश्रितेभ्य आख्यातेभ्यः प्रदेश आख्यातानुसारी प्रविभाग उत्पाद्यः, उच्यते आख्यातजानि नामानीति स नोपपद्यते । अत्र विषये वक्तव्यं यत् पूर्वोत्पन्नानामपि सत्त्वानां नामप्राप्तिः । पश्चाद् भावाद् भवति, खलु नापि भवतीति, वयं पश्यामो यथा बिल्वादः, लम्बचूडकः । उत्पन्नः सन् तु बिल्वं नात्तुं शक्नोति, परन्तु पश्चाद् बिल्वानां बहुभक्षणात् तस्य 'बिल्वादः' इति नाम जातम् । उत्पन्नस्य हि पश्चात् खलु चूडाया लम्बनात् तस्य लम्बचूड इति नामप्रसिद्धम्, नापि भवति नाम पश्चाद् भावात् । यदा पश्चाद् भावादपि भवति नाम तदा त्वाक्षेपोऽन्यथा, तस्य क्वचिद् दृष्टत्वात्, वस्तुतस्तु यत् किमपि वस्तुजातं तस्य नाम तद्गुणकर्मानुरूपं हि भवति । वस्तु भवतु पूर्वोत्पन्नमुत्पन्नस्य हि वस्तुनो भावः क्रिया कर्म वा यदा सम्मुखमागच्छति तदैव क्रियानुसारि नाम दीयते, तस्मान्नाम त्वाख्यातजमेवेति सिद्धम्, प्रसक्तस्य बिल्वशब्दस्य निर्वचनं क्रियते । 'बिल्वं' भरणाद्वा भेदनाद्वा, 'बिल्वम्' । 'भृ' धातोर्यद्वा 'भिद्' धातोः—उदरं बिभर्ति हि भक्ष्यमाणं चिराय क्षुधं निवारयति भक्षणाय च भेद्यते हि तत्—यद्वा—अपक्वं बिल्वं तु विरेचने सति विरेचनार्तं रोगिणं तदुदरं च बिभर्ति पूरयति, विरेचनरोगात् खलु मुक्तं करोति, पक्वं भक्ष्यमाणं तूदरं बिभर्ति, उदरबन्धं छिनत्ति । 'उल्वादयश्च' ( उणा० ४।९५ ) इति वन् प्रत्ययः ।

इति चतुर्थः पादः ।

## पञ्चमः पादः

---

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते ॥
अर्थमप्रतीयतो नात्यन्तं स्वरसंस्कारोद्देशः ॥
तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च ॥

भा०—अपि चेदं निरुक्तं निर्वचनशास्त्रमन्तरेण मन्त्रेषु खल्वर्थज्ञानं न विद्यते न भवेदित्यर्थः । पुनश्चार्थमज्ञातवतो जनस्य स्वरसंस्कारयोरुद्देशो ज्ञापनं नात्यन्तम् । अन्तमतिप्राप्तं पूर्णसफलपरिणामविधायकं न भवति । तस्मादिदं निरुक्तं ज्ञानस्थानं ज्ञानस्यार्थज्ञानस्य स्थितिकरं निर्णायकं व्याकरणस्य क्रियास्थानस्य शब्दनिर्माणस्थानस्य कार्त्स्न्यं कृत्स्नत्वनिमित्तं कृत्स्नपदमस्ति । ज्ञानेन विना क्रिया न पूर्णा पूर्णसाधिका भवति । अथ स्वार्थसाधकमपि यतो ये शब्दा व्याकरणेन न निर्मिता स्वशक्त्या नित्याः सन्ति । तेषामर्थज्ञानकरणस्य साधनत्वं हि स्वार्थोऽस्येति ।

अत्र विषये आक्षेपाः क्रियन्ते पूर्वपक्षत्वेन—

**प्रथम आक्षेपः—**

यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सः, अनर्थका हि मन्त्राः ॥

भा०—यदि तु मन्त्रार्थबोधनाय मन्त्राणामर्थबोधनाय निरुक्तं शास्त्रं तर्ह्यनर्थकं भवति निरुक्तशास्त्रमिति कौत्साचार्यो मन्यते । यतो मन्त्राः सन्ति ह्यनर्थकाः ।

तदेतेनोपेक्षितव्यम् ॥

भा०—तत्खल्वेतेन विज्ञातव्यं यन्निरुक्तं मन्त्राणामर्थं बोधयति । तस्मात् ते मन्त्रास्त्वनर्थकाः । दुर्गादिभाष्यकारैरन्यथा व्याख्याता पंक्तिरेषा–अग्रिमाक्षेपपरा । परन्तु तन्न युक्तं समाधानप्रारम्भेऽस्य समाधानस्यातन्त्र्यात् । अथ च षष्ठपादस्य प्रारम्भेऽपि विद्यते वचनमिदम् । "अथापि याज्ञदैवतेन बहवः प्रदेशा भवन्ति—'तदेतेनोपेक्षितव्यम्' निरुक्तशास्त्रेण–उपगत्य लक्षयितव्यम् ।

पूर्वकथनेन सह सम्बन्धः । तथैव प्रस्तुतप्रसङ्गेऽपि ।

**द्वितीय आक्षेपः—**

नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति ॥

भा०—मन्त्राणामनर्थकत्वेऽयं हेतुर्य उक्तो यत्–मन्त्रेषु युक्तयो योजनाः प्रयोगाः खलु नियतवाचो भवन्ति, नियतास्तथैव यथास्थिता वाचः पदवाचो यासु ता युक्तयो योजनाः प्रयोगविधा भवन्ति यथा "अग्निमीले" न तु 'वह्निं स्तौमि' तथा वायवायाहि न तु "वात–आगच्छ" पुनश्च नियतानुपूर्व्या युक्तयो नियता आनुपूर्व्यः–यासु ताः। अनुक्रमो नियतः पदयोजनासु यथा "अग्निमीले पुरोहितं यज्ञस्य देवम्" न तु "यज्ञस्य पुरोहितमीलेऽग्निम्"–इत्यादि। यदि स्यादर्थो लक्ष्यं तदाऽर्थं संलक्ष्य यथेष्टं सार्थकेन पदविन्यासेन पदावर्त्तनेन च भवितव्यं लोकवत्, यथा–'अग्निमानय, वह्निमाहर, आनयाग्निम्' इति, इत्थं मन्त्रेषु तूच्चारणप्राधान्यं नार्थप्राधान्यम्।

तृतीय आक्षेपः—

अथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते—"उरु प्रथस्वेति प्रथयति" ( शत० १।१।६।८ ) "प्रोहाणीति प्रोहति"॥

भा०—अथ च ब्राह्मणेन रूपसम्पन्ना विधानयुक्ता अनुष्ठानयुक्ताः मन्त्राः सम्पाद्यन्ते, यथा "उरू प्रथस्वोरू ते यज्ञपतिः प्रथताम्" ( यजु० १ । २२ ) उक्तिरेषा पुरोडाशं प्रति, परन्तु ब्राह्मणं यथार्थं परिणमयति, प्रथयति, विस्तारयति, तथैव "प्रोहाणि" * प्रोहामि ( यजु० २।१५ ) ब्राह्मणं यथार्थं परिणमयति प्रोहति †–प्रवहति–अग्रे वहति–प्रेरयति। यदि मन्त्रा अर्थवन्तः स्युस्तदा-ब्राह्मणमर्थानुरूपं कथं परिणमयेत्।

चतुर्थ आक्षेपः—

अथाप्यनुपपन्नार्था भवन्ति—"ओषधे त्रायस्वैनम्" ( यजु० ४ । १ ) "स्वधिते मैनꣳ हिꣳसीः" ( यजु० ४ । १ ) ‡ इत्याह हिंसन्॥

भा०—अथ चायुक्तार्थवन्तो मन्त्रा भवन्ति–यथा–"ओषधे त्रायस्व स्वधिते मैनं हिंसीः" स्वधितिर्हिंसनसाधनं हिंसनशस्त्रं पुनस्तद्धर्मविरुद्धं प्रार्थ्यते,—एवं वृक्षमोषधिं जडं च प्रार्थ्यते, त्रायस्वैनमिति त्वयुक्तमेवायथार्थत्वात्।

---

* भ्रष्टः पाठः प्रमादकृतः प्रचलितः।

† छान्दसः प्रयोगः, सम्प्रसारणम्।

‡ वस्तुतस्तु "ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः", इति पाठेन सकृद् भवितव्यम्। उदाहरणद्वयमपेक्ष्य पृथक् पृथक् पाठो दत्तः "मैनं" च पूर्वत्रापि संयोजितः।

पञ्चम आक्षेपः—

अथापि विप्रतिषिद्धार्था भवन्ति—"एक एव रुद्रोऽवतस्थे न द्वितीयः" ( तै० सं० १ । ८ । ६ । १ ) "असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्" ( यजु० १६ । ५६ ) "अशत्रुरिन्द्र जज्ञिषे" ( ऋ० १० । १३३ । २ ) "शतं सेना अजयत् साकमिन्द्रः" ( ऋ० १० । १०३ । १ ) इति।

भा०—पुनश्च परस्परविरुद्धार्था मन्त्रा भवन्ति, यथा 'एक एव रुद्रो' इति वचनं तु रुद्रः खल्वेक एवोक्तः, पुनः असंख्यातत्वमपि रुद्रस्य दर्शितम् । एवं 'अशत्रु'....इन्द्रोऽशत्रुरस्ति, इत्युक्त्वा 'शतं सेना अजयत्' शत्रुपक्षस्य शतसंख्यात्वं दर्शितम् । इत्थं परस्परविरोधात् खलु मन्त्रा न यथार्थवन्तः ।

षष्ठ आक्षेपः—

अथापि जानन्तं सम्प्रेष्यत्यग्नये समिध्यमानायानुब्रूहीति ॥

भा०—अथ च जानन्तं होतारं सम्प्रेरयति ह्यध्वर्युः क्रियाविधाने नियोजयति "अग्नये समिध्यमानायानुब्रूहि" ( तै० सं० ६।३।७।१ ) इति मन्त्रोऽर्थवान् यदि भवेत् पुनस्तस्य ज्ञापनं कथं स्यात् ब्राह्मणेन ।

सप्तम आक्षेपः—

अथाप्याह "अदितिः सर्वम्" इति "अदितिर्द्यौरदितिरन्तरिक्षम्" ( ऋ० १ । ९८ । १० ) इति तदुपरिष्टाद् व्याख्यास्यामः ॥

भा०—अथ मन्त्राणामनर्थवत्त्वे हेतुरयमपि—यत् 'अदितिः सर्वम्' पुनः द्यौः, अन्तरिक्षम्, पृथिवी, माता, पिता, पुत्रः, विश्वेदेवाः, पञ्चजनाः, इत्येवमादि रूपादितिः कथं सम्भवति, न सम्भवति, अतो मन्त्रा नार्थवन्तोऽसम्भवार्थत्वात् । एतन्मन्त्रे विषयेऽग्रे कथयिष्यामः ।

अष्टम आक्षेपः—

अथाप्यविस्पष्टार्था भवन्ति—अम्यक् यादृश्मिन् जारयायि काणुका, इति ॥

भा०—अथ चायमपि हेतुर्मन्त्राणामनर्थवत्त्वे यत् 'अम्यक्, यादृश्मिन्, जारयायि, काणुका, शब्दा अविस्पष्टार्थाः सन्ति नैषामर्थाः स्पष्टाः सन्ति तस्मान्मन्त्रा नार्थवन्तः ।

अथैषामाक्षेपाणां यथाक्रमं समाधानमुच्यते यास्केन—

प्रथमाक्षेपस्य समाधानम्—

अर्थवन्तः शब्दसामान्यात्। "एतद्वै यज्ञस्य रूपसमृद्धं यत् कर्मक्रियमाणमृग्यजुर्वाऽभिवदतीति च ब्राह्मणम्" (गोप० उ० २ । ६) "क्रीडन्तौ पुत्रैर्नप्तृभिः (ऋ० १० । ८५ । ४५)।

भा०—मन्त्राः सन्त्यर्थवन्तः, न तु निरर्थकाः, शब्दसामान्यात्। लोके यथा शब्दाः सन्त्यर्थवन्तस्तथा वेदे मन्त्रात्मकैः शब्दैर्यद्वा मन्त्रेषु प्रयुक्तैः शब्दैरप्यर्थवद्भिर्भवितव्यम्। नहीदं भवति यः कश्चिज्जनो मथुरायां दृष्टो विद्वान् स एव पुनः काश्यां दृष्टोऽविद्वान् भवेत्, किन्तु विद्वान् हि भवति। तदर्थज्ञापनाय निरुक्तम्। तत्र स्थितमेवार्थं द्योतयति न ह्यर्थमारोपयतीति—अर्थनित्यः परीक्षेतेति वक्ष्यति हि। मन्त्राणामर्थवत्त्वे खलूदाहरणं दीयते यज्ञस्य रूपसमृद्धिकरं कर्म, ऋङ् मन्त्रो यजुर्मन्त्रस्तद्विषयं क्रियमाणमुपदिशति, यथा "समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन् हव्या जुहोतन॥" (ऋ० ८ । ४४ । १, यजु० ३ । १) ब्राह्मणे निर्दिष्टं ह्येतत्, मन्त्राः सार्थकाः। अपरं लौकिकार्थयुक्तमुदाहरणं चेदम्—

इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥

स्पष्टो हि मन्त्र एषः। यदैतादृशा मन्त्राः सन्त्यर्थवन्तस्तथाऽन्येऽपि मन्त्रा अर्थवन्त इति सिद्धम्। मन्त्रा नार्थवन्तः, इति पक्षस्तु खण्डितः, तस्मान्मन्त्रा अर्थवन्तः सन्ति।

द्वितीयाक्षेपस्य समाधानम्—

यथो एतन्नियतवाचो युक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति।

भा०—यथा चैष आक्षेपः कृतो युक्तयो मन्त्रयोजना नियतशब्दा नियतानुक्रमा भवन्ति—इति मन्त्राणामनर्थवत्त्वे कारणमित्युक्तं तन्न युक्तं यतो लौकिकेषु वाक्येष्वपि तथैव प्रयोगा लभ्यन्ते। यथा—इन्द्राग्नी, पितापुत्रौ *

---

* अन्ये बहवः प्रयोगा एवं लभ्यन्ते "मातापितरौ, स्वसाभ्रातरौ, धर्माधर्मौ, सुखदुःखे, शीतोष्णे, अशनायापिपासे, भार्यापती, स्त्रीपुरुषौ, गुणकर्मणी, ज्ञानकर्मणी, रथचक्रे" इत्यादयः।

इत्यादि। न हि 'शक्रवह्नी, अग्नीन्द्रौ, पुत्रपितरौ' इत्यादयः प्रयुज्यन्ते। यदि लोके नियतवाचो नियतानुपूर्व्याः प्रयोगाः सन्त्यर्थवन्तः पुनर्मन्त्रा अपि सन्त्यर्थवन्तः। तथा च शास्त्रस्य शब्दैःप्रयोगैर्वा नियतवाग्भिर्नियतानुपूर्व्यैरेव भवितव्यम्। तेषामन्यथाकरणे शास्त्रत्वं हीयेत, लोकेऽपि ये सन्ति मार्गदर्शकाः शिक्षका उपदेशका महात्मानस्तेषां नियतशब्दा नियतानुक्रमा उपदेशाः स्मर्यन्ते।

तृतीयाक्षेपस्य समाधानम्—

यथो एतद् ब्राह्मणेन रूपसम्पन्ना विधीयन्त इत्युदितानुवादः स भवति।

भा०—यथा-चैष आक्षेपः कृतो मन्त्रगतशब्दानां ब्राह्मणेन पूर्णरूपं-पूर्णस्वरूपं दर्श्यतेऽर्थप्रकाशनाय, इतीत्थन्न मन्तव्यं तत्तु कथितस्यानुवचनं ज्ञापनं न नवीनं विधानं यदयं यजमान इमं मन्त्रं पठित्वा प्रथयति, पुरोडाशं प्रथयति—पुत्रपौत्रैः पशुभिर्धनेन चात्मानम्प्रथयति। एवं 'प्रोहाणि' इत्युच्चार्य तदनुरूपं कृत्वा च, प्रोहति—आत्मानम्परमात्मानम्प्रति प्रेरयति—समर्पयति, मन्त्रगतमभिप्रायमेव प्रकटयति न नवीनमादिशति।

चतुर्थाक्षेपस्य समाधानम्—

यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत।

भा०—"यथा ह्येतदनुपपन्नार्थाः—अयुक्तार्थवन्तो मन्त्रा भवन्ति" तन्न सम्यक्, मन्त्रा न ह्ययुक्तार्थकाः, तत्र "ओषधे त्रायस्व स्वधिते मैनं हिंसीः" (यजु० ६। १५) अत्र "ओषधे त्रायस्व' तथा 'स्वधिते मा हिंसीः" इत्युभयत्र खल्वाम्नायवचनादहिंसा प्रतीयेत—ज्ञायेतेति लक्ष्यं यतो मुण्डनसंस्कारे मन्त्र एष विनियुज्यते केशच्छेदने, उक्तं ह्याश्वलायनगृह्यसूत्रे "दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति, ओषधे त्रायस्वैनम्" (आश्वला० १। १७। ८) केशानामुपरि कुशस्तूपः स्थाप्यते क्षुरस्य प्रहारात् त्राणं भवेत्, अत उक्तं त्रायस्वेत्येतदर्थं कुशस्थापनं यदहिंसा प्रतीयते—ज्ञायते बालकस्य हिंसा न भवेदतः कुशाः केशोपरि स्थापनीयाः, तथा च "स्वधिते मैनं हिंसीरिति लौहेन क्षुरेण" (आश्वला० १। १७। ८) अत्रापि केशच्छेदनकाले क्षुरः खल्वेवं चालनीयो यथा हिंसा न स्यात्। त्वचमङ्गं न प्रहरेन्नोत्पाटयेत्। आम्नायवचनादहिंसा प्रतीयेत—ज्ञायेत, यत्क्षुरेण केशान् कृन्तेत्, न तु त्वचं मांसं वा। क्षुरो हिंसाङ्करोति छिनत्ति हि परन्तु त्वचं न छिन्द्यान्न हिंस्यादिति लक्ष्यम् कुशोऽपि क्षुरेण तृप्यते—छिद्यते तच्छिद्यमानं बालकं त्रायते हि, एवं नायुक्तार्थवन्तो

मन्त्राः । पुनश्चायं मन्त्रस्समग्रश्चिकित्साविषयकः, औषधशल्यविधिभ्यामुभयप्रकारा चिकित्साऽत्र द्योत्यते, रुग्णस्यौषधिद्वाराऽथ छेदनद्वारा च चिकित्सा क्रियते । ओषधिम्पातुंग्रहीतुं रुग्णो नेच्छति कटुककषायादिदु:स्वादा भवति ह्योषधिः, परन्तु-ओषधिर्न मारयति किन्तु त्रायते हि तस्मादोषधे त्रायस्वैनमित्युक्तमिति न हिनस्ति, पुनश्च स्फुटिकादिरोगग्रस्तश्छेदनाद् बिभेति, क्षुरेण हिंसिष्यति माम्, तस्मादुक्तं "स्वधिते मैनं हिंसीः" क्षुरो दुष्टमांसं कर्तित्वा न हिनस्ति, इति निश्चयार्थमुक्तम् । आम्नायवचनाद्द्वाभ्यामपि चिकित्सनात्खलु हिंसा न स्यादिति प्रयोजनं तथा ध्यानं च रक्षणीयम् । सूच्यते मनःप्राणचक्षुरादीन्यङ्गानि पवित्राणि स्वस्थानि स्युः । तस्मादुचितसूचनादुचितार्थवन्त एव मन्त्राः ।

पञ्चमाक्षेपस्य समाधानम्—

यथो एतद् विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद् यथाऽसपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति ॥

भा०—यथा चैतदुक्त आक्षेपो यत् 'एक एव रुद्रोऽवतस्थे न द्वितीयः ।' पुनः 'असंख्याता सहस्राणि य रुद्रा अधिभूम्याम् ।' एवम् 'अशत्रुरिन्द्र जज्ञिषे' तथा 'शतं सेना अजयत् साकमिन्द्रः' इति विप्रतिषिद्धार्थाः परस्परविरुद्धार्था भवन्ति, तेन मन्त्रा नार्थवन्त इति तन्न युक्तम् । यतो हि लौकिकेषु वाक्येष्वपि तथा भवति यथा 'असपत्नोऽयं 'ब्राह्मणः' तथा 'अनमित्रो राजा' न हि कश्चिद् ब्राह्मणः सपत्नरहितो विरोधिरहितो भवति, न च कश्चन राजाऽनमित्रः शत्रुरहितो भवति, तस्य तस्यापि भवति हि सपत्नोऽमित्रः परन्तु तत्सम्मुखं न स्थातुं शक्नोति तस्मादुक्तमिदमसपत्नोऽनमित्रः । यथा तत्र, तथाभूताः शब्दा अर्थवन्तः सार्थकास्तथैव मन्त्रा अपि सार्थका युक्तार्थवन्तः—सन्ति । तस्मान्मन्त्रा अर्थवन्तः ॥

षष्ठाक्षेपस्य समाधानम्—

यथो एतज्जानन्तं सम्प्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राहेति ॥

भा०—यथा चैतज्जानन्तं सम्प्रेष्यति 'अग्नये समिध्यमानायानुब्रूहि' स होता तु जानाति ह्यग्नये मन्त्रमुच्चार्य हविष्प्रदानं पुनर्ज्ञापनं तु प्रमत्तवदनर्थकं भवतीति यदुक्तं न तद् युक्तं यतो जानन्तमभिवादयते 'अभिवादये देवदत्तः शिष्योऽहं भो गुरुदेव !, गुरुदेवो जानाति ह्ययं देवदत्तो मे शिष्यो देवदत्तः पुनरपि जानन्तं ज्ञापयत्यात्मानं 'देवदत्तोऽहं भोः' इति । तथा हे वर ! त्वया मधुपर्को मधुपर्को मधुपर्को गृह्यताम्' जानाति हि साक्षात् पश्यति हि मधुपर्कं वरः पुनरपि

निर्ज्ञाप्यते मधुपर्क एषः। यथा लोके जानते ज्ञापनवचनं सार्थकं नानर्थकम्। तथैवात्रापि जानते ज्ञापनेन नानर्थवन्तो मन्त्राः, अर्थवन्त एव।

सप्तमाक्षेपस्य समाधानम्—

यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद् यथा सर्वरसा अनुप्राप्ताः पानीयमिति ॥

भा०—यथा चैतदुक्तम् 'अदितिर्द्यौरदितिरन्तरिक्षम्' 'सर्वमदितिः' इत्युक्तं तन्न सम्भवति सर्वं भवितुमिति तु लौकिकेषु वाक्येष्वप्युपलभ्यते व्यवहारो गुणातिशयात्। यथा—जलं पानीयमिति जले सर्वरसा अनुप्राप्ताः सन्ति, जलं हि रसानां रसः, जलं हि जीवनं पिपासाकाले जलाकांक्षायां नान्यो रसो रोचते तस्माद् जलं हि सर्वरसमयमिति यथा गुणातिशयात् कथनं सार्थकं तथा—अदितिरदीना शक्तिः सर्वदेवतामयीति सार्थं मन्त्रकथनमर्थवन्तो मन्त्राः' अन्यत्र वेदेऽपि गुणातिशयादुच्यते "त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ" ( ऋ० ८। ९८। ११ )।

अष्टमाक्षेपस्य समाधानम्—

यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति, यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ १६ ॥

भा०—यथा चैतद् यदविस्पष्टार्था मन्त्रशब्दा भवन्ति 'अम्यक्, यादृश्मिन्' इत्येवमादय इति, एतत्कथनं त्वितथं यथाऽन्धः स्थाणुं छिन्नशाखं वृक्षं न पश्येत् तत्र यथा स्थाणोरपराधो नास्ति पुरुषस्यापराधो दोषोऽस्ति। जनस्याल्पज्ञातृत्वात् खलु शब्दस्य साधारणज्ञानेनार्थो न विस्पष्टो भवति तस्य विशिष्टज्ञानेन विस्पष्टोऽर्थो भविष्यति। यथा लोके जानपदीषु जनपदे देशे प्रसिद्धासु वृत्तिषु क्रियासु प्रजासु वा विद्याकारणाद् विशिष्टः पुरुषो मान्यः प्रामाणिकः कृतकृत्यो भवति तथैव परश्चावरश्च परोवरौ तयोर्भावः पारोवर्यं तद् विदन्ति जानन्ति ये ते पारोवर्यविदः- वस्तुनो मूलमारभ्य यावत्प्रसारं जानन्ति तथाभूताः—पूर्णज्ञानवन्तस्तेषु विद्वत्सु भूयोविद्योऽधिकविद्यावान् प्रशस्यो भवति स हि सर्वं विस्पष्टं ज्ञातुमर्हति न तत्सम्मुखमविस्पष्टं किञ्चित् भवति। तस्मादेष आक्षेपो न युक्तः। मन्त्रा अर्थवन्तः सन्ति, एषां ज्ञानाय विशिष्टविद्यावद्भिर्भवितव्यम् ॥ १६ ॥

इति पञ्चमः पादः।

## षष्ठः पादः

---

अथापीदमन्तरेण पदविभागो न विद्यते । "अवसाय पद्वते रुद्र मृळ" ( ऋ० १० । १६९ । १ ) पद्वदवसं गावः पथ्यदनमवतेर्गत्यर्थस्यासो नामकरणस्तस्मान्नावगृह्णन्ति ।

"अवसायाश्वान्" ( ऋ० १ । १०४ । १ ) स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति ।

"दूतो निर्ऋत्या इदमाजगाम" ( ऋ० १० । १६५ । १ ) पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाऽकारान्तम् । "परो निर्ऋत्या आचक्ष्व" ( ऋ० १० । १६४ । १ ) चतुर्थ्यर्थप्रेक्षैकारान्तम् ॥

परः सन्निकर्षः संहिता । पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि ॥

भा०—अथ चैतन्निरुक्तशास्त्रमन्तरेण पदच्छेदः पृथक् पृथक् पदपाठः—पदविश्लेषणं न विद्यते न ज्ञायते "विद ज्ञाने" ( अदा० ) 'विद्यते' इति कर्मणि प्रयोगः । यद्वा पदविभागो न विद्यते नो भवति—नोपपद्यते "विद सत्तायाम्" ( दिवा० ) मन्त्रपदानामर्थज्ञानसाधनं निरुक्तं तदर्थज्ञानं कारयति, पुनश्च पदविभागोऽर्थानुसारी कर्तुं शक्यः । अत्रोदाहरणानि दीयन्ते—"अवसाय पद्वते" इति वचने वस्तुद्वयं चतुर्थ्यन्तं पठ्यते, तत्र 'पद्वत्' अथ 'अवसम् ।' पद्वते-गवे, 'अवसाय—पथ्यदनाय'—मार्गे भक्षणयोग्याहाराय । तयोरेकपदत्वात् पदकारा नावगृह्णन्ति "अव रक्षणगति०" ( भ्वादि० ) इति गत्यर्थात् 'असच्' प्रत्ययः । "अत्यनि····भ्यो ऽसच्" ( उणा० ३ । ११७ ) अवसाय मार्गे भक्षणयोग्याय, पद्वते-गवे च तन्निर्वाहाय सुखसाधनाय ।

समग्रमन्त्रस्तदर्थश्च—

मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम् ।
पीवस्वती जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥

हे रुद्र मेघानां रोदयितः ! वर्षयितर्देव ! वातो मयोभूः कल्याणस्य भावयिता खलूस्रा गाःप्रति वातु, ऊर्जस्वती रसवतीरोषधीश्च ता गाव आरिशन्तां चर्वन्तु । पीवस्वतीः पुष्टिमत्यः सत्यो गावो जीवधन्याः—जीवानां प्रीणयित्रीस्त्वः

पिबन्तु पद्वते पादयुक्ताय गोवंशायावसाय-पथ्यदनाय मार्गे भक्षणाय तत्पयः पानाय त्वं मृड सुखय ॥

अथ 'अवसायाश्वान्' इत्यत्र "षो अन्तकर्मणि" (दिवादि०) 'अव' उपसर्गयुक्तो धातुः कार्याद् विमुक्तकरणेऽर्थेऽत्राश्वान् कार्याद् यानाद्वा विमोच्य। तस्मादवगृह्णन्ति पदविभागं कुर्वन्ति। 'अवऽसाय' 'अवसाय' शब्दः समानरूप उभयत्र परन्तु पदच्छेदो नार्थज्ञानमन्तरेण कर्तुं शक्यते। अर्थज्ञानरूपस्य साधनं निरुक्तशास्त्रम्। समग्रमन्त्रस्तदर्थश्च—

यो॒नि॑ष्ट इन्द्र नि॒षदे॑ अकारि॒ तमा नि॑षीद स्वा॒नो नार्वा॑।
वि॒मुच्या॒ वयो॑ऽव॒सायाश्वा॑न् दो॒षा वस्तो॒र्वही॑यसः प्रपि॒त्वे ॥

हे इन्द्र ! ते—तव निषदे निषदनाय—उपवेशनाय—अस्माभिर्योनिमुपवेशनस्थानं कृतं त्वं तत्र स्वानः स्वनं हर्षशब्दं कुर्वाणोऽश्व इव निषीद—उपविश, वयः—रश्मीन् विमोचय, अवसाय—विमोच्य रश्मिभ्यो दोषा रात्रौ वस्तोरहनि च वहीयसोऽतिशयेन वोढ्न् तानश्वान् वियोज्य प्रपित्वे प्राप्ते कालेऽस्माननुगृहाण ॥

'दूतो निर्ऋत्या इदमाजगाम' एष दूतो निर्ऋतेः सकाशादिदमत्राजगाम, इति पञ्चम्यर्थप्रदर्शने, यद्वा 'एष दूतो निर्ऋतेः स्वभूतो भृत्य इदमत्राजगाम, इति षष्ठ्यर्थप्रदर्शने। दूतो द्विविधो भवति परदूतः स्वदूतश्च। परराष्ट्रस्य दूतः पञ्चम्या सह सम्बध्यते स्वराष्ट्रस्य दूतः षष्ठ्या सह सम्बध्यते। निर्ऋतिः स्वदेशपरदेशयोर्मध्ये गतः पृथिवीप्रदेशः सीमा "निर्ऋतिः पृथिवीनाम" (निघं० १।१) कपोत इव भवति दूतो राजदूतः स परसीमत आगच्छेद् यद्वा स्वराष्ट्रस्य स्वसीमवर्ती पुनरागच्छेत् स उभयविधोऽपि दूतः सत्करणीयः। तदुभयविधदूतस्य मन्त्रस्तदर्थश्च—

देवाः॑ क॒पोत॑ इषि॒तो यदि॒च्छन् दूतो॒ निर्ऋ॑त्या इ॒दमा॒जगाम॑।
तस्मा॑ अर्चाम कृ॒णवाम॒ निष्कृ॑तिं॒ शं नो॑ अस्तु द्वि॒पदे॒ चतु॑ष्पदे ॥

हे देवाः ! विद्वांसः ! एष कपोतो विविधवर्णो भाषावेशदृष्ट्या दूतः सन्देशवाहकः—इषितः प्रेषित परैः प्रेषितोऽस्मद्देशे प्राप्तो यद्वाऽस्माभिः प्रेषितः परदेशं प्रति स पुनरावृत्तो निर्ऋत्याः सीम्नः परदेशसीमविभागाद् यद्वा स्वसीमविभागस्थ दूतो यद् वृत्तं सूचयितुमिच्छन्नाजगाम—आगतस्तस्मै—तमर्चामः सत्कुर्मः स दूतः परदूतः स्वदूतो वा सत्करणीयः, परदेशस्वदेशयोर्मध्ये किमपि विचारसाम्यं विचारवैषम्यं वा भवेत् तस्य सहयोगं साममत्यं कुर्याम यद्वा निष्कृतिं प्रतीकारं कुर्याम यथा मनुष्येभ्यः पशुभ्यश्च कल्याणं भवेत् ॥

पुनश्च 'परो निर्ऋत्या आचक्ष्व' अत्र 'ऐ' निर्ऋत्यै चतुर्थ्यन्तं पदम्, निर्ऋतिरत्र पाप्मा "पाप्मा वै निर्ऋतिः" ( शत० ७ । २ । १ । १ ) पाप्मा मृत्युः। निर्ऋत्यै मृत्यवे ।

तद्विषयको मन्त्रस्तदर्थश्च—

अपेहि मनसस्पतेऽपक्राम परश्चर ।
परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः ॥

हे मनसः पते ! मनसः पातयितः ! क्लेशयितरोग ! त्वमपेहि मम शरीरात् पृथग् भव, अपक्राम—त्रायस्व पराङ्मुखः सन् गच्छ, न पुनरागच्छ । निर्ऋत्यै मृत्यवे परः—परस्तिष्ठ—नागच्छेत्याचक्ष्व—कथय यतो मम जीवतो बहुधा—बहुप्रकारेण कृतोपचारं मनोऽस्ति न मनसि जीवननिराशा ।

प्रसङ्गतः संहिताविषये वर्ण्यते—परः सन्निकर्षः संहिता, व्याकरणेऽपि "परः सन्निकर्षः संहिता" ( अष्टा० १।४।१०९ ) वर्णानां परोऽत्यन्तः संसर्गः संहिता भवति यथात्र मन्त्रेषूदाहृता 'पदप्रकृतिः संहिता'—पदानां या प्रकृतिः सा संहिता, इत्यपि लक्षणं युक्तं संहितातः—मूलमन्त्रपाठात् पदानि प्रक्रियन्ते यतः । परन्तु पदानि प्रकृतिर्यस्याः सा संहिता, इति वैयाकरणसंहितातो न भिद्यते, वैदिकपद्धतौ तु पदानां प्रकृतिः संहिता भवति, किन्तु मन्त्रार्थान्वेषणे पदानि प्रकृतित्वेन संहितेति मतं सर्वचरणानां सर्वशाखावादिनां परिषदा निर्धारितानि वचनानि। तथाकृत्वा निरुक्तेऽपि, पदानां प्रकृतिरेव संहिता खल्वृगाद्या संहिता ।

अथापि याज्ञदैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यम्, ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति "इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति ।" ( ऋ० ६ । ४ । १ ) इति । वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे । "अग्निरिव मन्यो त्विषितः सहस्व" ( ऋ० १ । ८४ । २ ) इति । तथाऽग्निर्मान्यवे मन्त्रे । त्विषितो ज्वलितस्त्विषिरित्यप्यस्य दीप्तिनाम भवति ॥ १७ ॥

भा०—अन्यच्च तृतीयं प्रयोजनं निरुक्तशास्त्रस्येदं यद् यज्ञकर्मणि यज्ञप्रकरणे वा देवताभिधानेन देवताज्ञानेन वा बहव उपयोगप्रदेशाः, यदेतन्मन्त्रेणास्यै देवतायै हविर्देयं यज्ञो विधेय इति तदेतेन निरुक्तशास्त्रेणोपोह्यमुपगत्य ज्ञातव्यं यत् कस्यां देवतायां मन्त्रस्यार्थवत्त्वमस्ति, तदर्थज्ञानेन विना देवताऽन्वेष्टुं शक्या, अर्थं च निरुक्तं ज्ञापयति । यदि ते कथयेयुर्वयं तु लिङ्गज्ञाः स्मः, यत्र

मन्त्रे यस्या देवताया लिङ्गं नाम द्रक्ष्यामस्तां देवतां ग्रहीष्यामः । यद्येवं तर्हि 'इन्द्रं न त्वा शवसा वायुं पृणन्ति' इति वायुलिङ्गं वायुनाम, इन्द्रलिङ्गम्—इन्द्रनाम चाप्यस्ति परन्त्वाग्नेये मन्त्रेऽग्निदेवताके मन्त्रे, तस्मान्निरुक्तं शास्त्रं सप्रयोजनं खल्वावश्यकमेव । अन्यच्च 'अग्निरिव मन्यो....' इति मन्त्रे मन्युदेवताकेऽस्ति 'अग्निर्लिङ्गमग्निर्नाम, परन्तु केवलेन नाम्ना न देवता अग्निर्भविष्यति । इवशब्देनार्थज्ञोऽग्निमुपमानं ज्ञास्यति मन्युमुपमेयं देवतामध्यवस्यति स मन्युर्ज्वलितोऽग्निरिव ।" त्विष–दीप्तौ" (भ्वादि० ) ।

अथापि ज्ञानप्रशंसा भवति, अज्ञाननिन्दा च—
"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥"
"यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"
स्थाणुस्तिष्ठतेः । अर्थोऽर्तेररणस्थो वा ॥ १८ ॥

भा०—अथ च ज्ञानप्रशंसा तथाऽज्ञाननिन्दा च प्रदर्श्यते 'स्थाणुरयम्'.... इति मन्त्रे । मन्त्रार्थः—

यः खलु वेदमधीत्यार्थं न विजानाति स तु स्थाणुरेव मन्तव्यः स्थाणुरिवास्ति, स्थाणुः शाखादिरहितः समूलः शुष्को वृक्षः, तिष्ठतीत्येव स्वभाववान् यो वातेनापि न चेष्टते पत्रशाखादिरहितत्वान्निर्जीवत्वान्निःसारत्वाच्च । योऽर्थज्ञो भवति स एव सम्पूर्णं ज्ञानात्मकं लाभं तत्साध्यं च कल्याणं प्राप्नोति ज्ञानेन विनष्टाज्ञानान्धकारः । "पाप्मा वै तमः" ( शत० १२।९।२।८ ) यदि विज्ञानरहितं पठितं तत्तु पाठमात्रेणैव कथ्यते—वक्तुं शक्यते तत् खलु ज्ञानशून्यं पठितं नान्तःकरणे प्रकाशते यथाऽग्निशून्यं शुष्कमिन्धनमपि न ज्वलति कदाचित् । 'स्थाणुः' 'स्था' धातोः सिद्ध्यति "स्थोणुः" ( उणा० ३ । ३७ ) 'अर्थः' "ऋ" धातोर्गत्यर्थात् "ऋ गतौ" ( भ्वादि० जुहो० ) "उषिकुषिगार्तिभ्य स्थन्" ( उणा० २ । ४ ) अर्यते प्राप्यते हि जनैर्यद्वा गच्छति हि जनाज्जनं व्यवहारेण, 'अरणस्थो वा' इयर्ति गच्छतीति 'अर्'–अरणो गन्ताऽतो लोकान्म्रियमाणः, तस्मिन् गते सति तिष्ठति ह्यत्र धनादिकं तस्मात् 'अर् स्थः' 'अर्थः' सकारलोपः पृषोदरादित्वान्मन्तव्यः शब्दस्यार्थो ज्ञाने ध्वन्यात्मकत्वात्तस्य गते नष्टे सति ज्ञानात्मकोऽर्थस्तु तिष्ठत्येवान्तःकरणे ॥

तथाविधो वेदमन्त्रोऽपि विद्यते स च—

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥"
(ऋ० १० । ७१ । ४)

अप्येकः पश्यन्न पश्यति वाचम्। अपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धम्। अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते। ज्ञानं प्रकाशनमर्थस्याहानया वाचोपोत्तमया वाचा। जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु। सुवासाः कल्याणवासाः। कामयमाना ऋतुकालेषु। यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा ॥ १९ ॥

भा०—उत त्वः—अप्येको जनः पश्यन् सन् न पश्यति * वाचं लिपिभूताम्, उत त्वः—अप्येकः शृण्वन् न शृणोत्येनां वाचं ध्वनिरूपाम्। इत्यर्धमन्त्रस्त्वविद्वांसं कथयति दर्शयति यदविद्वान् यो नार्थज्ञः। पुनर्यस्तु खल्वर्थज्ञः। उत त्वस्मै—अप्येकस्मै विदुषेऽर्थज्ञायैषा वाक् तन्वं स्वात्मानं विसस्रे विवृणुते विवृत्य समर्पयति—आविष्कुरुते प्रकाशयति। उपोत्तमया वाचा—उत्तमाऽन्तिमा तत्समीपायाः पूर्वा सा ह्युपोत्तमा 'उतो त्वस्मै तन्वं विसस्रे' इत्यनया वाचाऽर्थस्य प्रकाशनं ज्ञानं सा खल्वाह—कथयति, ज्ञानं हि वाचस्तनुरात्मा वा तं प्रकाशयति यथा जाया पत्ये स्वधर्मसमये सुवासाः कल्याणवासाः पवित्रशोभावस्त्रभूषासम्पन्ना, उशती कामयमाना स्वात्मानं प्रकाशयति। स खल्वर्थज्ञो विद्वान् तद्वदेनां वाचं पश्यति शृणोतीति त्वर्थज्ञस्य प्रशंसा।

तस्योत्तरा भूयसे निवर्चनाय—
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥"
(ऋ० १० । ७१ । ५)

अप्येकं वाक्सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वपि। अधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान्दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान्

* ददर्श—पश्यति "छन्दसि लुङ्लङ्लिटः (अष्टा० ३।४।६) सामान्यकाले।

भवत्यफलामपुष्पामित्यफलास्मा अपुष्पा वाग् भवतीति वा किञ्चित्पुष्पफलेति वा। अर्थं वाचः पुष्पफलमाह। याज्ञदैवते पुष्पफले, देवताध्यात्मे वा ॥

भा०—तस्य तद्विषयस्याधिकाथ सुस्पष्टीकरणायाग्रिमा-ऋगस्ति "उत त्वं सख्ये"....मन्त्रार्थः—

उत त्वम्—अप्येकमर्थज्ञं विद्वांसं सख्ये—वाक्सख्ये वाचा सख्यं वाचा सह सख्यं तस्मिन्, अर्थज्ञानपूर्वकेण वाचोऽध्ययनेन वाक्सख्यं प्राप्यते तत्र वाक्सख्ये रममाणं प्रवृत्तं संलग्नं यद्वा सख्ये देवसख्ये रमणीये स्थाने मन्त्रेषु वर्तमानानां देवानां देवतानां सार्थानां निर्वचनेन तत्सख्यं तत्समानधर्मत्वं प्राप्यते। उक्तं ह्यग्रे "यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति" (निरु० १३।१३) महाभाष्यव्याकरणेऽपि "महान् देवः शब्दः....महता देवेन नः साम्यं यथा-स्यादित्यध्येयं व्याकरणम्" (महा० १।१।१) तथाभूते देवसख्ये रमणीये स्थानेऽ-र्थज्ञानात्मकताद्भाव्ये रममाणं विद्वांसं स्थिरपीतं विज्ञातार्थं स्थिरं स्वात्मनि धारितं पीतं ज्ञानामृतं पीतं सद् यस्य यद्वा पीतं ज्ञानामृतं पीतं स्थिरं यस्मिन्। 'आहिता-ग्न्यादिषु' योजनीयम्। आहुः कथयन्ति वेदज्ञा मर्मज्ञा विद्वांसः। एवं तथाभूत-मन्त्रार्थज्ञानवन्तं वाजिनेषु वाग्ज्ञेयेषु बलवत्सु, वाजिनेषु 'वाक्-इनेषु' वाचो मन्त्रवाचो ये खल्विनाः स्वामिनो देवा देवता ज्ञेया अर्थलक्ष्यास्तेषु 'बलवत्सु' इति-अध्याहारो निरुक्तकारस्य, "वाक्-इना-ईश्वराऽर्थानामिति तेषु वागर्थेषु" ( इति स्कन्दस्वामी ) इति न युक्तम्। अर्थः स्वामी वाचः, अर्थस्य महत्त्व-प्रदर्शनं वाचो महत्त्वमर्थानामुपरि-इति तु विरुद्धं व्याख्यातम्, "अर्थनित्यः परीक्षेत।" अत्रापि वाचः स्वामी त्वर्थो लक्ष्यते। यद्वा 'वाजिनेषु' नाध्याहारः "वाजो बलनाम" ( निघ० २।९ ) किन्तु तदनुवादः "बलवत्सु केषु-इति प्रसक्तः-वाग्ज्ञेयेषु" वाचो ज्ञेया अर्थास्तेषु बलवत्सु गहनेषु कठिनेष्वपि न हिन्वन्ति-नाप्नुवन्ति-अन्ये जनाः-न तत्समकक्षतां प्राप्स्यन्ति। पुनश्च यो वाचमफलामपुष्पां शुश्रुवान्-श्रुतवान् स एष अधेन्वा अदोग्ध्र्या-अवास्तविकया धेन्वा-इव मायया वाचा वाक्प्रतिरूपया बाह्यतो वाग्रूपया चरति सा वागस्मै दोह्यान् कामान् न दुग्धे देवस्थानेषु मनुष्यस्थानेषु क्वचिदपि। अफला, अपुष्पा सा वाग्भवति-इति, यद्वा किञ्चित्पुष्पफला भवति-इति वा। वाचः पुष्पफलेऽर्थं कथयति वाग्ज्ञः, याज्ञदैवते पुष्पफले, क्रमशः, यज्ञज्ञानं पुष्पं देवताज्ञानं फल-मिति, कर्मकाण्डक्षेत्रे, देवताज्ञानम्-अग्निवायुसूर्यादिदिव्यगुणानां पदार्थानां ज्ञानं पुष्पम्, अध्यात्मज्ञानं स्वात्मपरमात्मज्ञानं फलं वाचो मन्त्रवाचः।

साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः ।। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ।। बिल्मं भिल्मं भासनमिति वा ।।

भा०—'साक्षात्कृतधर्माणः' इत्यत्र 'धर्मन्' शब्दोनकारान्तोऽस्ति, अकारान्तो न, तेनायं न पुण्यपर्यायः किन्तु नपुंसकलिङ्गः कर्मशब्दवत्, कर्मन् शब्दो यथा तथा धर्मन् । कर्मन्—कर्म तु भवति क्रियमाणं क्रियात्मकं परन्तु धर्मन्—धर्म भवति विधानं ज्ञानात्मकं—वेदज्ञानं कर्मणो हेतु । साक्षात्कृतविधानाः साक्षात्कृतज्ञानात्मकवेदरूपविधाना ऋषयः प्रारम्भकालीना ऋषयो बभूवुः, तेऽवरेभ्योऽवरकालीनेभ्योऽसाक्षात्कृतज्ञानात्मकवेदरूपविधानेभ्यो मन्त्रान् तज्ज्ञानात्मकवेदरूपविधानमन्त्रान्—उपदेशेन प्रवचनेन मौखिककथनेन सम्प्रददुः—शिक्षयामासुः । अवरे तु खलूपदेशाय ग्लायन्तो मौखिकप्रवचनं कर्तुं संकुचन्तः प्रवचने स्वात्मानमसमर्थमनुभवन्तो बिल्मग्रहणाय धारणं स्मरणं भासनं प्रतिभासनं ग्रहीतुमिमं ग्रन्थं निघण्टुं वेदं वेदाङ्गानि च समाम्नासिषुः सङ्गृहीतवन्तो ग्रन्थरूपे लिखितवन्तः । बिल्मं भिल्मं भासनं वा । 'बिल्मम्' इति पुरातनशब्दः, 'साक्षात्कृतधर्माणः' इति च पुरातनवचनम् । अत एव यास्को निर्वचनं करोति, बिल्मं वैदिकं पदं यथा "अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः । सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परिवन्द ऋग्भिः ॥" ( ऋ० २ । ३५ । १२ ) बिल्मं भिल्मं भरणं धारणं भासनं वेति निर्वचनम् ।

एतावन्तः समानकर्माणो धातवः ।। धातुर्दधातेः ।। एतावन्त्यस्य सत्त्वस्य नामधेयानि, एतावतामर्थानामिदमभिधानम् ।। नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् ।।

भा०—एतावन्तो समानकर्माणो धातवः—इयत्संख्याकाः समानव्यापारा धातवो यथा "भ्राजते भ्राशते...." एकादश ज्वलतिकर्माणः—ज्वलतिव्यापाराः—ज्वलतिक्रियावन्तः, इत्यादयः । धातुरर्थधारणात्, निरपेक्षमर्थं धारयतीति धातुः । लिङ्गादि नापेक्षते । एतावन्ति—अस्य सत्त्वस्य वस्तुनो नामधेयानि—नामानि यथा पृथिव्या नामानि 'गौः ग्मा....' इतिप्रभृतीनि—एकविंशतिर्नामानि । आद्ये नैघण्टुकप्रकरणेऽध्यायत्रये, तथा 'एतावतामर्थानामिमदभिधानम्—अनेकानां वस्तूनामेकं नाम । तथा "अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः—अनव-

गतसंस्कारांश्च" ( निरु० ४ । १ ) इति प्रकृत्योक्तानि, दयतिरनेकर्मा, नूचित् पुराणनवयोः, अकूपारस्य—आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, इत्येवमादीनि निघण्टोश्चतुर्थेऽध्याये, इदं देवतानाम नैघण्टुकं प्राधान्येन देवतानामेदम् । तत्र नामानि । मध्यमे नैगमप्रकरणे यदन्यदेवते मन्त्रे—स्वस्माद् भिन्नदेवताके मन्त्रे यन्नाम निपतति निविष्टं भवति गौणं सत् तन्नैघण्टुकमुच्यते ।

अश्वं न त्वा वारवन्तम् ( ऋ० १ । २७ । १ ) ।
अश्वं न त्वा बालवन्तम् । बाला दंशवारणार्था भवन्ति । दंशो दशतेः ।

भा०—अत्र मन्त्रे 'अग्निः' देवता 'अश्वः' निपातत्वात्—नैघण्टुकः शब्दः । 'अश्वं न' इति साक्षादुपमानमत्र 'अश्व इव' अग्निरपेक्ष्यते—उपमेयत्वेन । वारवन्तं वालवन्तं रलयोरभेदेन निर्वचनं वालाः पुनर्दंशानां वारयितारो दंशा दशनशीला मशकसदृशाः क्षुद्रजन्तवः । तेषां निवारणार्थाः, दंशो दशधातोः, मन्त्रस्य देवता 'अग्निः' अस्ति यज्ञे पार्थिवोऽग्निः, अध्यात्मे त्वग्निर्ज्ञानप्रकाशस्वरूपः परमात्मा, कर्मकाण्डेन वालवन्तं पूर्णायुष्कं भारवहनसमर्थमश्वमिव ज्वालावन्तं हविर्वहनसमर्थमाग्निमिति लक्ष्यतेऽध्यात्मे तु वारवन्तमेवोपमिमीते । अश्वस्तु स्वस्य दंशवारणाय वारवान् बालवान् परन्तु परमात्मा तूपासकानां रोगदोषवारणधर्मवान् ।

समग्रमन्त्रस्तदर्थश्च—

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥

अध्वराणां शिल्पहोमादियज्ञानां तथोपासनादिश्रेष्ठकर्मणां राजन्तं प्रकाशकं त्वामग्निं वारवन्तं बालवन्तमस्मदर्थमस्माकं रोगदोषनिवारणगुणवन्तं नमोभिरौषध्यादिभिर्होमैस्त्वां भौतिकं सेवितुं स्मस्तथा नमोभिर्विविधनमस्कारैः स्तुतिवचनैस्त्वां परमात्मानमुपासितुं स्मः ॥

"मृगो न भीमः कुचरो गिरिष्ठाः" । ( ऋ० १ । १५४ । २, १० । १८० । २ ) ।
मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद् भीष्मोऽप्येतस्मादेव । कुचर इति चरतिकर्म कुत्सितमथ चेद् देवताभिधानं कायं न चरतीति । गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वाऽर्ध-

मासपव देवानस्मिन् प्रीणन्तीति । तत् प्रकृतीतरत् सन्धि-
सामान्यात् । मेघस्थायी, मेघोऽपि गिरिरेतस्मादेव ॥

भा०—'मृगो न भीमः' इति नकारः पूर्ववदुपमायाम्, मृग इव भीमो-भयङ्करः, मृगः—मृजधातोर्गत्यर्थकान्निष्पन्नः कप्रत्ययान्तः । "मार्ष्टि गतिकर्मा" ( निघं० २ । १४ ) गच्छति हि वेगेन मृगो जाङ्गलपशुः । भीमो यतोऽस्माद् बिभेति—इति "भीमादयोऽपादाने" ( अष्टा० ३ । ४ । ७४ ) भीष्मोऽप्येतस्मादेव भयकारणाद् भवति "भियःषुग्वा" ( उणा० १ । १४८ ) कुचरः कु—कुत्सितं चरतीति "चरेष्टः" ( अष्टा० ३ । २ । १६ ) कुत्सितकर्माचरणशीलः, हिंसनं कुत्सितं कर्म तच्चरणशीलो भवति मृगो हिंस्रः । मृगस्य विशेषणे सति त्वेषोऽर्थः । अथ यदि देवताया विशेषणं तदा क्वायं न चरति—इति विग्रहे कुत्रापि चरणशीलः सर्वत्र चरणशीलो हि सः । सप्तम्यर्थे प्रत्ययस्य लोपो यद्वा कु—विषमं स्थानमपि चरतीति सर्वत्र समं विषमं च चरति । गिरिष्ठाः—गिरिस्थायी गिरिः पर्वतः, यतः पृथिवीसमतलात् सम्यगूर्ध्वंगतो भवति, पर्वतः पर्ववान् न हि पर्वतः समतलमिव भवति किन्तूच्चत्वनीचत्वमाश्रित्य भवति । उच्चनीचविभागरूपसन्धिमान् भवति । पर्व "पॄ पालनपूरणयोः" ( क्र्यादि० ) "प्रीञ् तर्पणे" ( क्र्यादि० ) ततो वनिप् प्रत्ययान्तः पर्वशब्दः साध्यः, पुनः ( अष्टा० ५ । २ । १२२ ) इत्यत्र "तप् पर्वमरुद्भ्याम्" वार्तिकं तेन तप् प्रत्यये । तं पर्वतं पर्वाणि पूरयन्ति पृथिवी-स्थान् प्राणिनश्च पालयन्ति जलवर्षणप्रवहणाभ्यां तथाऽर्द्धमासपर्वामावास्या पौर्णमासी च तत्र पर्वणि गृहस्थजना देवान् विदुषो दिव्यगुणान् पदार्थांश्च प्रीणन्ति तर्पयन्ति भोजनादिसत्कारेण हविष्प्रदानेन च पृणन्ति पूरयन्ति । इतरत् पर्व लोकेऽङ्गपर्वाङ्गुलिपर्ववक्षःपर्ववंशपर्वेक्षुपर्वेत्यपि तत्प्रकृतिसन्धानकारणकं भवति सन्धिसामान्यात् तत्रापि खल्वर्द्धमासयोः सन्धिवत् सन्धिर्भवति हि । गिरिष्ठाः—विष्णुर्मेघस्थायी मेघोऽपि गिरिः—एतस्मादेव समुद्गीर्णत्वात् । मेघोऽपि सम्यगूर्ध्वं गतो भवति हि । "गिरिः—मेघनाम" ( निघं० १ । १० ) सदुपयोक्त्रे सुखप्रदः, दुरुपयोक्त्रे कदाचारिणे दुःखप्रदश्चेत्याशयः । अत्र 'मृगः' पदं नैघण्टुकमस्ति । 'मृगो न भीमः कुचरो गिरिष्ठाः' इति यास्कोद्धृतं वचनं द्वयोर्मन्त्रयो वर्ततेऽतोऽत्रोदाहरणस्थानमुभावपि मन्त्रौ स्तः ।

तत्रैको मन्त्रस्तदर्थश्च—

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा ॥
( ऋ० १ । १५४ । २ )

विष्णुः परमात्मा वीर्येण प्रस्तवते—प्रस्तूयते 'कर्मणि कर्तृप्रत्ययश्छान्दसः' मृग इव भीमो भयङ्करो गिरिष्ठाः पर्वतस्थायी पर्ववति—उत्पादविनाशपर्ववति जगति यस्तिष्ठति सः क्वायं न चरति तस्य विष्णोर्व्यापकत्वात् स सर्वत्र प्राप्तो-भवति हि यस्य खलूरुषु विस्तृतेषु त्रिषु विक्रमणेषु पदेषु सर्वाणि लोकलोकान्तरणि खल्वधिक्षियन्ति निवसन्ति ॥

द्वितीयमन्त्रस्तदर्थश्च—

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥
( ऋ० १० । १८० । २ )

कुचरः कुत्सितचरो वक्रगत्या चरणशीलो मृग इव भयङ्करो गिरिष्ठा मेघ-स्थायी सन् परस्या दिशः परावतो दूरदेशादपि त्वमिन्द्र विद्युद्देव ! उपयुक्तः सन्—आजगन्था—आगच्छसि सृकं सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं संशाय सम्यक् तीक्ष्णीकृत्य "पविर्वज्रनाम" ( निघं० २ । २० ) शत्रून् ताडय मृधः संग्रामान् विनुदस्व विक्षेपय ॥

तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्या-चक्षते तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह ॥ २० ॥

भा०—'तत्' वाक्यारम्भे । तत्पुनर्यानि नामानि प्राधान्येन स्तुतयो यासां देवतानां तथाभूतानां देवतानां नामजातं तत्समुदितं वर्णनं वा 'दैवतम्' इति माम्नाऽऽचक्षते कथयन्ति ह्याचार्याः प्राक्तना नैरुक्ता वैदिका विद्वांसः । तत्त्वग्रे व्याख्यास्यामो वयम् । अथेदानीं नैघण्टुकानि नामानि यान्येकार्थान्यनेकपदानि तथा नैगमानि नामानि यान्यनेकार्थान्येकपदानि त्विह प्रवर्तिष्यमाणेऽनन्तरेऽध्याये व्याख्यास्यामः । 'इहेह' इति द्विरुक्तिरध्यायसमाप्त्यर्था ॥

इति षष्ठः पादः ।

समाप्तश्च प्रथमोऽध्यायः ।

स्वामिब्रह्ममुनिकृते निरुक्तसम्मर्शे निरुक्तभाष्ये ।

---

## द्वितीयोऽध्यायः

### तत्र

### प्रथमः पादः

अथ निर्वचनम् ।

भा०—'अथ निर्वचनम्' अथेदानीं निर्वचनं प्रस्तूयते—प्रस्तुतं क्रियते, यदर्थमिदं निरुक्तं शास्त्रमुच्यते । निरुच्यते पृथक् पृथक् विभागश उच्यते नैघण्टुकादिपदं येन तद् विधानं प्रक्रियते—इति यावत् । पदे खलु प्रत्यक्षपरोक्षातिपरोक्षविभागा भवन्ति ते सर्वे निर्वचनविधानमपेक्षन्तेऽतः पूर्वं तत्प्रदर्श्यते ।

तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ *
स्यातां तथा तानि निर्ब्रूयात् ॥

भा०—तदिति वाक्यारम्भे । येषु पदेषूदात्तादिस्वरः प्रकृतिप्रत्ययसंयोगरूपः—संस्कारश्चोभौ तौ सङ्गतौ युक्तौ साक्षाद् भूतौ प्रत्यक्षं प्रदेशेन प्रविभक्तदेशभवेन गुणेन युक्तौ भवेतां तानि तु तथैव निर्ब्रूयाद् विश्लेषयेत् पृथक् पृथग् विभज्य कथयेत् । यथा "इह त्वष्टारमग्रियं विश्वरूपमुपह्वये" (ऋ० १ । १३ । १०) अत्र 'त्वष्टारम्' कृदन्तम्, 'अग्रियम्' तद्धितान्तम् 'विश्वरूपम्' समस्तं पदं स्वरसंस्काराभ्यां युक्तम् ।

अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत ।
केनचिद् वृत्तिसामान्येन ॥

भा०—अथ पुनरननुगतेऽर्थे शब्दतः साक्षादज्ञातेऽसङ्गतेऽर्थे प्रविभक्तदेशभवस्वरसंस्काररहिते विकारे पदेऽर्थनित्यः—अर्थो नित्यो यस्य यद्वा नित्यशब्दो नियतार्थोऽत्र, अर्थे नियतः—अर्थपरायणः, यथा पूर्वमपि "इन्द्रियनित्यं वचनमौदुम्बरायणः" (निरु० १ । १ । १) इन्द्रिये नियतं वचनम् । न हि वेदशब्दा अर्थहीनास्तथाऽर्थं संलक्ष्य पदं परीक्षेत—निर्ब्रूयात् केनचिद् वृत्तिसामान्येनार्थं स्पष्टयता प्रवृत्तिसामान्येन । यथा—"यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।" (ऋ० ५ । ३४ । ३) अत्र मन्त्रे 'ऊधस्'

---

* 'विकारेणान्वितौ' क्वचित् पाठः ।

रात्रिवाचकः "ऊधो रात्रिनाम" ( निघ० १ । ७ ) पशोः स्तनयुक्तं दुग्धाधान-मुच्यते । तस्य स्नेहनवृत्तिसामन्येन रात्रिरूधः, उक्तमूधस्तु निरुक्ते "स्नेहानु-प्रदानसामान्याद् रात्रिरप्यूध उच्यते ।" ( निरु० ६।१९ ) रात्रिः स्नेहमवश्यायं स्रावयति हि । अन्यच्च—"गोर्न पर्व विरदा तिरश्च" ( ऋ० १ । ६१ । १२ ) अत्र 'पर्व' शब्दः गोरङ्गवाचकः । पर्व भवति कालसन्धिः "भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम्" ( ऋ० १ । ९४ । ४ ) कालस्य सन्धिना सन्धिना सह । कालस्थं सन्धिं सन्धिममावास्यां पौर्णमासीं लक्षयित्वा यजेमहि । पर्व पृणातेर्वा प्रीणातेर्वाऽर्धमासपर्व····तत्प्रकृतीतरत्सन्धिसामान्यात् । अत्रापि 'गोः पर्व' सन्धिसामान्याद् गोरङ्गं पर्व, न तु कालपर्व ।

अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति यथार्थं विभक्तीः सन्नमयेत् ॥

भा०—अथ वृत्तिसामान्येऽविद्यमानेऽपि—अक्षरसामान्याद् वर्णसामान्यात् खलु निर्ब्रूयात्—विश्लेषयेद् विभजेत पदम् । अक्षरं द्वित्रिवर्णयुक्तोऽपि स्वरः—त, तत् * । वर्णस्त्वेको वर्णः स्वरो वा व्यञ्जनं वा 'इ, उ, त्, ज् ।' न खलु न निर्ब्रूयात्—अवश्यं निर्ब्रूयात् । न संस्कारमाद्रियेत—अनन्वितेऽर्थेऽप्रादेशिके विकारे संस्कारादरस्य कः प्रसङ्गः, तदा तु संस्कारमन्तरेण हि निर्ब्रूयात् संस्कारस्य चिन्तां न कुर्यात् । विशिष्टाशयवत्यो हि वृत्तयः पदवृत्तयः पदप्रवृत्तयो भवन्ति तस्माद् यथार्थं यथाशयं यथाभिप्रायं विभक्तीः पदविभक्तीः पदविभागान् सन्नमयेत् सङ्कल्पयेत् । दुर्गस्कन्दादिभाष्यकारैः "विभक्तीः" इति शब्दस्यार्थः 'प्रथमा-द्वितीयाद्या विभक्तीः' कृतः स न युक्तः, तत्तु व्याकरणस्य प्रयोजनं 'विभक्तिं कुर्वन्ति' इदं तु निरुक्तं शास्त्रं निर्वचनविधानं ज्ञापयति पदविभागान्, इति लक्ष्यम् । निर्वचनं हि पदविभागकरणं यथार्थं तदुक्तं हि । उदाहरणानि निरुक्तकारः स्वय-मनन्तरं प्रदर्शयति ।

प्रत्तमवत्तमिति धात्वादी एव शिष्येते ॥

भा०—'प्रत्तम्' अत्र "डुदाञ् दाने" ( जुहो० ) अग्रे क्तः प्रत्ययस्तत्र 'दा' इत्यस्य प्रपूर्वस्य धातोरादिभागः 'द्' शिष्टः 'अवत्तम्'—अत्र "दो अवखण्डने" ( दिवा० ) इत्यस्य अवपूर्वस्य धातोरादिभागः 'द्' शिष्टः, इति निरुक्तशैल्यां वर्णसामान्यस्योदाहरणम् । व्याकरणरीत्यां तु "अच उपसर्गात् तः" ( अष्टा०

* यथा गायत्री चतुर्विंशत्यक्षरा—तत्र 'तत्, स, वि, तुर्' एकैकाक्षराणि ।

७ । ४ । ४७ । ) "ब्रह्मणे ददाति ब्रह्मणे प्रत्तम्" ( गो० पू० २ । २१ ) अङ्गा-दङ्गादवत्तानां करत" ( यजु० २१ । ४३ )

अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति ॥

भा०—"अस भुवि" ( अदादि० ) धातोर्गुणवृद्धिनिषेधस्थानेषु खल्वादिलोपोऽकारस्य लोपः 'स्तः, सन्ति ।' इति निरुक्तशैल्यां प्रत्ययात् पूर्वस्यैकदेशवर्णसामान्यस्योदाहरणम् । व्याकरणरीत्यां तु "श्नसोरल्लोपः" ( अष्टा० ६ । ४ । १११ ) "परि द्यावापृथिवी····ते महिमानं परि ष्टः" ( ऋ० १ । ६१ । ८ ) "सहस्रं यस्य रातयं उत सन्ति भूयसीः" ( ऋ० १ । ११ । ८ )

अथाप्यन्तलोपो भवति गत्वा गतमिति ॥

भा०—अथ च धातोरन्तलोपो भवति झलि गुणवृद्ध्योर्निवृत्तिस्थाने यथा 'गत्वा, गतम्' 'गम्—क्त्वा, 'गम्—क्तः' प्रत्ययः । इति निरुक्तशैल्यामन्तैकदेशलोपः 'ग' इत्यवशिष्टाक्षरसामान्यस्योदाहरणं । व्याकरणे तु "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" ( अष्टा० ६ । ४ । ३७ ) ॥ "दिवस्पृष्ठं स्वर्गत्वा" ( यजु० १७ । ६५ ) ॥

अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति ॥

भा०—अथ च—उपधालोपो भवति 'जग्मतुः, जग्मुः' निवृत्तिस्थाने । गम्—अतुस्, गम्—उस्' लिटि उपधाभूतस्य 'अ' इत्यस्य लोपो निरुक्तशैल्यां मध्यमैकदेशस्य लोपो द्विवर्णसामान्यस्योदाहरणम् । व्याकरणरीत्यां तु "गमहनजनखनघसां लोपः क्ङित्यनङि" ( अष्टा० ६ । ४ । ९८ ) ॥ "····अश्विना····मादयेते····जग्मतु विंप्रस्य····गृहम् ( ऋ० १०।४०।१४ )····समुद्रमवजग्मुरापः" ( ऋ० १ । ३२ । २ ) ॥

अथाप्युपधाविकारो भवति राजा दण्डीति ॥

भा०—अथ च—उपधाया विकारः परिणामः परिवर्तनं भवति, यथा 'राजा, दण्डी ।' 'राजन्—सु' 'दण्डिन्—सु' उभयत्रोपधादीर्घत्वं भवति निरुक्तशैल्यामेकदेशविकृतमनन्यवदित्यन्याक्षरसामान्यस्योदाहरणम् । व्याकरणरीत्यां तु "सर्वनामस्थाने चासम्बुद्धौ" ( अष्टा० ६ । ४ । ८ ) तथा "इन्हन्पूषार्यम्णां शौ" ( अष्टा० ६ । ४ । १२ ) ॥ "अबुध्ने राजा वरुणो" ( ऋ० १ । २४ । ७ ) "पुत्रा दण्डिनः शतम्" ( शत० १३ । ४ । २ । ५ ) ॥

अथापि वर्णलोपो भवति तत्त्वा यामि-इति ॥

भा०—अथ च वर्णलोपो भवति 'तत्त्वा यामि' यामि—याचामि चकार-लोपात्। 'याच्-आमि—या आमि—यामि' पुनरेकादेशो दीर्घः। 'यामि'—इति छान्दसः प्रयोगः "यामि याच्ञाकर्मा" ( निघं० ३ । १९ ) अत्रोदाहरण-प्रदर्शनार्थः पाठः। इति निरुक्तशैल्यामेकादेशोऽक्षरसामान्यस्योदाहरणम्।

वक्तव्यम्—स्कन्दमहेश्वरभाष्ये 'तत्त्वा यामि' इति पाठस्य 'यामि' इति न लक्ष्यीकृतं तत्रोक्तं यत् 'याचामि' इति मत्वा त्वपव्याख्यानम् 'यामि' इति याच्ञाकर्मसु पठितं हि। तत्र भाष्ये 'तत्त्वा' इति पाठः 'तत्वा' इति मतः। तत्र "·····ऊदितो वा" (अष्टा० ७।२।४४) इत्याश्रित्य विकल्पेन 'इट्' इति कृते 'तनित्वा' प्रयोगः पुनश्च 'इट्' इत्यस्य इकारवर्णलोपे 'तन् त्वा' पुनः 'तनोत्यादीनामित्यनेन नकारलोपे च 'तत्वा' साधितः। तत्रेत्थं कल्पनायाः किं फलम्? अनिट् पक्षेऽपि सिद्धं हि स्वरूपं समानमर्थोऽपि समान एव। 'तन् त्वा'—'तत्वा' इटो लोपे यद्वा विकल्पे, को भेदः, कल्पनागौरवदोष एव। इटं विधाय पुनर्लोपः क्रियते—इति तु वक्रमार्गः। पदं चैतल्लौकिकं मतं लोके तु स्वतः सिद्धमेव विकल्पपक्षे। वेदे तु पदपाठः 'तत्। त्वा' इति द्वे पदे स्तः। "तत्त्वा यामि" ( ऋ० १।२४।११,८। ३९) द्वयोः स्थलयोः। तत्र सायणभाष्यमपि तथैव "तत्—आयुः, तत्—सुवीर्यं यामि—याचामि याचे 'च' शब्दलोपश्छन्दसः। 'तत्वा' इति लौकिकं मत्वा तत्सा-धनमिटो लोपकल्पनया न युक्तं न ह्येष समाचारो यदकल्पितेन सिद्धे सति कार्ये कल्पितं प्रयुञ्जीत। पुनश्च 'तत्वा' इति तन धातोः कल्पितस्य प्रयोगस्य 'यामि' इति पदेन साकं सहयोगः सहपाठो वा निरर्थकोऽसम्बद्ध एव। अपि चात्र निरुक्ते नैघण्टुकानां नैगमानां पदानां निर्वचनं ज्ञाप्यते यथा च तस्य प्रतिज्ञा, पुनः प्रतिज्ञातपदानि विहायाप्रतिज्ञातस्य कल्पना न युक्ता। पं० चन्द्रमणिमहोदयेन 'त्वा' इत्यत्र 'त्वाम्' इत्यस्य विभक्तिवर्णस्य लोपो मतः सोऽपि न युक्तः। तत्र लोपो नास्ति किन्तु स तु—आदेशः पूर्णोऽन्वादेशः 'त्वा, मा, वाम् नौ, वस्, नस्' इति, लोके प्रयुज्यते हि पुनः 'यामि' इत्यनेन सह कः सम्बन्धः किं 'यामि' पदं विहाय 'त्वा' इति प्रयोगो न भविष्यति? 'यामि' इत्यस्य पाठो भवतु याच्ञाकर्मसु, अत्र तस्य वर्णलोपप्रदर्शने न हानिः। अन्यच्चोदाहरणम् "ईमहे याच्ञाकर्मा" ( निघं० ३ । १९ ) 'वीमहे' इत्यस्य वर्णलोपेन। "मन्महे याच्ञाकर्मा" ( निघं० ३ । १९ ) 'मन्दमहे' इत्यस्य वर्णलोपेन ॥

अथापि द्विवर्णलोपस्तृच इति ॥

भा०—अथ च द्वयोर्वर्णयोर्लोपो भवति। यथा 'तृचः'—'त्रि—ऋचः' तिसृणा-

मृचां समाहारः 'त्रि' इत्यस्य 'इकाररेफयोर्द्वयोर्वर्णयोर्लोपो निरुक्तशैल्याम्, व्याकरणरीत्यां तु "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि" (अष्टा० ६ । १ । ३७) वार्तिकेन । 'त्रि' इत्यस्य सम्प्रसारणं भवति 'ऋचि' इत्युत्तरपदे छन्दसि तृचश्च ऋकारलोपः "तृचो भवति त्रये वा इमे लोकाः" ( ऐ० आ० १ । ३ । ८ ) ॥

अथापि व्यापत्ति * र्भवति ज्योतिर्घनो विन्दुर्वाट्य † इति ॥

भा०—अथ च वर्णव्यापत्तिर्भवति 'ज्योतिः'–"द्युत् दीप्तौ" ( भ्वादि० ) दकारस्य जकारः । 'घनः' इति 'हन' इति हकारस्य घकारः । 'विन्दुः' इति 'भिदिर् विदारणे' इत्यस्य भकारस्य बकारः । 'वाट्यः' "भट भृतौ" इति भकारस्य वकारः । इति निरुक्तशैल्यां वर्णव्यापत्तिरन्यवर्णस्य स्थानेऽन्यवर्णापन्नता । व्याकरणरीत्यां तु "द्युतेरिसिन्नादेश्च जः" ( उणा० २ । १११ ) इति ज्योतिः । "मूर्तौ घनः" ( अष्टा० ३ । ३ । ७७ ) इति घनः । विन्दतेरुः" ( उणा० १ । १० ) इति विन्दुः "भट भृतौ" ( भ्वादि ) ततः "ऋहलोर्ण्यत्" ( अष्टा० ३ । १ । १२४ ) इति वाट्यः । "नित्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते" ( ऋ० १ । ३६ । १९ ) "अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः" ( ऋ० १ । ४ । ८ ) "यत्समुद्रो अभ्यक्रन्दत्पर्जन्यो विद्युता सह । ततो हिरण्ययो विन्दुस्ततो दर्भो अजायत ॥" ( अथर्व० १९ । ३० । ५ ) ॥

अथाप्याद्यन्तविपर्ययो भवति, स्तोका रज्जुः सिकतास्तर्कििति ॥ १ ॥

भा०—अथ च–आद्यन्तयोर्विपर्ययः परस्परं परिवर्तनं भवति । यथा–स्तोकाः "श्च्युतिर् क्षरणे" ( भ्वादि० ) श्च्योतन्ति ये ते स्तोकाः 'श्च्युत्' अन्तिमस्तकारश्चकारस्थाने पूर्वश्चकारः कुत्वमापन्नस्तकारस्थाने गतः "स्तोकान्तिक:...." (अष्टा० २।१।३८) इति सूत्रे निपातनात् । 'रज्जुः' "सृज विसर्गे" ( दिवादि० ) गुणे कृते 'सर्ज' सकाररेफयोर्विपर्ययः–रस्–ज 'पुनर्जश्त्वे' रज–उश्च प्रत्ययः 'रज्जुः' व्याकरणरीत्यां तु "सृजेरसुम् च" ( उणा० १ । १५ ) 'सिकताः' "कस विकसने" ( भ्वादि० ) सकारककारयोर्विपर्ययः । अकारस्य 'इकारः'

* दुर्गभाष्ये मूलपाठः 'आदिविपर्ययः' स न साधुः, भ्रान्त्या स पाठः । स्कन्दमहेश्वरभाष्ये मूलपाठः 'आदि व्यापत्तिः' ।

† एतद्वचनं निरुक्ते "अथाप्याद्यन्तविपर्ययोः...." इत्यस्य पश्चात् "अथाप्यन्तव्यापत्तिः" इत्स्य पूर्वं पठितव्यम् ॥

विकसिता भवन्तीति सिकताः—वालुकाः । बाहुलकादौणादिकः कः प्रत्ययः । 'तर्कुः' "कृती छेदने" ( तुदा० ) ईकारस्यानुबन्धस्य लोपे सति 'कृत्' गुणे च 'कर्त्' 'क्' इत्यस्य स्थाने 'त्'—अर्—तर् तस्थाने 'क्' तर्क् सति प्रत्यये 'तर्कु' इति निरुक्तशैल्याम् व्याकरणरीत्यां तु "कृतेराद्यन्तविपर्ययश्च" (उणा० १। १६ ) । "तुभ्यं स्तोका घृतश्च्युतो अग्ने" ( ऋ० ३ । २१ । ३ ) "या शीर्षण्या रशना रज्जुरस्या" ( ऋ० १ । १६२ । ८ ) "युवोः सिकता विषुरूपाणि सव्रता" ( ऋ० ६ । ७० । ३ ) ।

अथाप्यन्तव्यापत्तिर्भवति, ओघो मेघो नाधो गाधो वधूर्मध्विति ॥

भा०—अथ च—अन्तेऽन्यस्य स्थानेऽन्यो वर्ण आपन्नो भवति । यथा 'ओघः' "वह प्रापणे" ( भ्वादि० ) हकारस्य घकारस्तत्सन्नियोगेन वकारस्य सम्प्रसारणं च । 'मेघः' "मिह सेचने" ( भ्वादि० ) हकारस्य घकारः, इति निरुक्तशैल्यां व्याकरणरीत्यां तु । "न्यङ्क्वादीनां च" ( अष्टा० ७ । ३ । ५३ ) इति कुत्वम् । 'नाधः' "णह बन्धने" ( दिवा० ) हकारस्य धकारः, इति निरुक्तशैल्याम्, व्याकरणरीत्यां तु "नहो धः" ( अष्टा० ८ । ३ । ३४ ) घञि । 'गाधः' "गाहू विलोडने" ( भ्वादि० ) हकारस्य धकारः तथा 'वधूः' "वह प्रापणे" (भ्वादि०) ऊह्यते या सा वधूः, हकारस्य धकारः निरुक्तशैल्याम् । व्याकरणे तु "वहेर्धश्च" ( उणा० १ । ८३ ) ऊः प्रत्ययः । 'मधु' "मद तृप्तौ" ( चुरादि० ) दकारस्य धकारः, इति निरुक्तशैल्याम्, व्याकरणे तु "मनधातोर्नकारस्य धकारः । "मनिजनां····धतश्च" ( उणा० १ । १८ ) उः प्रत्ययः । "ओघ इव शापात् घृणुदारू सपत्ना" ( शांख्या अ० १२ । ३ । ६ ) "वृषा वां मेघो वृषणा पीपाय" ( ऋ० १ । १८१ । ८ ) "अशीमहि गाधमुत प्रतिष्ठाम्" ( ऋ० ५ । ४७ । ७ ) "वधूरियं पतिमिच्छन्त्येति" ( ऋ० ५ । ३७ । ३ ) "अश्विना पिबतं मधु" ( ऋ० १ । १५ । ११ ) ॥

अथापि वर्णोपजन आस्थद् द्वारो भरूजेति ॥

भा०—अथ च—वर्णस्योपजनः—आगमो वृद्धिर्भवति, यथा 'आस्थत्', असु क्षेपणे ( दिवादि० ) लुङि थकारस्यागमः, इति निरुक्तशैल्याम्, व्याकरणे तु "अस्यतिवक्तिख्यातिभ्योऽङ्" ( अष्टा० ३ । १ । ५२ ) अस्यतेस्थुक्" (अष्टा० ७ । ४ । १७ ) इति 'थुक्' आगमः । 'द्वारः' वारयतीति वारः, अत्र दकारोपजनेन द्वारः । 'भरूजा' "भ्रजी भर्जने" ( भ्वादि० ) गुणे कृते 'भर्जा' इत्यस्य

'ऊ' उपजनः । "गुरोश्च हलः" ( अष्टा० ३ । ३ । १०३ ) इत्येनेन 'अङ्'स्त्रीलिङ्गे । "आस्थन्मृधो अभयं ते अभूत्" ( अथर्व० १३ । १ । १५ ) "द्वारो देवी हिरण्ययीः" ( ऋ० ९ । ५ । ५ ) "भरूजि पुनर्वो यन्तु यातवः" ( अथर्व० २ । २४ । ८ ) ।

अत्र वर्णागमादिविषये वर्ण्यते—

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥"

एषां वर्णागमादीनां यद्यपि व्याकरणे प्रवृत्तिरस्ति परन्तु न सार्वदेशिकी किन्त्वल्पदेशीया, यत्र साक्षात् स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । परन्तु निरुक्तशास्त्रे तु सार्वदेशिकी साक्षाच्चासाक्षाच्च सर्वत्रापि । अतोऽत्र निर्वचनप्रसङ्गे वक्तव्यमेतद् युक्तमस्ति । पुनश्च ।

तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति ॥

भा०—तत्र स्वरात् खलु नान्तरं प्राप्ताः स्वरसमीपा अन्तःस्थाः 'य, र, ल, व' इति वर्णास्तेऽन्तः—अन्तर्गता यस्मिन् धातौ स 'यज, वच, वद, वप, वश, वस, वेञ्, व्येञ्, स्वप्' प्रभृतिर्यो भवति तत् खलु द्विस्वभावानां द्विमूलानां स्थानं प्रदिशन्ति प्रविभज्य कथयन्ति । वैयाकरणपरिभाषायां सम्प्रसारणासम्प्रसारणभेदद्वयगतानां क्ङित्सु चाक्ङित्सु च प्रत्ययेषु । इष्टम्, इष्टवान्, इष्ट्वा-यजते, यष्टा, यष्टव्यम्, याजकः । उक्तम्, उक्तवान्, उक्त्वा, उक्तिः, वक्ति, वक्ता, वक्तव्यम्, वाचकः । उप्तम्, उप्तवान्, उप्त्वा, उप्तिः—वपते वप्ता, वप्तव्यम्, वापकः । उष्टम्, उष्टवान्, उष्ट्वा, उष्टिः—वष्टा, वष्टव्यम्, वाशकः । उषितम्, उषित्वा, उषितिः—वसति, वसिता, वसितव्यम्, वासकः । उतम्, उतवान्,—वयति, उपवीतम् । सुप्तम्—स्वप्ता । इत्यादयः प्रयोगा द्विप्रकृतीनां भवन्ति ।

तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत् ॥

भा०—तत्रोभयत्र सम्प्रसारणप्रकृतावसम्प्रसारणप्रकृतौ सिद्धायां खल्वेकस्यां प्रकृत्यां परन्त्वर्थेऽनुपपन्नायामसम्भवन्त्यां त्वितरया तद्भिन्नया यथार्थया प्रकृत्या तूपपादयितुमिच्छेद् यतेत पूरयेत् सम्पादयेत् । सम्प्रसारणप्रकृत्याऽप्यसम्प्रसारणे स्थानेऽसम्प्रसारणप्रकृत्याऽपि च सम्प्रसारणस्थाने, यया कयाऽपि सम्भवेत्, न तु लोकभाषावत् कार्ये हि प्रकृतिमाश्रयेत् ॥

तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति ॥

भा०—तत्रापि द्विप्रकृतिकेषु सम्प्रसारणविषयकेषु धातुषु खल्वेके—केचनाल्पसम्प्रसारणनिष्पत्तयः—अल्पा निष्पत्तयः सम्प्रसारणाभिव्यक्तयो येषां ते तथा भवन्ति प्रयोगाः। तद्यथा—ऊतिः, मृदुः, पृथुः, पृषतः, कुणारुम्। तत्र "म्रद मर्दने" (भ्वादि०) तस्य 'मृदुः' इत्येव "प्रथ प्रख्याने" (भ्वादि०) तस्य 'पृथुः' इत्येव तथा 'पृथिवी' विस्तारार्थे "प्रथनात् पृथिवी" इति विधानादप्युत्प्रेक्ष्यम्। "प्रुष स्नेहनसेवनपूरणेषु" (क्र्यादि०) तस्य 'पृषतः' इत्येव "प्रुष दाहे" (भ्वादि०) इत्यस्य दुर्गाचार्यैः। "प्रच्छ ज्ञीप्सायाम् (तुदादि०) इत्यस्य स्कन्दमहेश्वरभाष्ये। "क्वण शब्दे" (भ्वादि०) इत्यस्य 'कुणारुम्' इत्येव "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" (अष्टा० ६। ४। २०) इत्यनेन 'ऊठ्' तेन 'ऊतिः' क्तिनि। "प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च—उः" (उणा० १। २८) पृथुः, मृदुः। 'पृषतः, कुणारुम्' एतावौणादिकप्रत्ययान्तौ बाहुलकात् ॥

अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति ॥

भा०—अपि च लोकभाषायां प्रसिद्धेभ्यो धातुभ्यो नैगमाश्छान्दसा वैदिकाः शब्दाः कृदन्ताः प्रयोगा भाष्यन्तेऽनूद्यन्ते स्पष्टीक्रियन्ते निरुच्यन्ते, यथा—'दमूनाः, क्षेत्रसाधाः'। "दम उपशमे" (दिवादि०) तत्प्रयोगा भाषायां दाम्यति, दान्तः, दमः, इन्द्रियदमनम्। एवं "राधसाध संसिद्धौ" (स्वादि०) तत्प्रयोगा भाषायां साध्नोति, साध्यते, साधनम्, साधुः। दमधातोर्वेदे 'दमूनाः' "दमेरूनसिः—छन्दसि" (उणा० ४। २३५) "जुष्टो दमूना अतिथिः····अग्ने" (ऋ० ५। ४। ५) अग्निर्दमूनाः। "साधधातोर्वेदे 'क्षेत्रसाधाः" क्षेत्रस्य साधाः। स च 'असुन्' प्रत्ययान्तः। "अग्निं वः पूर्व्यं गिरा देवमीळे वसूनाम्। सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥" (ऋ० ८। ३१। १४) ॥

अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति ॥

भा०—अथ च छान्दसेभ्यो धातुभ्यो भाषिका कृतः—कृदन्ताः शब्दा भाष्यन्ते। यथा—उष्णम्, घृतम्। "उष दाहे" (भ्वादि०) "घृ क्षरणदीप्त्योः" (जुहोत्यादि०) "घृ—इत्यादयश्छान्दसा एकादश" इति (पाणिनीयधातुपाठे) "उष" धातुरपि छान्दसो निरुक्ते निदर्शनात् तथाऽऽपिशलादौ कथनात्। वेदे तु साक्षात् प्रयोगः क्रियाभिधानाय "प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः"

( यजु० १ । ७ ) "आ त्वा जिघर्मि" ( यजु० ११ । २३ ) तथा "जिघर्म्यग्निं हविषा घृतेन" ( ऋ० २ । १० । ४ ) लोके तु पदम्—उष्णं जलं दुग्धमित्यादि तथा 'घृतम्' ॥

अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु । शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते । कम्बोजाः कम्बलभोजाः कमनीयभोजा वा । कम्बलः कमनीयो भवति । विकारमस्यार्येषु भाषन्ते शव इति । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु ॥

भा०—अन्यच्चैतदपि ज्ञातव्यं यदेकेषु केषुचिद् देशेषु प्रकृतयो धातव आख्यातानि वा भाष्यन्ते प्रयुज्यन्तेऽथैकेषु केषुचिच्च देशेषु विकृतयो नाम पदानि भाष्यन्ते प्रयुज्यन्ते । यथा—'शवति' आख्यातं पदं यद्वा 'शव' प्रकृतिरूपं धातुमात्रं प्रत्ययरहितं गत्यर्थे कम्बोजेषु—कश्मीरसमीपेषु हिमवत्प्रदेशेषु भाष्यते 'शवति—गच्छति' यद्वा प्रत्ययरहितं 'शव'—धातुरेवापि गमनार्थं भाष्यते, अस्य शव धातोर्विकारं नामीभूतं 'शवः' इत्येव—आर्येषु देशेषु प्रदेशेषु भाषन्ते जनाः । यद्वा शवतिः 'शव' धातुर्गत्यर्थे गतिमते गमनशीलाय यो गच्छति गतिक्रियां विदधाति तस्मै चेतनाय प्रयुज्यते कम्बोजेषु परन्तु 'शवः' इति विकारं न तु गतिमन्तं किन्तु गतिरहितं निष्क्रियमचेतनं विगतचेतनत्वं मृतमार्येषु भाषन्ते । एषाऽन्तिमा कल्पना दुर्गाचार्यस्कन्दस्वामिभ्यां कृता सा खल्पुरिष्टात्तु प्रिया प्रतिभाति, परन्तु नास्मभ्यं रोचते यतः सैषाऽऽचार्यशैल्याः—विपरीताऽस्ति । आचार्यस्तु कथयति कुत्रचित् प्रकृतयः—धातवः—आख्याताः प्रयुज्यन्ते कुत्रचिद् विकृतयः—आख्याततो निष्पन्नानि नामानि—इति प्रकृतिश्च विकृतिश्च शब्दौ परस्परं सापेक्षौ स्तः । तत्र व्याख्यायां विकारशब्दस्य प्रकृतिसापक्षत्वेन भवितव्यम् । यथाऽऽचार्योऽग्रे प्रदर्शयति "दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु । दातिर्द्यति लुनाति प्रकृतिः दात्रं तु नाम विकृतिः । तद्वदुपर्यपि विकारो विकृतिर्नाम । वेदे तु शवतिरुभयविध उपलभ्यते प्रकृतिरूपे विकृतरूपे च, यथा—शवतिर्गतिकर्मा" ( निघं० २।१४ ) "आसस्राणासः शवसानमच्छेन्द्रं"···( ऋ० ६।३७।३ ) "शवसानम्···अभिवक्षायमानम्" ( निरु० १० । ३ ) "सद्यश्चिद्यः शवसा पञ्च कृष्टीः" ( ऋ० १० । १७८ । ३ ) "सद्योऽपि यो शवसा बलेन" ( निरु० १० । २८ ) । आचार्यः प्रसङ्गतः 'कम्बोजाः' शब्दस्यापि निर्वचनं करोति, कम्बोजाः—कम्बलभोजाः, तेषां देशस्य हिमप्रधानत्वाद् हिमवत्त्वाद्वा कम्बलानुपभुञ्जते तथा कम्बल एव भोजो भोगसाधनं येषां ते कम्बलभोजाः कम्बलस्य व्यापरेण भोगमनुतिष्ठन्ति ।

एवं लकोपेन भस्य बकारश्चापत्त्या कम्बोजाः । यद्वा कमनीयभोजाः कमनीयमिति-कम्—कं च सुखं भवति हि सुखं कमनीयं भवति कं सुखं कमनीयं कमनीयानि धातामादीनि विविधानि सुफलानि भुञ्जते तस्मात् कम्बोजाः ।

एवमेकपदानि निर्ब्रूयात् ।

भा०—एवम्प्रकारेणोक्तप्रकारेण वर्णविकारादिनैगमदेशभाषाव्यवस्थाभिरेकपदानि केवलपदान्यमिश्रितपदानि निर्ब्रूयात्—विश्लिष्य स्पष्टं कुर्यात् ।

अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् ॥

भा०—अथ च तद्धितेषु समासेषूभयेष्वप्येकपर्वस्वेकग्रन्थिषु चानेकपर्वस्वनेकग्रन्थिषु । तद्धितेष्वप्येकानेकग्रन्थयो भवन्ति समासेष्वप्येकानेकग्रन्थयो भवन्ति । तद्धिते खलु प्रकृतितो भवत्येकः प्रत्ययस्तयोः प्रकृतिप्रत्ययोरेकं पर्व ग्रन्थिः, पुनस्तत्प्रत्ययान्ताद् द्वितीयः प्रत्यय इति द्वितीयं पर्व ग्रन्थिः एवमग्रेऽग्रे प्रत्ययमाला प्रवर्तते । तथैव समासे द्वयोः पदयोः समासे सति भवत्येकं पर्व ग्रन्थिः, पुनस्तस्य समस्तस्य पदस्याप्यन्येन पदेन सह समासो भवति, तस्मिन् समस्तपदे द्वितीयं पर्व ग्रन्थिः । एवमग्रेऽग्रे सति समासेऽपरमपरं पर्वप्रवर्तनमपि भवति । पूर्वं पूर्वं तथा—अपरमपरमिति विशेषणं पर्व च पदं चापेक्ष्योक्तम् । यत्रानेकपर्वप्रसङ्गस्तत्र पूर्वं पर्व प्रथमं प्रविभज्य निर्ब्रूयात्, अपरं पर्व पश्चान्निर्ब्रूयात् । एवं पर्वणि च पूर्वं पदं प्रथमं प्रविभज्य निर्ब्रूयात्, अपरं पदं पश्चान्निर्ब्रूयात् । दुर्गाचार्यस्कन्दस्वामिभ्यामन्यथा कल्पितोऽर्थः । उदाहरणानि तु निरुक्तकारः स्वयमुदाहरति ॥

दण्ड्यः * पुरुषो दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा । दण्डो ददतेर्धारयतिकर्मणः 'अक्रूरो ददते मणिम्,' इत्यभिभाषन्ते । दमनादित्यौपमन्यवः । दण्डमस्याकर्षतेति गर्हायाम् ॥

भा०—यथा—'दण्ड्यः पुरुषः' इत्येकपर्वकस्य तद्धितस्योदाहरणम् । 'दण्ड्यः' तद्धितः प्रयोगः, तस्य पुरुषोऽभिधेयः । तद्धितार्थं प्रदर्शयति 'दण्डमर्हति दीक्षायां यद्वा दण्डेन सम्पद्यते—इति दण्ड्यः । व्याकरणे "तदर्हति—दण्डादिभ्यो यः" ( अष्टा० ५ । १ । ६३, ६६ ) अर्हत्यर्थे 'यः' प्रत्ययः । दण्डेन धनदण्डेन

* दण्ड्यः (जैमिनीय ब्राह्मणे १४५) ।

सम्पद्यते—सम्पत्स्यते पापाद् विमुक्तो भविष्यति साधुत्वं प्राप्स्यति । व्याकरणे "छन्दसि च" ( अष्टा० ५ । १ । ६७ ) इत्यन्यार्थेऽपि यः प्रत्ययः "सम्पादिनि" ( अष्टा० ५ । १ । ९९ ) सम्पादिन्यर्थेऽपि यः प्रत्ययः । दण्डशब्दस्य निर्वचनं क्रियते 'दण्डः' इति ददधातोर्धारणार्थस्य प्रयोगः 'दद' धातुर्धारणार्थे प्रयुज्यतेऽत्र । ब्रवीति ह्याचार्यः "अक्रूरो ददते मणिम्" अक्रूरो नाम राजा कृष्णवंश्याधिपतिः स्यमन्तकं मणिं शिरसि ददते धारयति—धारयति स्म इति—अभिभाषन्ते—इतिवृत्तप्रसिद्धिकराः, 'अपिभाषन्ते ( स्कन्दमहेश्वरभाष्ये पाठः ) एवं लोकेऽप्युदाहरणमुपलभ्यते दद धातोर्धारणार्थे' वेदे तु वर्तते हि धारणार्थे ददधातोः प्रयोगः "विश्वे देवाः पुष्करे त्वा ददन्त" ( ऋ० ७ । ३३ । ११ ) तत्र निरुक्तमपि "सर्वे देवाः पुष्करे त्वा अधारयन्त" ( निरु० ५ । १४ ) तथा "चतुरश्चिद् ददमानाद् बिभीयाद्" ( ऋ० १ । ४१ । ९ ) अत्र निरुक्तं च "चतुरोऽक्षान् धारयतः" ( निरु० ३ । १६ ) औपमन्यव आचार्यस्तु दमनाद् दमनहेतोर्दण्डं दमधातो र्मन्यते । यथा चौणादौ "अमन्ताड्डः" ( उणा० १ । ११४ ) दण्डेनापराधी खलूपरतोऽपराधाद् भवति । राजनयेन यो दण्डं प्राप्तो दण्डदानाय न्यायाधीशेन घोषितः सोऽपि दण्ड्यः, तमभिलक्ष्योच्यन्ते हि न्यायाधीशेन दण्डधाराः ! दण्डमस्याकर्षत यूयं दण्डं पातयत, इत्यत्र निन्दायां 'दण्ड्यः' शब्दः ॥

कक्ष्या रज्जुरश्वस्य । कक्षं सेवते । कक्षो गाहतेः क्स इति नामकरणः । ख्यातेर्वाऽनर्थकोऽभ्यासः किमस्मिन् ख्यानमिति । कषतेर्वा तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य ॥ २ ॥

भा०—तद्धितस्य द्वितीयमुदाहरणं विशिष्टनिवचनार्थम् । 'कक्ष्या' इति तद्धितप्रत्ययान्तः प्रयोगः । 'अश्वस्य रज्जुः' इत्यभिधेयवचनम् । या रज्जुरश्वस्य बन्धनी—'अश्वः कक्षं सेवते' इति तद्धितार्थः । कक्षं सेवते—कक्षमाश्रयति कक्षे भवत्येव पदार्थः कक्षं सेवते—आश्रयति, यथा गृहे भवन्नेव जनो गृहं सेवते—आश्रयति । तद्वद् रज्जुः कक्षे भवन्ती सती कक्षं सेवते—आश्रयति । अतः "तत्र भवः" ( अष्टा० ४ । ३ । ५३ ) कक्षं निर्मवीति,—'कक्षः' "गाहू विलोडने" ( भ्वादि० ) ततः 'क्स' नामकरणः नामवाचकत्वसाधनभूतः प्रत्ययः । कक्षो बाहुमूलम्, बाहुमूलमध्यं भवति विलोडनं दध्यादिकस्य, यद्वा 'कक्षः' ख्या धातोः स्याद्, तदा कक्षे 'क' अभ्यासोऽनर्थकोऽनिमित्तकः । किं ख्यानमस्मिन्—इति 'वा' इति—उत्प्रेक्षणम् । 'क' इति—किमः स्थाने, किं ख्यानं न किमपि

ख्यानमस्मिन् गुप्तत्वादशुद्धत्वात् तत्र ख्यानं दर्शनं कथमीयं वा न किमपि। अथवा "कष धातोः क्से प्रत्यये सति कक्षः। बाहुभ्यां कार्यविधाने बाह्वोश्चालने सति कष्यते घृष्यते हि कक्षः। तत्सामान्यान्मनुष्यकक्षः 'तत्' शब्देन धात्वर्थो गृह्यते—गाहनाल्पख्यानकषणधर्मसामान्यात् खलु मनुष्यकक्षः। नदीमूले पर्वत-तले वनवीथ्यां च कक्षशब्दः प्राधान्येन प्रयुज्यते तत्र गाहनाल्पख्यानकषणानि लक्ष्यन्ते। तद्धर्मसामान्यान्मनुष्यकक्षः। मनुष्यस्य कक्षो बाहुमूलं तस्य बाहुमूल-सामान्यादश्वस्यापि जङ्घामूलं कक्षः। तस्मात् कक्ष्या रज्जुरश्वस्य, तथा च वेदेऽपि—"इयं मतिः कक्ष्याश्वेव वाजिना" ( ऋ० ७ । १०४ । ६ ) ॥

राज्ञः पुरुषो राजपुरुषः। राजा राजतेः। पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा। पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य—"यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥" ( तै० आरण्य० १० । १० । २३ ) इत्यपि निगमो भवति ॥

भा०—समासस्योदाहरणं दीयते—'राज्ञः पुरुषः' इति समासार्थः, 'राज-पुरुषः' इति तूत्तरपदप्रधानः षष्ठीतत्पुरुषः समासः, राजसम्बन्धी पुरुषोऽभि-धेयः। स चैकपर्वकः समासः। "राजृ दीप्तौ" (भ्वादि०) ततः "कनिन् युवृषि-तक्षिराजि····" ( उणा० १ । १५६ ) इति कनिन् प्रत्ययः। राजते प्रकाशते शासनगुणैः स राजा, पुरुषस्तु प्रसिद्ध एव, तथापि व्यापकनिरुक्तिः क्रियते पुरुषः पुरिषादः—पुरि शरीरे सीदति विशतीति पुरुषः 'पुरि' इत्युपपदे सद धातोः 'डः' प्रत्ययस्तत्र टिलोपः, उपपदस्य 'इकारस्थाने' 'उकारः', पुरुषः। यद्वा पुरि शरीरे शेते—पुरिशयः सन् पुरुषः, पूर्ववत्—डः प्रत्ययो वर्णव्यापत्त्या शकारस्य षकारः, इकारस्योकारः पूर्ववदेव। पुरुषः पूरयतेः "पॄ पूरणे ( चुरादि० ) तथो-णादौ "पुरः कुषन्" ( उणा० ४ । ७४ ) यतः पूरयति, अन्तः—अन्तःस्थलं पूरयति पूरितं करोति अन्तःस्थले पूर्णोऽस्ति। अन्तर्यामिणं पुरुषमभिप्रेत्योक्त-मस्ति। पूरयतीत्यर्थं लक्ष्यीकृत्य "यस्मात्परं····" इति प्रमाणात्। अस्मिन् तस्यान्तर्यामिणः परमात्मनः पुरुषधर्मः पूरयितृत्वं दर्श्यते। यद् यस्मात् परं सर्वेभ्यः परं तत्तुल्यं परे वर्तमानं नास्ति, उक्तं यथा "त्वमस्य पारे रजसो व्योमनः" ( ऋ० १ । ५२ । १२ ) आकाशस्यापि पारे परमात्माऽस्ति। "तदु सर्वस्यास्य बाह्यतः" (यजु० ४०।५) न च तस्मात्परं यद्वाऽपरं किञ्चित्, अपरमवरं निकटं तत्सदृशं किमपि न निकटम्—उक्तं हि "य आत्मनि तिष्ठन्····" (शतपथे० १४।६।

७ । १० ) स्वात्मन्यपि विराजमानोऽस्ति यस्माच्चाणीयो ऽणुतरो ऽणोरणुरपि न कश्चिदस्ति परस्माज्ज्यायो ज्येष्ठतरो ज्येष्ठाज्ज्येष्ठोऽस्ति नित्यमुक्तस्वरूपे प्रकाशात्मके वृक्ष इवाचलो ध्रुवः सर्वस्य जडजङ्गमस्याधारभूत इवैकस्तेन पुरुषेण जगत् पूर्णमस्ति । इति त्वेकपर्वणः समासस्योदाहरणमासीत् । द्वितीयं विशिष्टं क्लिष्टमनेकपर्वणः समासस्योदाहरणं दीयतेऽनन्तरमेव ।

'विश्वकद्राकर्षः' वीति चकद्र इति श्वगतौ भाष्यते । द्रातीति गतिकुत्सना । कद्रातीति द्रातिकुत्सना । चकद्राति कद्रातीति * सतोऽनर्थकोऽभ्यासः । तदस्मिन्नस्तीति विश्वकद्रः ॥

भा०—'विश्वकद्राकर्षः' इत्येष शब्दो न चतसृषु मूलसंहितासु न शाखासंहितासु न च ब्राह्मणारण्यकयोः, इदानीं लोकेऽपि न प्रयुक्त उपलभ्यते । किन्त्वस्ति कश्चित्पुरातनवृत्ते प्रयुक्तः स परम्परया भाष्यते । अस्य शब्दस्य क्लिष्टस्वरूपत्वादनेकाप्रसिद्धपर्ववत्त्वाद् यास्केन ज्ञात्वैव निर्वचनायात्र स्थापितः । कथयति च सः 'वि' इति 'चकद्रः' इति मिलित्वा श्वगतौ—श्वप्रवृत्तौ श्वा—इव गतिः प्रवृत्तिर्यस्मिन् स श्वगतिर्मनुष्यः † । कथमित्युच्यते । 'द्राति'—इति गतिकुत्सना "द्रा कुत्सायां गतौ" ( अदादि० ) ततो भावे क्विप् । कुत्सितगतिः सा 'द्रा' स्त्रीलिङ्गे । पुनः कुत्सिता द्रा कद्रा कुत्सिततरा गतिर्या सा कद्रा पुनरपि 'चकद्रा' इत्यत्र योऽभ्यासः पूर्वस्य वर्णस्य द्विर्भावः सोऽनर्थको निर्निमित्तः । पुनः "तदस्यास्त्यस्मिन्निति मतुप्" ( अष्टा० ५ । २ । ९४ ) इति मतुबर्थे 'तदस्मिन्नस्तीति' सप्तमीविषयके 'वि' उपसर्गो विशिष्टार्थकः पूर्वः सन् समस्यते चकद्रया सह चकद्रशब्दस्य सुट् चागमस्तत्सन्नियोगेन भवति । यः खलु चकद्रया सह वि—विशिष्टो युक्तः स विश्वकद्रः । अथ कोऽभिधेयः । उक्तं हि पूर्वं "श्वगतिको मनुष्यो विश्वकद्रः । द्रा तु कुत्सिता गतिः, कद्रा बहुकुत्सितगतिः—पुनर्निर्निमित्तेन चकारेण सह 'चकद्रा' शुनो गतिः पूर्वोक्ताद् यास्कवचनात् । सा च कुत्सिततरा, शुनो गतिरेका तु शोभना स्वामिभक्तिः स्वामिसेवा सा नात्र गृह्यते, अत्र तु कुत्सिततरा गृह्यते यस्य विषये वेदेऽभिहितम् "जुहि श्वयातुं....."( ऋ० ७ । १०४ । २२ ) असहिष्णुता मत्सरता द्वेषभावना या तस्य भवति परान् स्वान् प्रत्यपि सा तस्य कुत्सिततरा । परान् प्रति कुत्सिता पुनः स्वान् प्रति कुत्सिततरा

---

* 'ककद्राति' इति पुस्तकान्तरे ।

† चकद्रः—इति पुल्लिङ्गनिर्देशः, तस्मात् श्वगतिः पुल्लिङ्गः ।

सा खल्वीदृशी कुत्सिततरा गतिर्यस्मिन् मनुष्ये स विश्रकद्रः स्वपरद्वेषी स्वपरपीडको ऽशान्तिप्रसारकस्तं य आकर्षति बलेन विविधोपायैर्नयनीतिभिरभियोगे दण्डं दापयितुं वा सद्व्यवस्थापको प्रजाजनो राजपुरुषो वा स विश्रकद्राकर्षः ।

> कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपम् । कल्याणं कमनीयं भवति । वर्णो वृणोतेः । रूपं रोचतेः । एवं तद्धितसमासान्निर्ब्रूयात् ॥

भा०—'कल्याणवर्णरूपः' उपमायामसमानविभक्तेरनेकपदकस्य बहुव्रीहेः समासस्योदाहरणम् । कल्याणवर्णस्य कल्याणमत्र सुवर्णादिकं वस्तु यद्वा कल्याणः सुन्दरः । सुवर्णादिकस्य वर्णो भासः कल्याणवर्णः, तदिव रूपमस्येऽति स कल्याणवर्णरूपः । यद्वा कल्याणः शुभ्रो वर्णो यस्य स कल्याणवर्णो हीरकादिर्मणिः, तदिव रूपमस्येति कल्याणवर्णरूपः । कल्याणं कमनीयं भवति तत्कामयन्ते हि जनाः, वर्णो वृणोतेः । आवृणोति स्वाश्रयम् । रूपं रोचतेः । द्रष्टृ रोचते स्वाश्रयात् प्रकाशते । इत्थं तद्धितसमासान् निर्ब्रूयाद् विश्लेषयेद् यथास्वं प्रविभजेत ।

> नैकपदानि निर्ब्रूयात् । नावैयाकरणाय । नानुपसन्नाय, अनिदंविदे वा । नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । उपसन्नाय तु निर्ब्रूयाद् यो वा ऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा ।

भा०—एकपदानि स्ववाक्यात् स्वसन्दर्भाद्वा पृथग्भूतानि किं वा स्वकीयं वाक्यं सन्दर्भं पूर्वापरसम्बन्धं चानपेक्ष्य केवलानि पदानि न निर्ब्रूयात् स्वस्मै परस्मै वा, तथा-भूतानि निर्वचनानि न यथार्थानि भविष्यन्ति किन्तु दोषावहाणि भविष्यन्ति । यतो हि समानरूपाण्यपि नामान्याख्यातानि च पदानि भिन्नभिन्नार्थानि भवन्ति । यथा 'सैन्धवमानय' अत्र सैन्धवस्यार्थोऽश्वो लवणं च भवति प्रकरणतस्तदर्थो यथावद् भविष्यति । एवं 'जहा' इत्याख्यातं पदम् "हन हिंसागत्योः" ( अदादि० ) यद्वा "ओहाक् त्यागे" ( जुहोत्या० ) धातोः—प्रयोगो भवितुमर्हः स स्वकीयाद् वाक्यात् सन्दर्भादेव निश्चीयते । अत्र—एकपदानि केवलपदानि न निर्ब्रूयात् । एवमवैयाकरणाय न निर्ब्रूयात् स प्रकृतिप्रत्ययविधानानभिज्ञो न निर्वचनं ज्ञास्यति, व्याकरणं हि भूमिर्निर्वचनस्य व्याकरणस्योपरि निर्वचनशास्त्रम् । अपि चानुपसन्नाय य उपसन्नः शिष्यभावं प्राप्तो नास्ति तस्मै वैयाकरणायापि न निर्ब्रूयात्, स तथाभूतो जनो न तदर्थी तस्यातदर्थित्वादविद्यार्थित्वाद् विद्यायां गुरौ च स न श्रद्धास्यते । अनिदंविदेऽपि न निर्ब्रूयात्, यो हीदं

निर्वचनं शब्दानामूहनं न वेत्ति न वेत्तुमर्हति न तथा मेधावी तस्मै न निर्ब्रूयात् । यतोऽविज्ञात्रे दीयमाने विज्ञाने निन्दा भवति विज्ञानस्य दातुः, केनाध्यापितस्त्वं यावद्बुध्यसे, सोपि गुरुं निन्दत्येव यन्नाध्यापितवान् गुरुर्मां सम्यक् । तथा निर्वचन शास्त्रस्यापि विज्ञानेऽसूया भवति यतस्तद्विज्ञानस्यागौरवमापद्यतेऽन्यथा हि श्रोष्यति—अन्यथा हि ज्ञास्यति च । तस्मादुपसन्नाय शिष्यभावं जिज्ञासुत्वं प्राप्ताय तु निर्ब्रूयादेव, यः खलु विज्ञातुं समर्थः स्यात् तथाभूताय मेधाविनेऽथ तपस्विने वा निर्ब्रूयात् ॥

अलङ्कारोक्त्या खलूक्तं पोषयति—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥

भा०—विद्या खलु ब्राह्मणं विद्वांसमागतवती—आगत्यावोचद् यदहं ते सुखनिधिरस्मि तस्मात् त्वं मां रक्ष—त्रायस्व केन प्रकारेणेत्युच्यते—यन्निन्दकाय, असरलाय—अनम्राय, असंयताय मां नोपदिशेति तथा सती खल्वहं बलवती भवेयम् ॥

शिष्यकर्तव्यं दर्शयति—

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत कतमच्चनाह ॥

भा०—यो गुरुर्यथार्थज्ञानेन कर्णावुद्घाटयति ह्यदुःखं कुर्वन् तथामृतं प्रयच्छन्नमृतात्मकमोक्षहेतवे, ज्ञानं प्रयच्छति तं गुरुं पितरं मातरमपि जानीयात् तस्मै किमपि निमित्तमाश्रित्य न द्रोहं कुर्यात् ।

गुरोरनादरं कुर्वतां निन्दा प्रदर्श्यते—

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥

भा०—गुरुणा अध्यापिताः सन्तो ये विप्रा विद्वांसो जाता गुरुं मनसा वाचा कर्मणा वापि नाद्रियन्ते—गुरोरादरं न कुर्वन्ति ते खलु यथा हि गुरोर्भोजनीया भोजयितारः पालका * न भवन्ति तथैव तत्—गुरुतः श्रुतं ज्ञानं तान् न पालयति ॥

---

* 'भोजनीयाः'—भोजयितारः' "कृत्यल्युटो बहुलम्" (अष्टा० ३ । ३ । ११३) इति कर्तरि कृत्यप्रत्ययः ।

कस्मै विद्या वक्तव्येति खलूपसंहरति—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्, इति ॥

भा०—ब्रह्मन् हे विद्वन्! यं हि पवित्रं निश्छलं प्रमादरहितं बुद्धिमन्तं 'ब्रह्मचर्येण युक्तं त्वं जानीयाः। तथा यस्तुभ्यं कदाचिदपि न द्रोहं कुर्यात् तस्मै निधिपाय विद्याकोषस्य रक्षकाय मां विद्यां त्वमुपदिश ॥'

निधिः शेवधिरिति ॥

भा०—पूर्वस्मिन् वचने 'शेवधिष्टेऽहमस्मि' इत्यत्र 'शेवधिः—निधिः', निधिपाय,—अत्र 'निधिः'विद्या—निधिः सुखधिर्वा तस्य खलु रक्षकाय ॥

इति प्रथमः पादः ।

---

## द्वितीयः पादः

---

अथातोऽनुक्रमिष्यामः * ।

भा०—'समाम्नायः समाम्नातः स व्याख्यातव्यः' इति प्रतिज्ञां सार्थिकां कर्तुं तद्विषयकं ग्रन्थं सन्दर्भमारभमाणो वचनमिदमाह 'अथेति ।' आचार्येण द्विविधा-व्याख्या लक्ष्यीकृताऽऽसीत्, सामान्या विशिष्टा च। सामान्या तु खल्वतः पूर्वं कृता, नामाख्यातादीनां लक्षणं तदनुपक्तशङ्कासमाधानं शास्त्रारम्भस्य प्रयोजनं निर्वचनं च यथापदम् । 'अथ' शब्दो ऽनन्तरार्थे प्रयुक्तः, सामान्य-व्याख्याया अनन्तरमिदानीम् । 'अतः, 'इतः' इत आरभ्य विशिष्टव्याख्यार्थं व्याख्यातव्यानि पदानि खल्वनुक्रमेण ग्रहीष्यामो वर्णयिष्यामो वा । कथञ्जातीया सा विशिष्टव्याख्येत्युपस्थाप्यतेऽत्र सा खलु निघण्टुपदानि गृहीत्वा ।

गौरिति पृथिव्या नामधेयम् । यद् दूरं गता भवति ।
यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः ॥

भा०—गौः । ग्मा । ज्मेति गोत्रान्तेष्वेकविंशतिपृथिवीनामसु, 'गौः' इति पृथिव्या नामधेयमिति—अभिधानं तस्य पृथिवी खल्वभिधेया । कुतः यद् दूरं

---

* स्कन्दमहेश्वरभाष्ये मूलपाठः "अथात उपक्रमिष्यामः" परन्तु भाष्यं न तथा, भाष्यं तु "आनुपूर्व्येण क्रमिष्यामः" तस्मान्मूलपाठः 'उपक्रमिष्यामः' इति भ्रान्त्या जातः ।

गता भवति, दूरं दूरपर्यन्तं यथा यथा मनुष्योऽग्रेऽग्रे गच्छति ततः पृथिवी गतवती भवति दूरंगता च दृश्यते दृष्टौ यद्वा नेत्राभ्याम्, तस्या दूरगमनं निरन्तरमबाध्यं च तस्माद् दूरगमनधर्मित्वादेव पृथिवी गौः। यत्पुनरस्यां पृथिव्यां भूतानि प्राणिनो गच्छन्ति, प्राणिनां गमनाधारत्वात् पृथिवी गौः। कर्तृकारकेऽधिकरणकारके च निर्वचनं गम् धातोः—डोः प्रत्ययः। "गमेर्डोः" (उणादि० २।६९) यद्वा "गाङ् गतौ" (भ्वादि०) निर्वचनं तु तथैव समानार्थत्वात् केवलं धातुभेदः, प्रत्ययोऽपि स एव 'डोः' धातोर्बाहुलकात्। अत्र स्कन्दस्वामिना देवराजयज्वना च स्तुत्यर्थस्य 'गा' धातोर्ग्रहणं कृतं तन्न सम्यक्, आचार्यशैल्या विरुद्धा कल्पना। यथा 'गम्' धातोः—'गता, गच्छन्ति' इति निर्वचनं न तथा गातेः, तस्मात् केवलं धात्वन्तरमेव नार्थान्तरं यदि ह्यर्थान्तरस्य धातोः स्यात् तर्ह्यर्थान्तरकं निर्वचनमपि कुर्यात्। निघण्टौ च "गाति गतिकर्मा" (निघं० २। १४) गौः पृथिवी यतो दूरं गता भवति ज्योतिर्विज्ञानदृष्ट्या तु पृथिवी स्वकेन्द्रेऽपि गच्छन्ती सती सूर्यस्य परितोऽपि गच्छति तद् दूरमेवाकाशे गच्छति। तदस्मिन्नाशये 'गौः' पृथिवी नामेति वैदिकमुदाहरणम् "आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः (यजु० ३। ६) अयं गौरेषा पृथिवी पृश्निरन्तरिक्षे— आक्रमीत्—आक्रास्यति समन्ताद् गच्छति पूर्वस्यां दिशि मातरमपः प्राप्ता सती सहाद्भिरित्यर्थः। स्वः पितृभूतं सूर्यं प्रति च प्रयन् प्रयाति प्रगच्छति।

अथापि पशुनामेह भवत्येतस्मादेव।

भा०—अथ च—इह—लोके लोकव्यवहारे पशुनाम गौर्भवति, एतस्मादेव धातुद्वयात् पुमान् गौः शकटं वहति क्षेत्रं कर्षयित्वाऽन्नं गमयति प्रापयति। स्त्री गौर्दुग्धं गमयति प्रापयति। पृथिवीप्रसङ्गतो गौणस्योदाहरणं निर्वचनं च।

अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति "गोभिः श्रीणीत मत्सरम्" (ऋ० ९। ४६। ४) इति पयसः। मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः। मत्सर इति लोभनामाभिमत्त एनेन धनं भवति। पयः पिबतेर्वा प्यायतेर्वा। क्षरतेः। घसेर्वेरो नामकरण उशीरमिति यथा॥

भा०—अपि च—अस्यां पशुगवि—अभिधेये ताद्धितेन तद्धितार्थलक्ष्येण तद्धितार्था अवयवविकारास्तेषां लक्ष्येण कृत्स्नवत् कृत्स्नं पूर्णप्रकृतिस्वरूपं तद्वन्तो निगमा पदप्रयोगा भवन्ति, अर्थात्—यो गवि भवः, गोरवयवः, गोर्विकारो वा स 'गौः' इति प्रकृतिरूपेण कृत्स्नेन पूर्णेन यथार्थं शब्देनैव ग्रहीष्यते स्वभवा-

वयवविकारेषु स्वभवावयवविकारलक्ष्येण कृत्स्नः पूर्णो यथास्वं गोशब्दःप्रयुज्यते। उदाहरणम्–"गोभिः श्रीणीत मत्सरम्" अत्र 'गोभिः' शब्दस्तद्धितार्थपरः, गवि भवं यत्तत्परः। तच्च पयो दुग्धम्। तस्मादत्र 'गोभिः–पयोभिः–दुग्धैः सह श्रीणीत पचत मत्सरं सोमम्। मत्सरः सोमः "मदिस्तुतिमोदमद"....(भ्वादि०) मदस्तर्पणम् "मद तृप्तियोगे" (चुरादि०) मन्दते तृप्यति हि जनः सोमपानात्। 'मत्सरः' इति लोभनाम, लोके मत्सरो लोभः, कमपि धनिनं दृष्ट्वा जायते हि मत्सरो लोभः। यतोऽनेन लोभात्मकेन मत्सरेण मदकरेण धनमभि–धनमभिगत्य प्राप्य मत्तो भवति, यद्वाऽनेन लोभस्वरूपेण मत्सरेण मत्तः सन् धनमभिमुखी भवति। लोभो मत्सरो मदकरः, धनप्राप्तेः पूर्वं लोभे सति धनाकांक्षायां मत्तो भवति, धनप्राप्तेरनन्तरं धनस्य रागे मत्तो भवति हि। एवं, मत्सरस्य निर्वचनं प्रसक्तानुप्रसक्तम्। पयः पिबतेर्वा प्यायतेर्वा। 'पयः' पा पाने" (अदादि०) यद्वा "प्यायी वृद्धौ" (भ्वादि०) धातोः प्रयोगः। पीतेन तेन वर्धन्ते हि पातारः "रपेरत एच्च" (उणा० ४। १९०) इति धातोर्बाहुलकात्–'असुन्' प्रत्ययः 'पा' इत्याकारस्य 'ए' गुणे 'पयः' एवं 'प्यायी–प्याय्'–'असुन्' प्यायः पीभावः कल्पनीयः पृषोदरादित्वे वा पयः। 'क्षीरं क्षरतेः' "क्षर सञ्चलने" (भ्वादि०) ऊधसः क्षरणधर्मित्वात् पचादिलक्षणोऽच्, उपधाया ईकारादेशश्च, यद्वा "घस्लृ अदने" (भ्वादि०) धातोः–ईरः प्रत्ययः "घसेः किच्च–ईरन्" (उणादि० ४। ३४) कित्त्वादुपधालोपः, क्षीरम्। इति पर्यायत्वे प्रसक्तस्य निर्वचनम्, उशीरमिति यथा 'उशीरम्' इति शब्दसमत्वेन समाधिनिर्वचने "वशकान्तौ।" (अदादि०) "वशेः किच्च ईरन्" (उणा० ४। ३१) कित्त्वात् सम्प्रसारणम्। इति तद्धितस्य भवस्योदाहरणाम्॥

समग्रमन्त्रस्तदर्थश्च—

आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रीणीत मत्सरम्॥

हे सुहस्तवन्तः शोभनहस्तवन्तो विद्वांसः! दुग्धैः सह सोमं सम्मिश्रितं कृत्वा पचत संस्कुरुत 'मिश्रयत' पुनः शीतं दधिभूतं जातं, मन्थिना मन्थनफल-कवता दण्डेन–आधावत–समन्तादाधावयत भ्रामयत विलोडयत, अन्तर्गत-णिजर्थः। पुनः शुक्रा शुक्रं, शुक्ररूपं सारं शुक्रवर्धकं नवनीतं गृभ्णीत गृह्णीत।

"अंशुं दुहन्तो अध्यासते गवि" (ऋ० १०। ९४। ९)
इत्यधिषवणचर्मणः। अंशुः शमष्टमात्रो भवति। अननाय शम्भवतीति वा। चर्म चरतेर्वोच्चृतं भवतीति वा।

भा०—'अंशुं…गवि' इत्यत्र ताद्धितोऽर्थोऽवयवः 'गवि गोरवयवे चर्मणि—अधिषवणचर्मणि । अधिषूयतेऽध्यास्य यस्योपरि सोमरसो निःसार्यते तदाधिषवणचर्म तस्मिन्नध्यासते—उपविशन्ति—इत्यधिषवणचर्म गोरवयवभूतम् । समग्रमन्त्रस्तदर्थश्च—

ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥

यदा रासायनिका ऋत्विजो वा अंशुं सोमं दुहन्तः क्षारयन्तो गवि गोचर्मणि—अधिषवणचर्मणि खल्वध्यासते विराजन्ते तदा ते सोमादः सोमस्य भक्षयितारो भोजयितारो हरी हरणशीलौ—अश्वाविन्द्रं राजानमावन्तौ तस्य याने युक्तौ भवतस्तदा तौ प्रति ते निंसते स्नेहं कुर्वन्ति । तैर्दुग्धं निःसारितं मधुरं सोममिन्द्रो राजा यदा पीतवान् भवति तदा स वर्धते पुष्यति वृषेवाचरति बलं प्रदर्शयितुम् ॥

अंशुः सोमः पानानन्तरमष्टमात्रो व्याप्तप्रायो भवति रसरूपेण व्याप्तः सन्नेव शं कल्याणप्रदो भवति तस्मात् 'अंशुः' 'अश्—शम्'—अश्नुवानः शं भवति "अशूङ् व्याप्तौ" ( स्वादि० ) 'शम्—अशूङ्—उः' बाहुलकात् 'उः' प्रत्ययो ङित् । 'शम्—उः' 'श्—अम्' इत्यस्याद्यन्तविपर्ययात् 'अम् श्—उः' अंशुः, अथवा 'अननाय शम्' भवति, 'अन प्राणने' जीवनाय शं सुखं भवति स्वस्थजीवनाय चिरजीवनाय च सुखमयं सुखप्रदं भवति 'अन् शम्—उः' अनिति—इति अन् जीवनं शाम्यति सुखयतीति—अंशुः । अथ 'चर्म' चर धातोः । सर्वस्मिन् शरीरे चरितं गतं भवति यद्वा शरीरात् तदुच्चृतमुच्छिन्नमुत्कर्तितं भवति । 'चर् मनिन्' वा 'चृत् मनिन्' "सर्वधातुभ्यो मनिन्" ( उणादि ४ । १४५ ) चृतपक्षे धातोरन्तलोपश्छान्दसः । इति प्रसक्तानुप्रसक्तनिर्वचनम् ॥

अथापि चर्म च श्लेष्मा च ।
"गोभिः सन्नद्धो असि वीळयस्व" ( ऋ० ६ । ४७ । २६ ) इति रथस्तुतौ ॥

भा०—अथ च—गोशब्देन ताद्धितं वस्तु चर्म च श्लेष्मा चर्मानुविद्धं मेदो वस्तु अस्थनि वर्तमानं स्नेहनं स्निग्धो लसो मज्जा च । चर्मणा सन्नद्धो रक्षितः—आवृतः श्लेष्मणा च लेपितः संशोभितस्त्वमसि बलं धत्स्व दृढीभव 'इति रथप्रशंसा । समग्रमन्त्रव्याख्याऽग्रे ( ९ । १२ ) आगमिष्यति ।

अथापि स्नाव च श्लेष्मा च ।
"गोभिः सन्नद्धा पतति प्रसूता" ( ऋ० ६ । ७५ । ११ ) इतीषुस्तुतौ ॥ ५ ॥

भा०—अथ च स्नाव—नाडी—तन्त्री तथा श्लेष्मा मज्जा च गोरवयवः, कृत्स्नेन गोशब्देनोच्यते । यथा 'गोभिः—स्नावभिस्तन्त्रीभिर्मज्जभिश्च सन्नद्धा—आवृता रक्षिता श्लेष्मणा मज्ज्या च सुलेपिता ज्यया प्रेरिता खल्विषु लक्ष्यं प्राप्नोति । समग्रमन्त्रव्याख्या अग्रे ( ९ । १९ ) आगमिष्यति ।

ज्यापि गौरुच्यते गव्या चेत् ताद्धितमथ चेन्न गव्या गमयतीषूनिति ।

"वृक्षे वृक्षे नियंतामीमयद्गौस्ततो वयः प्रपतान्पूरुषादः" ( ऋ० १० । २७ । २२ ) ।

वृक्षे वृक्षे धनुषि धनुषि । वृक्षो व्रश्चनात् । वृत्वा क्षां तिष्ठतीति वा । क्षा क्षियतेर्निवासकर्मणः । नियतामीमयद् गौः शब्दं करोति । मीमयतिः शब्दकर्मा । ततो वयः प्रपतन्ति पुरुषानदनाय । विरिति शकुनिनाम वेतेर्गतिकर्मणः । अथापीषुनामेह भवत्येतस्मादेव ।

भा०—ज्या—प्रत्यञ्चा धनुषो रज्जुरपि गौः कथ्यते गव्या गोरवयवरूपा गोविकाररूपा स्नावनिर्मिता यदि स्यात् ताद्धितं वस्तु तद्धितार्थगतं वस्तु विकाररूपम्, अथ यदि न गव्या गोविकाररूपा तदाऽपि सा गौर्भवति यतो गमयति प्रेरयति प्रक्षिपति इषून् । मन्त्रे सा ज्या गौरुक्ताऽस्ति, वेदे दृत्तं नाम स्थिरं भवतु ताद्धितं न वा । उदाहरणम्—"वृक्षे वृक्षे····" इति मन्त्रः ।

समग्रमन्त्रस्तदर्थश्च—

वृक्षे वृक्षे नियंतामीमयद् गौस्ततो वयः प्रपतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥

वृक्षे वृक्षे धनुषि धनुषि । धनुर्भवति वृक्षं छित्त्वा, वृक्षविकारः, अत्रापि मन्त्रे वृक्षशब्दस्ताद्धितेऽर्थे प्रयुक्तः । प्रत्येकस्मिन् धनुषि नियता निबद्धा नियन्त्रिता बाणप्रक्षेपणायाकर्षिता गौः—गोविकाररूपा स्नावनिर्मिता यद्वा बाणानां गमयित्री प्रक्षेप्त्री सती ज्या—अमीमयत् शब्दं करोति, ततस्तदनन्तरं पुरुषादः पुरुषान्—अदन्ति, भक्षयन्ति ये ते पुरुषादः । पुरुषाणां संहारकरणात् पुरुषादः । वय इषुरूपाः पक्षिणो यद्वा—इषवः पुरुषान् प्रपतन्ति—अदनाय तानत्तुम् । अथ—अनन्तरं समस्तमनुष्यजातं बिभेति । तस्मात् प्राणिसंहारो न भवेदिति कृत्वा—इन्द्रायैश्वर्यवते राज्ञेऽभिषेकं करोति, तत्पुरोहिताय विदुषे च राज्यसंचाल-

नार्थं बलिं प्रयच्छति । स्वराष्ट्रस्योपरि कश्चिदाक्रमणं न कुर्यादिति प्रजाजनाः स्वमध्ये राजानमभिषिञ्चन्तु ।

अथ प्रसक्तानुप्रसक्तशब्दानां निर्वचनं क्रियते । वृक्षो व्रश्चनात् । "ओव्रश्चू छेदने" ( तुदा० ) धातोः सः प्रत्ययः किञ्च "स्नुव्रश्चिकृत्यृषिभ्यः कित्—सः" ( उणा० ३ । ६६ ) छिद्यते हीन्धनादिकार्यार्थम् । यद्वा वृत्वा—आवृत्य क्षां पृथिवीं तिष्ठति तस्मात् वृक्षः प्रत्ययलोपः । वृता क्षा येन स वृक्षः । 'क्षिनिवास-गत्योः' (तुदा०) इति निवासार्थे क्षिं धातोर्डः प्रत्ययः । क्षा स्त्रीलिङ्गे । 'अमीम-यत्' इति मीमृ शब्दे (भ्वादि०) तस्य लङि णिजन्तः प्रयोगः । यथोक्तमाचार्येण भीमयतिः शब्दकर्मा, विः शकुनिनाम, पक्षिनाम" "वी गतिकान्ति०" ( अदादि० ) इति गत्यर्थे प्रयोगः 'विः' । इत्येकवचने । वियन्ति—इति वयः । "वातेर्डिच्च" "इण्" प्रत्ययः । ( उणा० ४ । ३४ ) । 'विः—इषुनाम' गत्यर्थ-कादेव 'वी' धातोः ।

आदित्योऽपि गौरुच्यते "उताद: परुषे गवि" ( ऋ० ६ । ५६ । ३ ) पर्ववति भास्वतीत्यौपमन्यवः । अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्, आदि-त्यतोऽस्य दीप्तिर्भवति । "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः" ( यजु० १८ । ४० ) इत्यपि निगमो भवति, सोऽपि गौरुच्यते "अत्राह गोरमन्वत" ( ऋ० १ । ८४ । १५ ) इति तदुपरिष्टात् व्याख्यास्यामः ॥ ६ ॥

भा०—गोशब्दस्य पृथिवीवाचित्वं पशुवाचित्वं च प्रदर्श्यास्यान्याभिधेयत्व-मपि दर्शयति, "आदित्योऽपि गौः कथ्यते ।" 'उताद: परुषे गवि' इति । समग्रमन्त्रस्तदर्थश्च—

उताद: परुषे गवि सूरश्चक्रं हिरण्ययम् । न्यैरयद् रथीतमः ॥

अपि खल्वदो ऽमुष्मिन् * परुषे—परुष्वति पर्ववति' 'परूंषि पर्वाणि यस्मिन् सः परुषः, अत्र—अकारो मत्वर्थीयश्छान्दसः, यथान्यत्र वेदे "यदि कर्तं पतित्वा संशश्रे यदि वाश्मा प्रहृतो जघान । ऋभू रथस्येवाङ्गानि संदधत् परुषापरुः" ( अथर्व० ४ । १२ । ७ ) यद्वा भास्वति परुः—भाः, तद्वति इत्यौपमन्यव आचार्यो मन्यते । भाः—भांसि—ज्योतींषि—नक्षत्राणि, तद्वति—नक्षत्रवति—यस्या-ऽश्रये सर्वाणि ग्रहनक्षत्राणि सन्ति तथाभूते पर्ववति—कालपर्ववति यः कालस्य पर्वणां—प्रातःसायममावास्यापौर्णमास्युत्तरायणदक्षिणायनानां निर्माता । तस्मिन्

* अदस् 'अद:' इति सप्तम्यर्थे "सुपां सुलुक्...." (अष्टा० ७ । १ । ३९) ।

गवि—आदित्ये तदाश्रये रथीतमोऽतिशयेन रथी, रथी रथस्य—विश्वरथस्य स्वामी, सूरः प्रेरकश्चालकः, परमात्मा हिरण्यं हिरण्मयं ज्योतिर्मयं सर्वग्रहनक्षत्ररूपं चक्रं न्यैरयत्—नियमयति—नियमेनेरयति चालयति। इत्यत्र 'गौः' आदित्योऽस्ति—इति स्पष्टम्।

अपि च—अस्यादित्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेन गोप्रकरणेन ज्ञानमुपगत्य विज्ञेयं यदादित्यो गौरस्ति, तद्रश्मिरपि यश्चन्द्रमसि प्रविष्टस्तं प्रकाशयति सोऽपि गौरस्ति—उच्यते च तथैव "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा।" (यजु० १८।४०) चन्द्रमाः खलु सुषुम्णः सुसुखः सुसुखप्रदः सुसुखरूपः "सुम्नं सुखनाम" (निघ० ३।६) सूर्यरश्मिर्विज्ञेयो यतः सूर्यरश्मिरेतं प्रकाशमानं करोति। पुनश्चायं गन्धर्वः—गां रश्मिं धरतीति हेतोः, तस्य चन्द्रमसो गन्धर्वस्य सूर्यरश्मिमतः सुशोभितस्य शोभां कान्तिं प्राप्तस्य नक्षत्राणि सन्ति ह्यप्सरसस्तस्य परितोऽपसरणशीलाः परिचारिका इव भेकुरयः, भा दीप्तिः तस्याः कर्त्तारः 'भा कृ डुरिः प्रत्ययः', 'भा' इत्याकारस्ये-कारः। शोभाकराः सन्ति यतो नक्षत्रेषु हि चन्द्रमाः शोभते। स चन्द्रमा अस्माकं ब्रह्म ज्ञानं मानसं शीतलप्रकाशेन क्षत्रं शारीरबलं च रसवर्षणेन रक्षतु तस्मै तथा-भूताय चन्द्रमसे होमयज्ञेन यथापर्वं शुद्धाऽऽहुतिं प्रयच्छेम। अथ सोऽपि चन्द्रमसं गतः सूर्यरश्मि गौरुच्यतेऽत्र स्पष्टो मन्त्र एषः "अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥" (ऋग्वेद १।८४।१५) अत्र चन्द्रमसो गृहे—'गोः' इति स्पष्टम्। इमं मन्त्रं स्वयं निरुक्तकारोऽग्रे (निरु० ४।२५) व्याख्यास्यति।

सर्वे रश्मयो गाव उच्यन्ते—

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि॥
(ऋ० १।१५४।६)

तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो बहुशृङ्गाः॥ भूरीति बहुनो नामधेयं प्रभवतीति सतः॥ शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा॥ अयासोऽयनाः॥ तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि॥ पादः पद्यतेः॥ तन्नि-

धानात्पदम् ॥ पशुपादप्रकृतिः प्रभागपादसामान्यादितराणि पदानि ॥

भा०—सर्वे किरणाः—गावः कथ्यन्तेऽत्र मन्त्रमुदाहरति "ता वा....." इति ।

मन्त्रार्थः—

हे दम्पती वधूवरौ ! युवाभ्यां तानि वास्तूनि वासस्थानानि कामयामहे वयमुभयोरपि पितृकुलीयाः पितृजना गुरुकुलीयाश्च गुरुजनाः, यत्र गमनाय सञ्चरणाय गावो रश्मयः किरणाः बहुश्रृङ्गा बहुज्वलना बहुदीप्ततराङ्गाः "श्रृङ्गाणि ज्वलतो नाम" ( निघं० १ । १० ) यद्वा बहुश्रृङ्गा गाव इव न तु द्विश्रृङ्गाः किन्त्वसंख्यातश्रृङ्गा अयासोऽयना गमनशीला निरन्तरं गमनक्रियां विदधतः प्रवर्तन्ते । अत्राह—अत्र तत्र तथा भूतेषु वासस्थानेषु तस्योरुगायस्य महागतेर्बहुगतिशक्तिमतो विष्णोः सूर्यस्य परमात्मनो वा पराध्यंस्थानं सूर्यमण्डलं प्रकाशात्मकं स्वरूपं यद्वा प्रदर्शकं तद्रचनापरं विविधवनस्पतिनदीस्रोतःपर्वतदृश्ययुक्तमत्यन्तमवभाति—अवभासते ॥

भूरि बहुनो नाम "भूरि बहुनाम" ( निघं० ३ । १ ) प्रभवति इति सतः, प्रकृष्टं यद् भवति न क्षीयते तद् बहु "श्रृङ्गम् "श्रिञ् सेवायाम्" ( भ्वादि० ) शिरसि भवत्याश्रितं तत् श्रि नुट् गन् धातोः सम्प्रसारणं च श्रृङ्गम् । यद्वा "शॄ हिंसायाम्" ( क्र्यादि० ) "श्रृणातेर्ह्रस्वश्च" ( उणा० १ । १२६ ) शृ नुट् गन् श्रृङ्गम् । प्रहारकारी हिंस्यतेऽनेनेति श्रृङ्गम् । यद्वा 'शम् उपशमे' ( दिवादि० ) उपधायाः—ऋकारो गनि प्रत्यये । प्रहारकारी श्रृङ्गं दृष्ट्वा शान्तो भवति । शरणाय प्रहारकात्—शरणप्रापणार्थं त्राणप्रापणार्थमुद्गतं पूर्ववत् । शिरसो निर्गतं शिर् स्थाने 'शृ' निर् इत्यस्य 'न्' गतं अस्य 'ग' एवं श्रृङ्गम् । 'पादः पद्यते' "पद गतौ" ( दिवा० ) पद्यतेऽनेनेति पादः करणे घञ् । तन्निधानात् पदम्, पादनिधानात् स्थापनात् पादस्थानं चिह्नं वा पदं भवति यथा "गोष्पदपूरं वृष्टो मेघः" । प्रभागपादः प्रकृष्टो भागोंऽशो यः पादः—उच्यते तत्र न गतिः किन्तु स्थितिरेव स तु पशुपादप्रकृतिः पशोः पादा इव ते पादाः पर्यङ्कस्य कार्षापणस्य रूप्यस्याध्यायस्य भवन्ति । प्रभागपादसामान्यादितराणि पदानि नामाख्यातोपसर्गनिपाताख्यानि मन्त्रे तु पदं पद्यते प्राप्यते ज्ञायते येन वस्तुरूपं तत् पदं तत्तु स्वतन्त्रम् ।

एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते तानि चेत् समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नानानिर्वचनानि

यथार्थं निर्वक्तव्यानि । इतीमान्येकविंशतिः पृथिवीनामधेया-न्यनुक्रान्तानि, तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा, सा पृथिव्या सन्दिह्यते । तयोर्विभागस्तस्या एषा भवति—

"य ईं॑ चकार॒ न सो अ॒स्य वे॑द॒ य ईं॑ द॒दर्श॒ हिरु॒गिन्नु तस्मा॑त् ।
स मा॒तुर्योना॒ परि॑वीतो अ॒न्तर्ब॑हुप्र॒जा निर्ऋ॑ति॒मा वि॑वेश ॥
(ऋ० १ । १६४ । ३२)

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः, वर्षकर्मेति नैरुक्ताः । य ईं चकारेति करोतिकिरती सन्दिग्धौ वर्षकर्मणा 'न सो अस्य वेद' मध्यमः स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् । 'स मातुर्योना' मातान्तरिक्षम्-निर्मीयन्तेऽस्मिन् भूतानि ॥ योनिरन्तरिक्षं महानवयवः परिवीतो वायुना । अयमपीतरो योनिरेतस्मादेव, परियुतो भवति । बहुप्रजा भूमिमापद्यते वर्षकर्मणा ॥ ८ ॥

भा०—यथा गोनाम्नोऽभिधेये सन्देहोऽथ निर्णयश्च दर्शितस्तथाऽन्येषामपि सत्त्वानामन्येषां नाम्नामप्यभिधेयेषु खल्वपि सन्देहा विद्यन्ते विद्येरन्, तत्रापि निर्णयेन भवितव्यम् तानि नामानि 'यदि समानकर्माणि समाननिर्वचनानि यदि नानाकर्माणि नानानिर्वचनानि' अत्र वचने कर्मशब्दो द्व्यर्थको लक्ष्यते प्रथमकल्पे—यदि समानक्रियाणि समाननिर्वचनानि यथा 'गौः—ग्मा, क्ष्मा—क्ष्मा, भूः—भूमिः ।' यदि नानाक्रियाणि सर्वथा विरूपाणि नानानिर्वचनानि यथा 'गौः, क्ष्मा, अवनिः, उर्वी, पृथ्वी' प्रभृतीति । द्वितीयकल्पे—समानकर्माणि समानव्यापाराणि समाननिर्वचनानि भिन्नार्थकान्यपि यथागमनं व्यापारः पृथिव्यां पशुगवि रश्मिषु चाचार्येण दर्शितः । तत्र गोनाम्नः समानेन निर्वचनेन भवितव्यम् । समानरूपेष्वपि नामसु व्यापारभिन्नेषु नानानिर्वचनैर्भवितव्यम् । यथाऽऽचार्यः स्वयमग्रे वक्ष्यति निर्ऋतिशब्दे, पृथिव्यामभिधेये कृच्छ्रापत्तावभिधेये नानाव्यापारं लक्षयित्वा नानानिर्वचनं करिष्यति, निरमणात्, ऋच्छतेः, एवं यथार्थं निर्वक्तव्यानि, इत्येतान्येकविंशतिः पृथिवीनामान्यनुक्रान्तानि पठितानि वर्णितानि यानि प्रायेण लोकेऽप्रसिद्धानि । तेषु खलु निर्ऋतिः शब्दो निरमणात्, 'निर् रम् क्तिन्' निर्—र—ति 'अनुनासिकलोपः किति रेफस्य सम्प्रसारणं छान्दसं निर्ऋतिः' यद्वा ऋच्छतेः 'नि—ऋच्छ—क्तिन्' धातोरन्तलोपश्छान्दसः, यद्वा 'ऋच्छतेः' निर्ऋतिः पृथिवी च कृच्छ्रापत्तिश्च द्वयोरेकं नाम सा पृथिव्या सह

संदिह्यते तयोर्विभागः क्रियते दर्श्यते वा, तस्या निर्ऋत्याः सन्त्येषा ऋगस्ति। ऋक् च "य ईं चकार" इति दर्शिता, तस्या अर्थस्तयोर्विभागश्च क्रियते।

आधिदैविकार्थः—यो हि 'ईम्' वृष्टिजलम् "ईम्—उदकनाम" (निघं० १।१२) चकार किरति—निक्षिपति, इन्द्रो विद्युद्देवो वर्षकर्मणा, चकारेति करोतिकिरती सन्दिग्धौ तत्र निर्णेतव्यम्, पारिव्राजिकेऽर्थे करोति, वर्षकर्मणि किरति, इत्याशयो निरुक्तकारस्य। आश्चर्यजनको ह्ययं मन्त्रः 'निर्ऋति' द्व्यर्थिका, चकार क्रिया द्व्यर्थिकेति तु स्पष्टं परन्तु सर्वाणि पदानि द्व्यर्थकानि सन्ति, 'ईम्' उदकनाम पदनाम च, वेद क्रियापि द्व्यर्थिका 'ददर्श:' अपि केवलदृशेरन्तर्गतणिचेश्च, 'हिरुक्' अन्तर्हितं नाम (निघं० ३। २५) 'हिरुक्' वर्जने वर्तते क्वचित् पुस्तके (हस्तलिखिते पुस्तकेऽव्ययार्थशास्त्रे प्राच्यविद्यामन्दिरे बड़ोदास्थे) अव्ययार्थवेदाङ्गप्रकाशे स्वामिदयानन्दकृतेऽपि 'हिरुक्' वर्जने। 'बहुप्रजा:' द्व्यर्थः शब्दः। मध्यमः, इन्द्रः सोऽस्येदं न वेद कथं सम्पन्नमिदमुदकं किमर्थं चाहं किरामि। स एवास्य वृष्टिजलं मध्यमो वायुः, आदित्योपहितम्—आदित्याश्रितं जलं वाष्पीभूतं समुद्रत उत्थितं ददर्श "अन्तर्गतो णिजर्थः। दृष्टं कृतवान्—दृश्यं करोति दलं मेघं करोति। "अयं वै वर्षस्येष्टे योऽयं वायुः पवते (शत० १।८।३।१२) तस्मात् पृथगेव विद्युत् खलु मेघस्यान्तरे वायुर्मेघाद् बहिः परितो वर्तते। स मेघो मातुरन्तरिक्षस्य योनौ—अवयवे महति तेन वायुना जरायुरूपेण परिवारितः सन् बहुप्रजा विविधवनस्पतिप्रभृतीन् प्रजनयन् निर्ऋतिं पृथिवीं भूमिमापद्यते। अत्राधिदैविकेऽर्थे माताऽन्तरिक्षं निर्मीयन्तेऽस्मिन् भूतानि, योनिरन्तरिक्षं महानवयवः 'अन्तरिक्षस्य महानवयवः' इति पाठः स्यात् 'अवयवः प्रदेशः' इतरो योनिः प्राणियोनिरपि परियुतः परिवारितः।

अथाध्यात्मिकार्थः—'यः—ईं चकार सः—अस्य न वेद' यो जनो गर्भस्थापनं करोति सोऽस्य गर्भगतं दुःखं न वेत्ति 'य ईं ददर्श' हिरुक्—इह तु तस्मात् 'यः खलु गर्भदुःखं पश्यति—अनुभवति स गर्भेऽन्तर्हितोऽस्ति।' * स मातुः—योनौअन्तः परिवीतः बहुप्रजा निर्ऋतिम्—आविवेश मातुर्योनौ जरायुणा वेष्टितः कृच्छ्रापत्तिं प्राप्नोति।

इति तु सन्देहस्य स्थलं नामविषयकं दर्शितम्, अथ देवताविषयकः सन्देहोऽपि भवति तस्य स्थलं प्रदर्श्यतेऽनन्तरमेव।

---

* अन्यत्र वेदे यथोक्तम्

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम्॥
(ऋ० ४। २७। १)

शाकपूणिः सङ्कल्पयाञ्चक्रे † सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव तां न जज्ञे, तां पप्रच्छ विविदिषाणि-त्वेति। सास्मा एतामृचमादिदेशैषा मद्देवतेति।

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता। स चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत॥ ( ऋ० १। १६४। २९ )।

अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुं शब्दं करोति मायुमिवादित्यमिति वा, वागेषा माध्यमिका ध्वंसने मेघेऽधि-श्रिता। सा चित्तिभिः कर्मभिर्नीचैर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिम्। वव्रिरिति रूपनाम वृणोतीति सतः, वर्षेण प्रच्छाद्य पृथिवीं तत् पुनरादत्ते॥ ९॥

**अत्र किमपि विशिष्टमुच्यते—**

भा०—"शाकपूणिः—इत्यारभ्य····मद्देवता" इति पर्यन्तः पाठोऽनेकत्र पुस्तकेषु नोपलभ्यते। डाक्टरलक्ष्मणस्वरूपशास्त्रिणा सूचितं हि स्कन्दस्वामिकृते निरुक्तभाष्ये यत्—"शाकपूणिः सङ्कल्पयाञ्चक्रे" इति पाठो नास्ति *C. D.* पुस्तकयोः "सर्वा देवता जानामि····मद्देवताम्, इति पर्यन्तः पाठो हस्तलिखित-पुस्तकेषु नास्ति।" अतः "शाकपूणिः सङ्कल्पयाञ्चक्रे····मद्देवता" इति पाठो मूल-निरुक्तस्य न भवेत् पश्चात् कथमपि निरुक्ते प्रविष्टः स्यात्। अपरञ्च मूलनिरुक्त-स्यैवैष पाठ इत्याग्रहेऽपि वेदे न कश्चन इतिहासः कथयितुं शक्येत। केवलं प्ररोचनार्थमाख्यानं किंवदन्ती हि भवितुमर्हति यथा महाभाष्यव्याकरणे "एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नाऽन्तं जगाम बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययन-कालो न चान्तं जगाम किं पुनरद्यत्वे यः सर्वथा चिरं जीवति स वर्षशतं जीवति" ( महाभाष्य १। १। १ )। अपरं च भवतु शाकपूणिर्देवताविज्ञाने कुशलः, तेन सङ्कल्पोऽपि कृतो भवेत्—यदहं देवताः सर्वा जानामि। परन्तु कुशलस्य जनस्य मनसि किञ्चिदल्पमपि यत् संदेहवस्तु पुनरप्युपतिष्ठते, एकस्मिन्मन्त्रे सन्दिग्धा देवतोभयलिङ्गा विचारणाय मनसि तस्याऽऽगता जागरणकाले विचार-

---

† शाकपूणिः—इत्यारभ्य मद्देवता इति पर्यन्तः पाठोऽनेकेषु पुस्तकेषु नोपलभ्यते।

यतः शयनकाले वा "प्रादुर्भूता, स्वप्ने जागरणकाले वा" ( स्कन्दस्वामी )। इति जिज्ञासया मनसि हि प्रश्न उत्थितः, का त्वमिति तद्विषयिका सम्नुगेषा "अयं स शिङ्क्ते" किंवदन्त्यामन्यत्कथनं तु कविकल्पनमालङ्कारिकं वा। मन्त्रे देवता कथमुभयलिङ्गा 'अयं, सः, येन' इत्येभिः पुंलिङ्गा देवता, 'अभिव्रता, सा, भवन्ती' एभिः स्त्रीलिङ्गा देवता। पुनश्च धर्मभेदादपि सूक्तस्य देवता तु "विश्वे-देवाः" अन्नैकस्या अपि देवताया द्विरूपत्वं दर्शयते।

अथ मन्त्रार्थः—

अयं स मेघः शिङ्क्ते—शब्दायते, "शिजि अव्यक्ते शब्दे" ( अदादि० ) येन शब्दायमानेन 'थर्रा' इत्यव्यक्तं शब्दं कुर्वती, अभीवृता, अभिवृता—अभिप्रवृत्ता प्रकटीभूता माध्यमिका वाग् विद्युत्—मायुं मिनाति पुनः स्तनयित्नुं शब्दं करोति, तीक्ष्णं शब्दं करोति यद्वा मायुमिवादित्यं स्वात्मानं प्रकाशयति, ध्वंसनौ ङि—स्थाने 'औ' "सुपां सुपो भवन्तीति वक्तव्यम्" मेघेऽधिश्रिता भवति सा विद्युत्-चित्तिभिः कर्मभिः प्रज्ञावैर्विद्युद् भवन्ती, मर्त्यं मरणधर्माणं प्राणिनं निचकार नीचैः करोति भीषयति, पुनर्वव्रिं रूपं स्वरूपं प्रत्यूहते प्रत्युपसंहरति "वव्रिः—रूपनाम" ( निघ० ३ । ७ ) अर्थान्मेघवर्षणेन पृथिवीं प्रच्छाद्य पुनः स्वरूपं स्वात्मानं वाऽऽदत्ते मध्यस्थाने। अत्र मन्त्रे देवता त्वेका ह्यस्ति विद्युत्, उक्तं हि मन्त्रे साक्षात् "विद्युद् भवन्ती" अयं स शिङ्क्ते इत्यनेन भवेदसाक्षात् खलु मेघो नैघण्टुकः।

इति द्वितीयः पादः समाप्तः।

---

## तृतीयः पादः

---

हिरण्यनामान्युत्तराणि पञ्चदश। हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः॥

भा०—निघण्टुग्रन्थे समाम्नातानां क्रममपेक्ष्य पृथिवीनामभ्य उत्तराणि हिरण्यनामानि, हिरण्यस्य नामानि हेमप्रभृतीनि पञ्चदश सन्ति। नामगण-समाम्नाने कश्चन क्रमोऽपि लक्ष्यते। पृथिव्या सम्बद्धानि विविधानि वस्तूनि सन्ति तदन्तर्भवानि तद्बहिर्भवानि च। तदन्तर्भवेषु प्रधानं हिरण्यं तस्मादत्र पृथिवी-

नामभ्य उत्तरं निर्दिश्यन्ते हिरण्यनामानि, पृथिवीपृष्ठे भवानां नाम्नामपि खलु वर्णनमागमिष्यति, हिरण्यनामान्युक्त्वा, अन्तरिक्षनाम्नां पुनाम्नां तदन्तर्भवानां च वर्णनं विधाय। अस्तु। हिरण्यं कस्मात्, इत्यनेकधा निरुक्तं यास्केन। आयम्यमानं ह्रियते—इति जनाजनं ह्रियते—इति तु ह्रियते—आयम्यमानं—जनाजनं चार्थोपपत्तिप्रदर्शनम्। "हृ हरणे" (दिवादि०) धातोः "हरणं च प्रहणं प्रापणमाकर्षणम्। सुवर्णमायम्यमानं तन्त्रीप्रभृतिभिर्लम्ब्यमानं सुवर्णकारैः शिल्पिभिश्च ह्रियते—आकृष्यते। जनाजनं प्रति दानादानरूपे व्यापारे जनैर्ह्रियते गृह्यते। तस्मात्—हिरण्यं 'हृ' धातोः 'अन्यः' प्रत्ययः कृत्यश्छान्दसः गुणे कृते 'हर्—अन्यः' उपधाया अकारस्य—इकारः। हितरमणं भवतीति वा हृदयरमणं भवतीति वा अत्रोभयत्र सामासिकं निर्वचनम्। हितं सुखं रमयति संवेशयति, जने, यस्य पार्श्वे भवत्येतत्। हितरमणं हिरण्यं 'हित—रम्—कन्यन्—डित्' बाहुलकात्, 'हित र् अण्य' 'त' इत्यस्य लोपः, हितस्य रण्यं रमयितृ, हेतौ कर्तरि। षष्ठीतत्पुरुषसमासः। 'हृदयरमणम्' हृदये रमते—हृदये रमणं रमणसाधनम्, 'हृदयरम्—कन्यन् डित् सप्तमी तत्पुरुषः समासः, हृदयस्य 'हृ' भावः। 'हर्यतेः प्रेप्साकर्मणः' इच्छार्थस्य 'हर्य' धातो र्वा स्यात्। 'हिरण्यमिति' प्रयोगः। "हर्य गतिकान्त्योः" (भ्वादि०) "हर्यते. कन्यन् हिर् च" (उणादि० ५। ४४) हर्यति सुवर्णं प्राप्तुमिच्छति हि जनस्तस्मात्प्रेप्स्यं प्राप्तुमाकाङ्क्ष्यं भवति लोके लौकिकैर्जनैर्धर्माधर्माश्च। पृथिवी नाम्ना तु "गौः" इति शब्दस्य निर्वचनं कृतमासीत् वेदे तस्यानेकार्थत्वात्—निर्वचनप्रकारप्रदर्शनहेतोश्च। अत्र तु केवलं हिरण्यमित्यस्य सामान्यनाम्नो हि निर्वचनमिष्टमासीत्।

अन्तरिक्षनामान्युत्तराणि षोडश। अन्तरिक्षं कस्मादन्तरा क्षान्तं भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षयमिति वा।

भा०—नैघण्टुकक्रममपेक्ष्य पार्थिवहिरण्यनामभ्य उत्तराणि खल्वन्तरिक्षनामान्यन्तरिक्षस्य नामानि, अम्बरमित्यादीनि षोडश। अत्र प्रथमं सामान्यस्यान्तरिक्षशब्दस्य निर्वचनं करोति, पुनः सन्दिग्धपदं प्रहीष्यति। अन्तरिक्षं कस्मात्—'अन्तरा क्षान्तं भवति' विश्वस्यान्तरान्तरेऽभ्यन्तरे क्षान्तं निष्प्रतीकारं स्तब्धं निष्क्रियं तिष्ठति 'क्षान्तम्' इति क्षमूष् सहने (दिवादि०) 'कर्तरि क्तः'। 'अन्तरा—क्षम्—क्विप्' 'अन्तरा' आकारस्य—इकारादेशः। 'अन्तर्—इ—क्षम्' अन्तरिक्षम्। यद्वा 'अन्तरा—इमे रोदस्यौ—रोधस्यौ—रोधनशीले, उपर्यधोभूते द्यावापृथिव्यौ—द्यावापृथिव्योर्मध्ये क्षियति निवसति 'क्षि' निवासे (तुदादि०) 'क्षियति' इत्यध्याहारः 'अन्तरा—क्षि—डः' 'अन्येष्वपि दृश्यते—अन्येभ्योऽपि

दृश्यते वा० ( अष्टा० ३ । २ । १०१ ) 'अन्तरा' इत्यस्य—आकारस्य—इकारः । 'अन्तरिक्षम्' अनध्याहारे तु 'अन्तरा' इमे द्यावापृथिव्यौ" "अन्तरान्तरेण युक्ते द्वितीया" ( अष्टा० २ । ३ । ४ ) । यथा—त्वां च मां चान्तरा नदी, त्वां च मां च—अन्तरयति भेदयति नदी । तद्वद् दिवं च पृथिवीं चान्तरयित्वा क्षान्तं स्तब्धं वर्तते यत्—'अन्तरा—क्षम्' पूर्ववेव—अन्तरिक्षम् । अथवा शरीरेष्वन्तः—अन्तः—अक्षयो न क्षयो यस्येति, शरीराणि नश्वराणि तस्मिन्नन्यानि भूतान्यपि नश्वराणि, परन्तु तत्र नश्वरेषु शरीरेषु, शरीरकारणेषु चान्तरिक्षं त्वक्षयं तस्माद्—अन्तर्—अक्षयं सत्—अन्तरक्षयं सत्—अन्तरिक्षमुच्यते । "अन्तः—अ—क्षि—डः" "अन्येभ्योऽपि दृश्यते" इत्यनेन वार्तिकेन डः प्रत्ययः ।

तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते ॥

समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः सम्मोदन्ते ऽस्मिन् भूतानि समुदको भवति समुनत्तीति वा ॥ १० ॥

भा०—तत्रान्तरिक्षनामसु 'समुद्रः' इत्येतत्—नाम पार्थिवेन पृथिवीस्थेन समुद्रेण सह सन्दिह्यते समानरूपत्वात्समानधर्मित्वाच्च समानधर्मा उच्यन्ते । समुद्रः कस्मात्—समुद्द्रवन्ति—अस्मात्—आपः । अन्तरिक्षात्—समुद्राद् विद्युता ताडिताः—आपो मेघाः परस्परं सङ्घत्योत्तरन्ति । पार्थिवाच्च समुद्रादापः सूर्यरश्मिभिराकर्षिताः सङ्घत्य वाष्पीभूयोत्सर्पन्ति । "सम्—उद्—द्रु—डः" अपादाने "अन्येभ्योऽपि—दृश्यते" इति वार्तिकेन ( अष्टा० ३ । २ । १०१ ) । समभिद्रवन्त्येनमापः" आन्तरिक्ष्यापो वर्षणकाले नदनदीरूपेण पार्थिवं समुद्रमभिद्रवन्ति, उष्णकाले पार्थिवा आपो वाष्पीभूय—आन्तरिक्ष्यं समुद्रमभिद्रवन्ति । 'उद्' इत्यस्यार्थो 'अभि' उपसर्गेण द्योतितः । पूर्ववेव 'सम्—उद्—द्रु—डः' । 'सम्मोदन्तेऽस्मिन् भूतानि' सम्यक् खलु मोदन्तेऽस्मिन्, आन्तरिक्ष्ये भूतानि नभश्चराः पक्षिणः, पार्थिवे जलचराः मत्स्यादयः । 'सम्—मुद्—रक्' 'स्फायितः....." (उणादि० २।१२ बाहुलकात् 'रक्') । उपसर्गान्तस्य मकारस्य लोपः 'समुद्रः' । 'समुदको भवति वा' 'सम्—संहतं राशिरूपमुदकम्—अस्मिन्—समुद्रः "सम्—उद्—रः प्रत्ययश्च मत्वर्थीयः, इत्युभौ छान्दसौ तु, आन्तरिक्ष्येऽपि बहुजलदकं पार्थिवेऽपि । 'समुनत्तीति वा' आन्तरिक्ष्यः समुद्रोऽपि वर्षणेन क्लेदयति पार्थिवोऽपि संसर्गेण पृथिवीं क्लेदयति "उन्दी क्लेदने (रुधादि०) 'सम्—उन्द—रक्' कर्तरि बाहुलकात् समुद्रः ।

तयोर्विभागस्तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयाञ्चक्रे । देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति ॥

"आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् । स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥ ( ऋ० १० । ९८ । ५ ) ।

आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा । सेना सेश्वरा समानगतिर्वा । पुत्रः पुरु त्रायते निपरणाद्वा, पुन्नरकं ततस्त्रायत इति वा होत्रमृषिर्निषीदन् । ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः, तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते । देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च । देवसुमतिं देवानां कल्याणीं मतिम् । चिकित्वांश्चेतनवान् । स उत्तरस्मादधरं समुद्रम् । उत्तर उद्धततरो भवति । अधरोऽधोरः । अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा ॥

भा०—समुद्रोऽन्तरिक्षम्, समुद्रः पार्थिवो जलधिश्च 'समुद्रः' इति कथनेन हि पार्थिव एव गृह्यते वेदे, किन्त्वन्तरिक्षमपि समुद्र उच्यते वेदे । तयोर्विभागो भेदः पृथग्भावः स्पष्टोऽस्ति वेदे । तत्रैतस्मिन् विषये—इतिहासम्—इति ह-आस—'इत्थं खलु वृत्तमभूत्' इति प्रकृत्य यः प्रसङ्गः स इतिहास उच्यते । देवापिश्चार्ष्टिषेणः—शन्तनुश्चार्ष्टिषेणः—ऋष्टिषेणस्य पुत्रौ देवापिः शन्तनुश्च द्वौ कुरुवंशजौ भ्रातरौ बभूवतुः । तयोः—शन्तनुः कनीयान्—लघुर्भ्राता स्वात्मानं राज्येऽभिषेचितवान्, देवापिस्तपश्चर्यां प्रतिपन्नः । शन्तनो राज्ये द्वादशवर्षपर्यन्तं मेघो न वृष्टः—वृष्टिर्नाभूत् । "ब्राह्मणास्तं शन्तनुमुक्तवन्तस्त्वयाऽधर्मः कृतो यज्ज्येष्ठं भ्रातरमन्तरित्य—अपरिगृह्य त्यक्त्वाऽनादृत्य "अन्तरपरिग्रहे" ( अष्टा० १ । ४ । ६५ ) आत्मानमभिषेचितवान्, तस्मात्ते राज्ये मेघो न वर्षति ।' इदं श्रुत्वा शन्तनुर्देवापिं राज्येन शिशिक्ष राज्यनिमित्तेन राज्यं निमित्तीकृत्य शिष्टवान्—प्रार्थितवान् यद्वा

तस्मै त्वात्मानं समर्पितवान् "शिक्षति दानकर्मा" ( निघं० ३ । २० ) यज्ञाज्यं स्वीकुरु । देवापिः शन्तनुमुवाच तवाहं पुरोहितो भवेयं याजयेयं च त्वामिति, तस्य देवापेर्वृष्टियागस्य चैतद् वृष्टिकामसूक्तम्, तस्यैषा खल्वृगस्ति "आर्ष्टिषेणो होत्र०.....।"

वक्तव्यम्—अत्रत्यमिदं वृत्तं पठित्वाऽध्येतारो मंस्यन्ते यद् वेदे लौकिक-जनानामितिहासो विद्यते—इतिकृत्वा यास्केन नैरुक्तेनेदं वृत्तमुपस्थापितम् । परन्तु नैवं मन्तव्यम् । भवतु पक्ष एष ऐतिहासिकानाम्, न तु नैरुक्तानाम् । बहुत्र यास्कः स्पष्टं ब्रवीति हि—इत्यैतिहासिका इति नैरुक्ताः । तद्यथा—"तत्को वृत्रः, मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः" ( निरु० २ । १६ ) अत्रेदं वृत्तं तु 'समुद्रोऽन्तरिक्षम्' तथा समुद्रो जलधिः पार्थिव इत्येव न किन्तु द्वावपि समुद्र-नाम्नोच्येते वेदे, इति प्रदर्शयितुं स्वसाक्ष्यरूपेण खल्वैतिहासिकः पक्षोऽपि दर्शितो यत् तत्रापि द्वौ समुद्रौ मन्येतेऽन्तरिक्षं च समुद्रः पार्थिवश्च जलधिरिति । लौकिक-जनानामितिहासं वेदे यास्को न मन्यते । दुर्गाचार्यस्कन्दस्वामिभ्यां निरुक्तभाष्य-काराभ्यामपीत्थमेव द्योत्यते "विश्वकर्मा विमना....." ( ऋक् १० । ८२ । २ ) तत्रेतिहासमाचक्षते विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार । इति यथा चेयमात्मगतिवाचिका ऋक् तत्, एतस्मिन्नर्थे—इतिहासमाचक्षते—इतिवृत्तं परकृत्यर्थवादरूपेण यः कश्चिद् आध्या-त्मिक आधिदैविक आधिभौतिको वार्थं आख्यायते, दिष्ट्युदितार्थावभासनार्थं स इतिहास उच्यते' ( निरु० १०।२६ दुर्गाचार्यः ) वेदोपदिष्टस्यार्थद्योतनाय आध्या-त्मिकाऽऽधिदैविकाऽऽधिभौतिकार्थानामाख्यानं विवरणं ह्यत्रेतिहास उच्यते न लौकिकेतिहासो वेदे लक्ष्यते । तथा—एवमाख्यानस्वरूपाणां मन्त्राणां यजमाने नित्येषु च पदार्थेषु योजना कर्त्तव्या । एष शास्त्रे सिद्धान्तः ।....औपचारिकोयं मन्त्रेष्वाख्यानसमयः परमार्थे तु नित्यपक्ष इति सिद्धम् ।" ( स्कन्दस्वामी निरु० २ । १२ ) यदितिहासग्रन्थेषु महाभारतादिषु लौकिकजनानामितिहासो वर्णितस्तस्य वेदे वर्तमानत्वेन न भवितव्यं वेदस्तु प्राक्तनः, महाभारतादिग्रन्थस्तु पश्चाद्भवः, न हि पश्चाद्भवस्य ग्रन्थस्य वृत्तं पूर्वभवे ग्रन्थे भवितुं शक्यम् । पुनश्च तथाभूते महाभारते खल्वैतिहासिकग्रन्थे वेदस्य मान्यता यत् "नामरूपं च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥" ( महा-भारतशान्तिपर्व १२ । २५ ) भवतु तावद् यन्नाम वेदे तत्कस्य चिल्लौकिकजन-स्यापि नाम लोके रक्षितं परन्तु नाम्नां श्रुतिसामान्यमात्रतो लौकिको जनो वेदे कल्प्येतेतित्वयुक्तमेव । भवन्ति खलु वेदेऽलङ्कारा आध्यात्मिकाधिदैविकाधिभौतिक-

रहस्यप्रदर्शनाय, तान् जनाः प्ररोचनार्थमितिहासरूपे परिणमयन्ति—कल्पयन्ति तदत्र वेदस्य को दोषः ? अत्र प्रस्तुतप्रसङ्गे यो हीतिहास उक्तस्तद्विषयेऽपि न समानवर्णनम् । अत्र तु देवापिः शन्तनुश्चोभावपि—आर्ष्टिषेणौ कथितौ परन्तु बृहद्देवतायाम् "आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः, त्वग्दोषी राजपुत्रस्तु ऋष्टिषेणसुतोऽभवत् । राज्येन छन्दयामासुः प्रजाः स्वर्गं गते गुरौ ।"····( बृहद्देवता ७ । १५५–१५६ ) "न ववर्षाथ पर्जन्यस्तस्मिन् राष्ट्रे शतं समाः" ( कस्मिंश्चिद् बृहद्देवतापुस्तके ) महाभारते तु "प्रतीपस्य देवापिः शन्तनुर्वाह्लिकश्चयः पुत्राः कथिताः "प्रतिश्रवसः प्रतीपः, प्रतीपः खलु शैब्यामुपयेमे सुनन्दा नाम तस्यां पुत्रानुत्पादयामास, देवापिं शान्तनुं वाह्लीकञ्चेति । देवापिः खलु बाल एवारण्यं विवेश, शान्तनुस्तु महीपालो बभूव" (महभारत ९५।४४–४५)। वेदे लौकिकजनानामितिहासविषये विशिष्टं विवेचनं मया विरचिते "वेद में इतिहास नहीं" इति पुस्तके द्रष्टव्यम् । अत्र त्विदमेव साधनीयं यत् पूर्वभवस्य वेदस्य नाम्नां पश्चाद्भवे लौकिके ग्रन्थे तु समावेशसंभवः, परन्तु पश्चाद्भवस्य लौकिकस्य ग्रन्थस्य नाम्नां पूर्वभवे वेदे खल्वारोपणं नितान्तमयुक्तमनुचितमिति ।

मन्त्रार्थः—

'आर्ष्टिषेणो देवापिः—ऋषिः' ऋष्टिषेणस्य पुत्रः, ऋष्टिः—शस्त्रविशेषः, ऋष्टयः सेनायां यस्य स ऋष्टिषेणः, ऋष्टिभिर्युक्ता सेना यस्य वा स ऋष्टिषेणः—इति मध्यपदलोपी समासः । यद्वा—ऋष्टिमती सेना यस्य स ऋष्टिषेणः' मतुपो लोपः समासे छान्दसः । स चाधिदैविकदृष्टौ मरुद्गणः, मरुद्गणस्य ऋष्टिसेना भवति, उक्तं ह्यत्र वेदे मारुते सूक्ते "वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्ता अच्युता चिदोजसा" ( ऋ० १ । ८५ । ४ ) तथा "मरुत ऋष्टिमन्तः" ( ऋ० ३ । ५४ । १३ ) एवं वज्रसेनावतो मरुद्गणस्य पुत्रो विद्युत् "आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः" ( ऋ० १ । ८८ । १ ) यथा सहसः सूनुरग्निः, अथवा 'इषितसेनस्य पुत्रः—इषिता प्रेरिता सेना यस्य न स्थिता किन्तु सदा प्रसारिता भवति कः, स एव मरुद्गणः, तस्यैव भ्राजयो धाराः सदा प्रसरणशीला भवन्ति । एवमुभयथा निर्वचनेऽपि मरुद्गणस्य पुत्रो मरुद्गणतः प्रादुर्भूतो देवापिर्देवानामाप्तया देवानाप्नोतीत्यतः, यद्वा देवाश्चोक्ता अस्यैव सूक्तस्य प्रथममन्त्रे "बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा । आदित्यैर्वा यद्वसुभिर्मरुत्वान् स पर्जन्यं शन्तनवे वृषाय" ( १ ) बृहस्पतिः, मित्रः, वरुणः, पूषा, आदित्याः, वसवः, इत्यादीन् देवान् स्तुत्या स्तौति तदापि देवापिः, यो देवान् स्तौति स देवानाप्नोति हि स्तुत्या स्वानुकूलान् सम्पादयति, अथवा

प्रदानेन—हविष्प्रदानेन यो देवेभ्यो हवींषि प्रददाति स देवानाप्नोति । पुनर्देवा अपि वरं प्रयच्छन्ति । एवमत्राधिदैविकदृष्ट्या देवापिर्विद्युत्, वैदिकनाम्ना—इन्द्रः । "यदशनिरिन्द्रः, ( कौ० ६ । ९ ) देवापिर्मध्यस्थानप्रभवत्वाद्विद्युत् । वर्षाधिपते बृहस्पतेः सकाशाद् विद्युद् द्युमतीं वाणीं स्तनयित्नुरूपां प्राप्नोति "अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते" ( ३ ) विद्युति दीप्तिः स्तनयित्नुघोषश्च बृहस्पतित आगच्छतः । बृहस्पतिर्वर्षाधिपतिः "ऊर्ध्वा दिग्बृहस्पतिरधिपतिः श्वित्रो रक्षिता वर्षमिषवः ।" ( अथर्व० ३ । २७ । ६ ) । स च ऋषिः—गतिशीलत्वात् प्रकाशशीलत्वात् । होत्रं निषीदन् वर्षकामयज्ञं तत्र वर्षकामस्यर्त्विग्भिरङ्गीकृतः सन्निन्द्रः । इन्द्रो हि विद्युत्—श्वित्रः "यदशनिरिन्द्रः" ( कौ० ६ । ९ ) "श्वित्रो रक्षिता वर्षमिषवः" ऋत्विग्भिस्तेजिता विद्युद्—होमैः । स देवापिर्विद्युदाख्यो देवानां कल्याणीं मतिं मेघवर्षणाय चेतितवान् स्वानुकूलं कृतवान्, अथ स उत्तरस्मादुपरिष्टात् समुद्रात्—अधरं निम्नं समुद्रं दिव्याः—दिवि—आकाशेऽन्तरिक्षे भवा वर्षणयोग्या अपः—इतस्ततो यत्र तत्रासृजत्—अक्षारयत् । इति मन्त्रार्थः ।

वृष्टिकामयज्ञेऽनेकदेवानामुपयोगो भवति, ते च विधानेन विज्ञानेन चोपयोक्तुं शक्यन्ते । एतद् वृष्टियागविज्ञानमत्र मन्त्रे दर्शितम् ।

सेना सेश्वरा—इनेन सह "इन ईश्वरनाम" ( निघ० २ । २२ ) इन ईश्वरो राजा भवेत् तदैव सेना भवति राजा सेनामपेक्षते, सेना चेश्वरं राजानमपेक्षते । अथवा सेना समानगतिः—समानम्—इनम्—अयनं गमनं गतिर्यस्या सा सेना "इण् गतौ" ( अदा० ) ततो भावे नक् औणादिकः "इण्सिञ्जिदीङुष्यविभ्यो नक्" ( उणा० ३ । २ )—उणादयो बहुलमिति बहुलार्थेऽपि । गतिरत्र चलनं तच्च जयार्थम्, चलनं व्यवस्थया पादविहरणं यामः ( Marching ) पुत्रः पुरु त्रायते—बहु त्रायते रक्षति सम्बन्धिजनेषु तदपेक्षया । पुरु त्रः सन् पुत्रः 'रु' इति लोपेन, निपणात्—वा "पॄ पालनपूरणयोः" ( क्र्यादि० ) निपृणाति पालयति हि स पितरम् । 'नि' उपसर्गोऽर्थनिर्वचने "पुवो ह्रस्वश्च' ( उणा० ४ । १६५ ) बहुलमिति 'पॄ'—'क्त्र' । ऋकारस्य 'उकारः' । अथवा 'पुत्' नरकं दुःखं ततस्त्रायते—इति पुत्रः 'पुत् त्रः' अन्तलोपेन । ऋषिर्भवति दर्शनात् साक्षात्करणात् स्तोमान् मन्त्रान् ददर्श, इति—औपमन्यव आचार्यो मन्यते, हेतुं प्रदर्शयति "तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् त ऋषयोऽभवन् "तपस्यमानान्''''ऋषीणामृषित्वम्"—( तै० आ० २ । ८ ) 'तदृषीणामृषित्वम्' इति विज्ञायते । ब्राह्मणवचनात् । तपस्यमानान् ऋग्यजुःसामाख्यं त्रयं ब्रह्म—अकृतकं स्वरूपतो नित्यं

ज्ञानात्मकम्—अभिप्रायं साक्षादभवत् । सुमतिं शोभनां कल्याणीं मतिम् । चिकित्वान् चेतनावान् ज्ञानवान् स प्रज्ञातवान् । उत्तर उद्धततरः—उद् हतः—उद्गतः, उद्गततरः, अधरः—अधोरः—अधस् 'रो' मत्वर्थीयः । अधः—न धावति, 'अ धाव्—असुन् नञ्पूर्वात् "धावु गतौ" ( भ्वादि० ) ततः "सार्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) स च डित् कर्तव्यः । ऊर्ध्वगतिः प्रतिषिद्धाऽत्र ।

तस्योत्तरा भूयसे निर्वचनाय—

यद्दे॒वापि॒: शन्त॑नवे पु॒रोहि॑तो हो॒त्राय॑ वृ॒तः कृ॒पय॒न्नदी॑धेत् ।
दे॒व॒श्रुतं॑ वृष्टि॒वनिं॒ ररा॑णो बृह॒स्पति॒र्वाच॑मस्मा अयच्छत् ॥
( ऋक्० १० । ९९ । ७ )

शन्तनुः शन्तनोऽस्त्विति वा, शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायत् । देवश्रुतं देवा एनं शृण्वन्ति । वृष्टिवनिं वृष्टियाचिनम् । रराणो रातिरभ्यस्तो बृहस्पतिर्ब्रह्मासीत् सोऽस्मै वाचमयच्छत् बृहदुपव्याख्यातम् ॥ १२ ॥

भा०—तस्यैतस्य वर्षकामस्य यागस्याधिकनिर्वचनायैषाऽनन्तराऽप्यृगस्ति "यद्देवापिः शन्तनवे....।" यथाऽऽधिदैविकदृष्ट्या मध्यस्थानीय आकाशीयो देवो विद्युन्नामा वृष्टेः कर्ता देवापिरस्ति तथैवाधिदैविकदृष्ट्या पृथिव्यन्तर्हितः पार्थिव उष्मा—ओषधिवनस्पतीनां प्रादुर्भावयिता शन्तनुरस्ति । आलङ्कारिकत्वेन स भौमोष्मा यद्वा पार्थिव उष्मा पृथिवीस्थाय जीवमात्राय, हे तनो ! जीव ! शं कल्याणमस्तु, इति निरुक्त्या शन्तनुरस्ति, पार्थिव उष्मा पृथिवीस्थजीवाय कल्याणं कांक्षति ह्योषधिवनस्पतीन् प्रादुर्भाव्य तेषु रसं च सञ्चार्य, परन्तु वृष्टिमन्तरेण कुतो भवेत् कार्यमेतत् । तस्मात् 'यत्—यदार्थे' यदा शन्तनवे पार्थिवोष्मणेऽन्तर्हिताग्नये होत्राय वृष्टिप्रदानकर्मणे "हु दानादनयोः" ( जुहो० ) देवापिर्विद्युद् वैदिकनामत इन्द्रो वृतः पुरोहितरूपेण वृतः सन् पुरो यज्ञकर्मणि दधति धारयन्ति वृणन्ति—एतमिति कृपयन् कृपायमाणः—इत्यालङ्कारिकभाषायाम् । अदीधेत्—अन्वध्यायत्—अनुध्यातवान् यद् वृष्ट्याऽवश्यं भवितव्यम् । भवतु वृष्टिरिति, तदास्मै देवश्रुतं देवा एनं शृण्वन्ति तस्मै देवैः श्रुतायाङ्गीकृताय वृष्टिवनिं वृष्टिवनये वृष्टियाचिने 'अत्रोभयत्र' चतुर्थ्यर्थे द्वितीया व्यत्ययेन 'अस्मै' इति विशेषणबलात् । बृहस्पतिः—स्तनयित्नुवाचः स्वामी । मध्यस्थानीयोऽत्र वर्षकर्मणि ब्रह्मा भूत्वा रराणो वृष्टिं ददत् प्रयच्छन् प्रदानहेतोः "रा दाने" ( अदादि० ) स

चाभ्यस्तो व्यत्ययेन श्लौ प्रयुक्तः "जुहोत्यादिभ्यः श्लुः—बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) वाचं स्तनयित्नुं वाचमयच्छत् दत्तवान् । यद् वाचः प्राप्तये सूक्तस्य तृतीयमन्त्रे प्रार्थनासीत्—"अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषिराम् । यया वृष्टिं शन्तनवे वनाव दिवो द्रप्सो मधुमाँ आविवेश ॥" ( ३ ) बृहदुपाख्यातम् । यास्कः कथयति यदत्र मन्त्रप्रसङ्गे बृहदुपाख्यातं महदलङ्कृतं वर्णनमस्ति । उपाख्यानमलङ्कारः ॥

अत्र मन्त्रद्वये वृष्टेर्विज्ञानं प्रदर्शितम्, आकाशपृथिव्योर्देवापिशन्तनू विद्युद्भौमोष्माणौ वृष्टेर्निमित्ती भूतौ स्तः । आकाशाद् विद्युद् वृष्टिं प्रवर्तयेत् तदौषधिवनस्पतयो जायेरन्, पृथिवीतः—उष्मा भौमोष्मा—ओषधिवनस्पतीनां सूक्ष्मं सारमाकाशं प्रत्युद्गमयेत् तदा वृष्टेरागमनं भवेत् । एवं विद्युदुष्माणौ वैदिकनाम्ना देवापिशन्तनू स्तः । अगस्त्यसंहितानामकस्य पुरातनवैज्ञानिकग्रन्थस्य परिभाषायां मित्रावरुणौ वृष्टेर्निमित्ती भूतौ स्तः, मित्र आकाशीय आकाशोन्मुखी प्रत्युद्गमनशीलः, वरुणः—पार्थिवः पृथिवीनिमुखी पृथिव्यां प्रसरणशीलः प्राणिनां जीवनहेतुर्वायुः । महर्षिभरद्वाजनिर्मितस्य यन्त्रसर्वस्य वैमानिकप्रकरणप्रोक्तपरिभाषायां 'द्रवः' 'द्रवणं' प्राणनं चेत्याख्ये जलस्य द्वे शक्ती स्तः । अद्यतने पाश्चात्यविज्ञाने "हाईड्रोजन ओक्सिजन" इति नामतः प्रसिद्धी कृतौ द्वौ वायू स्तः, ययोर्मेलनात् खलु जलं सम्पद्यते । एवं वृष्टिविज्ञाने पृथिवीस्थः शन्तनुर्भौमोष्मा, वरुणः, प्राणनम्, 'ओक्सिजन' इत्याख्यं तत्त्वम्, एते समानरूपा यद्वा कार्यकारणभावं प्राप्ताः पश्चिमपश्चिमः पूर्वपूर्वस्य कार्यं, पूर्वपूर्वः पश्चिमपश्चिमस्य कारणम् । तथैव आकाशस्थो यद्वा मध्यस्थानस्थो देवापिरभ्रदलान्तर्गतो विद्युन्मयं तत्त्वम् । मित्रः, द्रवः—हाईड्रोजनतत्त्वम् । एते समानरूपा यद्वा कार्यकारणभावप्राप्ताः पूर्वपूर्वः पश्चिमपश्चिमस्य कारणं पश्चिमपश्चिमः पूर्वपूर्वस्य कार्यम् । भवतु तावत्' देवापिशन्तन्वोर्मित्रावरुणयोर्द्रवप्राणनयोः—हाईड्रोजन—ओक्सिजनतत्त्वयोर्मेलने वृष्टिर्वा जलं वा सम्पद्यते । विद्युत्प्रेरणया मध्यस्थानीयाभ्रस्य भौमोष्मप्रेरणया—ओषधिवनस्पतिस्थितसूक्ष्मरसस्य मेलनाद् वृष्टिर्भवति—इत्यायातम् । अत एवौषधिवनस्पतिभिर्यज्ञो वृष्टिकामोऽनुष्ठेयः कश्चन वैज्ञानिकप्रयोग आश्रणीयः । आधिभौतिकदृष्ट्या तु अद्वये तात्पर्यमेतद् ग्राह्यं यत् कस्य चिद्राष्ट्रस्य राजा स्याद्दष्टिमत्सेनया शस्त्रास्त्रवत्सेनया तथा प्रगतिशीलसेनया युक्तः । तस्य तथा तद्राष्ट्रस्य च पोषणाय सहाय्याय सहयोगाय वा देवापिशन्तनू विद्यावान् अन्नवान् च गणौ । ताभ्यां राष्ट्रे ज्ञानवृद्धिश्च भवेद् धान्यसिद्धिः समृद्धिश्च भवेत् । तयोर्गणयोर्न कदापि विरोधः स्यात् । धान्य-

साधकानां यजमानत्वेन भवितव्यं विद्यावतां पौरोहित्येन भाव्यम् । परस्परं पवित्रभावनाऽनुष्ठेया । राजनीतिक्षेत्रे विशेषेतव्यमिदमपि यद् विदुषो महात्मनोऽमात्यादिविदुषाममहात्मनां राज्येन न भवितव्यं तादनारस्य तथाभूते राज्ये राष्ट्रे वा न कदापि सुखस्य शान्तेर्वृद्धिर्भविष्यति किन्तु दुःखस्याशान्तेरनाचारस्य भ्रष्टाचारस्याधर्मस्य प्रवृत्तिर्वृद्धिश्चैव भविष्यति । अतो ब्राह्मणानां विदुषां महात्मनां सहयोग आवश्यकः । अतः सत्ताधिकारिसेनायुक्तो राजा विद्वद्गणो विद्वत्सभा प्रजागणश्च मिलित्वा यथावद् राज्यं चालयितुमर्हन्ति नान्यथा ।

इति द्वितीयाध्यायस्य तृतीयः पादः ।

---

## चतुर्थः पादः

---

साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च । यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः ।

भा०—अन्तरिक्षनामभ्य उत्तराणि 'स्वः' इत्येवमादीनि षट् साधारणानि नामानि सन्ति, कस्य वस्तुविशेषस्य नामानीति नोक्तं तर्हि साधारणानि कथनेन किं लक्ष्यते ? पृथिवीत उत्तराणि त्वन्तरिक्षनामान्यासन् तद्वदन्तरिक्षलोकत उत्तरं तु द्युलोकनामभिर्भवितव्यम्, सन्ति खलु दिवो नामानि परन्तु तानि दिव एव विशिष्टानि नामानि न किन्तु दिवश्चाप्यन्यस्यापि नामानि सन्ति कस्यान्यस्य दिवा सम्बद्धस्यादित्यस्य भवितुमर्हन्ति तदुक्तं ह्याचार्येण दिवश्च—आदित्यस्य चेति । अत्र प्रसङ्गस्तु दिवो नाम्नां परन्त्वादित्यस्यापि नामान्येतानि, यानि त्वस्यादित्यस्य प्राधान्येन स्वीयानि विशिष्टानि नामानि तानि त्वग्रे तत्प्रकरणे दैवतकाण्डे व्याख्यास्यामः ।

आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वादितेः पुत्र इति वा ।

भा०—'स्वः' इत्यादीनि साधारणत्वप्रसङ्गे यस्यादित्यस्य नामानि स पुनरादित्यः कस्मात् तदत्र निरुक्तकार आह यत् 'आदत्ते रसान्' आदत्ते—इति—आदित्यः कर्तरि कारके—आदाता—ग्रहीता । किमादत्ते रसान् पृथिवीतो रसान्—आदत्ते रश्मिभिरित्यर्थः । 'आ दा यक्' औणादिकः, दा इत्यस्य दित्—आदेशः । अर्थनिरुक्तिः—आदत्ते रसान् भौमान्, ज्योतिषां नक्षत्राणां भासं प्रकाशमादत्ते दिने । भासा स आदीप्तो भवति 'आ दीप् यक्' 'दीप्' इत्यस्य 'दित्' आदेशः ।

'अदितेः पुत्रः' आरम्भसृष्टावदितेः खण्डरहितस्याग्नेः खण्डभूतः । "अग्निरप्यदितिरुच्यते" ( निरु० ११।२३ ) "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ( अष्टा० ४ । १ । ८५ ) ।

अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्यमादितेयमदितेः पुत्रम् ।

भा०—आर्चाभ्याम्नाये—ऋचां समूह आर्चः—तस्याभ्याम्नानं यस्मिन् स आर्चाभ्याम्नाय ऋग्वेदः । ततोऽस्य—आदित्यस्य 'आदितेयस्य' अदितेः पुत्रस्याल्पप्रयोगं नाम भवति तत्खलु सूक्तभागेव सूक्तेऽध्ययनमात्राय न हि देवतात्वेन हविर्भाग् भवति हविष्कर्मणि यत्खलु नाम प्रयुक्तमृग्वेदे "सूर्यमादितेयम्" ( ऋ० १० । ८८ । ११ ) अत्र मन्त्रे 'आदित्यः' इति नाम्ना वर्णनं नास्ति किन्तु 'आदितेयः' इति नाम्नास्ति ।

एवमन्यासामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति ।
तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति ।

भा०—यथा 'आदितेयः' नाम्ना 'आदित्यः' अदितेः पुत्रत्वात् स लक्षितस्तथान्यासामपि देवतानाम्—आदित्यनामप्रकथनपूर्विकाः स्तुतयो यद्वाऽऽदित्योनामेति प्रसिद्धिं कुर्वत्यः स्तुतयो भवन्ति । तद्यथा मित्रस्य, वरुणस्य, अर्यम्णः, दक्षस्य, भगस्य, अंशस्य ।

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥
( ऋ० २ । २७ । १ )

अस्मिन् मन्त्रे पूर्वोक्तास्ते मित्रप्रभृतयः सन्ति ते मन्त्रे आदित्या उक्ताः । मन्त्रस्य व्याख्यामग्रे ( निरु० अ० १२ । पा० ४ । खं० ३६ ) स्वयं यास्कः करिष्यति । आदितेयं विहाय कुत्रापि—आदित्यनामतस्तस्य स्वतन्त्रा स्तुतिर्न विद्यते किन्त्वन्यासां देवतानां विशेषणभूतेन—आदित्यनाम्ना एकद्विबहुवचनेषु प्रयोगाः—उपलभ्यन्ते । बहुवचने तूदाहरणं दत्तम् ।

अथापि मित्रावरुणयोः "आदित्या दानुनस्पती" ( ऋ० २ । ४१ । ६ ) दानपती ।

भा०—मन्त्रस्य देवता मित्रावरुणौ स्तः, न त्वादित्यौ । अथ च मित्रावरुणयोरादित्यनामतः स्तुतिः । आदित्या—आदित्यौ दानुनस्पती दानपती 'दाण् दाने'

(जुहो०) ततः "दाभाभ्यां नुः" ( उणादि० ३ । ३२ ) 'दानु' नपुंसकं छान्दसं बाहुलकाच्च भावे नु प्रत्ययः । अतो मन्त्रात् पूर्वस्मिन् मन्त्रे मित्रावरुणौ प्रस्तूयेते तयोरभिधानमत्र 'आदित्या' पूर्वमन्त्रे "अयं वां मित्रावरुणा सुतः सोमः" ( ऋ० २ । ४१ । ४ ) ।

समग्रमन्त्रस्तदर्थश्च—

ता सम्राजा घृतासुती आदित्या दानुनस्पती ।
सचेते अनवह्वरम् ॥

तौ मित्रावरुणौ प्रेरणशक्तिमान्—आकर्षणशक्तिमांश्चोभौ जलप्रसवनस्य कर्तारौ पृथिवीत आकाशं प्रति—आकाशात् पृथिवीं प्रति जलस्य प्रसारयितारौ—आदित्यौ-अखण्डज्योतिष उत्पन्नौ सूर्यात्मानौ स्वकर्मणा प्रकाशान्नदानस्य स्वामिनौ सम्यग्राजमानौ विश्वमनवह्वरम्—अनवकौटिल्यमनवच्छिन्नभावं सेवेते ।

अथापि मित्रस्यैकस्य—"प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन" ( ऋ० ३ । ५९ । २ ) इत्यपि निगमो भवति ॥

भा०—अथ च मित्रस्य केवलस्य—आदित्यो नाम । अत्र 'प्र स मित्र ! इति सम्बोधनं तस्यैव 'आदित्य !' नामतः सम्बोधनम् । इत्यपि आदित्यनामतो मित्रस्य निगमो मन्त्रे प्रयोगोऽस्ति ।

समग्रमन्त्रस्तदर्थश्च—

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥

मित्र ! आदित्य ! हे सर्वप्रेरक नियन्तः ! अदितेरखण्डसुखसम्पत्तेः स्वामिन् प्रभो ! यो मनुष्यस्ते तुभ्यं शिक्षति स्वात्मानं प्रददाति समर्पयति "शिक्षति दानकर्मा"....( निघ० ३ । २० ) । स प्रयस्वान्—अन्नवान् भोगवान् त्वदानन्दभोगवान् भवति तत्प्राप्त्या च बलवान् भवति । एवं त्वय्यर्पितः स त्वया रक्षितः सन् केनापि न हन्यते न पराजीयते न चैनं पापं प्राप्नोति समीपात्स्वान्तस्तो दूराद् बहिस्तो वा । इत्यध्यात्मम् ।

अथाधिदैवतम्—

मित्र ! आदित्य ! हे प्रेरणाकर्षणधर्मोपेत ! आदित्य ! अखण्डज्योतिष उत्पन्न सूर्य ! यस्तव ज्ञानं शिक्षति गृह्णाति स मनुष्यः प्रयस्वान् प्रज्ञानवान् भवतु—प्रभवति । स मान्येन ज्ञानक्षेत्रे हन्यते न पराजीयते न पुनरज्ञानं प्राप्नोति समीपात् समीपविषयकं न दूराद् दूरविषयकम् ।

अथापि वरुणस्यैकस्य—"अथा वयमादित्य व्रते तव ।" ( ऋ० १ । २४ । १५ ) व्रतमिति कर्मनाम वृणोतीति सतः ॥ इदमपीतरद् व्रतमेतस्मादेव निवृत्तिकर्म वारयतीति सतः ॥ अन्नमपि व्रतमुच्यते यदावृणोति शरीरम् * ॥१३॥

भा०—अथ च वरुणस्य केवलस्य आदित्यनाम । "उदुत्तमं वरुण····अथ वयमादित्यव्रते", "व्रतं कर्मनाम" ( निघं० २ । १ ) । वृणोति स्वीकरोति हि जनस्तत् कर्माचरितुम् । "वृञ् वरणे" ( स्वादि० ) वृ–अतच् कित्, इदमपि भिन्नं व्रतं भवत्येतस्मादेव निवृत्तिरूपं कर्म वृञ् धातोर्णिजन्ताद्–अहिंसादि † इति वारयति खलु दोषात् "वृञ् आवरणे" ( चुरादि० ) अन्नमपि व्रतमुच्यते यतः शरीरमावृणोति–पोषयति ।

समग्रमन्त्रस्तदर्थश्च—

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥

हे वरुण—आदित्य ! अदितेरखण्डसुखसम्पत्तेः स्वामिन् ! त्वमस्मत्तोऽविवेककृतमज्ञानकृतं कारणशरीररूपं पाशं बन्धनमुच्छ्रथयोच्छिन्धि मध्यमं वासनाकृतं सूक्ष्मशरीररूपबन्धनं विश्रथय विच्छिन्धि, अधमं भोगकृतं स्थूलशरीररूपं बन्धनमवच्छिन्धि, अथानन्तरं वयं पापरहिताः सन्तस्तव व्रते ध्यानोपासनादौ प्रवृत्ताः—अदितये–अखण्डसुखसम्पत्तिरूपायै मुक्त्ये–अधिकारिणो भवेम । इत्यध्यात्मम् ।

अथाधिदैवतम्—

हे वरुण आदित्य ! आकर्षणधर्मवन् ! अखण्डज्योतिषस्पुञ्ज सूर्य ! त्वमस्मत्तः स्वाकर्षणपाशमुत्तममुच्छिन्धि, मध्यमं विच्छिन्धि, अधममवच्छिन्धि, पुनर्वयं पापरहिताः सन्तस्तव नियमे प्रकाशे वर्तमानाः खल्वदितयेऽस्मदभीष्टाखण्डज्योतिषे

* "व्रतमिति कर्मनाम निवृत्तिकर्म वारयतीति सत इदमपीतरद् व्रतमेतस्मादेव वृणोतीति सतोऽन्नमपि व्रतमुच्यते यदावृणोति शरीरम्" इति क्वचित् पाठः ।

† अहिंसादयोऽपि व्रतानि सन्ति तानि च देशकालादिभिरप्रतिबद्धानि महाव्रतान्युच्यन्ते । उक्तं हि "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् (योग० २ । ३१) ।

परमात्मने तत्प्राप्तिपात्ररूपा भवेम । "सूर्यद्वारेण प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ।" ( मु० १ । २ । ११ )

स्वरादित्यो भवति सु अरणः सुईरणः । स्वृतो रसान् । स्वृतो भासं ज्योतिषां । स्वृतो भासेति वा । एतेन द्यौर्व्याख्याता ॥

भा०—आदित्यविषये प्रसक्तानुप्रसक्तकथनानन्तरमथेदानीं 'स्वः' आदि-साधारणनाम्ना प्रकृतो विषयः प्रस्तूयते । "स्वः" आदित्यो भवति । 'सु—अरणः' सुपूर्वकात्—"ऋ गतिप्रापणयोः" ( भ्वादि० ) धातोः "अन्येभ्योऽपि दृश्यन्ते ( अष्टा० ३ । २ । ७५ ) इति विच्—प्रत्ययः । 'सु अर्' स्वर्—स्वः, सु—अरणः सूर्यः । तस्य प्रकाशात्मकत्वात्—सुगमतया साक्षात् प्राप्नोति सर्वान्, सर्वैं र्वा प्राप्यते 'सु ईरणः' 'सु ईर्' ( अदादि० ) ततो विच् । ईकारस्य—अकारादेशः । सुप्रेरयिता—लोकान् गमयिता । 'स्वतो रसान्' पृथिवीस्थपदार्थानां रसान् प्रति तानादातुं स सम्यक्—ऋतः प्राप्तो भवति । 'सु—ऋ, विच्' भूते, यद्वा ज्योतिषां ग्रहनक्षत्राणां भासं स्वृतो दिने ग्रहितुं सम्यक् प्राप्तः । अथवा स्वृतो भासा ज्योतिषा सम्यक्—ऋतः प्राप्तः पूर्णः । एतेन द्यौर्व्याख्याता । अनेन निर्वचनप्रकारेण द्यौरपि व्याख्याता विज्ञेया । ग्रहनक्षत्रैः सह द्यौः प्रकाशमयी भवति । 'सु अरणा रात्रौ साक्षात् प्राप्ता भवति । ग्रहनक्षत्राणां प्रेरयित्री भवति । तस्यां तानि गच्छन्त्या-गच्छन्ति हि तेषां रसान् गुणान् प्राप्ता हि द्यौः, तेषां भासमपि प्राप्ता । ज्योतिषा सम्यक् प्राप्ताऽपि भवति हि ।

पृश्निरादित्यो भवति-प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान् । संस्पृष्टा भासं ज्योतिषां । संस्पृष्टो भासेति वा ॥ अथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥

भा०—साधारणनामसु द्वितीयं नाम 'पृश्निः' आदित्यो भवति । कुत इति निरुच्यते—प्राश्नुत एनं वर्णः, एतं प्रकर्षेण व्याप्नोति वर्णः शुभ्रो वर्णः, इति नैरुक्ताः । "घृणि पृश्निपार्ष्णिचूर्णिभूर्णयः" ( उणादि० ४ । ५२ ) निप्रत्ययान्ता निपात्यन्ते । तत्र 'प्र—अश् नि' प्राश्निः पूर्वापरदीर्घादेशयुक्तस्य रेफस्य सम्प्रसारणं भवति 'पृश्निः' इति नैरुक्ता मन्यन्ते । अन्ये तु स्पर्श धातोः प्रयोगं मन्यन्ते यत् संस्प्रष्टा रसान् स्वरश्मिभीरसान् संस्पृशति इति तच्छीलस्तानादातुं तथा ज्योतिषां ग्रहनक्षत्राणां भासमपि संस्पृशतीति तच्छीलः, दिने स्वस्मिन् नेतुं भासाऽपि निरन्तरं संस्पृष्टा द्यौश्चापि ज्योतिर्भिर्ग्रहनक्षत्रैः संस्पृष्टा भवति पुण्यकृद्भिर्जनैश्च । पुण्यकृतामेव द्युलोको न पापकृतामिति प्रसिद्धिः "असुर्या नाम ते लोका अन्धेन तमसा वृताः ।" ( यजु० ४० । ३ ) ।

नाक आदित्यो भवति नेता रसानां नेता भासां ज्योतिषां प्रणायः। अथ द्यौः, कमिति सुखनाम, तत्प्रतिषिद्धं प्रतिषिध्येत। "न वा अमुं लोकं जग्मुषे किं च नाकम्" (काठक सं० २१। २)।

भा०—'नाकः' आदित्यो भवति नेता रसानां पृथिवीस्थरसवतां पदार्थानां तथा भासां दीप्तानां रश्मीनां नेता सर्वत्र ज्योतिषां ग्रहादीनां च प्रणयः प्रणायको गतेर्विधायकः, यद्वाऽऽश्रयः। तस्यैव प्रकाशेन सर्वाणि ग्रहनक्षत्राणि प्रकाशन्ते। अथ द्यौः कथं 'नाकः' उच्यते 'कम्' इति सुखस्य नाम तत्प्रतिषिद्धम्—अकम्—दुःखं तद् दुःखं प्रतिषिध्येत—प्रतिषिध्यते। 'न—अकम्—नाकम्—सुखमेव, न दुःखलेशोऽपि। अत्र प्रमाणं दीयते "न वा अमुं" अमुं लोकं गतवते किमपि नैव—अकं तस्मात् तत् खलु नाकम्।

गौरादित्यो भवति-गमयति रसान्, गच्छत्यन्तरिक्षे। अथ द्यौर्यत् पृथिव्या अधि दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति॥

भा०—'गौः' आदित्यो भवति यतो हि स ओषधिषु पाकतो रसान् गमयति प्रापयति, अन्तरिक्षे गगने गच्छति। गौरादित्य इत्युदाहरणं पश्चाद् गतम् (निरु० अ० २। पा० २ खं० ६) "उतादः परुषे गवि सूरश्चक्रं हिरण्यं। न्यैरयद् रथीतमः॥" (ऋ० ६। ५६। ३) अथ द्यौर्गौर्भवति यतः सा पृथिव्या उपरि दूरं दूरपर्यन्तं गता भवति यतश्चास्यां ग्रहनक्षत्राणि गच्छन्ति।

विष्टबादित्यो भवति, आविष्टो रसान्। आविष्टो भासं ज्योतिषाम्। आविष्टो भासेति। अथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च॥

भा०—'विष्टप्' आदित्यो भवति यतो हि रसान् समन्ताद् विष्टः प्राप्तः तानादातुं प्रसारयितुं प्रवर्धयितुं वा, ग्रहनक्षत्राणां भासं प्रकाशमाविष्टः समन्तात् प्राप्तो यदस्यैव प्रकाशेन तत्र प्रकाशः। अथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च पूर्ववत्। "विटपविष्टपविशिपोलपाः" (उणा० ३।१४५) कप् प्रत्ययान्तो निपातितः 'विष्टपः' 'विश् कप्' प्रत्ययस्य तुट् च।

नभ आदित्यो भवति नेता रसानां भासां ज्योतिषां प्रणयोऽपि वा भ न एव स्याद् विपरीतो न न भातीति वै तेन द्यौर्व्याख्याता॥ १४॥

भा०—'नभः' आदित्यो भवति रसानां नेता भासां स्वरश्मीनां च नेता ग्रहनक्षत्राणां च प्रणय आश्रयश्चालकश्च। इत्थम्–"णीञ् प्रापणे" ( भ्वादि० ) "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) इति–असुन् प्रत्ययः 'नय्–अस्' यकारस्य भकारो यथा नह धातो हंकारस्य भकारः ( उणा० ४ । २११ ) अथवा "भा दीप्तौ" ( अदादि० ) 'भनः' एव स्याद् विपरीतो भासते–इति 'भ' नक्षत्रम्। भगणः–नक्षत्रगणः, भानि नक्षत्राणि। 'भा–ड' "अन्येभ्योऽपि दृश्यते–वा" ( अष्टा० ३ । २ । १०१ ) इति डप्रत्यये 'भ' नक्षत्रम्। भानां नक्षत्राणां नेता 'भनः' उक्तं यथा भासां नेता 'भ–नी–डः।' भन एव नभो विपरीतःसन्। अथवा न न भाति–न भाति न, अवश्यं भाति, तदा 'नभः'–'न–अभः' अतो गुणे पररूपेण नभः, लुप्तो वा पूर्वोऽकारः। एतेन निर्वचनप्रकारेणैव' द्यौ र्व्याख्याता विज्ञेया॥

इति द्वितीयाध्यायस्य चतुर्थः पादः।

---

## पञ्चमः पादः

---

रश्मिनामान्युत्तराणि पञ्चदश। रश्मिर्यमनात् तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः॥

भा०—'स्वः' इत्येवं दिवः–आदित्यस्य च नामान्युक्त्वा द्युलोकावधिं च स्पृष्ट्वेदानीमवरोहणक्रमोऽवलम्ब्यते तत्रादित्यसम्बद्धानि प्रथमं रश्मिनामानि तत उत्तराणि च खेदयः प्रभृतीनि पञ्चदश सन्ति। रश्मिर्यमनात्–रश्मेर्यमनं नियमनं कार्यमस्ति। यमनादित्यर्थकथनं रश्मिभिर्यमनं नियमनं भवति लोकानामपां वा तथाऽश्वानां च। रश्मिस्तु "अश्नोतेरश् च मिः" ( उणा० ४ । ४६ ) "अशूङ् व्याप्तौ" ( स्वादि० ) अश्नुवते व्याप्नुवन्ति संहन्ति नियच्छन्ति ये ते रश्मयः। तेषां प्रथमानि पञ्च 'खेदयः, किरणाः, गावः, रश्मयः अभीषवः' नामानि त्वश्वरश्मिभिः सह समानि नामानि सूर्यरश्मीनामश्वरश्मीनां च समानि॥

दिङ्नामान्युत्तराण्यष्टौ, दिशः कस्माद् दिशतेरासदनादपि वाऽभ्यशनात्। तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति। काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति काष्ठा उपदिशो भवन्तीतरेतरं क्रान्त्वा भवन्त्यादित्योऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्याज्यान्तोऽपि काष्ठोच्यते क्रान्त्वा स्थिता

भवन्तीति स्थावराणाम् । ( अस्थावराणां काष्ठाः कास्थाः-
तासाम् * )—१५ ॥

"अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आ शयदिन्द्रशत्रुः ॥"
( ऋ० १ । ३२ । १० )

भा०—'आताः' प्रभृतीनि दिङ्नामानि खल्वादित्यसम्बधित्वेन रश्मिप्रचारानन्तरभावित्वेन सन्ति तस्मात् तान्युच्यन्ते यान्यष्टौ सन्ति । दिशः "दिश अतिसर्जने" ( तुदादि० ) धातोः प्रयोगः क्विपि । ताः खल्वतिसृजन्ति स्वान्तन्त्र्येण गन्तुमवकाशं प्रयच्छन्ति हि । जनैश्च दिश्यन्ते सङ्केत्यन्ते हि ता गमनाय । अपि वा । आसदनात् † आसीदन्ति–आश्रयन्ति हि सर्वे पदार्था लोकाश्च याः, इत्यर्थप्रदर्शनम् । न तु निर्वचनप्रदर्शनं निर्वचनप्रदर्शने तु 'आशदनात्' इति किञ्चिन्निकटम् । उपसर्गस्योपेक्षा 'शद्' वर्णविपर्ययेण 'दश्' पुनरिकारोपजनेन 'दिशः ।' 'अभ्यशनाद्वा' अथवा 'अभ्यशनाद् व्याप्तत्वात् खलु दिशः सर्वत्र व्याप्ताः सन्ति हि, इत्यप्यर्थप्रदर्शनम्' निर्वचनकल्पनायामुपसर्गस्योपेक्षा 'अश्' अकारस्य–इकारेण संसृष्टो दकारः पुनः 'दिशः' । तत्र दिङ्नामसु 'काष्ठाः' बहूनां वस्तूनां नाम । काष्ठा दिशः क्रान्त्वा प्रक्रम्य स्थिता भवन्ति 'क्रान्त्वा' इति पदस्य तदर्थे 'का' शब्दो रेफवर्जितो गृहीतः, 'स्थिता' इति शब्दस्य तदर्थे 'स्था' कृतमूर्धन्यो गृहीतः । उभयत्र 'क्रम्' तथा 'स्था' धातुभ्यां डः प्रत्ययः कल्पनीयः पृषोदरादित्वाद्रूपसिद्धिः, काष्ठा दिशः । काष्ठा उपदिशो भवन्ति । इतरेतरंक्रान्त्वाऽऽश्रित्य भवन्ति । काष्ठा आदित्यो भवति रश्मिभिः सर्वत्र क्रान्त्वा प्राप्तो भवति । आज्यन्तः संग्रामान्तः शपथपूर्वकः शरपथान्तो धावनादिकं तस्यान्तो मर्यादा सा काष्ठोच्यते सा क्रान्त्वा पूर्णां गतिं प्राप्य स्थिता । आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा परिभ्रम्य जलाशये समुद्रे वा स्थिता भवन्ति, इति स्थावराणामपां काष्ठानां, अथ चास्थावराणां का–आस्था यासां न कापि यद्वा क–अस्थाः, क न तिष्ठन्ति 'क' इत्यस्य वकारलोपः । निरन्तरं गमनशीला हीति तासामस्थावराणामुदाहरणं दीयते "अतिष्ठन्तीनाम०" इति मन्त्रः ।

अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः शम्नातेर्वा । वृत्रस्य

---

* अत्र कश्चन पाठो लुप्तो भवेत् । स चेदृशो भवेत् 'अस्थावरणां काष्ठाः कास्थाः । तासाम्—'

† आशयनात् क्वचित् । यथा स्कन्दभाष्ये ।

निण्यं निर्णामम्। विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेः। तमस्तनोतेः। अशयदाशेतेः। इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः॥

भा०—गच्छन्तीनामविरमन्तीनां तथाभूतानामस्थावराणामपामाकाशस्थानां सूक्ष्मजलप्रवाहाणां मध्ये शरीरं निहितं—मेघो निहितोऽस्ति। वृत्रस्य तस्य मेघस्य निण्यं निर्णामं निम्नस्थानं स्वप्रवहणार्थं निम्ने स्थाने—आपो विचरन्ति—वि जानन्ति परिचिन्वन्तीव व्रजन्ति, स मेघ इन्द्रशत्रुः—इन्द्रः सूर्यो विद्युद् वा शत्रुः शमयिता शातयिता नाशयिता यस्य स मेघो यो दीर्घतम इवाशेते॥

शरीरं "शॄ हिंसायाम्" (क्र्यादि०) इत्यस्माद् यद्वा "शमु उपशमे" (दिवादि०) अत्र क्र्यादिगणीयं मत्वा "शृणाति वधकर्मा" (निघं० २।१९) इत्यस्मात्सिद्ध्यति। शॄपक्षे "कॄशॄकटिपटिशौटिभ्य ईरन्" (उणा० ४।३८) 'शॄ—ईरन्' शरीरम्। शम्पक्षेऽपि—ईरन् बाहुलकात्। मकारस्य रेफादेशश्च। "दीर्घं द्राघतेः" "द्राघृ आयामे" (भ्वादि०) ततोऽच्, अत एवान्तोदात्तः। 'द्रा' स्थाने 'दीर्' आदेशो दीर्घः। * तमस्तनोतेः "तनुविस्तारे" (तनादि०) सर्वधातुभ्योऽसुन्" (उणादि ४।१८९) धातोर्नकारस्य मकारः।

तत्को वृत्रः? मेघ इति नैरुक्ताः। त्वाष्ट्रोऽसुर इत्यैतिहासिकाः †। अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते। तत्रोपमार्थेन युद्धवर्णा भवन्ति॥

भा०—उक्तमन्त्रे यः खलु वृत्रः स क इति विचार्यते, 'त्वाष्ट्रोऽसुरः' इति ऐतिहासिकाः कथयन्ति, मन्त्रगतयोर्विधिनिषेधयोरर्थवादमवलम्ब्य तत्रेतिहासं कल्पयन्ति स न सत्यः। किन्तु स वृत्रो मेघोऽस्ति—इति नैरुक्ता मन्यन्ते। अपां ज्योतिषश्च मिश्रीभावो मिश्रणं तस्य कर्म व्यापारः, मिश्रणव्यापाराद् वृष्टिः क्रिया सम्पद्यते तत्रोपमा लक्ष्येण युद्धवर्णा युद्धवर्णनप्रकाराः—युद्धप्रसङ्गा भवन्ति॥

अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च। विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार। तस्मिन् हते प्रसस्यन्दिर आपः॥ १६॥

---

* पं० चन्द्रमणिना अप् प्रत्ययः कृतः, स न युक्तः, 'द्राघृ' धातुर्न ऋकारान्तः तस्येत्संज्ञत्वात् लोपः। पुनश्च अप् पुंलिङ्गप्रत्ययः। अप् पित्, पित्वात् धातुस्वरेण भवितव्यम्, अत्र तु सोन्तोदात्तः।

† इति पाठेन पूर्वं भवितव्यम्।

तदभिवादिन्येषर्गभवति—

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥
( ऋ० १। ३२। ११ )

भा०—अहिशब्दवत्—वृत्रशब्दवन्तश्च मन्त्रवर्णा मन्त्रप्रसङ्गा ब्राह्मणवादाश्च भवन्ति *। स्वविवृद्ध्या शरीरस्य मेघस्य यद्वा वृत्रशरीरस्य स्रोतांसि—आसन् तानि बहून्यपि—इन्द्रो निवारयाञ्चकार—सम्मुखतः प्रहृतवान्—उद्घाटितवान्, तस्मिन् हते—आपः प्रास्यदन्त—प्रास्रवन्। एतद्विषयस्य प्रतिपादिका भवत्यृगेषा, दासपत्नी—

दासपत्नी दासाधिपत्न्यः। दासो दस्यतेरुपदासयति कर्माणि। अहिगोपा अतिष्ठन् अहिना गुप्ताः। अहिरयनादेत्यन्तरिक्षे। अयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग—आहन्तीति निरुद्धा आपः पणिनेव गावः। पणिर्वणिग् भवति। पणिः पणनात्। वणिक् पण्यं नेनेक्ति। 'अपां बिलमपिहितं यदासीत्'। बिलं भरं भवति बिभर्तेः। वृत्रं जघ्निवानपववार तत्। वृत्रो वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा "यदवृणोत्तद् वृत्रस्य वृत्रत्वमिति विज्ञायते। यदवर्त्तत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते। यदवर्द्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते॥ १७॥"

अथ मन्त्रार्थः—

भा०—दासपत्न्यः—दासस्य कर्मणामुपक्षेतुः श्रमिकजनस्य पालयित्र्यः, श्रमिकजनं जलं पीतवन्तं पालयन्ति ह्यापः, तथा दासो मेघस्तस्य पालयित्र्यः—इति दासपत्न्यः—आपः, अहिर्गोपा गोपायिता यासां ताः—अहिर्गोपा आपः। पणिना गाव इव वैश्येन यथा गावो गोसदने निरोधितास्तिष्ठन्ति तथैव मेघेन—आपो निरुद्धीकृता अतिष्ठन्। तदा—अपां बिलं छिद्रं मुखं गुप्तं यदासीत् वृत्रं मेघं जघन्वान्—इन्द्रो हतवान् तदनन्तरं अपोऽपवारितवान्। बहिर्निःसारितवान्।

निरुक्तयः—

दासो 'दसु उपक्षये' (दिवा०) "दंसेष्टटनौ न आ च" (उणादि० ५।१०)। इति धातोर्बाहुलकात्। उपदासयति समाप्तिं गमयति कर्माणि। अहिः—अयनात्

---

* "यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु (ऋ० १०। ५४। २)। "स इषुमात्रं विष्वंगवर्धत" (तै० सं० २। ५। २। २)।

"इण्" गतौ ( अदादि० ) ततः 'इ' प्रत्यये 'अय–इ', यकारस्य हकारः। अहिर्मेघोऽन्तरिक्षे–एति–इतरोऽहिः सर्प एतस्मादेव 'इण्' धातोः। यद्वा–एकमात्रीकृतः 'आ' उपसर्गः, आहन्ति प्राणिनः–इति–अहिः। पणिर्वणिग्वैश्यो व्यापारी "पण् व्यवहारे" पण्–इन् ( सर्वधातुभ्य इन् उणा० ४। ११८ ) बिलं भरम्। 'भृञ् भरणे' अन्निर्भरणीयत्वात् भ्रियते, पूर्यतेऽन्निरिति भरं बिलम्। भस्य 'बि' रेफस्य लकारः। वृत्रः 'वृञ्' आवरणे ( स्वादि० ) "क्त्रः" प्रत्ययः ( उणा० ४। १६४ ) बाहुलकात्। यद्वा 'वृतु' वर्तने 'वृधु' वर्धने ततो 'रक्' प्रत्ययः ( उणादि० २। १३ )। सूत्रे तु····वृति····क्त्रः" वृतु धातोः, वृधु धातोस्तु बाहुलकादेव। सर्वत्र ब्राह्मणनिर्देशाः कृताः।

इति द्वितीयाध्यायस्य पञ्चमः पादः।

---

## षष्ठः पादः

---

रात्रिनामान्युत्तराणि त्रयोविंशतिः।
रात्रिः कस्मात् प्ररमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि ध्रुवीकरोति। रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्यायाः॥

भा०—लोकानामवरोहणक्रमेणेदानीमान्तरीक्ष्यवस्तूनि वक्ष्यन्ते तत्र दिङ्नामभ्य उत्तराणि रात्रिनामानि 'श्यावी' इत्येवमादीनि त्रयोविंशतिः सन्ति। रात्रिः कस्मात्? यतो नक्तञ्चारीणि निशाचराणि वृकव्याघ्रोलूकादीनि सत्त्वानि तदाहारव्यवहारार्थं प्रवर्तयति, इतराणि दिवाचराणि मनुष्यादीनि नागरिकाणि सत्त्वानि स्वस्वकार्यादुपरमयति ध्रुवीकरोति स्थिरी करोति। इत्यनेन रात्रिः खलु 'रम्' धातोः प्रयोगः–इति लक्ष्यम्। प्रोपाभ्यामुपसर्गाभ्यां तु केवलं नक्तं दिवा प्रवृत्तिभेदो दर्शितस्तस्य रमेः। रमयित्री रात्री–रात्रिः। आद्यन्तयोर्द्वौ द्वौ वर्णौ शिष्येते, यद्वा सस्वरमेकैवमक्षरं शिष्यते, यद्वा 'रम्–णिच्–डात्रि' ( अन्तर्गतो णिच् ) रात्रिः। अथवा "रा दाने" ( अदादि० ) "राशदिभ्यां त्रिप्" ( उणा० ४। ६७ ) रात्रिः प्रदीयन्तेऽस्यामवश्यायाः। रात्रौ प्रकृष्टरूपेण प्रधानत्वेनान्तरिक्ष्यापां सूक्ष्मांशवोऽल्पस्थूलास्तुषारा उच्यन्ते। तेऽस्यां रात्रौ प्रदीयन्ते रमयित्रा परमात्मना, अवश्यायाः सोम्या जीवनप्रदाः सन्ति, अन्येपि गौणरूपेण दीयन्ते तस्माद् रात्रिः।

उषोनामान्युत्तराणि षोडश । उषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालः ॥ १८ ॥ तस्या एषा भवति—

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा । यथा प्रसूता सवितुः सवायं एवा रात्र्युषसे योनिमारैक ॥ ( ऋ० १ । ११३ । १ ) ।

इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् । चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्य । एवं रात्र्युषसे योनिमरिचत् स्थानम् । स्त्रीयोनिरभियुत एनां गर्भः ॥ १९ ॥

भा०—राम्या सह सम्बद्धत्वात् खलु रात्रिनामभ्य उत्तराण्युषोनामानि 'विभावरी' इत्येवमादीनि षोडश । उषाः कस्मादिति निरुच्यते-उच्छति-इति सत्यास्तस्याः-"उछी विवासे" ( भ्वादि० ) विवासः समाप्तिः संवेष्टनम् । उच्छति समापयति संवेष्टते विष्टम्भयति प्रतिबध्नाति रात्रिमिति कर्तरि कारके-उषाः 'उछ—अस्' "उषः किच्च"—असिः ( उणा० ४ । २३४ ) धातोर्बाहुल्यात्—असिप्रत्ययः । छकारस्य षकारादेशश्च । यथा हि धातुमनुसरन्नर्थस्तथा हि स्वरूपमपि दर्शयत्याचार्यो यत् "रात्रेरपरः कालः" रात्रेरुत्तरः कालः—समाप्तायां रात्रेरनन्तरमुषाः प्रवर्तते—इत्येकोऽभिप्रायः । रात्रेरेव योऽन्तिमः कालो भागो वा, इति द्वितीय आशयः । रात्रेरनन्तरो यो दिवसस्यारम्भकाल इति तृतीयोऽभिप्रायः । रात्रेरपरः—रात्रेर्भिन्नस्तथा सामर्थ्याद् दिवसादपि भिन्नः कालः रात्रि-दिवसयोर्मध्ये वर्तमानः काल इति चतुर्थ आशयः । भवतु कथञ्जातीयोऽपि स च पञ्चदशमुहूर्तकः काल उषाः । तस्या उषस ऋक् "इदं श्रेष्ठं" इति ।

मन्त्रार्थः—

"ज्योतिषां ज्योतिः—इदं श्रेष्ठम्" उषाः—आकाशे किल सूर्यचन्द्रोषो-नक्षत्राणि चत्वारि ज्योतींषि सन्ति तेषां मध्ये उषा ज्योतिः श्रेष्ठं प्रशस्यतमम् । यतः सूर्यस्तापकं ज्योतिः, चन्द्रः शीतं ज्योतिः, नक्षत्रजातमतिमन्दं किन्तूषा ज्योतिस्तु नात्युष्णं नातिशीतं न मन्दमस्ति, अपितु बोधकरं मनःप्रसादकं चागच्छति—आगत्य च तदेतज्ज्योतिश्चित्रं प्रियं विचित्रं प्रकेतनं चेतनत्वप्रदं प्रज्ञाततमं प्रसिद्धतमं विभ्वा विभूततमं पूर्वस्यां दिशि विस्तीर्णतमं बहुप्रदेशव्यापि प्रादुरभवत्—प्रादुर्भवति सम्पद्यते । यथा प्रसवं प्राप्ता रात्री—रात्रिः सूर्यस्य प्रसवायोत्पादाय स्थानं रेचयति रिक्तं करोति—एवं हि सा रात्रिरुषसः प्रसवाय स्थानं रेचयति रिक्तं करोति । यद्वा यथा प्रसूता—उत्पन्ना प्रादुर्भूता सती—उषाः सूर्यस्य

प्रसवाय स्थानं रेचयति रिक्तं करोति—यत उषसोऽनन्तरं सूर्यो जायते दृश्यते—एवं हि रात्रिरुषसे स्थानं रेचयति रिक्तं करोति—आत्मानमुपसंहरति। लोके स्त्री-योनिरुच्यते यतो गर्भ एनामभियुतो ऽभिमिश्रितः, यद्वा गर्भेणाभिमिश्रिता योनि-र्भवति—इति तु प्रसक्तनिर्वचनमेवात्र स्त्रीलिङ्गे पूर्वमपि प्रसक्तनिर्वचनं कृतं "परियुतो भवति" ( निरु० अ० २। पा० २ ख० ८)।

तस्या एषापरा भवति—

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने॥
( ऋ० १। ११३। २ )

रुशद्वत्सा सूर्यवत्सा। रुशदिति वर्णनाम रोचतेर्ज्वलति-कर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा। 'रुशती श्वेत्यागात्'। श्वेत्या श्वेततेः। अरिचत् कृष्णा सदनान्यस्याः, कृष्णवर्णा रात्रिः। कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समानबन्धू समानबन्धने 'अमृते' अमरणधर्माणावनूची अनूच्याविततरेतरमभिप्रेत्य, द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनात्। अपि वा द्यावा चरतस्तया सह चरत इति स्यात्। आमिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे।

भा०—तस्या उषसः पुनरेषाऽप्याप्यृगस्ति "रुशद्वत्सा·····।"

मन्त्रार्थः—

रुशन्—सूर्यः शुभ्रवर्णत्वात्। रुशत्—दीप्त्यर्थकात् "रुच दीप्तौ" ( भ्वादि० ) रोचते ज्वलति कर्म ( निघ० १। १६ ) ततोऽतिप्रत्ययः 'पृषत्' इतिवद् ( उणा० २। ८५ ) गुणाभावश्चकारस्य शकारः। स सूर्यो वत्सो यस्याः, सूर्यमस्या वत्समाह मन्त्रः। साहचर्यात्—वत्सो मात्रा सह चरति मातुः सहचरो हि वत्सो भवति सूर्योऽपि तथैवोषसा सह चरति—अग्रेऽग्रे उषाः पश्चात् तथा सह सूर्य आगच्छति हि, तथा रसहरणाच्च वत्सो मातुः स्तन्यं रसमाहरति सूर्योऽपि। तथैवोषस औषसिकान् रसानुषोवेलायामुत्थितानवश्यायानाहरति। रुशती स्वयमपि शुभ्रा रोचमाना दीप्यमाना सती श्वेत्या शुक्ला शुक्लवर्णाभा सा उषाः "श्वेत्या उषा नाम" (निघ० १।८) "श्विता वर्णे श्वेते" (भ्वादि०)" "अघ्न्यादयश्च" (उणा० ४।११२) यक् प्रत्ययः। 'श्वित्—यक्' निपातनाद्गुणः।

'श्वेत्या श्वेततेः' इति धातुनिर्देशाद् धातोरेव साध्यो न तु "रूपादाहतप्रशंसयोर्यप्" (अष्टा० ५।२।१२०) तद्धितरीत्याः । स खलूषा गच्छति, कृष्णा कृष्णवर्णा रात्रिः, कृष्णो निकृष्टवर्णोऽधमवर्णः, निकृष्टं हि तमः "कृष विलेखने" (भ्वादि०) "कृषेर्वर्णे" (उणा० ३ । ४) इति नक् प्रत्ययः । सा कृष्णा रात्रिरस्याः—अस्यै उषसे चतुर्थ्यर्थे षष्ठी, सदनानि स्थानानि—आरैक्—उ—अरिचत्—रिक्तानि करोति । अथेदानीमेने उभे रात्र्युषसौ सह प्रशंसति सम्यग् वर्णयति वा । समानबन्धू समानबन्धने—आदित्यो हि बन्धनं समानम्, अस्तं यन्तं सूर्यं प्रति रात्रिः सम्बद्धा, उद्यन्तं सूर्यं प्रत्युषाः सम्बद्धा । अमृते अमरधर्माणौ—अमरनियमे—अनूची—अनूच्यौ परस्परमनुगते सम्बद्धे प्रवाहेण निरन्तरं प्रवर्तमाने द्यावा द्यावौ वर्णं चरतः, उभेऽपि स्वस्वगुणेन प्रकाशमाने वर्णं स्वस्वरूपं सेवेते, अथवा द्यावा दिवा द्युलोकेन सह पृथिवीत आरभ्य दिवमभिलक्ष्य चरतः प्रवर्तमाने भवतः । आमिनाने—आमिन्वानेऽन्योऽन्यस्याध्यात्मं कुर्वाणे परस्परमुपकुर्वाणे रात्रिः स्वकीयं कञ्चिद्भागमुषसे प्रयच्छति तथैवोषाः कञ्चिद् स्वकीयं भागं रात्र्यै प्रयच्छति ।

अहर्नामान्युत्तराणि द्वादश । अहः कस्मादुपाहरन्त्यस्मिन् कर्माणि ॥ २० ॥ तस्यैष निपातो भवति वैश्वानरीयायामृचि—

अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥
(ऋ० ६ । ९ । १)

अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनं विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्वैश्वानरो जायमान इवोद्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्योतिषा तमांसि ॥

भा०—आन्तरिक्ष्यवस्तुषु क्रमेण रात्रिनामभ्य उत्तराणि सन्त्यहर्नामानि 'वस्तोः' इत्येवादीनि द्वादश । अहर्यतो ह्यस्मिन् कर्माणि उपाहरन्ति—उपारभन्ते जनाः 'अहः' यद्यप्युणादिकोषे "नञि जहातेः" (उणादि १।१५८) "ओहाक् त्यागे" (जुहो०) इत्यतः कनिन् । नञि—उपपदे साधितः । परन्तु—अत्रार्थविधानप्रक्रियातस्तु 'हृ' धातोः साधितः । 'आहृ—कनिन्' 'आहृन्' उपसर्गस्य ह्रस्वत्वं रेफस्य लोपश्च । अथवा 'आहृ—डनिन्' बाहुलकात्—औणादिकः, आहन्—उपसर्गस्य ह्रस्वत्वम् । तस्यैष निपातो गौणः प्रयोगोऽस्ति । वैश्वानरदेवताकायामृचि "अहश्च कृष्ण...."।

अथ मन्त्रार्थः—

अहश्चकृष्णमिति रात्रिः, अहः—अर्जुनं शुक्लं दिनं ते एते द्वेऽहोरात्रे रजसी रञ्जके स्वेन स्वेन रागेण वर्णेण, शुक्लेन दिनं, कृष्णेन रात्री रञ्जयति—इत्यतः उभे वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्विभक्तिभिः प्राणिनः प्रभावयित्रीभिर्विवर्तते वैपरीत्येन पृथक् पृथक् प्रवर्तते पर्यायेण वा वर्तते। यदा दिनं न तदा रात्रिर्यदा रात्रिर्न तदा दिनमिति पर्यायः। वैश्वानरोऽग्निः, आदित्यो जायमानो न—उद्यन्—इव सर्वेषां ज्योतिषां राजा तमांसि—अवातिरत्—अवहन्ति।

> मेघनामान्युत्तराणि त्रिंशत्। मेघः कस्मान्मेहतीति सतः। आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः। उपर उपलो मेघो भवति। उपरमन्तेऽस्मिन्नभ्राणि। उपरता आप इति वा॥ २१॥ तेषामेषा भवति—
>
> देवानां माने प्रथमा अतिष्ठन् कृन्तत्रादेषामुपरा उदायन्।
> त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम्॥
>
> ( ऋ० १०। २७। २३ )

भा०—आन्तरिक्ष्यवस्तुप्रसङ्गेऽहर्नामभ्य उत्तराणि 'अद्रिः' इत्येवमादीनि मेघनामानि त्रिंशत् सन्ति। अहनि सूर्यतापात्—जलं वाष्पीभूयोर्ध्वं गच्छति। तस्य मेघो जायते तस्मादहर्नामत उत्तरं मेघनामेति। मेघो यश्च मेहति सिञ्चति पृथिवीम्। "मिह सेचने" ( भ्वादि० ) "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( अष्टा० ३। १। १३४ ) 'मिह्—अच्' 'मेह् अ' पुनः "न्यङ्क्वादीनां च" ( अष्टा० ७। ३ ५३ ) हकारस्य कुत्वम् 'मेघः' तत्र न्यङ्क्वादिषु मेघः पठितो वर्तते। मेघो न कर्तरि घञन्तः। तत्र मेघनामसु—उपर उपल इति यावत् एकोनविंशतिर्मेघस्य नामानि पर्वतानामभिः सह सामान्यानि सन्ति तदग्रे मेघनामानि हि। अत्र 'आङ्' अभिविधौ न तु मर्यादायाम्। आचार्यशैली दर्शयति ह्यत्र, उपर उपल इत्यनयोरेव निर्वचनं करोति। पुनश्च सन्दिग्धत्वात् 'उपरः' मेघ इत्यत्रोदाहरणमपि प्रयच्छति, उपरो वा उपलः पर्वतनामापि—लोके पाषाणमुपल उच्यते हि। 'दृषदुपले' इति यथा, तथा "उपलप्रक्षिणी" ( ऋ० ९। ११२। ३ ) सक्तुकारिका ( निरु० ६। ६ ) उपर उपलो मेघो भवति यतोऽस्मिन्—उपरमन्तेऽभ्राणि, उपगत्य रमन्तेऽभ्राणि वर्षणाभिमुखानि यस्मिन्। उपरता निरुद्धा अस्मिन्नाप इति मेघपक्षे निर्वचनम्। उपर उपल इति रलयोरभेदान्निर्वचनं समानं रमधातोः। 'उप रम् डः'—उपरः, लत्वे

उपल इति । सन्दिग्धत्वात् उदाहरणमत्र दीयते "देवानां माने" । तत्र—

देवानां निर्माणे प्रथमा अतिष्ठन् माध्यमिका देवगणाः । प्रथम इति मुख्यनाम प्रतमो भवति । कृन्तत्रमन्तरिक्षं विकर्तनं मेघानां विकर्त्तनेन मेघानामुदकं जायते 'त्रयस्तपन्ति पृथिवीमनूपाः ।' पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति, अनूपा अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा ॥

अयमपीतरोऽनूप एतस्मादेवानूप्यत उदकेन । अपि वान्वाबिति स्याद्यथा प्रागिति । तस्यानूप इति स्याद्यथा प्राचीनमिति । 'द्वा बृबूकं वहतः पुरीषम् ।' वाय्वादित्या उदकम् । बृबूकमित्युदकनाम ब्रवीतेर्वा शब्दकर्मणो भ्रंशतेर्वा । पुरीषं पृणातेः पूरयतेर्वा ॥ २२ ॥

अथ मन्त्रार्थः—

भा०—देवानां माने निर्माणे निर्माणसमये वा प्रथमाः प्रतमाः प्रकृष्टतमा मुख्या देवा मरुतोऽतिष्ठन् स्थिता आसन् । तत्र माध्यमिको देव एको वायुरस्ति, बहुवचनादत्र तद्भेदा मरुतो गृह्यन्ते । एषां तेषां स्थानान्मध्यमस्थानात् कृन्तत्रादन्तरिक्षात् 'कृन्तत्रमन्तरिक्षं मेघानां विकर्तनं छेदनस्थानं तत्र कृन्तत्रे मेघानां विकर्त्तनेन छेदनेन यदन्तरिक्षं तत्र ते खलूपरा मेघा ये सन्ति, उदायन्—उदकमकुर्वन्, उदग्भावे—आगच्छन्, तत्करोति—इत्यर्थे णिजन्तः—इण्धातोः प्रयोगः, उदकं कुर्वन्ति—इति, णिज् लोपश्छान्दसः । उपराणां मेघानामुदकं जायते । तत्र प्रथमेषु देवगणेषु त्रयो पर्जन्यो वायुरादित्यः पृथिवीं तपन्ति । क्रमशो वृष्ट्या शीतेनोष्णेन च पृथिवीस्था ओषधीः पाचयन्ति, पक्वाः कुर्वन्ति, ते देवास्त्रयः पर्जन्यो वायुरादित्योऽनूपा आनुकूल्येन वप्तारः सन्तो लोकाननुवपन्ति—अनुगृह्णन्ति—सफलीकुर्वन्ति स्वेन स्वेन कर्मणा । तत्र त्रिषु देवेषु द्वौ वाय्वादित्यौ तु बृबूकमुदकं पुरीषं पालकं पूर्तिकरं च वहतो धारयतः । पर्जन्यस्तु जलं वर्षति, आदित्यः—पृथिवीतो जलं वहति नयति रश्मिभिः, वायुः पुनस्तदुपरिगतं जलमन्तरिक्षे वहति धारयति । इति मन्त्रार्थः ।

निरुक्तयः—कृन्तत्रं "कृती छेदने" ( तुदादि० ) ततः कत्रन् "कृते नुंम् च" "कत्रन्" ( उणा० ३ । १०९ ) 'अनूपाः' "डुवप् "बीजसन्ताने" ( भ्वादि० ) अत्रानुकूल्येन विकीर्णमनुवपनम् । निर्वपेद् भुवि—इतिवत् । कर्तरि कश्छान्दसः

सम्प्रसारणश्च । अनूपो देशो जलेनानुषिक्तो भवति । यद्वा न वप् धातोः किन्तु अन्वाप् सन्—अनूपः, यथा प्राक् सन्—प्राचीनः । प्र—अञ्चू—क्विप्, प्राक्, पुनः "विभाषाञ्चेरदिक् स्त्रियाम्—"ख" प्रत्ययः (अष्टा० ५ । ४ । ८) इति प्राचीनः । एवं 'अनु—आप्लृ—क्विप्' अन्वाप् पुनः 'कः' प्रत्ययोऽधातुभूतस्य वकारस्यापि सम्प्रसारणं छान्दसम् । इति—अनूपः । "बृबूकमुदकनाम" (निघ० १ । १२) बृधातोः शब्दार्थस्य शब्दायते हि जलं बुडबुडेति । भ्रश धातोर्वा "भ्रशु—अधः पतने" (भ्वा०) जलस्य स्वभावोऽधो गमनम् । "उलूकादयश्च" (उणा० ४ । ४१) इति निपात्यन्ते । यङ्लुगन्ताद् बृधातोः—ऊक् प्रत्ययः "बृ बृ ऊक" अभ्यासस्य सम्प्रसारणमुत्तरस्य रेफलोपः—बृबूकम् । यङ्लुगन्तात् भ्रश् धातोः—ऊक्—भ्रभ्रश्—ऊक्—अभ्यासस्य सम्प्रसारणवकारौ । उत्तरस्य 'भ्रश्' इत्यस्य 'बू' भावः—'बृबूकम् ।' पुरीषमिति "पॄ पालनपूरणयोः" (क्र्यादि०) "पुरी आप्यायने" (चुरादि०) सामान्यार्थो द्वयोः पूरणं भेदकृतोऽर्थः पालनमाप्यायनं च "शॄपॄभ्यां किच्च ईषन् प्रत्ययः" (उणा० ४ । २७) 'पॄ ईषन् कित्' "उदोष्ठ्यपूर्वस्य (अष्टा० ७ । १ । १०२) ऋकारस्य—उत्—रपरः । "पुर्—ईषन्' पुरीषम् । पुरी—पुर्—ईषन्—कित् = पुरीषम्, धातोर्बाहुलकात्—ईषन् प्रत्ययः ।

इति द्वितीयाध्यायस्य षष्ठः पादः ।

---

## सप्तमः पादः

---

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । वाक् कस्माद्वचेः । तत्र सरस्वतीत्येतस्य नदीवद् देवतावच्च निगमा भवन्ति । तद्यद् देवतावदुपरिष्टात् तद् व्याख्यास्यामः ॥ २३ ॥ अथैतन्नदीवत्—

इ॒यं शु॒ष्मेभि॑र्बिस॒खा इ॑वारुजत्सानु॑ गिरी॒णां त॑वि॒षेभि॑रू॒र्मिभिः॑ । पा॒रा॒व॒त॒घ्नीमव॑से सुवृ॒क्तिभिः॑ सर॑स्वती॒मा वि॑वासेम धी॒तिभिः॑ ॥ (ऋ० ६ । ६१ । २) ।

भा०—'श्लोकः' इत्येवमादीनि वाङ्नामानि मेघनामभ्य उत्तराणि सम्यगन्तरिक्षवस्तुप्रसङ्गे सति मेघे वाचः प्रवर्तनं भवत्यतस्तानि च सप्तपञ्चाशत् । वाक्—शब्दो वचधातोः सम्भूतः क्विबन्तः । "क्विब् वचिप्रच्छिश्रिस्रुद्रुप्रज्वां दीर्घो

ऽसम्प्रसारणं च ।" ( उणा० २ । ५८ ) निरुक्ते केवलं धातुर्निर्देशादनेकेषु कारकेषु प्रयोज्यो 'वाक्' शब्दः । उणादयो बहुलमिति चाप्यनेकार्थत्वं प्राहयति, तस्मात्—वक्ति—इति वाक्, कर्तरि प्रत्ययः यथा "यद् वाग् वदन्त्यविचेतनानि" ( ऋ० ८ । १०० । १० निरु० ११ । २८ ) उच्यते ऽनया वाक् करणे यथा "वाचा वदामि मधुमद्०" ( अथर्व० १ । ३४ । ३ ) उच्यते या सा वाक् । इति कर्मणि । तत्र वाङ्नामसु 'सरस्वती' इत्येतस्य नाम्नो नदीवद् देवतावत्—च निगमाः—वैदिकप्रयोगा मन्त्रेषु प्रयुक्ताः पदप्रयोगाः, ते नदीवत्—नद्यर्थार्हा नद्या अर्थमर्हन्ति वक्तुं देवतावत्—देवतार्थार्हा देवताया मध्यस्थानगताया अर्थमर्हन्ति वक्तुम् । "तदर्हम्" ( अष्टा० ५ । १ । ११७ ) इत्यनेन वत्प्रत्ययः । यत्पुनर्देवतावत् तदग्रे दैवतकाण्डे व्याख्यास्यामः । अथात्र नदीवत्—नद्यर्थको निगम उदाह्रियते "इयं शुष्मेभि····।"

इयं शुष्मैः शोषणैः । शुष्ममिति बलनाम शोषयतीति सतः । बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा । सानु समुच्छ्रितं भवति समुन्नुन्नमिति वा । महद्भिरूर्मिभिः पारावतघ्नीं पारावारघातिनीम् । पारं परं भवति । अवारमवरम् । अवनाय सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः सरस्वतीं नदीं कर्मभिः परिचरेम ॥

मन्त्रार्थः—

भा०—इयं सरस्वती जलवती जलपूर्णा नदी "सर उदकनाम" ( निघ० १ । १२ ) शुष्मेभिः शोषणैः प्रतिरोधकं शोषयितुं ह्रासयितुं समर्थैर्बलैर्बलरूपैः "शुष्म बलनाम" ( निघ० २ । ९ ) तविषेभिः—ऊर्मिभिर्महद्भिरूर्मिभिस्तरङ्गैः "तविषः—महन्नाम" ( निघ० ३ । ३ ) ऊर्मयो हि नद्या बलानि तैर्गिरीणां पर्वतानां सानु समुच्छ्रितं समुत्थितं समुद्भूतं प्रदेशमरुजद् भनक्ति बिसखा इव बिसखनक इव यथा बिसानां खनको बिसानि खनति त्रोटयति तद्वत् । एतादृशीं पारावतघ्नीं पारावारघातिनीं जलपूर्णां नदीं सुवृक्तिभिः सुप्रवृत्तिभिः शोभनाभिः स्तुतिभिः प्रशंसाभिः, अथ धीतिभिः कर्मभिः "धीतिः—धीतयोऽङ्गुलिनाम" ( निघ० २ । ५ ) परन्त्वत्र धीतिः कर्मवाचकः शब्दः विधानसामर्थ्यात् । अतः कर्मभिरपि, अवसे स्वरक्षणाय देशरक्षणाय विवासेम परिचरेम सेवेमहि । क्षेत्रोद्यानसेचनार्थं कुल्योपकुल्यास्तत उद्धाट्य ।

निरुक्तयः—

यद्यपि बिस प्रेरणार्थो धातुर्दिवादिगणीयः परन्तु यास्केन भेदनार्थो वृद्ध्यर्थश्च

मतः । बिसं शीघ्रं भिद्यते यद्वा जले शीघ्रं वर्धते । ततः कः प्रत्ययः "इगुपध-ज्ञाप्रीकिरः क" (अष्टा० ३।१।१३५) 'सानुः' उणादौ तु "दृसनिजनिचरिचटि-रहिभ्यो ञुण्" ( उणा० १ । ३ ) सन् धातोर्ञुण्प्रत्ययान्तः साधितः । इति सामान्येऽर्थे । परन्त्वत्र विशिष्टार्थे सानु शिखरं भवति तच्च उच्छ्रितं यद्वा समुन्नुन्नमित्यन्वर्थसमाधिः । अत्र निर्वचनमपि कल्पनीयं भवति । 'सम्–उद्–श्रितम्' समुद्भ्यामुपसर्गाभ्यामेव श्रितं क्रान्तं लक्ष्यतेऽर्थे यथा प्रगत आचार्यः प्राचार्यः, समो मकारस्य–उदो दकारस्यैकीभावे नकारः 'सन्' 'उ' अवशिष्टः 'उ' प्रत्ययरूपे गतो णिद्धर्ममादाय तर्हि 'सान् उ' सानु । एवमेव 'समुन्नुन्नम्' 'सम्–उद्–नुन्नम्' अत्रापि समुदुपसर्गाभ्यामेव नुन्नं क्रान्तं लक्ष्यतेऽर्थे समो मकारस्य–उदो दकारस्यैकीभावे नकारः 'सन्' उकारोऽवशिष्टः 'उ प्रत्ययरूपं गतो णिद्धर्ममादाय तर्हि पूर्ववत् 'सान् उ' सानु । पारावतघ्नी–पारावारघातिनी । पारश्चावतश्च पारावतौ, पारः पर एव परभागो नद्याः परतटः, अवतः–अवगतः–'अव' विनिग्रहार्थीयः–स्वपार्श्वगतोऽवतः स च 'अवरोऽवारो नद्या अवरतटोऽवारः । पर एव पारोऽवर एवावारः स्वार्थेऽण्, अवरेऽवारः पुनः वरो वरणीयो वरः स्वनिकटः स एव वारः, "स्वार्थेऽण्" वारः–न वारो वरो निकटो यस्मादन्यः सोऽवरः, सोऽवारः, यद्वा परः 'पॄ' 'ऋदोरप्' अपि परः, घञि पारः, यथा करः कारः, कारनाम्नि च प्राचां हलादौ ( अष्टा० ६ । ३ । ८ ) इतिवत् । प्रस्तरः–प्रस्तारः । विस्तरः–विस्तारः । सञ्चरः सञ्चारः, एवं परश्च पारश्च । वरश्च वारश्च । अपरः–अपारः । 'सुवृक्तिभिः' [ सुप्रवृत्ताभिः ] भाष्ये 'सुप्रवृक्ताभिः' इति पाठेन भवितव्यम् । 'वृजी वर्जने' सुसम्यग्दोषवर्जिताभिः शोभनाभिः स्तुतिभिः ।

उदकनामान्युत्तराण्येकशतम् । उदकं कस्मादुनत्तीति सतः ।

भा०—लोकानामवरोहणक्रमे पुनः पृथिवी खल्वन्तिमो लोकस्तत्रस्थद्रव्येषु किलान्त्यरिक्ष्येणान्तिमेन वस्तुना सम्बद्धमुदकमस्ति माध्यमिकाया वाचः प्रभावाद् वृष्टि र्भवति तच्च पृथिव्यामागतमुदकं भवति–अतो वाङ्नामभ्य उत्तराण्युदक-नामानि सन्त्येकशतमेकञ्च शतं च । उनत्ति–इति सत उदकम् । "उन्दी क्लेदने" ( रुधादि० ) आर्द्रीकरणं क्लेदनम् "उदकञ्च" क्वुन् प्रत्ययः । (उणा० २।३९) 'उन्दी–क्वुन्' निपात्यते । उपधाभूतो मकारो लुप्यते ।

नदीनामान्युत्तराणि सप्तत्रिंशत् । नद्यः कस्मान्नदना इमा भवन्ति शब्दवत्यः । बहुलमासां नैघण्टुकं वृत्तमाश्चर्यमिव-प्राधान्येन तत्रेतिहासमाचक्षते । विश्वामित्र ऋषिः सुदासः

पैजवनस्य पुरोहितो बभूव । विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याणदानः । पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्द्धनीयजवो वाऽमिश्रीभावगतिर्वा । स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययौ । अनुययुरितरे । स विश्वामित्रो नदीस्तुष्टाव 'गाधा भवत' इति । अपि द्विवदपि बहुवत्, तद्यद् द्विवदुपरिष्टात्तद् व्याख्यास्यामः ॥ २४॥ अथैतद् बहुवत्—

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्रसिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥
( ऋ० ३ । ३३ । ५ )

भा०—पृथिवीस्थवस्तूनां प्रसङ्गे वृष्टितः प्राप्तस्योदकस्य पश्चात्—नद्यः प्रवर्त्तन्तेऽत एवोदकनामभ्य उत्तराणि नदीनामानि प्रदर्श्यन्ते तानि च सप्तत्रिंशत् सन्ति । नद्यः खलु नदनाः शब्दवत्यः सत्य उच्यन्ते निरन्तरं नदन्ति हि प्रवहन्त्य इमा "णद् अव्यक्ते शब्दे" ( भ्वादि० ) पचाद्यच् ( अष्टा० ३।१।१३४ ) तत्र "अनुबन्धासञ्जनार्थं नदट् नदी" ( महाभा० ३ । १ । १३४ ) इति नदट् टित् । नदः स्त्रियां नदी ङीप् प्रत्ययः । आसां नदीनां नैघण्टुकं गौणं वृत्तं वर्तनं प्रयोगो बहुलं—बाहुल्येनास्ति । आश्चर्यमिवाश्चर्यसमानम्, आश्चर्यमनित्ये कादाचित्कं, काचित्कं वृत्तं प्राधान्येन देवतात्वेनास्ति । तत्र नदीप्रसङ्गे इतिहासमाचक्षते—ऐतिहासिका जनाः—विश्वामित्र ऋषिः, पिजवनस्य यः पुत्रोऽस्ति तस्य पुरोहितो जातः, स वित्तं धनं गृहीत्वा 'विपाट्—शुतुद्री' इत्येतयोर्नद्योः सम्भेदं संगममागतवान् । इतरे जनाः सहायका अपि तं विश्वामित्रमन्वगच्छन् । स विश्वामित्रो नदीः प्रशंसितवान् प्रार्थितवान् यूयं गाधा भवत "गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे" (भ्वादि०) ग्रन्थीभूताः सीमिताः—संकुचिता निम्ना भवत । द्विवद्, अपि बहुवत् । द्वे नद्यौ लक्ष्यीकृत्य तद्यद् द्विवद्, द्विवचनकं तदग्रे व्याख्यास्यामः ( निरु० ९ । ३९ ) । अथात्र बहुवद् बह्वीर्नदीर्लक्ष्यीकृत्य कथयामः—'रमध्वं मे वचसे' ।

अत्राध्येतॄणां सम्मुखं विचार इदृश उपतिष्ठेत यदयं निरुक्तकारो मन्त्रेऽत्रेतिहासं मन्यते, यद्वा वेदेष्वितिहासोऽस्ति । वेदेषु खल्वितिहासस्यासम्भवस्तु पूर्वमार्ष्टिषेणदेवापिप्रकरणे प्रदर्शितः । न हि निरुक्तकारो यास्को वेदेष्वितिहासं मन्यते । एतदपि बहुधा तद्वचनेन स्पष्टं भवति । अत्र प्रसङ्गेऽपि विश्वामित्रसुदासपिजवनशब्दानां निर्वचनं करोति यास्कः, नह्यैतिहासिकपक्षे निर्वचनस्य फलमावश्यकता वा । ऐतिहासिका अत्र मन्त्रप्रसङ्ग एवमितिहासं मन्यन्ते—इति

तेषां मान्यतां प्रदर्शयति, इति—ऐतिहासिकाः, स्वयमत्रालङ्कारं मन्यमानः। वेदेषु भवन्ति ह्यलङ्कारास्तानैतिहासिका इतिहासान् कल्पयन्ति। अलङ्कारेषु भौगोलिकं खागोलिकं विज्ञानं ज्ञाप्यते, तेन साकं च व्यावहारिकं ज्ञानमपि शिक्ष्यते। अत-एव यास्केनाऽत्रागतानां विश्वामित्रादीनां निर्वचनं कृतं तच्चेतिहासवादनिराकर-णार्थं स्वमतसाधनार्थं मन्त्राणां नैगमार्थसाधनार्थञ्च। यथा विश्वामित्रः सर्वमित्रः, सर्वेषां मित्रः, सर्वेषां प्रेरकः, सर्वे मित्राणि यस्य वा सर्वमित्रः, प्रेरणीयानि प्रेरणपात्राणि यस्य स विश्वामित्रः। आधिदैविकदृष्ट्या—आदित्यः सर्वमित्रः। अत्र स्कन्दमहेश्वरभाष्येऽपि उक्तं "सर्वमित्रो भगवानादित्यः" (स्कन्दः०)। विश्व-मित्रेणैतिहासिकजनेन सह नदीनां यद्वा नदीभिः सह विश्वामित्रस्यैतिहासिक-जनस्य संवादोऽसम्भवः। तस्मादत्र मन्त्रे न खल्वितिहासः किन्तु—आदित्यनदीनाम-लङ्कार एव। सर्वं संसृतम्' सम्यक् सृतं प्रसृतं सृतमेव, असृतं क्वापि न—एक-देशि न्यूनदेशि न। तथा कृत्वा "सर्व····अतन्त्रे" (उण० १। १५३) निपा-त्यते वन् प्रत्ययान्तः सृधातोः। सर्वमित्रः—आकर्षणधर्मयुक्त आदित्यः। सुदासः षष्ठ्यन्तं पदं 'सुदाः' इत्यस्य, "दा धातोः—असुन्प्रत्ययान्तस्य सुदाः कल्याण-दानः स च वायुः—जीवनावश्यायवृष्टीनां दाता, पैजवनश्च पिजवनस्य पुत्रः, पिजवनः स्पर्द्धनीयजवोऽमिश्रीभवगतिर्वा। स्पर्द्धनीयवेगः स्वतन्त्रा गतिर्हि वायोः कारणमस्ति। 'अग्निः सहसः सुनुः' सहसो बलस्य घर्षणस्य पुत्रोऽग्निः। स्पर्द्ध-नीयवेगस्य क्रमेण प्रवर्तितवेगस्य यथा वैद्युतव्यजनपक्षाणां स्पर्द्धनीयवेगतो वायुः प्रवर्तते। गतेश्च पुत्रो वायुः। वायुः सुदाः, पैजवनः, वायुं प्रति खल्वादित्यस्य पौरोहित्यमलङ्कारे स्वतन्त्रं स्पष्टम्। यथा वैद्युतव्यजनपक्षाणां स्पर्द्धनीयवेगात् पूर्ववर्ति विद्युद्वस्तु पुरोहितरूपे वर्तते। तथैव संसारे प्रवर्तमानस्य यः कश्चन वेगस्तस्मात् पूर्ववर्ती सूर्यः पुरोहितरूपोऽस्ति। वर्षर्तौ खलु "आकाशे प्रवर्तमाना वेगेन गतिं कुर्वाणा अभ्रधारा विपाट्—आन्तरिक्ष्याणामपां वर्षणहेतोर्विपाटनात्—पृथक् पृथक् करणात् तासामपां पाशरहितत्वकरणात् विशिष्टरूपेण प्रापणाद् विपाट्। अथ शुतुद्री पृथिवीपृष्ठे वृष्टे सति मेघे पृथिव्यां विविधरूपे शीघ्रं प्रवहमाणा जलधारा शुतुद्री शुन्नात्रिणी क्षिप्रद्राविणी, तुन्नेव द्रवतीति व्यस्त-रूपेण द्राविणी शुतुद्री। एवं तद, वर्षर्तौ किलाकाशोऽपि मेघाच्छन्नः। पृथिवी खल्वपि जलेन परिषिक्ता परिप्लुता, तत्रापि नद्य उत्प्लुताः प्रवहन्ति। तयोराकाश-पृथिवीस्थधारयोः सङ्गमेऽन्तरिक्षे—आकाशे—आदित्य आगच्छति स्वप्रकाशं प्रसार-यितुम्। तदा नदीभिः सहा[illegible]रिकदृष्ट्या संवादः प्रवर्तते 'रमध्वं मे वचसे' इति। अत्र यास्कविवर्णम्—

उपरमध्वं मे वचसे सोम्याय सोमसम्पादिन ऋतावरी-
र्ऋतवत्यः । ऋतमित्युदकनाम प्रत्यृतं भवति । मुहूर्तमेवैः—
अयनैरवनैर्वा । मुहूर्तो मुहुर्ऋतुः । ऋतुरर्तेर्गतिकर्मणः ।
मुहुर्मूढ इव कालो यावदभीक्ष्णं चेति । अभीक्ष्णमभि-
क्षणं भवति । क्षणः क्षणोतेः प्रक्ष्णुतः कालः । कालः
कालयतेर्गतिकर्मणः । प्राभिह्वयामि सिन्धुं बृहत्या महत्या
मनीषया मनस ईषया स्तुत्या प्रज्ञया वा अवनाय । कुशि-
कस्य सुनुः कुशिको राजा बभूव । क्रोशतेः शब्दकर्मणः ।
क्रंशते र्वा स्यात् प्रकाशयतिकर्मणः साधु विक्रोशयि-
तार्थानामिति वा ॥ २५ ॥

मन्त्रार्थः—

भा०—ऋतावरीर्ऋतवत्य उदकवत्यो हे नद्यः ! मे सोम्याय वचसे मम विश्वामित्रस्य—आदित्यस्य सोमसम्पादननिमित्तीभूताय पृथिव्यामोषधिनवनस्पतीनां सम्पादने हेतुभूताय वचनाय तत्पूर्तये—एवैरयनैर्गमनैर्यूयं मुहूर्त्त—मुहुर्ऋतुं मुहु-र्मुहुर्ऋतुं पुनः पुनर्ऋतुं क्रमेणोपरमध्वं स्वप्रबलप्रवाहादुपरामं गृह्णीध्वम् । अहं कुशिकस्य सूनुः—आकर्षणकर्तृरश्मिसमूहस्य सूनुः सविता, पुत्रः—पुत्रो वा सूर्यो विश्वामित्रः—यथान्यत्र वेदे "विश्वामित्रो यदवहत् सुदासमप्रियायत कुशिकेभि-रिन्द्रः ॥" ( ऋ० ३ । ५३ । ९ ) "सुवः कित्" ( उणा० ३ । ३५ । सूर्यः ) अवस्युर्विश्वस्य रक्षणमिच्छन् बृहती मनीषा बृत्या महत्या मनीषया मानसशक्त्या प्रशंसया प्रज्ञया शासननिर्देशन्या वा—अच्छ सद्भावेन सिन्धुं नदीमात्रं प्राह्वयामि प्रेरयामि प्रार्थयामि ।

निरुक्तयः—ऋतावरी. "ऋतमुदकनाम" ( निघ० १ । १२ ) प्रत्यृतं प्रति-गतं प्राप्तं भवति तस्य नम्रस्वभाववत्वात् स्थानं स्थलं प्रति स्वतः प्राप्तं भवति । ततो मतुबर्थीयो छान्दसो वनिप् "छन्दसीवनिपौ" ( अष्टा० ५ । २ । १०९ वार्तिकम् ) पुनः "वनो र च" ( अष्टा० ४ । १ । ७ ) इति रेफङीपौ । मुहूर्त्तः—मुहुर्ऋतुः । उकारेण सह—ऋकारस्य—उकारः पूर्वरूपदीर्घादेशो रपरः—'उरण् रपरः' समासान्तोऽकारः, मुहूर्त्तः । ऋतुः—ऋधातोर्गत्यर्थकात् "अर्हेश्च तुः" ( उणा० १। ७२ ) ऋतुर्गतिशीलः । मुहूर्त्तो मूढ इव कालः, मूढोऽविवेचनीयः कालोऽल्पः कालो यावदभीक्ष्णं च—अभीक्ष्णमभिक्षणं क्षणं प्रतिगतः कालः—क्षणमात्रं, क्षणः प्रक्ष्णुतः—प्रसूक्ष्मीकृतः [ "क्ष्णु तेजने" ( अदादि० ) तस्य क्तान्तः प्रयोगः ] कालः प्रकृष्टमुदितः सर्वतः सूक्ष्मः कालः । कालः कालयतेर्गतिकर्मणः 'कल' क्षेपे

(चुरा०) ततो घञ् । कुशिकस्य सूनुः कुशिको राजा बभूव, इतिहासे भवतु सः । कुशिकः क्रोशतेः शब्दकर्मणः शब्दयति यः, क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः, प्रकाशयति जगत्, साधु विक्रोशयितार्थानामिति वा, पदार्थानां ज्ञानानां साधूपदेष्टा सरलमार्गस्यदर्शको वा ।

नद्यः प्रत्यूचुः—

इन्द्रो॑ अ॒स्माँ अ॑रद॒द् वज्र॑बाहु॒रपा॑हन् वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।
दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥
( ऋ० ३ । ३३ । ६ )

'इन्द्रो अस्मानरदद् वज्रबाहुः । रदतिः खनतिकर्मा ।' 'अपाहन् वृत्रं परिधिं नदीनाम्' इति व्याख्यातम् । 'देवोऽनयत् सविता सुपाणिः' कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति । 'तस्य वयं प्रसवे याम उर्वीः' उर्व्य ऊर्णोतेर्वृणोतेरित्यौर्णवाभः ॥ २६ ॥

भा०—वज्रबाहुर्वज्रहस्त इन्द्रो विद्युद्रूपो देवो विद्युद्धि वज्रं प्रहरति स इन्द्रो नदीनां नदनानामपां परिधिं परिबन्धकं वृत्रं स्तम्भकं मेघमपहतवान् पुनरस्मान् नदीः—अरदत्—अखनत्—तदन्तस्तो बहिर्निःसारितवान् सविता देवः स प्रेरयिता इन्द्रो विद्युद्देवः सुपाणिः कल्याणहस्तोऽनयत्—नयति तस्य प्रसवे—ऐश्वर्ये—ईश्वरत्वे शासने वयमुर्वीः प्रसृताः पृथिवीमाच्छादयन्त्य आवृण्वत्यो गच्छामः । न त्वदीयकथनस्य श्रवणावसर इत्यर्थः । "रद विलेखने" ( भ्वादि० ) विलेखनं कर्षणं परन्त्वत्र खननम् । सुपाणिः कल्याणपाणिः । पाणिः पणधातोः पूजार्थात् "पण व्यवहारे स्तुतौ च" ( भ्वादि० ) स्तुतिः पूजा । हस्तौ संयोज्य देवान् महात्मनो विदुषः पूजयन्ति जनाः । उर्वी—उर्व्यः—"ऊर्णुञ् आच्छादने" (अदादि०) यद्वा "वृञ् वरणे" (स्वादि०) धातोः । इति—और्णवाभो नैरुक्त आचार्यो मन्यते ।

प्रत्याख्यायान्तत आशुश्रुवुः ।

आ ते॑ कारो शृणवामा॒ वचां॑सि य॒याथ॑ दू॒रादन॑सा॒ रथे॑न ।
नि ते॑ नंसै पीप्या॒नेव॒ योषा॒ मर्या॑येव क॒न्या॑ शश्व॒चै ते॑ ॥
( ऋ० ३ । ३३ । १० )

आ शृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा ॥

भा०—नद्यो विश्वामित्रस्यादित्यस्य कथनं खण्डयित्वाऽन्ततस्तत् स्वीकृतवत्यः—

किमर्थं स्वीकृतवत्य इति प्रश्नेऽस्माम्मन्त्रतः पूर्वं मन्त्रत्रयं तत्रैतादृशं वृत्तं गतं यतस्तद्वचनं स्वीकृतवत्यः । नदीभिरुक्तमासीत् "एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि" (ऋ० ३ । ३३ । ८) हे जरितः स्तोतर्विश्वामित्र ! आदित्य ! एतदस्माकं वचनं 'मापिमृष्ठाः' न विस्मर यत् ते घोषानादेशान्—आ श्रोष्याम उत्तरा युगानि वर्षान्तदिनेषु—इति प्रत्युत्तरानन्तरं विश्वामित्रेण पुनः प्रार्थितम् "ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन । नि षू नमध्वं भवता सुपारा अधो अक्षाः सिन्धवः स्रोत्याभिः ॥" (ऋ० ३ । ३३ । ९) हे सिन्धवः स्वसारः ! कारवे मह्यमु सु—आ शृणोत—अवश्यं सौगम्येन मद्वचनं विश्वहितकरं स्वीकुरुत, यदहमनसा वायुरूपेण शकटेन प्रकाशाकर्षणरूपेण रथेन दूरादागतोऽस्मि । अतः स्रोत्याभिः प्रवहणगतिभिः सह सु नि नमध्वं सुखरूपे नितरां नमत नितरां नम्रीभवत । अधोअक्षाः सुपारा भवत मम वायुरूपस्य शकटस्य प्रकाशाकर्षणरथस्याधो भवत । अक्षास्याधोऽधोऽक्षाः "राजदन्तादिषु परम्" (अष्टा० २ । २ । ३१) कथनानन्तरं प्रस्तुतमन्त्रे 'आ ते कारो' हे कारो ! कार्यसाधक स्तोतः "कारुः स्तोतृनाम" (निघ० ३ । १६) विश्वामित्र ! ते वचनानि आशृणुमः स्वीकुर्मः, यतस्त्वं दूराच्छकटेन रथेन चायाः—आगतोऽसि याहि, तुभ्यं निनंसै—निनमाम नीचैर्भवेम पुत्रं वत्सं स्तन्यं पाययन्ती माता यथा यद्वा मनुष्याय पत्ये वराय युवतिर्वधूर्यथा * शश्वचै ओलिङ्गनाय निनमति नीचैर्नमति तथा नीचैर्नमामः । 'निनंसै' लेड्युत्तमपुरुषस्यैकवचने रूपं सिब्बहुलं लेटीति च सिप् । "वैतोऽन्यत्र" (अष्टा० ३ । ४ । ९६) एकारादेशः । तदनुवादो निनमाम बहुवचने निनमै—एकवचने लोटि यास्केन कृतः । शश्वचै "श्वच् गतौ" (भ्वादि०) स चात्राभिष्वजनार्थे प्रयुक्तः । "बहुलं छन्दसि" (अष्टा० २ । ४ । ७६) शपः श्लुः । लेड्युत्तमैकवचने "वैतोऽन्यत्र" (अष्टा० ३ । ४ । ९६) सूत्रेण । रूपं शश्वचै 'निनंसै' इतिवत्—आकांक्षायाम् । आकांक्षा दर्शिता यास्केन चतुर्थ्यां परिष्वजनाय । आधिदैविकदृष्ट्यात्र मन्त्रेषु—ऋतुविज्ञानं वर्तते सूर्यद्वारा वाष्पधारा, इन्द्रद्वारा वृष्टिधारा, पृथिवीपृष्ठसम्पर्केण जलधारा, इति त्रिवेणिसङ्गमः । वर्षतौ द्यावापृथिव्यौ यद्वा ऽऽकाशभूमी अभ्रैराच्छादिते भवतः सूर्यप्रकाशोऽपि गगने नो लभ्यते मेघकृतोऽन्धकारः पृथिव्यां जलकृत आक्लेद इति चिरं न रोचते, अकर्मण्यता यात्रानिरोधश्च जायते । सूर्यप्रतापेन निरुद्धायां वृष्टौ शरदृतुः प्रवर्तते शरदृतौ शारदं नभः स्वच्छं भूमिश्च स्वच्छा नद्यश्च शोभना यात्रायोग्यास्तत्रत्यं जलमपि स्वच्छमिति दृश्यं रोचते कर्मप्रवृत्तिश्च जागर्ति । इति

* "कन्याऽभीष्टवरमिव" (दयानन्दः) ।

ऋतुद्वयप्रवृत्तिः प्रदर्शिताऽलङ्कारोक्त्या । आधिभौतिकदृष्ट्या तु राष्ट्रे सुदाम्ना क्षेमकृता राज्ञा भवितव्यं तथा सर्वहितेच्छुकेन सर्वकल्याणसाधकेन सर्वविद्याविदा सर्वकलाकुशलेन ब्राह्मणगणेन भवितव्यं वर्षान्ते मार्गनिर्माणं नदीनां सेतुबन्धनं भूमेः कर्षणं विविधा यात्रा भूमौ जले व्योम्नि भूयानजलयानव्योमयानैः कार्या, वर्षाकाले नगरग्रामादिषु जलप्लवेन क्षतिर्न भवेत् तथा वर्तितव्यं वर्षातः पूर्वमपि तथा बन्धप्रबन्धः करणीय इति ।

अश्वनामान्युत्तराणि षड्विंशतिः । तेषामष्टा उत्तराणि बहुवत् । अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा । तत्र दधिक्रा इत्येतद् दधत्क्रामतीति वा दधत्क्रन्दतीति वा दधदाकारी भवतीति वा । तस्याश्ववद् देवतावच्च निगमा भवन्ति । तद् यद् देवतावदुपरिष्टाद् व्याख्यास्यामः ॥ २७ ॥

अथैतदश्ववत्—

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि । क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥ (ऋ० ४ । ४० । ४)

भा०—पृथिवीस्थपदार्थप्रसङ्गे विशिष्टगतिमान् पशुरश्वः, जडाया गतिमत्या नद्या नामभ्य उत्तराणि 'अत्यः' प्रभृतीनि खल्वश्वनामानि षड्विंशतिः सन्ति । तेषां नाम्नामन्तिमान्यष्टौ 'अव्यथयः' इत्यारभ्य बहुवचनयुक्तानि सन्ति । अश्वः कथमित्युच्यते, अश्नुतेऽध्वानम्, अश्नुते—इति तु निर्वचनमश्वस्य 'अश्नुते—अश्वः' अध्वानमिति तदर्थसम्बन्धप्रदर्शनम्, कुत्राश्नुते—अध्वानं मार्गमश्नुते, व्याप्नोति पारयति मार्गम् । 'अश्—व'—"अशूङ् व्याप्तौ" (स्वादि०) "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (उणा० १ । १५१) यद्वा महाशनो भवतीत्यतोऽश्वः । "अश भोजने" (क्र्यादि०) इति धातो र्बाहुलकात् क्वन् प्रत्ययः । अश्नाति—अश्वः । अश्नन्ति तु सर्वे प्राणिनस्तर्हि महाशनत्वाद् भवतु तावत् तथा । इति द्वितीयं निर्वचनं क्रियतेऽन्यैः । परन्तु 'अश्नुतेऽध्वानं' यद्वा 'अश्नाति महदिति' पाठेन भवितव्यं तदत्र द्वितीयनिर्वचने धातुर्नेष्यते धातुनिर्वचने सर्वत्र पञ्चमी क्रियते समानधातौ च विकरणभेदेन पठति, यथातोऽग्रे हि ग्रीवा गिरतेर्वा गृणातेर्वा । पश्चादपि गतमेवमेव । किन्तु ताद्धितो मतुबर्थं दृश्यतेऽत्र । तच्च बहुव्रीहिसमासेन स्पष्टीक्रियते 'महाशनो' वा 'महदशनं यस्य स महाशनोऽश्वः' 'अश्—वः' महाशनः महद्—महनीयं प्रशंसनीयं बहुमूल्यमशनं भोजनमस्येति—महाशनः 'अश्वः—अश्—वः', अश्यते भुज्यते—अश क्विपि, तद्वान्

प्रशंसनीयम्—अश्—अस्येति प्रशंसायां मतुप् 'अश्वः' । प्रशंसनीया केशा यस्य स केशव इति यथा निरुक्तशैल्यां निर्वचनम् । अन्यपशूनामपेक्षया प्रशंसनीयं भोजनं करोति बलबुद्धिवर्धकं च तत्राश्वनामसु 'दधिक्राः' इति नाम सन्दिग्धं तस्य पशुवाचित्वाद् देवतावाचित्वाच्च । प्रकरणं त्वत्र पृथिवीस्थानामुपयोगिवस्तूनां तदत्र पृथिवीस्थं पशुमभिलक्ष्य निर्वचनं क्रियते । यत् 'दधिक्राः' दधत् क्रामति-स्वपृष्ठे—आरोहकं जनं दधद्—धारयन् क्रामति गच्छति चारु गच्छति तस्माद् 'दधिक्राः' यद्वा 'दधत् क्रन्दति' दधत् स्वपृष्ठे—आरोहकं धारयन् क्रन्दति शब्दयति ह्रेषते यद्वा दधत्—धारयन्नारोहकं जनमथमाकारी—आकारवान् शोभनः प्रशस्ता-कारवान् भवति संयताङ्गो मयूरग्रीवश्च भाति । अत्र सर्वेषु निर्वचनेषु 'दधत्' तु समानं धातूनामेव भेदः । 'दधत्' इत्यस्य 'दधिः'—'दधत्' इत्यस्यैव विशेषणं कर्तरि शतृप्रत्ययः । 'दधिः' इत्यपि धा धातोः कर्तृप्रत्ययः 'किः' लिट्वत् दधातीति दधिः "आदृगमहनजनः किकिनौ लिट् च" (अष्टा० ३ । २ । १७१) दधत् वर्तमानकाले शतृप्रत्ययान्तः 'दधिः' वर्तमानकाले किप्रत्ययान्तः "दधिः" इत्यस्य स्थाने 'दधत्' इत्यर्थनिर्देशः । 'दधिः' उपपदं सर्वत्र समानं 'क्रम, क्रन्द, कृ' धातवः पृथक् पृथङ् निर्वचनेषु । क्रमपक्षे तु "जनसनखनक्रमगमो विट्" ( अष्टा० ३ । २ । ६७ ) विट् प्रत्ययः । सत्युपपदे । पुनः "विड्वनो-रनुनासिकस्यात्" ( अष्टा० ६ । ४ । ४१ ) क्रन्दपक्षे "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) विच् प्रत्ययः—नकारदकारयोर्व्यअनयोः—एकमात्रिको 'अकारः' आदेशः तदा 'दधिक्राः' पुनः, आ—कृ, इति पक्षेऽपि विजेव प्रत्ययलोपे दधि—कृ आ पूर्वं उपसर्गो धातोः परोभूत्वा मिलितो धातौ कृ—आ क्रा, अत्र पूर्वमुप-सर्गो धात्वन्तर्गतः पश्चात् 'विच्' एव दधिक्राः, तस्य 'दधिक्राः' इत्यस्य 'अश्ववत्' अश्वार्थयोग्या देवतावत्—देवतार्थयोग्या वैदिकपदप्रयोगा भवन्ति । देवतावत्त्वग्रे दैवतप्रकरणे व्याख्यास्यामः, इति यास्कवचनम् । अथेदानीमश्वार्थयोग्यं 'दधिक्राः' इति नाम प्रदर्श्यते । "उत स्य वाजी" इति ।

अपि स वाजी वेजनवान् क्षेपणमनु तूर्णमश्नुतेऽध्वानम् । ग्रीवायां बद्धः । ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वा । अपि कक्ष आसनीति व्याख्यातम् । 'क्रतुं दधिक्राः' कर्म वा प्रज्ञां वा । 'अनु सन्तवीत्वत्' तनोतेः पूर्वया प्रकृत्या निगमः । 'पथामङ्कांसि' पथां कुटिलानि । पन्था पततेर्वा पद्यतेर्वा पन्थतेर्वा । अङ्कोऽञ्चतेः । आपनीफणदिति फणतेश्चर्करीतवृत्तम् ॥

मन्त्रार्थः—

भा०—'उत स्यः'–अपि स वाजी वेजनवान् वेजनं भयप्रदानं चलनं च तद्वान् 'ओविजी भयचलनयोः' ( तुदादि० रुधादि० ) यात्रायां वेगेन चलति गच्छति संग्रामे शत्रून् भीषयति । क्षिपणिं तुरण्यति क्षेपणमनु क्षिप्यते येन तत् क्षेपणं प्रेरणसाधनं कशा तत् प्रेरणसाधनमनुसरन् तुरण्यति तूर्णमश्नुतेऽध्वानं शीघ्रं व्याप्नोति मार्गम्, उत्तरपङ्क्त्यां 'अनु' प्रयुक्तात् पूर्वपङ्क्तावपि प्रयोज्यते । ग्रीवायां बद्धः कक्षेऽपि बद्धोऽप्यासनि–आस्ये मुखे–यो बद्धः, एवं त्रिषु स्थानेषु बद्धो नियन्त्रितः संयती कृतः । क्रतुं कर्म प्रज्ञां वाऽश्वारोहस्य कर्तव्यं लक्ष्यं वाऽनुसन्तवीत्वत्–अनुरूपं सम्यग् विस्तारयति, संप्रवर्धयति पथां मार्गाणा-मङ्कांसि–अङ्कानि कल्पितानि–उच्चनीचस्थानानि–उच्चनीचत्वभेदेन मार्गविभागान्–अन्वापनीफणत्–भृशं फणति पारयति ।

निरुक्तयः—'क्षिपणिः' क्षिप प्रेरणे" ( दिवा०, तुदा० ) ततोऽनिः प्रत्ययः । "क्षिपेः किच्च–अनिः" ( उणा० २ । १०९ ) 'तुरण्यति' "तुरण त्वरायाम्" ( कण्ड्वादि० ) ततो यक् तिपि । ग्रीवा शब्दः "गॄ निगरणे" ( तुदादि० ) "गॄ शब्दे" ( क्र्यादि० ) धातोः 'ग्रीवा' शब्दो वन्प्रत्ययान्तो निपात्यते "शेवायह्वजिह्वाग्रीवाप्वामीवाः" ( उणा० १ । १५४ ) 'गॄ–वन्' ऋकारस्य रीङ्-आदेशः । आहारं निगिरति स्वाभिप्रायं शब्दयति यया सा ग्रीवा । पुनः–गृह्णाते र्वा "ग्रह उपादाने" ( क्र्यादि० ) 'ग्रह–वन्' ग्रह इत्यस्य ग्रीभावो निपातना-देव । गृह्णाति श्वासमनया प्राणी, ग्रीवा गृह्यन्ते निगृह्यन्ते रज्ज्वामनया प्राणिनः–इत्यपि भवितुमर्हति । परन्त्वेकदेशिवृत्त्या केचन ग्रीवया निगृह्यन्ते पशव एव । पक्षिणस्तु जङ्घया निगृह्यन्ते पशुष्वपि सैव न, अधिकांशेन गवाजमेप-महिष्यः । अश्वोष्ट्रौ मुखनासिकाभ्यां, हस्ती तु जंघया हि, न ग्रीवया 'अनुसन्त-वीत्वत '–तनोतेः पूर्वया प्रकृत्या निगमः । प्रकृतयो धातवः षड् विधाः सन्ति–प्रकृत्यन्तः सन्नन्ताश्च यङन्तो यङ्लुङेव च, ण्यन्तो ण्यन्तसनन्तश्च षड् विधो धातुरुच्यते । प्रकृत्यन्तः पूर्वप्रकृत्यन्तः । अनुसन्तवीत्वत् पूर्वप्रकृत्या साध-नीयो निगमो वैदिकः प्रयोगः । अनु–सम्–उपसर्गौ, 'तवीत्वत्' तन्वीत–इति लोके धातोरनुनासिकलोपः, तकारस्य प्रत्ययस्यस्थाने 'त्वत्' आदेशश्छान्दसः । लडर्थे लिङ् च । अनुसन्तन्वीत–अनुसन्तनुते–इति–अर्थः । यद्वा 'अनुसन्त-वीत्वत्' शतृप्रत्ययान्तः प्रयोगः । अनु–सम् उपसर्गपूर्वकात् तनुधातोः "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) इत्यनेन 'श्लु' विकरणं अभ्यासस्य 'वीक्' आगमः, धातो 'अन्' भागस्य लोपः । स्कन्दमहेश्वरभाष्ये 'तवतेः' स्वीकृतः,

न तु तनोतेः, तदा 'अनुसन्तवेत'—अर्थः । 'तनोतेः' इति त्वर्थप्रदर्शनम् । "तु गतिवृद्धिहिंसासु" ( अदादि० ) पूर्वया प्रकृत्या—इति स्थाने सपूर्वया प्रकृत्या—इति पाठेन भवितव्यम् । प्रकृतिः पूर्वं तदङ्गोऽभ्यासः, तदाभ्यस्तया प्रकृत्या, 'तु यङ् ति', यङ्लुक्, तोतवीत लिङि, इत्यनेन भवितव्यम् । "तुरुस्तुशम्यमः सार्वधातुके" ( अष्टा० ७ । ३ ९५ ) इत्यस्य स्थाने 'तवीत्वत्' मध्यतः पूर्वः तवी 'तो' 'पूर्वः 'त्' अन्तिमेन भागेन मिलित्वा 'तवीतोत्'—तवीत्वत् भृशं वर्धयेत्, भृशं वर्धयति वेत्यर्थः । पन्था—"पत्लृ गतौ" ( भ्वादि० ) "पद गतौ" ( दिवादि ) पथि गतौ" ( चुरादि० ) "पतः—न्थ च" 'इनि' प्रत्ययः ( उणादि० ४।१२ ) एवं बाहुलकात् 'पद' इति दकारस्य 'न्थः', इनि । "अञ्चु गतौ ( भ्वादि० ) "अञ्चु विशेषणे" ( चुरादि० ) "अञ्च्यञ्जियुजिभृजिभ्यः कुश्च" ( उणादि ४ । २१६ ) 'आपणीफणत्' इति चर्करीतवृत्तम्—यङ्लुगन्तं क्रियापदम् । चर्करीति—इति क्रियायुक्तं वृत्तं पदवृत्तम् । "दाधर्ति.... आपनीफणत्...." ( अष्टा० ७ । ४ । ६४ ) "फण गतौ" ( भ्वादि० ) 'फणति गतिकर्मा' ( निघ० २ । १४ ) आङ्पूर्वकस्य फणधातोर्यङि लुकि तदभ्यासस्य 'नीक्'—इत्यागमः शतृप्रत्यये निपात्यते ।

दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ।

भा०—प्रसिद्धाश्वनामभ्य उत्तराणि—अन्याश्वसदृशानि दश सन्ति यानि खल्वादिष्टोपयोजनानि—इत्याचक्षते ह्याचार्याः । तैः सह ये ह्यादिष्टा देवास्तेषामुपयोजनानि—उपयोगकराणि । तैरुपयोक्तव्यानि यथा लोकेऽश्वा उपयोज्या अश्वस्वामिभिः, तथैतानि स्वेन सहादिष्टानां स्वामिभूतानां देवानामुपयोगकराणि, तैरुपयोज्यानि, तच्छक्तिभूतानि हि सन्ति, यथा हरी इन्द्रस्य, हरी अश्वसदृशौ स्तः—इन्द्रस्य देवस्य, इन्द्रो विद्युत्—विद्युतो हरणशीलौ, प्रापणशीलावश्वौ शुष्कार्द्रे द्वे धारे अद्यत्वे "पोजिटिव-नगेटिव" इत्याख्ये । "ऋक् सामे वा इन्द्रस्य हरी" (ऐ०ब्रा०२।२४) अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम" ( छान्दो० ) आदित्योऽपि इन्द्रस्तस्य शुक्लभा नीलभाः किरणौ प्रधानौ तौ तस्य हरी । रोहितोऽश्वसदृशा अग्नेर्देवस्याश्वा ज्वालाः । हरितो हरणशीला रश्मयोऽश्वा इवादित्यस्य, अश्विनोः—ज्योतीरसयोराग्नेयसौम्यगुणयोर्देवयोः "ज्योतिषाऽन्यो रसेनान्यः" ( निरु० १२ । १ ) तयोरश्वाः—रासभा रसरूपा वाष्पसदृशास्तरङ्गाः "यदरसदिव स रासभोऽभवत्" (शत० ६ । १ । १ । ११) अग्निजलयोगेन वाष्पा भवन्ति ते रासभा रसैर्वाष्पयानं गच्छति । पूष्णः पृथिव्या अजाः क्षेपणक्रमाः "अज गतिक्षेपणयोः" ( भ्वादि० ) यैः क्षेपणक्रमैः पृथिवी स्वपरिधौ

भ्रमति । मरुतामान्तरिक्ष्यवायूनां पृषत्योऽद्भुतवर्णाभाः प्रवाहाः—अश्वाः । उषसः—अरुण्यो रक्तवर्णाः—धाराः—अश्वाः । सवितुः—उदयकालवतः सूर्यस्य श्यावाः कृष्ण-गौरवर्णाः किरणाः—अश्वाः । बृहस्पतेः—ऊर्ध्वदिशि वर्तमानस्य देवस्य ऊर्ध्वादिग् बृहस्पतिरधिपतिः "एषा वा ऊर्ध्वादिग् बृहस्पतेर्दिग्" (शत० ५ । ५ । १ । २२) विश्वरूपा अश्वाः । वायोः पृथिव्यां प्रचलनशीलस्य नियुतः—पृथिवी पृष्ठादुड्डयन-शीलाः—नियमनवेगाः—भ्राजयो वा "नियुतो नियमनात्" ( निरु० ५ । २८ ) साहचर्यज्ञानाय, इन्द्रादीनां हरिप्रभृतिभिः सह नित्यसम्बन्धवत्त्वात्, यत्र हरि-प्रभृतय उक्तास्तत्र देवा इन्द्रादय उत्प्रेक्ष्या इति साहचर्यज्ञानायोपदिष्टानि ।

ज्वलतिकर्माण उत्तरे धातव एकादश ।

भा०—पृथिवीस्थपदार्थप्रसङ्गेऽश्वनामान्युक्तानि तदनुषक्तान्यश्वानुषङ्गिकानि-अश्वसदृशनामानि खल्वपि यानि देवानामुपयोजनान्यासन् तान्यप्युक्तानि पुनः पृथिव्यां तेभ्य उत्तरे 'भ्राजते भ्राशते' इत्येकादश ज्वलतिकर्माणो धातवः । 'ज्वलतिकर्माणः' इत्यत्र 'कर्म' शब्देन 'अर्थः' लक्षितः सर्वैरपि भाष्यकारैः, वस्तुतोऽनेन "अर्थः" न लक्ष्यते, किन्तु क्रिया वा व्यापारो वा लक्ष्यते । पश्यन्तु विपश्चितः सर्वत्रैवात्र ग्रन्थे—'कर्म' शब्द आख्यातैः सह तु प्रयुज्यते । ज्वलतिकर्माणः, गतिकर्माणः, पश्यतिकर्माणः । परन्तु आख्यातादन्यत्र न कर्म शब्दः प्रयुज्यते, किन्तु नामशब्दः प्रयुज्यते । अश्वनामानि, अहर्नामानि, उदक-नामानि । इतोऽग्रे ( ज्वलतिकर्माण इत्यस्याग्रे ) 'जमत्, अर्चिः' इत्यादीनि ज्वलतोनामधेयानि । यदि हि कर्मशब्देन 'अर्थः' लक्ष्येत तर्हि सर्वत्र कर्मशब्दः प्रयुज्येत । अश्वकर्माणः—उदककर्माणः, इत्यादि । तस्मात्स्पष्टं जातं कर्मशब्देन व्यापारः क्रिया वा लक्ष्यते । ज्वलतिव्यापाराः पश्यतिव्यापारा धातवः । परन्तु यत्र क्वचित्—आख्यातमपि स्यात् तथा नामापि स्यात्, तत्र कर्मशब्द एव प्रयुज्यते न नाम शब्दः, यतः—"यत्रोभे भावप्रधाने भवतः" इति न्यायात् । तत्र तस्य सामान्यप्रयोगत्वात् 'अर्थः' इति शब्दः सौगम्यार्थं प्रयोक्तुं शक्यते ।

तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥२॥

भा०—ज्वलतिव्यापारेभ्यो धातुभ्य उत्तराणि 'जमत्' प्रभृतीनि ज्वलतो नामानि, तावन्ति—एकादश एव सन्ति । ज्वलतो ज्वलनवतो सत्त्वस्य नामानि—इति ।

इति द्वितीयाध्यायस्य सप्तमः पादः ।

समाप्तश्च द्वितीयोऽध्यायः ।

स्वामि ब्रह्ममुनिकृते निरुक्तसम्मर्शे निरुक्तभाष्ये ।

## तृतीयोऽध्यायः

### तत्र

### प्रथमः पादः

---

कर्मनामान्युत्तराणि षड्विंशतिः। कर्म कस्मात्? क्रियत इति सतः॥

भा०—पृथिवीस्थानां पदार्थानां बाह्यप्रसङ्गानन्तरं मनुष्यसम्बद्धवस्तूनां प्रकरणमारभ्यते, तत्र प्रथमं कर्मनामानि 'अपः, अप्नः, दंसः' प्रभृतीनि षड्विंशतिरत्रोच्यन्ते। तानि खलु ज्वलतोनामभ्य उत्तराणि, यतो ज्वलद् वस्तु कर्मणः प्रेरकं कर्मप्रवृत्तेर्जनकम्। 'कर्म' इति कथमुच्यते? क्रियते–इति सतः। यत् क्रियते तत् कर्म। 'सतः' इति कारकद्योतनाय निर्देशः, अस्तीति सत् तस्य सतस्तथाभूतस्य क्रियमाणस्य नाम 'कर्म' इति द्योत्यते।

अथापत्यनामान्युत्तराणि पञ्चदश। अपत्यं कस्मात्। अपततं भवति। नानेन पततीति वा॥ १॥ तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः—

"परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम। न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः॥" (ऋ० ७।४।७)

परिहर्तव्यं हि नोपसर्तव्यम्। 'अरणस्य रेक्णः' अरणोऽपार्णो भवति। रेक्ण इति धननाम, रिच्यते प्रयतः। 'नित्यस्य रायः पतयः स्याम' पित्र्यस्य धनस्य। 'न शेषो अग्ने अन्यजातमस्ति 'शेष इत्यपत्यनाम। शिष्यते प्रयतः। अचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुषः॥ २॥

भा०—शास्त्रविहितकर्माण्यग्निहोत्रादीनि गृहस्थाश्रमिभिः कर्तव्यानि, गृहस्थाश्रमश्च धर्मतोऽपत्योत्पादनायेत्यतः कर्मनामभ्य उत्तराणि 'तुक्, तोकम्' प्रभृतीनि पञ्चदशापत्यनामानि सन्ति। अपत्यं कुतः–उच्यते–अपततं भवति–'अप'

वर्जने—पृथग्भावे। पितृतः पृथक् ततं सन्तानं भवतीति हेतोस्तदपत्यम् "अघ्न्यादयश्च" (उणा० ४।११२) इति—अपपूर्वकात् तन् धातोर्निपातनात् टिलोपो यक्प्रत्यये। अथवाऽनेन न पतति पिता लोकात्, न—'अनेन' पतति, 'अ—पत्—यक्' नञ्पूर्वकात् पतधातोरपत्यं निपातनादेव। अथेदं विचार्यते यथा खलूत्पादयितुर्जनस्य प्रजा—अपत्यं सन्तानं भवति तथोदाहरणं दास्यामः। 'परिषद्यं ह्यरणस्य'·····'अरणस्य रेक्णः' अरणोऽपार्णो वंश्योदकसम्बन्धाभावः—निजरेतःसम्बन्धाभावो यस्मिन् तदनुदकसम्बन्धजातं धनम्—अपत्यधनम्—"सुपां सुपो भवन्तीति व्यत्ययेन प्रथमास्थाने षष्ठी।" "अर्णः—उदकनाम" (निघ० १।१२) "रेक्णो धननाम" (निघ० २।१०) प्रयतः—म्रियमाणस्यात्र लोके रिच्यते शिष्यते ततो वियुज्यते "रिचेर्धने घिच्च" (उणा० ४।१९९) इत्यनेन 'असुन्' प्रत्ययः। भौतिकधनं पुत्रधनं च।

मन्त्रार्थः—

हे अग्ने! अग्रनायक देव! निजरेतःसम्बन्धरहितमपत्यधनं परिषद्यं परिहर्तव्यं परिहार्यं सर्वतस्त्याज्यमपत्यं नित्यस्य पूर्वतो निजसम्बन्धवतो नितरां प्राप्तस्य पित्र्यस्य पुत्रधनस्यैव पतयः स्याम। अन्यजातं शेषः—अपत्यम् "शेषः—अपत्यनाम" (निघ० २।२) प्रयतो म्रियमाणस्यात्र शिष्यते 'शिषधातोरसुन्' इति। "सर्वधातुभ्योऽसुन्" (उणा० ४।१८९) तदन्यजातमपत्यमचेतानस्याचेतयमानस्य प्रमत्तस्य मूढस्याज्ञस्य भवति न हि ज्ञानी तथाभूतमपत्यमिच्छति। तस्मादेव नोऽस्मान् पथः—मार्गात्—मा विदूदुषः—भ्रंशय।

तस्योत्तरा भूयसे निर्वचनाय—

न हि ग्र॒भायार॑णः सु॒शेवो॒ऽन्योद॑र्यो॒ मन॑सा॒ मन्त॒वा उ॑।
अधा॑ चि॒दोकः॒ पुन॒रित्स ए॒त्या नो॑ वा॒ज्य॑भी॒षाळे॑तु॒ नव्यः॑॥ (ऋ० ७।४।८)

न हि ग्रहीतव्यो अरणः सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यः 'ममायं पुत्रः' इति। अथ स ओकः पुनरेव तदेति यत आगतो भवति। ओक इति निवासनामोच्यते। ऐतु नो वाजी वेजनवान्। अभिषहमाणः सपत्नान्। नवजातः स एव पुत्र इति॥

भा०—अन्यस्यापत्ये स्वापत्यत्वं न मन्तव्यमित्यत्र विशिष्टविवरणाय "न हि ग्रभाय"·····इति ऋगुच्यते।

मन्त्रार्थः—

अरणोऽपार्णो निर्जरेतःसम्बन्धरहितो न हि ग्रभाय ग्रहीतव्यः 'इति सुलुक् । आयप्रत्ययः कृत्यार्थः ।' "कृत्यल्युटो बहुलम्" ( अष्टा० ३ । ३ । ११३ ) प्रत्ययबहुलत्वम्—'ग्रह—आयः' हकारस्य भकारश्छान्दसः । सुशेवः सुसुखः सु शोभनोऽपि "शेवः सुखनाम" ( निघ० ३ । ६ ) सोऽन्योदर्योऽन्याया स्वकीतो भिन्नाया उदरः—अन्योदरस्तत्र भवोऽन्योदर्यः—यद्वा—उदरशब्दः सामान्येनान्तः—कोष्ठवाचकः—अन्यपुरुषस्यान्तःकोष्ठजातरेतोभवः । उभयथा व्याख्यातव्यमत्राभीष्यते स तथाभूतो मनसापि न मन्तव्यो यदयं मम पुत्रः । अध—अधानन्तरं च स पुनरेव यत आगतः स्वकीयमोको गृहं गच्छति, ओक इति निवासस्थानम् "उच समवाये" ( दिवा० ) बाहुलकात्—असुन् कुत्वं च ( उणा० ४ । २१६ ) एतु प्राप्नोतु नोऽस्मान् वाजी वेजनवान् प्रगतिमान् ज्ञानवान्—अभिषहमाणः शत्रून् स तथाभूतो नव्यो नवजातः प्रारम्भतोऽस्मद्वंशे शिशुरूपेणोत्पन्नः ॥

अथैनां दुहितृदायाद्य उदाहरन्ति पुत्रदायाद्य इत्येके ॥३॥—

"शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् । पिता यत्र दुहितुः सेकमृञ्जन्संशग्म्येन मनसा दधन्वे ॥"

( ऋ० ३ । ३१ । १ )

प्रशास्ति वोह्ळा सन्तानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता दूरे हिता दोग्धेर्वा ॥ नप्तारमुपागमद् दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य, रेतसो वा अङ्गादङ्गात् सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य । विधानं पूजयन्नविशेषेण मिथुनाः पुत्रा दायादा इति ॥

भा०—अथैतां 'शासद्वह्निः' वक्ष्यमाणामृचं दुहितृदायाद्ये—उदाहरन्ति धर्मविदो न्यायविदो वा यद् दुहितुरपि दायाद्यमस्तीति दृश्यते । पित्रा दायो दातव्यो भागः सन्तानाय तं दायमादत्ते यः स दायादो दायग्राही तस्य दायादस्य कर्म दायाद्यं दायादाधिकारः । 'दायाद' इति शब्दात् भावे कर्मणि च ष्यञ् प्रत्ययो भवति "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( अष्टा० ५ । १ । १२३ ) ब्राह्मणादिषु दायादः पठितोऽस्ति । पुत्रदायाद्ये पुत्रस्य दायादाधिकारे—एके मन्यन्ते न दुहितुः । 'शासद्वह्निः' इति मन्त्रम् ।

मन्त्रार्थः—

वह्निः—वोढा—विवोढा—आर्यो वोऽवहत्—अवहत् स पतिः सन्तानकर्मणे स्वसन्तानार्थाय दुहितुः पुत्रभावं पुत्रत्वं दुहितरं स्वपुत्रं प्रख्यापयति आत्मानं प्रति सूचयति तस्या विवाहकालेऽथ च दुहितुर्गर्भस्थयज्ञात्—दुहितुः पुत्रं नप्तारं दौहित्रं स्वपौत्रमुपागमत्—उपागच्छति—अङ्गीकरोति । ऋतस्य यज्ञस्य प्रजनन-यज्ञस्य पुत्रोत्पादनयज्ञस्य "ऋतस्य यानान् यज्ञस्य यानान्" ( निरु० ८ । ६ ) रेतसः—वीर्यस्य वा विद्वान् "ऋतमुदकनाम" ( निघ० १ । १२ ) रेतश्चोदकं मानवस्य "रेतः—उदकम्" ( निघ० १ । १२ ) अथ च तस्य प्रजननयज्ञस्य रेतसो वा—अङ्गादङ्गात् सम्भूतस्य हृदयादधिजातस्य मातरि सन्तानमातरि प्रत्यृतस्य प्रतिगतस्य तन्निमित्तं तदन्तरे समर्पितस्य दीधितिं विधानं शास्त्रोक्त-गर्भाधानविधानं सपर्यन् पूजयन् स्वीकुर्वन् यथा पुत्रस्योत्पादने मन्त्रपाठादिः क्रियते स्वाङ्गसारवस्तुरेतश्च सिच्यते तथैव दुहितुरुत्पादनेऽपि मन्त्रपाठादिः क्रियते स्वाङ्गसारवस्तुरेतश्च सिच्यते । तस्मात्—अविशेषेण—अभेदेन समानभावेन मिथुनाः—उभये स्त्रीपुरुषाः पुत्रा अपत्यरूपा दायादा दायस्य ग्रहीतारो दाय-भागिनो भवन्ति ॥

निरुक्तयः—दुहिता दुर्हिता दूरे हिता दोग्धेर्वा । पितृदृष्टौ सा दुहिता दुर्हिता भवति पुत्रः सुहितः । पुत्र एव पितुर्वार्धक्ये कल्याणं साधयति न दुहिता परकुल-वासित्वात् तथा च तस्याः पराधीनत्वान् पितुश्चिन्ताकारणं च भवति । दुहिता दूरे हिता दूरे परकुले हितं यस्य न पितृकुले सा दूरे हिता—'अलुक् समासे' यद्वा दूरे स्थाने हिता पितृदृष्टौ दूरे देशे हिता प्रिया भवति न निकटस्थाने तथा स्नेहपात्रं भवति । दोग्धेर्वा पितृकुलं सदा दोग्धि हि ततो वस्त्राभूषणधनादिप्राप-णाय । "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" ( उणा० २ । ९६ ) एते तृनन्तास्तृजन्ता वा निपात्यन्ते । अतो 'दुहिता' शब्दे खल्वनेकनिर्वच-नानि सम्भवन्ति । तत्र 'दुर् हिता' अत्र रेफलोपः, 'दूरे हिता' अत्र 'दूरे' इत्यस्य 'दु' भावः, दोग्ध्री दुहिता—दुह्—तृन्—दोहनशीला—इडागमः ।

अपत्यमङ्गादङ्गाज्जायते रेतस उत्पद्यमानत्वात् तथाऽविशेषेणदायादा मिथुना इति ।

तदेतदृक्छ्लोकाभ्यामभ्युक्तम्—

"अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्" इति ॥

( शत० १४ । ९ । ८ । २६ )

अविशेषेण पुत्राणां दायो भवति धर्मतः। मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥

( मनु० ६ । १३३, १३९ )

भा०—इति तु निगदव्याख्यातौ स्तः। तथाप्युच्यतेऽर्थः—मांसादीनां शरीरधातूनामन्तिमो धातूरेतः सर्वाङ्गेभ्यश्च सारभावेन निःसरति, तत एव पुत्रः सम्भवति—इत्यतः 'अङ्गादङ्गात् सम्भवसि' पुत्रमभिलक्ष्योक्तम्। हृदये स्वात्मनो निवासस्तस्यात्मनः स्वात्मभावादेव पुत्रो जायते। तदर्थस्नेहस्य तत्र हृदये प्रादुर्भावाद्—हृदयादधिजायसे, इति प्रतिपादितम्। 'अविशेषेण' इति स्त्रीपुरुषभावापन्नानामुभयेषां दायः पित्रा दातव्यो भागो धर्मतो विधानतो भवति, विधानतो दायेन भवितव्यम्।

न दुहितर इत्येके। तस्मात् पुमान् दायादोऽदायादा स्त्रीति विज्ञायते। तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसमिति च। स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः॥

भा०—एके खल्वाचार्या मन्यन्ते न दुहितरो दायादाः। अतः पुमान् दायादी स्त्रीत्वदायादा, इति ब्राह्मणे—उक्तम्। अत एवोत्पन्नां स्त्रियं स्वगृहात् पृथक् कुर्वन्ति विवाह्य, न पुमांसं विवाह्य पृथक् कुर्वन्ति। स्त्रीणां दानं विक्रयोऽतिसर्गः—स्वयंवरश्च विद्यन्ते, पुरुषस्य न।

पुंसोऽपीत्येके, शौनःशेपे दर्शनात्।

भा०—पुरुष इव स्त्री खल्वपि दायादेतिवादिभिरुच्यते। यदिदमुक्तं स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः, इति न युक्तं यतः पुंसोऽपि दानविक्रयातिसर्गा भवन्ति। शुनःशेपस्याख्याने दानादिदर्शनात्। "ऋषेऽहं ते शतं ददाम्यहमेषामेकमाऽऽत्मानं निष्क्रीणा इति....." "शुनःशेपे ह रुक्मशतं दत्त्वा स तमादाय..... अनेनाऽऽत्मानं निष्क्रीणा" ( ऐ० ब्रा० ३३ । ३ ) शुनःशेपस्य हरिश्चन्द्राय ( महाभा० अनु० ६ । ६ ) इति विक्रयः 'अतिसर्गोऽपि सगरेण कृतोऽसमञ्जसः ( रामायणे १ । ३८ ) ( महाभा० वन० १०५, १०७ ) विश्वामित्रेण ज्यायसो मधुच्छन्दसोऽतिसर्गः कृतः ( ऐ० ब्रा० ३३।६ ) तस्मात् स्त्रीणामदायाद्ये दानविक्रयातिसर्गा हेतुत्वेनोपस्थापिता अनेकान्तिकाः।

अभ्रातृमतीवाद इत्यपरम्।

अमूर्या यन्ति जामयः सर्वा लोहितवाससः।
अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः *॥

* क्वचिल्लुप्तायामाथर्वणशाखायां स्यादयं मन्त्रः। अथर्ववेदे तु—

अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया अनिर्वाह औपमिकः ॥ ४ ॥

भा०—भ्रातृरहिता कन्या दायादा भवतीति मतमपरं केषाञ्चिदाचार्याणाम् । तत्र प्रमाणमुद्ध्रियते "अमूर्या यन्ति···" 'अमूः' इति नाडीनां विशेषणम् । द्वितीयमन्त्रे 'धमनिर्मही' तृतीयमन्त्रे "शतस्य धमनीनां सहस्रस्य-सिराणाम्" स्पष्टं हि धमन्यः सिराश्च । यास्ता नाड्यो रजःस्राविण्यो लोहित-वाससो लोहितं वासो वस्त्रं याभिर्जायते तास्तथाभूता या यन्ति रक्तस्रावे प्रवृत्ताः सन्ति ता एव हतवर्त्मानो हतमार्गास्तिष्ठन्ति, गर्भे स्थिते सति चिकित्सया व्याधौ निवृत्ते सति वा यथा—अभ्रातृका कन्या हतवर्त्मानो हतमार्गास्तिष्ठन्ति । वेदे तु हतवर्चसो हततेजस्काः । पितृगृहे सन्तानकर्मणे पिण्डदानाय सन्तानस्य कर्म पिण्डदानं वंशप्रदानं वंशधानं वा पितुर्वंशप्रदानार्थं पितुर्वंशधारणार्थं वा नतु पत्युर्वंशप्रदानार्थं यद्वा पत्युर्वंशधारणार्थम् । पिण्डो वंशः "असपिण्डा च या मातुः (मनु० ३ । ५) इति प्रमाणात् पिण्डं वंशः । सा—अभ्रातृका पितुर्गृहे तिष्ठति, तस्या अभ्रातृकाया अनिर्वाहः पितुर्गृहात्—निर्वहणस्य—निर्गमनस्य प्रतिषेधोऽस्ति, न हि तां तत्पतिः स्वगृहं निर्वोढुं शक्नोति धर्मव्यवस्थया, परन्तु सा—अभ्रातृका तस्य भार्या तु स्वपितुर्गृहे हि स्थास्यति । इत्यत्राभ्रातृकायाः स्त्रियः सति विवाहेऽनिर्वाह पितृगृहस्यात्यागोऽस्त्यौपमिकः, उपमया लक्षितः, विधवेव देवरम्—इति यथा नियोगो न तु साक्षाल्लक्ष्यः ।

तस्योत्तरा भूयसे निर्वचनाय—

अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥ (ऋक् १ । १२४ । ७)

अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिम् । गर्त्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्त्तः सभास्थाणु गृणातेः सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सा रोहति । तां तत्राक्षैराघ्नन्ति सा रिक्थं लभते ॥

---

"अमूर्या यन्ति योषितो हिरो लोहितवाससः ।
अभ्रातर एव जामयस्तिष्ठन्तु हतवर्चसः ॥ (अथर्व० १ । १७ । १) ।

भा०—अभ्रातृका स्त्री स्वगृहे पितृगृहे हि तिष्ठति—इति विशिष्टविधिदर्शनाय ऋचमुदाहरति—'अभ्रातृका····' अभ्राता—अभ्रातृका स्त्री पुंसः स्वपुरुषान् पितॄन् पितृजनान् प्रतीची सती पतिगृहे गत्वाऽपि प्रतिवृत्ता तान् पितृजनानभिमुखी-भूयागच्छति सन्तानकर्मणे पिण्डदानाय, सन्तानस्य यत्कर्म वंशप्रदानं वंशाधानं तस्मै-तत्पूर्तये, न पतिम् । पुनर्न पतिमेति पतिगृहं नेति, पतिरेव तत्पितुर्गृहमागच्छे-दितिवदुषा अपि सूर्यम्प्रत्येति । पुनः सोषाः 'अभ्रातृका स्त्री गर्तारोहणीव—सनये धनानाम्' धनानां सनये धनलाभाय दाक्षिणाजी गर्तारोहिणी—यथा । अन्यभाष्य-कारैर्दक्षिणदेशप्रचलिता रीतिरत्र मन्त्रार्थेऽवलम्बिता, नित्ये शाश्वतिके वेदमन्त्रार्थे देशप्रचलितरीतेरवलम्बनं न युक्तम् । धनार्थे धनाधिकारेऽभियोगस्य द्वौ पक्षौ भवतः, एको दक्षिणो द्वितीयो वामः । दक्षिणपक्षो वादिनः, वामः प्रतिवादिनः । आजिः खलु संग्रामः "आजिः संग्रामनाम" ( निघ० २ । १७ ) 'अज क्षेपणे' ( भ्वादि० ) 'अज्यतिभ्यां च—इण्' ( उणा० ४ । १३१ ) संग्रामो युद्धं संघर्षः प्रतिद्वन्द्विता प्रतियोगिता बहुधा शस्त्रवाग्भ्यां भवति । शस्त्राणि वचनानि वा तत्र क्षिप्यन्ते । धनाधिकारप्राप्तये तु न्यायालये न्यायस्थले, वाचा वाग्भ्यां वाग्भिर्वा भवति । खल्वाजिः स च न्यायालयस्य भाषायामभियोग उच्यते । दक्षिणश्चा-सावाजिश्च दक्षिणाजिः, दक्षिणाजिः सोढोऽस्याः—दक्षिणाजिना प्रवर्तते वा सा दाक्षिणाजी "तदस्य सोढम्" ( अष्टा० ४ । ३ । ५२ ) दक्षिणपक्षाजिमती—अभियोगे वादिनी । सा स्वाधिकारवादिनी पितृदायार्थे—अपतिका—अविवाहिता कुमारी तथा, अपुत्रा विवाहे कृतेऽपि—अजातपुत्रा—अभ्रातृका गर्तारोहिणी भवति गर्तं सभास्थाणुं न्यायसभावेदिमारोहति—आरोहेद् वा सा न्यायराजव्यव-स्थया वा प्रमुखपञ्चजनव्यवस्थया वा स्यात् तत्र सभास्थाणौ सत्यसङ्गरे सत्यस्य कथननिर्णयस्थले । "गर्तो गृहनामसु" ( निघ० ३ । ४ ) "अत्रौचित्येन राज-पुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते" ( सायणः ) स्वाधिकारप्राप्तये तां दाक्षिणाजीम्—अभियोगे वादिनीं सतीं तस्याः प्रतिद्वन्द्विनः पितृव्यादयो वंशजा वाऽक्षैर्घ्नन्ति । अक्षो द्यूतपाशो द्यूतपाशैरभियुज्यते सा । "अशेर्देवने" ( उणा० ३।६५ ) "अशूङ् व्याप्तौ" ( स्वादि० ) देवनेऽर्थे स प्रत्ययः । देवनं विजिगीषा-जयाकांक्षा, अत्र जयपराजयप्रसङ्गो हि देवनं तदत्र विजीगीषायां जयसाधन-प्रतिवादः पाशोऽक्षः । शब्दकौस्तुभे कोषे—अक्षः—'मुकदमा' इत्यर्थोऽपि कृतः । प्रतिद्वन्द्विनः प्रतिवादिनः स्वपक्षपाशैः स्वप्रतिवादैस्तां घ्नन्ति प्रहरन्ति । परन्तु सा सत्या दायार्थेऽधिकृता यदा न पराजयते तदा सा न्यायव्यवस्थातः रिक्थं धनं पितृधनं लभते ।

श्मशानसञ्चयोऽपि गर्त उच्यते गुरतेरपगूर्णो भवति। श्मशानं, श्मशयनम्॥ श्म शरीरम्॥ शरीरं शृणातेः शम्नातेर्वा॥ श्मश्रु लोम, श्मनि श्रितं भवति लोम लुनातेर्वा लीयतेर्वा॥

"नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात् प्रमायुको यजमानः ( मै० सं० ३। ९। ४, काठ० २६। ६ ) इत्यपि निगमो भवति ※।

भा०—श्मशानसञ्चयः श्मशानस्य श्मशाने वा यः सञ्चयः काष्ठसञ्चयो शवदाहकर्मार्थः सोऽपि गर्त उच्यते लोके या काष्ठचिता कथ्यते। कथं गर्तः, गुरतेः "गुरी उद्यमने" ( तुदा० ) "हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्॥" ( उणा० ३। ८६ ) इति तन् प्रत्ययो धातोर्बाहुलकात्। 'गुर् तः' उपधाया उकारस्य स्थाने-अकारः। यतः सोऽपगूर्णोऽपोद्यमकृतः सः। अनिष्टोद्यमविषयको मानवानां भस्मीकरणाय हि सः। श्मशानं श्मशयनम्—मध्याद् यकारलोपः। श्म शरीरं 'शॄ हिंसायाम्' ( क्र्या० ) "शमु उपरमे" ( क्र्या० ) 'शॄ ड्मनि प्रत्ययः' श्मन्—श्म। 'शम् ड्मनि' श्मन् श्म। श्मश्रु लोम श्मनि शरीरे श्रितं भवति श्मश्रि डुन् श्मश्रु "श्मनि श्रयते डुन्" ( उणा० ५। २८ ) लोम लूञ् धातोर्लीधातोर्वा लूयते छिद्यते, यद्वा लीयते श्लिष्यते शरीरे "ली श्लेषणे" ( दिवा० ) ( उणा० ४। १५१ ) मनिन्प्रत्ययान्तो निपात्यते। निपातनात् लूञ् धातोर्वा लीधातोर्वा सिद्ध्यति। गर्तः श्मशानसञ्चयः काष्ठचिताऽत्र प्रमाणं दीयते 'नोपरस्य'। उपरो यज्ञस्तम्भस्य य उपरतो बहिर्भागो भूमितो बाह्यभागोऽनुच्छ्रितो भवति। स आच्छादितो भवेत्। अन्यथा स नग्नो भवेत्। तं नाविष्कुर्याद् यजमानः, आविष्कुर्याच्चेद् गर्तेष्ठाः स्यात्—श्मशानसञ्चये काष्ठचितायां तिष्ठेत् प्रमायुको भवेत्—मरणधर्मवान् भवेद्—यज्ञनियमभङ्गेन। आयुष्यक्षयकारी भवेत्।

रथोऽपि गर्त उच्यते गृणातेः स्तुतिकर्मणः। स्तुततमं यानम् "आरोहथो वरुण मित्र गर्तम्" ( ऋ० ५। ६२। ८ ) इत्यपि निगमो भवति।

※ 'इत्यपि निगमो भवति' इति पाठः क्वचिन्नोपलभ्यते।

भा०—रथोऽपि गर्तः कथ्यते "गृ शब्दे" ( क्र्यादि० ) धातुरत्र स्तुतौ गृह्यते "गृणाति अर्चतिकर्मा" ( निघ० ३ । १४ ) हे मित्र ! हे वरुण ! युवां गर्तं रथमारोहथः । अत्र गर्तः स्तुततमं रथयानम् ।

समग्रमन्त्रस्तदर्थश्च—

हिर॑ण्यरूपमु॒षसो॒ व्यु॑ष्टावयः॑स्थूण॒मुदि॑ता सूर्य॑स्य ।
आरो॑हथो वरुण मित्र॒ गर्त्त॒मत॑श्चक्षाथे॒ अदि॑तिं॒ दिति॑ं च ॥

उषसो व्युष्टौ—विवासे प्रादुर्भावे, अथ सूर्यस्य—उदिता—उदितौ, किनि रूपम् । हिरण्यरूपं हिरण्यस्येव रूपं यस्य तद् हिरण्यरूपम्—अयःस्थूणं—अयोऽपि "हिरण्यनाम" (निघ० १।२) तद्वद् हिरण्यस्य ज्योतिर्मयी स्थूणा यस्मिन् प्रकाश-रथे तथाभूतं गर्तं रथं हे मित्र! वरुण! हे अहन्! रात्रे! च हे होरात्रौ! "अहर्वै मित्रो रात्रिर्वरुणः" (ऐ० ब्रा० ४।१०) युवामारोहथारोहणं कुरुथः । यतो युवाम्—अदितिं दितिं च पृथिवीं द्युलोकं च । स्वधामनि पृथिवी—अदितिरखण्डिता—एकरूपा द्यौश्च दितिः—खण्डिता तारागणखण्डेषु दृश्यमाना । चक्षाथे दर्शयतः । "द्यावापृथिवी वै मित्रावरुणयोः प्रियं धाम ( तां० १४ । २ । ४ ) "अदितिः पृथिवीनाम" ( निघ० १ । १ ) उषोवेलायां सूर्यस्योदयकाले—अहोरात्रौ पर्यावर्तेते द्वयोः पार्श्वयोः, अहस्तु पृथिवीं दर्शयति रात्रिश्च द्युलोकं तारामण्डलं दर्शयति । इति भौगोलिकं खागोलिकं ज्योतिर्विज्ञानमाधिदैविकदृष्ट्यात्र प्रदर्शितम् । आधिभौतिक-दृष्ट्या—राजपुरुषगणः प्रजापुरुषगणश्चोभौ मिलित्वा राज्यशासनशकटमारुह्य प्रात-रेवादितिमखण्डनीयां राजनीतिं दितिं प्रजासु च पृथक् पृथक् प्रवृत्तां याच्यां च पश्यतां पुनर्यथायोग्यमाचरेताम् ।

जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते रूपाणीति ॥
चतस्र उपमाः "नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्भवति" इत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः॥

भा०—'अभ्रातेव पुंस·····' इत्यस्या ऋच उत्तरार्द्धभागो व्याख्यायते । जाया यथा गार्हस्थ्यमुशती—कामयमाना सुवासा सुन्दरवस्त्रादिकं धारयन्ती सती खल्वृ-तुकालेषु हस्रा—इव हसन्तीव दन्तान् रूपाणि च निरिणीते विवृणुते—अप्सः रूपाणि दर्शयति एवमुषाः । एवमत्र मन्त्रे चतस्र उपमाः सन्ति । 'अभ्रातेव, गर्त्तारुगिव, जायेव, हस्रेव ।' अभ्रात्रीं नोपयच्छतेऽस्य पितुस्तोकमपत्यं हि तद् भवति न स्वस्य भवति—इति यास्कपरामर्शः । यः स्वकीयगृहे स्वसन्तानं तिष्ठेदित्याकांक्षति

तदर्थस्तु स्पष्टः—अभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षस्तस्याः पितुश्च पुत्रभावः। वैदिकविधौ खल्वभ्रातृकाया विवाहप्रतिषेधो न, किन्त्वभ्रातृकातो जातः पुत्रो न तस्याः पत्युः किन्तु तत्पितुः स पौत्रो भवति।

पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्जयति सन्दधात्यात्मानं सङ्गमेन मनसेति॥

भा०—'शासद्वह्नि....' इति मन्त्रस्य पूर्वार्धस्य व्याख्यां तथा तत्र प्रसक्तानुप्रसक्तवृत्तं च प्रदर्श्योत्तरार्धस्य व्याख्या क्रियते। "पिता यत्र दुहितुः सेकमृञ्जन्" यत्रावस्थायां काले वा कन्यायाः पिता दुहितुः—अप्रत्ताया जामात्रे दुहितुर्दानात् प्राक्—तद्विवाहात् प्राक् स्थितायाः सेकम्—रेतःसेकं वीर्यसेक्तारं जामातारम्—ऋञ्जन् प्रसाधयति—अनुकूलीकरोति "ऋञ्जति प्रसाधनकर्मा" (निरु० ६।२१) यदस्यां यः पुत्र उत्पत्स्यते स मम भविष्यति। तदा तं शग्म्येन मनसा दधन्वे—एवं सः शग्म्येन सङ्गमेन सुखमयेन सान्त्वभावगतेन मनसा "शग्म्यम्—सुखनाम" (निघं० ३।६) सन्दधन्वे—आत्मानं सन्दधाति। स्वात्मानं पुत्रपौत्रत्वेन संयोजयति नात्मानं पुत्रपौत्राभ्यां वियुक्तं मन्यते—इति—स्वात्मानं सन्तोषयति। इति मन्त्रात् सिद्धमिदं यदभ्रातृका दुहिता दायदा भवति, यतः सा स्वपितुः पुत्ररूपेणात्मानं स्वपुत्रं च पौत्ररूपेण मन्यते। अन्यथा पुत्रएव दायादः सत्यामपि दुहितरि तथा स्पष्टीक्रियते।

अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति। ज्येष्ठं पुत्रिकाया इत्येके॥ ५॥

न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन्॥ (ऋ० ३।३१।२)

न जामये भगिन्यै। जामिरन्येऽस्यां जनयन्ति जामपत्यम्। जमतेर्वा स्याद् गतिकर्मणो निर्गमनप्राया भवति॥ तान्व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादात्॥ चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य 'यदी मातरोऽजनयन्त वह्निम्।' पुत्रम्। अवह्निं च स्त्रियम्। अन्यतरः सन्तानकर्ता भवति पुमान् दायादः। अन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै॥ ६॥

भा०—अथ पुनरेतां "न जामये" इति वक्ष्यमाणामृचं भगिन्याः—धन-प्रतिषेधे दायाद्यप्रतिषेधे—उदाहरन्ति । "न जामये" तान्व आत्मजः पुत्रो जामये स्वभगिन्यै रिक्थं धनं दायं पितृधनं नारैक्—न प्रारिचत् प्रादात् प्रददाति । किन्तु सनितुः सम्भक्तुर्हस्तग्राहस्य भगिनीपतेर्गर्भं व्यत्ययेन द्वितीया गर्भस्य निधानं गर्भनिधानीं कृतवान्—करोति वा, न तु धनभागिनीं, यदि तु मातरो वह्निं पुत्रं तथा—अवह्निम्—अवोढ्रीं कन्यां जनयन्ति तर्हि द्वयोरन्यन्तरः सुकृतो 'सुकृतयोः' पुत्रः सन्तानस्य कर्ता, पितुः पौत्रस्योत्पादयिता स्वपुत्रस्य कर्ता, अतः पुमान् हि दायादः, अन्यतरो जामिर्भगिनी—ऋन्धन्—ऋन्ध्यमाना वर्ध्यमाना वर्धयित्वा परस्मै दीयते । ज्येष्ठं पुत्रिकाया—इत्येके "यदि मातरो ऽजनयन्त वह्निमन्यः कर्ता सुकृतो-ऽन्य ऋन्धन्" पुत्रिकासम्पादनानन्तरं तस्य भार्या वह्निं वोढारं पुत्रं जनयेत् तर्हि पुत्रिकायै—अर्धयित्वा धनमर्धमर्धं कृत्वा दातव्यम् । ज्येष्ठं प्रथमार्धं धनं पुत्रिकायै शिष्टभागोऽन्यस्मै—अन्याभ्यामन्येभ्यो वा । अत्र विषये निष्कर्षः ( १ ) सन्तानेषु पुत्रस्यैव पैतृकधनेऽधिकारः, पुत्रएव हि दायादः, न तु पुत्री । ( २ ) पुत्रस्याभावे पुत्री, पुत्रिका सती पितुर्गृहे स्थिता सती, पतिगृहे सती वाऽपि दायादा । ( ३ ) पुत्रिकानन्तरं तस्या जाते भ्रातरि पितुर्धनार्धस्य भागिनी सा । मनुवचने "पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायेत । समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियः ॥" ( मनु० ९ । १३४ ) ।

इति तृतीयाध्यायस्य प्रथमपादः ।

---

## द्वितीयः पादः

---

मनुष्यनामान्युत्तराणि पञ्चविंशतिः । मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टाः । मनस्यतिः पुनर्मनस्वीभावे । मनोरपत्यं मनुषो वा ॥ ७ ॥

भा०—पृथिवीस्थानीयवस्तुप्रसङ्गेऽपत्यानि प्रवृद्धिं गत्वा मनुष्या भवन्ति तस्मादपत्यनामभ्य उत्तराणि 'मनुष्याः, नरः' प्रभृतीनि मनुष्यनामानि पञ्चविंशतिः सन्ति । मनुष्याः कस्मादु यन्ते, यतस्ते मत्वा कर्माणि सीव्यन्ति कर्मणां सीवनं कुर्वन्ति तानि कर्माणि सम्बद्धानि करोति । "मनु—स्य' इति विभज्य ह्युच्यते मनुते हि मनुर्मननशीलः स मत्वा—सीव्यति मनुष्यः, 'मनु०' इत्युपपदे सीव् क्यन् प्रत्यय औणादिको बहुलात्, धातोष्टिलोपे सति मनुष्यः । तस्मात्—

'मनुष्यः'। निरुक्तार्थस्याश्रयः कर्माणि। सीवनं भवति नैकवस्त्रे, परन्तु द्वयोर्बहुषु वा सीवनक्रिया प्रवर्तते। अत्र बहूनि कर्माणि खल्वभीष्यन्ते। मनुषस्य कर्मणां शृङ्खला भवति, मनुष्येतरप्राणिनः कर्मणां शृङ्खला न भवति, तत्र मननाभावात्। पुनर्मनुष्यो वैयक्तिककर्म पारिवारिकेण कर्मणा सह सीव्यति संयोजयति। पारिवारिकं च कर्म सामाजिकेन कर्मणा, सामाजिकं राष्ट्रियेण कर्मणा सीव्यति, न तथा पश्वादिः स तु स्वव्यक्तित्वमाश्रित्य यद्वा स्वव्यक्त्ये स्वार्थाय वा कर्म करोति, परार्थं तु न स मनुते। अथ मनुष्यो भूतं कृतं कर्म वर्तमानेन कर्मणा संयोजयति। वर्त्तमानं च भविष्यता कर्मणा सह सम्बध्नाति, न तथा मनुष्येतरः प्राणी। मनस्यमानेन प्रजापतिना परमात्मना सृष्टाः—इति मनुष्याः। यतस्तत्र मनुष्ये तस्य सर्वाः सर्जनकला भासन्ते। उक्तं हि "स····देवान्सृष्ट्वाऽमनस्यतेव तेन मनुष्यानसृजत" ( मै० सं० ४। २। १ )। मनुरेव मनस्यमानः—मनस्यमानो मनस्वी, मनस्वी हि मनुते नामनस्वी मनस्वी मनस्यमानो मनुर्हि पुनरपि मनस्यमानस्य मनस्विनो वा स्थानापन्नो मनुः। 'मनुः' इत्युपपदात् 'सृज्' धातोर्ड्यन् प्रत्ययः = मनुष्यः। मनोरपत्यं वा मनुष्यः। यथा व्याकरणे—"मनोर्जातावञ्यतौ षुक् च" ( अष्टा० ४। १। १६१ ) मनुष्यः। यद्वा 'मनुष्' षकारान्तः, मनुवाचकः। ततो यत् प्रत्यये मनुष्यः 'षुक्' इत्यागमेन विनापि।

तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ॥

तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येनासु॑राँ अ॒भि दे॒वा असा॑म।
ऊर्जा॑द उ॒त य॑ज्ञियास॒: पञ्च॑जना॒ मम॑ हो॒त्रं जु॑षध्वम् ॥
( ऋ० १० । ५३ । ४ )

भा०—तत्र मनुष्यनामसु यः 'पञ्चजनाः' शब्दस्तस्यैतस्य निगमा वैदिकप्रयोगाः सन्दिग्धा भवन्ति, तेऽत्र निर्णयायोदाह्रियन्ते तद्यथा 'तदद्य वाच' ऋचि।

तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवाः। असुरा असुरताः स्थानेष्वस्ता स्थानेभ्य इति वा। अपि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः। सोर्देवानसृजत तत् सुराणां सुरत्वम्। असोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते। 'ऊर्जाद उत यज्ञियासः।' अन्नादाश्च यज्ञियाश्च। ऊर्गित्यन्ननामोर्जयतीति सतः। पक्वं सुप्रवृक्णमिति वा। 'पञ्चजना मम होत्रं जुषध्वं' गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा

निषादः पञ्चम इत्यौपमन्यवः। निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः।

भा०—अद्य वाचो विद्यारूपाया यज्ञियवाण्यास्तत् प्रथमं परमं परेभवः परमो, यथा मध्ये भव मध्यमः, परश्चाभीष्टोऽभीष्टे भवं तत्सिद्धस्वरूपं फलस्य सिद्धरूपं सिद्धफलवत्त्वं वा मंसीय–मन्ये–जाने, येनासुरान् देवाः–अभि–असाम वयं देवा विद्वांसो वाग्मिनोऽभिभवेम–अभिभवितुमर्हामः। अत्रार्हार्थे लिङ् "अर्हे कृत्यतृचश्च चकाराल्लिङ् च" ( अष्टा० ३ । ३ । १६९ ) अतो हे। ऊर्जादः–अन्नादाः–अन्नस्य भक्षयितारोऽहिंस्याहारं भुञ्जानाश्च यज्ञियासो यज्ञिया यज्ञमनुतिष्ठन्तो यूयं पञ्चजनाः–मनुष्या मम होत्रं यज्ञं जुषध्वं सेवध्वम्। इति श्रेष्ठजनस्य यजमानस्योक्तिः। परन्त्वत्र केचनाचार्याः 'पञ्च जनाः' शब्देन पञ्चसंख्यायुक्ता जनाः–मन्यन्ते। यद्येव राष्ट्रे गन्धर्वाः–गां वाचं धरन्तो विद्यामध्येतारो ब्रह्मचर्याश्रमिणः, पितरः–पुत्रवन्तो गृहस्थाः, देवाः–विद्वांसो वानप्रस्थाः, असुराः–परहिताय–असून् प्राणानपि ये रान्ति प्रयच्छन्ति ते परिव्राजकाः परहितसाधकाः, रक्षांसि येभ्यः स्वात्मानं रक्षितुमिच्छन्ति तेऽनाश्रमिणः सन्ति। परन्तु चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः पञ्चमो निषादश्च, इत्यौपमन्यव आचार्यो मन्यते। निषादो निषदनो निम्नस्थानको यतोऽस्मिन् पापकं पापमलं निषण्णं निषक्तम्, इति नैरुक्ता मन्यन्ते निषादविषये। पञ्चजनाः सामान्येन मनुष्या यास्कमते। इत्थं भिन्नभिन्नार्थत्वं दर्शितमाचार्येण।

निरुक्तयः—'असुरशब्दस्य यावन्तोऽर्था लक्ष्यन्ते वैदिकसाहित्ये तावन्तोऽत्र निरुच्यन्ते। असुरताः न–सुरताः स्थानेषु गृहेषु, ये गृहेषु न रमणशीला–विरक्ताः परिव्राजकाः 'अ–सु–रम्–डः' डः प्रत्ययो बाहुलकात्। यद्वा स्थानेभ्यः–अस्ताः क्षिप्ताः श्रेष्ठजनैर्बहिष्कृताः पृथक्कृता–निकृष्टजनाः। "असेरुरन्" (उणा० १।४२) इति 'असु क्षेपणे ( दिवा० ) ततः 'उरन्' अथवा 'असुः प्राणः' यतोऽस्तः शरीरे क्षिप्तो वर्तते। तेन तद्वन्तः प्राणवन्तोऽसुराः प्राणिनः, मतुबर्थीयो रः प्रत्ययः। सं च प्राणपोषणपराः "सो देवानसृजत तत् सुराणां 'सुरत्वम्'–असोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते ( तै० ब्रा० २ । ३ । ९ । ४ )। 'ऊर्जादः'–"ऊर्क्–अन्ननाम" ( निघं० २ । ७ ) "ऊर्ज बलप्राणनयोः" ( चुरादि० ) ततः क्विप्। अन्नं च द्विविधं पक्वम्–अग्निपक्वमोदनादिकं सुप्रवृक्णम्–वृक्षाद् प्रश्चितव्यं क्षुरेण च्छेद्यं च फलम् तदूर्जयन्तीति–ऊर्जादः 'ऊर्क्' उपपदात्–अद् धातोः "कर्मण्यण्" ( अष्टा० ३ । २ । १ )॥

"यत् पाञ्चजन्यया विशा" ( ऋ० ८ । ६३ । ७ ) । पञ्चजनीनया विशा । पञ्च पृक्ता संख्या स्त्रीपुंनपुंसकेष्वविशिष्टा ॥

भा०—अत्र 'पाञ्चजन्यया विशा' इत्यनेन विश्—प्रजा पाञ्चजन्या, सामान्येन मनुष्यवाचकत्वेन 'पञ्चजनाः' शब्दो न पठितः किन्तु विशिष्टेन ब्राह्मणक्षत्रियवैश्यशूद्रनिषादाभिधेयवत्त्वेन पठितः ।

सम्प्रमन्त्रस्तदर्थश्च—

यत् पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्तृणाद् बर्हणा विपोऽर्यो मानस्य स क्षयः ॥

इन्द्रे राज्ञि—राज्ञो निमित्ते पाञ्चजन्यया पञ्चजनीनया पञ्चजनानां सम्बन्धिन्या पञ्चजनानां ब्राह्मणक्षत्रियवैश्यशूद्रनिषादानां प्रतिनिधिभूतया विशा प्रजया सह ऋत्विजो घोषाः—घोषणाः सृजन्ति प्रचारयन्ति यदयं राजा मानस्य सम्मानस्य क्षयः स्थानमस्त्यतो वयमेनं राजानं मन्यामहे स्वीकुर्मः । तदा स विपो मेधावी "विपो मेधावी" ( निघं० ३ । १५ ) अर्यः स्वामी भूत्वा बंहणा परिबर्हणा परिवृद्धया समृद्धशक्त्या "बंहणा परिबर्हणा" (निरु० ६।१८) अस्माकं प्रजाः—अस्तृणात्—आच्छादयति रक्षति सुखेन पूरयति । "स्तृञ् आच्छादने" (क्र्यादि०) ।

पञ्च पृक्ता संख्या, पृक्ता सम्पृक्ता स्त्रीपुंनपुंसकेषु—पञ्च स्त्रियः पञ्च पुरुषाः पञ्च कुलानि । सर्वत्र पञ्च समानं सम्पृक्तमस्ति । एवं तु 'षट्, सप्त' इत्यादि संख्याऽपि सम्पृक्तास्ति । अत्रोच्यते—पञ्च शब्दस्य निर्वचने न दोषः । 'एकः', एका, एकम् 'द्वौ, द्वे' 'त्रयः, तिस्रः त्रीणि' 'चत्वारः, चतस्रः, चत्वारि' । इति चतुष्पर्यन्ता संख्या पृथक् पृथक् । परन्तु पञ्च संख्या तु पृक्ता सम्पृक्ता । षट्—प्रभृतिषु सम्पृक्तत्वं पञ्च संख्यामाश्रित्यास्ति पञ्च चैकं च षट् पञ्च च द्वे सप्तेति । तस्मात् तत्र सम्पृक्तत्वं पञ्चसंख्यामाश्रित्यैवास्ति । पुनश्च यत्र क्वचित् पञ्च संख्यामाश्रित्य व्यवस्था क्रियते । यथा पञ्चायतं राज्यं तत्र स्त्रियः पुरुषाः—नपुंसकानि—इति लिङ्गतो न विभेद्यन्ते किन्तु सर्वे सम्पृक्तत्वं यान्ति । अथ च स्त्रीषु व्यवस्थायै पञ्च स्त्रियः पुरुषेषु पञ्च पुरुषाः—नपुंसकेषु जनेषु पञ्च नपुंसकजनाः प्रमाणी क्रियन्ते निर्वाच्यन्ते वा तेषां पञ्चानां कथनं मन्यन्ते, तस्मात् पञ्चसंख्याः सम्पृक्ताः सर्वमान्याः ।

बाहुनामान्युत्तराणि द्वादश । बाहू कस्मात् प्रबाधत आभ्यां कर्माणि ।

भा०—मनुष्यस्य बलवदङ्गत्वाद् बाहूनां नामानि 'आयती' आदीनि मनुष्य-नामभ्य उत्तराणि सन्ति द्वादश । बाहू किमर्थमुच्यते यतः—आभ्यां बाहुभ्यां कर्माणि प्रबाधते प्रक्षेपयति प्रेरयति 'अर्जिदृशिकम्यमिपसिबाधामृजिपशि तुक् धुक् दीर्घहकाराश्च" उः कित् ( उणा० १ । २७ ) "बाधृ विलोडने" (भ्वादि०) धकारस्य हकारश्च ।

अङ्गुलिनामान्युत्तराणि द्वाविंशतिः । अङ्गुलयः कस्मादग्रगामिन्यो भवन्तीति वाग्रगालिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसारिण्यो * भवन्तीति वाङ्कना भवन्तीति वाञ्चना भवन्तीति वापि वाभ्यञ्चनादेव स्युः ॥ ८ ॥

भा०—बाहुसम्बद्धत्वादङ्गुलीनां नामानि बाहुनामभ्य उत्तराणि 'अग्रवः' आदीनि द्वाविंशतिः । अङ्गुलयोऽग्रगामिन्यः कर्मकरणायाग्रे गच्छन्तीति तच्छीलाः । अग्र–गम्–"उलि–औणादिकः" ( उणा० ४ । २ ) बहुलात् स च डित् । अग्रस्य अङ् भावः । धातोश्च टिलोपः 'अङ्–ग–उलिः = अङ्गुलिः । अग्रगालिन्यो वा–भोजनमग्रे गलन्ति–निगलन्ति मुखात्पूर्वमतोऽङ्गुलयः । आङ्–गल् अदने ( भ्वा० ) ततः–उलि–डित् । पूर्ववत् "अङ्–ग्–उलिः–अङ्गुलिः । अग्रकारिण्यो वा–अग्रे कर्माणि कुर्वन्ति । अग्र–कृ–उलिः, अङ्–क्–उलिः अङ्कुलिः, अङ्गुलिः, धातोः ककारस्य गकारो बहुलात् । 'अग्रसारिण्यो अग्रे सरणशीलाः–अग्रगमनशीलाः । सकारस्य गकारभावः, स च न युक्तः । अङ्कना वा भवन्ति–अङ्कयन्ति वाचमङ्कितां कुर्वन्ति लिपिरूपे नयन्ति सर्वं वस्तुजातं लक्षयन्ति तस्मादङ्कना अङ्गुलयः । अङ्क्–उलिः–अङ्गुलिः । कस्य गत्वं सुगमम् । अञ्चना भवन्ति । "अञ्चु गतिपूजनयोः" ( भ्वा० ) अत्र पूजनार्थो गृह्यते–आभिः पूज्यते हि पूजनीयो जनो बद्धाञ्जलिं कृत्वा "अञ्च–उलिः" अङ्गुलिः । अभ्यञ्जनात्–अभिव्यञ्जयन्ति घटादिरूपमभिव्यक्तं कुर्वन्ति–आकारं प्रयच्छन्ति वस्तुने स्वरूपस्थितये वा । "अञ्जू व्यक्ति...." ( रुधा० ) ।

---

* 'अग्रसारिण्यो वा भवन्ति' इति पाठो निरुक्तबाह्यः प्रतिभाति, यथान्येषां निर्वचनानि कृतानि दुर्गाचार्यस्कन्दस्वामिभ्यां न ह्यस्य निर्वचनम् कृतम् । "सारिण्यः–सकारे वर्णसामान्यमपि नास्ति । "अग्रगामिभ्यः" इत्यतोऽर्थभेदो न तस्मादपठनीयोऽयं पाठः ।"

तासामेषा भवति ॥ ८ ॥

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः। दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः॥ ( ऋ० १० । ९४ । ७ )

अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि । कक्ष्याः प्रकाशयन्ति कर्माणि । योक्त्राणि योजनानीति व्याख्यातम् । अभीशवोऽभ्यश्नुवते कर्माणि । दश धुरो दश युक्ता वहद्भ्यः । धूर्धूर्वतेर्वधकर्मणः । इयमपीतरा धूरेतस्मादेव विहन्ति वहम् । धारयतेर्वा ॥

भा०—तासामङ्गुलीनाम्नामियमृग्भवति "दशावनिभ्यो····।" अत्र–अवनिप्रभृतिनामानि सन्दिग्धान्यत उदाह्रियते 'अवनयः' इति नदीनामसु 'अभीशवः' इति रश्मिनामसु पठ्यते । तदत्र तु खल्वङ्गुलिनामैवेति दर्शनायोदाहरणम् यतोऽत्र तासां दश संख्या दर्शनात् । तथाऽन्याङ्गुलिनामभिः साहचर्याच्च । अवनयोऽङ्गुलयो यतोऽवन्ति रक्षन्ति कर्माणि यद्वा अवन्ति गच्छन्ति कर्माणि प्रति । "अव रक्षण गति०" ( भ्वा० ) "अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ( उणा० २ । १०३ ) इत्यनेन 'अनिः' प्रत्ययः । "कक्ष्या अङ्गुलयः प्रकाशयन्ति प्रकटीकुर्वन्ति साधयन्ति कर्माणि । ख्याते र्गाहतेर्वाक्सः प्रत्ययः कक्षः सन्धिसामान्ये तत्र भवः–इत्युक्तं पूर्वं निर्वचनम् । योक्त्राणि–योजनानि कर्मणामायोजनसाधनानि खल्वङ्गुलयः । "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः" करणे (अष्टा० ३ । २ । १८२) । अभीशवोऽभ्यश्नुवतेऽभिव्याप्नुवन्ति कर्माणि–तस्मादभीशवोऽङ्गुलयः।"अभि–अशूङ् व्याप्तौ तत–उः" (उणा० १।७) बहुलात् । अकारस्य–इकारः।'धूरः' बहुवचने 'धूः' एकवचने। 'धूः' पुनः 'धूर्वतेः' "धुर्वी हिंसायाम्" ( भ्वा० ) "धूर्वतिवधकर्मा" ( निघं० २ । १९ ) ततः कर्तरि क्विप् 'धूर्व्' वकारस्य लोपे सति 'धूर्–धूः' हन्यते पुत्रः शिष्यो वाऽऽभिः कृतेऽपराधे । इयमपि खल्वन्या धूर्यानस्य धूः, सापि धुर्वी धातोः, यतो हन्ति वहं स्कन्धमनडुहोऽश्वस्य वा । धारयते र्वा णिजन्ताद् 'धृ' धातोः' धृञ्' 'धारणे' ( भ्वादि० ) धार्यतेऽनडुद्भिरश्वैश्च कर्माणि बाहुलकात् क्विप्–औणादिकः ।

मन्त्रार्थः—

दशावनिभ्यः सर्वा दशावनयः कर्मणामविभ्यो रक्षिका अङ्गुलयो येषां तान्, सर्वत्र द्वितीयार्थे चतुर्थी, दशकक्ष्येभ्यः–दशैव कर्मप्रकाशिका अङ्गुलयो

येषां तान्, दशयोक्त्रेभ्यः—दश संयोजयितृभ्यः सङ्गमयितृभ्योऽङ्गुलयो येषां तान्, दशयोजनेभ्यः—दश यथायोग्यंयोजनाः कर्म्योऽङ्गुलयो येषां तान्, दशाभीशुभ्यः—दश कर्मसु व्यापनधर्मिण्योऽङ्गुलयो येषां तान्, दशधुरः—दशभिः शत्रुणां विध्वंसयित्रीभिरङ्गुलिभिस्तृतीयार्थे प्रथमा, दशसु कार्येषु विभागेषु युक्तान् योग्यान् संलग्नान् तथाभूतान् दशमहानुभावान्, अजरेभ्यः—अजरान्—अवृद्धान्—परिपक्वायुष्कान्, वहद्भ्यः—वहतः—वहन्ति राजप्रजाकार्याणि तान् राजप्रजाप्रतिनिधिभूतान्, अर्चत—सत्कुरुत तेषामाज्ञां पालयत तेषामानुकूल्यमाचरत । तत्र दशसु राजप्रजाविधानस्य वाहकेषु पञ्चराजप्रतिनिधयः पञ्चप्रजाप्रतिनिधयश्च सन्ति । राजप्रतिनिधयस्तु 'राजमन्त्री, गृहमन्त्री, अर्थमन्त्री, सैन्यबलमन्त्री, विदेशमन्त्री' इत्येते पञ्च । प्रजाप्रतिनिधयो ब्राह्मणक्षत्रियवैश्यशूद्रनिषादानां पञ्चानामेकैकशः प्रमुखो जनः । तत्रोभयत्र दशावनिप्रभृतिगुणवन्तः स्युः । एवं राजप्रजापुरुषैर्मिलित्वा राज्यं चालयितव्यम् ।

कान्तिकर्माण उत्तरे धातवोऽष्टादश ।

भा०—'वश्मि' प्रभृतयोऽष्टादश धातवः कान्तिव्यापाराः कमनीयताप्रवृत्तयोऽङ्गुलिनामभ्य उतरे सन्ति यतोऽङ्गुलिभिरेव वस्तूनि भोज्यानि परिधानीयान्युपयोज्यानि वा कमनीयानि क्रियन्तेऽथादीयन्तेऽतस्तदुत्तरे पठ्यन्ते ।

अन्ननामान्युत्तराण्यष्टाविंशतिः । अन्नं कस्मादानतं भूतेभ्योऽत्तेर्वा ॥

भा०—"अन्धः" प्रभृतीनि खल्वन्ननामानि सन्त्यष्टाविंशतिः, कान्तिकर्मभ्यो धातुभ्य उत्तराणि सर्वेभ्योऽन्नस्य कमनीयत्वात् । अन्नं भूतेभ्यः प्राणिभ्यो भोक्तृभ्य आनतम्—समन्तात् खलु नतमधीनं वश्यं भवति 'आ—नम्—नः' आङ्पूर्वात् "णम् धातोर्बाहुलकात् 'नः प्रत्ययः' स च डित्, उपसर्गस्य ह्रस्वत्वं च । अथवा "अद् भक्षणे" ( अदादि० ) अद्यते भक्ष्यते यत् तत्खलु 'अन्नम्' 'अद् नः' दकारस्य परसवर्णत्वं बाहुलकत्वात्, व्याकरणशैल्या तु "अन् प्राणने" (अदादि०) ततः "कृवृजसिद्रूपन्यनिस्वपिभ्यो नित्" ( उणा० ३ । १० ) ।

अत्तिकर्माण उत्तरे धातवो दश ॥

भा०—अन्नात् तददनक्रिया प्रवर्तते तस्मादन्ननामभ्य उत्तरे 'आवयति' प्रभृतयोऽत्तिव्यापारा धातवो दश सन्ति । 'बब्धाम्' इति लेटि वैदिकप्रयोगत्वात् पाठः ।

बलनामान्युत्तराण्यष्टाविंशतिः । बलं कस्माद् बलं भरं भवति बिभर्तेः ॥

भा०—अन्नस्य भक्षणाद् बलं प्राप्यतेऽतोऽस्तिकर्मभ्यो धातुभ्य उत्तराणि 'ओजः' प्रभृतीनि बलनामान्यष्टाविंशतिः सन्ति । बलं कुत उच्यते बलं भरं भवति, यतः शरीरं बिभर्ति–धारयति पुष्णाति च । "डुभृञ् धारणपोषणयोः" ( जुहो० ) भरं सद् बलमुच्यते पचादिलक्षणोऽच् । भकारस्य बकारो रेफस्य लकारश्च बाहुलकादेव ।

धननामान्युत्तराण्यष्टाविंशतिरेव । धनं कस्माद् धिनोतीति सतः ॥

भा०—बलेन–शरीरेन्द्रियमनोबलेन धनमुपार्जितुं शक्यते, सति बले धनं लभते जनस्तस्माद् बलनामभ्य उत्तराणि 'मघम्' आदीनि धननामानि पूर्ववदष्टाविंशतिः । धनं धिनोति–इति सतः "धिवि प्रीणने" ( भ्वादि० ) धनं धिनोति–प्रीणयति तर्पयति "धिन्विकृण्व्योरच" ( अष्टा० ३ । १ । ८० ) उ प्रत्ययो धातोरकारश्चादेशः । 'धिवि–धिन्व्' ततः "कृपॄवृजिमन्दिनिधाञः क्युः" ( उणा० २ । ८२ ) अनुपसर्गेऽपि । "युवोरनकौ" अनं धनम् । 'धि' धातोर्धनमिति न लक्ष्यं यास्कस्य 'धिनोति' इति सविकरणेन श्तिपा निर्देशनेन ॥

गोनामान्युत्तराणि नव ॥

भा०—सर्वधनेषु गौर्धनं जीवितं जागृतं धनं मानवस्य परमनिर्वाहसाधकमतो धननामभ्य उत्तराणि 'अघ्न्या' आदीनि नव गोनामानि सन्ति ॥

क्रुध्यतिकर्माण उत्तरे धातवो दश ॥

भा०—क्रुध्यतिव्यापाराः 'रेळते' प्रभृतयो दश धातवो गोनामभ्य उत्तराणि सन्ति, गोसम्पर्के तस्य कदाचित् पशुत्वव्यवहारात् तदुपरि क्रुध्यति जनः ॥

क्रोधनामान्युत्तराणि दश ॥

भा०—'हेळः' इत्यादीनि क्रोधनामान्येकादश, क्रुध्यतिकर्मभ्यो धातुभ्य उत्तराणि यतः क्रुध्यति हि क्रोधवान् ॥

गतिकर्माण उत्तरे धातवो द्वाविंशं शतम् ॥

भा०—परपापस्य निजपापस्योपरि यदा क्रोधो जायते तदा तत्पापमपाकर्तुं पुनः सद्गुणमवाप्तुं गतिं करोति जनस्तस्मात् तदुत्तरे 'वर्तते' प्रभृतयो गतिव्यापारा धातवो द्वाविंशत्यधिकं शतम् ॥

क्षिप्रनामान्युत्तराणि षड्विंशतिः । क्षिप्रं कस्मात् संक्षिप्तो विकर्षः ॥

भा०—गतिक्रियया हि क्षिप्रत्वं लक्ष्यतेऽतस्तदुत्तराणि क्षिप्रनामानि 'नु मक्षु' प्रभृतीनि षड्विंशतिः सन्ति । क्षिप्रं कुतो यत् संक्षिप्तः सङ्कुचितो विकर्षोऽल्पीभावः, यथा प्रकर्षः प्रवृद्धभावः । क्षिप धातोः—रक् (उणादि० २।१३)।

अन्तिकनामान्युत्तराण्येकादश । अन्तिकं कस्मादानीतं भवति ॥

भा०—क्षिप्रकारित्वं हि फलस्यान्तिकत्वनिमित्तमतः क्षिप्रनामभ्य उत्तराणि 'तडित्' आदीनि सन्त्यन्तिकनामान्येकादश । अन्तिकं खल्वानीतं भवति । आनीतमर्वाक् प्राप्तं समीपं भवति । 'आनीतम्' ततोऽल्पे ह्रस्वे वा कन् प्रत्ययः—आनीतकम् । उपसर्गस्य ह्रस्वत्वं पुनरीकारो ह्रस्वो भूत्वा तकारे श्लिष्टः । अन्तिकम् । यद्वा 'आ' उपसर्गाद् "णीञ्" प्रापणे धातोः—तिकङ् प्रत्ययो बाहुलकादौणादिकः । उपसर्गस्य ह्रस्वत्वम् । अन्तिकम् ॥

संग्रामनामान्युत्तराणि षट्चत्वारिंशत् । संग्रामः कस्मात् सङ्गमनाद्वा सङ्गरणाद्वा सङ्गतौ ग्रामाविति वा ॥ ९ ॥ तत्र खल इत्येतस्य निगमा भवन्ति—

भा०—संग्रामनामानि खल्वन्तिकनामभ्य उत्तराणि—अन्तिके भूतयोः पक्षयोः संग्रामः प्रवर्तते तानि "रणः, विवाक्" प्रभृतीनि संग्रामनामानि षट्चत्वारिंशत् सन्ति । यद्यपि "संग्राम युद्धे" ( चुरादि० ) संग्रामधातुश्चुरादिगणे युद्धार्थो विद्यते तथापि निरुक्तशैल्या विवेच्यते 'संग्रामः सङ्गमनात् परस्परं स्पर्द्धया मेलनं संग्रामः, 'सम्—गम् ड्रामः प्रत्यय औणादिकः, यद्वा सङ्गरणात् संग्रामः स्पर्द्धया संगृणन्ति यस्मिन् जनाः—संग्रामः, सम्—गॄ ड्रामः प्रत्ययः । सङ्गतौ ग्रामौ वर्गौ स्पर्द्धया यस्मिन् स संग्रामः । तत्र 'खलः' इत्येतस्य सन्दिग्धत्वादनेकार्थत्वात् भवन्ति निगमा वेदशब्दाः—वेदेप्रयोगाः ।

अ॒भी॒द॒मेक॒मेको॑ अस्मि नि॒ष्षाळ॒भी॑ यद्वा किमु त्रयः॑ करन्ति । खले॑ न पु॒र्षान् प्रति॑ हन्मि॒ भूरि॒ किं मा॑ निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः ॥ ( ऋ० १० । ४८ । ७ )

अभिभवामीदमेकमेकोऽस्मि निष्षहमाणः सपत्नानभिभवामि । द्वौ किं मा त्रयः कुर्वन्ति । एक इता संख्या, द्वौ

द्रुततरा संख्या। त्रयस्त्रींशत्तमा संख्या, चत्वारश्चलिततमा संख्या। अष्टावश्नोतेः, नव न वननीया, ना वाप्ता वा, दश दस्ता, दृष्टार्था वा। विंशतिर्द्विर्दशतः *। शतं दशदशतः। सहस्रं सहस्वत्। अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम्। अर्बुदो मेघो भवति, अरणमम्बु तद्दोऽम्बुदः, अम्बुमद्भातीति वा। अम्बुमद्भवतीति वा। स यथा महान् बहुर्भवति वर्षस्तदिवार्बुदम्। 'खले न पर्षान् प्रतिहन्मि भूरि' खल इव पर्षान् प्रतिहन्मि भूरि। खल इति संग्रामनाम खलतेर्वा स्खलतेर्वा। अयमपीतरः खल एतस्मादेव समास्कन्नो भवति। 'किं मा निन्दन्ति शत्रवोऽनिन्द्राः। य इन्द्रं न विविदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा।

भा०—वक्तव्यम्—अत्र मन्त्रे 'खले न पर्षान्' अत्र 'न' उपमायाम्, 'खलः संग्रामो भवति खलः शस्यसञ्चयस्थानं च। अत्र द्वावप्यर्थावुपमायां सञ्जातौ स्तः। ऋगेषा खल्वाध्यात्मिकी तत्र—इन्द्रो वैकुण्ठो देवता, 'कुठि प्रतिघाते' ( भ्वादि० ) विगता कुण्ठा—अप्रतिहता शक्तिः, तया प्रवर्तते स वैकुण्ठोऽप्रतिहतशक्तिकः परमात्मा। अस्याप्रतिहतशक्तिमतः परमात्मनो वर्णनमत्र विद्यते। सूक्तस्यारम्भिकवचनादपीदं प्रतीयते "अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्" ( १ ) अहं धनैश्वर्यस्य पुरातनः पतिरस्मि, तथाहं शाश्वत्कालात् धनं संजयामि स्वाधीनी करोमि, मां पितरमिव मनुष्या आह्वयन्ति, अहं दत्तवते भोजनं विभजामि।

मन्त्रार्थः—

अहं परमात्मा यद्यप्येक एवेदं 'वाक्यालङ्कारे'—एकं निन्दकं नास्तिकं वर्ग यो मां निन्दति तमभि—अस्मि—अभिभवामि स्वाधीनी करोमि दण्डयामि, निष्षाट्—निष्षहमाणः सपत्नान् विरोधिनो नास्तिकान्—अभिभवामि, द्वा—द्वौ निन्दकौ वर्गौ वेदस्य निन्दकमपि, किमुत त्रयः कुर्वन्ति—करिष्यन्ति निन्दकाः, मद्रचितजगतो निन्दकश्चेति त्रीन् निन्दकान् नास्तिकान् वर्गानभिभवानि। अथ खले न पर्षान् संग्रामे तस्य पूरकान् योद्धॄन्—इव, यद्वा खले शस्यसञ्चयस्थाने

---

* द्विर्दशभिः द्विर्दशत्, इति पाठान्तरम्।

गाह्यमाने पूलकान्–इव *। भूरि–अतिशयेन बहून् वा प्रतिहन्मि विदारयामि विदीर्णान् करोमि । ये तेऽनिन्द्रा ये मामिन्द्रं न विदुर्न जानन्ति, न मन्यन्ते ते तथाभूता मां निन्दन्ति नास्तिका जनाः शत्रवो मम खण्डनं कुर्वन्तोऽहमस्मि–इन्द्रः, 'एते–इतरे स्वात्मानमेव मन्यमाना अनिन्द्राः सन्ति । अत्रोपमायां 'खले' शब्दः संग्रामश्च शस्यसञ्चयस्थानं चोभयं लक्षयितुं शक्यते । निःसहते–निष्षाट्–क्विपि । 'पर्षः' "पृपूरणे" ( क्र्यादि० ) षच् प्रत्यय औणादिकः । यद्वा "पृष सेचने" ( भ्वादि० ) "पचादिलक्षणोऽच्" संग्रामः परिषिच्यते योद्धृभिः, शस्यसञ्चयस्थानं परिषिच्यते पूलकैः ।

निरुक्तथः—एकः–इता संख्या, प्राप्ता संख्या "इण् कन्" (उणा० ३।४३) सर्वप्रथमं स्थानं खल्वेकायाः संख्यायाः । द्वौ द्रुततरा प्रगततरा 'संख्या' "द्रुड्विन्" संख्या, एकायाः संख्याया अग्रे गता संख्या, त्रयस्तीर्णतमा "तरते ड्रिः" ( उणादि० ५ । ६६ ) संख्या द्विसंख्यां तीर्त्वा स्थिता संख्या । 'तॄ ड्रिः' 'त्रि–त्रयः । चत्वारः–चलिततमा संख्या त्रितोऽप्यग्रे चलिता संख्या त्रयो बहुवचने बहुवचनस्य मर्यादातश्चलिता संख्या । चल–इति धातो र्लकारस्य तकारः–बाहुलकात्–उरन् प्रत्ययः ( उणा० ५ । ५८ ) पञ्च संख्या पूर्वमुक्ता पृक्ता संख्या । षट् सहते ( निरु० ४ । २७ ) सप्त सृप्ता संख्या ( निरु० ४ । २६ ) अग्रे वक्ष्यमाणा । अष्टावश्नोतेः, "अशूङ् व्याप्तौ" व्याप्ता संख्या "सप्यशूङ्भ्यां तुट् च ( उणा० १ । १५७ ) पूर्वपश्चिमोत्तरदक्षिणास्तत्कोणाश्चाष्टौ दिशो व्याप्ताः । नव न वननीया दशसंख्यात एकोनत्वात् सा न वननीया पूर्णा संख्या दश । न वननीया–अपूर्णा इत्यर्थः । पूर्णा तु संख्या दश । 'न वन् 'क्विप्' नवन्–नव । यद्वा नावप्ता संख्या न–अवाप्ता, अवाप्ता पूर्णा संख्या दश, तद्विपरीता–अपूर्णा । 'न अव–आप् डन्' औणादिको बाहुलकात् । पररूपे 'न–अव् = नव' टिलोपः । अन् प्रत्ययस्य भागः–'नवन्' नव । दश दस्ता संख्या "दसु उपक्षये" ( दिवा० ) समाप्ता संख्या दश, अग्रे तु तदाधारा संख्या । दृष्टार्था वा, अन्यासु तस्या अर्थः–पदार्थः स्वरूपं वा दृश्यते–एकादश, द्वादश, इत्यादि । 'दस् कनिन्' प्रत्ययः बाहुलकात् सकारस्य शकारश्चादेशः । 'दश् कनिन्' बाहुलकात् ( उणा० १ । १५६ ) विंशतिर्द्विदशतः, द्विर्दशभि र्द्विर्दशत्–वा । द्वौ दशतौ परिमाणमस्य

---

* 'खले न पर्षान्' अत्र स्कन्दस्वामिना 'न' इति सम्प्रत्यर्थे मतः । इति तु–अयुक्तमेव, यदि सम्प्रत्यर्थे भवेत् तदा यास्केन तद् वक्तव्यं भवेत् । सा तु 'खल इव' उक्त्वा–उपमानं दर्शयति ।

स विंशतिर्निपात्यते। 'द्विर्' इत्यस्य 'विं' भावः । 'पंक्तिविंशति''''शतम्'' (अष्टा० ५ । १ । ५९ ) शतं दशदशतः। दशदशतः परिमाणमस्य शतम्। दशदशत्—दशदश इत्यस्य शत्, समासान्तोऽच् निपातनात् शतम्। सहस्रं सहस्वत्, सहस्—बलं तद्वत् सहस्रम् । अत्र 'रो' मत्वर्थीयः। सहस्रसंख्याके बलं भवति। अयुतं नियुतं प्रयुतं तत् तत् दशभिरभ्यस्तं गुणितं दशसहस्राणि—अयुतं दशयुतानि नियुतं लक्षं दश नियुतानि प्रयुतम्। पुनः—अर्बुदं दशप्रयुतानि—अर्बुदं कोटिः। अर्बुदो मेघो भवति कथं यत्—अरणम्—अम्बु—जलम् "अम्बु उदकनाम" ( निघ० १ । १२ ) तद्दोऽम्बुदो मेघो जलदः। अम्बुमत्—भवति—इति वाऽम्बुमद् भवति वा । अम्बुवद्—जलवद्भाति भवति वा—अर्बुदम्। मेघ इव, स मेघो यथा महान् बहुर्भवति वर्षन् सन् तथैव 'अर्बुदम्, संख्येयं भवति महती । खले न, खले—इव। 'न' उपमायाम्। इवार्थे । खलः संग्रामः "खल सञ्चये" ( भ्वादि० ) "स्खल सञ्चलने" ( भ्वादि० ) सैनिकानां सञ्चयः संघातः, तेषां संचलनं क्षोभणं वा यत्र स खलः संग्रामः। अयमितरः खलः शस्यसञ्चयस्थानमेतस्मादेव धातुद्वयात् समास्कन्नः—संघर्षं प्राप्तो भवति। खलः संग्रामः शस्यसञ्चयप्रदेशो वा। धान्यपूलानां सञ्चयः सञ्चलनं क्षोभणं विदारणं यत्र स खलः शस्यसञ्चयस्थानम्। धातोरेकपक्षे सकारलोपः, घो वाऽज् वा प्रत्ययः ॥

व्याप्तिकर्माण उत्तरे धातवो दश । तत्र द्वे नामनी आक्षाण आश्नुवान आपान आप्नुवानः ॥

भा०—संग्रामे परस्परं व्याप्नुवन्ति योद्धारस्तस्मात् संग्रामनामभ्य उत्तरे व्याप्तिव्यापाराः 'इन्वति' प्रभृतयो दश धातवः, तत्र द्वे नामनी स्तः 'आक्षाणः, आपानः' शानच्प्रत्ययान्तौ । आक्षाणः—आश्नुवानः, आपानः—आप्नुवानः । 'आक्षाणः' इत्यत्र "अशूङ् व्याप्तौ" सिप् च बहुलात् छन्दसि। 'आपानः' इत्यत्र "आप्लृ" धातो विकरणव्यत्ययेन श्नुस्थाने शप्।

वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्। तत्र वियात इत्येतद् वियातयत * इति वियातयेति वा। "आखण्डल प्रहूयसे" (ऋ० ८। १७। १२) आखण्डयितः खण्डं खण्डयतेः।

---

* 'वियातयत' इति पाठो मुद्रितदुर्गभाष्यादिपुस्तके तथैव होश्यारपुरस्थ-वैदिकशोध संस्थानस्य हस्तलिखिते पुस्तके १७५ इति संख्याके १६४६ शकब्दिके।

तडिदित्यन्तिकवधयोः संसृष्टकर्म * ताडयतीति सतः ॥१०॥

भा०—संग्रामे खल्वितरेतरं व्याप्य योद्धारो घ्नन्ति तस्माद् व्याप्तिकर्मभ्य उत्तरे वधकर्माणो वधव्यापाराः 'दभ्नोति' प्रभृतयस्त्रयस्त्रिंशत् सन्ति धातवः। तत्र 'वियातः, तडित्, आखण्डल' इति नामानि वधकार्थे सन्ति। नामेति शब्दः पूर्वत आकृष्यते। तत्र 'वियातः' नामपदं खलु यो वियातयते—पीडयति शत्रून्—इति निरुच्य वियातयिता तत्सम्बोधने वियातः, यद्वा वियातय पीडय [ त्वं शत्रून् ] इति मध्यमपुरुषं विगृह्येति प्रेरितः सम्बोधने 'वियातः !' इति पुरुषप्रधानं निर्वचनम्। विपूर्वको यत धातुर्णिजन्तो गृह्यते "यत निकारे" (चुरादि०) सः 'वियातयते यद्वा वियातय' इत्यभिलक्ष्य शतृप्रत्ययान्तेनार्थोप्यते। वियातयिता हि वियातः सम्बोधने—इति दुर्गाचार्यस्य प्रक्रिया। वियातयत इत्यस्य स्थाने वियातयित इति 'वियातयितः' इति क्वचित् पाठः स च शोभनः। साक्षात् सणिच् शतृप्रत्ययान्तं सम्बोधनम्। 'वियातः' इति 'वियातयितः' इति मन्तव्यम्। यद्वा 'वियातः' इति 'वियातय' 'वियाति—वियत्' इ ( णिच् ) "एरच्" (अष्टा० ३ । ३ । ५६ ) वियातयः, सम्बोधने वियातय, तिङन्तमादाय यद्वा कृदन्तमाश्रित्य। 'वियातः' विपूर्वकणिजन्ताद् यत धातो रूपम्। कथमिति प्रश्नः। 'वि—यत्—णिच्—तृच्' अत उपधाया वृद्धौ सत्यां धातोस्तकारेण सह णिज्लोपश्छान्दसः—वियाता, सम्बोधने वियातः। 'वियातयिता' इति निर्वचनपक्षे यद्वा 'वि यत् णिच्—अच्' अत्र "णेरनिटि" ( अष्टा० ६ । ४ । ५१ ) णिज्लोपः। अच् प्रत्ययस्य 'रुक्' आगमः। 'वियात्—अ—र्'—'वियातः' सम्बोधने। 'वियातयः' इति निर्वचनपक्षे। भाष्यकाराणां धारयः पारयः, 'शः' प्रत्ययस्तु कल्पना ऽन्यथैव ॥ 'वियात' इति साम्प्रतमलब्धस्थानम्। अतोऽग्रे क्रमप्राप्तं तु 'तडित्' इति पदमासीत्, परन्तु 'आखण्डल' इत्यत्राल्पं वक्तव्यं तस्मात् पूर्वं गृहीतम्। आखण्डल—आखण्डयितः सम्बोधने, हे आखण्डयितः। "खडि आघाते" (चुरादि०) ततः—आङ्पूर्वात्, "मङ्गेरलच्" ( उणादि० ५ । ७० ) इति धातोर्बाहुलकात् "अलच्" प्रत्ययः। तस्य 'आखण्डल प्रहूयसे' इति मन्त्रः।

समग्रमन्त्रस्तदर्थश्च—

शाचिंगो शाचिंपूजनाय रणाय ते सुतः। आखण्डल प्र हूयसे ॥

"शचीति कर्मनाम" ( निघ० २ । १ ) स्वार्थे तद्धितः—इञ् प्रत्ययः। कर्मशक्तिं गतः, यद्वा कर्मशक्त्यां भवा कर्मानुरूपा गीर्वाग् यस्य स शाचिगुः।

* 'संसृष्टनाम' इति पाठान्तरम्।

सम्बोधने शाचिगो ! शाच्या कर्मशक्त्या पूजनं यस्य स शाचिपूजन ! सम्बोधने शाचिपूजन ! हे कर्मशक्तिसम्पन्न कर्मशक्त्यनुरूपवाग्मिन् ! कर्मशक्त्या सम्माननीय ! इन्द्र ऐश्वर्यवन् देव राजन् ! आखण्डल ! शत्रोः खण्डयितः ! ते रणाय तव रमणायैष आनन्दरसः सम्पादितः । अतस्त्वं प्रहूयसे प्रकृष्टमाहूयसे ।

'तडित्' अन्तिकस्य समीपस्य च वधस्य च संयुक्तार्थकं पदं यद्वा संयुक्तं नाम समानं नामास्ति । ताडयति—इति क्रियायाः कर्तृत्वात् । तच्च ताडयतीति सतः "तड् आघाते" ( चुरादि० ) आघातो हिंसार्थं लक्षयित्वा पीडनम् । गत्यर्थमभिलक्ष्य समन्तात्प्राप्तं समीपम् । 'तडित्' । ताडयति—आहन्ति पीडयति यः स वधः—वधको हिंसार्थे । ताडयति—आहन्ति—समन्तात् प्राप्तं भवति समीपं गत्यर्थे "हन् हिंसागत्योः" द्व्यर्थवत्तां दर्शयति, अथोदाहरणम्—

त्वया॑ व॒यं सु॑वृ॒धा॑ ब्रह्मणस्पते स्पा॒र्हा वसु॑ मनु॒ष्या॑ द॑दीमहि । या नो॑ दू॒रे त॒डितो॒ या अरा॑तयो॒ऽभि सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑ ॥ ( ऋ० २ । २३ । ९ )

त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि । याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो वाऽदानप्रज्ञा वा जम्भय ता अनप्रसः । अप्न इति रूपनामाप्नोतीति सतः ॥

मन्त्रार्थः—

भा०—"त्वया वयं⋯⋯" हे ब्रह्मणस्पते राष्ट्रैश्वर्यस्य स्वामिन् पालक ! वा राष्ट्रपते ! राजन् ! "ब्रह्म धननाम" (निघ० २ । १०) त्वयाऽस्माकं सुवर्धयित्रा सह स्पृहणीयानि वसूनि धनानि मनुष्या मनुष्येभ्यः "सुपां सुलुक् पूर्वसवर्णाच्छे०" ( अष्टा० ७ । १ । ३९ ) आकारदेशः पञ्चमी बहुवचनस्य, स्थाने आददीमहि—गृह्णीम ये नोऽस्माकं दूरे ये वाऽन्तिके समीपे सन्ति—अरातयो न दानस्य कर्तारो न दानप्रज्ञावन्तः कृपणा वञ्चका येऽस्माकं धनं हरन्ति, हर्तुमिच्छन्ति च तथाभूता अरूपा गुप्ता—अप्रत्यक्षा—अशोभनास्तान्नाशय । इत्यन्तिकार्थे । अथ वधार्थे—ब्रह्मणस्पते राष्ट्रधनैश्वर्यस्य स्वामिन् ! पालक ! च त्वया सुवर्धयित्रा यानि स्पृहणीयानि वसूनि धनानि मनुष्येभ्यो मनुष्याणां हिताय चतुर्थ्यर्थे प्रथमा, आददीमहि—गृह्णीम । कुत आददीमहि । याः—तडितः—वधाः—वधिकाः प्रजाः—अस्माकं दूरे ( या—स्त्रीलिङ्ग् 'तडित्' शब्दः ) याः—च—अरातयोऽदानकर्माणः कृपणा अन्तिके सन्ति । अत्र 'अन्तिके' तडितशब्दं लक्षयित्वा नैव किन्तु 'दूरे' इति

शब्दमपेक्ष्य साहचर्यात् ग्रहितुं योग्यः। तडितः—वधिकाः प्रजा वधका जनाः—दूरे, अरातयः—अदानकर्माणो अदानप्रज्ञावन्तो वा—अदातारो वञ्चका अन्तिके समीपे ये सन्ति तान् जम्भय नाशय—ते—उभयेऽरूपाः सन्ति।

विद्युत् तडिद् भवतीति शाकपूणिः। सा ह्यवताडयति दूराच्च दृश्यते। अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात्—"दूरे चित् सन् तडिदिवातिरोचसे।" (ऋ० १।९४।७) दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति॥

भा०—शाकपूणिराचार्यः कथयति यदत्र मन्त्रे 'तडित्' विद्युत्—अस्ति, विद्युत्—तडित् खल्वुच्यते हि। सा विद्युदवताडयति दूराच्च दृश्यते। तन्मतेऽर्थः, इत्थं यत्—

हे ब्रह्मणस्पते! उदकरूपस्य मेघस्य स्वामिन् देव! "ब्रह्म—उदकनाम" (निघ० १।१२) वयं त्वया सुवर्धयित्रा स्पृहणीयानि वसूनि धनानि पृथिव्याम्भ्यरूपाणि मनुष्येभ्यः स्वमनुष्याणां कृते गृह्णीमः। तत्प्रक्रिया चेयं यत्—याः खलु तडितस्ताडनशीला विद्युतोऽस्माकं दूरे याः खल्वरातयो मेघपङ्क्तयो जलस्य ग्रन्थिका या जलं न रान्ति प्रयच्छन्ति त्यजन्ति ताः—गुप्ता इव सन्ति ता जम्भय नाशय, उदकधनानि प्राप्स्यामः।

किन्तु—इदं वक्ष्यमाणं 'तडित्' पदं त्वन्तिकनाम ह्यभीष्टं स्यात्। "दूरे चित्"....इति मन्त्रे।

समग्रमन्त्रस्तदर्थश्च—

यो विश्वतः सुप्रतीकः सन्दृङ्ङसि दूरेचित्सन् तडिदिवातिरोचसे।
राज्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मारिषाम वयं तव॥

हे अग्ने! परमात्मन्! यस्त्वं सर्वतः सम्यक् प्रत्यक्षः प्रतिदर्शनः समानदर्शकोऽसि सर्वजनान् समानभावेन पश्यसीति यतः। स त्वं दूरे मोक्षधामनि स्वप्रकाशस्वरूपेण दूरेऽपि सन् "त्रिपादस्यामृतं दिवि"—अन्तिकं समीपमिव बहु प्रकाशयसे स्वात्मानं राज्या अन्धकारमतिक्रम्यापि पश्यसि रात्रेरन्धकारो न तव दर्शने बाधकस्तत्रापि पश्यसि ततस्तव सख्ये मित्रत्वे वयं न हिंसिता भवेमेत्याकांक्षा। तथा हे सूर्यरूपाग्ने त्वं सुदर्शनः समानदर्शनः सर्वैः समानभावेन दृश्यमानो दूरे सन्नपि—अन्तिके समीपे प्रकाशसे। रात्रेरन्धकारमतिवाह्य प्रत्यहमस्मान् दर्शयसि। दर्शनशक्तिं प्रेरयसि। तव समानख्याने प्रकाशे दिनेऽग्निरूपे हिंसिता न भवेम।

वज्रनामान्युत्तराण्यष्टादश । वज्रः कस्माद् वर्जयतीति सतस्तत्र कुत्स इत्येतत् कृन्तते ऋषिः कुत्सो भवति कर्ता स्तोमानामित्यौपमन्यवोऽत्राप्यस्य वधकर्मैव भवति । 'तत्सख इन्द्रः शुष्णं जघान' इति ॥

भा०—वधकर्मणामनन्तरं विद्युत्प्रभृतीनि वज्रनामानि सन्त्यष्टादश । यतो वज्रेणैव वधकर्म भवति । वज्रो वर्जयति वियोजयति प्राणैरात्मानम् । "वृजी वर्जने" ( भ्वादि० रुधादि० चुरादि० ) ततः "ऋज्रेन्द्राग्रवज्र०"···· ( उणादि० २ । २९ ) इत्यनेन "रन्" प्रत्ययान्तो निपात्यते 'वज्र' शब्दः । तत्र वज्रनामसु "कुत्सः" अनेकार्थत्वात् संदिग्धत्वाद् विचारणीयः । 'कुत्सः' इति कृन्ततेः "कृती छेदने" ( तुदादि० ) ततः "स्नुव्रश्चिकृत्यृषिभ्यः कित्—"सः ।" ( उणादि० ३ । ६६ ) ऋषिरपि कुत्सो भवति, कर्ता स्तोमानां स्तुतीनां कर्ता स्तोता—इत्यौपमन्यव आचार्यो मन्यते । परन्तु, अत्रापि खल्वस्य वधकर्म हि भवति यतस्तत्सख इन्द्रः शुष्णं मेघं हतवान् । तदा "कृ हिंसायाम्" (क्र्यादि०) हिंसिता "कृ" इत्स औणादिको बाहुलकात्—कुत्सः । कर्ता हिंसिता स्तोमानां प्राकारसदृशानां प्रतिधीनाम् "स्तोमा आसन् प्रतिधयः" (ऋ० १० । ८५ । ८)

ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः ॥

भा०—वज्रेण वध्यस्य शत्रोर्वधादैश्वर्ययोगो भवति तस्माद् वज्रनामभ्य उत्तरे 'इरज्यति' प्रभृतयश्चत्वारो धातव ऐश्वर्यव्यापाराः सन्ति ।

ईश्वरनामान्युत्तराणि चत्वारि । तत्रेन इत्येतत् समित ऐश्वर्येणेति वा समितमनेनैश्वर्यमिति वा ॥ ११ ॥—

यत्रा॑ सुप॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति।
इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा विवे॑श ॥ ( ऋ० १ । १६४ । २१ )

भा०—ऐश्वर्ययोगेनेश्वरो भवत्यत ऐश्वर्यनामभ्य उत्तराणीश्वरनामानि 'राष्ट्री' इत्येवमादीनि चत्वारि सन्ति । इतः समितः सम्यक्—गतः—सङ्गतः संयुक्त ऐश्वर्येण । यद्वा । ऐश्वर्यं समितं प्राप्तमनेन स इनः—ईश्वरः स्वामी । "इण् गतौ"

---

* 'समितः' इति पाठः क्वचित् 'सनितः' इति पाठः क्वचित् । होश्यारपुरस्थवैदिकशोधसंस्थानस्य हस्तप्रतिकायां १७५ इति संख्याकायां तु 'सनितः' पाठः । 'समितः' पाठो युक्तः ।

( अदादि० ) ततः "इषूसिअिद्दीकुष्यविभ्यो नक्" ( उणा० ३ । ३ ) इत्यनेन 'नक्' प्रत्ययः । 'सम्' उपसर्गस्तु केवलमर्थप्रदर्शनाय । अनेकार्थत्वादुदाहरणम "यत्रा सुपर्णा...." मन्त्रः ।

यत्र सुपर्णाः सुपतना आदित्यरश्मयः । 'अमृतस्य भागम्' उदकस्य । अनिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषां भूतानां गोपायितादित्यः 'स मा धीरः पाकमत्राविवेश' इति धीरो धीमान् । पाकः पक्तव्यो भवति 'विपक्वप्रज्ञ आदित्यः' इत्युपनिषद्वर्णो भवतीत्यधिदैवतम् ॥

अथाध्यात्मम्—यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे ॥ १२ ॥

मन्त्रार्थः—

भा०—यत्र यस्मिन्नधिष्ठिता यस्याधीने सुपर्णाः—सूर्यकिरणाः "सुपर्णाः—रश्मिनाम" ( निघं० १ । ५ ) अमृतस्य जलस्य भागं वाष्पयोग्यकणम् "अमृतम्—उदकनाम" ( निघं० १ । १२ ) अनिमिषं निरन्तरं विदथा वेदनेन निजप्रापणबलेन "विद्लृ लाभे" ( तुदादि० ) अभिस्वरन्ति—अभितापयन्ति "स्वृ शब्दोपतापयोः" ( भ्वादि० ) तथा—'अभिप्रयन्ति—आभिमुख्येन गच्छन्ति स रश्मीनामीश्वरः स्वामी सूर्यः सविता भुवनस्य सर्वेषां भूतानां गोपा गोपायिता रक्षकः स धीरो धी बुद्धिशक्तिर्बुद्धिप्रदशक्तिर्यस्मिन् अनेभ्यः स बुद्धिप्रदः "सवितु र्वरेण्यं....धियो यो नः प्रचोदयात्" उक्तं हि । अत्र जीवने पाकं पक्तव्यं मां सुपक्वबुद्धिमन्तं कर्तुमाविशेदिति । उपनिषद्वर्णो रहस्यविषयस्य वर्णयिता मन्त्रः । इति त्वधिदैवतं दर्शनम् ।

अथाध्यात्मम्—यस्मिन् जीवात्मनि श्रिताः सुपर्णा विषयं प्रति सुगमनशीलानीन्द्रियाणि—अमृतस्य ज्ञानस्य भागज्ञानस्य भागे फलं संस्कारं निरन्तरं प्रापणधर्मेणाभिशब्दयन्ति प्रयच्छन्ति वा तथाभूतं जीवात्मानं मां पक्तव्यं विपक्वप्रज्ञं विशतु यः सर्वेषामिन्द्रियाणां गोपा रक्षको ममात्मनोऽप्यात्मा परमात्मा धीरो धीमान्—अस्ति, स मां प्राप्नोतु ॥ इत्यात्मगतिरात्माभिलाषः ॥

इति तृतीयाध्यायस्य द्वितीयः पादः ।

## तृतीयः पादः

---

बहुनामान्युत्तराणि द्वादश । बहु कस्मात् प्रभवतीति सतः ॥

भा०—ईश्वरस्य बहुविधमैश्वर्यं प्रत्येकैश्वर्यस्येश्वराः पृथक् पृथग् बहवस्तस्मादीश्वरा बहवो भवन्तीतीश्वरनामभ्य उत्तराणि 'उरु' इत्येवमादीनि बहुनामानि द्वादश सन्ति । बहु प्रभूतं भवति—इत्यर्थप्रदर्शनम् । लङ्घिबंह्योर्नलोपश्च" ( उणा० १ । २९ ) "बंहि वृद्धौ" ( भ्वादि० ) तत उः प्रत्ययो यङि लुकि बभुः, भकारस्य हकारश्छान्दसः ॥

ह्रस्वनामान्युत्तराण्येकादश ॥

भा०—बहुनाम्नामपेक्षया ह्रस्वनामानि तस्मात् 'ऋहन्' इत्यादीनि ह्रस्वनामान्येकादश सन्ति । ह्रस्वः "ह्रस शब्दे चालीके च" ( भ्वादि० ) ततो वन् प्रत्ययः ( उणा० १ । १५३ ) ॥

महन्नामान्युत्तराणि पञ्चविंशतिः । महान् कस्मान्मानेनान्याञ्जहातीति शाकपूणिः । मंहनीयो भवतीति वा । तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासात् ॥

भा०—ह्रस्वापेक्षया महान् भवत्यतो ह्रस्वनामभ्य उत्तराणि 'महत्, ब्रध्न' इत्येवमादीनि महन्नामानि पञ्चविंशतिः सन्ति । महान् खलु मानेन भारात्मकेनाकाररूपेण वा परिमाणेन गुणमानेनादरेण स्वभिन्नान् जहाति त्यजति लङ्घयति—इति शाकपूणिराचार्यो मन्यते । माति—स्वात्मानं तोलयतीति मः—यथा जानातीति ज्ञः । यान् तोलयति तान् जहाति त्यजत्यतिक्रामति तस्मात्स महान् । 'मः—हा—अति' "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" ( उणादि० २ । ८५ ) अतिप्रत्ययान्ता निपात्यन्ते । यद्वा मंहनीयः प्रशंसनीयो भवति । 'महनीयः' इति पाठेन भवितव्यम् "मह पूजायाम्" (भ्वादि०) न तु "महि वृद्धौ" (भ्वादि०)।

तत्र महन्नामसु 'ववक्षिथ, विवक्षसे' इत्येते—आख्याते वच् धातोर्यद्वा वह-धातो रूपे स्तः । वक्तुमिच्छसि त्वं भृशं वक्तुमिच्छसि भृशं वचनशक्तिमांस्त्वं महान्, यद्वा भृशं वोढुमिच्छसि वहनशक्तिमान् त्वं महान् । अत्रोभयत्र क्रियया महत्त्वं लक्ष्यते ।

गृहनामान्युत्तराणि द्वाविंशतिः । गृहाः कस्माद् गृह्णन्तीति सताम् ॥

भा०—महतामेव गृहाणि भवन्ति तस्मान्महन्नामभ्य उत्तराणि 'गय:' प्रभृतीनि गृहनामानि द्वाविंशतिः। गृह्णन्ति अन्नान् स्वाभ्यन्तरे यस्मात् तानि गृहाणि। अथवा यद्यत्किमपि सुखदं वस्तु स्थाप्यते गृहेषु तत्तत्सर्वं गृहाणि गृह्णन्ति।

परिचरणकर्माण उत्तरे धातवो दश।

भा०—गृहेषु हि परिचर्या कर्तुं शक्यते तस्माद् गृहनामभ्य उत्तराणि 'इरज्यति' प्रभृतयो धातवः परिचरणव्यापारा दश सन्ति।

सुखनामान्युत्तराणि विंशतिः। सुखं कस्मात् सुहितं खेभ्यः। खं पुनः खनतेः।

भा०—परिचर्यातः सुखं भवति तस्मात् परिचणनामभ्य उत्तराणि 'शिंबाता' आदीनि सुखनामानि विंशतिः। सुखं—सुहितं सुष्ठुहितं भवति खेभ्य इन्द्रियेभ्यः। खानि भवन्तीन्द्रियाणि। खं पुनः खनधातोः खातम्, खातमिव तदिन्द्रियं गोलकं भवति। 'खन्—ड—ख' "अन्येभ्योऽपि दृश्यते। वा०" (अष्टा० ३।२।१०१)।

रूपनामान्युत्तराणि षोडश। रूपं रोचतेः।

भा०—सुखिन एव प्रायेण रूपवन्तो भवन्ति, अरूपवन्तोऽपि सुखसम्बन्धेन रूपवन्तः प्रतीयन्ते कथ्यन्ते च सुखनामभ्य उत्तराणि 'निर्णिक्' प्रभृतीति षोडश रूपनामानि रूपं "रुच दीप्तावभिप्रीतौ च" (भ्वादि०) रुच—रूप प्रत्यय औणादिको बाहुलकात्।

प्रशस्यनामान्युत्तराणि दश।

भा०—रूपवद्वस्तु प्रशस्यं भवति तस्माद्रूपनामभ्य उत्तराणि 'अक्नेमा:' आदीनि प्रशस्यनामानि दश सन्ति।

प्रज्ञानामान्युत्तराण्येकादश।

भा०—प्रशस्यानां प्रज्ञा भवति तस्मात्प्रशस्यनामभ्य उत्तराणि 'केत:' प्रभृतीनि प्रज्ञानामानि सन्त्येकादश।

सत्यनामान्युत्तराणि षट्। सत्यं कस्मात् सत्सु तायते सत्प्रभव भवतीति वा।

भा०—प्रज्ञावद्भिः सत्यमन्वेष्टुं शक्यते तस्मात् प्रज्ञानामभ्य उत्तराणि 'बट्' प्रभृतीनि षट् सन्ति सत्यनामानि, सत्यं सत्सु सज्जनेषु महात्मसु विद्यमानेषु वा विस्तीर्यते विस्तारमाप्नोति, सत् ताय् सत्यस्य 'स' 'ताय्—त्य = सत्यम्।' भवे वा सत्यम्। अथवा सद्भ्यः सत्पुरुषेभ्यो विद्यमानेभ्यो वा प्रभवं प्रकटीभूतं—तस्मात्प्रभवति—इति 'यत् प्रत्यय:' "प्रभवति" (अष्टा० ४।३।८३)।

**अष्टा उत्तराणि पदानि पश्यतिकर्माण उत्तरे * धातवश्चा-यतिप्रकृतीनि ( प्रभृतीनि † ) च नामान्यामिश्राणि ।**

भा०—अष्टौ खलूत्तराणि पदानि (पश्यतिव्यापाराणि) नामपदानि तथाऽऽख्यातपदानि यत्र सत्यं तत्र दर्शनं यथावद्भवति तस्मात् सत्यनामभ्य उत्तराणि, तद्वत् खलूत्तरे सत्यनामभ्य उत्तरे पश्यतिकर्माणौ धातवः । तत्र चायतिप्रकृतीनि 'चिक्यत्, चाकनत्, विचर्षणिः, विश्वचर्षणिः' इति चत्वारि नामानि चायतिप्रकृतीनि ‡ खल्वामिश्राणि सन्ति ।

**नवोत्तराणि पदानि सर्वपदसमाम्नाताय ।**

भा०—"हिकम्" आदीनि नव पदानि पश्यतिकर्मभ्य उत्तराणि, पश्यति-व्यापारे समवव्याप्या भवितव्यम् । अतस्तदुत्तराणि । सर्वपदपाठायेमानि सन्ति । तत्र 'हिकम्, हि–कम्', 'नुकम्–नु–कम्' इति द्वौ निपातसमुदायौ । सुकम्, सु–कम्, उपसर्गनिपातसमुदायः । 'आहिकम्' 'आ–हिकम्' उपसर्गनिपात-समुदायः । एते–एकपदत्वेन न प्रयुज्यन्ते, निपातानां समासाभावात् । अतः पृथक् पदपाठो भवति । तस्य तस्योदाहरणानि—

हिकम्—"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । ( ऋ० १ । ९८ । १ ) अत्र हि हेतौ कं तत्पूरकम् ।

नुकम्—"इमा नुकं भुवना सीषधामे०" ( ऋ० १० । १५७ । १ ) अत्र 'नु' अवश्यार्थे कं तत्पूरकम् ।

सुकम्—"तिष्ठा सु कं मघवन् मा परागाः" (ऋ० ३ । ५३ । २) सु सुष्ठु कं द्वितीयान्तं कञ्चित् कालं सुखं वा ।

आहिकम्—"एक्रं हवींषि मधुना हि कं गतमथा" ( ऋ० २ । ३७ । ५ ) आ–हि–कम्–'आ' उपसर्गत्वेन 'गतम्' इत्यनेन सह योजनीयम् । 'हि', 'कम्' तत्पूरकौ निपातौ ।

आकीम्—'आकीं सूर्यस्य रोचनाद् विश्वान् देवान् उषर्बुधः । विप्रो होतेह वक्षति ( ऋ० १ । १४ । ९ ) ।

---

* सत्यनामभ्य उत्तरे न तु पदसु ।

† प्रभृतीनि मुद्रितपुस्तकेषु । प्रकृतीनि—इति पाठेन भवितव्यम् । तथा स्कन्दभाष्ये मूलपाठः ।

‡ चायृ पूजानिशामनयोः (भ्वादि०) ।

आ कीं वक्षति—आ वहति । 'आ' इति उपसर्गोय प्रयुज्यते ।

नकिः—'वसु नकिष्टदा मिनाति ते' ( ऋ० ८ । ८८ । ३ ) ।

ते तव तद्वसुधनं । नकिः—न कश्चित्—आमिनाति । 'न' इति निषेधे किंश्च नाम्नि प्रयुक्तः ।

माकिः, माकीम्—"माकिर्नेशन्माकीं रिषन्" ( ऋ० ६ । ५४ । ७ ) न कश्चिन्नश्यतु पुरुषः, नकीं कां नारीं हिंस्यात् । 'मा' निपाते, किः कीम् च नाम्नि प्रयुज्येते । "उत सु त्ये पयोवृधा माकी रणस्य नप्त्या" (ऋ० ८ । २ । ४२) माकी 'माकिः' इत्यस्य द्विवचनं नाम्नि प्रयोगः ।

नकीम्—"नकीं वृधीक इन्द्र ते न सुषा न सुदा उत" (ऋ० ८।७८।४) निपातो नकारार्थः ।

अथात उपमाः । यदेतत्तत् सदृशमिति गार्ग्यः । तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वोपमिमीते ॥ १३ ॥

अथापि कनीयसा ज्यायांसम् ॥

"तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।

( ऋ० १० । ४ । ६ )

तनूत्यक् तनूत्यक्ता । वनर्गू वनगामिनौ । अग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते । तस्करस्तत्करो भवति । करोति यत् पापकमिति नैरुक्ताः । तनोतेर्वा स्यात् सन्ततकर्मा भवति । अहोरात्रकर्मा वा । 'रशनाभिर्दशभिरभ्यधीताम्' इति अभ्यधाताम् । ज्यायांस्तत्र गुणोऽभिप्रेतः ॥ १४ ॥

भा०—पृथिवीलोकप्रसङ्गः समाप्तोऽथानन्तरमितः सार्वत्रिकः प्रसङ्ग आरभ्यते, तत्र 'उपमाः खलूपमावाचका भवन्ति । यत् खलु—अतत्—तत्सदृशं यथा हि—अरजतं शुक्तिः—रजतवदवभासते । अगौर्गौरिवाभासते गवयः, इति गार्ग्यो मन्यते । आसामुपमानां कर्म—व्यापारः प्रवृत्तिर्वा ज्येष्ठेन—श्रेष्ठेन प्रख्याततमेन—अतिप्रख्यातेन—अतिप्रसिद्धेन—गुणेन वा कनीयांसमप्रसिद्धं वा खलूपमिमीते । अथ च कनीयसा गुणेन ज्यायांसं गुणमुपमिमीते, तद्यथा—"तनूत्यजेव" अत्र मन्त्रे—अग्निमन्थनकर्मणि बाहू स्तूयेते—

समग्रमन्त्रस्तदर्थश्च—

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥

अग्ने तव मन्थनाय तुभ्यमियं नवीना मानसी मदीयाऽऽकांक्षा–अस्ति। तां त्वं प्राप्नुहि। दीप्ताङ्गं रथमिव प्राप्नुहि। यतो हि मम बाहू चौर्यकर्मकरणे तनूत्यजा मरणायापि कृतनिश्चयौ–इव तनूत्यक्तौ वनगामिनौ चोराविव दशभी-रशनाभिरङ्गुलिभिः "रशना–अङ्गुलयः" (निघ० २।५) अभ्यधीतां–बध्नीतां धारयतां वा। तस्करस्तत्करः "पारस्करप्रभृतीनि च" (अष्टा० ६।१।१५१) इति सुट्। तत्करोति तत्करः पापकरः, 'तन्' धातोस्तत्, गुप्तं पापं। भवति। नैरुक्ते मते चोरः सन्ततकर्मा भवति। दिने वनं गत्वा, रात्रौ नगरे स्थित्वा। अहोरात्रकर्मकारी वा चोरो भवति। अत्र कनीयसा चौर्यकर्मणा, ज्यायसि–अग्निमन्थनकर्मणि दत्ता खलूपमा। 'वनगू' 'कु' प्रत्यय औणादिको रुट् चागमो धातोः।

कुहं स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः। को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ॥ (ऋ० १०।४०।२)

क्व स्विद्रात्रौ भवथः, क्व दिवा, क्वाभिप्राप्तिं कुरुथः, क्व वसथः, को वां शयने 'विधवेव देवरं' (देवरः-कस्माद् द्वितीयो वर उच्यते) विधवा विधातृका भवति। विधवनाद्वा। विधवनाद्वेति प्रचर्मशिराः। अपि वा धव इति मनुष्यनाम, तद्वियोगाद् विधवा। देवरो दिव्यतिकर्मा। मर्यो मनुष्यो मरणधर्मा। योषा यौतेः। आकुरुते सहस्थाने॥

भा०—'इव' इत्युपमार्थीयस्तस्य द्वितीयमुदाहरणं "कुह स्विद्····विधवेव-देवरं····" इति दर्शयत्याचार्यः।

अथ मन्त्रार्थः—

हे अश्विनौ–ज्योतीरसप्रधानौ पतिपत्न्यौ! युवां दोषा–रात्रौ क्वस्विद् भवथो वस्तो दिवा दिने क्वाभिप्राप्तिं स्वाभीष्टं कुरुथः साधयथः क्व वसथो वासं कुरुथः कुत्र मुख्यं वासस्थानम्। विधवादेवरयोरिव युवयोः शयने कुत्र, यद्वा मर्यं न योषा–यथा नववधू सहस्थाने मर्यं नववरमाकुरुतेऽङ्गीकरोति।

निरुक्तयः—'विधवेव देवरं' मृते पत्यौ विधवाया पुनर्विवाहो नियोगाख्यः कार्यः *। धात्रा पत्या रहिता विधवा भवति विधवनाद् विकम्पनाद् "धूञ्

* "पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता। सा चेदक्षतयोनिः स्यात्···· पुनः संस्कारमर्हति" (मनु० ९।१७६)।

कम्पने" ( स्वादि० ) कम्पते हि विधवा खल्वेकाकिनी सती निराधारा। यद्वा विधावनात् "धावु गतिशुद्ध्योः" ( भ्वादि० ) आजीविकार्थं विविधं धावनं करोति विधवा, विशिष्टं धावनं शोधनं पवित्रभावमीश्वरोपासनं स्वाध्यायं करोति हि सा, अथवा–धवो मनुष्यः "धवा मनुष्यनाम" ( निघं० २ । ३ ) मनुष्यस्य पत्युर्वियोगाद् विधवा धवरहिता। देवरो देवनशीलो: मर्यो मनुष्यः "मर्या मनुष्यनाम" ( निघं० २ । ३ ) मरणधर्मा इत्यर्थप्रदर्शनार्थं निर्वचनम्। "मृङ् प्राणत्यागे" ( दिवादि० ) ततः "छन्दसि निष्टर्क्य....मर्य...." (अष्टा० ३ । १ । १२३ ) अनेन कर्तरि यत्प्रत्ययान्तो निपात्यते म्रियतेऽसाविति मर्यः। योषा "यु मिश्रणे" ( अदादि० ) ततः सः प्रत्ययो बाहुलकादौणादिकः। ( उणा० ३ । ६२ ) अत्रापि कनीयसा ज्यायां समुपमिमीते। 'अभिपित्वम्' अभि-पूर्वकात् "पि गतौ" ( तुदादि० ) प्राप्त्यर्थो गृह्यते ततः "कृत्यार्थे तवैकेन्केन्यत्वनः" ( अष्टा० ३ । ४ । १४ )।

अथ निपाताः पुरस्तादेव व्याख्याताः। यथेति कर्मोपमा—
"यथा वातो यथा वनं यथा समुद्र एजति।"
( ऋ० ५ । ७८ । ८ )
"भ्राजन्तो अग्नयो यथा" ( ऋ० १ । ५० । ३ )।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा॥"
( ऋ० १० । ९७ । ११ )
आत्माऽततेर्वाप्तेः* वापि वाप्त इव स्याद् यावद् व्याप्तिभूत इति।

भा०—अथ खलु निपाताः प्रागेव प्रथमाध्याये सामन्येन व्याख्याताः। विशिष्टा निपाता अत्रोच्यन्ते तेषु 'यथा' इति निपातः कर्मोपमा व्यापारस्य क्रियाया उपमा भवति "यथा वातो....एजति" इति मन्त्रे 'एजति' क्रियाया उपमा दीयते।

समग्रमन्त्रस्तदर्थश्च—

यथा वातो यथा वनं यथा समुद्र एजति।
एवा त्वं दशमास्य सहावेहि जरायुणा॥

यथा वातश्चलति यथा वनं चलति यथा समुद्रश्चलति तथा हे दशमासिक गर्भवत्स ! त्वं जरायुणा सह–अवेहि–अवचल–नीचैर्योनितो बहिरागच्छ॥

---

* क्वचित् 'अत्तेर्वा' (स्कन्दमहेश्वरः भाष्ये)।

तथा च 'भ्राजन्तो अग्नयो यथा' इति मन्त्रे 'भ्राजन्तः' क्रियाया उपमा, समग्रमन्त्रस्तदर्थश्च—

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥

यथाऽग्नयो भ्राजन्तो ज्वलन्तो दीप्यमाना वर्त्तन्ते तथाऽस्य सूर्यस्य प्रज्ञानरूपा वस्तूनां प्रज्ञापका रश्मयो जनान् प्रति दृष्टिपथमागच्छन्ति तैर्दृश्यन्ते ॥

अपि च "आत्मा यक्ष्मस्य नश्यति····" इति 'नश्यति' क्रियाया उपमा, समग्रमन्त्रस्तदर्थश्च—

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥

रोगस्यात्मा स्वरूपं खल्वोषधिप्रयोगात् पूर्वं नश्यति यथा जीवग्राहकात् प्राणस्य हारकात् पूर्वं जीवो भयान्नश्यति तं दृष्ट्वा, यदा ह्यहं रुग्णं पुनः स्वस्थं बलिनं कुर्वन्नेता ओषधीर्हस्ते गृह्णामि ॥

निरुक्त्यः—

'आत्मा' शब्दः "अत सातत्यगमने" (भ्वादि०) ततः "सातिभ्यां मनिन्मनिणौ" ( उणादि० ४ । १५३ ) गमनमिति ज्ञानगमनप्राप्तयः । सततं जानाति कर्मफलं प्राप्नोति जन्मधारणाय च देहाद् देहान्तरं गच्छति। यद्वा "आप्लृ व्याप्तौ" ( स्वादि० ) धातोर्बाहुलकादौणादिको मनिण्–प्रत्ययः । व्याप्तः परमात्मा भवति, आप्त इव वा यावन्मात्रं शरीरं तद्बहिस्त्वनाप्तः ॥

अग्निर्न ये भ्राजसा रुक्मवक्षसः ॥ ( ऋ० १०।७८।२ )
अग्निरिव ये मरुतो भ्राजमाना रोचिष्णूरस्का भ्राजस्वन्तो रुक्मवक्षसः ॥ १५ ॥

भा०—'न' इत्युपमावाचको भ्राजसा–भ्राजमानाः–इति क्रियाया उपमायाम्। समग्रमन्त्रस्तदर्थश्च—

अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥

ये मरुतः सैनिका अग्निरिव भ्राजमाना दीप्यमाना रुक्मं रोचिष्णु वक्ष उरो येषां ते तथाभूता दीप्तिमन्तो यूयं स्थ । यज्ञं सङ्गमनीयं राष्ट्रं प्राप्नुवते राज्ञे वाता इव स्वेषु परस्परं युज्यमानाः सद्योगतिशीलाः प्रकृष्टज्ञातार इव श्रेष्ठाः सुनीतिमन्तः सुसुखाः सोमाः–ऐश्वर्ययज्ञस्य रचयितारः स्थ ॥

चतुरश्चिद् ददमानाद् विभीयादानिधातोः ।
न दुरुक्ताय स्पृहयेत् ॥ ( ऋ० १ । ४१ । ९ )
चतुरोऽक्षान् धारयत इति तद्यथा कितवाद् बिभीयादेव-
मेव दुरुक्ताद् बिभीयान्न दुरुक्ताय स्पृहयेत् कदाचित् ॥

भा०—'चित्' उपमार्थीयः, 'बिभीयात्' इति क्रियाया उपमा ।

मन्त्रार्थः—

चतुरोऽक्षान् धारयमाणात् तान् प्रक्षिपतः कितवाद् यथा बिभेति ह्यन्यो यदयं किं पातयिष्यति मां पराजेतुं, एवमेव दुरुक्ताजनाद् दुः—उक्तं यस्य तस्मात् यद्वा दुर्वचनाद् भयं कुर्यात् कदाचिदपि दुरुक्तं न स्पृहयेत् ॥

अत्र 'ददमानात्—धारयमाणात्' "दद धारणे" उक्तं हि पूर्वम् "दण्डो ददतेर्धारयतिकर्मणः—अक्रूरो ददते मणिम्" ( निरु० २ । २ ) ।

आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्युप-
मार्थे दृश्यते "जार आ भगम्" ( ऋ० १० । ११ । ६ )
जार इव भगम् । आदित्योऽत्र जार उच्यते रात्रेर्जर-
यिता । स एव भासाम् ॥

भा०—निघण्टुप्रदर्शितानामुपमावचनानाम् 'ब्राह्मणा व्रतचारिणः' तथा 'वृक्षस्य नु ते पुरुहूत वयाः' इति द्वे वचने अन्तरयित्वा 'जार आ भगम्' वचन-मत्र निरुक्ते व्याख्यातुं गृहीतं यतो हि 'ब्राह्मणा व्रतचारिणः' वचनं तु दैवतकाण्डे नवमाध्याये वक्ष्यति ह्याचार्यः । 'वृक्षस्य नु ते पुरुहूत वयाः' इति वचनं पूर्वं प्रथमाध्याये व्याख्यातम् । 'जार आ भगम्' इत्यत्र 'आ' इत्युपसर्गः । स च 'आकारः' पूर्वमेव प्रथमाध्याये व्याख्यातोऽर्वागर्थे समुच्चयार्थे च । अत्र तूपमार्थे दृश्यते । जारोऽआदित्यः स च रात्रेर्जरयिता भासां नक्षत्राणां ज्योतिषां च जर-यिता यत उदिते ह्यादित्ये रात्रिर्जीर्यते नक्षत्राणि च जीर्यन्ते ।

समग्रमन्त्रस्तदर्थश्च—

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥

हे अग्ने ! त्वं पितरौ द्यावापृथिव्यौ प्रति यज्ञसारमुत्प्रेरय, जार आदित्यो यथा भजनीयं प्रकाशमुत्प्रेरयति । यजमानो यज्ञं कामयमानान् यष्टुमिच्छति । स हृदयाद्—हार्दिकभावाद् देवानिच्छति, वोढा यजमानो यः शोभनं कर्म कर्तु-मिच्छति स साधु वदति, पुनर्यज्ञो वर्धते, असुरो दुष्टमत्या कम्पते ॥

तथापि निगमो भवति "स्वसुर्जारः शृणोतु नः" ( ऋ० ६ । ५५ । ५ ) इति, उषसमस्य स्वसारमाह साहचर्याद् रसहरणाद्वा । अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्याद् भजतेः ।

भा०—अन्यच्च तथा खलु निगमो वेदशब्दो भवति यत्-आदित्यो जारोऽस्ति 'स्वसुर्जारः शृणोतु नः' अत्रास्यादित्यस्य स्वसा वर्णिता-उषाः । सहचारित्वात्, उषसा सह ह्यादित्य उदेति यत इति साहचर्यं प्रत्यक्षं पुनारसहरणाच्च यदादित्य उषसो रसं प्रभां शोभां हरति तस्मात् स जार उक्तो जरयितृत्वात् ।

समग्रमन्त्रस्तदर्थश्च—

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।
भ्रातेन्द्रस्य सखा मम ॥

देवता पूषा स च सूर्यः "असौ वै पूषा योऽसौ 'सूर्यः' तपति ( गो० उ० १ । २० ) मातुः पृथिव्याः "माता पृथिवी महीयम्" (ऋ० १ । १६४ । ३३) पृथिव्या दिधिषुं धारकमहं प्रशंसेयं य उषसो जरयिता स्वप्रखरप्रकाशेन, इन्द्रस्य विद्युद्रूपस्य देवस्य भ्राता वृष्टिकर्मणि भर्तृत्वात् । भरद्वाजस्य-प्राणबलस्य धर्तुं जीवात्मनः सखा मित्रवदस्ति स नोऽस्माकमभिप्रायं स्वीकरोतु पूरयतु ॥

यः खलु पूर्वो मन्त्र उदाहृतः "जार आ भगम्" न स्यात् स आदित्यविषयकः, किन्तु तत्र जारो मनुष्यजार एवाभिप्रेतः स्यात् । स खलु हीनोपमया हीनेन गुणेन ज्यायांसं गुणमुपमिमीते । यथा मनुष्यजारो भगं भजनीयं स्त्रीभगमुद्धर्षयति-उत्तेजयति तथा यज्ञाग्निरन्तरिक्षमुद्धर्षयति स्वतेजोमयेन सारेण ॥

मेष इति भूतोपमा । "मेषो भूतो भियन्नयः" ( ऋ० ८ । २ । ४० ) मेषो मिषते स्तथा पशुः पश्यतेः ॥

भा०—'मेषः' इति-उपमाऽस्ति 'भूतः' इति शब्देन-उपमावाचकेन, स च 'भूतः' शब्द इवार्थे प्रयुक्तोऽत्र 'मेषो भूतो ऽभियन्नयः ।'

समग्रमन्त्रस्तदर्थश्च—

इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् ।
मेषो भूतो भियन्नयः ॥

हे अद्रिवन्-वज्रवन् ! इन्द्र राजन् ! त्वं सत्यपरायणं धीवन्तं कर्मवन्तं कर्मठं काण्वं प्रकृष्टमेधाविनं पवित्रातिथिं विद्वांसम्-अयः प्राप्तो भव तत्पोषणाय,

मेषो भूतो मेषः पशुरिवाभियन्—यथा मेषः पशुः संघर्षायाभिमुख्येनाभिगच्छन् प्राप्तो भवति । "मिष स्पर्द्धायाम्" ( तुदादि० ) मिषति स्पर्द्धते मेषः । अच् प्रत्ययः कर्त्तरि । स च मेषः पशुः पश्यतेः, यतः स पश्यति हि केवलं न जानाति परिणामम् ॥

अग्निरिति रूपोपमा "हिरण्यरूपः स हिरण्यसन्दृगपां-नपात् सेदु हिरण्यवर्णः" ( ऋ० २ । ३५ । १० ) हिरण्यवर्णस्येवास्य रूपम् ॥

भा०—'अग्निः' इत्युपमेयोऽस्ति 'रूपः' इति शब्देन–उपमावाचकेन, स च 'रूपम्' इति वर्णस्य मध्यमपदस्य वर्णस्योपमायां प्रयुक्तोऽत्र "हिरण्यरूपः" । समग्रमन्त्रस्तदर्थश्च—

हिरण्यरूपः स हिरण्यसन्दृगपांनपात् सेदुः हिरण्यवर्णः ।
हिरण्ययात् परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥

हिरण्यवर्णस्येवास्य रूपमिति तथाभूतोऽग्निः स च हिरण्यसन्दृक्—हिरण्य-सन्दृश्यमानो हि हिरण्यमेव भासमानोऽपांनपादग्निर्वैद्युतोऽपां न पातयति तस्मै-अस्मै हविरन्नं प्रयच्छन्ति जलवर्षणाय यश्च हिरण्ययोनेः स्थानात् परि–हिरण्ये योनौ स्थाने सूर्ये निपद्य निषद्य निष्ठाय प्रकाशते । इति तद्रूपस्तद्वर्ण इत्युभयो र्मिश्रितमुदाहरणम् ॥

था इति च "तं प्रत्नथा पूर्वथा विश्वथेमथा" ( ऋ० ५ । ४४ । १ ) प्रत्न इव पूर्व इव विश्व इवेति । अयमेततरोऽमुष्मात् । असावस्ततरोऽस्मात् । 'अमुथा' यथाऽसाविति व्याख्यातम् ॥

भा०—'था' इति पाठो निघण्टौ न पठित उपमार्थे । निरुक्तकारो यास्क-स्तमपि छन्दसि मन्यते खलूपमार्थीयम्, अत एवापठितत्वादत्र संगृह्णाति तम् । 'था' इति च कथित्वा । अत्र पण्डितचन्द्रमणिनोक्तं यदयं पाठो निघण्टुग्रन्थेऽपि भवेद् यतो यास्केन व्याख्यातोऽत्र, इत्येषा कल्पना न युक्ता । 'इति च' इत्यपि–उपरिष्टात् पाठोऽयमिति सूचयति । 'था' इति थाल् प्रत्ययो वैयाकरणानां स च तैरिवार्थे पठितश्छन्दसि "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" (अष्टा० ५।३।१११) 'प्रत्नथा–प्रत्न इव····इत्यादि० ।' इमथा–अयमिव, 'इमः' वैदिकः प्रयोगः, अयम्–इत्यस्मिन्नर्थे । 'अयम्–एततरः–आगततरः–समन्तात् प्राप्ततरोऽमुष्मात् परोक्षात् । 'आ–इ–अच्'–आयम्–पूर्ववर्णस्य ह्रस्वत्वे 'अयम्' । 'अयम्' शब्दस्य

प्रकृतिः 'इदम्' "इन्देः कमिन्नलोपश्च" ( उणादि० ४ । १५७ ) 'असौ' अस्त-तरः—क्षिप्ततरो दूरतरोऽस्मादुपस्थितात् । 'अस् क्विपि' 'द्' वर्णश्चोपजनो धातोर्मध्ये । 'अदस्' । 'अमुः' वैदिकशब्दः 'असौ' इत्यर्थे ।

समग्रमन्त्रस्तदर्थश्च—

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥

हे राजन् ! यासु—अस्मादृशीषु प्रजासु मध्ये वर्तमानस्त्वमस्मान् दोहसे सुखेन प्रपूरयसि स त्वं प्रत्नथा पुराणो राजेव पूर्वथा पूर्वो राजेव विश्वथा विश्वः सर्वो-राजेव—इमथा—अयं साम्प्रतिको राजेव वर्धसे वर्धयसे 'अन्तर्गतो णिजर्थः" तस्मात् तं त्वां प्रशस्ततरं राजासने समासीनं प्राप्तसुखं सुखस्य वेदयितारं स्वाभिमुखभूतं प्रजारक्षकं बलवन्तं सैन्यबलवन्तं तथा शत्रुं जयन्तं च राजपदस्य स्वीकरणरूपया गिरा वाण्याऽनुतिष्ठेमानुगच्छेम ॥

वदिति सिद्धोपमा—ब्राह्मणवद् वृषलवत् । ब्राह्मणा इव वृषला इवेति । वृषलो वृषशीलो भवति वृषाशीलो वा ॥१६॥

भा०—'वत्' इति सिद्धोपमा—लोके व्याकरणे च सिद्धा—प्रसिद्धा खलूपमा भवति, न ह्यत्र विवेचनमपेक्ष्यते "तेन तुल्यं क्रिया चेद् वतिः, तत्र तस्येव" ( अष्टा० ५ । १ । ११४, ११५ ) ब्राह्मणवद् ब्राह्मणा इवाधीयते मन्त्रान् शूद्रा अपि कृतबुद्धयः । वृषलवद् वृषला इव दुराचरन्ति धर्मज्ञानरहिता जनाः । 'वृषलः—वृषशीलो वृषाशीलो वा' वृषशीलो वृषभस्येव शीलो यस्य स वृषभपशु-प्रवृत्तिकोऽल्पबुद्धिकः । यद्वा वृषाशीलः—'वृष—अ—शीलः' वृषो धर्मस्तच्छीलरहितो यो धर्मं लोपयति सः, उक्तं यथा "वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम् । वृषलं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥" ( मनु० ८ । १६ ) इति लौकिक-मुदाहरणम् । वैदिकमुदाहरणं तु—

"प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥"
( ऋ० १ । ४५ । ३ )

प्रियमेधः, प्रिया अस्य मेधा । यथैतेषामृषीणामेवं प्रस्क-ण्वस्य शृणु ह्वानम् । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रम् । अर्चिषि भृगुः सम्बभूव, भृगुर्भृज्यमानो न देहे । अङ्गारेष्वङ्गिराः—अङ्गारा अङ्कनाः ( अञ्चनाः )

अत्रैव तृतीयमृच्छतंत्युचुस्तस्मादत्रिर्न त्रय इति। विखननाद् वैखानसः। भरणाद् भारद्वाजः। विरूपो नानारूपः। महिव्रतो महाव्रत इति ॥ १७ ॥

भा०—हे महिव्रत—महाव्रत—महान्ति व्रतानि कर्माणि यस्य यस्मिन् वा स महाव्रतः सम्बुद्धौ महाव्रत ! जातवेदोऽग्ने ! त्वं प्रियमेधवत्—प्रियमेधा इव, अत्रिवत्—अत्रय इव, विरूपवत्—विरूपा इव, अङ्गिरस्वत्—अङ्गिरस इव, प्रस्कण्वस्य—कण्वपुत्रस्य कण्वप्रभवस्य हवं ह्वानमभ्यर्थनं श्रुधी शृणु यथैषामृषीणां श्रुतवान्—अङ्गीकृतवान्। इति पदार्थः॥

निरुक्तय:—प्रियमेधः प्रिया मेधा बुद्धिर्यज्ञविषयिका सङ्गतिर्वा यस्य स प्रियमेधः—एकवचने बहुवचने तु प्रियमेधाः। प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवः—कण्वस्योपरिस्थितो यथा प्राग्रम्—अग्रप्रभवोऽग्रात् प्रभवति यः प्रपौत्रो यथा। अर्चिषि ज्वालायां भृगुः सम्बभूव भृगुर्भर्ज्यमानस्तप्यमानो न तु देहे। अङ्गारेषु—इव खल्वङ्गिराः—अङ्गनाः “अगिमहिमन्दिभ्य आरन्” (उणा० ३।१३४) स्वदाहेनान्यमङ्गयति प्राप्नोति, अङ्कनाः “अङ्क लक्षणे” ( चुरादि० ) बहुवचने—अङ्कयितारः प्रकाशेन दाहेन च। क्वचित् पाठः ‘अञ्चनाः’—प्राप्तिसाधनाः। अत्रिरत्रैव तृतीयमृच्छत प्राप्नुत—इति खलूक्तवन्तस्तस्मादत्रिः, न हि त्रय एवान्येऽपि स्युस्तस्माद् वाऽत्रिः। विखननाद् वैखानसः। भरणाद् धारणाद् भारद्वाजः—इति प्रसक्तानुप्रसक्तस्य निर्वचनम्। विरूपो नानारूपः। महिव्रत—महाव्रत। महद् व्रतं कर्म यस्य यस्मिन् वा तत्सम्बुद्धौ “यथैषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम्।” इति प्रियमेधादय ऋषयः सन्ति ते किंस्वरूपाः सन्तीत्यस्ति प्रश्नः। एते प्रियमेधादय आधिदैविकपदार्थाः सन्ति ते चाग्निसम्बद्धाः प्रगतिमन्तः सन्त ऋषय उच्यन्ते। अग्निः खल्वृषिकृत् “अग्ने····भूमिरस्यृषिकृत्” ( ऋ० १। ३१। १६ ) अत्रैषां संक्षेपेण स्पष्टीकरणं क्रियते—

वयः सुपर्णा उप॑सेदुरिन्द्रं प्रियमेधा ऋष॑यो नाध॑मानाः।

अप॑ ध्वान्तमू॑र्णुहि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य॑स्मान्नि॒धये॑व ब॒द्धान् ॥

( ऋ० १। ७३। ११ )

प्रियमेधा ऋषयः सूर्यरश्मयः सन्ति, उक्तं हि यास्केनास्मिन् मन्त्रप्रसङ्गे “वयो वेर्बहुवचनं सुपर्णाः सुपतना आदित्यरश्मयः” ( निरु० ४। ३ )। ते प्रार्थयन्ते सूर्यं सौरमग्निं यदस्मान् पाशबद्धानिव मुञ्च संसारतो ध्वान्तमन्धकारमपोर्णुहि—अपवारय रश्मिप्रकाशं पूरय च।

अत्रयः—

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥

( ऋक्० १ । ११६ । ८ )

"हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्त-मग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम् ।" ( निरुक्त ६ । ३६ ) अत्र निरुक्ते भौमाग्निरत्रिर्मतः । यः पृथिव्या अन्तरे बहिश्च वर्तते । "अत्रिर्भौम ऋषिः" ( साम पू० ६।७।११ ) बहुवचने "अत्रयः" "भौमाग्नेर्धाराः" यथा "सूर्याः—सूर्यरश्मयः" ( ऋक् ८ । ३ । १६ सायणः ) सति सर्वसूर्यग्रहणेऽपि पृथिवीतस्तस्य सम्बन्धविच्छेदो न भवति, यतो 'अत्रयः' भौमाग्निधारास्तं सूर्यं प्राप्नुवन्ति हि, उक्तं हि वेदे—

यं वै सूर्यं स्वर्भानुस्तमसा विध्यदासुरः ।
अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन् ॥

( ऋक् ५ । ४० । ९ )

यदा स्वर्भानुः सूर्यस्याच्छादकः सर्वसूर्यग्रहणस्य कारकः सूर्यपृथिव्योर्मध्य-गतश्चन्द्रस्तमसा विध्यति तदाऽत्रयो भौमाग्निधारास्तं सूर्यं प्राप्नुवन्ति हि ।

एतदर्थं निम्नं चित्रं पश्यन्तु—




विरूपाः—

विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे ॥

( ऋ० १० । ६२ । ५ )

"बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा ते अङ्गिरसः पुत्रास्ते अग्नेरधिजज्ञिरे । इत्याग्निजन्म" ॥ ( निरु० ११ । १७ ) पुनरग्निमे मन्त्रे च— "ये अग्नेः परिजज्ञिरे विरूपासो दिवस्परि ।" ( ऋ० १० । ६२ । ६ ) । दिवस्परि—आकाशे, न तु पृथिव्यां पार्थिवाग्नेर्जाताः । किन्तु सौराग्नेर्जाताः सूर्यबिम्बान्मन्दवृष्टिधारासु प्रतिबिम्बिताः—विविधरागाः सप्तवर्णा लोके 'इन्द्रधनुराख्याः प्रकाशधाराः' विरूपाः सन्ति ।

अङ्गिरसः—

दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ।

( ऋ० ४ । २ । १५ )

दिवः पुत्रा अन्तरिक्षे प्रकटीभूताः—विद्युत्तरङ्गाः खलु धनिनं मघवानमिन्द्रं विद्युद्देवं शुचन्तो ज्वलयन्तोऽद्रिं मेघं छिन्नभिन्नं कुर्म । एवमत्र "अङ्गिरसो वैद्युत्तरङ्गाः सन्ति ।

एवं प्रियमेधादीनां सर्वेषामग्निना सह सम्बन्धोऽस्ति । स च पार्थिवोऽग्निः सौरोऽग्नि वैद्युतोऽग्निर्वा भवेत् ।

प्रस्कण्वः—

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।

प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥

( ऋ० १० । ३१ । ११ )

अपि कण्वं सूर्यस्य पुत्रं कथयन्ति "एष सूर्यो वै नृषद्०" (ऐ० ब्रा० ४।२०) स खलु श्यावः—कृष्णवर्णोऽश्व इवास्ति । अत एव धनेन स पूरितो वाहकः सूर्यः कण्वं कृष्णवर्णाय पदार्थायाल्पभासमानरूपं प्रायच्छत्, कण्वं पूरयितुं प्रकाशयितुं समर्थः । सूर्यान्तर्गतः कृष्णभागः कण्वः पुनस्तदुद्भवः प्रस्कण्वस्तदुद्भूत उज्ज्वलनोन्मुखः प्रसरणशीलोऽवयवसमूहः ।

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।

सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृकः ॥

( ऋ० ८ । ५१ । २ )

चित्ररश्मिरूपो वाणो रश्मिसमूहः—उड्डीयमानपक्षिणमिव प्रसृतं प्रस्कण्वं स्वाश्रये प्राप्तवानस्ति । स च प्रस्कण्व ऋषिः प्रगतिशीलः । हे सूर्य ! त्वया

रश्मितः सहस्ररश्मीन् पुनः पुनः प्राप्तो भवति पुनः पुनारश्मिषु परिणतो भूत्वा-न्धकाररूपाय दस्यवे वृकः क्षेत्ता नाशयिता भवति ।

एवं प्रस्कण्वः पुनः पुनर्निमीलनधर्मः सौरेणाग्निना प्रकाशितो भवति । "कण निमीलने" ( चुरादि० ) प्रियमेधादिवत्—इति विज्ञानविषयः । आधिभौतिके क्षेत्रे लोके वा ये विद्वांसः प्रियमेधादिज्ञानस्य वेत्तारस्तद्गुणवन्तो वा तेऽपि तन्नाम-भिर्वक्तुं योग्याः सूर्यरश्मिज्ञानस्य वेत्तारो रश्मीनामिव ज्ञानस्य प्रकाशका ज्योतिर्विदः प्रियमेधाः । भौमशक्तिविज्ञास्तद्वदुपकारिणो भूगोलशास्त्रिणोऽत्रयः । अन्तरिक्ष-ज्ञानस्य वेत्तारस्तद्वदाश्रयस्य दातारो महानुभावा विरूपाः । वृष्टिविद्याविदस्तद्वदन्न-जलप्रसारज्ञानविज्ञास्तद्वज्जलान्नोत्पादनेन जीवनप्रदाः कृषका वैद्या अङ्गिरसः । प्रस्कण्वः—मेधाविनः पुत्रो विद्यार्थी ज्ञाननेत्रमुद्घाटयितुकामः । अग्निर्महि-व्रतः पूर्णसंयमी वेदाचार्यः, सर्वविद्याविज्ञानस्य पारङ्गत आचार्यः । यथाऽन्यान् योग्यान् स्वज्ञानेन सम्पादितवान् तथा मामपि सम्पादयेदिति प्रार्थना ।

इति तृतीयाध्यायस्य तृतीयः पादः ।

---

## चतुर्थ पादः

---

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते । सिंहो व्याघ्र इति पूजायाम् । श्वा काक इति कुत्सायाम् । काक इति शब्दानु-कृतिः । तदिदं शकुनिषु बहुलम् ॥

भा०—निघण्टुपठितः 'इव, यथा, न' इत्येवमादिभिरुपमावाचकशब्दै-रुपमाविषयो गतः । तत्र 'तथा' शब्दोऽप्युपमायां पठितः, तस्योदाहरणं तूपे-क्षितव्यम् । तस्यात्यन्तसाधारणत्वात्, स्थाने स्थानेऽल्पविषयेऽपि प्रयुज्यमानत्वात्, यथाशब्देन सह तस्य सापेक्षत्वादपि । यथा राजा तथा प्रजाः, विष्णुमित्रः साधु पठति तथा देवदत्तोऽपि । अथेदानीं लुप्तोपमानि लुप्ता—उपमा येषु तानि वचनानि लुप्तोमान्यत्रोच्यन्ते यानि खल्वर्थोपानि—इत्याचार्याः कथयन्ति यतस्तेषु वचने-ष्वर्थतो ह्युपमा लक्ष्यते, न तु साक्षादुपमावाकप्रयोगात् । तत्र 'सिंहः, व्याघ्रः' इति पूजायां प्रशंसायाम्, इति शब्देन प्रकारो लक्ष्यते तेन 'ऋषभः, शार्दूलः' प्रभृतयोऽपि गृह्यन्ते । यथा सिंहो देवदत्तः, पुरुषसिंहः, इव शब्दोऽत्र, लुप्तः—सिंह इव देवदत्तः पुरुषोऽयं सिंह इव, एवं व्याघ्रो देवदत्तः, पुरुषव्याघ्रः । तथा भरतर्षभः, नरशार्दूलः । 'श्वा, काकः' इति कुत्सायां निन्दायाम् । अत्रापि 'इति'

शब्दः प्रकारे वर्तते तेन शूकरः, गर्दभः, तृणं चापि गृह्यते। यथा—तीर्थकाकः—तीर्थे काक इव छात्रः, अयं जनस्तु तस्य श्वा, क्षेत्रशूकरः—क्षेत्रे शूकर इव मूलोत्पाटी, त्वां गर्दभं मन्ये त्वां तृणं मन्ये। 'काक' इति शब्दानुकृतिः—नाम्नि 'का का' ध्वनि र्यस्य स काकः। तदिदं शब्दानुकृतिर्निमित्तं नाम्नः पक्षिषु बहुधोपलभ्यते।

अन्यमतं दर्शयति—

न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः। काकोऽपकालयितव्यो भवति। तित्तिरिस्तरणात् तिलमात्रचित्र इति वा। कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा। श्वा शुयायी शवतेर्वा स्याद् गतिकर्मणः श्वसितेर्वा। सिंहः सहनाद्धिंसेर्वा स्याद् विपरीतस्य सम्पूर्वस्य वा हन्तेः संहाय हन्तीति वा। व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा॥ १८॥

भा०—शब्दानुकृतिर्न शकुनिनामसु निमित्तं विद्यते, तत्र शकुनिनाम्नि यद्वाऽशकुनौ पशुनाम्नि च समानी यौगिकी वृत्तिरित्यौपमन्यव आचार्यो मन्यते। तत्र गुणकर्मणी हि निमित्तम्। यथा—काकोऽपकालयितव्यः—अपक्षेपणीयो दूरी करणीयो भवति तस्य कुवाच्यकुरूपकुवृत्तवत्त्वात्। "कल क्षेपे" (चुरादि०) 'काल् कन्' "इण्भीकापाशल्यतिमर्चिभ्यः कन्" (उणा० ३। ४३) बाहुलकाल्लकारलोपो डाकन् वा प्रत्ययः। तित्तिरिः—तरणात् प्लवनात् "तॄ प्लवनसन्तरणयोः" (भ्वादि०) प्लवनमत्रोत्प्लवनम्। तॄ—इः प्रत्ययः स च कित् सन्वच्च तुक् चाभ्यासस्य बाहुलकात् (उणा० ४। १४३) यद्वा तिलमात्राणि चित्राणि यस्य यस्मिन् वा 'तिलचित्रः' तिलस्य 'तित्', चित्रस्य 'तिर्' इश्च प्रत्ययो मतुबर्थीयः 'तित्तिरिः"। 'कपिञ्जलः' जाङ्गलिको लघुतित्तिरिः। स च कपिर्वानर इव जीर्णोऽस्थूलशरीरो लघुशरीरः। कपिशब्दोपपदात् "जॄ वयोहानौ" (क्र्यादि०) ततः 'खच्' प्रत्ययो बाहुलकाद् रेफस्य लत्वं च 'कपिञ्जलः'। उत्प्लवनयोग्यशरीरो यथा कपिस्तथा कपिञ्जलः—उत्प्लवनयोग्यशरीरः। कपिरिव जवनः कपिशब्दोपपदात् "जु गतौ" छान्दसः "जवति गतिकर्मा" (निघं० २। १४) ततः खच् वर्णव्यापत्त्या कपिञ्जलः। यद्वा क—पिञ्जलः—ईषत् पिञ्जलः, पिञ्जलः—पिङ्गलो रक्तपीतवर्णः। अथवा कं कमनीयं सुखं शब्दं पिञ्जयति—कपिञ्जलः, 'क' उपपदात् 'पिजि भाषार्थः" (चुरादि०) ततः "कलस्तृपश्च" (उणा० १। १०४) इति कलः प्रत्ययो धातोर्बाहुलकात् कपिञ्जलः। 'श्वा शुयायी शु–

शीघ्रं याति—इति तच्छीलः शीघ्रगामी भवति श्वा कुक्कुरः । "श्वन्नुक्षन् पूषन्....." ( उणा० १ । १५९ ) निपात्यते श्वन् शब्दः । 'शु—या—कनिन्' निपातनाद् धातोर्लोपः । यद्वा 'शु—अय् धातोः कनिन्, धातोरन्तलोपः पररूपं च निपातनात् । अथवा "शव गतौ" ( भ्वादि० ) 'शव कनिन्' धातोरुपधाभूतस्य—अकारस्य लोपो निपातनादेव । श्वन्—श्वा, गतिमान् भवति श्वा । अथवा "श्वस् प्राणने" ( अदादि० ) 'श्वस् कनिन्' निपातनात् टिलोपः पररूपं च । 'श्वन् श्वा ।' बहुश्वासी भवति श्वा । "श्वसितिं वधकर्मा" ( निघं० २ । १९ ) विजातीयं सजातीयमपि हन्ति हि श्वा । 'सिंहः' सह धातोः 'सह्—कन्' बहुलात् ( उणा० ५ । ६२ ) अकारस्य—इकारः । सर्वबलं सोढुं शक्तः । अथवा 'हिंस धातोः—आद्यन्तविपर्ययेण सिंहः । यद्वा समुपसर्गपूर्वकात् 'हन्' धातोः, संहाय हन्ति सावधानं कृत्वा साक्षादाक्रम्य हन्ति 'सम् हन् डः' 'सम्' इत्यस्य—अकारस्ये-कारः । व्याघ्रः "वि—आङ् पूर्वकात् घ्रा धातोः "व्याङि घ्रातेश्च जातौ" (उणादि, ५ । ६३ ) 'वि—आ—घ्रा—कन्' व्याजिघ्रति विशेषेण समन्ताज्जिघ्रति मांसवन्तं जन्तुं दूराद् व्याघ्रः । अथवा व्यादाय हन्ति विशेषेणादाय निगृह्य मुखं व्यादायो-द्घात्य हन्ति व्याघ्रः ।

अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत् ।

भा०—उपमावाचकेभ्य उत्तरे धातवः 'अर्चति, गायति' प्रभृतयश्चतुश्चत्वारिं-शत् सन्ति खल्वर्चतिव्यापाराः । विविधोपमाभिरर्चना स्तुतिर्भवतीति यतः ।

मेधाविनामान्युत्तराणि चतुर्विंशतिः । मेधावी कस्मा-न्मेधया तद्वान् भवति । मेधा मतौ धीयते ॥

भा०—अर्चतिव्यापारेभ्यो धातुभ्य उत्तराणि मेधाविनामानि चतुर्विंशतिः सन्ति 'विप्रः' आदीनि यतोऽर्चनातो मेधाविकासो जायते । मेधावी मेधया युक्तो मेधावान् । मत्वर्थे विनिः प्रत्ययः "अस्मायामेधास्रजो विनिः" ( अष्टा० ५ । २ । १२१ ) 'मतौ' मतिशब्दो भावार्थे । यथा "मतिबुद्धिपूजार्थेभ्यश्च" ( अष्टा० ३ । २ । १८८ ) अतो मतौ मनने मननप्रसङ्गे धीयते धार्यते या—आन्तरिकी शक्तिः सा मेधा तद्वान् मेधावी । मन्यतेऽनेनेति 'मः' "अन्येभ्योऽपि दृश्यते, वा०" ( अष्टा० ३ । २ । १०१ ) डः प्रत्ययः, मे धीयते या सा मेधा सप्तम्या अलुक् ।

स्तोतृनामान्युत्तराणि त्रयोदश । स्तोता स्तवनात् । मेधाविना हि यथावत् स्तूयते तस्मान्मेधाविनामभ्य उत्तराणि 'रेभः' प्रभृतीनि स्तोतृनामानि त्रयोदश सन्ति । स्तोता भवति स्तवनात् । "स्तु—तृन्" आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु तृन् ( अष्टा० ३ । २ । १३५ ) तच्छीलार्थे ।

यज्ञनामान्युत्तराणि पञ्चदश । यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति नैरुक्ताः । याच्ञ्यो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वा ॥

भा०—स्तोतृनामभ्य उत्तराणि यज्ञनामानि 'यज्ञः, वेनः' प्रभृतीनि पञ्चदश सन्ति । स्तोतारो यज्ञे स्तुवन्ति हि तस्मात् तदुत्तराणि । यज्ञः कस्मादुच्यते । यजतिकर्म, यजतिर्धातुनिर्देशे श्तिप्प्रत्ययान्तः । यजनकर्म प्रसिद्धं यज्ञः—यज्ञो यजनव्यापारः, होमः प्रसिद्धः । इति नैरुक्ता मन्यन्ते । "यजयाचयतविच्छ—प्रच्छरक्षो नङ्" ( अष्टा० ३ । ३ । ९० ) 'यज् नङ् ।' याचनीयानि बहूनि वस्तूनि यस्मिन् याच्ञ्यो यज्ञः "अर्शादिभ्योऽच्" ( अष्टा० ५ । २ । १२७ ) 'याच् नङ्' उपाधाह्रस्वत्वं चकारस्य जकारश्चेति यज्ञः । अथवा 'यजुरुन्नः—यज्ञः' यजुर्भिः—उन्नः, यजुर्मन्त्रैराहुतिप्रदानेन क्लिन्नः स्निग्धो भवति यस्मात् । "उन्दी-क्लेदने" ( रुधादि० ) "यजुष्—उन्नः"—'यज्—न' पूर्वोत्तरपदयोर्द्वौ द्वौ वर्णौ क्रमेणाद्यन्तभवौ लुप्येते । अथवा बहुकृष्णाजिनः—बहूनि कृष्णाजिनानि प्रयुज्यन्ते तस्माद् यज्ञः—अजिन—'अ—ज्—इ—न' एषां वर्णानां विपर्यासेन 'इ—अ—ज्—न' यज्ञः । इत्यौपमन्यव आचार्यो मन्यते तद्व्युत्पत्तिभेदात् । यजूंषि—नयन्ति—सम्पादयन्ति—एनम्, 'यजुष्—नी' डः' उभयस्य पूर्वपदस्य धातोश्च टेर्लोपः । यज् न् अ = यज्ञः ।

ऋत्विङ्नामान्युत्तराण्यष्टौ । ऋत्विक् कस्मादीरणः । ऋग्यष्टा भवतीति शाकपूणिः । ऋतुयाजी भवतीति वा ।

भा०—यज्ञे ऋत्विजो व्रियन्ते तस्माद् यज्ञनामभ्य उत्तराणि खल्वृत्विङ्-नामानि 'भारताः' आदीनि सन्त्यष्टौ । ऋत्विक्—ईरणः—ईरयिता स्तुतीनाम् । 'ऋत्विग् दधृक्....'' (अष्टा० ३ । २ । ५९) इति निपातनात् । ऋतौ व्रतानामी-रणः प्रेरयिता होतुम् । ऋग्भिर्यष्टा—निपातितः । ऋग्—यज् 'क्विन्' 'ऋग्—इज्' गकारस्य तकारः = ऋत्विक् । इति शाकपूणिराचार्यो मन्यते । ऋतुयाजी = ऋत्विक् स्पष्टम् ।

याच्ञाकर्माण उत्तरे धातवः सप्तदश ।

भा०—यज्ञे हि यथाधिकारं स्वस्वदक्षिणा याच्यते, तस्माद् यज्ञनामभ्य—उत्तरे याच्याव्यापारा धातवः 'ईमहे' प्रभृतयः सप्तदश सन्ति ।

दानकर्माण उत्तरे धातवो दश ।

भा०—याच्यातो दीयते तस्मात् तदुत्तरे 'दाति' प्रभृतयो दश धातवो दान-व्यापाराः सन्ति ।

अध्येषणाकर्माण उत्तरे धातवश्चत्वारः ।

भा०—अध्येषणा प्रेरणा । दानं समर्प्याध्येषणा नम्रप्रेरणा क्रियते तस्मात् तदुत्तरेभ्यः 'परिस्रव, पवस्व' प्रभृतयश्चत्वारोऽध्येषणाव्यापारा धातवः सन्ति ।

स्वपितिसस्तीति * द्वौ स्वपितिकर्माणौ ।

भा०—'स्वपिति, सस्ति' द्वौ स्वपितिव्यापारौ धातू स्तः । अध्येषणाधातुभ्य उत्तरौ । नम्रप्रेरणातः स्वापनं सम्यग्भवति ।

कूपनामान्युत्तराणि चतुर्दश । कूपः कस्मात् कुपानं भवति कुप्यते वा ।

भा०—सुप्तः कूपं गतः—इव भवति कूपमाश्रित्य सुप्यतेऽपि तस्मात् तन्ना-मभ्य उत्तराणि 'कूपः, कातुः' इति प्रभृतीनि चतुर्दश कूपनामानि सन्ति । कुत्सितं पानस्थानं न हि कर्मणः साधनमन्तरेण ततो जलपानं शक्यम् । 'डः' प्रत्ययः । "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) 'कु—पा—डः' अन्येषामपि—दृश्यते" ( अष्टा० ६ । ३ । १३७ ) इति दीर्घः । कुप धातो वा "कुप कोपे" ( दिवा० ) "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३ । १ । १३५ ) ।

स्तेननामान्युत्तराणि चतुर्दशैव । स्तेनः कस्मात् संस्त्या-नमस्मिन् पापकमिति नैरुक्ताः ।

भा०—कूपमाश्रित्य गुप्तास्तिष्ठति स्तेनाश्चौर्यार्थं तस्मात् कूपनामभ्य उत्तराणि 'तृपुः' प्रभृतीनि स्तेननामानि चतुर्दश सन्ति । स्तेनः संस्त्यानं संहतं पापकम-स्मिन् । "श्यास्त्याहृञविभ्य इनच्" ( उणादि० २ । ४७ ) स्त्येनः—स्तेनः, इति नैरुक्ताः ।

निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् । निर्णीतं कस्मात् निर्णिक्तं भवति ॥

भा०—निर्णीतान्तर्हितनामधेयानि स्तेननामभ्य उत्तराणि, यतः स्तेना भवन्ति ह्यन्तर्हितास्तस्मात् तदुत्तराणि 'निण्यम्' इत्यादीनि षट् । निर्णीतं न तु निर्णयार्थकं किन्तु निर्णिक्तं भवति 'निर्' उपसर्गपूर्वकात् "णिजिर् शौचपोषणयोः"

---

* 'स्वपिति सस्तीति' पाठेन न भवितव्यं स्वत एव तयोर्ग्रहणं भविष्यति पूर्ववत् ।

( जुहो० ) निर्णीतं निर्णिक्तं शुद्धं निर्लेपं बाह्यसम्पर्कदोषरहितं तेद्वान्तर्हितं गुप्तं भवति । क्त प्रत्यये निज्–धातोः 'नी' भावो यद्वा 'निर्णिक्तम्' इत्यर्थे प्रदर्शनं तदत्र णीञ् न प्रापणे किन्तु निज् धातोरर्थे वर्तते ॥

दूरनामान्युत्तराणि पञ्च । दूरं कस्माद् द्रुतं भवति दुरयं वा ॥

भा०—अन्तर्हितं परोक्षं भवति, दूरमपि परोक्षं भवति तस्मात् परोक्ष–प्रवृत्तिभ्योऽन्तर्हितनामभ्य उत्तराणि दूरनामानि 'आके' आदीनि पञ्च सन्ति । दूरं द्रुततरं पार्श्वतो गततरं परागतं भवति । "दु द्रु गतौ" ( भ्वादि० ) 'दु–रक्' प्रत्ययः ( उणा० २ । २० ) धातो र्बाहुलकात्, दीर्घश्चापि । अथवा 'दुरयम्' दुर्गमम्–दुःखेन गमनीयम् । 'दुर्–इण्–रक्' "दुरीणो लोपश्च–दीर्घश्च–रक्" ( उणा० २ । २० ) ।

पुराणनामान्युत्तराणि षट् ।
पुराणं कस्मात् पुरा नवं भवति ॥

भा०—दूरं देशतः पुराणं कालतः, उभयोरवर्तमानत्वसाम्याद् दूरनामभ्य उत्तराणि 'प्रत्नम्' आदीनि षट् पुराणनामानि । पुराणं पुरानवं पूर्वं नवमासीत् "णु स्तुतौ" ( अदादि० ) 'पुरा–नु–डः' "अन्येभ्योऽपिदृश्यते वा०" ( अष्टा० ३ । २ । १०१ ) पुराणम् ।

नव नामान्युत्तराणि षडेव । नवं कस्मादानीतं भवति ॥१९॥

भा०—पुराणसम्बन्धेन नवानि भवन्ति तस्मात् पुराणनामभ्य उत्तराणि 'नवम्, नूत्नम्' प्रभृतीनि नवनामानि षट् यथा पुराणनाम षट् । नवम्–आनी-तम्–अर्वाङ् नीतं सम्प्रति प्राप्तं भवति, न तु पूर्वतः प्राप्तं यत् तत् खलु नवं भवति–इति त्वर्थप्रदर्शनम् । यद्वा 'आ–नी–'डवः' प्रत्ययः । उपसर्गस्य लोपः । नवम् । यद्वा नेर्नुभावस्ततोऽप् प्रत्ययः ॥

द्विश उत्तराणि नामानि षड्विंशतिः ॥

भा०—एकस्यार्थस्यानेकानि नामानि–इति प्रकरण गतं तदनन्तरमत्रैकस्या-र्थस्य द्विशो द्वे द्वे कृत्वा युगलरूपेण नामानि खल्वनेकनामभ्य उत्तराणि 'प्रपित्वे–ऽभीके' षड्विंशतिः सन्ति । तत्र—

प्रपित्वेऽभीक इत्यासन्नस्य । प्रपित्वे प्राप्ते । अभीकेऽभ्यक्ते
"आपित्वे नः प्रपित्वे तूयमागहि" ( ऋ० ८ । ४ । ३ )
"अभीके चिदु लोककृत् ॥" ( ऋ० १० । १३३ । १ )
इत्यपि निगमौ भवतः ॥

भा०—'प्रपित्वे, अभीके' आसन्नस्य—समीपस्य नाम्नी भवतः। प्रपित्वे—प्राप्ते, अभीके—अभ्यक्ते—आभिमुख्येनाञ्चिते। आपिर्बन्धुस्तस्य भाव आपित्वं सप्तम्याम्—आपित्वे बन्धुत्वे। "आपित्वे नः प्रपित्वे...." इति।

समग्रमन्त्रस्तदर्थश्च—

> यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्।
> आपित्वे नः प्रपित्वे तूयमागहि कण्वेषु सु सचा पिब॥

यथा गौरो मृगस्तृष्यन् तृष्णां गच्छन् पिपासन्—इरिणं निर्जलं प्रदेशम् "इरिणमपार्णम्" (निरु० ९।८) अव—अवमान्य त्यक्त्वा पुनरपा कृतम्—अपा—अद्भिः "सुपां सुपो भवन्ति" इति भिस् स्थाने टा प्रत्ययः। यद्वा वचनव्यत्येन बहुवचनस्य स्थाने एकवचनम्। अद्भिः कृतं पूरितं जलाशयम्—एति प्राप्नोति, तथा हे इन्द्र! विशेश्वर्यसम्पन्न महानुभाव! त्वमापित्वे बन्धुत्वे प्राप्तेऽस्मान् शीघ्रमागच्छ, आगत्य च कण्वेषु मेधाविषु तैः सचा—सह सुपिब सुन्दरं सोमपानं कुरु॥ अथ "अभीके चिदु लोककृत्...." इति।

समग्रमन्त्रस्तदर्थश्च—

> प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत।
> अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता॥
> नभन्तामन्यकेषां ज्याका अधि धन्वसु॥

अस्मै—इन्द्रायेति—षष्ठ्यर्थे चतुर्थी, अस्येन्द्रस्य पुरोरथं रथस्य पुरस्तात् शूषं बलं सैन्यबलम् "शूषं बलनाम" (निघं० २।९) उ—अवश्यं प्रकृष्टभावेन सु सम्यक्—अर्चत प्रशंसत। यतः स इन्द्रो रथस्थो बलस्य प्रयोक्ता समत्सु संग्रामेषु—अभीके चित्—समीपे सङ्गे—साम्मुख्ये लोककृत्—स्वस्थानकृत्—अविचलितः स्थिरः सन् शत्रुहाऽस्ति सोऽस्माकं बोधयिता प्रेरयिता चास्ति। अन्येषां ज्याका धनुष्षु बद्धाः—नश्यन्ताम्॥

> दभ्रमर्भकमित्यल्पस्य। दभ्रं दभ्नोतेः सुदम्भं भवति। अर्भकमवहृतं भवति।
>
> "उपोप मे परा मृश मा मे दभ्राणि मन्यथाः।" (ऋ० १।१२६।७)
>
> "नमो महद्भ्यो नमो अर्भकेभ्यः।" (ऋ० १।२७।१३)
>
> इत्यपि निगमौ भवतः॥

भा०—'दभ्रम्, अर्भकम्' इति द्वे नाम्नी अल्पार्थे स्तः। दभ्रम् "दम्भु दम्भने" ( स्वादि० ) दम्भनं परिभवनं तुच्छीकरणं यत्रापेक्ष्यते "दभ्नोति वधकर्मा" ( निघ० २ । ९ ) ततः "स्फायित....दम्भि....शुभिभ्यो रक्" ( उणा० २ । १३ )। अर्भकम्–अवहृतम् नीचैर्नयनम्, तदपि स्वल्पं लघु भवति यतोऽल्पं हि नीचैर्नयति कश्चित्। "अर्भकपृथुकपाका वयसि" ( उणा० ५ । ५३ ) इति कन्प्रत्ययान्तो निपात्यते 'अर्भकः' शब्दः, निपातने चार्थानुरूपं निर्वचनं कल्पयितुमिष्यते, अतः 'अव' पूर्वात् "हृ प्रसह्यकरणे" ( जुहोत्यादि० ) ततः कन् प्रत्ययः, निपातनाद् रूपसिद्धिः, उपसर्गस्य 'अकारो गृहीतः, 'हृ' धातोश्च विपर्ययवर्णव्यापत्तिभ्याम् 'र्भ' भावः। दभ्रविषयको मन्त्रः "उपोपमे परामृश मे दभ्राणि मन्यथाः....." इति।

समग्रमन्त्रस्तदर्थश्च—

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका॥

हे वरयितव्य ! विवाहार्थिन् कुमार ! त्वं मे–मया सह दाम्पत्यार्थं परामर्शं कुरु, मे–ममाङ्गानि दभ्राण्यल्पानि न्यूनानि शरीरस्य सौष्ठवे च न्यूनानि न मन्यथाः। अथ गन्धारीणां गर्भधारिणीनां स्त्रीणाम्–इव तथा च सायणः "गन्धारीणां गर्भधारिणीनां स्त्रीणाम्" ( सायणः ) अहमपि रोमशा रोमहर्षगुणवती तथा–अविका गर्भस्य रक्षिकाऽस्मि॥

अर्भकविषयको मन्त्रः "नमो महद्भ्यो नमो अर्भकेभ्य....." इति।

समग्रमन्त्रस्तदर्थश्च—

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः॥

हे देवाः ! महद्भ्यो महागुणयुक्तेभ्यो नमः सत्कारोऽस्तु तथा–अर्भकेभ्योऽल्पगुणयुक्तेभ्यो नमः सत्कारोऽस्तु, युवभ्यो यौवनसम्पन्नेभ्यो नमः सत्कारोऽस्तु, तथा–आशिनेभ्यः–आप्तायुष्केभ्योऽतिवृद्धेभ्यो नमः सत्कारोऽस्तु। अथ च युष्मान् देवान् यजाम पूजयाम सर्वसाधनैर्यदि यथाशक्ति शक्नुम पूजयितुं तथा न कदाचिदपि ज्यायसः श्रेष्ठस्य जनस्य शंसं प्रशंसनम्–आवृक्षि–छिन्नं कुर्याम्॥

तिरः सत इति प्राप्तस्य। तिरस्तीर्णं भवति। सतः संसृतं भवति।

२१

"तिरश्चिदर्य्या परिवर्तिर्यातमदाभ्या" (ऋ० ५।७५।७)
"पात्रेव भिन्दन् सत एति रक्षसः" (ऋ० ७।१०४।२१)
इत्यपि निगमौ भवतः ।

भा०—'तिरः, सतः' इति द्वे नाम्नी प्राप्तस्य स्तः । तिरः खलु तीर्णम्, न तदुत्तीर्णमुपरिगतं न चावतीर्णं नीचैर्गतं, किन्तु समं सम्मुखं प्राप्तमेव । 'तॄ धातोः' "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) सतः—सम्यक् सृतं गतं प्राप्तम् । सतः संसृतः सर्वत्र सृतः—सृ धातोः 'अतच्' प्रत्ययः ( उणा० ३ । ११० ) बाहुलकाद्धिच, इति तिरः 'तिरश्चिदर्य्या'—इति ।

समग्रमन्त्रस्तदर्थश्च—

"अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्य्या परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥

हे सदा सत्यावश्विनौ ज्ञानवन्तावध्यापकोपदेशकौ ! युवामत्र सत्सङ्गे—आगच्छतम् । न कदाचिदस्माकं मङ्गलकामनातो वियुक्तौ भवतम् । हे अर्यौ स्वामिनौ विद्यास्वामिनौ—'अर्य्या' इति 'याच्' आदेशः । हे अदाभ्यौ—अहिंस्यौ युवां तिरश्चित् तीर्णाचित् प्राप्ताऽपि माध्वी मधुभवा मधुमयी वर्तिः—पद्धतिरस्ति तां पर्यायातं मम निवेदनं च श्रृणुतम् ॥

"पात्रेव भिन्दन् सतः····" इति ।

समग्रमन्त्रस्तदर्थश्च—

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥

इन्द्रो यातूनां हिंसकानाम् "यातयति वधकर्मा" ( निघं० २ । १९ ) पराशातयिता नाशयिताऽस्ति, आविवासतां समन्तात्—यज्ञेन परिचरतां यजमानानां ये सन्ति हविर्मथिनो हविषां नाशकास्तेषां स पराशातयिता । शक्रः—इन्द्रस्तान् वनं वृक्षान् प्रति परशुरिव छिनत्ति यद्वा स रक्षसो दुष्टान् सतः प्राप्तान् पात्राणीवाभिन्दन् भिनत्ति ॥

त्वो नेम इत्यर्द्धस्य । त्वोऽपततः । नेमोऽपनीतः । अर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवति । ऋध्नोतेर्वा स्यादृद्धतमो विभागः ॥
"पीयति त्वो अनु त्वो गृणाति" ( ऋ० १।१४७।२ )
"नेमे देवा नेमेऽसुराः ।" ( इति ब्राह्मणम् ) इत्यपि निगमौ भवतः ॥

भा०—"त्वः" "नेमः" समुदायादर्द्धस्य नाम भवति। 'त्वः–अपततः, अपेत्य पृथग्गत्वा–पृथग्भूय ततः प्रसृतः । 'अप' उपसर्गात्, "तन् धातोः 'ड्वप्' प्रत्ययः उपसर्गलोपश्च । नेमः–अपनीतः–समूहात् पृथक्–नीतो गृहीतः । 'नी मन्'–"अर्ति····नीभ्यो मन्" ( उणा० १ । १४० ) "पीयति त्वो" इति । समग्रमन्त्रस्तदर्थश्च—

बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥

हे यविष्ठ ! युवतम ! सदा युवन् ! गुणैरजर ! स्वधावन् स्वगुणशक्तिसम्पन्न ! वा ज्ञानान्नवन् ! अग्ने–आचार्य देव ! यद्वा परमात्मन् ! मे–मह्यम्–अस्य मंहिष्ठस्य प्रशस्तस्य वचनस्य–वेदस्य पूर्णभृतस्य तत्त्वं बोधय, अस्माकमध्येतॄणां श्रोतॄणां मध्ये त्वः–अर्धोभागस्त्वत्तः प्राप्तं ज्ञानं गुणं वा पीयति–नाशयति–विस्मरति । त्वः–अर्धोभागो गृणाति–स्वीकरोति–स्वात्मनि धारयति । त्वमिदं जानासि हि तस्मात्पात्रभूतोऽहं वन्दारुः प्रशंसको वन्दनशीलः स्तोता ते तन्वमात्मानं स्वरूपं "आत्मा वै तनूः" ( शत० ६ । ७ । २ । ६ ) । वन्दे–स्तौमि ।

"नेमे देवा नेमे असुराः" 'नेमे–अर्द्धा देवाः, नेमे अर्द्धा असुराः ।

ऋक्षाः स्तृभिरिति नक्षत्राणाम् । नक्षत्राणि नक्षतेर्गतिकर्मणः । नेमानि क्षत्राणीति च ब्राह्मणम् । ऋक्षा उदीर्णानीव ख्यायन्ते । स्तृभिस्तीर्णानीव ख्यायन्ते ।

"अमी य ऋक्षा निहितास उच्चा" ( ऋ० १ । २४ । १० )
"पश्यन्तो द्यामिव स्तृभिः" ( ऋ० ४ । ७ । ३ ) इत्यपि निगमौ भवतः ॥

भा०—'ऋक्षाः, स्तृभिः' नक्षत्राणां नामनी स्तः । नक्षति गतिकर्मा" (निघं० २ । १४ ) नक्ष धातो र्गत्यर्थात् 'नक्षत्राणि' इति शब्दः सिद्ध्यति । "अमिनक्षियजिवधिपतिभ्योऽत्रन्" ( उणा० ३ । १०५ ) 'नक्ष–अत्रन्' नक्षत्रम् । ब्राह्मणे तु–इमानि क्षत्राणि न तस्मात् खलु नक्षत्राणि "नभ्राण्····नक्षत्रनक्रनाकेषु प्रकृत्या" ( अष्टा० ३ । ७३ ) नञ्समासे नञः प्रकृतिभावः । "क्षत्रं धननाम" ( निघं० २ । १० ) धनं सुवर्णं हिरण्यम् । इमानि धनानि सुवर्णनीव भासमानानि दृश्यन्ते न तु धनानि सुवर्णानि नक्षत्राणि । ऋक्षाः—उदीर्णानि–उत्क्षिप्तानि–उत्प्रेरितानि यथास्युस्तथा दृश्यन्ते । "स्नुव्रश्चिकृत्यृषिभ्यः कित्" (उणा०

३ । ६६ ) । उदीर्णानि—इव—अर्थप्रदर्शनम् । "ऋष् स—ऋक्षम् । "स्तृञ् आच्छादने" ( क्र्यादि० ) 'स्तृ क्विप्' तुगभावः, 'स्तृ' तृतीयाबहुवचने 'स्तृभिः । आकाशे स्तीर्णानि प्रसारितानीव भासन्ते । "अमी य ऋक्षा····इति । समग्रमन्त्रस्तदर्थश्च—

> अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
> अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥

अमी ये—ऋक्षा उच्चा निहितासः—अमूनि तानि यानि नक्षत्राणि—उच्चानि निष्ठितानि रात्रौ दृश्यन्ते दिने कुत्रापि गतानि । वरुणस्य—एषां वरयितुरावरयितुः परमात्मनो व्रतानि कर्माणि नियमनानि—अदभ्यानि । चन्द्रमा अपि प्रकाशमानः सन् रात्रिं प्राप्नोति ॥

"पश्यन्तो द्यामिव स्तृभिः" इति ।

समग्रमन्त्रस्तदर्थश्च—

> 'ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।
> विश्वेषामध्वराणां हस्कर्तारं दमे दमे ॥

दमे दमे गृहे गृहे प्रत्येकस्योपासकस्य हृदयप्रदेशे "दमे—इति गृहनाम" ( निघं० ३ । ४ ) । सर्वेषामध्वराणां विविधानामध्यात्मयज्ञानां हस्कर्तारं—हरस्कर्तारं प्रकाशकं ज्वलत्कर्तारम् "हरस्—ज्वलतो नाम" ( निघं० १ । १७ ) रेफस्य लोपश्छान्दसः । ऋतावानं सत्यस्य सम्भक्तारं ज्ञानस्य सम्भक्तारं वा विविधरूपेण चेतयितारं स्तृभिः प्रभरितं द्युलोकमिव प्रकाशगुणवन्तं ध्यानिनः पश्यन्तस्तृप्तिमाप्नुवन्ति ॥

> वम्रीभिरुपजिह्विका इति सीमिकानाम् । वम्र्यो वमनात् सीमिका स्यमनात् । उपजिह्विका उपजिघ्र्यः ।
> "वम्रीभिः पुत्रमग्रुवो अदानम् ॥" (ऋ० ४ । १९ । ९)
> "यदत्त्युपजिह्विका यद् वम्रो अतिसर्पति ॥" ( ऋ० ८ । १०२ । २१ )
> इत्यपि निगमौ भवतः ॥

भा०—'वम्रीभिः, उपजिह्विकाः' इति द्वे नाम्नी सीमिकानां मुखतः क्षाररसंस्रावयन्तीनां रक्तपिपीलिकानाम् । याः क्षारमयं रसं मुखतो वमन्ति ताः सीमिकाः सन्ति या लोके 'दीमका' इति नाम्ना प्रसिद्धाः सन्ति 'वम्र्यस्तु' वमनात् "वम उद्गिरणे" ( भ्वादि० ) ततो धातुबाहुलकात् ( उणा० २ । २९ ) रक्—वम्रः,

स्त्रीलिङ्गे ङीप् । 'वम्रीभिः' तृतीयाबहुवचने 'वम्रीभिः' । सीमिका स्यमनात् "स्यमति गतिकर्मा" ( निघं० २ । १४ ) "स्यमेः सम्प्रसारणं च–किकन्" (उणा० २ । ४४ ) 'उपजिह्विकाः–उपजिह्व्यः, उपजिघ्रन्ति विशेषेण ताः । वर्ण-व्यापस्या ताः–उपजिह्विका । "वम्रीभिः...."इति ।

समग्रमन्त्रस्तदर्थश्च—

वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ ।

व्यन्धो अख्यदहिमाददानो निर्भूदुखच्छित्समरन्त पर्व ॥

वम्रीभिः सीमिकाभिः–अग्रुवोऽग्रवृक्षस्य पुत्रं खण्डमदानमदनीयं यद् भवति तत् खलु हरिवन्–इन्द्रो विद्युदग्निर्वाऽऽजभर्थ गृह्णीयात् । यदा–अन्धो गन्धो गकारलोपश्छान्दसः । अख्यदुदस्तिष्ठदुतिष्ठति तथा–अहिं मेघं स्वान्तरे गृह्णान् वाऽऽददान उखच्छिद् दुर्भिक्षस्य रोगमूलस्य वोच्छेदको निरभवत् नियतः सिद्धो भवति तदा पर्व भूपर्व यज्ञपर्व सुखबन्धनं सम्भरति पोषयति धारयति ॥ "यदत्त्युपजिह्विका....." इति ।

समग्रमन्त्रस्तदर्थश्च—

यदत्त्युपजिह्विका यद् वम्रो अति सर्पति । सर्वं तदस्तु ते घृतम् ॥

हे अग्ने ! उपजिह्विका रक्तपिपीलिका क्षाररसस्राविका यत्काष्ठं भक्षयति भक्षयितुं प्रवर्तते शक्नोति वा सर्वं तत्काष्ठं घृतं दीप्तिकरमिन्धनरूपं तवास्तु तद्भिन्नं तु शालादि निर्माणकर्मणि ह्युपयोक्तव्यम् ॥

उर्दरं कृदरमित्यावपनस्य । उर्दरमुद्दीर्णं भवति । ऊर्जे दीर्णं वा । "तमूर्दरं न पृणता यवेन" ( ऋ० २ । १४ । ११ ) इत्यपि निगमो भवति । कृदरं कृतदरं भवति "समिद्धो अञ्जन् कृदरं मतीनाम् ।" ( यजु० २९ । १ ) इत्यपि निगमो भवति ॥ २० ॥

भा०—'उर्दरं कृदरम्' इत्येते द्वे आवपनस्य शस्यागारस्य कुशूलस्य नामनी भवतः । उर्दरम्–उद्दीर्णम्–ऊर्ध्वंदीर्णं भवति । उदुपसर्गपूर्वात् "दॄ विदारणे" ( क्र्यादि० ) धातोः "ऋदोरप्" ( अष्टा० ३ । ३ । ५७ ) उपसर्गदकारस्य रेफ-श्छान्दसः । अथवा 'ऊर्जेऽन्नाय तत्स्थापनाय दीर्णं भवति । "ऊर्जि दृणातेरलचौ" ( उणा० ५ । ४० ) इत्यनेन 'अलू' प्रत्ययः । उर्दरम् । उदाहरणम्–"तमूर्दरं न पृणता यवेन....."

समग्रमन्त्रस्तदर्थश्च—

अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।
तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥

हे स्वराष्ट्रमहिंस्यं कर्तुमिच्छन्तो यतमाना जनाः ! यः खलु पार्थिवस्य—पृथिवीपृष्ठस्य धनस्य क्षम्यस्य क्षमायां पृथिव्यां भवस्य—पृथिव्याः—अन्तर्गतस्य च धनस्य राजा स्वामी खल्वस्ति तं यवेनोर्दरं न शस्येनान्नेनागारमिव पृणत पूरयत तथाभूतं कर्म युष्माकमस्तु ॥

'कूदरं कृतदरम्, कृतदरं छिद्रंमुखं यस्यान्नप्रवेशाय तत् कुशूलम् । उदाहरणम्—"समिद्धो अञ्जन् कृदरं मतीनां ·· " ।

समग्रमन्त्रस्तदर्थश्च—

समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः ।
वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥

हे अग्ने ! मधुरं घृतं सेवमानो मतीनां मनुष्याणां कृदरं कुशूलं शस्यागारं समञ्जन् सम्पादयन्—सम्पादनहेतोः समिद्धो दीप्तो भव, पुनश्च जातवेदो जातं वेदयितः प्रापयितः ! त्वं वाजी—अश्वो भूत्वा वाजिनं बलवन्तं सुगन्धं धूम्रं हव्यं वहन् प्रियं सधस्थं मेघमण्डलं वक्षि—वहसि तं सम्पादयितुम् ॥

रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् । "आ त्वा रम्भं न जिव्रयो ररम्भा" ( ऋ० ८ । ४५ । २० ) इत्यपि निगमो भवति । आरभामहे त्वा जीर्णा इव दण्डम् । पिनाकं प्रतिपिनष्टयनेन । "अवततधन्वा पिनाकहस्तः कृत्तिवासाः" (तै० सं० १ । ८ । ६ । २) इत्यपि निगमो भवति ॥

भा०—'रम्भः, पिनाकम्' इति दण्डस्य नामनी भवतः । रम्भः—आरभन्ते—आश्रयन्त्येनम् । अर्थस्पष्टीकरणाय 'आ' उपसर्ग आश्रितः । "रभ राभस्ये" (भ्वादि०) कर्मणि घञ् "रभेरशब्लिटोः" ( अष्टा० ७ । १ । ६३ ) इत्यनेन नुम् । उदाहरणम्—"आ त्वा रम्भं न····" ।

समग्रमन्त्रस्तदर्थश्च—

आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते । उश्मसि त्वा सधस्थ आ ॥

हे शवसस्पते बलस्य स्वामिन्निन्द्र ! त्वा वयं जिव्रयो जीर्णा रम्भं न—दण्डमिवा-

अथामहेऽथ च त्वां सधस्थे सङ्ग्रामस्थाने समन्तात् कामयामहे ॥ पिनाकोऽपि दण्डः प्रतिपिनष्टि ताडयत्यनेन "पिनाकादयश्च" (उणा० ४ । १५) इति पिनाकशब्दो निपात्यते तत्र "पिष्लृ सञ्चूर्णे" ( रुधा० ) तत आकः प्रत्ययो डिद्वत्कल्पनीयो नुम् च टिलोपे सति "छन्दस्युभयथा" ( अष्टा० ३ । ४ । ११७ ) सार्वधातुकं मत्वा । 'पिन् आकः'—पिनाकः । उदाहरणम्—"अवततधन्वा पिनाकहस्तः…." ।

समग्रमन्त्रस्तदर्थश्च—

एष ते॑ रुद्र भा॒गस्तं जु॑षस्व॒ तेना॑व॒सेन॑ प॒रो मूज॑व॒तोऽती॑हि ।

अव॑ततधन्वा॒ पिना॑कहस्तः॒ कृत्ति॑वासाः ॥

हे शत्रूणां रोदयितः ! राजन् ! एष भागस्तवास्ति तं सेवस्व तेनास्माकं रक्षणसाधनेन मूजवतः पर्वतानतिक्राम—अपिवारय शत्रून् । अवततधन्वा—अवतानितधनुष्कः पिनाकहस्तो दण्डहस्तः कृत्तिवासाः—चर्मवासाः—चर्माङ्गावरणकः सन् ॥

मेना ग्ना इति स्त्रीणाम् । स्त्रियः स्त्यायतेरपत्रपणकर्मणः । मेना मानयन्त्येनाः । ग्ना गच्छन्त्येनाः ।
"अमे॒नांश्चि॒ज्जनि॑वतश्चकर्थ" ( ऋ० ५ । ३१ । २ )
"ग्नास्त्वा॑ कृन्तन्न॒पसो॒ऽतन्व॒त" (मै० सं० १ । ९ । ४)
इत्यपि निगमौ भवतः ।

भा०—'मेना, ग्ना' इति स्त्रीणां नामनी भवतः । 'स्त्रियः' शब्दः "स्त्यै शब्दसंघातयोः" ( भ्वादि० ) यास्कवचनात् "अपत्रपणार्थे—लज्जार्थे" गृह्यते । ततः 'ड्रट्' प्रत्ययः "स्त्यायतेर्ड्रट्" ( उणा० ४ । १६६ ) 'मेना मानयन्ति—हृदयङ्गमयन्ति पुरुषा एताः—मान्याः "मान पूजायाम्" ( चुरा० ) स्त्रीलिङ्गे "गुरोश्च हलः" ( अष्टा० ३ । ३ । १०३ ) 'अ' पुनष्टाप् । उपधाया एकारादेशः । यद्वा "बहुलमन्यत्रापि—इनच्" ( उणा० २ । ५० ) 'मान' इत्यस्य नकारलोपो बहुलात्, तदा मेनाः 'ग्नाः' गच्छन्ति खल्वेताः प्रति सन्तानार्थं पुरुषाः—गमधातो र्बाहुलकात् ( उणा० ३ । २ ) 'नक्' प्रत्ययोऽस्त्यपि मकारलोपश्छान्दसः । अमेनांश्चिज्जनि…. इति ।

समग्रमन्त्रस्तदर्थश्च—

"आ प्र द्र॑व हरिवो॒ मा वि वे॑नः॒ पिश॑ङ्गराते अ॒भि नः॑ सचस्व ।

न॒हि त्वदि॑न्द्र॒ वस्यो॑ अ॒न्यदस्त्य॑मे॒नांश्चि॒ज्जनि॑वतश्चकर्थ ॥

हे हरिवन्! प्रशस्ताश्ववन्! इन्द्र! राजन्! त्वमस्मान् प्रति समन्तात्प्राप्तो भव। हे पिशङ्गराते! पीतवर्णसुवर्णादिधनस्य दातः। अस्मत्तो मा विवेनः, न कामनारहितो भव—अस्माकं हितायास्मान् कामयमानस्तिष्ठ तथाऽस्मान् सेवस्वानुगृहाण, त्वत्तो भिन्नो वस्यो वसीयान् वासयिता नास्ति। अतः स्वराज्ये—अमेनान् स्त्रीरहितान् पत्नीवतः कुरु पत्न्या अभावे व्यभिचारं न कुर्युर्वेश्यागामिनो न भवेयुस्तस्माद्राज्यव्यवस्थास्तेषां विवाहं कारय, व्यभिचारात्तान्निवारय ; गुरुकुलवासिनो वनस्थान् परिव्राजकान् विहाय नागरिकान् विवाहय ॥ 'प्रास्त्वा' इति। समग्रमन्त्रस्तदर्थश्च—

प्रास्त्वा कृन्तन्नपसोऽतन्वत वयिभ्योऽवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय मयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥

हे वस्त्र! स्त्रियस्त्वां कृन्तन्—कर्तितवत्यो वेष्टितवत्यः सूत्रितवत्योऽपसोऽतन्वत्, "अपस् कर्म नाम" ( निघं० २। १ ) तद्वत्यः कर्मवत्यो मतुपो लोपः, कर्मवत्यः कर्मकराः स्त्रियस्त्वामतन्वतस्तानितवत्यो वयिभ्योऽवयन्—उतवत्यो स्तव वयनं कृतवत्यः। हे दक्षिणे देवि! वस्त्रदक्षिणे वासो वस्त्रं यज्ञोपवीतं वा। त्वां वरुणो वरयिता बृहस्पतये—बृहती वाक् वेदवाक् तत्पतिराचार्यः प्रथमार्थे चतुर्थी व्यत्ययेन त्वां वयतु तत्कोपीनबन्धनाय तेनाहममृतत्वमशीयाश्नुयां प्राप्नुयां तस्मात्। दात्रे वस्तुनो दात्रे मयः सुखं भूयात्। मह्यं प्रतिग्रहितुर्मयः सुखं भूयात्।

शेपो वैतस इति पुंस्प्रजननस्य। शेपः शपतेः स्पृशतिकर्मणः। वैतसो वितस्तं भवति।
"यस्यामुशन्तः प्रहराम शेपम्" ( ऋ० १०।८५।३७ )
"त्रिः स्म माह्नः श्नथयो वैतसेन" ( ऋ० १०।९५।५ )
इत्यपि निगमौ भवतः॥

भा०—'शेपः, वैतसः' इति पुरुषजननेन्द्रियस्य नामनी स्तः। 'शेपः' "शप स्पर्शार्थः" यास्कस्य विधानात् 'शप्—असुन् शेपस् शेपः। यद्वा "शेपतेः" इति स्यात् तल्लेखकप्रमादात् 'शपतेः' जातम्। अन्यत्र "शिपिविष्टः—शेप इव विष्टः" शिप धातुः प्रतिभाति। शेपः स्पर्शाकांक्षी। पुत्रं कामयमानाः—वयं यस्यां योनौ शेपमुपस्थेन्द्रियं प्रक्षिपामः। वैतसः—वितस्तं—वितस्तं क्षीणभावो विगतो यस्य स वितसः। वितस एव वैतसः स्वार्थो 'वितस् क्विप् भूते वितस् स्वार्थेऽण् = वैतसः। मन्त्रस्याश्लीलविषयत्वात्तदर्थो न क्रियते।

अयैनेत्युपदेशस्य ।
"अया ते अग्ने समिधा विधेम" ( ऋ० ४ । ४ । १५ )
इति स्त्रियाः ।
"एना वो अग्निम्" ( ऋ० ७।१६।१ ) इति नपुंसकस्य ।
"एना पत्या तन्वं संसृजस्व" ( ऋ० १० । ८५ । २७ )
इति पुंसः ।

भा०—'अया, एना' इति नामनी उपदेशस्य—समीपं वर्ण्यमानस्य—उपस्थित-कथनस्य भवतः । तत्र 'अग्ने अया—अनया समिधा तुभ्यं परिचरेम । 'अया' स्त्रीलिङ्गे 'य' लोपश्छान्दसः । एना—एनेन—एतेन नमसा वोऽग्निमाहुवे । इति नपुंसकस्य । एना—एनेन—पत्या तन्वं संयुक्तं कुरु । इति पुंलिङ्गस्य ।

अया ते····इति समग्रमन्त्रस्तदर्थश्च—

"अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥"

हे मित्रमह ! मित्रैर्महनीय—पूजनीय ! अग्ने परमात्मन् ! यद्वा राजन् ! ते तुभ्यम्, अया—अनया समिधा सन्दीप्तया स्तुत्या नीत्या वा परिचरेम । इदं शस्यमानं स्तूयमानं स्तोमं स्तुतिवचनं प्रतिगृभाय प्रतिगृहाण स्वीकुरु, अशसः—अशंसकान्—अस्तोतॄन् रक्षसो दुष्टान् दह भस्मीकुरु, द्रुहो द्रोहं कुर्वतोऽवद्यात् निन्दकाच्चास्मान् पाहि—रक्ष ॥

"एना वो····इति समग्रमन्त्रस्तदर्थश्च—

"एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥"

हे अग्ने ! यद्वा परमात्मन् ! वस्त्वामूर्जो बलस्य नपातं पुत्रं न पातयितारं वा प्रियं चेतिष्ठमतिशयेन चेतयमानं चेतयितारं वा स्वध्वरं कल्याणयज्ञं कल्याणकरयज्ञसाधकं विश्वस्य प्रेरकममृतमनश्वराङ्गं नित्यममरमग्निम् । एना—एनेन नमसाऽन्नेन हविषा नमस्कारेण वा—आहुवे—आददे ।

"एना पत्या····इति समग्रमन्त्रस्तदर्थश्च—

"इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं संसृजस्वाधा जिव्री विदथमा वदाथः ॥"

हे वधू ! इह पतिकुले प्रजया सन्तत्या ते तव प्रियं सुखं समृध्यतां समृद्धं भवतु, अथास्मिन् गृहे गार्हपत्याय—अग्नये गृहपतिधर्माय त्वं जागृता भव, एना—एनेन पत्या तन्वं स्वकीयं देहं संसृज संयोजय, अथानन्तरं जिव्री युवां

जीर्णामवस्थां गतौ "जीर्यतेः क्रिन् रश्च वः" ( उणा० ५ । ४९ ) परस्परं विदथं यज्ञं श्रेष्ठकर्म सुवचनं परमात्मस्तुतिं च वदथः ॥

'सिषक्तु, सचते' इति सेवमानस्य ।
"स नः सिषक्तु यस्तुरः" ( ऋ० १ । १८ । २ ) स नः सेवतां यस्तुरः ।
"सचस्वा नः स्वस्तये" ( ऋ० १ । १ । ९ ) सेवस्व नः स्वस्तये । स्वस्तीत्यविनाशि नाम । अस्तिरभिपूजितः सु अस्तीति ॥

भा०—'सिषक्तु, सचते' इति द्वे आख्याते सेवमानस्य कर्तरि । स्वस्तये 'स्वस्ति'–अविनाशि नाम, 'अस्ति' वर्तमानसत्तार्थेऽभिपूजितार्थे । सु–अस्तिमान् वर्तमानकालादन्यत्रापि सत्तावान् । सर्वदा वर्तमानत्वं स्वस्ति–अविनाशि नाम ॥

'स नः सिषक्तु यस्तुरः····" इति समग्रमन्त्रस्तदर्थश्च—

यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्धनः ।
स नः सिषक्तु यस्तुरः ॥

हे ब्रह्मणस्पते ! विद्याद्यनन्तधनस्य स्वामिन् ! यो भवान् विद्याद्यनन्तधनवान् रोगाणां हन्ता वसूनां वस्तूनां वेत्ता शरीरे पुष्टिं वर्धयति तथाभूतो भवान् यश्च शीघ्रकारी नोऽस्मान् सेवताम्–अनुगृह्णातु ॥

'सचस्वा नः स्वस्तये" इति । समग्रमन्त्रस्तदर्थश्च—

स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥

हे ज्ञानप्रकाशस्वरूप परमात्मन् ! स त्वं सन्तानाय पितेव सूपायनः सूपगमनो भव तथाऽविनाशित्वाय कल्याणायास्मान् सेवस्वाङ्गीकुरु ॥

भ्यसते रेजत इति भयवेपनयोः ।
"यस्य शुष्माद् रोदसी अभ्यसेताम्" (ऋ० २।१२।१)
"रेजते अग्ने पृथिवी मखेभ्यः ॥" (ऋ० ६ । ६६ । ९ )
इत्यपि निगमौ भवतः ॥

भा०—'भ्यसते, रेजते' इति भयवेपनयोरर्थयोराख्याते पदे द्वे भवतः । ते चाख्याततन्त्रे, न तु रूपतन्त्रे । तथाकृत्वा ह्युदाहरणं यास्केन दीयते 'यस्य शुष्माद् रोदसी अभ्यसेताम्'–यस्येन्द्रस्य शुष्माद्–बलाद् द्यावापृथिव्यौ–अभ्यसेताम्–बिभीतः कम्पेते वा । समग्रमन्त्रस्तु यास्केनाग्रे दैवतकाण्डे–इन्द्रविषये व्याख्यास्यते ( निरु० १० । १० ) । तत्रास्यार्थो द्रष्टव्यः ।

"रेजते अग्ने पृथिवी मखेभ्यः....." इति । समग्रमन्त्रस्तदर्थश्च—

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥

हे अग्ने ! अग्रणायक राजन् ! ये स्वबलेन सहांसि—शत्रुबलानि सहन्तेऽभिभवन्ति । येभ्यो यज्ञवद्भ्यः सैनिकेभ्यो गच्छद्भ्यः पृथिवी बिभेति कम्पते वा, तेषां मरुतां समूहाय मारुताय स्वतवसे—स्वबलयुक्ताय राजबलसम्पन्नाय शीघ्रकारिणे चित्रमद्भुतं जयघोषं गृणते—उच्चारयतेऽर्कमन्नं यूयं प्रजाजनाः ! प्रभरध्वं प्रापयत मन्त्रिभिः सह ।

द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः । तयोरेषा भवति ॥ २१ ॥

"कतरा पूर्वा कतरा परायोः कथा जाते कवयः को वि वेद । विश्वंत्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥" ( ऋ० १ । १८५ । १ )

कतरा पूर्वा कतरापरा । एनयोः कथं जाते कवयः क एने विजानाति । सर्वमात्मना बिभृतो यद्धैनयोः कर्म विवर्तेते चैनयोरहनी अहोरात्रे चक्रियेव चक्रयुक्ते इवेति द्यावापृथिव्योर्महिमानमाचष्ट आचष्टे ॥ २२ ॥

भा०—द्विशोनाम्नामेकार्थप्रसङ्गादुत्तराणि तद्वद् द्व्यर्थकानि स्वधेप्रभृतीनि द्यावापृथिवीनामधेयानि चतुर्विंशतिः सन्ति । तयोरर्थयोरेषा खल्वृक् सन्दिग्धा यत्र स्पष्टं तयोर्नाम न विद्यते, परन्तु तौ द्यावापृथिव्यौ स्त एव, लिङ्गमत्र तयोर्विशेषणं नाम चास्यस्य सूक्तस्य द्वितीयमन्त्रतो लक्ष्यते "द्यावा रक्षतं पृथिवी नो अभ्वात्" ( २ ) ।

'कतरा पूर्वा....' इति मन्त्रस्यार्थः—

अयोरेनयोरेतयोर्द्यावापृथिव्योः कतरा पूर्वा—पूर्वोत्पन्ना कतरा—अपरा पश्चादुत्पन्ना कथा—कथं च जाते द्वे एते, हे कवयो विद्वांसः ! एने एते द्वे को विजानाति । आत्मना स्वाधारेण विश्वं जगद् बिभृतो धारयतः, अनयोः कर्मेदं यत्—अहनी—अहोरात्रे चक्रिया—इव चक्रयुक्ते इव विवर्तेते पर्यायेण वर्तेते ॥

इति तृतीयाध्यायस्य चतुर्थः पादः ।

तृतीयोऽध्यायश्च समाप्तः ।

स्वामिब्रह्ममुनिकृते निरुक्तसम्मर्शे निरुक्तभाष्ये

# अथ नैगमं काण्डम्

## चतुर्थोऽध्यायः

### तत्र

### प्रथमः पादः

---

एकार्थमनेकशब्दमित्येतदुक्तम् । अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामः । अनवगतसंस्कारांश्च निगमान् । तदैकपदिकमित्याचक्षते ॥ १ ॥

भा०—एकार्थम्—अनेकशब्दम् । एकार्थम्—इति विशेषणम्, अनेकशब्दम्—इति विशेष्यम् । अनेके शब्दाः—अनेकानि पदानि यस्मिन् प्रकरणे काण्डे वा गणशस्तत्खल्वनेकशब्दं तच्चैकार्थम्—एकोऽर्थो यस्मिन्—अनेकशब्दे प्रकरणे काण्डे वा गणशस्तत्—एकार्थम् । 'एकार्थानेकशब्दम्' इति पाठः शोभनः । एकार्था अनेकशब्दा यस्मिन् प्रकरणे काण्डे वा गणशः । "गौः" 'ग्मा' 'ज्मा' एकविंशतिर्नामशब्दाः, 'पृथिवी' इत्येकार्थकाः । "भ्राजते, भ्राशते, भ्राश्यति····" इत्येकादशाख्यातशब्दाः । ज्वलतिः—इत्येकार्थकाः । इत्येवमादिः । तदेतत्—एकार्थानेकशब्दं प्रकरणं नैघण्टुकं काण्डमुक्तम् । दैवतकाण्डात्—'पूर्वं नैघण्टुकानि नैगमानि निर्वक्ष्यान्यासन्', तत्र प्रथमं नैघण्टुकं काण्डं तूक्तम् । अथानन्तरं यान्यनेकार्थानि एकशब्दानि,—यानि खल्वनेकार्थानि—एकशब्दानि—एकपदानि—एकैकपदानि 'जहा', इत्येवादीनि तान्यतोऽनुक्रमिष्यामो वर्णयिष्यामः । अनवगतसंस्कारान् प्रत्यक्षतो धातुप्रत्ययलक्षणतो व्याकरणतो वाऽज्ञातान् निगमान् वेदशब्दांश्चापि वर्णयिष्यामोऽस्मिमे प्रकरणे काण्डे वा, तस्मात् तन्नैगमं काण्डं खल्वैकपदिकम्—काण्डं कथयन्ति नैरुक्ता आचार्याः । अत्र नैगमकाण्डे खलु—

तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि ।
निगमो निर्णयश्चेति व्याख्येयं निगमे पदे ॥

पर्यायशब्देन स्वरूपदर्शनं द्वयोः खलु प्रसक्तस्य पदस्य पर्यायस्य च व्युत्पत्तिश्च, निगमः—वेदशब्दस्तद्विषयको निर्णयश्चेति व्याख्या कार्या निगमपदे तत्र—

जहा ॥ १ ॥

जहा जघानेत्यर्थः—

"को नु मर्या अमिथितः सखा सखायमब्रवीत् ।
जहा को अस्मदीषते ॥" ( ऋ० ८ । ४५ । ३७ )

मर्या इति मनुष्यनाम । मर्यादाभिधानं वा स्यात् । मर्यादा मर्यैरादीयते । मर्यादामर्यादिनोर्विभागः । मेथतिराक्रोशकर्मा । अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते ॥ २ ॥

भा०—'जहा' इति—आख्यातपदं तच्चानवगतसंस्कारम्, जघान—इत्यवगमः । "हन् हिंसागत्योः" ( अदादि० ) हकारस्य कुत्वाभावो नकारलोपश्छान्दसः । 'जहा' हन् धातोः प्रयोगोऽत्राऽतो मन्त्रतः पूर्वमन्त्रः प्रमाणम्, "मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ॥" ( ऋ० ८ । ४५ । ३४ ) उच्यते ह्यस्मिन् मन्त्रे यद् इन्द्र ! अस्मान्—एकस्मिन् पापे मा वधीर्हन्याः, द्वयोः पापयोरपि त्रिषु पापेषु मा वधी हंन्याः, शूर ! त्रिभ्योऽधिकेषु पापेष्वपि मा वधीर्हन्याः । 'मा वधीः' इति प्रार्थना, एतत्प्रार्थनानन्तरं हीन्द्रस्य वचनं वधस्य घातस्य विषये घातभयनिवारणाय—

मन्त्रार्थः—

यत्—हे मर्याः ! जनाः ! 'आश्चर्यपूर्वके प्रश्ने नु निपातः' कः खलु ? अमिथितः—अनाक्रोशितः—मनसा वाचा वा न पीडितः सखा सखायमपापकं पापरहितं जहा जघान । न खलु कश्चनैवं भवितुमर्हति—अर्थाञ्चाहमिन्द्रो निष्पापं हन्मि, पापस्य कर्तारं तु हन्मि हि निष्पापं न । को हि निष्पापः किलास्मत्—ईषते—भीतः सन् परेषते—पलायते धावति न कोऽपि निष्पापोऽस्मत्तो मिथ्या भयं कर्तुं योग्यस्तस्माद् यूयमपि भयं न कुरुत, नैतादृशीं प्रार्थनां कुरुत । 'मर्याः—मनुष्याः; मर्यादा वा मर्यैरादीयते, 'मर्य—आ दा' धातोर्लोपश्छान्दसः 'पुनः सु स्थाने जस्—इत्यपि छान्दसः । 'मर्याः' मर्यादा । मर्यादापक्षे 'को नु'—का उ नु' का तु मर्यादा विशेषणम् । का हि नु मर्या मर्यादाऽस्ति मनसा वाचा वाऽपीडितः सन्'..."पूर्ववद् योज्यम् पापरहितं जनं राजा न कमपि दण्डयेत् तथा वाचा पीडयन्तमपि दण्डयेत् ॥

मर्यादा खलु मर्यादावतोर्देशयोर्विभागः ।

निधा ॥ २ ॥

निधा पाश्या भवति, यन्निधीयते । पाश्या पाशसमूहः । पाशः पाशयतेर्विपाशनात् ॥ २ ॥

भा०—'निधा' इति पदमनवगतसंस्कारमत्र लक्षितम् 'पाश्या' इति पर्यायः, पाश्यार्थेऽनवगतम् । पाश्या पुनः पाशसमूहः पाशानां बन्धनीनां रज्जूनां तन्त्रीणां वा समूहो जालम् । पाशः "पश बन्धने" ( चुरादि० ) ततो घञ् । विशिष्टबन्धनात् पशुपक्षिणो विशिष्टं बध्यन्ते वा यत्र । तस्या मन्त्रः—

"वयः॑ सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः । अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒॑स्मान्नि॒धये॑व ब॒द्धान् ॥" ( ऋ० १० । ७३ । ११ )

वयो वे र्बहुवचनम् । सुपर्णाः सुपतना आदित्यरश्मयः, उपसेदुरिन्द्रं याचमानाः । अपोर्णुह्याध्वस्तं चक्षुः । चक्षुः ख्यातेर्वा चष्टे र्वा । पूर्द्धि पूरय देहीति वा । मुञ्चास्मान पाशैरिव बद्धान् ।

मन्त्रार्थः—

भा०—वयः–पक्षिण इव सुपर्णाः सुपनाः सद्योगतिशीलाः सद्यः प्रगतिशीलाः सूर्यकिरणाः "सुपर्णा रश्मिनाम" ( निघं० १ । ५ ) ते प्रियमेधा–प्रिया मेधा येभ्यः प्राप्यते खल्वृषयो व्याप्तिमन्तो याचमाना इव सूर्यमुपगता उचुश्चान्धकारं निवारय प्रकाशं पूरय जगति । अस्मान् पाशेन बद्धानिव मुञ्चय यतो वयं प्रकाशं कुर्याम ।

निरुक्तयः–निधा "आतश्चोपसर्गे–अङ्" स्त्रियाम् ( अष्टा० ३ । ३ । १०६ ) कर्मणि करणेऽधिकरणे च पुनरजाद्यतष्टाप् स्त्रियाम् । नि, नीचैर्जले भूमौ वा धीयते ध्रियते स्थाप्यते मत्स्यपशुपक्षिबन्धनार्थमिति निधा । निधीयन्ते निध्रियन्ते निगृह्यन्ते मत्स्यपशुपक्षिणो यया यस्यां वा सा निधा, न ह्यत्र कः प्रत्ययस्तस्य कर्तरि विधानात् । परन्तु लोकेऽर्थतोऽनवगतं पाश्यार्थे । पाश्या पाशानां समूहः "पाशादिभ्यो यः" ( अष्टा० ४ । २ । ४८ ) चक्षुः 'ख्या–उसि' "चक्षेः शिच्च"(उणा० २।१२०) बहुलात्–चक्ष आदेशः । यद्वा चक्षिङ् धातोरेव साक्षात्–उसिः प्रत्ययः । ख्यापयति वस्तुमात्रं तच्चक्षुः, पश्यति येन वा वस्तुमात्रं तच्चक्षुः ।

शिताम ॥ ३ ॥

"पार्श्वतः श्रोणितः शिताम॒तः" ( यजु० २१ । ४३ )

पार्श्वं पर्शुमयमङ्गं भवति । पर्शुः स्पृशतेः संस्पृष्टा पृष्ठदेशम् । पृष्ठं स्पृशतेः संस्पृष्टमङ्गैः । अङ्गमङ्गनादञ्चनाद्वा । श्रोणिः श्रोणतेर्गतिचलाकर्मणः । श्रोणिश्चलतीव गच्छतः ।

दोः शिताम भवति । दोर्द्रवतेः । योनिः शितामेति शाक-
पूणिर्विषितो भवति । श्यामतो यकृत्त इति तैटीकिः ।
श्यामं श्यायतेः । यकृद् यथा कथा च कृत्यते । शिति-
मांसतो मेदस्त इति गालवः । शितिः श्यतेः । मांसं माननं
वा मानसं वा मनोऽस्मिन् सीदतीति वा । मेदो मेद्यतेः ॥३॥

भा०—पार्श्वं पर्शुप्रचुरं पर्शुबहुलमङ्गं भवति, 'पर्शु' शब्दात् प्राचुर्येऽर्थेऽण् प्रत्ययः—उत्सर्गश्छान्दसः । 'पर्शु' शब्दः "स्पृश संस्पर्शे" ( तुदादि ) "स्पृशेः श्वण्शुनौ पृ च" (उणा० ५।२७) इति शुन् प्रत्ययः । 'स्पृश' इत्यस्य—पृभावः 'पृ—शु—पर्शुः' पृष्ठदेशं संस्पृष्टा सा पर्शुः । पृष्ठं स्पृश धातोः । स्पृश धातोः "तिथपृष्ठगूथयूथप्रोथः" ( उणा० २ । १२ ) थक् प्रत्ययान्तो निपात्यते । निपातनात् स्पृशः पृश्—आदिसकारस्य लोपः—पृष्ठम् । यतः पृष्ठमङ्गैः सह संस्पृष्टं भवति । अङ्गम्—अङ्गनात्—"अगि गत्यर्थः" ( भ्वा० ) इत्यतो यद्वा—अञ्चनात्—"अञ्चु गतौ" ( भ्वा० ) घञि रूपम् । पक्षे कुत्वम् । 'श्रोणिः' "श्रोणृ" धातोर्गतिचलाकर्मणः "श्रोणृ" धातुपाठे तु संघातेऽर्थे विद्यते । अत्र विधानसामर्थ्यात् 'गतिचलाकर्मा' गतेर्भवा चला चलनक्रिया गतिचला, अन्तेऽत्राकारो धातुनिर्देशार्थोऽत्र यास्केनाभिमतो यथाऽन्यत्र 'श्तिप्' प्रयुज्यते 'ज्वलतिकर्मा' 'पश्यतिकर्मा' एवमत्र 'गतिचलाकर्मा' अथवा गते र्या चला गतेर्निमित्तीभूता चला चलनक्रिया 'चला' स्त्रीलिङ्गे "षिद्गौरादिभ्योऽङ्" (अष्टा० ३ । ३ । १०४) आदिरत्र प्रकारार्थे तेन 'तुला' इत्यादयः प्रयोगा अपि—उत्प्रेक्ष्याः । गतिचला कर्म यस्य स गतिचलाकर्मा धातुः । श्रोणिश्चलति हि गच्छतः । गच्छतः पशोः प्रत्यक्षं श्रोणिश्चलतीव दृश्यते । पशोर्गमने पूर्वं पादगतिर्भवति पश्चाच्छ्रोणिश्चलति—इत्यपि वक्तुं युज्यते । गतेरनन्तरं दृश्यते श्रोणिचलनम् । श्रोणिचलनादुत्तरं पादे गतिर्भवति—इत्यपि वक्तुं शक्यते पादगतेः प्रवर्तकं श्रोणिचलनम् । 'श्रोण्—इन्, "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) । 'शिताम्' इत्यस्यार्थः 'दो बाहुः' । 'दोः' "द्रु गतौ" ( भ्वादि० ) "दमेर्डोसिः" ( उणा० २ । ७० ) इति बाहुलकात् 'द्रु' धातोर्डोसि प्रत्ययो रेफस्यादिलोपः । कर्माणि प्रति द्रवति हि बाहुः कर्मकारणाय । 'शिताम' बाहुरङ्गे शरीरे श्रितं शाखेव वृक्षे, श्रितशब्दस्य रेफलोपोऽकारस्य दीर्घत्वं मश्च प्रत्ययः शिताम । शितामयोनिर्नामेति शाकपूणिर्मन्यते । यतो विषितो भवति । विशेषतः सितो बद्धः संकुचितो भवति । योनिः शब्दोऽत्र गुदवाची "शिञ् निशाने" ( स्वादि० ) निशानं तीक्ष्णीकरणम्, शितं तीक्ष्णीकृतं पक्वं च तच्चाममपक्वं च

यस्मिन् शिताम, न सम्यक् पक्वं मलं न जातं यस्मिन् तत् 'शिताम' शरीरस्य गुदभागः। मलनिःसरणकाले ह्युद्घटितं भवति निरन्तरं सङ्कुचितं तिष्ठति। 'पार्श्वतः, श्रोणितः' इत्यनयोः साहचर्यात् सान्निध्याच्च गुदं शिताम। 'सिताम' सकारस्य शकारः शितामतः श्यामतः—यकृत्त इति तैटीकिर्मन्यते। 'श्याम' इति सम्प्रसारणे कृते 'ता' इत्युपजनः शिताम 'यकृत्' अभिधेयः। यकृत् श्यामवर्णो भवति। श्यामशब्दः "श्यैङ् गतौ" (भ्वादि०) ततो मक् "इषियुधीन्धिदसिश्याधूसूभ्यो मक्" ( उणा० १। १४५ ) यकृत् यथा कथा च कृत्यते 'यथा कथा' इत्यस्य 'य—कृत्—यकृत्। कृत्यते छिद्यते। 'शितामतः' इति शितिमांसतः स च मेदस्त इति—'अभिधेयः' गालव आचार्यो मन्यते। शितिः श्वेतः—इत्यस्य 'शितः' इकारस्य स्थानेऽकारः, मांसशब्दस्य मकाराकारौ गृहीत्वा शिताम। मेद इति श्वेतमांसम्। शितिः "शो तनूकरणे" ( दिवादि० ) क्तिच् प्रत्यय औणादिकः। मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा मेदो मेद्यतेः। 'मांसम्' माननं मानसाधनं भवति मान्यते प्रशस्यते हि यस्य शरीरं मांसलं पुष्टं भवति पुरुषो मांसवान् मल्लो मान्यते—आद्रियते पशुरपि पुष्टो मान्यः प्रशस्यो भवति। अथवा मांसं मानसं मनस आकर्षकं मनसे हितं वा मांसयुक्तः पुष्टो जनो मन आकर्षति मनसि भावना जागर्ति यदहमपि कदाचिदेवं मांसवान् पुष्टो भवेयम्। यद्वा मनोऽस्मिन् सीदति। 'सीदति' इति यथायोग्यमुपसर्गेण सह प्रयोक्तुं युज्यते। अवसीदति—दुःखमनुभवति, प्रसीदति—प्रसन्नतामनुभवति। निरुपसर्गोऽपि तथाभूतयोरर्थयोः प्रयुज्यते। "सीदन्ति मम गात्राणि वेपथुश्च जायते" ( विदुरनीत्याम् ) सीदन्ति दुःखयन्ति 'सीदति—अनुकूलत्वं प्राप्नोति विशति वा—'मनोऽस्मिन् सीदति—इति मांसम्' अस्मिन् मांसे मनः सीदति—अवसीदति दुःखमनुभवति ग्लानिं करोति। यदा जीवतः पशोर्मांसमुत्पाद्यमानं यदा पश्यति मनोदुःखमनुभवति कम्पते च जनो निदर्यं कृत्यं दृष्ट्वा। अस्मिन् मांसे शरीरसंसक्ते पुष्टशरीरे मनः प्रसीदति तद्रक्षणाय तत्पालनाय च मनस्तत्र सीदति गच्छति। मासं फलमांसमप्युच्यते मांसलं पक्वं फलं तस्मिन् प्रसीदति मनः—तद्भोक्तुमिच्छति। 'शिताम' इति शब्दोऽनवगतसंस्कारोऽनेकार्थश्चास्ति तस्मात् सङ्गृहीतो यास्केन। तत्र 'शिताम' इत्यस्य 'बाहुः, योनिः—गुदम्, यकृत्, मेदः' चत्वारोऽभिधेया विचारकोट्यामत्र निर्दिष्टाः। एषां यथायोग्यमुपयोगो ग्राह्यः। तत्र छागादिपशूनां दुग्धं दुग्धाद् घृतं ग्राह्यं तथ पार्श्वश्रोणिशितामभ्यो वलवदङ्गेभ्यश्च रोमाणि ग्राह्याणि, तन्मासं न ग्राह्यं किन्तु तज्जयानि दुग्धघृतरोमाणि हि ग्राह्याणि।

समग्रमन्त्रस्तदर्थश्च—

होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेताꣳ हविर्होतर्यज ॥

होता यजमानोऽश्विनौ—औषधचिकित्सकशल्यचिकित्सकौ प्रति यक्षत्—यजेत समर्पयेत्—छागस्याजायाः—हविषो घृतस्य पक्वान्नमिति शेषः । तौ चात्तां भक्षयताम्, अथ तन्मेदः स्निग्धं घृतं मध्यतो दुग्धादुद्भृतमद्य प्रत्यग्रं तच्चात्ताम् । द्वेषोभ्यः पुरा रोगेभ्यः पुरा यथारोगाक्रान्ता न भवेदजा, तथा पुरा पौरुषेय्याः—गर्भिण्याः पुरा—उदरे पूर्णवत्सायाः पुरा, तस्याः खलु दुग्धं ग्राह्यम्, स छागो गृभः—शक्तिग्रहणयोग्यं स्वभोजनं घस्तां भक्षयेत् । नूनं—निश्चये घासेऽज्राणां घासनामकाय भोजनाय गमनशीलानां जङ्गले सम्यग्भ्रमणशीलानां यवसाश्च यवसान्नप्रमुखं येषां तेषां सुमत्क्षराणां सुहर्षं क्षरतां क्रीडने समर्थानां शतरुद्रियाणां बहुप्राणशक्तिमताम्—अग्निष्वात्तानां शरीरे गृहीताग्निधर्माणां पीवोपवसनानां घनरोमाणां पार्श्वतः पार्श्वभागभ्यां श्रोणितः श्रोणिभागात्, शितामतः शितामभागात्, उत्सादतोऽङ्गादङ्गात्—उच्छूनात् प्रत्येकाङ्गात्—रोमाणि—अवत्तानि खण्डितानि कर्तितानि करतः कुरुतोऽश्विनौ पूर्वोक्तौ चिकित्सकौ शिल्पिनौ जुषेतां सेवेतां तस्मात्, हे होतर्यजमान ! यज—अजाया घृतेन—औषधरूपेण ॥

मेहना ॥ ४ ॥

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभया हस्त्याभर ॥ (ऋ० ५।३९।१)

यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि, त्वया नस्तद्दातव्यम् । अद्रिवन्, अद्रिरादृणात्येतेन । अपि वाऽत्तेः स्यात् । 'ते सोमाद इति ह विज्ञायते' राध इति धननाम राध्नुवन्त्यनेन । तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहर । उभौ समृद्धौ भवतः ॥ ४ ॥

भा०—'मेहना' इति संदिग्धमेकपदत्वेनानेकपदत्वेन च । 'मेहना' इत्येकपदम् । 'म, इह, न' इति त्रीणि पदानि मध्ये, 'मेहना' इत्यस्य मध्ये भवानि-

अस्यान्तर्गतानि। त्रयाणां पदानां समूहः। पदैकत्वं शाकल्यो-मन्यते, ऋग्वेदस्य पदकारः। पदत्रयत्वं गार्ग्यो मन्यते, गार्ग्यः सामवेदस्य पदकारः। यास्कः प्रकारद्वयं निर्वक्ति।

मन्त्रार्थः—

हे इन्द्र! ऐश्वर्यवन्! अद्रिवः—अद्रिवन्! आदारणशस्त्रवन्! यद्वा अदनशस्त्रवन्! राजन्! यत्र खलु चित्रं 'चित्र' इति सोलुक् "सुपां सुलुक्०" (अष्टा० ७।१।३९) चायनीयं सत्करणीयमधुना तु श्रोतव्यमेव न तु दृष्टं तत् खलु मेहना मंहनीयमस्माभिर्वर्धनीयं प्रशंसनीयमन्येभ्यो दातव्यं राधो धनमस्ति यद्वा धनं 'मे मम पार्श्वे ममेहात्र संसारे नास्ति' तत् त्वादातं त्वया दातव्यं तन्नोऽस्मभ्यमुभयाहस्ति—उभौ हस्तौ यस्मिन्, यस्य प्राप्तये वा हस्तसदृशौ दानकर्मणी प्रवर्तेते तथाभूतं धनं हे प्राप्तधन! धनस्वामिन्! समन्तात् प्रापय।

निरुक्तयः—"चायृ पूजानिशानमयोः", (भ्वा०) ततः 'क्त्रः' प्रत्ययः, "अमिचिमिशसिभ्यः क्त्रः" (उणा० ४।१६४) 'चायः—चि भावः' चित्रम्। 'मेहना' "महि वृद्धौ" (भ्वादि०) "मंहते दानकर्मा" (निघं० ३।२०) ततो ल्युट्, अनुस्वारस्यैकार, पुनरेकादेशेन 'एकारः' सुस्थाने चाकारादेशः। ल्युट् प्रत्ययः कृत्यार्थे। "कृत्यल्युटो बहुलम्" (अष्टा० ३।३।११३) साहचर्याच्च कृत्यार्थे "राजभोजनाः शालयः" भोक्तव्याः—इति वत्। मंहनीयम् "मिह सेचने" (भ्वादि०) बाहुलकात् स्यान्मंहनार्थे। ततो ल्युट्, मेहनं मेहनां मेहनीयं मंहनीयम्। आकारादेशश्छन्दसि। इत्येकपदत्वे। अथवा "मेहना" इति पदत्रयं तत्र। 'मे—इह—न' म इह न पुनरपि सन्धिमवलम्ब्य 'मेहन' मे मम—इह न। 'ना' दीर्घः "अन्येषामपि दृश्यते" (अष्टा० ६।३।१३५) त्वादातम्—त्वया दातव्यम्। "दा दाने" (अदादि०) कृत्यार्थे 'अतच्' प्रत्यय औणादिकः (उणा० ३।११०) बहुलात्। 'अद्रिवः' आद्दणात्वेनेम। आ "दृ विदारणे" (क्र्या०) क्रि किद्, ह्रस्वश्चोपसर्गः—आकारः। अद्रिः। "अद् भक्षणे" (अदादि०) "अदिशदिभूशुभिभ्यः क्रिन्" (उणादि० ४।६५) 'अद्—क्रिन्—अद्रिः' 'ते सोमादः—'अद्रयः' इति प्रमाणप्रदर्शनं ब्राह्मणस्य, राधः "राध संसिद्धौ" (स्वादि०) ततोऽसुन् प्रत्यय औणादिकः। 'विदद्वसो' वित्तधन! प्राप्तधन! उभयाहस्ति—उभयौ हस्तौ यस्मिन् यस्य प्राप्तये वा साधने भवतः—उभयाहस्ति, इनिः, मतुबर्थीयो नपुंसके। पूर्वपदस्य दीर्घत्वं च "अन्येषामपि दृश्यते" (अष्टा० ६।३।१३५)

दमूनाः ॥ ५ ॥
दमूना दममना वा, दानमना वा, दान्तमना वा। अपि वा दम इति गृहनाम तन्मनाः स्यात्। मनो मनोतेः ॥४॥
"जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥" ( ऋ० ५ । ४ । ५ )

भा०—'दमूनाः' इत्यनवगतसंस्कारमनेकार्थं पदम्। दममनाः—दमे दमने-इन्द्रियदमनकरणे मनो यस्य स दमूनाः—दममनाः पूर्वपदस्य 'म' इत्यस्य लोपः। उत्तरपदस्यादिभूतस्य 'म' इत्यस्य 'मु' भावः। दानमना—दमूनाः, 'दान' इत्यस्य 'द' मनसो मुनस्, आदेशः पृषोदरादित्वात्। 'दान्तमनाः' वा 'दमुनाः' दमनशील इति "दम" धातो र्डः प्रत्ययः। 'दः' दमनं प्राप्तं मनो यस्य स दमनाः 'दान्त' इत्यस्य 'द' 'मनाः' इत्यस्य मुना। 'दमे गृहनाम' ( निघं० ३ । ४ ) गृहे यस्य मनो विद्यते। दमूना गृहे निवासशीलः। 'दमः' इत्यस्य 'द' आदेशः 'मनाः' इत्यस्य 'मुना' भावः। सर्वं पृषोदरादित्वात् सिद्धम्। तस्य "जुष्टो दमुना' इति मन्त्रः। 'मनः' "मनु अवबोधने" (तनादि०) असुन् प्रत्ययः।

अतिथिरभ्यतितो गृहान् भवति। अभ्येति तिथिषु परकुलानीति वा। पर गृहाणीति वा। दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः। इमं नो यज्ञमुपपयाहि विद्वान् सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा। धनानीति वा ॥ ५ ॥

मन्त्रार्थः—

भा०—हे अग्ने! अग्निरिव गुणैः प्रकाशमान नायक! त्वं दमूनाः—इन्द्रियदमनसमर्थमनोयुक्तो जितेन्द्रियो दानमनाः स्वप्रजायै सुप्रदानमनोयुक्तः, दान्तमनाः—स्वाधीनमनोयुक्तः, गृहे स्वराष्ट्ररूपेऽस्मद्गृहेऽस्माकं सुखार्थं मनो यस्य तथाभूतो जुष्टोऽस्माभिः सेवितः सन्—अतिथिर्दुरोणे परगृहेषु तवाऽस्मद् गृहेष्वभिप्राप्तो विद्वान् विशिष्टतिथिषु—इमं यज्ञं प्राप्तो भव, सर्वाः—अभियुजः—आभिमुख्येन युञ्जतेऽभिमुखं सन्नद्धाः शत्रुसेनाः—विनाश्य तासां शत्रूयतां शत्रूणामिवाचरतां शत्रुभूतानां भोजनानि भोग्यानि वस्तून्यादत्स्व ॥

निरुक्तयः—"अतिथिः" अतितोऽभिगृहान् "अत सातत्यगमने" (भ्वादि०)

"अतति गतिकर्मा" ( निघं० २ । १४ ) ततः "ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्य····भ्यः कित्‌च्····इथिन्····" ( उणादि ४।२ ) 'अत इथिन्' अतनशीलः—अतिथिः । इति धातुजत्वे निर्वचनम् । अभ्येति तिथिषु शुभावसरेषु 'अभि'—अभ्येति क्रियार्थे । समासे निर्वचनम् । 'दुरोणः' दुरवाः—दुः—अवाः—दुस्तर्पाः, "अवरक्षण—गतिकान्तिप्रीतितृप्ति····" ( भ्वादि ) तृप्तिरत्र गृह्यते । दुर्—अवनक् ऊठि च "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" ( अष्टा० ६ । ४ । २० ) अभियुजानि बलानि सैन्यबलानि ॥

मूषः ॥ ६ ॥

मूषो मूषिका इत्यर्थः । मूषिकाः पुनर्मुष्णातेः । मूषोऽप्येतस्मादेव

"सं मा॑ तपन्त्य॒भितः॑ स॒पत्नी॑रिव॒ पर्श॑वः । मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्यः॑ स्तो॒तारं॑ ते शतक्रतो॒ वि॒त्तं मे॑ अ॒स्य रोद॑सी । ( ऋ० १ । १०५ । ८ )

भा०—"मूषः" अनवगतं पदं बहुवचने क्विपि दीर्घश्चोपधायाः । लोके मूषिकाः—बहुवचने 'मूषः' "मुष स्तेये" ( क्र्यादि० ) मूषिका पुनः "मुषेर्दीर्घश्च" ( उणा० २।४३ ) 'किकन्' प्रत्ययः । मुषोऽप्येतस्मादेव भवति । इगुपधलक्षणेन कप्रत्ययान्तः । मन्त्रस्त्वेषः 'सं मातपन्त्य····"

सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति वा सन्तपन्ति माध्यः कामाः 'स्तोतारं ते शतक्रतो', 'वित्तं मे अस्य रोदसी' जानीतं मेऽस्य द्यावापृथिव्याविति ॥

मन्त्रार्थः—

भा०—हे शतक्रतो ! असंख्यकर्मशक्तिमन् ! परमेश्वर ! तव स्तोतारं मां खल्विमाः कूपपर्शवः शरीररूपस्य मातृशरीरस्य कूपस्य "यस्तत्र कूपो नृपते स तु देहः शरीरिणाम्" ( महाभा० स्त्री प० ६ । ७ ) पर्शव आन्तरिकाङ्गभूतास्तत्र मातृशरीररूपे कूपे गर्भवर्तमानं सन्तपन्ति पीडयन्ति सपत्न्य इव, अथ च 'आध्यो-वासनाः—मूषिकाः शिश्ना इव सूत्राणीव यद्वा स्वाङ्गानि पुच्छादीनीव मां खादन्ति, यथा मूषिकाः लाधेन लिप्तानि स्निग्धानि सूत्राणि स्वाङ्गानि पुच्छादीनि स्निग्धी-कृत्य खादन्ति तथा मां वासनाः खादन्ति, वासनापूर्तये तत्र नावसरो, न हि तत्र

गर्भे भोगपदार्थाः। वासनास्तु सन्ति हि ताः खादन्ति हि, एतत् खलु मम दुःखवृत्तान्तं रोदसी द्यावापृथिव्यौ जानीतं जानीथः—जानीतः, पुरुषव्यत्ययः। तस्मान्मामुद्धर ॥

त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ । तत्र ब्रह्मेतिहास-मिश्रमृङ्मिश्रं गाथामिश्रं भवति । त्रितस्तीर्णतमो मेधया बभूव, अपि वा संख्यानामेवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥

भा०—कूपे देहकूपे मातुरुदरे गर्भस्थं त्रितमिन्द्रं जीवात्मानं प्रत्येतत्सूक्तं सूक्ताभिप्रेतं सूक्तवृत्तं प्रतिभासितं तेनानुभूतं पश्चात्तापरूपेण, यथाऽत्र निरुक्ते चतुर्दशाध्याये प्रदर्शितम् "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः । नानायोनि-सहस्राणि मयोषितानि यानि वै । अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ॥ सांख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम् ॥" ( निरु० १४।६ ) त्रितस्त्रिषु स्थानेषु पृथिव्यामन्तरिक्षे दिवि समष्टौ त्विन्द्र आग्नेयपदार्थः । व्युष्टौ खलु स्थूले सूक्ष्मे कारणे शरीरे वर्तमानो जीवस्त्रितः । मेधया च तीर्णतमो जीवात्मा यद् गर्भेऽपि स्वकल्याणं चिन्तयति, एष जीवात्मा बभूव—संसारे प्रसिद्धः प्रसिद्धिं गतः। अत्र खलु स्कन्दस्वामिनाप्युक्तम् 'नित्यपक्षे त्रितः शुक्लादिलक्षणैः कर्मपाशैः—पुण्यापुण्योभयविधैः बद्धो मातुरुदरे नरके मग्नोऽशुचिप्रस्तरके पुरीषतन्तुजाळ्ये"… अभितो मातुः पर्शव इवाध्यश्च मूषिका इव कामाः—व्यदन्ति" ( स्कन्दः ) अत्र विषये ब्रह्मेति वेदमन्त्रस्य विषयो वर्णनं वा—इतिहासमिश्रम् । 'इति ह आस' वर्णनप्रकारः, इति—इत्यर्थमलङ्कारं दत्वा यद् वर्ण्यते तद्—ऋङ्मिश्रं सत्—गाथा-मिश्रं भवति । गाथा—अध्यात्मचर्चा भवति । यथा—"राजेमां गाथां जगाद—भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसं-घाते दुर्गन्धे निःसारेऽस्मिन् किंकामोपभोगैः" ( मैत्र्यु० १ । २ । ३ ) तस्मान्न दोषः ॥

इषिरेण ॥ ७ ॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
सोम राजन् प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ ( ऋ० ८ । ४८ । ७ )

ईषणेन वैषणेन वार्षणेन वा, ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्धय च न आयूंषि सोम राजन् ।

अहानीव सूर्यो वासराणि । वेसराणि विवासनानि गमनानीति वा ॥

भा०—'इषिरेण' इति तृतीयान्तं पदमनवगतम् । तच्च 'मनसा' इत्यस्य विशेषणम् । कथम्भूतेन मनसा ! उच्यते—ईषणेन "ईष गति....." ( भ्वादि० ) ततः "इषिमदि....शुषिभ्यः किरच्" ( उणा १।५१ ) ईषधातोरपि बाहुलकात् । ईषिरेण गमनशीलेन । अथवा 'एषणेन—इच्छासाधनेन—इच्छावता "इषु इच्छायाम्" ( तुदादि० ) ततोऽपि किरच् प्रत्ययः पूर्ववत् । यद्वा 'अर्षणेन' "ऋषी गतौ" ( तुदादि० ) गतिरत्र ज्ञानं दर्शनं गृह्यते, अन्यत्रापि यथा "ऋषिर्दर्शनात्" ( निरु० २ । ११ ) ज्ञापकेन दर्शकेन ॥

मन्त्रार्थः—

सोम राजन् ! ऐश्वर्यवन् सर्वत्र राजमानगुणैः प्रकाशमान परमात्मन् ! पित्र्यस्येव रायो यथा वयं पितुर्धनस्य—धनम् 'द्वितीयार्थे षष्ठी व्यत्ययेन' भक्षीमहि—भजेमहि सेवेमहि तथा ते—तव पितृतुल्यस्य यद्वा नित्यस्य पितुः—पितृभूतस्य तव यतस्त्वमस्माकं पिताऽसि, उक्तं ह्यन्यत्र वेदे "त्वं हि नः पिता वसो" ( ऋ० ८ । ९८ । ११ ) इषिरेण—ईषणेन त्वयि गमनशीलेन मनसा सुतं निष्पन्नं यद्वा—एषणेन—त्वां कामयमानेन मनसा सुतं प्राप्तमथवा त्वां ज्ञातुं द्रष्टुं प्रवर्तयता—अर्षणेन ज्ञापकेन दर्शकेन मनसा सुतं ध्यातमुपासितं धनमानन्दरूपं धनं भक्षीमहि भजेमहि सेवेमहि प्राप्नुयाम "भज सेवायाम्" ( भ्वादि० ) ततो लिङि "सिब्बहुलं लेटि" ( अष्टा० ३ । १ । ३४ ) इति सिप् लेटोऽन्यत्रापि छान्दसः । अतोऽस्माकमायूंषि प्रतारीः प्रवर्धय, यथा सूर्यो वासराणि दिनानि वासन्तिकानि यद्वा वेसराणि कान्तानि "वेसति कान्तिकर्मा" ( निघं० २ । ६ ) अथवा विवासनानि शीतं दूरीकर्तुमर्हाणि यद्वा गमनानि मनुष्याणां जीवनयात्रार्थे मार्गभूतानि वाहनानि दिनानि प्रवर्धय ॥

कुरुतन ॥ ८ ॥
कुरुतनेत्यनर्थका उपजना भवन्ति । कर्तन हन्तन यातनेति ॥७॥

भ०—'कुरुतन' इति क्रियापदं सोपजनं 'कुरुत' इत्यत्र नकारोपजनो ऽनर्थको वाक्यालङ्कारार्थश्छन्दपूर्त्यर्थः "तप्तनप्तनथनाश्च" ( अष्टा० ७।१।४५ ) यद्यपि चतुर्षु वेदेषु 'कुरुतन' इति प्रयोगो नास्ति किन्तु 'कर्तन' प्रयोगस्तत्रानेकत्रोपलभ्यते । 'कुरुतन' इति प्रयोगोऽपि क्वचित् स्यादेव शाखाग्रन्थे लुप्तं गुप्तं वा निघण्टुकारस्य दृष्टौ । यथा "एता हि नो महतो अरिप्रेणाप्तमनसा कुरुतना

ता विश्वास्तन्वो····"। परन्तु निघण्टुकारेण 'कर्तन' इति न दत्त्वा 'कुरुतन' इति प्रयोगो दत्तो लाघवात्। यतो भाषायां 'कुरुत' प्रयोगः प्रसिद्धः तत्र 'न' इत्युपजनस्य कल्पनेनैवालं स्यात् परन्तु 'कर्तन' न ह्युपजनकल्पनेन कार्यं सिद्ध्येत् तत्र विकरणस्याभावकल्पनमपि करणीयं भवति। एवं कल्पनाद्वयप्रसङ्गात् खलु निघण्टुकारेण 'कर्तन' इति प्रयोगं न दत्त्वा लाघवात् 'कुरुतन' इति प्रयोगो दत्तः। यास्केन 'कर्तन' इति प्रयोगो दत्तस्तत्सदृशा अन्येऽपि प्रयोगा दत्ताः "कर्तन हन्तन यातन" इति वचने 'कर्तन' इति कुरुत 'हन्तन' इति हत 'यातन' इति यात। एषामुदाहरणानि—

"विद्वांसः पदा गुह्यानि कर्तन" ( ऋ० १० । ५३ । १० )

"सुपिप्पला ओषधीः कर्तनास्मै" ( यजु० १२ । ६९ )

"तपिष्ठेन हन्मना हन्तना तम्" ( ऋ० ७ । ५९ । ८ )

"प्रयातन सखीँरच्छा सखायः" ( ऋ० १ । १६५ । १३ )

अनर्थका उपजनाः सामान्येन। इति बहुवचनमुक्तं बहुत्र तिङन्तेषु क्त्वासु सुप्सु चापि भवन्त्युपजना अनर्थकाः, सुप्सु यथा—"आज्जसेरसुक्" ( अष्टा० ७ । १ । ५० ) असुक्—उपजनः—

"स जनास इन्द्रः" ( ऋ० २ । १२ । १४ )

तथा क्त्वासु—

"हत्वाय शत्रून्विभजस्व" ( ऋ० १० । ८४ । २ )

"हत्वाय देवा असुरान्" ( ऋ० १० । १५७ । ४ )

अत्र "हत्वाय" यकारोपजनः "क्त्वो यक्" ( अष्टा० ७ । १ । ४७ )

जठरे ॥ ९ ॥

जठरमुदरं भवति जग्धमस्मिन् ध्रियते धीयते वा ॥ ८ ॥

"मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम्। ( ऋ० ३ । ४७ । १ )

मरुत्वानिन्द्र मरुद्भिस्तद्वान्, वृषभो वर्षितापाम्। रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्वन्नं, मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिम्। मधु

सोममित्यौपमिकं माद्यतेः । इदमपीतरन्मध्वेतस्मादेव ।
त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ ८ ॥

भा०—'जठरे' इति सप्तम्यन्तं पदमनवगतसंस्कारमनभीष्टार्थसंस्कारं व्याकरणेऽकृतसंस्कारं खलूणादिकोषे साधितं लौकिकार्थपरम् । "जनेरष्ठ च" (उणादि ५ । ३८ ) जन धातुना निरुक्तार्थो न लक्ष्यते । निरुक्ते खलु 'जठरम्' उदरं भवति । कथम् । उच्यते—जग्धं भुक्तमस्मिन् ध्रियते धीयते वा जग्धधरं जग्धस्य धरम्—ध्रियते धीयते वाऽस्मिन्निति धरम्, 'जग्ध' इत्युपपदात् "धृञ् धारणे" ( भ्वादि ) यद्वा "डुधाञ् धारणपोषणयोः" ( जुहोत्यादि० ) ततः "अरङ्" प्रत्ययः "कृदरादयश्च" ( उणा० ५ । ४१ ) सूत्रेण निपातनाद्रूपसिद्धिः । तस्य मन्त्रः "मरुत्वाँ इन्द्र" ।

मन्त्रार्थः—

हे इन्द्र ! राजन् ! त्वं मरुत्वान् मरुद्भिर्युक्तः प्रशस्तैर्मनुष्यैर्युक्तस्तव पार्श्वे प्रशस्ताः प्रजाजनाः सैनिकजनाश्च सन्ति, तैस्त्वं तद्वान्—असि, "असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना। तां विध्यत''''(अथर्व० ३ । २ । ६) शत्रुवेधने समर्था मरुतः सैनिका जनाः । अथ वृषभः—अपां वर्षिता मेघ इव सुखानां वर्षिता शरीरबलयुक्तः सन् रणाय रमणीयाय संग्रामाय योद्धृणां योग्यायोद्यतोऽनुष्वधमन्नमनु—तेन सह तदुपरान्तं वा सोमं सोमौषधिरसं पिब तथा मध्व ऊर्मिं मधुरस्योर्मिं प्रभावकरं हर्षप्रदं मदाय हर्षायानन्दाय विजयप्रदाय स्वजठरे—उदरे—आसिञ्च पूरय प्रसारय, त्वं प्रदिवः पूर्वेष्वप्यहःसु "प्रदिवः पुराणनाम" ( निघं० ३ । २७ ) सुतानामोषधिरसानां, सम्प्रति सुतानां च राजा अधिकारी स्वाम्यस्ति ।

निरुक्तयः—

"मध्वः" सोमस्य 'मधु' औपमिकं मधु यथा भवति तथा सोमो भवति माद्यतेः, मधुनि मदः सोमे मदः । इतरल्लौकिकं मधु खल्वेतस्मादेव मदकरत्वात्, मदो हर्षो ग्लेपनं च सोमे मदो हर्षः, मधुनि मदो ग्लेपनमित्यनयो भेदः । "मदी हर्षग्लेपनयोः" (भ्वा०) "मदेर्मधु" औणादिक 'उ' प्रत्ययः" ( उणा० १ । १८ ) बाहुलकात्, मन धातोर्विहितो मदेरपि ॥

इति प्रथम पादः चतुर्थाध्याये

## द्वितीयः पादः

तितउ ॥ १० ॥

तितउ परिपवनं भवति, ततवद्वा तुन्नवद्वा तिलमात्रतुन्नं वा।

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ ( ऋ० १० । ७१ । २ )

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य विकसितो भवति यत्र धीरा मनसा वाचमकृषत प्रज्ञानम् । धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखायः सख्यानि सञ्जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि—इति, भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा । लक्ष्मीर्लाभाद्वा लक्षणाद्वा 'लप्स्यनाद्वा' * लाञ्छनाद्वा लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः ॥ ९ ॥

भा०—'तितउ' इत्येतत्पदमनवगतसंस्कारं साक्षाद्व्याकरणलक्षणेन । तत्खलु परिपवनमभिधेयं चालनीति प्रसिद्धं लोके परितः चालयित्वा पूयते शोध्यते सक्तुप्रभृति खाद्यं वस्तु येन तत् तितउ । अथ निर्वचनं तस्य 'ततवत्' "तनु विस्तारे" (तनादि०) ततः क्तः प्रत्ययः, ततं विस्तृतं प्रकीर्णं वस्तुजातं भवति यस्मिन् मतुपि ततवत्—पूर्वतकारस्थस्य—अकारस्य—इकारोऽन्तिमतकारस्य लोपो वकारस्य संप्रसारणञ्चेति 'तित उ' ततं शोधनीयं वस्तु यस्मिन् तत्साधनं परिपवनं भवति चालनीति प्रसिद्धम् । अथवा 'तुन्नवत्' "तुद व्यथने" (तुदादि०) 'तुद्—क्त' तुन्नं यस्मिन् तुन्नानि व्यथितानि कर्तितानि छिद्राणि सन्ति तत् तुन्नवत्—मतुपि पूर्ववत् तुन्नस्य 'तित' इत्येष आदेशः, वकारस्य सम्प्रसारणमन्तिमतकारस्य लोपश्च पृषोदरादिवत् । यद्वा 'तिलमात्रतुन्नम्' 'तित उ' तिलस्य 'ति' 'तुन्न' इत्यस्य 'त, उ' शब्दौ 'तित उ' बहुव्रीहिसमासे, यस्मिन् तिलमात्राणि तिलानीव तुन्नानि—अघाताच्छिद्राणि तत् 'तितउ' 'चालनी' इति साधनम् । तदर्थो मन्त्रः "सक्तुमिव····" ।

---

* "लप्स्यनाद्वा" क्वचित् पाठोऽधिकः सोऽपि शोभनः ।

मन्त्रार्थः—

सक्तुं तितउना—परिपवनेन पुनन्तः शोधयन्त इव धीराः 'धीः प्रज्ञानं तद्वन्तः "धीः प्रज्ञाननाम" ( निघ० ३ । ९ ) प्रज्ञानवन्तो यद्वा धीर्ध्यानं तद्वन्तो ध्यानिनो विद्वांसो मनसा वाचं वाग्विज्ञानं प्रज्ञानमक्रताक्रषत—कुर्वन्ति—आविष्कुर्वन्ति प्रकटयन्ति—उच्चारयन्ति—अत्र तत्र विद्याक्षेत्रस्य सखायः समानख्याना वाचा वाग्विज्ञानेन सह सख्यं प्राप्तास्तद्बोधवन्तो जनाः सख्यानि यथार्थविज्ञानानि सजानते, यतो ह्येषामधि वाचि वागधीने भद्रा भजनीया भूतैर्याऽभिद्रवणीया भवद्रमणीयावा भवता जीवता भाजनवती लक्ष्मीर्लाभयोग्याऽन्यैर्लक्ष्या विद्वद्भिर्लम्भ्या वाञ्छनीया तदिच्छुकैराश्लेष्या ज्ञानसम्पत्तिर्निहिता भवति ॥

निरुक्तय:—

सक्तुः "षच समवाये" ( भ्वादि० ) ततः "सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्" ( उणा० १ । ६९ ) इति तुन् प्रत्ययः । स समवेतो दुर्धावो दुःशोधनीयो भवति तस्मात् तथाभूतः प्रकृतिभूतः स सक्तुः । यद्वा पिष्टश्चूर्णीकृतः सन् विकृतिभूतो विकसितो भवति तस्मात् "कस गतौ" ( भ्वादि० ) यास्कस्य विधानसामर्थ्यात् कसनं विकसनं गृह्यते विकसितो भवति यतः ककारसकारयोर्विपरीतात् 'सक' इति रूपात् तुन् प्रत्यये सक्तुः । अक्रत—अकृषत 'कृ धातोर्लुङि रूपम्, भद्रं भगेन तुल्यं व्याख्यातं विज्ञेयं तद्वच्च भजनीयं भद्रम् "भदि कल्याणे सुखे च" ( भ्वादि० ) ततो "ऋज्रेन्द्र····भद्र····" ( उणा० २ । २९ ) इत्यनेन रन् प्रत्यये निपातनम् । कल्याणं भजनीयं भवति । 'भद्रं भ—द्रम्' भवतीति 'भू डः' भम्, बहुवचने भानि भूतानि तेषामभिद्रवणीयाणि यानि—अभिलक्ष्य द्रवन्ति तानि भद्राणि "भ—द्रु—डः" । भद्रम् । भवद् रमयति, भवति—इति भवत् शतृप्रत्ययान्तं भवत् सत् स्वं तत् स्वामिनं रमयति भवत्—रम्—डः', भवतो भः—एव शिष्टः, शिष्टो भागो लुप्तः । यद्वा भाजनाद् भाजनवद् भद्रः—भद् रः, भजते हि यः परमेश्वरं स क्विपि भद् धातोर्जकारस्य दकारस्तं भजमानं रमयति यत्तद् भद्रम् । लक्ष्मीर्लाभात्—लक्ष्मीः । "लक्षेर्मुट् च—ईः" ( उणा० ३ । १६० ) अन्या व्युत्पत्तयो बाहुलकान्मन्तव्याः । "डुलभष् प्राप्तौ" (भ्वादि० लक्ष्मी लब्धव्या भवति "लभ्—ई" पृषोदरादौ । यद्वा 'लभ् डक्ष्मीः प्रत्ययो बाहुलकादौणादिकः । लक्षणाद्वा "लक्ष दर्शनाङ्कनयोः" ( चुरादि० ) "लक्षे मुँट् च ईः" ( उणा० ३ । १६० ) लक्ष्मीः । लक्ष्यते हि सा यत्र भवति प्राप्तये च लक्ष्यते । लाञ्छनाद् वा "लाछि लक्षणे" ( भ्वादि० ) लाञ्छ—ईः' पृषोदरादौ रूपसिद्धिः । यद्वा 'लाञ्छ—डक्ष्मीः प्रत्ययः'—लक्ष्मीः । अर्थः स एव । अथवा

"लष कान्तौ" ( भ्वादि० ) ततः 'ईः' प्रत्ययः, पृषादरादौ रूपसिद्धिः, डक्मीः प्रत्ययो वा पूर्ववत् ! लष्यते काम्यते हि सा जनैः। "लगे सङ्गे" ( भ्वादि० ) तत आश्लेषार्थात् प्रत्ययः 'ईः' यद्वा 'डक्मीः' पूर्ववत्। यस्य पार्श्वे लक्ष्मी-र्भवति स तयाऽऽश्लिष्टो भवति स तां न त्यक्तुमिच्छति वृद्धो म्रियमाणः सन्नपि। सा लक्ष्मीश्च लक्ष्मीमन्तमाश्लिष्यति। "लस्ज व्रीडायाम्" ( भ्वादि० ) धातो-र्वा, व्रीडा लज्जा सैव—अश्लाघा—आत्मनोऽख्यापनम्। लक्ष्मीमान् न श्लाघते न प्रख्यापयति तस्या हरणभयात्। प्रत्ययादि सर्वं पूर्ववत्॥

शिप्रे ॥ ११ ॥

शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः ॥ १० ॥

भा०—'शिप्रे' इति द्विवचनं पदमनवगतसंस्कारमनेकार्थं च तदुपरिष्टात् ( अ० ६ खं० १७ ) व्याख्यास्यामः, व्याख्यास्यति ह्याचार्यस्तत्रागमिष्यति पद-मिदम् 'हनू' यद्वा 'नासिके'—नासिकाछिद्रे' इत्यभिधेये॥

मध्या ॥ १२ ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं सञ्जभार। यदेदयुक्त हरितः सधस्थाद् रात्री वासस्तनुते सिमस्मै ॥ ( ऋ० १। ११५। ४ )

तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत् कर्मणां क्रियमाणानां विततं संह्रियते। तदाऽसावयुक्त हरणानादित्यरश्मीन्। हरितोऽश्वानिति वा। अथ रात्री वासस्तनुते सिमस्मै वेसरमहरवयुवती सर्वस्मात्। अपि वोपमार्थे स्याद् रात्रीव वासस्तनुत इति। तथापि निगमो भवति "पुनः समव्यद् विततं वयन्ती" ( ऋ० २। ३८। ४ ) समनात्सीत्॥

भा०—'मध्या' इत्यनवगतम्। मध्यशब्दात् "सुपां सुलुक्पूर्वसवर्णा-च्छे...." ( अष्टा० ७। १। ३९ ) इत्यनेन—आकारादेशः सप्तम्येकवचने 'मध्ये' इत्यवगमः।

मन्त्रार्थः—

सूर्यस्य तद् देवत्वं महत्त्वं यत् स कर्त्तोः—कर्मणां क्रियमाणानां जनैः क्रियमाणानां कृषिप्रभृतिकर्मणां मध्ये "कर्तोः कर्मनाम" ( निघं० २। १ ) विततं प्रसृतं रश्मिजालं तेन सूर्येण, तत् स संहरति यदाऽसौ सूर्यो हरितो रसहारकान् रश्मीन् रश्मिरूपानश्वान् वाऽयुक्तायोजयत् सधस्थात् सहस्थानात्

सम्बद्धस्थानात्-असमत्सम्बद्धस्थानादादायेत्यर्थः । अस्तं गच्छन्नन्यत्र योऽयति तदा रात्री सर्वस्मै-सर्वस्मात् पञ्चम्यर्थे चतुर्थी । सर्वस्मात् सधस्थात् सहस्थानाद् वासो वेसरं वासरमहरवयुवती दिनमपनयती सती तमस्तनुते । यद्वा-अत्रोपमार्थे स्यात् । रात्री वस्त्रार्थं तानमिव तनुते, यथा काचित् स्त्री वासं वस्त्रार्थं तानं तनुते तथा रात्री तमोरूपं वासस्तनुते, तदुक्तं ह्यन्यत्र यथा-"पुनः समव्यद् विततं वयन्ती मध्या...." ।

समग्रमन्त्रस्तदर्थश्च—

पुनः समव्यद् विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद् व्यृतूँरदर्धररमतिः सविता देव आगात् ॥

यथा काचित् स्त्री वस्त्रं वयन्ती तानितं वस्त्रतानं पुनः समव्यत् संव्ययति संवृणोति संवेष्टयति कर्त्तोर्मध्ये तानकर्मणो मध्ये हि यदा धीरः कर्मशक्तिप्रदः सूर्यः शक्मन्यधात् स्वप्रकाशनकर्म "शक्म कर्मनाम" ( निघं० २ । १ ) निधत्ते स्वस्मिन् गृह्णाति, अस्तं गच्छन्-गच्छतीत्यर्थः । उदयकाले च पुनर्वितनोति, तथैवैषा रात्रिरपि रश्मिजालं प्रकाशं वा संवेष्टयति, स्वतमोभूतं वस्त्रं तनोति संवेष्टयति सूर्यस्यास्तोदयाभ्यां वैपरीत्येन । पूर्वमन्त्रे 'मोकी' रात्रिनाम, सा रात्रि रत्र लुप्तोपमया लक्ष्यते । पुनः संहाय-उदस्थात् । एवं सूर्यः स्वरश्मिजालं संगृह्य यदा ह्युत्तिष्ठति-उदेति तदा-ऋतून्-अदर्ध-अदर्दः 'वर्णव्यत्ययः' कालविभागान् विभक्तान् करोति सविता देवः सूर्यः खलु-अरममाणः पुनः पुनरागच्छति ॥

निरुक्त्यः—समव्यत्-सम् पूर्वात् "व्येञ् संवरणे" (भ्वादि०) ततोऽङ् लुङि व्यत्ययेन । तदनुवादः समनात्सीत् "णह बन्धने" (दिवादि०) लुङि रूपम् ॥

अत्र "रात्रीव वासस्तनुते" रात्री वास इव तनुते इत्यस्मिन्नभिप्राये प्रयुक्तः प्राचीनः प्रयोगः-आर्षः प्रयोगो वा रात्रिर्वास इव तनुते, यथा रात्रिर्वासस्तनुते । नास्ति विशेषः परन्तु तत्रोपमा तु रात्रेर्भिन्नां वस्त्रं वयन्तीं लक्षयति, यथा काचित् वस्त्रं वयन्ती योषा वासं तनुते तथा रात्रिर्वासस्तनुते । तस्माद् रात्रिरिवान्या काचिल्लक्ष्यते । यथा ह्युपमीयते सा खलु रात्रिरिवास्ति ।

मन्दू ॥ १२ ॥

"इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।
मन्दू समानवर्चसा" ( ऋ० १ । ६ । ७ )

इन्द्रेण हि संदृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थः । अपि वा मन्दुना तेनेति स्यात् । समानवर्चसेत्येतेन व्याख्यातम् ॥ १२ ॥

भा०—'मन्दू' इत्येतदनवगतमनेकविभक्तिकल्प्यं च । इन्द्रो मरुद्गणश्चोभे देवते । निरुक्तशैल्या 'अबिभ्युषा गणेन' मरुद्गणेन सह लक्ष्यं इन्द्रेण प्रथमार्थे सम्बोधने हे इन्द्र ! जीवात्मन् ! यद्वा विद्युद्देव ! त्वम्—अबिभ्युषा गणेनाभयवता गणेन मरुद्गणेन, प्राणसमूहेन—वायुसमूहेन वा सञ्जग्मानः सन् दृक्षसे ज्ञायसे ज्ञानपथमागच्छसि । प्राणैर्जीवात्मा प्रतीयते, वायुसमूहैश्च विद्युदाकाशेऽभ्रमण्डले दृष्टिपथमागच्छति । युवां जीवात्मप्राणगणौ विद्युद्वायुगणौ च मदिष्णू—आनन्दप्रदौ समानतेजस्कौ भवथः । यद्वा मन्दू तृतीयायां मन्दुना मदिष्णुना—आनन्दप्रदेन प्राणगणेन—वायुगणेन वा समानतेजस्केन सह दृश्यसे ॥

निरुक्तयः—मन्दू 'मदि स्तुतिमोद·····"(भ्वादि०) मोदो हर्षः । तत्र 'उ' प्रत्ययः ( उणा० १ । ७ ) बाहुलकात् । दृक्षसे—दृश् लिङर्थे लेट् सिप् च । सञ्जग्मानः—"छन्दसि लुङ्लङ्लिटः" ( अष्टा० ३ । ४ । ६ ) सामान्यकाले लिट् । कानच् लिटि । 'बिभ्युषा'—'भी भये' लिटः क्वसुः ॥

ईर्मान्तासः ॥ १४ ॥

"ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥" ( ऋ० १ । १६३ । १० )

ईर्मान्ताः समीरितान्ताः * पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । 'संशूरणासो दिव्यासो अत्याः' शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्तेर्घ्नन्त्यध्वानं श्रेणिश इति श्रेणिः श्रयतेः समाश्रिता भवन्ति । यदाक्षिषुर्यदापन् दिव्यमज्ममजनिमाजिमश्वाः । अश्वस्यादित्यस्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति ।

"सूरादश्वं वसवो निरतष्ट ।" ( ऋ० १ । १६३ । २ )

---

* 'सुसमीरितान्ताः' इत्यधिकः क्वचित्पाठोऽनावश्यकः । होश्यारपुरस्थे शोधसंस्थाने च १७५ इति संख्यायां हस्तप्रतिकायाम्' ।

इत्यपि निगमो भवति ॥ १३ ॥

भा०—'ईर्मान्तासः' इत्येतदनवगतम् । 'समीरितान्ताः' इत्यवगमः सारूप्ये, पृथ्वन्ता वा–अर्थवचनम् । "ईर क्षेपे" ( चुरादि ) ततो मन् प्रत्ययः "अर्त्तिस्तुसुहुसृ····नीभ्यो मन्" ( उणा० १ । १४० ) धातुबहुलात् । ईर्मः क्षेप आघात आघातयोग्यः पिण्डोऽन्तो येषां ते–ईर्मान्ताः पृथ्वन्ताः कठोरवस्तुपर्यन्ताः पृथिव्यादिपिण्डपर्यन्ताः पृथिव्यादिपिण्डपर्यन्तप्रसरणशीलाः । यद्वा प्रक्षेपितजघनाः प्रेरितजघनाः प्रेरितजङ्घाः । अश्वोऽग्निर्देवता ।

मन्त्रार्थः—

ईर्मान्तासः—समीरितान्ताः–प्रेरिता अन्ता जघनभागा येषां गमनाग्रे ते समीरितान्ताः–अश्वा इव सूर्यरश्मयो यद्वा 'ईर्मान्ताः पृथ्वन्ताः, ईर्मः प्रक्षेपण–योग्य आघातयोग्योऽन्तो येषां ते पृथुं कठोरं पृथिव्यादिपिण्डमन्तं स्थानं गमनाय येषां स्थूलपिण्डपर्यन्तगमनशीलाः–यावत्पिण्डं गन्तुमर्हाः सूर्यरश्मयः । सिलिकमध्यमासः–सिलीकमध्यमाः संसृतमध्यमाः, चिक्कणो मांसपूरितः सम्पुष्टो मध्यमो भागः पुरुषैरारोढुं योग्यो येषां ते तथाभूता अश्वा इव सूर्यरश्मयो यद्वा शीर्षमध्याः शिर आदित्यस्तमादित्यं मध्ये कृत्वा ये प्रचरन्ति रश्मयः–आदित्यः सर्वेषां शिरः शेते–इति शिरः "शी–असुन् प्रत्ययः 'शिर्' आदेशः । धातुबहुलात् । शेतेऽनुशेते सर्वाणि भूतानि मध्ये च तेषां शेते, तिष्ठति तैजसधर्मत्वात् । एवं सूर्यमभितो यद्वा सूर्यतः सर्वत्र प्रसरणशीलाः । 'सिलिकः' 'सृ–डिलिकः, प्रत्ययः सिलिकः, शिरस्कस्थाने सिलिकशब्दः । यद्वा सिलिकशब्दः शिरसः पर्यायः । शीर्णमध्याः । संशूरणासः–संघर्षे सति शूरणाः शूराः, शूरा एव शूरणाः "शव गतौ" ( भ्वादि० ) "शु गतौ" ( भ्वादि० ) ततः क्रन् प्रत्ययः "शुसिचिमीनां दीर्घश्च" ( उणा० २ । २६ ) पक्षे उपधाया ऊठ् । "शूर विक्रान्तौ" ( चुरादि० ) नन्दिप्रभृतिषु मत्वा ल्युः प्रत्ययः । शूरणाः संघर्षेशूराः, अश्वा इव सूर्यरश्मयः । यद्वा संगमनशीलाः सूर्यरश्मयः । दिव्या दिविजाता द्युलोकभवाः । अत्या अतनाः–निरन्तरं गमनशीलाः, हंसा इव श्रेणिशोयतन्ते गच्छन्ति "यतते गतिकर्मा" ( निघं० २ । १४ ) कदा ते, इत्थं लक्षणका भवन्ति–उच्यते–यदा यद् दिव्यं अज्मन्–आक्षिपुः । यद् यदा दिव्यमज्ममजर्नि मार्गमापन्–आप्नुवन्ति । इति त्वादित्यस्तुतिरश्वस्य वा, आदित्यादेवाश्वो निस्तष्ट रश्मयः । उक्तं यथा–"सूरादश्वं वसवो निरतष्ट ।" ( ऋ० १ । १६३ । २ ) ।

समग्रमन्त्रस्तदर्थश्च—

यमेन॑ द॒त्तं त्रि॒त ए॑नमायुन॒गिन्द्र॑ ए॒णं प्र॑थ॒मो अध्य॑तिष्ठत् ।
ग॒न्ध॒र्वो अ॑स्य रश॒नाम॑गृभ्णा॒त्सूरा॑दश्वं वसवो॒ निर॑तष्ट ॥

यमेन विश्वस्य नियन्त्रा परमात्मना दत्तमग्निमश्वमेनं त्रितस्त्रिषु स्थानेषु वर्तमानो वायुरयोजयत्, प्रथम इन्द्रः सूर्यान्तर्गत ऐश्वर्यवान्—असितो भाग एतमध्यतिष्ठत्—अधितिष्ठति "प्राचीदिगग्निरधिपतिरसितो रक्षिता" इत्युक्तं यथा । गन्धर्वो गन्धवान् पृथिवीजातीयो लोकः "व्यवस्थितः पृथिव्यां गन्धः" (वैशे० २।२।२) वकारो मतुबर्थे रुट् चागमश्छान्दसः । अस्याग्निरूपस्याश्वस्य रशनां रज्जुं दीप्तिं स्वात्मनि गृह्णाति । सूरात् सूर्यात्—वसवो रश्मयो निरतक्षन् प्रादुर्भावयन्ति । इति सूर्यस्तुतिरत्रापि । "श्रेणिः" 'श्रि—निः' "वहिश्रिश्रु……नित्" ( उणा० ४ । ५१ ) ।

कायमानः ॥ १५ ॥

"काय॑मानो व॒ना त्वं यन्मा॒तृरज॑गन्न॒पः ।
न तत्ते॑ अग्ने प्र॒मृषे॑ नि॒वर्त॑नं॒ यद् दू॒रे सन्नि॒हाभ॑वः ॥"
( ऋ० ३ । ९ । २ )

कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातृरपोऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत सन्निह भवसि जायमानः ॥

भा०—'कायमानः' इत्यनवगतं पदम् । चायमानः कायमानो वेत्यवगमः ।

मन्त्रार्थः—

हे अग्ने प्रकाशस्वरूप परमात्मन् । त्वं वना—वनानि—ज्ञानरश्मीन् ज्ञानतन्तून् वैराग्यप्रवृत्तीः "वनं रश्मिनाम" ( निघं० १ । ५ ) "यः कपाले रसो लिप्त आसीत् ते रश्मयोऽभवन्" ( शत० ६ । १ । २ । ३ ) कायमानश्चायमानः पश्यन् लक्षयन् यद्वा कामयमानः सन् यत्—अपः—मातृः—अजगन् शरीरस्था नदीर्नाडीः प्राणनाडीः प्रति—नाडीषु, अभ्यासानुष्ठानेऽगमत्—लुप्तः । "मातरो नद्यः" ( निघं० १ । १३ ) "सीरा नद्यः" ( निघं० १ । १३ ) "सीरा नाड्यः "यथा वेदेऽन्यत्र "सीरा युञ्जन्ति कवयो……" ( यजु० १२ । ६७ ) परमात्मन् ! तत् ते निवर्तनं यद् वैराग्यदृष्टितो निवर्तनं पृथग्भवनं नाहं सहे, यद् दुरे सन् त्वमिह जायमानः प्रकटीभूतः साक्षाद् भवितुमर्हत् ॥ अथाधिदैविकदृष्टौ—पार्थिवोऽग्निः काष्ठानि प्राप्य प्रज्वलति, अपः प्राप्य निर्वापमेति शान्तो भवति । तस्माद् गृहेषु सदाऽग्निः संरक्षणीयः ॥

लोधम् ॥ १६ ॥

"लोधं नयन्ति पशु मन्यमानाः" ( ऋ० ३।५३।२३ )

लुब्धमृषिं नयन्ति पशुं मन्यमानाः ॥

भा०—'लोधम्' इत्येतदनवगतम् । 'लुब्धम्' इत्यवगमः ।

वक्तव्यम्—

अत्र 'ऋषिम्' इति विशेषणं लुब्धस्य दत्तं तेन कश्चिद् वैदिक ऋषिरत्र न कल्पनीयः । यतश्चतुर्वेदेषु न कस्यापि सूक्तस्य मन्त्रस्य वा लोधो लुब्धो वा ऋषिरस्ति । तस्मादप्यत्र यौगिकरीत्या धात्वर्थाभिधायी विद्यते यथा वेदे "इमामग्ने…"भूमिरस्यृषिकृत्" ( ऋ० १ । ३१ । १६ ) अग्निर्ऋषिकृत्–अग्निः–ऋषेः प्रगतिशीलस्य पदार्थस्य कर्ता "ऋष गतौ' ( तुदादि० ) आधिदैविकदृष्टौ । "इगुपधात् कित् इन्" ( उणा० ४ । १२० ) यथा 'ऋष 'धातो ऋषिः' शब्दः । यथा खलु 'ऋष' धातोः "स्नुव्रश्चिकृत्यृषिभ्यः कित् सः" ( उणा० ३ । ६६ ) ऋक्षः–नक्षत्रवाचको भवति, तथैव 'ऋष' धातोः 'इन्' प्रत्यये 'ऋषिः' शब्दोऽपि नक्षत्रवाचको भवति । ध्रुवस्य परितो भ्राम्यन्ति सप्त नक्षत्राणि सप्तर्षय उच्यन्ते हि । तथैवात्राधिदैविकदृष्टौ नक्षत्रमेकं लुब्धो लुब्धकोऽस्ति हि परन्त्वत्राधिभौतिकदृष्टौ युद्धप्रसङ्गत्वात् शस्त्रप्रक्षेपणे समर्थः प्रगतिशीलो योद्धा नेता वा लक्ष्यते स च लोधो लुब्धो विमुग्धः शस्त्रचालने गर्वितः परपक्षीयो नायकः । "लुभ विमोहने" ( तुदादि० ) ततः पचादिलक्षणोऽच् प्रत्ययः । भकारस्य धकारादेशश्छान्दसः । 'लोधः–लुब्धः' । स च "न सायकस्य…" इति प्रस्तुते मन्त्रे स लोधो लुब्धोऽन्यपक्षस्य नेताऽस्ति तद्विषये निर्देशोऽपि ततः पूर्वस्मिन् मन्त्रे विद्यते "परशुं चिद्वि तपति शिम्बलं चिद् विवृश्चति । उखाचिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति" ( २२ ) अत्र 'प्रयस्ता' अन्यपक्षस्य नेता शस्त्रप्रहारे प्रयासस्य कर्ता 'उखाचित्'–पाकस्थालीव फेनं क्षिपति तव सैनिकानां सम्मुखं संग्रामे । स प्रयस्ताऽत्र 'न सायकस्य' इति प्रस्तुते मन्त्रे लोधनाम्ना खलूच्यते ।

समग्रमन्त्रस्तदर्थश्च—

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।

नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति ॥

हे इन्द्र राजन् ! एते तव जनाः–सैनिकजनाः सायकस्य वज्रास्त्रस्य परपक्षेण प्रक्षिप्तस्य प्रभावं न मन्यन्ते । किन्तु लोधं पशुं मन्यमाना नयन्ति परपक्षस्य प्रयस्तारं शस्त्रास्त्रप्रक्षेपणशील लोधं लुब्धं विमुग्धं शस्त्रप्रक्षेपणे गर्वितं पशुं मत्वा

नयन्ति स्ववशे नयन्ति—निगृह्णन्ति । अत्र सैनिका न निर्बलाः सन्ति किन्तु बहु-बलाः सन्ति ते वाजिना सह अपपक्षस्याश्वेनाश्वता योद्धा सह स्वकीयमवाजिन-मनश्वमनश्वारोहिणं न हासयन्ति—न स्पर्द्धयन्ति "हासमाने ह्रसति स्पर्द्धायाम्" ( निरु० ९ । ३९ ) परपक्षस्य बलवता सह स्वपक्षस्याबलवन्तं निर्बलं न योध-यन्ति किन्तु पूर्णबलवन्तं योधयन्ति । 'न गर्दभं पुरो अश्वान्नयन्ति' न साक्षादग्रेऽ-श्वारोहादग्रे गर्दभं खाद्यशस्त्रादिभारवन्तं गर्दभं नयन्ति ॥

शीरम् ॥ १७ ॥

"शीरं पावकशोचिषम्" ( ऋ० ८ । १०२ । ११ )

पावकदीप्तिम् । अनुशायिनमिति वाशिनमिति वा ॥१४॥

भा०—'शीरम्' इत्येतदनवगतम् । 'अनुशायिनम्' यद्वा 'आशिनम्' इत्यव-गमः । अग्निदेवताको मन्त्रस्तस्मात् 'अग्निः—अभिधेयः । 'शीरः' इति शब्दः "शीङ् स्वप्ने" ( अदादि० ) ततो 'रक्' प्रत्यय औणादिकः । "शीङ्हसि-सिधिशुभिभ्यो रक्" ( उणा० २ । १३ ) शेते—इति शीरः, कुत्र शेते—इत्यर्थ-प्रत्यायनाय 'अनु' उपसर्गः प्रयुज्यते, अनुशेते सर्ववस्तुष्वनुशेते सोऽनुशायी तमनुशायिनम् । "शयानो याति सर्वतः" ( कठो० २ । २१ ) अथवा आशि-नम्' "अशूङ् व्याप्तौ" ( स्वादि० ) ततः "कृशॄपृकटिपटिशौटिभ्य ईरन्" (उणा० ४ । ३० ) इत्यनेन धातोर्बाहुलकात् 'ईरन्' प्रत्ययः । धात्वादेरकारस्य लोपः । शीरम् । व्यापिनमग्निं परमात्मानम् ॥

समग्रमन्त्रस्तदर्थश्च—

शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा । दीदाय दीर्घश्रुत्तमः ॥

'शीरं' सर्वप्राणिषु शयानमवस्थितं सर्वभूतेषु वा व्यापिनं पावकज्योति-ष्मन्तम् । "शोचिः—ज्वलतो नाम" ( निघं० १ । १० ) अग्निं परमात्मानं स्तुहि, 'यः पूर्वतोऽनुवर्तते ।' यः खलु ज्येष्ठः सर्वमहान्, अतिशयेन दीर्घं श्रावयति यः स हृदयगृहेषु श्रेष्ठजनसदनेषु प्रकाशितो भवति प्रकाशते वा ॥

विद्रधे ॥ १८ ॥ द्रुपदे ॥ १९ ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके ।

बभ्रू यामेषु शोभेते ॥ ( ऋ० ४ । ३२ । २३ )

कनीनके कन्यके । कन्या कमनीया भवति । क्वेयं नेतव्येति वा । कमनेनानीयत इति वा । कनते र्वा स्यात्कान्ति-कर्मणः । कन्ययोरधिष्ठानप्रवचनानि, सप्तम्या एकवचना-

नीति शाकपूणिः । विद्धयोर्दारुपाद्वोः । दारु दृणातेर्वा द्रूणातेर्वा । तस्मादेव द्रु । नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते बभ्रो-रश्वयोः संस्तवः ॥

भा०—'विद्रधे', 'द्रुपदे' इति द्वे पदे अनवगते अनेकार्थे चैकस्यामृचि । अतः सहैव पठ्येते । प्रत्येकं द्विवचनं पदम् । 'विद्रधे' इत्यस्य 'विद्धे' अवगमः 'द्रुपदे' इत्यस्य 'द्रुममयपदे' अवगमः । दारुपादौ—काष्ठपादुके चरणपादुके प्रसिद्धे स्तो लोके । इन्द्रस्याश्वौ स्तूयेते मन्त्रे । "हरी इन्द्रस्य आदिष्टोपयोजनेषु" (निघं० १ । १५) "यदशनिरिन्द्रः" ( कौ० ६ । ९ ) इन्द्रस्य विद्युतोऽश्वौ शुष्कार्द्रे धारे तरङ्गाख्ये कनीनकेव कन्यके इव "कनीन" शब्दः कन्याशब्दस्य पर्यायत्वमर्हति । यतोऽष्टाध्याय्यां कन्यास्थाने तदादेशो विहितः "कन्यायाः कनीन च" ( अष्टा० ४ । १ । ११६ )

मन्त्रार्थः—

द्वे कन्ये इव विद्युद्धारे अश्वरूपे अल्पे विद्रधे विद्धे तष्टे कीलयुक्ते नवजाते द्रुपदे दारुपदे अधिष्ठिते बभ्रुवर्णे लोहितनीलवर्णे यामेषु यन्त्रेषु प्रकाशयन्त्रेषु शोभेते । इति शाकपूणिमते । यास्कमते तु ते एव विद्युद्धारे विद्रधे विद्धयोस्तष्टयोर्दारुपाद्वोः काष्ठपादुकयोरधिष्ठितयोर्नवजाते अल्पकाये द्वे कन्यके इवारुणनीलवर्णके यामेषु यन्त्रेषु प्रकाशयन्त्रेषु शोभेते । विद्युतः प्रभावः काष्ठे न भवतीति विज्ञानमपि सूचितं भवति ।

निरुक्तयः—"व्यध ताडने" ( दिवादि० ) अत्र तक्षणे, ततः 'क्त' 'विधू-त' संप्रसारणं, विद्धे सिद्ध 'धकारात्पूर्वस्य—अकारसहितस्य रेफस्योपजनः । 'द्रुपदे' "द्रुर्वृक्षः" 'दृ' कु प्रत्ययः बाहुलकात् ( उणा० १ । ३५ ) द्रोर्वृक्षस्य पादौ द्रुपदे । 'दारु' "दृ विदारणे" ( क्र्यादि० ) ततो ञुण् "दृसनिजनिचरिचटि-रहिभ्यो ञुण्" ( उणा० । १ । ३ ) अथवा "द्रू हिंसायाम्" ( क्र्यादि० ) 'द्रुवो द भावो ञुण् च प्रत्ययः । तस्मादेव द्रू धातोः डुः प्रत्ययो बाहुलकात् । नवे नवजाते अर्भके अवृद्धे इत्यर्थप्रदर्शनम् ॥

तुग्वनि ॥ २० ॥
इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसंख्यायाह ।
"सुवास्त्वा अधि तुग्वनि ॥" ( ऋ० ८ । १९ । ३७ )
सुवास्तुनदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति ॥

भा०—'तुग्वनि' इति 'तुग्वन्' शब्दस्य सप्तम्यन्तं पदम् । तुग्व' अनवगतम् 'तीर्थम्' अभिधेयम्, एतत् तूर्णमायन्ति तस्मात् 'तुग्व' । 'तूर्ण' शब्दोपपदे गम् धातोः—"अन्येभ्योऽपि दृश्यते" (अष्टा० ३ । २ । ७५) इति 'वनिप्' प्रत्ययः स च छन्दसि ङित् । तूर्णस्य 'तु' भावः, गम् धातोश्च प्रत्ययस्य ङित्वात्-टिलोपः, तुग्वन्—सप्तम्यां तुग्वनि । तटे जलाशयतटे । 'इदं च मह्यमदादिदं च मह्यमदात्' इति यद् यद् वस्तु खल्वदात् तत्तत् पूर्वमन्त्रे निर्दिश्याह वदेद् वा ऋषिर्मन्त्रदृक्—मन्त्रस्याध्येता "सुवास्त्वा अधि तुग्वनि" ।

समग्रमन्त्रस्तदर्थश्च—

अदा॑न्मे पौरुकु॒त्स्यः प॑ञ्चा॒शतं॑ त्र॒सद॑स्युर्व॒धूना॑म् ।

मंहि॑ष्ठो अ॒र्यः सत्प॑तिः ॥

उ॒त मे॑ प्र॒यियो॑र्व॒यियोः॑ सु॒वास्त्वा॒ अधि॒ तुग्व॑नि ।

ति॒सॄ॒णां स॑प्तती॒नां श्या॒वः प्र॑णे॒ता भु॑व॒द्वसु॒र्दिया॑नां॒ पतिः॑ ॥

(ऋ० ८ । १९ । ३६, ३७)

पुरुकुत्सस्य—पुरवो बहवः कुत्सा वज्राः शस्त्रायुधाः—येषां ते पुरुकुत्सास्तेषु प्रसिद्धः पौरुकुत्स्यश्चक्रवर्ती सम्राट् "पुरु बहुनाम" (निघं० ३ । १) "कुत्सो वज्रनाम" (निघं० २ । २०) त्रसदस्युः—दस्यूनां त्रसत्रासनत्रासयिता "राजदन्तादिषु परम्" (अष्टा० २ । २ । ३१) इति परनिपातः । स तथाभूतो राजा मे मह्यं वेदस्याध्यापकायाचार्याय मदीययोग्यशिष्येभ्यः स्नातकेभ्यो वधूनां विवाहयोग्यानां कन्यानां पञ्चाशतं मे दद्यात् 'छन्दसि लुङ्लङ्लिटः' (अष्टा० ३ । ४ । ६) पञ्चाशत् प्रतिशतं कन्या अधीयीरन् । सोऽतिशयेन दाता "मंहते दानकर्मा" (निघं० ३ । २०) अर्यः स्वामी राष्ट्रस्वामी सतां पाता । इत्याकांक्षा राष्ट्रे वेदज्ञानं स्वात्मानि बिभ्रतोऽन्येषु च भरणसमर्थस्य पाता । उतापि च मे मह्यं प्रयियोः प्रीणयितुस्तर्पयितुर्धनस्य—प्रीणयितृ तर्पयितृ धनं वयियो वैयनक्रियां प्राप्तं वस्त्रस्य—वस्त्रं च तथा त्रिरावृतानां सप्ततीनां गवां स्त्रीलिङ्ग—प्राधान्यादत्र गावो लक्ष्यन्ते । दशोत्तरशतद्वयं गवां श्यावो श्यामवर्णो प्रणेता वृषः तासां गवां प्रणेता । भवन्ति वसूनि वत्सा यस्मात् । स दियानां देयानां गवां यः पतिरस्ति । इति सर्ववस्तुजातं मह्यमाचार्याय मदीयशिष्येभ्यो दद्यात् । क्व दद्यात्—यन्मदीये गुरुकुले सुवास्त्वाः सुसम्यक् वास्तुशाला गृहं यत्र भवितुमर्हति, सम्यग्वास्तव्या वा तस्या नद्यास्तटे, इति ।

नंसन्ते ॥ २१ ॥

"कुविन्नंसन्ते मरुतः पुनर्नः ॥" ( ऋ० ७।५८।५ )

पुनर्नो नमन्ते मरुतः ॥

भा०—'नंसन्ते' इत्यनवगतम् । 'नमन्ते' इत्यवगमः । "सकारोपजनः" मरुतः प्राणाः पुनः पुनरस्मान् प्रति नमन्ते ।

समग्रमन्त्रस्तदर्थश्च—

ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।

यत्सस्वर्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम् ॥

मीढुषः सुखवृष्टेः सेक्तुः शासकस्य तान् मरुतो वायुसदृशान्—प्राणवायुसदृशान् जनान्—आविवासेऽहं परिचरामि सेवे, ये मरुतो नोऽस्मान् प्रति कुवित्—बहुप्रकारेण पुनः पुनर्नमन्ते—उपकुर्वन्ति । अथ च यत् सस्वर्तो "सस्वः—अन्तर्हितनाम" ( निघं० ३ । २५ ) ततः 'तल्' प्रत्ययः समूहे भावे वा । भावे तृतीयाया लुक्, सस्वर्तया । ये चान्तर्हिततया वर्तमानं यदेनः पापं यदाविः प्रकाशं पापं लक्ष्यीकृत्य क्रुध्यन्ति तदेनं पापं तुराणां क्षिप्रकारिणां जनानां सम्मुखमवेमहे समर्पयेम स्पष्टमुक्त्वा त्यजेम ।

नसन्त ॥ २२ ॥

नसन्त इत्युपरिष्टाद् व्याख्यास्यामः ॥

भा०—'नसन्तः' इत्यनवगतं पदमनेकार्थं च, तच्चाग्रे ( निरु० अ० ७ ख० १७ ) "अभिप्रवन्त....। घृतस्य धाराः समिधो नसन्त" इति मन्त्रव्याख्यान-प्रसङ्गे व्याख्यास्यामः ।"

आहनसः ॥ २३ ॥

"ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ॥" ( ऋ० ९ । ७५ । ५ )

ये ते मदा आहननवन्तो * वञ्चनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ १५ ॥

---

* 'आहनसः—आहननवन्तो वञ्चनवन्तः' दुर्गाचार्यभाष्ये पाठो भाष्यं च 'सम्मोहयितारः' वञ्चनं सम्मोहनं भवति । अन्यमुद्रितपुस्तकेषु च । परन्तु स्कन्दमहेश्वरभाष्ये तदनुसारतो देवराजयज्वनो निघण्टुभाष्ये च वचनवन्त इत्युक्तं ब्राह्मणे—इदमाहतम्, इत्युदाहरणमाश्रित्य वचनवन्तः—इति निर्धारितम् ।

भा०—'आहनसः' इत्यनवगतम् । 'आहननवन्तः' इत्यवगमः । 'वञ्चनवन्तः—समन्तात्प्रभाववन्तः' 'आत्मव्यापिनः' इत्यर्थप्रदर्शनम् । 'आङ्पूर्वात्' "हन हिंसागत्योः" ( अदादि० ) "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) असुन् प्रत्यये 'आहनस्' पुनर्मतुप् प्रत्ययस्तस्य च लोपश्छान्दसः । "ये ते मदा आहनसः....." इति ।

समग्रमन्त्रस्तदर्थश्च—

परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभिवासयाशिरम् ।
ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ॥

हे सोम ! आनन्दरस ! परमात्मन् ! अस्माभिर्नरैः पुनानः प्राप्यमाणः स्वस्तये कल्याणाय परिधन्व—परितः सर्वत आत्मभावेन प्राप्तो भव । आशिरमाश्रयं स्वाश्रयेऽभिवासय चास्मान् । ये तव मदा हर्षा आहनसः—आहननवन्तो वञ्चनवन्तः—आत्मव्यापिनश्चेतनावन्तो महान्तः सन्ति तैरिन्द्रमस्मदीशस्य राजानं जीवात्मानं वाऽस्मभ्यं मघं सुखैश्वर्यं प्रदातुं प्रेरय ॥

अद्मसत् ॥ २४ ॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम् ॥ ( ऋ० १ । १२४ । ४ )

उपादर्शि शुन्ध्युवः, शुन्ध्युरादित्यो भवति शोधनात् तस्यैव

---

परन्तु भावार्थस्तु दुर्गाचार्येणेव प्रदर्शितः । "वचनवन्तः पाटवजनना नः सम्मोहकरा इत्यर्थः ।" पुनः 'ब्राह्मण इदमाहतम्—आहननं—वचनार्थम्' इति कथनस्य न किमपि फलम् । दुर्गाचार्यभाष्ये 'सम्मोहयितारः' स्कन्दभाष्ये 'सम्मोहकराः' तत्रोभयत्र न कश्चन भेदो जातः । वञ्चनं तु सम्मोहनं भवति किन्तु वचनं न सम्मोहनम् । तदा तु 'वञ्चनवन्तः' इति पाठः समीचीनः । 'मदाः' इत्यनेन सम्बध्यते वञ्चनम् । परन्तु 'वञ्चनवन्तः इत्यस्य'—सम्मोहयितारः, इत्यर्थं न वयं मन्यामहे वयं तु 'आहननवन्तः'—समन्ताद् गमनवन्तः "हन हिंसागत्योः" (अदादि०) तस्मादेवानुवादः 'वञ्चनवन्तः" "वञ्चति गतिकर्मा (निघं० २।१४) अर्थादात्मनि व्याप्तिमन्तश्चेतनावन्तो ज्ञानवन्तो मदा हर्षाः सोमस्य । होश्यारपुरस्थे शोधसंस्थाने हस्तप्रतिकायां १७५ इतिसंख्याकायां तु "वचनवन्तः" पाठः । १९४६ इति शकाब्दिकायाम् ॥

वक्षो भासोऽ*ध्यूढमिदमपीतरद् वक्ष एतस्मादेवाध्यूढं काये, शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुध्यव उच्यन्ते शोधनादेव, नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽद्मसदद्मान्नं भवत्यद्मसादिनीति वाऽन्नसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणां पुनरागामिनीम् ॥

भा०—'अद्मसत्' इत्यनवगतम् । 'अद्मसादिनी, अन्नसानिनी वा' इत्यर्थः । "अद" धातोः 'मनिन्' "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) अद्मन्—अद्म—अन्नं सीदति सनोति वा 'अद्मसत्' क्विपि । सनधातोः पक्षेऽपि क्विप् तत्र बाहुलि प्रत्ययेऽपि धातो र्नकारलोपश्छान्दसः पुनर्धातोस्तुक् चागमो ह्रस्वलक्षणः । अद्मसत् । उषा देवता मन्त्रस्य ।

अथ मन्त्रार्थः—

उषाः खलु शुन्ध्युवः—आदित्यस्य वक्ष इवोपदृश्यते, आदित्यः शुन्ध्युः शोधनात् तस्य वक्षसस्तमोऽपास्य शोधनात् प्रकाशनात् । शकुनिरपि शुन्ध्युरुच्यते शोधनादेव शोधयति हि पशूनामङ्गानि जलादिकं च । तस्याः—उषसः पीतवर्णत्वात् पक्षिणो वक्ष इव प्रतिभाति । नोधाः—ऋषिरिव, नोधाः—नवनं—स्तवनं मन्त्रस्तवनं दधाति वेदं दधात्यनुतिष्ठति स मन्त्रस्तवनस्य कर्ता वैदिको विद्वान् यथा स्तुत्या कामान् प्रकाशयति तथा ह्युषाः प्रियाणि रूपाणि स्वरूपाणि रूपवतां वस्तूनां स्वरूपाणि प्रकटी करोति । 'अद्मसत्—न' यथाऽन्नसादिनी—अन्नसानिनी—अन्नं पाकार्थं सीदति सनोति वा पक्वमन्नं सम्भजते च यथापात्रं विभक्तं करोति सा गृहपत्नी तद्वत् ससतः स्वपतो जनान् बोधयन्ती पुनरेयुषीणां पुनरागामिनीनां पुनरागमनशीलानां शश्वत्तमा शाश्वतिकतमा खल्वागच्छति ॥

निरुक्तयः—"शुन्ध शुद्धौ" ( भ्वादि० ) ततो युच् प्रत्ययः "यजिमनिशुन्धिदसिजनिभ्यो युच्" ( उणा० ३ । २० ) तस्य सूर्यस्य वक्षः—अध्यूढं भासो भूमित उत्थितं ज्योतिः । इदमन्यद् वक्षः—उरोऽङ्गं मनुष्यस्याप्येतस्मात् कारणादेव यतः काये देहेऽध्यूढमुत्थितं भवति । उदकचरः पक्षी खल्वपि शुन्ध्युरस्ति शोधयति हि यतो जलादिकम् । आपोऽपि शुन्ध्यवः कथ्यन्ते शोध-

* एष पाठः, होश्यारपुरस्थशोधसंस्थाने १७५ इतिसंख्याकायां हस्तप्रतिकायां च । क्वचित् 'भासा' इति पाठः स न युक्तः ।

नादेव शोधयन्ति प्रवहमाणा: वस्तुजातम् । ससतः स्वपतः "षस स्वप्ने" ( अदादि० ) तस्य शतृप्रत्ययान्तं रूपं द्वितीयाबहुवचने ॥

इष्मिण: ॥ २५ ॥

"ते वाशीमन्त इष्मिणः ।" ( ऋ० १ । ८७ । ६ )

ईषणिन इति वैषणिन इति वार्षणिन इति वाशीति वाङ्-नाम वाश्यत इति सत्याः ॥

भा०—'इष्मिणः' इत्यनवगतम् । 'ईषणिनः', यद्वा 'एषणिनः' अथवा 'अर्षणिनः' इत्यवगमः । तत्र 'ईषणिनः' "ईष गतौ" ( भ्वादि० ) "एषणिनः" "इषु इच्छायाम्" ( तुदादि० ) 'अर्षणिनः' "ऋषी गतौ–ज्ञानेऽत्र" (तुदादि०) एभ्यः "इषियुधीन्धिदसिश्याधूसूभ्यो मक्" ( उणा० १ । १४५ ) इत्यनेन मक् प्रययो धातुबहुलात तत्र–ईषधातोर्ह्रस्वत्वम्, इषधातोर्यथास्वं ऋषधातोः–ऋकारस्य–इकारः । पुनः–'इष्मः' इष्मोऽस्यास्मिन्निति मतुबर्थे 'इनिः' प्रत्ययः । इष्मिन् बहुवचने 'इष्मिणः' ते मरुतो गतिमन्तः, इच्छावन्तः, ज्ञानवन्तः । वाशीमन्तो वाग्वन्तः । "वाशी वाङ् नाम" ( निघं० १ । ११ ) "वाशृ शब्दे" ( दिवादि० ) तत इञ् "····वाशिवादिवारिभ्य इञ्" ( उणा० ४ । १२५ ) ततःस्त्रियां ङीष् ।

समग्रमन्त्रस्तदर्थश्च—

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥

ते मरुतः–ऋत्विजो विद्वांसः "मरुतः" ऋत्विङ् नाम" ( निघं० ३।१८ ) वायवो वा कं सुखं श्रियसे श्रयितुमाश्रयितुं भानुभिः–अहोभिः प्रकाशैः सह रश्मिभिः सञ्चरन्नीररश्मिभिः प्रातःकालिकैः सूर्यरश्मिभिः सह–ऋक्वभिः स्तुति-वेलाभिरुषोभिः सह संमिमिक्षिरेऽस्मान् संमेक्तुमिच्छन्ति ते सुखादयः सु सुष्ठु भोजयितारो ज्ञानामृतस्य स्वास्थ्यजीवनस्य भोजयितारः । हे वाशीमन्त उप-देष्टारो वेगवाग्वन्तो गतिमन्तोऽस्मदर्थमेषणावन्तो ज्ञानवन्तश्च भयरहिताः प्रियस्य मारुतस्य धाम्नो विद्रे वेदयितारः प्रापयितारः सन्ति ।

वाहः ॥ २६ ॥

"शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ॥" ( ऋ० ३ । ५३ । ३ )

अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते ।

भा०—'वाहः' इत्यनवगतम् । अनेकार्थश्च । अभिवहनस्तुतिं मन्यन्ते—आभिमुख्येनेन्द्राभिमुख्येनाभिप्रापणस्तुतिं मन्यते यद्वा सोमाभिषवणस्य सोमरससम्पादनस्य प्रसिद्धिपरां स्तुतिं मन्यन्ते, उभयत्र लक्ष्यद्वयेऽपि खल्विन्द्रो देवता स्तूयते । वह धातोर्णिजन्तात् 'असुन् प्रत्ययः' औणादिकः ।

समग्रमन्त्रस्तदर्थश्च—

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।

एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम् ॥

अध्वर्यो ! अहं त्वं चावामिन्द्राय शंसाव त्वं मह्यमनुजानीहि जुष्टं प्रीतं वाहः स्तुतिप्रापणं सोमरसप्रापणं वा कुर्वाव । यजमानस्येदं बर्हिरासनं सीदाथ-सीद—अथ च तथा खल्विन्द्राय शस्तं स्तुतं स्तुतिवचनं प्रशंसनीयं भवतु ।

परितक्म्या ॥ २७ ॥

परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः ॥ १६ ॥

भा०—'परितक्म्या' इत्यनवगतम् । 'रात्रिः' इत्यवगमः । उपरिष्टात्—अग्रे ( अ० ११ ख० २५ ) इत्यत्र व्याख्यास्यामः—इति यास्कवचनम् ॥

इति चतुर्थाध्याये द्वितीयः पादः ।

---

## तृतीय पादः

---

सुविते ॥ २८ ॥

सुविते सु इते सूते । सुगते, प्रजायामिति वा ।

"सुविते मा धा" ( मै० सं० १ । २ । ७ ) इत्यपि निगमो भवति ।

भा०—'सुविते' इत्यनवगतमनेकार्थश्च । 'सु इते' इति वा 'सूते' इति शब्दस्वरूपे स्याताम् । 'सु इते' इति पक्षे 'सु' उपसर्गपूर्वात् "इण्, गतौ" ( अदा० ) धातोः 'क्त' प्रत्यये रूपम् । तत्र यण् स्थाने छान्दस उवङ्—आदेशः । 'सुविते' 'सूते' इति पक्षे "षूङ् प्राणिगर्भविमोचने" ( अदा० ) धातोः 'क्त' प्रत्यये रूपम् । तत्र छान्दसस्त्वस्येडागमः "स्वरतिसूतिसूयति धूञूदितो वा

( अष्टा० ७ । २ । ४४ ) इडागमः । पुनरुवङादेशः । 'सुगते' अर्थः 'सूते' इति पक्षे प्रजायां सन्ताने, अर्थः । उदाहरणं 'सुविते मा धाः' सुगते सुखमये यद्वा पुत्रे पुत्रप्राप्तौ मां स्थापय ।

समग्रमन्त्रस्तदर्थश्च—

आ पतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे शक्मने शाक्वराय शक्मना औजिष्ठायानाधृष्टमस्यनाधृष्यं देवानामोजः । अभिशस्तिपा अनभिशस्तेन्यम् । अनु म इत्थं व्रतꣳ व्रतपतिर्मन्यतामनु दीक्षां दीक्षापतिरञ्जसा सत्यमुपगां सुविते मा धाः ॥" ( मै० सं० १।२।७ ) * ।

हे विद्युच्छक्तिसम्पन्न सेनापते ! यद्वा राजन् ! अहं सैनिकः सम्मुखतो रक्षको भवेयमिति हेतवे त्वां गृह्णामि सर्वतः पालको भवेयमिति हेतवे तनुर्देहो न पतेदिति निमिताय शक्तिसाधनसमूहाय शक्तियोगेन शक्तो भवेयमिति हेतवे, अतिस्फूर्तिबलवत्त्वाय च त्वां गृह्णामि त्वामाश्रयामि । त्वं सेनानायक ! यद्वा राजन् ! देवानां विद्युत्प्रभृतीनां दिव्यशक्तिमतां देवानामनाधृष्टमनभिभूतमनभिभवनीयमोजोरूपमसि तथानभिशस्यमनभिहिंसनीयं हिंसातश्चास्माकं पालकोऽसि, त्वं व्रतानां व्रतपतिर्दीक्षाणां दीक्षापतिश्चासि कल्याणमार्गस्य नेतारं स्वभावतः सत्यस्वरूपं त्वामुपगच्छेयं त्वं च मां सुविते सुगते सुखमये लोके यद्वा पुत्रसमृद्धौ धारय धारयसि—यद्यहं संग्रामे मृतस्तर्हि सुगते लोके स्थास्यामि जीवन् स्थितस्तदा पुत्रसमृद्धौ स्थास्यामि ।

दयते ॥ २९ ॥

दयतिरनेककर्मा ।

"नवेन पूर्वं दयमानाः स्याम" ( मै० सं० ४ । १३ । ८ ) इत्युपदयाकर्मा ।

"य एक इद् विदयते वसु" ( ऋ० १ । ८४ । ७ ) इति दानकर्मा वा विभागकर्मा वा ॥

"दुर्वर्तुर्भीमो दयते वनानि" ( ऋ० ६ । ६ । ५ ) इति दहतिकर्मा दुर्वर्तुर्दुर्वारः ।

---

* आ पतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥ ( यजु० ५ । ५ )

"विदद्वसुर्दयमानो वि शत्रून्" ( ऋ० ३ । ३४ । १ )
इति हिंसाकर्मा ।
"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबत-
मश्विना तान् । अयं हि वामूतये वन्दनाय मां वायसो
दोषा ( दोषाद् ) दयमानो अबूबुधत् ।" ( खिल०
१ । २ । २१ ) डयमान ( दयमानः ? ) * इति ॥

भा०—'दयते' इत्येकप्रकृतिकः प्रयोगोऽनेकार्थकः । 'दय' धातुरनेक-व्यापारः । तत्र यथा—

'नवेन नूतनेनान्नेन नूतनान्नस्य लक्ष्येण पूर्वं पुरातनमन्नं बीजं वपनाय रोपणाय दयमाना रक्षन्तः स्याम, उपदया रक्षा । पुराणं बीजं रक्षणीयं पुनर्नवस्योत्पत्तये । "नवेन पूर्वं दयमान...." इति समग्रमन्त्रस्यार्थस्तु ( निरु० अ० ६ । ख० ४३ ) इत्यत्रागमिष्यति ॥ विदयते विशिष्टं ददाति विभजति वा ।

"य एक इद् विदयते वसु...." इति । समग्रमन्त्रस्तदर्थश्च—

य एक इद् विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥

यः खल्वेक एवेन्द्र ऐश्वर्यवान् परमात्मा यद्वा राजा दाशुषे दत्तवते स्वसमर्पणं कृतवते यद्वा राजबलिं राजशुल्कं दत्तवते मनुष्याय विदयते विशिष्टं ददाति यद्वा विभजति वसु वासधनम्, अरे प्रिय जन ! स ईश्वरो राजा वाऽप्रतिष्कुतः—अप्रतिष्कृतोऽस्याज्योऽप्रतिकार्यः शरण्योऽस्ति । यद्वा तस्य कुतोऽपि प्रतिकारो न कर्तुं शक्यः ॥

"दुर्वर्तुर्भीमो दयते वनानि" इत्यग्निर्वनानि दयते—दहति, अत्र दय दहनार्थे । समग्रमन्त्रस्तदर्थश्च—

अर्ध जिह्वा पापतीति प्र वृष्णो गोषु युधो नाशनिः सृजाना ।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥

वृष्णो वृष्टेः कर्तुरिन्द्रस्य वैद्युताग्नेर्गोषूदकेषु युधो युध्यतो यथाऽशनिर्वज्रभूता शक्तिः सृजमाना विसृज्यमाना तेनेन्द्रेण प्रपापतीति प्रकर्षेण भृशं पतति तद्वत् पुनरग्ने

* मुद्रितेष्वमुद्रितेषु च पुस्तकेषु 'दयमानः' पाठो लभ्यते परन्तु नैष पाठो-युक्तः 'डयमानः' इति पाठेन भवितव्यम् । 'दय' धातुरत्रोड्डयनार्थे वर्तते ।

जिह्वा ज्वाला वनेषु प्रपापतीति, यथा वा शूरस्य प्रसितिः प्रबन्धनी—अबबन्धनी तथाऽग्नेः क्षातिर्नाशनी शक्तिरस्ति सोऽग्निर्भीमो वनानि दयते दहति ॥

"विदद्वसु दयमानो वि शत्रून्" इति शत्रून् विदयमानो हिंसन्, इति समग्र-मन्त्रस्तदर्थश्च—

इन्द्रः पूर्भिदातिरद् दासमर्कैर्विदद्वसु दयमानो वि शत्रून्।

ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद् रोदसी उभे ॥

इन्द्रो राजा शत्रुनगरस्य भेत्ता दासं दस्युं क्षेतव्यं पापकारिणमर्कैः सूर्यो यथा किरणैरन्धकारमपसारयति तथा ज्ञानधर्मप्रकाशैरपनयति स प्राप्तधनः शत्रून् हिनस्ति। स ब्रह्मभिर्ब्राह्मणैः सेवितः शरीरेण सम्पुष्टः प्रजाभ्यो बहुसुखप्रदो रोदसी उभे द्यावापृथिव्यौ यथा सूर्यः स्वप्रकाशेनापृणाति पूरयति तर्पयति तथा राजपुरुषप्रजापुरुषान् स्त्रीपुरुषगणो वा—आपृणाति ॥

'वायसो दोषा दयमानो अबूबुधत्' इत्यत्र दयमानः—डयमानः—उड्डयमानः। अथ मन्त्रार्थः—

हे अश्विनौ मदीययुगलात्मकपदार्थौ! नेत्रशक्तिभूतौ कर्णशक्तिभूतौ नासिका-शक्तिभूतौ प्राणापानभूतौ! यदिमे—इन्दवः सोम्या रसाः सुता निष्पन्नाः सन्ति तान् प्रातरित्वना युवां प्रातर्गमनशीलौ सजोषसा समानप्रीत्या तान् प्रातः—कालिकान् सौम्यरसान् पिबतं सेवेथाम्। वां युवयोरूतये रक्षणाय स्वास्थ्याये-श्वरस्य वन्दनाय चायं वायसः काकः पक्षी दोषा प्रातर्दयमानो डयमान उड्डयमानो मां बोधितवान्—बोधयति ॥

नूचित् ॥ ३० ॥

नूच ॥ ३१ ॥

नूचिदिति निपातः पुराणनवयोर्नूचेति च।

"अद्या चिन्नूचित्तदपो नदीनाम् ॥" ( ऋ० ६।३०।३ )

अद्य च पुरा च तदेव कर्म नदीनाम्।

"नूच पुरा च सदनं रयीणाम् ॥" ( ऋ० १।९६।७ )

अद्य च पुरा च सदनं रयीणाम्।

रयिरिति धननाम रातेर्दानकर्मणः ॥ १७ ॥

वक्तव्यम्—

भा०—'नूचित्' इति निपातः पुराणनवयोरर्थयोः 'नूच' इति निपातश्च पुराणनवयोः। इति वाक्यार्थः, इत्थं प्रत्येकं द्वयोरर्थयोर्भवति 'नूचित्' इत्यपि

पुराणनवयोः, 'नूच' इत्यपि पुराणनवयोरिति गम्यते । परन्तु यास्केनोदाहरणे द्वे द्वयोर्निपातयोर्यथासंख्यमेकैकस्मिन्नर्थे दत्ते । 'अद्य चित्' इति योगेन 'नूचित्' इति पुराणेऽर्थे । 'पुरा च' इति योगेन 'नूच' इति नवेऽर्थे । द्वयोरर्थयोः प्रत्येकनिपातस्योदाहरणं न दत्तम् । अन्यत्र तु द्वयोरर्थयोः खल्वेकनिपातस्य कल्पना कर्तुं शक्यते यास्कवचने, यथा—"आसस्राणासः····अभिव्रत ऋज्यन्तो वहेयुर्नूचिन्नु····॥" (ऋ० ६ । ३७ । ३) इत्यत्र निरुक्तम् "रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च" (निरु० १० । ३) इति 'नूचित्' इत्यस्य विषये पुराणनवयोरर्थकल्पना । अथ 'नूच' इति निपातस्य द्वयोरर्थयोः कल्पनाय खल्वेकोऽपि मन्त्र ऋग्वेदे नास्ति । परन्तु यास्कप्रदर्शिताद् यथासंख्यमुदाहरणद्वयप्रदानसामर्थ्यात् तु 'अद्याचिन्नूचित्' इत्यत्र 'नूचित्' पुराणेऽर्थे 'नूच पुरा च' इत्यत्र 'नूच' नवेऽर्थे निबध्यते । तदा 'नूचिदिति निपातो नूचेति च पुराणनवयोः' इतीत्थं यास्कवचनेन भवितव्यम् । नूचित्—पुराणः, नूच—नवः । "आसस्राणासः····वहेयुर्नूचिन्नु····" अत्र नवं च पुराणं च 'इत्यर्थो यास्कप्रदर्शितो न हि 'नूचित्' इत्यस्यैव निपातस्य किन्तु नूचित्—पुराणं पुनः, नु नवं साहचर्यात् । 'नूचित्'—पुराणम् । अत्र पृथगुदाहरणम्—

अयं द्योतयदद्युतो व्यक्तून् दोषा वस्तोः शरद इन्दुरिन्द्र ।

इमं केतुमदधुर्नूचिदह्नां शुचिजन्मन उषसश्चकार ॥

(ऋ० ६ । ३९ । ३)

'इमं सोमं चन्द्रमसं देवा अदधुर्धारितवन्तो नूचित् पुरा ।' तथा च सायणः ॥

'नूचित्, नूच' इति निपातौ पुराणनवयोरर्थयोः प्रयुज्येते । 'अद्य—साहचर्यात् 'नूचित्' पुराणस्य पुरातनस्य वाचकः । अद्य च पुरा च तदेव 'अपः—कर्म' नदीनामस्ति यत् प्रवहणम् । "अपः कर्मनाम" (निघं० २ । १) पुरा-साहचर्यात् 'नूच' नवस्य वाचकः । नूच पुरा च सदनं रयीणाम् 'नूच' सम्प्रति च पुरा काले च रयीणां सदनम् ।

"अद्याचिन्नूचित्····" इति समग्रमन्त्रस्तदर्थश्च—

अद्याचिन्नूचित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र ।

नि पर्वता अद्मसदो न सेदुस्त्वया दृढानि सुक्रतो रजांसि ॥

नदीनां यत् कर्म प्रवहणं कर्माद्यापि प्रवर्तते पुरा च यत् प्रावर्तत, कुत्र प्रवर्तते—इत्युच्यते—आभ्यो नदीभ्यो यद् गातुं गमनस्थानं मार्गं खल्विन्द्र ! हे परमेश्वर ! यद्वा सूर्य ! त्वमरदो व्यलिखो निष्पन्नं कृतवान् । अद्मसदोऽन्नस्य

प्रापयितारोऽस्य दातारो जना इव पर्वता मेघा निषेदुर्निषण्णा नियताः सन्ति ता नदीर्जलधाराः प्रदातुमिति यावत् । हे सुकर्मन् देव ! त्वया दृढानि दृढीकृतानि रजांसि लोकलोकान्तराणि भूस्थानानि जलधारा नदीर्ग्रहीतुं विद्यन्ते ॥

'नूच पुरा च....' इति समग्रमन्त्रस्तदर्थश्च—

नूर्च पुरा च सदनं रयीणां जातस्य जायमानस्य च क्षाम् ।

सतश्च गोपां भवतश्च भूरे र्देवा अग्निं धारयन् द्रविणोदाम् ॥

रयीणां दातव्यानां धनानां सदनमाश्रयोऽग्निः परमात्माऽद्य चास्ति पुरा चासीत्, जातस्योत्पन्नस्य जनिष्यमाणस्य च क्षा निवासोऽस्ति तं सतश्चाव्यक्तस्योपादानस्य भूरेर्बहुविधस्य भवतश्च यद् भवति तस्य रक्षकमग्निं द्रविणोदां धनबलज्ञानानां दातारं परमात्मानं देवा विद्वांसो धारयन्ति ॥

दावने ॥ ३२ ॥

अकूपारस्य ॥ ३३ ॥

"विद्याम तस्य ते वयमकूपारस्य दावने" (ऋ० ५।३९।२)

विद्याम तस्य ते वयमकूपारस्य दानस्य ॥ १८ ॥

भा०—'दावने' इति च 'अकूपारस्य' इति च द्वे अनवगते पदे 'दावने' इति दानस्य—इत्यवगमः 'अकूपारस्य' इति—अकुपरणस्य—इत्यवगमः । एकस्यामृचि प्रयुज्यमाने, तत्र 'दावने' इति तु षष्ठ्यर्थे चतुर्थी, तच्च 'अकुपारस्य' विशेषणम् । समग्रमन्त्रस्तदर्थश्च—

यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।

विद्याम तस्य ते वयमकूपारस्य दावने ॥

हे इन्द्र ! परमेश्वर ! यस्त्वं वरेण्यं वरणीयं द्युक्षं दीप्तिनिवासं दीप्तिमद् धनं मन्यसे तदस्मभ्यमाभर—समन्ताद् धारय । तथाभूतस्य ते तवाकूपारस्य यस्य पारो दुर्लभस्तादृशस्य दानस्य वयमधिकारं लभेमहि, यद्वा द्वितीयार्थो विधेयः । अत्यन्तदूरपारम्—अत्यन्तपूरणीयं धनं मोक्षैश्वर्यं लभेमहि ॥

निरुक्तयः—'दावने' इति "डुदाञ् दाने" ( जुहोत्यादि० ) ततः "आतो मनिन्क्वनिब्वनिपश्च" ( अष्टा० ३ । २ । ७४ ) इति वनिप् प्रत्ययः कर्मणि । 'दावन्' चतुर्थ्यां दावने षष्ठ्यर्थे चतुर्थी 'अकूपारस्य' "पृ पालनपूरणयोः" ( जुहोत्यादि ) ततो—घञ् । पारः—पालनं पूरणं वा । अकुत्सितः पारो यस्य सोऽकूपारः "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३७ ) इति दीर्घः 'कु' इत्यस्य ।

आदित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः ।
समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः ॥
कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति ।

भा०—'आदित्योऽपि भवत्यकूपारो दूरपारः, सूर्यो दूरं दूरतमं स्थानमपि स्वरश्मिभिः पूरयति । समुद्रोऽप्यकूपारस्तस्य महापारवत्त्वात् । अस्य समुद्रस्य पारो दूरं दूरं गत्वा भवति । समुद्रस्य पारोऽस्ति तत्पारे भूमिभागोऽस्तीति ज्ञाप्यते । कच्छपोऽप्यकूपार उच्यते स न कूपमृच्छत्यतः 'कूपम्—ऋ—अण्' कूपमृच्छति प्राप्नोति कूपारः 'कर्मण्यण्' (अष्टा० ३।२।१) न कूपारोऽकूपारः ।

कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा । कच्छः खच्छः खच्छदः । अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकं तेन छाद्यते ।

भा०—"कच बन्धने" ( भ्वादि० ) ततः शक्—प्रत्यय औणादिकः "अन्येभ्योऽपि दृश्यन्ते" ( उणा० ४ । १०५ ) कच्यते बध्यते सम्बध्यते नित्यं येन स कच्छः 'कच्—शः' कच्छः कच्छपस्य पृष्ठभागः—आवरणकम् । कच्छमावरणकं पाति स्वोपरि रक्षति यद्वा कच्छेन स्वात्मानं पाति रक्षति यद्वा कच्छेन पिबति जलम् । कच्छः खच्छः खमाकाशमवकाशं छादयति—खच्छदः खच्छः कच्छः । 'क छद् डः' अयमितरो नदीकच्छस्तटभाग एतस्मादेव कं जलं भवति, तेन जलेन छाद्यते हि स कच्छः ।

शिशीते ॥ ३४ ॥
"शिशीते शृङ्गे रक्षसे विनिक्षे" ( ऋ० ५ । २ । ९ )
निश्यति शृङ्गे रक्षसो विनिक्षणनाय । रक्षो रक्षितव्यमस्माद् । रहसि क्षणोतीति वा । रात्रौ नक्षत इति वा ।

भा०—'शिशीते' इत्येतदनवगतं क्रियापदम् । "शो तनूकरणे—सूक्ष्मीकरणे" ( दिवा० ) परस्मैपदी । "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) इत्यनेन श्लुः । आत्मनेपदञ्च व्यत्ययेन । धातोरोकारस्येत्वं च । 'निश्यति' इत्यवगमः । रक्षसे विनिक्षे रक्षसो विनिक्षणनाय—विहिंसनाय, शृंगे उभे शिशीते निश्यति तीक्ष्णी करोति । रक्षो रक्षितव्यो यस्मात् स्वात्मा । 'रक्ष असुन्' प्रत्ययोऽपादाने "भीमादयोऽपादाने" ( अष्टा० ३ । ४ । ७४ ) 'रहस् क्षण असुन् स च डित्, पूर्वपदस्य 'र' भावः । रक्षः । रात्रौ नक्षते गच्छति रक्षः । 'रात्रि नक्ष—असुन्' "नक्षति गतिकर्मा" ( निघं० २ । १४ ) पृषोदरादित्वात्सिद्धिः । 'रात्रि नक्ष'

मध्यभागस्य लोपे 'रक्षः' । 'विनिक्षे' इति वि नि-इत्येताभ्यामुपसर्गाभ्यां परात् "क्षणु हिंसायाम्" ( तनादि० ) "दृशे विख्ये च" ( अष्टा० ३ । ४ । ११ ) इति चकारात् 'विनिक्षे' 'के' प्रत्यये ङिति निपात्यते ।

समग्रमन्त्रस्तदर्थश्च—

"वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥"

अग्निर्भौतिकः सूर्यरूपो बृहता महता ज्योतिषा विभाति विशिष्टं प्रकाशते, महित्वा स्वमहत्त्वेनान्येभ्यः प्रकाशप्रदानगुणेन विश्वानि-आविष्कृणुते सर्वाणि वस्तूनि प्रकटितानि स्वस्वरूपे व्यक्तानि करोति । स सूर्योऽग्निरदेवीर्मायाः- आसुरीरन्धकारप्राया भ्रान्तीर्दुरेवा दुर्गमनीयाः प्रसहते प्रबाधते रक्षसे विनिक्षे यथा कश्चन ऋषभो यस्मात् स्वरक्षा विधेया तस्य विनाशाय शृङ्गे शिशीते निश्यति तीक्ष्णी करोति तथा सोऽपि स्वरश्मीन् उदयन् सन् तीक्ष्णी करोति । आधिभौतिक- क्षेत्रेऽग्रणीराजा स्वप्रतापेन महता प्रकाशते राष्ट्रे समस्तानि प्रजासुखकराणि वस्तूनि साधनानि सम्पादयति, पापाविद्याऽन्धकारमयीः प्रवृत्तीर्दुर्गमनीयाः प्रबा- धते । दुष्टजनस्य विनाशाय सेनाराजसभे चोच्चे सभे तीक्ष्णीकरोति । ऋषभो यथा पीडकस्य नाशाय शृङ्गे तीक्ष्णी करोति ॥

सुतुकः ॥ ३५ ॥

"अग्निः सुतुकः सुतुकेभिरश्वैः" ( ऋ० १० । ३ । ७ )

सुतुकनः सुतुकनैरिति वा । सुप्रजाः सुप्रजोभिरिति वा ॥

भा०—'सुतुकः' इत्येतदनवगतम् । अनेकार्थं च । 'सुतुकनः' इत्यवगमः । अभिधेयः पक्षे 'अग्निः' 'अग्नेर्विशेषणं बहुवचने सुतुका अश्वाः । 'सुतकनः' सुप्रजाः-बहुवचने सुप्रजोभिः । सुतुकः 'सुतुकनः' धातुजपक्षे मन्तव्यः सुपूर्वात् "तकति गतिकर्मा" ( निघं० २ । १४ ) डुकनः प्रत्यय औणादिको बाहुल- कात् । डित्वात्-टिलोपे 'सुत् उकन' 'सुतुकनः । सुतुकन एव सुतुको नकार- लोपश्छान्दसः । सुगमनः । सुतुकः सुप्रजाः समासपक्षे 'सु सुष्ठु तुक्-यस्य स सुतुकः ।' "तुक् अपत्यनाम" ( निघं २ । २ ) समासान्तोऽच् प्रत्ययो बहुव्रीहौ छान्दसः "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" ( अष्टा० ५ । ४ । ७५ ) प्रत्या- दिभ्योऽतिरिक्तादुपसर्गात् लोमसामभ्यां च भिन्नस्याप्युत्तरपदाद् भवत्यच् । सुसन्तानः ।

समग्रमन्त्रस्तदर्थश्च—

स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।

अग्निः सुतुकः सुतुकेभिरश्वैरभस्वद्भीरभस्वाँ एह गम्याः ॥

अग्निरिति व्यत्ययेन सम्बोधने प्रयुज्यते । हे अग्ने ! यद्वा, अग्रणायक राजन् ! त्वमस्मभ्यं महि महत्तेजः सुखं वा समन्ताद् वक्षि वहसि प्रापयसि युवत्योर्दिवस्पृथिव्योः परस्परमिश्रणधर्मवतोर्द्युलोकपृथिवीलोकयोर्मध्ये—अरतिर्गमनशीलः सन् "वहिवस्यर्त्तिभ्यश्चित्" ( उणा० ४ । ६० ) यद्वा युवत्योर्मातापित्रोर्मध्ये प्रापणीयः पुत्रः सन्—आसत्सि—आसीदसि—आसीद वा । स त्वं सुतुकः सुगमनो रभस्वान् वेगवान् सुतुकेभिः सुगमनैरश्वैरभस्वद्भिर्ज्वालारूपैः, यद्वा सुसन्तानः शीघ्रकारित्वगुणवान् सन् सुसन्तानवद्भिरश्वैरिव राज्यभारवहद्भिः शीघ्रकारित्वगुणवद्भिः सह, इहास्मद्गृहेऽस्मद्राष्ट्रे वा—आगम्याः प्राप्तो भव समन्तात् स्थिरी भव ।

सुप्रायणाः ॥ ३६ ॥

"सुप्रायणा अस्मिन् यज्ञे विश्रयन्ताम्" (यजु० २८।५)

सुप्रगमनाः ॥ १८ ॥

भा०—'सुप्रायणाः' इत्येतदनवगतम् । 'सुप्रगमनाः' इत्यर्थप्रदर्शनम् । सुप्राभ्यामुत्तरात् "अय गतौ" ( भ्वादि० ) धातोः "बहुलमन्यत्रापि-युच्" (उणा० २ । ७९) इति युच् प्रत्ययः, चित्वादेवान्तोदात्तः । "उपसर्गस्यायतौ" ( अष्टा० ८ । २ । १९ ) इति लत्वाभावश्छान्दसः ।

'सुप्रायणा अस्मिन्....' इति समग्रमन्त्रस्तदर्थश्च—

होता यक्षदोजो न वीर्यं सहो द्वार इन्द्रमवर्धयन् ।

सुप्रायणा अस्मिन् यज्ञे वि श्रयन्तामृतावृधो द्वार इन्द्राय मीढुषे व्यन्त्वाज्यस्य होतर्यज ॥

होता—अध्यात्मयज्ञस्य कर्ता—आत्मा 'न' वितर्के । यदा खलु—ओजोऽध्यात्मबलं वीर्यमिन्द्रियबलं सहः शरीरबलं यक्षत्—यजेत्—सङ्गमयेत् संयोजयेत्, चेत् तदा द्वारः—इन्द्रियाणि—तमिन्द्रमात्मानं वर्धयन्ति, न ह्रासयन्ति न पातयन्ति । अथ सुप्रायणाः—सुप्रगमनाः—सुवृत्तिकाः सत्यो द्वारः सुप्रवृत्तिकानीन्द्रियाणि—अस्मिन्नध्यात्मयज्ञे—उपयुक्तानि भवन्ति—ऋतावृधः—यथार्थाचरणं प्रवर्धयन्ति सन्ति—द्वारः—इन्द्रियाणि विशेषेण श्रयन्तु—आश्रयन्ति तस्मात्, हे

होतरात्मन् ! त्वं मीढुषे सुखस्य सेक्त्रे परमात्मने खल्वाज्यस्योपासनस्नेहस्य यजनं कुरु यतो द्वारः—इन्द्रियाणि त्वां सुखस्य सेक्त्रे परमात्मने व्यन्तु विशेषेण प्रेरयन्तु ।

अप्रायुवः ॥ ३७ ॥

"दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वे दि॑वे ।" ( ऋ० १ । ८९ । १ )

देवा नो यथा सदा वर्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि ॥

भा०—'अप्रायुवः' इत्येतदनवगतम् । 'अप्रमाद्यन्तः' इत्यवगमः । "इण् गतौ" ( अदादि० ) ततः "छन्दसीणः" ( उणा० १ । २ ) इत्यनेन—उण् प्रत्यये सति 'आयुः'—जीवनं चेतनत्वम् । प्रगतं प्रनष्टमायुर्जीवनं चेतनत्वं यस्य स प्रायुः—न प्रायुः—अप्रायुः सजीवनः सचैतन्यः सावधानोऽप्रमाद्यन् बहुवचनेऽप्रायुवः—अप्रमाद्यन्तः । अप्रायुशब्दाज्जस्, जसि 'उवङ्' आदेशो गुणस्याभावः । "जसादिषु छन्दसि वा वचनमिति गुणविकल्पाद् यणादिप्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानमिति" वार्तिकेन 'उवङ्' आदेशः । इति व्युत्पत्तिः स्वामिदयानन्दभाष्ये सायणभाष्ये चोचिता, न तु देवराजयज्वकृता मिश्रणार्थाद् युधातोर्बहुविकल्पनागौरवात् ॥

समग्रमन्त्रस्तदर्थश्च—

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।

दे॒वा नो॒ यथा॒ सद॒मिद् वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वे दि॑वे ॥

क्रतवः कर्मवन्तः "ओं क्रतो स्मर" इति सम्बोधनत्वात् 'क्रतुः' क्रतुमति प्रयुज्यते । ते क्रतवः कर्मवन्तोऽदब्धा अदम्भनीया अहिंसनीयाः—अपरीतासः—अप्रतिरोध्याः—अविपरीताः—अपरिवर्जनीया दुःखशत्रूणामुद्भेदका विदारका देवा विद्वांसो विश्वतः सर्वतो नोऽस्मान्—आयन्तु प्राप्नुवन्तु । इत्थं प्राप्नुवन्तु यथा ते देवा सदैवाहन्यहनि—दिने दिने प्रतिदिनमस्माकं वर्धनायाप्रायुवोऽप्रमाद्यन्तः सावधाना रक्षितारो भवेयुः ॥

च्यवानः * ॥ ३८ ॥

* मुद्रितपुस्तकेषु 'च्यवनः' पाठो वर्तते स न युक्तः । तस्य खल्ववगतत्वात् "च्युङ् गतौ" (भ्वादि०) ततो ल्यु प्रत्ययः, च्यवनः । च्यवानः ? इति पदं त्वनव-

च्यवन ऋषिर्भवति च्यावयिता स्तोमानां च्यवान-मित्यप्यस्य निगमा भवन्ति ।

"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।" ( ऋ० १० । ३९ । ४ )

युवां च्यवनं सनयं पुराणं यथारथं पुनर्युवानं चरणाय ततक्षथुः ॥ युवा प्रयौति कर्माणि । तक्षति करोतिकर्मा ॥

भा०—"च्युङ् गतौ" ( भ्वादि० ) ततो ल्यु प्रत्ययः कर्तरि, अन्तर्गतणि-जर्थे । च्यवानः प्रत्ययस्थस्य-अकारस्य दीर्घत्वं छान्दसम् । 'च्यवानः' इत्य-नवगतम्; 'च्यवनः' इत्यवगमः, 'च्यावयिता' इत्यर्थप्रदर्शनम् । "च्यवनः-ऋषिर्भवति" इति कथनेनात्र कश्चिद् देहधारी वैदिक ऋषिर्मन्त्रद्रष्टा न लक्ष्यते, यतोऽस्य सूक्तस्य-ऋषिः काक्षीवती घोषास्ति । कस्यापि सूक्तस्य-मन्त्रस्य वा-च्यवनो द्रष्टा नास्ति । तस्मादत्र 'ऋषिः' शब्द आधिदैविकजगतः प्रगतिशीलः पदार्थोऽस्ति "भूमिरस्यृषिकृत्" पूर्वप्रदर्शितप्रमाणेन । स च 'इन्द्रः' अत्र लक्ष्यते । शतपथे या च्यवनकथा वर्तते तत्र तस्य वैद्यावश्विनौ द्यावापृथिव्यौ दर्शिते स्तः । तस्मात् सा कथा खल्वालङ्कारिकी वर्तते । "अथ यदश्विनाविमे ह द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदं सर्वमश्नुवाताम्" ( शत० ४ । १ । ५ । १६ ) 'च्यवानः' कः, निरुक्तकारो यास्कः कथयति 'च्यवनः' एव 'च्यवानः' "च्यवनः····च्यवानमित्यप्यस्य ।" कस्तर्हि च्यवनः । उच्यते-यास्केन "च्य-वनः····च्यावयिता स्तोमानाम्" स्तोमानां पृथिव्याः परितो वर्तमानानां मेघस्त-राणां च्यावयिता पातयिता छेत्ता स च इन्द्रः-विद्युत् । "स्तोमा आसन् प्रतिधयः" ( ऋ० १० । ८५ । ८ ) "स्तोमो वै तरः" ( तां० ११ । ४ । ५ ) "तरस्तरणं जलाभिवृद्धिम्" ( सायणः, ऋ० १ । १९० । ७ ) "स्तोमाः संघाः" ( सायणः, ऋ० ७ । १९ । १० ) इन्द्रो मन्त्रस्य देवता तस्मात्-च्यवन इन्द्रः । तस्य स्थानेऽनवगतः 'च्यवानः ।' च्यवनस्य तु निगमा भवन्ति च्यवानस्यापि निगमा भवन्ति । यथा "युवं च्यवानं····" 'तक्षथुः-ततक्षथुः-तक्षति करोति-कर्मा करोतिव्यापारः, अत्र तक्षति-करोति ।

---

गतम् । एतेनैव पाठेन भवितव्यम् । आचार्यशैल्यापि खल्वेष एव पाठो लक्ष्यते । 'च्यवानः' इत्यस्योदाहरणदानसामर्थ्यात् । देवराजयज्वनापि निघण्टुभाष्ये 'च्यवानः' एव पाठः स्वीकृतः ।

समग्रमन्त्रस्तदर्थश्च—

युवं च्यवा॑नं स॒नयं॒ यथा॒ रथं॒ पुन॒र्युवा॑नं च॒रथा॑य तक्षथुः ।

निष्टौ॒ग्र्यमू॑हथुर॒द्भ्यस्परि॒ विश्वेत्ता वां॒ सव॑नेषु प्र॒वाच्या॑ ॥

हे अश्विनौ पृथिवीलोकद्युलोकौ तत्प्रभवौ ज्योतिर्मयरसमयौ धर्मौ युवां च्यवानमिन्द्रं विद्युद्देवं पुराणं सन्तं पुनर्युवानं कुरुतः, अकाशे चरणाय, स्तोमानां मेघानां छेदनाय रथमिव गमनाय, यथा रथं शिल्पी पुराणं रथं प्रसाध्य नवीनं करोति पृथिव्या रसस्य दिवो ज्योतिषो मिश्रणात्—इन्द्रो विद्युत् पुनराकाशे सम्पद्यते वर्षाकाले । अथ च तौग्र्यं जलोद्भवं विद्युद्देवं किलाद्भ्यस्परि—अप्सु मेघाच्छन्नाकाशे निर्वहतः । इत्याधिदैविकदृष्ट्या युवयोर्विश्वानि तानि कर्माणि यज्ञ-प्रसङ्गेषु प्रवाच्यानि सन्ति ।

अथवा—

"च्यवनः" इत्यनवगतम् । 'च्यवानः' इत्यवगमः । च्युधातोः शानच् प्रत्ययान्तः । 'च्यावयिता' अर्थप्रदर्शनम् । 'च्यवनः' च्युधातोः "सुपुरुवृञो युच्" (उणा० २ । ७५) धातो र्बाहुलकात्—युच् प्रत्ययः । 'च्यवनः' इत्यस्यानवगतस्य निगमास्तु भवन्ति हि परन्तु 'च्यवानः' इत्यस्यावगतस्यापि निगमा भवन्ति । यथा "युवं च्यवानं...." तर्हि—'च्यवनः' इत्यस्य निगमा नोदाहृताः, सन्ति हि बहवस्तत्र यथा—

स॒त्रा॒सा॒हो जन॑भ॒क्षो ज॑नंस॒हश्च्यव॑नो यु॒ध्मो अनु॒ जोष॑मुक्षि॒तः ।

वृ॒त॒ञ्च॒यः सहु॑रिर्वि॒क्ष्वा॑रि॒त इन्द्र॑स्य वोचं॒ प्र कृ॒तानि॑ वी॒र्या॑ ॥

( ऋ० २ । २१ । ३ )

'सत्रासहः' सत्रां शत्रुं सहते—सत्रासहः "सत्रां भ्रातृव्यं सहते सत्रासाही येन तुष्टाव" (तां० १२ । ९ । १२) सत्रासहः शत्रुसहः, जनभक्षः—जनैर्भजनीयः सेवनीयः—आश्रयणीयः, जनंसहः—जनान् सहतेऽभिभवति सः, च्यवनश्च्यावयिता प्रतिद्वन्द्विनाम्, युध्मो युद्धकुशलः, जोषमनु सेवनेन सहैवोक्षितः सुखस्य सेक्ता । वृतञ्चयो वृतस्य वर्तमानस्याभीष्टस्य चेता सञ्चेता सञ्चायिता दाता सहनशीलः प्रजासु प्राप्तो इन्द्रो राजाऽस्ति तस्य कृतानि बलानि प्रशंसेयम् ।

मन्ये॑ त्वा य॒ज्ञियं॑ य॒ज्ञिया॑नां॒ मन्ये॑ त्वा॒ च्यव॑नम॒च्युता॑नाम् ।

मन्ये॑ त्वा॒ सत्व॑नामिन्द्र के॒तुं मन्ये॑ त्वा वृष॒भं च॑र्षणी॒नाम् ॥

( ऋ० ८ । ९६ । ४ )

हे इन्द्र परमेश्वर ! यज्ञिनां यजनीयानां यजनीयं त्वां मन्येऽच्युतानामपि

च्यवनं च्यावयितारं त्वां मन्ये सत्वनां सम्भजमानानामुपासकानां केतुमाश्रयं लक्ष्यं त्वां मन्ये चर्षणीनां प्रष्टॄणां ग्रामवतां वृषभं प्रखरग्रामयन्तं यद्वा मनुष्याणां सुखवर्धकं त्वां मन्ये ।

अत्र यास्कस्य वाक्यरचना विभिन्नाऽस्ति यद्वाऽज्ञातः स्खलिता जाता भवेत्, केनापि कारणेन लेखकप्रमादादिना । 'च्यवनः' इत्यनवगतत्वेन लक्षितः 'च्यवानः' वा परन्तु पूर्वकल्पोऽस्मभ्यं रोचते । 'च्यवानस्य' निगमप्रदर्शनात् । निगमः खलु प्रकृतानामनवगतानां हि प्रदर्श्यन्तेऽत्र प्रकरणे ।

रजः ॥ ३९ ॥

रजो रजतेर्ज्योतीरज उच्यते । उदकं रज उच्यते लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते ।

"रजांसि चित्रा विचरन्ति तन्यवः" * । ( ऋ० ५ । ६३ । ५ ) इत्यपि निगमो भवति ।

भा०—रजः इत्येतदनवगतमनेकार्थं च । रजते–इति धातुनिर्देशोऽवगमार्थः । श्तिप् प्रत्ययान्तः, रजतिः–"रञ्ज रागे" ( भ्वादि० दिवादि० ) अनुनासिकलोपः श्तिपि । तस्मात् "भूरञ्जिभ्यां कित्" ( उणादि० ४ । २१७ ) इत्यनेन 'असुन्' प्रत्ययः कित् । ज्योतिः, उदकम्, लोकाः ( बहुवचने ) असृक्–रुधिरम्, अहनी–अहोरात्रे ( द्विवचने ) अभिधेयाः ।

अत्र वक्तव्यम्—"रजांसि चित्रा····"इति वचनं स्कन्दभाष्ये नास्ति, दुर्गाचार्यभाष्ये मूलपाठरूपेण तु दत्तं परन्तु व्याख्यातं न । इदं वचनं निरुक्ते कुतश्चित् संविष्टं स्यात् तयोर्दृष्टाविति प्रतिभाति । 'रजः' शब्दस्य पञ्चविधार्थत्वेऽपि नैगमानि नोदाहरणानि यास्केन दत्तानि, कुतो न दत्तानीति प्रश्नः ? तेषामुदाहरणानां प्रसिद्धत्वादिति समाधानं भवितुमर्हेत् । अस्माकं सम्मतौ "रजांसि चित्रा विचरन्ति" इति मन्त्रे श्लेषेण सर्वार्थगर्भं पदं 'रजांसि' इति । ज्योतिराद्यर्थेभ्यः पृथक् पृथक् खलु निगमा विद्यन्ते, तद्यथा–ज्योतिर्विषये–"या ते अग्ने रजःशया तनूर्वर्षिष्ठा ।" ( यजु० ५ । ८ ) हे अग्ने ! ते तव या तनूः–रजःशया रजसि ज्योतिषि सूर्यज्योतिषि शेते, यद्वा यस्यां तन्वां ज्योतिः शेते प्रवृद्धतया । उदकविषये–"भुवो यज्ञस्य रजसश्च नेता····" ( ऋ० १० । ८ । ६ ) हे अग्ने त्वं यज्ञस्य रजसः–उदकस्य च नेता भुवो भवसि । लोकानां विषये–"त्वया हुतानि

* होश्यारपुरस्थशोधसंस्थाने १७५ इतिसंख्याकायां १६४६ इति शकाब्दिकायां हस्तप्रतिकायां वर्तते पाठ एषः ।

सुक्रतो रजांसि" ( ऋ० ६ । ३० । ३ ) हे सुक्रतो शोभनकर्मन्निन्द्र ! त्वया रजांसि दृढानि लोका दृढीकृताः । असृग्विषये—"मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति" ( वासिष्ठ ध० शा० २८ । ४ ) अह्नो विषये—"अहश्च कृष्ण-महरर्जुनं च विवर्तेते रजसी" ( ऋ० ६ । ९ । १ ) अहः कृष्णं रात्रिः, अहः—अर्जुनं दिनं ते उभे रजसी अहनी । तत्र सर्वेष्वर्थेषु रजःशब्दस्य दृढैपिकत्वेन मन्त्रार्थयोजनासम्भवश्चेत्थम्—

रथं युञ्जते मरुतः शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु ।

रजांसि चित्रा विचरन्ति तन्यवो दिवः सम्राजा पयसा न उक्षतम् ॥

हे मित्रावरुणौ ! वृष्ट्यर्थं मेघस्य सम्पादकप्रेरकौ वायुविशेषौ ! जगतः प्राणापानौ ! "मित्रावरुणौ त्वा वृष्ट्यावताम्" ( शत० १ । ८ । ३ । १२ ) "प्राणापानौ मित्रावरुणौ" ( तां० ६ । १० । ५ ) तन्यवः सूक्ष्माः प्रसरणशीला रश्मयः "मरुतो रश्मयः" ( तां० १४ । ४२ । ९ ) सुखं सुखकरं रथं रमणीयं जलानां रमणस्थानं मेघं युञ्जते शुभे शुभकर्मणि यज्ञे कृते सति शूरो न यथा पराक्रमी जनो गविष्टिषु गवां गमनशीलानामुदकधाराणां प्रेरणासु—इष्टिषु युङ्क्ते, चित्राणि विविधानि ज्योतींषि यद्वा—उदकानि किंवा लोकलोकान्तराणि पुनर्वा प्राणिनां नाडीषु रुधिराणि यद्वाऽहानि विचरन्ति । तस्माद् युवां दिवः—मेघमण्डलस्य सम्राजौ स्वामिनाविव सम्यग्राजमानपदार्थौ पयसा वृष्टिजलेनास्मान् सिञ्चतम् ॥

हरः ॥ ४० ॥
हरो हरतेर्ज्योतिर्हर उच्यते । [ उदकं हर उच्यते लोका हरांस्युच्यन्ते । असृगहनी हरसी उच्येते ]
"प्रत्यग्ने हरसा हरः शृणीहि" (ऋ० १० । ८७ । २५)
इत्यपि निगमो भवति ॥

भा०—'हरः' इत्यनवगतमनेकार्थं च । "हृञ् हरणे" ( भ्वादि० ) ततोऽसुन् प्रत्ययः "सर्वधातुभ्योऽसुन्" ( उणादि० ४ । १८९ ) ज्योतिर्हरो हरति-तमः, उदकं हरो हरति पिपासां मलं तापं च । लोका हरांसि हरन्ति—आहरन्ति समन्ताद् हरन्ति धारयन्ति गृह्णन्ति वा भूतानि । असृक्—रुधिरं हरो हरति मैथुन्यदोषम् । अहनी हरसी अहो—रात्रे हरतो निद्राश्रमौ—अहर्निद्रां हरति, रात्रिः श्रमम् ।

अत्रापि "प्रत्यग्ने हरसा हरः—" इति मन्त्रस्य गतिस्तथैव । स्कन्दभाष्ये,

दुर्गाचार्यभाष्ये न स्पृष्टो मन्त्र एषः । हरो ज्योतिस्तेजः । अत्र प्रमाणम्—'यत्तेऽग्ने हरस्तेनाहं हरस्वी भूयासम्'' ( तै० सं० ३ । ५ । ३ । २ ) अग्ने यत्ते हरस्तेजो ज्योतिस्तेनाहं तेजस्वी ज्योतिष्मान् भूयासम् । "एतद्वीर्यं हरः सपत्नानां संवृङ्क्ते" ( शत० ४ । ५ । ३ । ४ ) कोष्ठान्तर्गतानामर्थानामुदाहरणानि नैगमानि नोपलभ्यन्ते, सायणभाष्ये कोष्ठात् पूर्वं एव पाठ उपलभ्यते । 'रजः' शब्देन सह पठनात् लेखकेन प्रमादात् कल्पितः पाठ एष इति सम्भवः । यद्वाऽत्रैव मन्त्रे सर्वेऽर्थाः श्लैषिकत्वेन सम्भाव्यन्ते रक्षः प्रति । अग्निं प्रति त्वेको हरो ज्योतिः—तेज एवार्थः, रक्षः प्रति सर्वेऽर्थाः । तथाहष्टया—

समग्रमन्त्रस्तदर्थश्च—

प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति ।

यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ॥

भा०—हे अग्ने ! त्वं स्वकीयेन हरसा ज्योतिषा तेजसा यातुधानस्य, यातुं वधं यो दधाति धारयति श्रेष्ठाय स यातुधानो दुष्टः क्रूरो जनः "यातयति वधकर्मा" (निघ० २ । १९) तस्य तथा यो रक्षसो रक्षन्त्यस्मादात्मानं तस्य हिंसकस्य हरो ज्योतिस्तेजो यद्वा जलं जीवनरसं यद्वा लोकं निवासं यद्वाऽसृजं रक्तमथवाऽहरायुषोदिनं विश्वतः सर्वतः प्रतिश्रृणीहि—नाशय । तथा बलं वीर्यं च विरुज—विभङ्ग्धि ।

जुहुरे ॥ ४१ ॥

"जुहुरे विचितयन्तः" ( ऋ० ५ । १९ । २ )

जुह्विरे विचेतयमानाः ॥

भा०—'जुहुरे' इत्येतदनवगतम् । 'जुह्विरे' इत्यवगमः । 'हु दानादनयोः । आदाने चेत्येके'' ( जुहोत्या० ) ततो लिटि प्रथमपुरुषबहुवचनस्य 'इरेच्' इति प्रत्ययस्य स्थाने "इरयो रे—छन्दसि" (अष्टा० ६ । ४ । ७६) रे प्रत्ययः, जुहुरे हुवन्तः—जुह्वति विशिष्टं चेतयन्तः ।

समग्रमन्त्रस्तदर्थश्च—

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति ।

आ दृळ्हां पुरं विविशुः ॥

विचितयन्तो ये विचेतयमाना विवेकिनो ध्यानवन्तो जनाः, अग्निं ज्ञानप्रकाशस्वरूपं परमात्मानमनिमिषं निरन्तरं जुहुरे जुह्विरे स्वात्मनि गृह्णन्ति धारयन्ति यद्वा—अग्नौ परमात्मनि स्वात्मानमनिमिषं नित्यं जुह्वति समर्पयन्ति ते नृम्णं बलमात्मसामर्थ्यं रक्षन्ति, पुनर्दृढां स्थिरां शाश्वतीं पुरं मोक्षाख्यामाविशन्ति ।

व्यन्तः ॥ ४२ ॥

व्यन्त इत्येषोऽनेककर्मा । "पुदं देवस्य नमसा व्यन्तः" (ऋ० ६ । १ । ४) इति पश्यतिकर्मा "वीहि शूर पुरोडाशम्" (ऋ० ३ । ४१ । ३) इति खादतिकर्मा "वीतं पातं पर्यस उस्रियायाः" (ऋ० १ । १५३ । ४) अश्नीतं पिबतं पयस उस्रियायाः । उस्रियेति गोनाम । उस्राविणोऽस्यां भोगाः । उस्रेति च ।

भा०—वक्तव्यम्—'व्यन्तः' इत्येषोऽनेककर्मा, इति सूचित्वा स्वरूपतः 'व्यन्तः' पश्यतिकर्मा, इति तु दत्तं परन्तु–अन्यार्थेषु 'वी' धातोरेवोदाहरणानि बहूनि सन्ति तस्य प्रयोगबाहुल्यात् । तत्र पूर्वं 'व्यन्तः' इत्यस्योदाहरणैर्भवितव्यं पश्चादन्यान्यपि दातुं युज्यन्ते । अत्र किमपि स्खलनं भवेत् । तत्स्खलं पूर्यतेऽत्र—

'व्यन्तः' इत्येषोऽनेककर्मा ।

"पदं देवस्य नमसा व्यन्तः" इति पश्यतिकर्मा, धातुप्रयोगः 'वी' धातोः शतृप्रत्ययान्तं पदं बहुवचने । "वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु" (भ्वादि०) एष्वर्थेषु पश्यतिकर्मत्वं न विद्यते, तस्मादत्र 'व्यन्तः' इत्यस्येदमेकमेवोदाहरणं दत्तं तस्य भिन्नार्थत्वात्, अन्यार्थेषु 'व्यन्तः' इति भवतु नात्र विप्रतिपत्तिः, भवत्येष प्रयोगोऽन्यार्थेष्वपि तद्यथा—"अभ्रातरो न योषणो व्यन्तः" (ऋ० ४ । ५ । ५) व्यन्तो गच्छन्तः–उपमायाम्' अभ्रातरो योषाणो यथा पितृगृहं गच्छन्ति तथा प्रतिगच्छन्तोऽत्र 'व्यन्तः' गतिकर्मा । "नू इन्द्र राये वरिवस्कृधी नु आ ते मनो ववृत्याम मुघाय । गोमदश्वावद्रथवद्व्यन्तो यूयं पात स्वस्तिभिः सदा नः" (ऋ० ७ । २७ । ५) गोमदश्ववद्रथवद् रायं धनं व्यन्तः कामयमानाः 'व्यन्तः' इति कान्तिकर्मा । "भक्तमभक्तमवो व्यन्तो अजरा अग्नयः" (ऋ० १ । १२७ । ५) भक्तं भजनीयं खाद्यमभक्तमभजनीयमखाद्यं सर्वमजरा अग्नयो व्यन्तः खादयन्तः, अत्र 'व्यन्तः' इति खादतिकर्मा । धातुपाठे 'वी' धातोरर्थेषु 'व्यन्तः' इति पदस्योदाहरणानि तु वेदे सन्ति हि परन्तु तद्भिन्नार्थोऽपि 'व्यन्तः' इति पदं पश्यतिकर्मणि वर्तते । 'व्यन्तः' इति पदाद् भिन्नानि 'वी' धातोः पदानि निर्दिष्टान्येषु प्रयुज्यन्ते तद्यथा—"वीहि शूर पुरोडाशम्". (ऋ० ३ । ४१ । ३) शूर पुरोडाशं वीहि खाद । अत्र 'वी' खादनेऽर्थे "वीतं पातं पर्यस उस्रियायाः" (ऋ० १ । १५३ । ४) 'वीतमश्नीतं' पिबतं पयसो दुग्धमुस्रियायाः–गोः । उस्रा–उस्रियाः, अस्यां भोगाः–दुग्धदधिनवनीतघृतपायसा भोज्याः पदार्थाः–उत्स्राव्या यद्वा मानवस्योत्स्राविण उद्भेरयितार-

उन्नेतारः सन्ति । उत् "स्नु गतौ" ( भ्वादि० ) ततो डः प्रत्ययः "अन्येभ्योऽपि दृश्यते" वार्तिकेन ( अष्टा० ३ । २ । १०१ ) ।

अथ यास्कोदाहृता मन्त्रा व्याख्यायन्ते, तत्र "पदं देवस्य नमसा व्यन्तः" इति समग्रमन्त्रस्तदर्थश्च—

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।

नामानि चिद् दधिरे यज्ञियानि भद्रायां ते रणयन्त सन्दृष्टौ ॥

देवस्य देवत्वेन सदा वर्तमानस्याग्नेः परमात्मनः पदं स्वरूपं नमसा निजसमर्पणेनोपासनेन व्यन्तः पश्यन्तः श्रवस्यव आत्मनः श्रवोऽन्नमाध्यात्मभोजनमिच्छवोऽमृक्तमन्यैरबाध्यम्—आपन् प्राप्नुवन्ति, तस्य परमात्मनो देवस्य नामानि यज्ञियानि सङ्गमनीयानि धारयन्ति ये भद्रायां कल्याण्यां स्तुतौ सन्दृष्टौ साक्षाद्दर्शने रणयन्तो रममाणास्तिष्ठन्ति ॥

'वीहि शूर पुरोडाशम्' इति समग्रमन्त्रस्तदर्थश्च—

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद ।

वीहि शूर पुरोडाशम् ॥

हे ब्रह्मवाहः ! ब्रह्मणा स्तोत्रेण स्तुतिवचनेन प्राप्यते स ब्रह्मवाहाः—सम्बोधने ब्रह्मवाहः ! ब्रह्मोपपदात् "वह प्रापणे" ( भ्वादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) इत्यनेन 'असुन्' प्रत्ययो णिच्च बाहुलकात्—छन्दसि । ब्रह्मवाहः ! स्तुत्य ! इन्द्र ! राजन् ! इमानि ब्रह्माणि स्तुतिवचनानि त्वदर्थमस्माभिः क्रियन्तेऽतोऽस्मिन् बर्हिषि यज्ञे त्वमासीद, हे शूर ! पराक्रमिन् ! पुरोडाशं यज्ञियं भोज्यं वीहि खाद ॥

'वीतं पातं पयस उस्रियायाः' इति समग्रमन्त्रस्तदर्थश्च—

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।

उत नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः ॥

हे मित्रावरुणौ—अध्यापकोपदेशकौ ! मद्यासु हर्षणीयासु प्रसादयितव्यासु विक्षु प्रजासु पुत्रशिष्यरूपासु—अस्मासु वा युवाभ्यां युवयोरर्थमन्धोऽन्नं गावो देवीः—देव्यः—आपश्च पीपयन्त—आप्यायन्तु, उतापि नोऽस्माकमस्य शिक्षणस्य पूर्व्यः पुरातनः पतिरध्यक्षः पालको रक्षको विद्वान् शिक्षां दन्—ददत् प्रयच्छन् वर्तते 'दन्' इति "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७३ ) इत्यनेन लुक् । तेन सह युवां पुरोडाशं वीतं खादतमुस्रियायाः—गोः पयसः—दुग्धस्य पात्रं दुग्धं वा पातं पिबतम् ॥

क्राणाः ॥ ४३ ॥

"त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।

गोभिः क्राणा अनूषत * ॥"

गोभिः कुर्वाणा अस्तोषत ॥

भा०—'क्राणाः' इत्येतदनवगतम् । 'कुर्वाणाः' इत्यवगमः । कृ धातोः शानच् प्रत्यये विकरणस्य–उकारस्य लुक् ॥

मन्त्रार्थः—

हे इन्द्र ! सुनीथासः सुशोभनो नीथो ज्ञानरश्मिर्येषां ते शोभनज्ञाननेत्राः सुविज्ञानाः सूक्ष्मदर्शिनो वसूयवोऽध्यात्मं धनं कामयमाना मतिभिर्मननीयाभिर्ध्यानधारणाभिः सुते निष्पन्नेऽन्तःकरणे हृदये वा गोभिर्मन्त्रवाग्भिः स्तुतिभिरध्यात्मयज्ञं कुर्वाणास्त्वामनूषत–अस्तोषत–स्तुवन्ति । "णू स्तवने" ( तुदादि० ) लुङि सिचि प्रथमपुरुषस्य बहुवचने रूपं व्यत्ययेन–आत्मने पदम् ॥

वाशी ॥ ४४ ॥

"आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः" ( ऋ० १० । १०१ । १० )

आ सिञ्च हरिं द्रोरुपस्थे । द्रुममयस्य हरिः सोमो हरितवर्णः । अयमपीतरो हरिरेतस्मादेव । 'वाशीभिस्तक्षताश्मन्मयीभिः ।' वाशीभिरश्मयीभिरिति वा वाग्भिरिति वा ॥

भा०—'वाशी' इत्येतदनवगतमनेकार्थं च । "वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्" ( उणा० ४ । १२५ ) इत्यनेन "वस स्नेहच्छेदापहरणेषु" ( चुरादि० ) छेदनार्थात् 'वस' धातोः–इञ् प्रत्यये । वासिश्छेदिका कुठारिका सा वासिरेव 'वाशिः' अत्र वर्णविकारेणेत्येकोऽर्थः, यद्वा "वाश्ट शब्दे" ( दिवादि० ) तत इञ् प्रत्यये 'वाशिः' शब्दो वागर्थे । उभाभ्याम् "कृदिकारादक्तिनः–वा" ( अष्टा० ४ । १ । ४५ ) इति ङीष् स्त्रियाम्–इति 'वाशी ।' छेदिका वाणी च "वाशी वाङ्नाम" ( निघं० १ । ११ ) अनेकार्थत्वात् पदनामसु पठितः वाशीशब्दः । मन्त्रे 'तु, ईम्' इत्यनर्थकौ पदपूरणौ ।

---

* "गोभिः क्राणा अभिद्यवः" (ऋ० १ । १३४ । २) तत्र "क्राणा–हूयमानाः" (सायणः) ।

समग्रमन्त्रस्तदर्थश्च—

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परिष्वजध्वं यथा दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥

द्रोः—द्रुममयस्य काष्ठमयस्य पात्रस्य कलशस्योपस्थे छिद्रे हरिं सोमं समन्तात् सिञ्च, अश्मन्मयीभिर्वाशीभिस्तक्षत, पाषाणमयीभिर्वाशीभिश्छेदिकाभिस्तक्षत संसाधयत । दशभिः कक्ष्याभिरङ्गुलिभिः सोमं परिष्वजध्वं परिपीडयत निश्चोडयत, उभे धुरौ प्रति वह्निं युनक्त, लुप्तोपमावाचकालङ्कारः । यथा शकटस्य धुरौ प्रति वोढारमनड्वाहं युञ्जन्ति तथा—एतल्लोकपरलोकौ प्रति तद्वहनार्थं सोमं सोमरसं योजयत स्वान्तरे प्रवेशयत पिबत । यद्वा यस्मिन् द्रवन्ति प्राणा रक्तधाराश्च स द्रुर्देहः "ऊर्ध्वमूलोऽवाक्शाखः" (कठो०) देहस्तस्य द्रुममयस्य देहस्योपस्थे छिद्रभूते हृदयप्रदेशे हरिं तापहरं सोमं परमात्मानं तदानन्दरसं समन्तात् सिञ्च, व्यापनशीलाभिर्वाग्भिः स्तुतिभिस्तक्षत संस्तुत । दशभिः कक्ष्याभीरज्जुभिर्बन्धनीभिः पञ्चज्ञानेन्द्रियैर्वागिन्द्रियेण मनोबुद्धिचित्ताहङ्कारैश्च वह्निं वोढारमश्वमिव उभे धुरौ मर्त्यामृतलोकौ संसारमोक्षौ प्रति सोममानन्दरूपं परमात्मानं युनक्त संयोजयत । सोमो हरितवर्णः, अयमपीतरो हरिर्लोके वानरो हरितवर्णत्वात् खलु हरिः ॥

विषुणः ॥ ४५ ॥
"स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥" ( ऋ० ७ । २१ । ५ )
स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः ॥ शिश्नं श्नथतेः । अपिगुर्ऋतं नः । सत्यं वा यज्ञं वा ॥ १९ ॥

भा०—'विषुणः' इत्यनवगतम् । 'विषमः' इत्यवगमः । विषुणः—विषमः, षकारेण युक्तस्याकारस्य 'उकारः' मकारस्य णकारः, यद्वा 'षम' इत्यस्य 'षुण' इत्यादेशः पृषोदरादित्वे । अथवा 'विषमस्य' इत्यर्थप्रदर्शनम् । 'वि' उपसर्गात् "षुञ् अभिषवे" ( स्वादि० ) ततो निष्ठातकारस्य नकारोऽविहितोऽपि छान्दसः 'विषुणः—विरुद्धोऽभिषुतो विषम इत्यर्थः । शिश्नं श्नथधातोः "श्नथति वधकर्मा" (निघं० २ । १९) श्नथधातोः "अन्येभ्योऽपि दृश्यते" (अष्टा० ३ । २ । १०१) डः प्रत्ययः । अभ्यासश्छान्दसः । शिश्नम्—उपस्थेन्द्रियम् ।

समग्रमन्त्रस्तदर्थश्च—

न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥

हे शविष्ठ ! बलवत्तम ! इन्द्र ! राजन् ! नोऽस्माकं यज्ञं सत्यसदनं यातवः—यातयितारो वधकाः "यातयति वधकर्मा" ( निघं० २ । १९ ) न जूजुवुः प्राप्नुयुः । वेद्याभिर्लाभयित्रीभिः क्रियाभिः—वन्दना वन्दनानि वञ्चकानि रक्षांसि न प्राप्नुयुः । स यो विषुणस्य विषमस्य कुटिलस्य जन्तोर्बलं यद्वा तथाभूतं तं जन्तुं शर्द्धत्—उत्सहतां—बाधतां सोऽर्यः स्वामी भवतु । शिश्नदेवा शिश्नेन ये दीव्यन्ति ते शिश्नदेवा अब्रह्मचर्या व्यभिचारिणो नोऽस्माकं यज्ञं सत्यसदनं मा—अपि गुः—न हि प्राप्नुवन्तु ॥

जामिः ॥ ४६ ॥

"आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि । उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥" ( ऋ० १० । १० । १० )

आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि । जाम्यतिरेकनाम । बालिशस्य वा । असमानजातीयस्य * वोपजनः । उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ २० ॥

भा०—'जामिः' इति पदमत्रानिश्चितार्थत्वात्—पदनामसु पठितं पूर्वं खलूदकनामसु, अङ्गुलिनामसु निश्चितार्थं पठितम् । तत्रोभयत्र "चमु छमु जमु अदने" ( भ्वादि० ) यथा जम्यते जलं तथा जम्यतेऽपि, तस्मात्—जामि जलं, जम्यतेऽद्यते भोजनं याभिस्ता जामयोऽङ्गुलयः, इति तु पूर्वं गतम् । अथ—"भगिनी जामिरन्येऽस्यां जनयन्ति जाम्—अपत्यम्, यद्वा जामिर्निर्गमनप्राया भवति—इति जमतेर्गतिकर्मणः" ( निरुक्त० ३ । ६ ) अत्र चतुर्थाध्याये पदनामसु तु जामिशब्दस्तद्भिन्नार्थेषु त्रिषु निरुच्यते । अतिरेकनाम, बालिशस्य नाम, असमानजातीयस्योपजनः । जामिशब्दस्य वाच्यानि खलु—अतिरेकस्य नाम—अतिरेको यो प्रवृद्धः प्रगतिशीलो जमधातुमनुसरन्नर्थः । बालिशस्य नाम—अज्ञ इवाकिञ्चित्करो बालिशः । असमानजातीयस्य भेदकस्य व्यवधायकस्य नाम—उपजनो मध्ये—आगतः ।

* 'क्वचित् समानजातीयस्य' इति पाठः । दुर्गाचार्यभाष्ये 'असमानजातीयस्य' इत्येव पाठो विद्यते स च युक्तः, स्वामिदयानन्दस्वीकृतः पाठ एष एव वैदिकयन्त्रालये प्रकाशिते निरुक्ते । स्कन्दस्वामिना पक्षेऽन्तिमः पाठ एष दत्त एव ।

१ २ ३ १ ३

अतिरेको योऽतिरिच्यते प्रवृद्धयते प्रवृद्धः। तस्योदाहरणम्। "उप त्वा जामयो
१ २ १ २ ३ १ १ ३ १२ २२

गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरम्॥" ( सा० पू० १ । १ । ३ )
यथा—हविष्कृतो यजमानस्य हवींषि वायोरनीके वायुदले—उपास्थिरन्—उपतिष्ठन्ते
वृष्टिकरणाय तथा जामयो गिरः प्रवृद्धाः सत्य एकैकस्योपर्युपरिवर्तमानाः
परस्परमग्रगतिं प्रेरयन्त्यः सत्यः परमात्मन्! त्वामुपातिष्ठन्तानन्दामृतप्रवर्षणाय॥
अथ बालिशस्य—बालोऽज्ञोऽसमर्थोऽस्मिन्नस्तीति बालि बालकार्यं तस्मिन् यः शेते
तत्र रमते यः स बालिशोऽज्ञः। यद्वा बालः सूक्ष्मकेशः सोऽस्मिन्नस्ति कार्ये बालि
कार्यं तस्मिन् शेते तिष्ठति स तुच्छो बालिशः। तस्योदाहरणम् "कण्वा इन्द्रं यदक्रत
स्तोमैर्यज्ञस्य साधनम्। जामि ब्रुवत आयुधम्॥" ( ० ८ । ६ । ३ ) यदा
कण्वा मेधाविनो विद्वांसो यज्ञस्याश्वमेधस्य राष्ट्ररक्षणयज्ञस्य साधकं साधयि-
तारमिन्द्रं विद्युच्छक्तिमन्तं राजानं स्तोमैः स्तुतिप्रशंसावचनैरक्रत स्वीकुर्वन्ति तदा
शत्रोरायुधं जामि बालिशं तुच्छमकिञ्चित्करं ब्रुवत ब्रुवन्ति घोषयन्ति मन्यन्ते॥
असमानजातीयोपजनो जामिः—इत्यस्योदाहरणं प्रस्तुतो मन्त्रः "आ घा ता गच्छ....."
अस्मिन् सूक्ते वैवस्वतयोर्यमयम्योरहोरात्रयोः पतिपत्नीभूतयोः संवाद आलङ्का-
रिकः। अहोरात्रे रात्रिदिवसौ पृथिवीगोलं मध्ये कृत्वा तस्य परितः—भ्रमतः परि-
क्राम्यतः, गार्हस्थ्यमिव संयोगमाकांक्षन्तौ परन्तु मध्ये पृथिवीगोलस्तिष्ठति न
यथार्थसंयोगो भवति। रात्रिर्बहुकामयते दिवससंयोगं दिवसः कथयति नेदानीं
संयोग आवयो भविष्यति, भविष्यति तु परन्तु कदेत्यत्रोच्यते यत्—

मन्त्रार्थः—

घा—अपि तानि युगानि—उत्तराणि प्रलयसमीपानि—आगच्छन्—आगमिष्यन्ति
यत्र येषु युगेषु जामयोऽसमानजातयः—आवां तु कालौ स्वः, कालभिन्ना येऽ-
समानजातीया व्यवधायकाः पृथिवीपिण्डादयोऽजामि जामिराहित्यमव्यवधाय-
कत्वं करिष्यन्ति, आवयोर्मध्याच्चूर्णीभूय नक्ष्यन्ति, परन्तु नेदानीमावयोः संयोगो
भविष्यति। इदानीं संयोगार्थं तु सुभगे रात्रे! मत्तो भिन्नं पतिमिच्छ, तस्मै
वृषभाय वीर्यसेक्त्रेऽन्यस्मै पत्ये बाहुमुपधेहि—उपप्रसारय॥

निरुक्तयः—"जनी प्रादुर्भावे" ( दिवादि० ) ततः "जनिघसिभ्यामिण्"
( उणादि० ४ । १३० ) इति जामिः—जाया, भगिनी "जमु अदने" ( भ्वादि० )
ततः पूर्ववत् 'इण्' प्रत्ययो धातुबाहुलकात्। जामि—उदकमदनीयं पानीयम्।
"जमति गतिकर्मा" ( निघं० २ । १४ ) जम—इण् प्रत्ययः पूर्ववत्, जामिः
अगतिशीलोऽतिरेकः प्रवृद्धः। 'जमु अदने' इत्यत एवं पूर्ववत् जामि—बालिशं

तुच्छमदनीयं तुच्छं भवति । जामिः—असमानजातीयः—व्यवधायको बाधकः । जमु अदने इत्यतः, यद्वा जमति गतिकर्मा—इत्यतः, अथवा जनधातोर्वा यथायोग्यं जामिशब्द उत्प्रेक्ष्यः । अस्य विशिष्टं विवरणं मया रचिते "यमयमी सूक्तम्" इति पुस्तके 'यमपितृपरिचयः' इति पुस्तके वा द्रष्टव्यम् ॥

पिता ॥ ४७ ॥

"द्यौ र्मे पिता जनिता नाभिरत्र बन्धु र्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो र्योनिरन्तरत्रा पिता दुहितु-र्गर्भमाधात् ॥" ( ऋ० १ । १६४ । ३३ )

द्यौर्मे पिता पाता वा पालयिता वा जनयिता नाभिरत्र बन्धुर्मे माता पृथिवी महतीयं बन्धुः सम्बन्धनान्नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते सम्बन्धव इति च ज्ञातिः संज्ञानात् । उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान उत्तान ऊर्ध्वतानो वा तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः ॥

भा०—'पिता' इत्येतदनवगतम् । 'पाता' यद्वा 'पालयिता' इत्यवगमः । "पा रक्षणे" ( अदादि० ) "पाल रक्षणे" ( चुरादि० ) ततः 'तृच्' प्रत्ययः "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृदुहितृ" ( उणा० २ । ९६ ) इत्यनेन तृचि निपात्यते "पा" इत्यस्य 'पाल' यद्वा इत्यस्य 'पि' भावो निपातनात् ॥

मन्त्रार्थः—

अत्र संसारे द्युलोकः पर्जन्यो मेघो मम पिता—पाता पालयिता जनिता जनयिता "जनिता मन्त्रे" ( अष्टा० ६ । ४ । ५३ ) जनधातोर्णिजन्तात् तृचि निपातनमिदम् । जनयिता—उत्पादयिता । नाभिः सन्नहनं रसप्रदानबन्धनेन बन्धुर्बन्धनी—जायमानस्य स्वेन सह बन्धनेन बन्धयित्री माता मातृभूता महतीयं पृथिवी खल्वस्ति पृथिवी ह्याश्रयस्य दात्री जीवायौषधिरसप्रदानेन । उत्तानयोः परस्परमुत्तानयोर्दूरंगतयोर्द्यावापृथिव्योः "चम्वौ द्यावापृथिवी नाम" ( निघं० ३ । ३० ) योनिः—मध्यभागोऽन्तरिक्षम् । अत्रान्तः—अस्मिन्नन्तरिक्षरूपयोनौ पिता पर्जन्यः पिता दुहितुः पृथिव्या गर्भं दधाति जलवर्षणेन । पाता पिता

युलोकः पालयिता पिता पर्जन्यः । स जलमन्तरिक्षद्वारेण पृथिव्यामोषधि-बीजमादधाति ।

निरुक्तय:—'नाभिः'—"णह बन्धने" ( दिवा० ) इञ् प्रत्ययः "नहो भश्च" ( उणा० ४ । १२६ ) सम्रुपसर्गस्त्वर्थविधाने । सम्यक् नहनम् । नाभ्या सन्नद्धाः संवेष्टिताः परिरक्षिता गर्भा जायन्ते—इति हेतोर्नाभिर्नामेति कथयन्ति विद्वांसः शरीरशास्त्रिणः । एतस्मात्कारणादेव ज्ञातयो बान्धवः कुटुम्बिनश्च सनाभयः सबन्धव एकबन्धनाः । ज्ञातिः संज्ञानात् पित्रा मात्रा वा सह समाना-कृतिमत्त्वात् । 'उत्तानः'—उत्ततानः—उत्तमूर्ध्वं वा तानो यस्य स उत्ततानः—उत्तानः । 'उद्' उपसर्गे तन धातोर्क्त प्रत्यये भूते रूपम्—उत्तः, उत्त उत्ततः, यद्वा उत्तत-स्तानः—उत्तानः "प्रादयः कार्थे" भाष्यप्रमाणात् प्रगत आचार्यः प्राचार्य इति यथा ।

शंयोः ॥ ४८ ॥

"अथा नः शंयोररपो दधात" ( ऋ० १० । १५ । ४ )

रपो रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् ।

अथापि शंयुर्बार्हस्पत्य उच्यते । शंयुः, सुखयुः ।

"तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" ( मैत्रा० सं० ४ । १३ । १० ) इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ २१ ॥

भा०—'शंयोः' इत्यनवगतं तथानेकपदत्वेनैकपदत्वेन च संदिग्धम् । अनेक-पदत्वेनानेकार्थमेकपदत्वेनैकार्थकम् । 'शम् । योः' इत्यनेकपदत्वेन विभागः पदपाठो वा । 'शंयोः' एकपदत्वे पदपाठः । तत्रानेकपदत्वे तावत् । 'शम्' इति शमनं रोगाणाम् 'योः' इति यावनं भयानाम् । तत्र "शमु—उपशमे" (दिवादि०) ततः क्विप् प्रत्यये रूपं शम् । 'योः' यु मिश्रणेऽमिश्रणे च" ( अदादि० ) ततो डोस् । "गमेर्डोः" ( उणादि० २ । ६८ ) धातुबहुलात् । अथैकपदत्वे 'शंयोः' 'शम्' इत्युपपदे "यु मिश्रणे" ( अदादि० ) ततो विच् प्रत्ययश्छान्दसः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) शं सुखं यावयति मिश्रयति प्रापयति स शंयुस्तस्य षष्ठ्यां शंयोः । शंयुरत्र न युस् प्रत्ययान्तस्तस्य संज्ञायां विधानात्, वेदेन संज्ञा लौकिकजनस्य ।

'शं योः' द्विपदत्वे—

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।

त आ गतावसा शन्तमेनाथा नः शं योररपो दधात ॥

( ऋ० १० । १५ । ४ )

बर्हिषदः पितरः—अस्मासु प्रजासु सीदन्तीति तच्छीलास्ते यूयं रक्षकविद्वांसः "प्रजा वै बर्हिः" ( शत० १ । ५ । ३ । १६ ) ऊती—रक्षणाय वो युष्मभ्यमिमानि हव्यानि—उपहारयोग्यानि चकृम समर्पयेमेमानि सेवध्वम् । ते यूयमर्वागत्रागच्छत, अथानन्तरं शन्तमेन कल्याणतमेन—अवसा रक्षणेनास्मभ्यमरपो निष्पापं शं रोगाणां शमनं स्वास्थ्यं भयानां च यावनं दूरीकरणं च धारयत ॥

एकपदत्वे—

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् ।

तच्छंयोः सुम्नमीमहे ॥ ( ऋ० १ । ४३ । ४ )

गाथानां वाचां समूहो गाथो वेदः—वेदपतिं मेधपतिं मेधानां यज्ञानां पतिं "मेधो यज्ञः" ( निघं० ३ । १७ ) जलाषभेषजं सुखाय भेषजं यस्माद्—भवति तम् "जलाषं सुखनाम" ( निघं० ३ । ६ ) रुद्रं सर्वशासकं परमात्मानमीमहे याचामहे । तथा शंयोः सुखप्रापकस्य यत् सुम्नं सुखं तदपीमहे याचामहे । बृहस्पतिः स एव गाथपतिस्तस्य शंयोः सुम्नमीमहे सुखप्रापकस्य सुखं याचामहे । "गाथपतिः····तच्छंयोः सुम्नमीमहे" इति मन्त्रो मम मतौ—स्यादुदाहरणम् । "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये" इति वचनं केनचिच्छाखिना यास्कस्य पश्चात्स्थापितं भवेद् यद्वोभे वचने यास्केन दत्ते भवेतां लिपिकृता मूलमन्त्रस्त्यक्तः प्रमादात् । तच्छाखावचनस्याप्यर्थः प्रदर्श्यतेऽत्र । "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शन्नोऽस्तु द्विपदे शं चतुष्पदे ॥" बृहस्पते गाथपतेरेव वेदपते वेदपतिसम्बन्धिनः शंयोः सुखप्रापकस्य वेदस्यादेशं विधानमावृणीमहे स्वीकुर्मः । यज्ञाय यज्ञकरणाय गमनं वेदविदां प्रापणं यज्ञपतये यजमानाय यजमानमुपदेष्टुं वेदविदां प्रापणं तथा च नोऽस्मभ्यं मनुष्येभ्यो दैवी स्वस्तिरलौकिकी दिव्या शान्तिरस्तु तथोत्कृष्टं कल्याणकरं भेषजं रोगचिकित्सनं प्राप्नोतु तच्च शं कल्याणमस्मभ्यं द्विपदे मनुष्यमात्राय चतुष्पदे गवादये चास्तु ॥

इति तृतीयः पादः ।

## चतुर्थः पादः

अदितिः ॥ ४९ ॥

अदितिरदीना देवमाता * [ वा ]।

"अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः। विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ ( ऋ० १ । ८९ । १० )

इत्यदितेर्विभूतिमाचष्टे, एनान्यदीनानीति वा ॥ २२ ॥

भा०—'अदितिः' इत्येतदनवगतं परमनेकव्युत्पत्तिकमनेकार्थकम्। अदीना देवमाता-इति वस्तुरूपमभिधेयम्। "दो अवखण्डने" ( दिवादि० ) ततः "द्यतिस्यतिमास्थामित् ति किति" ( अष्टा० ७ । ४ । ४० ) इत्यनेन क्तिनि प्रत्यये परतः–इत्वे कृते 'दितिः' पुनर्नञ्समासे 'अदितिः'। अखण्डा खण्डरहिता देवानां दिव्यगुणपदार्थानां द्युप्रभृतीनां माता निर्मातृदेवता परमा देवता परमेश्वराख्या–इति वस्तुपक्षे निर्वचनम्। विशेषणपक्षे तु "दीङ् क्षये" ( दिवादि० ) ततः प्रत्ययविधानं तु पूर्ववत्। धातोर्ह्रस्वत्वं छान्दसम्। दितिः, पुनर्नञ्समासे 'अदितिः'–अदीना ॥

मन्त्रार्थः ( कः ) देवमाताऽदितिरितिपक्षे—

अदितिः खण्डरहिता या द्युप्रभृतीनां देवानां माता निर्मात्री शक्तिः परमात्मदेवता तस्या द्यौरित्यादयो विभूतिरूपाः सन्ति तद्द्वारा तेषामुत्पाद्यमानत्वात् प्रकाश्यमानत्वाद् धार्यमाणत्वाच्च। उत्पाद्योत्पादकयोः साध्यसाधकयोरभेदात्। "अन्नमु वा आयुः" ( शत० ९ । २ । ३ । १६ ) इतिवत्। द्यौरदितिः–द्यवि यः प्रकाशः स तस्या अदितेरेवास्ति। "तस्य भासा सर्वमिदं विभाति" ( कठो० व० ५ । १५, मु० २ । २ । १० ) इति प्रतिपादनात्। अदितिरन्तरिक्षम्, अन्तरिक्षे योऽवकाशस्तस्या अदितेरेवास्ति स एवान्तरिक्षेऽवकाशस्य दाता स सर्वेषामाकाशः–आकाशस्याप्याकाशस्तत्पारे च "त्वमस्य पारे रजसो व्योमनः" ( ऋ० १ । ५२ । १२ ) इति निर्देशनात्। अदितिर्माता मातृशक्तिप्रदत्वात्, स पिता पितृशक्तिप्रदत्वात् "त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ" ( ऋ० ८ । ९८ । ११ ) इत्यादेशनात्। स पुत्रः पुत्रधर्माणां संस्थापकत्वात्,

* 'वा' शब्दोऽत्रापेक्ष्यतेऽर्थद्वयविधानात्–"एनान्यदीनानीति वा"

अदितिरेव विश्वेदेवास्तेषु विश्वदेवधर्माणां प्रेरकत्वात् पञ्चजनाः पञ्चसु वर्गेषु ये जायन्ते तेऽपि खल्वदितिस्तेषां जायमानानां जनकत्वात् । जातं पूर्वं जातमदितिस्तदन्तरे प्रसक्तत्वात्, जनित्वं जनिष्यमाणमपि खल्वदितिस्तत्राऽव्यक्तरूपेण विद्यमानत्वात् । अदितेर्विभूतयोऽदितिस्तद्विभूतिशक्तिमत्त्वात् । तस्य परमात्मनोऽग्नेरग्नित्वात्, सूर्यस्य सूर्यत्वात्—आत्मन आत्मत्वात् "यस्यात्मा शरीरम्" ( शत० १४ । ६ । ७ । ३० ) इत्युक्तं यथा । सोऽणोरणीयान् महतो महीयान्—इति च प्रतिपादनात् । स सर्वगन्धः सर्वरसश्चेत्येवमादिरूपेण प्रोच्यमानत्वात् । इत्थं परमात्मदेवता देवमाता ।

मन्त्रार्थः ( ख:—अदीनाऽदितिरितिपक्षे )—

'द्यौः—अन्तरिक्षं लोकेषु खल्वदीनौ लोकौ यत उपरिस्थितौ स्वाश्रितौ न तु पराश्रितौ स्तः । 'माता, पिता, पुत्रः' इति वंशशक्तयोऽदीनाः सन्ति स्वाभाविक्यः । सर्वा व्यक्तयो मातृपितृपुत्रशक्तीरपेक्षन्ते । विश्वेदेवा अदीनास्तत्र वैश्वदेव्यात् पञ्चजनाश्चान्तःस्थलभेदवत्त्वाददीनाः स्वतन्त्रजायमानधर्मवत्त्वात् तेषाम् । भूतं भविष्यच्च कालस्यापरप्रान्तावदीनौ स्तस्तयोरसीमत्वात्—न खलु भूतस्यान्तो न भविष्यतोऽन्तो लक्ष्यते । इति संसारेऽदीनाः सन्त्येतानि वस्तूनि येषामाश्रये संसारः प्रवर्तते ॥

एरिरे ॥ ५० ॥
"यमेरिरे भृगवः" ( ऋ० १ । १४३ । ४ )
एरिर इतीर्त्तिरुपसृष्टोऽभ्यस्तः ॥ २३ ॥

'एरिरे' इत्येतदनवगतम् । 'आ—ईरिरे' इत्यवगमः 'आङ्' उपसर्गादुत्तरः "ईर गतौ" ( अदादि० ) यद्वा "ईर क्षेपे" ( चुरादि० ) धातुरभ्यस्तोऽभ्यासं प्राप्तोऽस्ति तथाभूतोऽभ्यस्तोऽभ्यासं प्राप्तस्तु लिटि संगच्छते । तस्माल्लिटि प्रयोगः 'एरिरे ।' दुर्गाचार्यस्कन्दस्वामिभ्यामत्र 'आङ्' उपसर्गः 'प्र' उपसर्गस्यार्थेऽनवगतत्वे मतः । परन्तु नैतद्युक्तं सायणभाष्येपि न तथा दृश्यते "एरिरे—आ—ईरिरे—आ आभिमुख्येन ईरिरे ईरितवन्तः स्थापितवन्तः ।" (सायणः) 'एरिरे' अस्य खल्वनवगतत्वम् 'आम्' इति प्रत्ययस्याभावो लिटि यो विहितः "इजादेश्च गुरुमतोऽनृच्छः—आम्" ( अष्टा० ३।१।३६ ) "आ—ईराञ्चक्रिरे—एराञ्चक्रिरे" इति प्रयोगेण भवितव्यमासीत् । परन्तु छान्दसः प्रयोग एषः । 'एरिरे' आम्वर्जितः । समग्रमन्त्रस्तदर्थश्च—

"यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना ।
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥

आधिदैविकदृष्टौ—भृगवः सूर्यरश्मयो भुवनस्य नाभ्यां नाभिभूतायां पृथिव्यां विश्वधनप्राप्तिनिमित्ताय यमग्निं मज्मना बलेन समन्तात् क्षिप्तवन्तः संस्थापितवन्तस्तमग्निं गीर्भिस्तद्गुणानां वर्णयित्रीभिर्वाग्भिर्यथावर्णिताभिर्वेदोक्ताभिर्हिनुहि प्रकटय—उपयुङ्क्ष्व च स्वे दमे गृहे स एको वरुणो वरणीयो राजेव वस्वो धनस्य धनं राजेव समन्तात्स्वाधीनी करोति ।

आध्यात्मिकदृष्टौ—भृगवो ज्ञानेन भर्जमाना ज्ञानवन्तो ध्यानवन्तो विद्वांसः पृथिव्या अन्तरिक्षस्य वर्तमानस्य भुवनस्य लोकसमूहस्य नाभौ मध्ये—वर्तमानं यं विश्ववेदसं सर्वज्ञमग्निं परमात्मानमेरिरे ज्ञातवन्तः प्राप्तवन्तस्तं परमात्मानं स्तुतिभिर्हृद्गृहे प्रज्वालय, स एको वरणीयो राजेव धनस्य स्वामित्वं करोति ।

जसुरिः ॥ ५१ ॥

"उत स्मैनं वस्त्रमथिं न तायुमनुक्रोशन्ति क्षितयो भरेषु । नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥" ( ऋ० ४ । ३८ । ५ )

अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् । वस्त्रं वस्तेः । तायुरिति स्तेननाम, संस्त्यानमस्मिन् पापकमिति नैरुक्ताः । तस्यतेर्वा स्यात् । अनुक्रोशन्ति क्षितयः संग्रामेषु । भर इति संग्रामनाम । भरतेर्वा हरतेर्वा । नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितं भवति जस्तमिव श्येनम् । श्येनः शंसनीयं गच्छति श्रवश्चाच्छा पशुमच्च यूथम् । श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा । यूथं यौतेः समायुतं भवति ॥

भा०—'जसुरिः' इत्येतदनवगतम् । 'जस्तम्' इत्यवगमः । "जसु मोक्षणे" ( दिवा० ) "जसु ताडने" ( चुरादि० ) ततः "जसिसहोरुरिन्" ( उणादि० २ । ७४ ) उरिन् प्रत्ययो भूते काले "उणादयो बहुलम्—भूतेऽपि दृश्यन्ते" ( अष्टा० ३ । ३ । १–२ ) जसुरिर्जस्तः ।

मन्त्रार्थः—

भरेषु संग्रामेषु क्षितयो मनुष्याः—"क्षितयो मनुष्यनाम" (निघं० २ । ३) एनं दधिक्राम्—अन्यथा बलं दधद् यः क्रामति राजा तं तथाभूतं राजानं वस्त्रमथिं तायुं न वस्त्रमाथिनं वस्त्राणि मथति विलोडयति धनं हर्तुं छिनत्ति—विदारयति वा स वस्त्रमाथी तायुः स्तेनस्तमिव वञ्चकं राजानं दृष्ट्वाऽनुक्रोशन्ति शपन्ते हाहाकारेण

धिक् कुर्वन्ति वा । यद्वा तमन्यथा बलं धारयन्तं राजानं नीचा–अयमानमाकाशतो नीचैर्गतिं कुर्वन्तं जसुरिं जस्तं मुक्तमबद्धं स्वच्छन्दं निपतन्तं श्येनमिव भासपक्षिणं क्रूरमन्यपक्षिघातकमिव घातकं दृष्ट्वाऽनुक्रोशन्ति, यः खलु क्रूरो राजा श्रवः–वाच्छ प्रशंसां धनं चापि पशुमद् यूथं पशुसमूहं च तायुवद् हरति लुण्ठति श्येनवन्नाशयति स उताप्यवश्यं स्तेन इव निग्रहीतव्यः श्येन इव वध्यो भवत्यर्थः । यद्वा स्वराष्ट्रे प्रजाजनान् स्तेन इव लुण्ठति, श्येन इव नाशयति स भरेषु संग्रामेषु–अन्येन पार्श्वस्थेन बलवता राज्ञा द्वाभ्यां राजभ्यां बहुभीराजभिर्वा निग्रहीतव्यो वध्यो वा ॥

निरुक्तयः—'वस्त्रम्' "वस आच्छादने" ( अदादि० ) ततः ष्ट्रन् "सर्वधातुभ्यः ष्ट्रन्" ( उणा० ४ । १५९ ) 'तायुः'–"स्तेन नाम" ( निघं० ३।२४ ) अस्मिन् संस्त्यानं संहतं पापं भवति । "स्त्यै शब्दसंघातयोः" ( भ्वादि० ) ततः संघातार्थात् ( उणा० १।१ ) बाहुलाकात् 'उण् प्रत्ययः, स्त्यायुः' सकारयकारलोपः । यद्वा "तसु उपक्षये" ( दिवादि० ) ततः–उण् सकारस्य यकारः । "भरः–संग्रामः" ( निघं २ । १७ ) "भृञ् भरणे" ( भ्वादि० ) "भृञ् धारणपोषणयोः" ( जुहोत्यादि० ) यद्वा "हृञ् हरणे" ( भ्वादि० ) ततोऽप् प्रत्ययः "ऋदोरप्" ( अष्टा० ३ । ३ । ५७ ) हृ पक्षे "हृग्रहोर्भश्छन्दसि–'व्यत्ययो बहुलम्" ( अष्टा० ३ । १ । ८४ वा० ) भ्रियन्ते भ्रियन्ते योद्धारो यस्मिन् ह्रियन्ते परस्परं सैनिका यस्मिन् । नीचैर्निचितम्–'उद्' एवं 'नि' पूर्वात् "चिञ् चयने" स्वादि० ) डैसि प्रत्ययः "उदि चेर्डैसिः, नौदीर्घश्च भूतकाले" ( उणा० ५ । १२, १३ ) उच्चितम्–ऊर्ध्वचित्तम्–उच्चैः, निचितम्–अधश्चितं नीचैर्भवति । श्रवः प्रशंसा वा धनं वा "श्रव इच्छमानः प्रशंसामिच्छमानः" ( निरुक्त० ९ । १० ) "श्रवो धननाम" ( निघं २ । १० ) 'यूथम्' "यु मिश्रणे" (अदादि०) ततः 'थक्' प्रत्ययः "तिथपृष्ठगूथयूथप्रोथाः" ( उणा० २ । १२ ) निपातनाद् दीर्घः । यौति मिश्रयति पृथक् पृथग्भूतान् स्वस्मिन् यूथः समूहः समुदायो वा, अत्र 'पशुमत्' इति विशेषणं यदा श्रवो धनं यदा श्रवः प्रशंसा तदा 'यूथम्' इत्यस्य विशेषणं लिङ्गव्यत्ययेन पशुमन्तं यूथम् । यद्वा यूथं नपुंसकमपि "यूथं यौतेः" कथनात् । तत् समायुतं सम्यक् समन्तात् खलु मिश्रितं स्त्रीपुरुषबालयुववृद्धैः पशुभिः ॥

जरते ॥ ५२ ॥

"इन्धान एनं जरते स्वाधीः" ( ऋ० १० । ४५ । १ )

गृणाति ॥

भा०—'जरते' इत्येतदनवगतम् । भाषिकोऽर्थो न लक्ष्यते "जॄ वयोहानौ" ( क्र्यादि० चुरादि० ) इत्येवानवगतत्त्वम् । 'गृणाति' इत्यर्थो लक्ष्यते "गॄ शब्दे" ( क्र्यादि० ) छान्दसोऽर्थोऽपीष्यते "गृणाति" "अर्चतिकर्मा" ( निघं० ३।१४) "जरते अर्चतिकर्मा" ( निघं० ३ । १४ ) आत्मनेपदं शपि विकरणे । एवं श्लेषालङ्कारेण 'जरते'—गृणाति शब्दयति—अर्चति, द्वावर्थौ दृष्टिद्वयेन भवतः ।

समग्रमन्त्रस्तदर्थश्च—

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।

तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥

आधिदैविकदृष्टौ—अग्निर्भौतिकः शुद्धो दिवस्परि द्युलोके सूर्यरूपेण प्रथमं जातः, अस्मत् परि—अस्मात् परि—अस्मिन् पृथिवीलोके 'ह्रस्वत्वं छान्दसम्' यद्वाऽस्मासु—अस्मन्निमित्तो जातवेदाः—जातधनः—विविधधनानि जातानि यस्मात् स भौतिकोऽग्निः, द्वितीयो जातः । नृमणा नॄणां मन इव चञ्चलो वैद्युतोऽग्निस्तृतीयोऽप्सु खल्वन्तरिक्षे जातः । "आपोऽन्तरिक्षनाम" ( निघ० १ । ३ ) एनमजस्रं निरन्तरमिन्धानो दीपनहेतवे स्वाधीः स्वाधानस्य कर्ता जरते गृणाति शब्दयति—अधीतेऽध्यापयति च ।

आध्यात्मिकदृष्टौ—अग्निर्ज्ञानप्रकाशस्वरूपः परमात्मा दिवस्परिदिवि द्योतनात्मके मोक्षधाम्नि प्रथमं जातः प्रसिद्धोऽस्ति । "त्रिपादस्यामृतंदिवि" ( ऋ० १० । ९० । ३ ) तं श्रुतिवचनेभ्यः शृणोति जनः । अस्मत् परि—अस्मिन्नात्मनि स्वात्मनि जातोऽन्तर्यामित्वेन" "य आत्मनि तिष्ठन्....." ( शत: १४ । ६ । ७ । ३० ) परमात्मा द्वितीयो द्वितीयक्रमे जातः साक्षाद्भूतो जातवेदाः, जातानि ज्ञानानि यत्प्रसादात् भवन्ति । अप्सु प्रसृतेषु सर्वपदार्थेषु विभुरूपेण परमात्मा नृमणा नॄणां मनसि मननेन प्रसिद्धस्तृतीयस्तं मनुते । एतमजस्रं निरन्तरमिन्धानो प्रकाशनहेतवे निदिध्यासनाय जरते स्तौति स स्वाधीः स्वाधानस्य कर्ता साक्षात् कर्ता भवति ॥

मन्दिने ॥ ५३ ॥

मन्दी मन्दतेः स्तुतिकर्मणः । "प्र मन्दिने पितुमदर्चता वचः ।" ( ऋ० १ । १०१ । १ ) प्राचत मन्दिने पितुमद्वचः ॥ २४ ॥

भा०—'मन्दिने' इत्येतदनवगतम् । "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" ( भ्वादि० ) इत्यनेकार्थत्वं निवर्त्य केवलं स्तुत्यर्थप्रतिपादनं मतुबर्थप्रत्ययान्तत्वं

च निवर्त्य कृत्प्रत्ययान्तत्वं चानवगतत्वे लक्ष्यते । न ह्यत्र 'मदि' इत्यस्माद् मन्दो घञि—इष्यते यस्मात् "अत इनिठनौ" ( अष्टा० ५ । २ । ११५ ) यदि हि मतुबर्थीयः—इनिः स्यात् तदा त्वनवगतत्वस्य प्रसङ्ग एव न सम्भवति । कृदन्ते ह्यनवगतत्वं सङ्गच्छते तस्य लक्षणशास्त्रेणाविहितत्वात् । 'मन्दतेः स्तुतिकर्मणः' इति चाचार्यस्य विधानसामर्थ्यादपि । धातुतो व्युत्पत्तौ 'कर्मणः' इति शब्देन निर्वचनं क्रियते । मदि—मन्द धातोरौणादिक इनिः प्रत्ययो बाहुलकात् कर्मणि । मन्दी मन्दनीयः स्तोतव्यः स्तुतियोग्यः । मन्दिने स्तोतव्यायेन्द्राय राज्ञे पितुमदन्नोपहारयुक्तमन्नोपहारेण सह तत्पूर्वकं वा वचनं प्रार्थयत—प्रार्थयध्वम् ।

समग्रमन्त्रस्तदर्थश्च—

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥

हे प्रजाजनाः ! यूयं मन्दिने स्तोतव्याय प्रशंसनीयायेन्द्राय राज्ञे पितुमत्—अन्नोपहारयुक्तमन्नोपहारपूर्वकं वचो वचनमर्चत स्वरक्षार्थं प्रार्थयध्वं यः खलु—ऋजिश्वना "अर्ज प्रतियत्ने" ( चुरादि० ) ततः किः—औणादिकः सम्प्रसारणं च ऋजिः प्रहारः—"शव गतौ" ततो वनिप् प्रत्ययश्छान्दसो डिच्च, ऋजिं प्रहारं गमयति प्रेरयति 'ऋजिश्वा' अस्त्रं तेन कृष्णगर्भाः कृष्णं पापं गर्भे मध्ये यासां ताः शत्रुसेनाः—निरहन् निहतवान् तं वृषणं सुखस्य वर्षितारं वज्रदक्षिणं वज्रं दक्षिणे हस्ते यस्य तं वज्रदक्षिणं मरुत्वन्तं मरुतः सैनिकजनास्तद्वन्तमिन्द्रं राजानं सख्याय वयमवस्यवः स्वरक्षणमिच्छन्तो सखित्वाय हवामहे स्वीकुर्मोऽङ्गीकुर्मः ॥

गौः ॥ ५४ ॥
गौर्व्याख्यातः ।
"अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे ।" ( ऋ० १ । ८४ । १५ )
अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे ॥

भा०—'गौः' इत्येतदनवगतमनेकार्थं च । निघण्टुग्रन्थरीत्या त्वत्रैवास्यानेकार्थत्वे खलूदाहरणैर्भवितव्यमत्रत्यस्य गोशब्दस्य नैगमिकत्वात्, अत्र हि निगमा अनेकार्थाः सन्दिग्धाः पठ्यन्ते, पूर्वत्र नैघण्टुके प्रकरणे त्वनेकशब्दा एकार्थका उपदिष्टा आसन् तत्र "गौः, ग्मा, ज्मा:...." पृथिवीनामधेयष्वेनैकार्थका उक्ता गवादयस्तत्र गोशब्दस्य प्राथम्यादस्थानेऽपि खल्वाचार्येणाऽनेकार्थताऽपि

दर्शिता या खल्वत्र दर्शयितव्याऽऽसीत् । आचार्याः खलु प्रथमं शब्दं विस्तरशो व्याचक्षते, परन्त्वत्र नैगमे प्रकरणे 'गौः' अनेकार्थत्वेन व्याख्यानमपेक्षते तत्परिपालनार्थमपि तु किञ्चिदर्थजातं वक्तव्यं तस्मात् तत्र पूर्वत्र 'गौः' इत्यस्यानेकार्थव्याख्यानेऽवशिष्टमुदाहरणमिदम्, संकेतितं च तत्र यदुपरिष्टाद् व्याख्यास्यामः । तस्मादेव चात्रानेकार्थे नैगमे प्रकरणे "गौर्व्याख्यातः ।" पूर्वत्र चोक्तम् "अत्रा ह गोरमन्वतेति तदुपरिष्टाद् व्याख्यास्यामः" ( निरु० २ । ६ ) गमेर्डोः ( उणा० २ । ६८ ) इति गमधातोर्डो प्रत्ययः ।

मन्त्रार्थः—

अत्र खलु चन्द्रमसो गृहे चन्द्रमण्डले गोः सूर्यरश्मेर्नाम नमनममन्वत सममंसत सममन्यत स्वं नमनं स्वकीयं नमनमङ्गीकृतवन्तस्तेपि तमनुगता विद्यन्ते—इत्थं चन्द्रमसो गृहे यन्नाम तत् त्वष्टुः—रश्मिप्रकाशकस्य सूर्यस्यापीच्यम्—अपचितम्, अपगतम्, अपिहितम्, अन्तर्हितम्—अमुत्र चन्द्रमण्डले । अपीच्यम्—अपचितम्—अपचयः प्रशंसा, अपचितं प्रशंसितं नाम नमनं सूर्यो दिने तूपकुरुते हि, रात्रावपि चन्द्रमण्डले रश्मिद्वारोपकुरुते स आह्लादकारिप्रकाशप्रदानेन ।

निरुक्तयः—अपीच्यम् 'अप' उपसर्गात् चिञ् चयने धातोर्यक् प्रत्ययो भूते "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) इति निपातनाद् रूपसिद्धिः । 'अप' स्थाने 'अपी' धातोरिकारलोपः । अपीच्यम्—अपगतम्, अपिहितम्, अन्तर्हितम्, इतिस्वर्थप्रदर्शनम् । अपपूर्वकात् 'अञ्चु' धातोः क्विन्प्रत्ययः तत्र भवमपीच्यम् "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ( अष्टा० ३ । २ । ५९ ) अपीच् । "अनिदितां हल उपधायाः" क्ङिति" ( अष्टा० ६ । ४ । २४ ) इत्युपधालोपः, भवे छन्दसि यत् । सूर्यतः पृथग्भूय गतं चन्द्रमण्डलं प्रतिफलितम् । तत्र भवं वर्तमानं रश्मिजालं चन्द्रमण्डले भवमपिहितं संलग्नं रश्मिजालमपीच्यम्, चन्द्रमण्डले भवमन्तर्हितं प्रविष्टं रश्मिजालमपीच्यम् । "अपीच्यमन्तर्हितनाम" ( निघं० ३ । २५ ) ।

गातुः ॥ ५५ ॥

गातुर्व्याख्यातः । "गातुं कृणवन्नुषसो जनाय"

( ऋ० ४ । ५१ । १ ) इत्यपि निगमो भवति ।

भा०—'गातुः' इत्येतदनवगतमनेकार्थं च । गातुः—पृथिवी "गातुः पृथिवीनाम" ( निघं० १ । १ ) अत्र तु 'गातुः' पदं तद्भिन्नार्थत्वेन पठितम् । तदत्र भाववाचकम् । "गाङ् गतौ" ( भ्वा० ) ततः "कमिमनिजनिगाभायाहिभ्यश्च—

तु:" ( उणा० १ । ७३ ) इत्यनेन तुः प्रत्ययः। व्याख्यातो ह्येत्थं स गातुशब्दो ऽन्यार्थप्रसङ्गेन । "गातुं यज्ञाय गातुं यज्ञपतये—गमनं यज्ञाय गमनं यज्ञपतये" ( निरु० ४ । २१ ) गातुं गमनमित्यर्थः ।

समग्रमन्त्रस्तदर्थश्च—

इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।

नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥

पुरस्तात् पूर्वस्यां दिशि खल्विदं त्यत्तत् पुरुतमं श्रेष्ठतमं बहुतमनीयं बहु कांक्ष्यं तथा वयुनावत् प्रज्ञानवत् सूर्यस्योदयनात् प्रथमं प्रज्ञानभूतं जनानां जागरणाय प्रज्ञानवत्—सूचनाचिह्नयुक्तं तमसः—अस्थात्, तमो निवार्य 'ल्यप् लोपे पञ्चम्युपसंख्यानम्' अस्थात् तिष्ठति—उपतिष्ठते । इत्येकवचनत्वेनोषसो ज्योतिर्नाम्ना वर्णनम् । अथ बहुवचनत्वेन—नूनं निश्चितं खलूषसः प्रत्यहं प्रवर्तमानास्ता दिवो द्योतमानस्य सूर्यस्य दुहितरो विभातीः प्रकाशं भासयन्त्यो जनाय जनमात्राय जन्यमानाय—प्राणिमात्राय गातुं कृण्वन् गमनं गतिव्यवहारं कृण्वन्—कुर्वन्ति—साधयन्ति ।

दंसयः ॥ ५६ ॥

दंसयः कर्माणि, दंसयन्त एनानि । "कुत्साय मन्मन्नह्यश्च दंसयः" ( ऋ० १० । १३८ । १ ) इत्यपि निगमो भवति ।

भा०—'दंसयः' इत्येतदनवगतम् । 'कर्माणि—बहुविधकर्माणि' इत्यवगमः। "दसि दंसनदर्शनयोः" ( चुरादि० ) ततः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) एनानि कर्माणि दंसयन्ते दर्शयन्ति मानवस्य जीवनयात्रां यद्वा कर्मशीला जना एतानि कर्माणि दर्शयन्ति जनान् तानि कृत्वा ।

समग्रमन्त्रस्तदर्थश्च—

तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् ।

यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः ॥

इन्द्र ! तव सखित्वेषु त्ये ते वह्नयो वोढारो मरुत ऋतमुदकं मन्वाना अवबुध्यमाना इव धारयमाणा बलं मेघं व्यदर्दिरुः—अत्यन्तं विदारितवन्तः, यत्र काले ह्युषसः स्वतरङ्गान् दशस्यन्—क्षिपन्—अपो रिणन्—स्रावयन् वर्तसे तत्र काले कुत्साय भूमेः कर्षकाय तन्मनोरथाय—अह्नोऽहिर्मेघस्तत्सम्बन्धीनि दंसयः कर्माणि प्रवर्तन्ते ।

तूताव ॥ ५७ ॥

"स तूताव नैनमश्नोत्यंहतिः ।" ( ऋ० १ । ९४ । २ )

स तुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरुढोपधाद् विपरीतात् ॥

भा०—'तूताव' इत्येतदनवगतम् । 'तुताव' इत्यवगमः । "तु गतिवृद्धि-हिंसासु" ( अदादि० ) वृद्ध्यर्थोऽत्र गृह्यते । लिटि प्रथमपुरुषैकवचने णलि । स वर्धते न ह्येनं दरिद्रता प्राप्नोति । 'अंहति, अंहः, अंहुः' हनधातोरुपधाभूतः 'अ' निरूढो निरूढीकृतोऽन्तस्तो बहिर्निधापितः पुनः 'ह न्' इत्यनयोर्विपरीतकरणात् 'न् ह्' पूर्वं च 'अ' निधापनात् 'अंह्' ततः—अतिः प्रत्ययः "हन्तेरंह च" (उणा० ४ । ६२ ) अंहतिः, एवं बाहुलकात् 'उ' प्रत्यये 'अंहुः' असुन् प्रत्यये 'अंहस् ।' समग्रमन्त्रस्तदर्थश्च—

यस्मै त्वमायजसे स साधयत्यनर्वा क्षेति दधते सुवीर्यम् ।

स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥

हे अग्ने ! यद्वा विद्वन् ! यस्मै राज्ञे—आयजसे समन्तादुपयोगं त्वं ददासि यन्त्रनिर्माणार्थं स साधति—राष्ट्रकार्यं साधयति शत्रुभिः—अनर्वा—अहिंसितः सन् क्षेति—निवसति, अनर्वाणमनश्वं रथं यन्त्रयानं विमानं साधयति वा सुवीर्यं च धारयते । स वर्धते धनेन बलेन ज्ञानेन च पुनरेनमहंतिर्दरिद्रता घातिकाऽऽपत्तिर्न प्राप्नोति तव सख्ये वयं न हिंस्याम ॥

चयसे ॥ ५८ ॥

"बृहस्पते चयस इत्पियारुम्" ( ऋ० १ । १९० । ५ )

बृहस्पते यच्चातयसि देवपीयुम् । पीयतिर्हिंसाकर्मा ॥

भा०—'चयसे' इत्येतदनवगतम् । 'चातयसि' इत्यवगमः ।

वक्तव्यम्—चातयतिरत्र नाशने प्रयुक्तः । न हि लोके नाशनार्थे विद्यते, वेदे तूपलभ्यते बहुत्र, तद्यथा—"अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥" ( ऋ० १० । १५५ । १— 'चातयतिर्नाशने' निरु० ६ । ३० ) "वधेन दस्युं प्र हि चातयस्व" ( ऋ० ५ । ४ । ६ ) प्रचातयस्व—प्रणाशयस्व । तथा च सायणः । यथा चातयति नाशनार्थे प्रसिद्धस्तथा 'चयसे' प्रयोगोऽपि वेदे नाशनार्थे वर्तते । लोके "चते याचने" ( भ्वादि० ) णिजन्तः सन् वेदे नाशनेऽर्थे प्रयुज्यते । एवं "चिम् चयने"

( स्वादि० ) विकरणव्यत्ययेन शपि पीडने नाशनेऽर्थे विद्यते । इदमेवास्यानवगतत्वम् । कचिल्लोकेऽस्यार्थस्याभास उपलभ्यते "चिता—श्मशानसंचयः" ( निरु० ३ । ५ ) लोके मृतप्रसङ्गे चि धातुः प्रयुक्तोऽस्ति, वेदे नाशनप्रसङ्गे प्रयुक्तः । अन्यदप्युदाहरणमस्माभिर्दीयते—"चयत ईमर्यमो अप्रशस्तान्" ( ऋ० १ । १६७ । ८—'चयते घातयति नाशयति'—सायणः ) ।

यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च—

ये त्वा देवोस्रिकं मन्यमाना पापा भद्रमुपजीवन्ति पज्राः ।

न दूढ्ये अनुददासि वामं बृहस्पते चयस इत्पियारुम् ॥

हे बृहस्पते देव ! ये पापाः—पापिनः पज्राः—प्रार्जिताः "पज्रहोषिणा प्रार्जितहोषिणौ" ( निरु० ५ । २२ ) प्रभूतमर्जितं यैर्धनादिकं ते प्रार्जिताः पज्रास्त्वामुस्रिकम्—अलं दुग्धस्राविणं पशुं भद्रं स्वकल्याणकरं मन्यमाना आश्रयन्ति त्वां न तु स्तुवन्ति, तेभ्यो दूढ्ये—दुर्धीभ्यो दुर्बुद्धिभ्यस्तदनुकूलो भूत्वा यदा त्वं तेषामनुकूलं वामं वननीयं कल्याणं न ददासि, अपि च तादृशं पियारुं हिंसकं पापिनं नास्तिकं चयसे हन्सि हि ॥

निरुक्तयः—पीयतिर्हिंसाकर्मा । धातुपाठे "पीङ् पाने" ( दिवा० ) परन्तु वेदे हिंसायां वर्तते । तदत्रान्यान्युदाहरणानि—"पीयति त्वो अनु त्वो गृणाति" ( ऋ० १ । १४७ । २—'पीयति हिनस्ति' सायणः ) 'पियारुः' 'पी' धातोः 'आरुः' प्रत्ययः कित् "शृवन्द्योरारुः" ( अष्टा० ३ । २ । १७३ ) वेदे बाहुलकात् किच्च ।

वियुते ॥ ५९ ॥
वियुते द्यावापृथिव्यौ वियवनात् ।
"समान्या वियुते दूरे अन्ते" ( ऋ० ३ । ५४ । ७ )
समानं सम्मानमात्रं भवति मात्रा मानाद् दूरं व्याख्यातमन्तोऽततेः ॥

भा०—'वियुते' इति पदं शब्दशास्त्रतो यद्वा लक्षणशास्त्रतस्त्ववगतं परन्तु कृदन्तं सन्नामवाचकत्वेऽप्रसिद्धमथ संदिग्धं च भवति क्रियाजन्यं विशेषणं स्यात् । द्यावापृथिवीनामभ्यः पृथगिदं नामवाचकमिति हेतोरत्र पठितम् । 'वियुते' प्रथमाद्विवचनं पदं न तु सप्तम्येकवचनम् । 'ते वियुते द्यावापृथिव्यौ स्तः, द्यावापृथिव्योः संयुक्तं नामेदं द्विवचनप्रत्ययान्तं पदमेतत् 'द्यावापृथिव्यौ' इत्यर्थं कथं प्रसूते ? अत्रोच्यते—'वियवनात्' इत्यनेनार्थप्रदर्शनं च निर्वचनं चोभय-

मुच्यते। "यु मिश्रणे अमिश्रणे च" ( अदादि० ) केवलस्य युधातोरर्थस्तूभयविधो मिश्रणं च–अमिश्रणं च। यौति मिश्रयति पृथक् करोति च। तद्यथा—धनेन युतः–इति मिश्रणे, धनाद् युतः–इत्यमिश्रणे। परन्तु संविभ्यामुपसर्गाभ्यामेक एवार्थोऽसन्दिग्धः प्रतिपन्नो भवति। 'सम्' इत्यनेन मिश्रणं संयुतः मिश्रितः 'वि' इत्यनेन–अमिश्रणं पृथग्भावः, वियुतः–अमिश्रितः। अत्र 'वि' इत्युपसर्गेण–अमिश्रणं पृथग्भावो गम्यते। वियुते साम्मुख्यमपेक्ष्य परस्परमूर्ध्वाधोभावेन पृथगपृथग्भूते द्यावापृथिव्यौ। विपूर्वाद् 'यु' धातोः क्तः प्रत्ययः।

समग्रमन्त्रस्तदर्थश्च—

समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम॥

एते वियुते द्यावापृथिव्यौ प्रकाशात्मकाप्रकाशात्मके उपर्यधोमण्डले समानसीमबन्धनीभूते दूरस्थानके परस्परं दूरपारे जागृते स्वस्वकार्यस्य विधात्र्यौ परिगच्छन्त्यौ परिभ्रमन्त्यौ ध्रुवे पदे ध्रुवनामकेऽवलम्बने सर्वाणि प्रकाशात्मकान्यप्रकाशरूपाणि च पिण्डानि ध्रुवे केन्द्रेऽवलम्बन्ते। सर्वग्रहताराणामवलम्बनं ध्रुवम्। तत्र ध्रुवपदे स्थिते स्तः। अपि च ते उभे युवती यौवनम्प्राप्ते स्वसारौ भगिन्याविव भवन्त्यौ वर्तमाने स्वस्थितितोऽनन्तरं निश्चयेन मिथुनानि बहूनि युगलानि ब्रुवाते नाम ब्रूत इव प्रसिद्धं कुरुतः प्रसुवाते उभे, तानि युगलानि खल्वहोरात्रे, शुक्लकृष्णपक्षौ, उत्तरायणदक्षिणायने, अग्नीषोमौ नरनारीशक्ती।

निरुक्त्यः—समानं साम्मुख्येन मानमात्रं–साम्मुख्येन मानस्य मात्रा यस्मिन् तत् सम्मानमात्रं समानं मानेन सह समानं भवति। मात्रा मानात्, मानस्य साधनभूता तुला राशिभक्तिर्वा। "हुयामाश्रुभसिभ्यस्त्रन्" ( उणादि० ४।१६८) 'माङ् माने' ( दिवादि० ) ततस्त्रन् प्रत्ययः। दूरं व्याख्यातम् ( निरु० ३।१९) 'दुर्' पूर्वात् 'इण' गतौ ( अदादि० ) ततो रक् प्रत्ययः "दुरीणो लोपश्च" ( उणादि० २। २० ) अन्तः 'अतति गतिकर्मा' ( निघं० २। २४ ) 'पचादिलक्षणोऽच्' अचि धातोर्नुम् 'अन्त् अ' अन्तः॥

ऋधक्॥ ६०॥

ऋधगिति पृथग्भावस्य प्रवचनं भवति। अथाप्यृध्नोत्यर्थे दृश्यते। "ऋधगया ऋधगुताशमिष्ठाः।" ( यजु० ८। २० ) ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति च॥

भा०—ऋधक्–इत्येतदनवगतमनेकार्थं च। 'ऋधक्' इति पृथग्भावः पृथक्पृ-

मनेन प्रोच्यते—ऋधक्—पृथक् । ऋधक् पृथगर्थेऽव्ययम्, "ऋधक् केवले सत्ये वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये" ( अव्ययार्थनिबन्धनम् ) ऋध धातोर्निष्पन्नं नामपदं चापि । "ऋध वृद्धौ" ( स्वादि० ) ततः 'अजिः' प्रत्ययो धातुबाहुलकादौणादिकः "प्रथेः कित्सम्प्रसारणं च—अजिः" ( उणा० १ । १३७ ) ऋधज्—ऋधक् । ऋध्नोति वर्धयति यः स ऋधक्, ऋध्नुवन्—अर्द्धं कुर्वन् यो वर्तते ।

वक्तव्यम्—अत्राचार्येण 'ऋधक्' इति शब्दस्य पृथगर्थे नोदाहरणं दत्तं किन्त्वृध्नोत्यर्थे दत्तं किमत्र कारणमिति प्रश्नः समुपतिष्ठते । अथाप्यृध्नोत्यर्थे दृश्यते' इत्यत्र दृश्यते पदेन स्पष्टं भवति ऋध्नोत्यर्थे 'ऋधक्' शब्दस्य क्वाचित्कः प्रयोगो न बहुदृश्यः, तस्याल्पप्रयोगत्वादुदाहरणं दत्तम्, किन्तु पृथगर्थे प्रायः सर्वत्रास्ति । 'ऋधक्' शब्देन युक्ताः सन्ति बहवो मन्त्रास्तत्र किं सङ्कुचितोदाहरणप्रदानेन । तत्रास्माभिर्मन्त्राः प्रदर्श्यन्ते—

ऋधक् सा वो मरुतो दिद्युदस्तु यद्व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥
( ऋ० ७ । ५७ । ४ )

हे मरुतो राजपुरुषाः ! वो युष्माकं सा दिद्युत्—वज्ररूपा प्रहारिका शक्तिर्हेतिः "दिद्युत्—वज्रनाम" (निघं० २।२०) ऋधक्—पृथक्—असमस्तः पृथग् भवतु, यदाकदाचिद् वो युष्मभ्यं पुरुषता—प्रजापुरुषभावेन स्वार्थसाधनायागोऽपराधं कराम कुर्याम तदा वो युष्माकं तस्यां वज्ररूपायां हेत्यां हेतिप्रहारं प्राप्तुं मा भूम पुनरपराधिनो न भवेम, किन्तु हे यजत्राः ! यजनीया सङ्गमनीया मान्या राजपुरुषाः! अस्मेऽस्मन्निमित्तं वो युष्माकं चनिष्ठाऽतिशयान्नवती—अन्नदात्री सुमतिः कल्याणी मतिरस्तु ।

युयोता शरुमस्मदाँ आदित्यास उतामतिम् ।
ऋधग् द्वेषः कृणुत विश्ववेदसः ॥ ( ऋ० ८ । १८ । ११ )

हे आदित्याः ! अखण्डशक्तिसम्पन्ना राज्याधिकारिणः शरुं हिंसकं शस्त्रमस्मत्तः पूर्णरूपेण युयोत पृथक् कुरुत, उताप्यमतिं कुमतिं युयोत पृथक् कुरुत । हे विश्ववेदसः- सर्वधनयुक्ता महानुभावाः ! द्वेषो द्वेष्टॄन् शत्रून्—ऋधक् कुरुत पृथक् कुरुत ॥

अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा ।
यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः ॥
( ऋ० १० । ४९ । ७ )

अहं विज्ञानविद् राजा—आशुभिराशुगामिभिरेतशेभिरश्वैः—वैद्युतशक्तिमद्भिः यानैर्विमानैः प्रकृष्टं वहमान उह्यमानो नीयमानः—ओजसा बलेन वेगेन सूर्यस्य परि—परितो यामि गच्छामि। अथ मनुषः 'मनुष्—षष्ठ्यां मनुषः' मन् धातोः—उसिः प्रत्ययः "जनेरुसिः (उणा० २।११६) धातुबहुलात्। मनुषो मनुष्यस्य "मनुषो मनुष्यस्य" (निरु० ८।५) सावः—ऐश्वर्यप्रभावो राज्ञा च विज्ञानविद् चेत्यस्यैश्वर्यप्रभावो मनुष्यस्य स एष उत्कर्षो मामाह यदेतत्कर्तुं शक्यते—इति मां ब्रवीति, एवमुत्साहं प्राप्याहमाकाशं गच्छन् दासं दसनीयमुपेक्षतव्यं मेघं कृत्स्नं कर्तितव्यं यद्वा विकीर्णं कर्तव्यमितस्ततो निवारणीयं इथैर्हनमसाधनैर्निर्णिजे—रूपस्य प्रकाशकरणाय "निर्णिग् रूपनाम" (निघं० ३।७) ऋधक् कृषे पृथक् करोमि लडर्थे लेट् सिप् च॥

यत्खलु दुर्गाचार्यस्कन्दस्वामिभ्यां 'ऋधक्' इत्यस्य पृथगर्थे मन्त्र उदाहृतः स न युक्तस्तत्र तस्य सन्दिग्धार्थत्वात्—

यदि॑न्द्र दि॒वि पार्ये॒ यदृध॒ग् यद्वा॒ स्वे सद॑ने॒ यत्र॒ वासि॑।
अतो॑ नो य॒ज्ञमव॑से नि॒युत्वा॑न्त्स॒जोषाः॑ पाहि गिर्वणो म॒रुद्भिः॑॥

(ऋ० ६।४०।५)

पृथिव्यन्तरिक्षद्युभेदतस्त्रीणि स्थानानि, पूर्वपंक्त्यां त्रयाणां स्थानानां निर्देशो विद्यते। इन्द्रो देवता। हे इन्द्र! त्वं दिवि पार्ये—पारभवे—दूरे—अस्मत्तो दूरे 'असि' यद् ऋधक् समीपे—अस्माकं समीपे पृथिवीलोके 'असि।' अत्र 'ऋधक्' समीपेऽर्थे लक्ष्यते "ऋधक् सत्ये वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये केवले च" (अव्ययार्थशास्त्रम्)। 'पार्ये' इति तुलनया समीपार्थो युक्तः। यद्वा स्वे सदने—अन्तरिक्षलोके मध्यलोके यत्रापि दिवि पृथिव्यामन्तरिक्षे वा ऋधक्—कस्मिंश्चिद्देके केवले त्वमसि, अतस्ततः स्थानात् हे गिर्वणः! गीर्भिर्वननीयप्रशंसनीय! त्वमस्माकं रक्षणाय मरुद्भिर्मरुदाख्यैर्नियुद्भिरश्वरूपैर्वाहकैः सह युक्तः सन् सहसेवनैर्यज्ञं पाहि—रक्ष॥

'ऋधक्' शब्दः कश्चिन्मन्त्रे सत्यार्थेऽपि प्रयुज्यते यथा"—"ऋधगित्था स मर्त्यः शशमे दे॒वता॑तये" (ऋ० ८।१०१।१ "'ऋधक्' सत्यम्, इत्था इत्थम्—सायणः) "बृहन्तमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः" (ऋ० ६।४९।१० ऋधक् सत्यं हुवेम स्तूयामहि 'दयानन्दः')। सोऽर्थोऽप्युत्प्रेक्ष्यः। "ऋधक् सत्ये" (अव्ययार्थशास्त्रम्)॥

ऋध्नोत्यर्थे 'ऋधक्' शब्दस्य यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च—

वयं हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।

ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान्त्स्वाहा ॥

हे अग्ने ! अग्रेणेतर्महन् ! अस्मिन् प्रयति–प्रगच्छति–प्रवर्तमाने–प्रवर्तिष्यमाणे यज्ञे–इह मनुष्यजीवने वयं खलु होतारं ह्वातारं देवानामाह्वातारमवृणीमहि–वृणुमो यतस्त्वमृधक्–ऋध्नुवन् वृद्धिं गच्छन् स्वयं समृद्धिं गच्छन्नस्मांश्च समर्धयन्–अयक्षीर्याजयसि, उतापि त्वमृध्नुवन् समृद्धिं गच्छन् समर्धयंश्चाशमिष्ठाः शान्तिं प्रापयसि । अतस्त्वं प्रजानन् प्रज्ञानयुक्तो विद्वान् यज्ञमुपगच्छेति स्वाहा–आनन्द एषः ॥

अस्याः ॥ ६१ ॥

अस्य ॥ ६२ ॥ इति द्विषष्टि पदानि ॥

अस्याः इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोर्थतरमनुदात्तम् ॥

"अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ॥" ( ऋ० १ । १३८ । ४ )

अस्यै नः सातय उपभवाहेळमानोऽक्रुध्यन् ररिवान् रातिरभ्यस्तोऽजाश्वेति पूषणमाहाजाश्चाजा अजनाः ॥

भा०—'अस्याः' इति पदम् 'अस्य' इति च पदम् । अवगतार्थं सदपि प्रथमनिर्देशार्थत्वेन पश्चान्निर्देशार्थत्वेनानेकार्थं मतम् । तत्र प्रथमादेशे तूदात्तमथान्वादेशो पश्चादादेशेऽनुदात्तम् । उक्तं हि व्याकरणे "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" ( अष्टा० २ । ४ । ३२ ) 'इदम्' शब्दः सर्वनाम सन्निहितस्य निर्देशकः, यदा स्वनिर्देश्यं प्रथमं निर्दिशेत् तदा प्रथमादेशस्तदातूदात्तः । यदा निर्देश्यं पश्चान्निर्दिशेत् तदाऽन्वादेशस्तदाऽनुदात्तः । किं तर्ह्युदात्तमनुदात्तं च, अत्रोच्यते । तयोरुदात्तानुदात्तयोर्यत् तीव्रार्थतरमुदात्तं यत् खल्वल्पीयोर्थतरमनुदात्तम् । तीव्र उच्चोऽधिको वाऽर्थोऽत्र गुणः स स्वरः–उच्चः स्वरो यस्मिन् तदुच्चस्वरं द्वयोरुच्चस्वरमुच्चतरस्वरं यदल्पीयोर्थतरम्–अल्पीयान् गुणः स्वरो यस्मिन् तदल्पीयःस्वरं द्वयोरल्पीयःस्वरं नीचैस्तरस्वरं यत्तत् खल्वनुदात्तम् । द्वयोरुदाहरणं तत्र प्रथमादेशस्योदात्तत्वेन ।

'अस्या ऊ षु ण' इति समग्रमन्त्रस्तदर्थश्च—

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ।

ओषु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।

नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥

अस्याः 'सातये' इति शब्दस्य सर्वनाम विशेषणम् 'अस्याः' चतुर्थ्यर्थे षष्ठी । "चतुर्थ्यर्थे बहुलं छन्दसि" ( अष्टा० २ । ६२ ) प्रथमादेशः सातये शब्देन सह प्रयुक्तः 'अस्याः' शब्दः । नोऽस्माकं—अस्यै सातये—सम्भक्त्यै—सम्प्राप्तये—ऽहेड-मानोऽक्रुध्यन् ररिवान् प्रयच्छन् सन्—उपभुवः—उपभव—उपतिष्ठस्व । हे अजाश्व ! अजाकारा अश्वा यस्य सम्बुद्धावजाश्व ! तथाऽजनशीलाश्ववन् ! हे दस्म ! दर्शनीय ! साधुभिः स्तोमैः स्तुतिभिस्त्वा सु—आवर्तयेम—सेवेमहि, हे सुखस्य—आघृणे !—आक्षारयितः प्रदीप्यमान ! पोषकदेव राजन् ! अहं न त्वामतिमन्ये—अपमन्ये, न तव सख्यमपह्नुवेऽनृतं करोमि ॥

अथानुदात्तम्—

"दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ।"

( ऋ० १० । ८५ । ३९ ) दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतम् । शरच्छ्रता अस्यामोषधयो भवन्ति । शीर्णा आप इति वा ॥ २५ ॥

भा०—'अस्याः' इत्यनुदात्तं पदमन्वादेशेऽत्र वर्तते । 'अस्याः पतिर्दीर्घायुः' इत्यत्र प्रश्नः कस्याः पतिर्दीर्घायुः । या खलु मन्त्रस्य पूर्वस्यां पंक्तावुक्ता । वैवाहिकाग्न्याधानविधिना दत्ता पत्नी, अस्याः पत्न्याः ।

समग्रमन्त्रस्तदर्थश्च—

पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।

दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥

पित्रा कन्यां पतये पादानार्थं सङ्कल्पितां पुनः खलु वैवाहिकोऽग्निस्तस्मै—अदात्—आयुषा वर्चसा सह युक्ताम् । वैवाहिकेनाग्निना—अस्याः—दत्तायाः पत्न्याः—यः पतिः स शतं शरदः—वर्षाणि जीवतु ॥

अस्येत्यस्या इत्येतेन व्याख्यातम् ।

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः । तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ ( ऋ० १ । १६४ । १ )

अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यश्नोभ्राता भरतेर्हरतिकर्मणो

हरते भागं भर्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापमश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता संख्या सप्तादित्यरश्मय इति वदन्ति ॥ २६ ॥

भा०—'अस्य' इत्येतत् पदं पुलिङ्गं षष्ठ्यन्तम् 'अस्याः' इत्येतेन स्त्रीलिङ्गेन षष्ठ्यन्तेन पदेन तुल्यं व्याख्यातं विज्ञेयम् । यथा 'अस्याः' पदं प्रथमादेशे–उदात्तम् 'अस्याः', अन्वादेशेऽनुदात्तम् 'अस्याः' । तथैव 'अस्य' पदं प्रथमादेशे–उदात्तम् 'अस्य' अथान्वादेशेऽनुदात्तम् 'अस्य ।' उदाहरणमुभयविधम् 'अस्य वामस्य' इति मन्त्रे ।

मन्त्रार्थः—

अस्य पूर्वस्यां दिशि सम्मुखमुपस्थितस्य द्युस्थानस्थस्य वामस्य वननीयस्य सम्भजनीयस्य प्रकाशात्मकत्वात्सर्वैः सेवनीयस्य पलितस्य स्वर्णाभस्य पालयितुर्होतुर्ह्वातव्यस्य द्युस्थानस्थैर्ग्रहैः स्वगतिविधानेऽपेक्षणीयस्य सूर्यस्याग्निपुञ्जस्याग्निपिण्डस्य तस्य भ्राता भरणीयो हरणीयस्तत्सदृशः शक्तिमान् तद्धरणीयो धारणीयः स्वस्मिन् विलेयो मध्यमो मध्येऽन्तरिक्षे भवोऽश्नो व्यापनशीलोऽग्निर्विद्युदात्मना द्वितीयो वैद्युतोऽग्निरस्ति । अत्र कथने 'अस्य' पलितस्य सूर्यस्य भ्राता । 'अस्य' इति पदं प्रथमादेश उदात्तम्–अन्तोदात्तम् । पुनस्तृतीयो भ्राता भरणीयो हरणीयः स्वस्मिन् विलेयो घृतपृष्ठः "घृ क्षरणदीप्त्योः" ( अदादि० ) दीप्तिसाधनमिन्धनं स्पृशतीति घृतस्पृष्ठो घृतस्पृष्टः–इन्धनसंलग्नः "पृष्ठं स्पृशतेः" ( निरु० ४ । ३ ) यद्वा घृतमिन्धनं पृष्ठवदाधारो यस्य सः 'अस्य' इति पदं वामस्य पलितस्य 'सूर्यस्य' अन्वादेशेऽनुदात्तम्, अश्नः सन्निहितो न 'अस्य' पदेन गृह्यते तस्यानुदात्तत्वात्, किन्तु तस्य खलु द्वितीयो भ्राता 'अश्नः' तस्यैव तृतीयो भ्राता घृतपृष्ठः पार्थिवोऽग्निः । तं तथाभूतं वामं पलितं विश्पतिं सर्वस्य पातारं पालयितारं वा सूर्यं सप्तपुत्रं सप्त रश्मयः पुत्रा यस्य तं यद्वा सप्तमपुत्रं सप्तमंपुत्रमदितेरग्नेः सप्तवर्णाः–रश्मयः सन्ति, तत्र सप्तमो रश्मिः शुक्लभाः सूर्यस्वरूपः । उक्तं चात्रैव सूक्ते "साकञ्जानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः" ( ऋ० १ । १६४ । १५ ) अथर्ववेदेऽपि "इदं सवितर्विजानीहि षड् यमा एक एकजः । तस्मिन् हापित्वमिच्छन्ते य एषामेक एकजः ॥" ( अथर्व० १० । ८ । ५ ) ब्राह्मणग्रन्थानुसारतस्तु "अष्टौ पुत्रासो अदितेः" (तां० २४ । १२ । ५–६) "एताभिर्वा आदित्या

इन्द्रमाभुवन्मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्चेन्द्रश्च विवस्वांश्च" ( तां० २४ । १२ । ४ ) इन्द्र आदित्यरूपेण सप्तमः पुत्रः । सप्तपुत्रं सर्पणपुत्रं वा सर्पणास्तीव्रगतिकाः—रश्मयः पुत्रा यस्य तं वा । सप्त सृप्ता संख्या षड्भ्यः सृप्ता संख्या बहुधा व्याप्ता संख्या सप्तमर्यादाः—सप्तलोकाः, सप्तग्रहाः सप्तदिनानि सप्तशीर्षण्याः प्राणाः, सप्तसमुद्राः, सप्तस्वराः, सप्तधाराः, सप्तर्षयः, सप्तरागाः— इति वदन्त्याचार्याः ॥ तथाभूतं सूर्यमपश्यं पश्यामि चिरं पश्येयं च ॥

निरुक्तयः—'सप्त' इति "सृप् गतौ" ( भ्वादि० ) ततः कनिन् तुट् च "सप्यशूभ्यां तुट् च" ( उणा० १ । १५७ ) प्रत्ययसन्नियोगेन "सृपेः सपः ॥' 'अश्वः' "अशूङ् व्याप्तौ" ( क्र्यादि० ) नन् बाहुलकात्—औणादिकः । 'भ्राता' "भृञ् भरणे" ( भ्वादि० ) "नप्तृ....भ्रातृ....दुहितृ" ( उणादि० २ । ९६ ) 'विश्पतिः', विश्वपतिः—पकारलोपश्छान्दसः ॥

'सप्तपुत्रम्' इति विशेषणमादित्यस्य सप्तरश्मिपरं मुख्यमत्र यास्कस्तदग्रिमं मन्त्रं प्रमाणं प्रस्तुतं करोति—

"सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥" ( ऋ० १ । १६४ । २ )

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं चक्रं चकते र्वा चरतेर्वा क्रामते र्वैकोऽश्वो वहति सप्तानामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वा । इदमपीतरन्नामैतस्मादेवाभिसन्नामात् ॥ संवत्सर प्रधान उत्तरोऽर्द्धर्चस्त्रिनाभि चक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति ॥ संवत्सरः संवसन्तेऽस्मिन् भूतानि । ग्रीष्मो ग्रस्यन्तेऽस्मिन् रसाः । वर्षा वर्षत्यासु पर्जन्यः । हेमन्तो हिमवान् । हिमं पुनर्हन्ते र्वा हिनोते र्वा । अजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते ॥

मन्त्रार्थः—

भा०—एकचक्रं रथम्—एकमेव चक्रं गतिक्रमणमेकाकित्वेन स्वाधीनचारिणं रथं सूर्यमण्डलं सप्त युञ्जन्ति सप्त रश्मयो युञ्जन्ति युक्ता भवन्ति, एकोऽश्वः सूर्यः सप्तनामा सप्तनामभीरश्मिभिर्युक्त आदित्यः सप्तास्मै रश्मयो रसानभिप्रापयन्ति

सप्त रश्मयः स्तुवन्तीव यस्य सन्ति । सूर्यपरको मन्त्रस्य प्रथमार्धभागः । अथो-त्तरोऽर्द्धर्चः 'त्रिनाभि चक्रम्' इति संवत्सरप्रधानोऽस्ति । त्रिनाभि चक्रं संवत्सररूपम्, चक्राणि त्रीणि ग्रीष्मो वर्षा हेमन्त इति त्रय ऋतवः । अजीर्यमाणमन्येषां जरा-कारणमनर्वं नाम्यस्मिन् तदाश्रितं स्वाधारं यस्मिन् विश्वानि भूतानि तिष्ठन्ति अधीनी सन्ति ॥

निरुक्तयः—चक्रम् "चक प्रतिघाते" (भ्वादि०) ततो रक् प्रत्ययः "चकिरम्योरुच्चोपधायाः रक्" ( उणा० २ । १४ ) चक धातोः—रक्—चकारात्-पक्षे 'उत्' उपधायाः । चक्रं चुक्रं च भवति, रम धातो रुम्रं तु भवति "नमि-कम्पिस्म्यजसकमहिंसदीपो रः" (अष्टा० ३ । २ । १६७) केवलं चक्रार्थमेवात्राऽ-नुपधाप्रसङ्गे रक् । चकति प्रतिहन्तीति चक्रम् । चक्रं भूमार्गं जलमार्गं वायुमार्गं प्रतिहन्ति हि । यद्वा "चर गतौ" (भ्वादि०) चरधातोः क्रड् प्रत्ययो बाहुलकादौ-णादिकः चक्रम् । चरति, चलति हि चक्रम्, यद्वा क्रमधातोः 'डः' प्रत्ययो बाहु-लकाड्डिटवत् । क्रामति हि चक्रम् । 'सप्तनामा' सप्तरश्मयो नामानि रसान् नामयन्ति 'नाम' पदमपीतरद् यत्संज्ञावाचि तदपि नम धातो र्मनिन् प्रत्यया-न्तम् । नामयति कार्यं प्रति नामिनं जनम् । यद्वा नाम खलु नामिनि जने गुणान् नामयति नामानुरूपान् गुणान् धारयितुम् । "नम धातो र्मनिन् प्रत्यये सति नामशब्दो निपात्यते "नामन्सीमन्"( उणा० ४ । १५१ ) 'संवत्सरः' 'सम्' पूर्वात् वस निवासे धातोः सरन् प्रत्ययः । "संपूर्वाच्चित् वसेः सरन्" ( उणा० ३ । ७२ ) अस्मिन् संवसन्ते सन्तिष्ठन्ते भूतानि प्राणिनः । 'ग्रीष्मः' अस्मिन् रसाः—ओषधीनां प्राणिनां रसाः—आर्द्राः पदार्था ग्रस्यन्ते गृह्यन्ते ह्रस्यन्ते "ग्रस-ग्रहणे" ( चुरा० ) ततो मक् प्रत्ययः "घर्मग्रीष्मौ" ( उणा० १ । १४९ ) ग्रस धातो ग्री भावः षुगागमश्च निपातनात् । 'वर्षाः' आसु पर्जन्यो मेघो वर्षति ता वर्षाः "वृषु सेचने" ( भ्वादि० ) "पचादिलक्षणोऽच्" 'हेमन्तः'—हिमवान् अत्र 'हेम' शब्दो 'हिम' शब्दश्चैकार्थौ प्रत्ययभेद एव केवलो मतः । हिमं शीत-घनः, बाह्यदृष्ट्या तस्य घातकत्वात् "हन्—हिंसागत्योः ( अदादि० ) धातोः "हन्ते र्हिं च" मक् ( उणा० १ । १४७ ) अथवा—आन्तरिकदृष्ट्या रसवर्धनात् "हि गतौ वृद्धौ च" ( स्वादि० ) मक् प्रत्ययो बाहुलकात् । 'हेम' हि धातो-र्मनिन् "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४५ ) 'हन्' धातोश्च 'हन्' इत्यस्य हिं भावः । हिममेव हेम मतुपि हेमन्तः पृषोदरादित्वात् ॥

तं संवत्सरं सर्वमात्राभिः स्तौति ।

"पञ्चारे चक्रे परिवर्तमाने" ( ऋ० १ । १६४ । १३ )

इति पञ्चर्तुतया, पञ्चर्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन॥

भा०—पूर्वस्मिन् मन्त्रे तूत्तरार्द्धभागेन संवत्सरस्य वर्णनमासीत्। परन्तु तं संवत्सरं सर्वमात्राभिः सर्वभावैः सर्वधर्मैः सर्वाङ्गैः सर्वैर्मन्त्रपदैश्च निम्नो मन्त्रः स्तौति वर्णयति "पञ्चारे····" पञ्चारे पञ्च–अराः–यस्मिन् सः पञ्चारस्तस्मिन् पञ्चारे। संवत्सरस्य पञ्च–अराः पञ्चर्तुतया ह्युक्तं पञ्च सन्ति खल्वृतवः संवत्सरस्यैतद् ब्राह्मणम्–"पञ्चर्तवो हेमन्तशिशिरयोः समासेन तावान् संवत्सरः।" (ऐ० ब्रा० १।१) षडृतवः प्रसिद्धाः सन्ति कथं पञ्च संख्या ?। उच्यते–हेमन्तशिशरयोः समासेन हेमन्तशिशिरौ खल्वृतू समासीकृत्यैकं गणयित्वैकं मत्वा पञ्च संख्या कथिता 'संवत्सरश्चक्रं परिवर्तते परिभ्राम्यति हि तस्मात् परिवर्तमाने परिभ्राम्यति चक्रे ।

समग्रमन्त्रस्तदर्थश्च—

पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थु र्भुवनानि विश्वा ।

तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते स नाभिः ॥

तस्मिन् पञ्चारे–पञ्चर्तुके चक्रे कालचक्रे संवत्सरे परिवर्तमाने परिभ्रमणं कुर्वाणे विश्वानि भुवनानि सर्वे पृथिव्यादयो लोकाः प्राणिनश्च समन्तात् स्थिता अधिष्ठिता आश्रिताः सन्ति, तस्याक्षो भ्रमणाधारभूतोऽक्षः सनात् पुराकालाद् बहुभारः सन्नपि सूर्यो ध्रुवः परमात्मा वा न तप्यते स्वयमन्येषां तापनिमित्तस्वात् तथा न शीर्यते जीर्यते न भग्नो भवत्यन्येषां जीर्णताया निमित्तस्वात्, तच्चक्रस्य नाभ्या मध्यभागेन सहाक्ष इव संलग्नः सन् ॥

"षडर आहुरर्पितम्" (ऋ० १।१६४।१२)

इति षड्ऋतुतया अराः प्रत्यृता नाभौ ॥ षट् पुनः सहर्तुः॥

भा०—अथ द्वितीयो मन्त्रः संवत्सरविषयकः सर्वमात्राभिः संवत्सरं स्तौति। इत्युच्यते "षडर आहुः····" इति यस्य संवत्सरस्य चक्रस्य नाभौ षडराः षडृतवः प्राप्ताः सन्ति ।

समग्रमन्त्रस्तदर्थश्च—

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।

अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितम् ॥

पञ्चपादं पञ्चर्तवः पादा यस्य तं पञ्चपादं पितरं पितृधर्मवन्तं संवत्सरं द्वादशाकृतिं द्वादशभिर्मासैर्लक्षितं दिवः परे–अर्द्धे द्युलोकस्य परे–उत्कृष्टेऽर्द्धे स्थाने सूर्ये

पुरीषिणमुदकवन्तं वर्षाभिः संयुक्तं तत्राश्रितमाहुरिति सम्बन्धः । अथ चान्ये–उपरे–उपरते–उपरिगते विचक्षणं विशेषेण सर्वेषां दर्शयितारमाहुः कथयन्ति तस्मिन्नेव षडरे षडृतुके सप्तचक्रे सप्तरश्मिके सूर्येऽर्पितमाश्रितं संवत्सरमाहुः कथयन्ति ।

"द्वादशारं नहि तज्जराय" ( ऋ० १ । १६४ । ११ )

"द्वादश प्रधयश्चक्रमेकम्" ( ऋ० १ । १६४ । ४८ )

इति मासानाम् । मासा मानात् । प्रधिः प्रहितो भवति ॥

"तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टि र्न चलाचलासः ॥"

"षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः" इति च ब्राह्मणं समासेन ॥

"सप्त शतानि विंशतिश्च तस्थुः ॥" "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः" इति च ब्राह्मणं विभागेन विभागेन ॥ २७ ॥

भा०—उभयोर्मन्त्रयोः 'द्वादशारम्' इत्यत्र 'द्वादश–अराः', 'द्वादश–प्रधयः' द्वादशानां मासानां वाचकाः । 'मासाः' मानात् मानकारणात् कालमानकारणात् "माङ् माने" ( दिवादि० ) ततः "वृतृवदिवचिवसिहनिकमिकषिभ्यः सः ।" ( उणा० ३ । ६२ ) इत्यनेन धातुबाहुलकात् सः प्रत्ययः । प्रधिः प्रहितो भवतीत्यर्थप्रदर्शनं समानेनोपसर्गधातुनिर्देशेन । प्रत्ययकालयो र्वैलक्षण्यमाश्रित्य । यः प्रधिः प्रधानभावेन धृतश्चक्रे, प्रधानभागाः प्रधयः । "उपसर्गे घोः किः" ( अष्टा० ३ । २ । ९२ ) इत्यनेन प्रधिः शब्दः सिद्ध्यति—तथैव "प्र" उपसर्गपूर्वकात्–"धा" धातोः क्ते प्रत्यये 'प्रहितः' शब्दः "दधातेर्हिः" ( अष्टा० ७ । ४ । ४२ ) तथा 'द्वादशारं....' इति च 'द्वादश प्रधयः' इति द्वयोः प्रतीकयोः मुखसाम्यं प्रदर्श्याथासमभागौ विहायान्तिमविषयसाम्यं संवत्सरचक्रं वर्तमानं प्रदर्शयत्याचार्यः प्रतीकविपर्ययेण सान्निध्यमभिलक्ष्य "द्वादश प्रधयः....." इति मन्त्रस्य "तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टि र्न चलाचलासः ।" तस्मिन् संवत्सरचक्रे शङ्कव इव कीलकाः–इव दत्ता इव वा त्रीणि शतानि षष्टिश्च संख्यायुक्ता अहोरात्राः सन्ति चलाः प्रकाशात्मकत्वात् दिवसाः, अचला रात्रयोऽन्धकारात्मकत्वात् । तथा च ब्राह्मणम् "षष्टि ह वै त्रीणि च शतानि संवत्सरस्याहानि" ( शत० ९ । १ । १ । ४३ ) समासेनाहोरात्रयोरेकत्वसंख्यां मत्वा । अथ "द्वादशारं....." इति मन्त्रस्य "सप्तशतानि विंशतिश्च

तस्थुः" इत्यस्य व्याख्यानम् "सप्त वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः" (ऐ० आ० ३ । २ । १) इति ब्राह्मणं विभागेन पृथक् पृथगहश्च रात्रिं च लक्षयित्वाऽस्ति, विभागेन द्विरुक्तिरध्यायसमाप्तये ॥

"द्वादशारं नहि" इति समग्रमन्त्रस्तदर्थश्च—

द्वा॒द॑शारं॒ न॒हि तज्जरा॑य॒ वर्व॑र्ति च॒क्रं परि॒ द्याम्ऋ॒तस्य॑ ।

आ पु॒त्रा अ॑ग्ने मिथु॒नासो॒ अत्र॑ स॒प्त श॒तानि॑ विंश॒तिश्च॑ तस्थुः ॥

ऋतस्य सूर्यस्य "ऋतमित्येषः सूर्यः" (ऐ० ४ । २०) चक्रं मण्डलं तत्प्रभवात्कालचक्रं संवत्सरचक्रं द्वादशारं द्वादशमासं तत्खलु जराय "जॄ वयोहानौ" (क्र्यादि०) ततः "ऋदोरप्" (अष्ट० ३ । ३ । ५७) जरः, तस्मै जराय—जरणाय—जरायै, पित्वात्—धातुस्वरः—'जरः' आद्युदात्तः । जरणाय—जरायै नहि खल्वस्ति किन्तु परियां दिवि—आकाशे द्योतनात्मके ग्रहमण्डले वर्वर्ति पुनः पुनः प्रवर्तते । हे अग्ने ! अग्निस्वरूप सूर्य ! अत्रास्मिन् चक्रे संवत्सरे मिथुनासः स्त्रीपुरुषरूपा रात्रयो दिवसाश्च तव पुत्राः—विंशत्यधिकसप्तशतानि ७२० तत्र षष्ट्युत्तरत्रिशतानि दिवसास्तावत्यश्च रात्रयः खल्वातस्थुः संवर्तन्ते । उक्तं हि ब्राह्मणे "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः" (ऐ० आ० ३।२।१)।

"द्वादश प्रधयश्चक्रमेकम्" इति समग्रमन्त्रस्तदर्थश्च—

द्वाद॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत ।

तस्मि॑न्त्सा॒कं त्रि॑श॒ता न श॒ङ्कवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उतच्चिकेत । चक्रं संवत्सरचक्रमेकं तस्मिन् द्वादश प्रधयः प्रधानभागाश्चक्रबद्धा मासाः सन्ति, तत्रैवं संवत्सरे चक्रे त्रीणि नभ्यानि नाभौ भवानीव चक्रेऽरा इव सन्त्यृतवः, कः खलु प्रजापतिः परमात्मा जानीयात् स एव चालयति तच्चक्रम् । तस्मिन् संवत्सरचक्रे सहैव सङ्गताः षष्ट्युत्तरत्रीणि शतानि शङ्कवः कीला इव दन्ता इव चलाः प्रकाशात्मका अचला अन्धकारात्मकाश्च सम्मिलिता युगलत्वं गता अहोरात्राः सन्ति ।

इति चतुर्थाध्यायस्य चतुर्थः पादः ।

चतुर्थोऽध्यायश्च समाप्तः ।

स्वामिब्रह्ममुनिकृते निरुक्तशम्मर्शे निरुक्तभाष्ये ।

---

# पञ्चमोऽध्यायः

## तत्र

## प्रथमः पादः

सस्निम् ॥ १ ॥

"सस्निमविन्दच्चरणे नदीनाम् ।" ( ऋ० १०।१३९।६ )

सस्निं संस्नातं मेघम् ।

भा०—'सस्निम्' इत्येतदनवगतं पदम्, लोकेऽप्रयुक्तत्वादर्थतश्चाप्रसिद्धत्वात् । 'संस्नातम्' धात्वनुरूपोऽवगमः । 'मेघम्' अभिधेयो द्वितीयायां विभक्तौ 'सस्निम्' इत्यस्य द्वितीयान्तत्वात् । "ष्णा शौचे" ( अदादि० ) "ष्णै—स्ना—वेष्टने" ( भ्वादि० ) ततः किन् प्रत्ययः "आदृगमहनजनः किकिनौ लिट् च" ( अष्टा० ३ । २ । १७१ ) लिट्वत्त्वादभ्यासः प्रत्ययस्य नित्त्वादाद्युदात्तः, अत्र किन् प्रत्ययो न तु कि प्रत्यय इत्यवधेयम् ।

समग्रमन्त्रस्तदर्थश्च—

सस्निमविन्दच्चरणे नदीनामपावृणोद् दुरो अश्मव्रजानाम् ।

प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम् ॥

गन्धर्वः—इन्द्रः, गां वाचं पृथिवीं वा धरति स वाक्पतिः पृथिवीपतिश्च—ऐश्वर्यवान् विद्युद्रूपोऽग्निः—राजा वा नदीनां नदन्तीनामपामान्तरिक्ष्याणां पार्थिवानां वा चरणे विचरणस्थानेऽन्तरिक्षे कन्दरे वा सस्निं संस्नातं जलेनार्द्रीभूतं जलप्रवाहैर्वेष्टितं वा मेघं मेहनसमर्थमाशयं विन्दते प्राप्नोति, अश्मा मेघः "अश्मा मेघः" ( निघं० १ । १० ) अश्मा व्रजो व्रजनस्थानं यासां तासामपां दुरो द्वाराणि 'द्वाः शसि सम्प्रसारणम्' निर्गमनं प्रति बन्धकानि—आवरणानि—अपावृणोत्—अपावृणोति—उद्घाटयति । अथासामपाममृतानि—अमृततुल्यानि प्रस्रवणानि प्रवोचत् प्रवदति प्रवाहयति, अत्र प्रपूर्वको वच धातुः प्रवर्षणे प्रवहणे च वर्त्तते सम्बन्धबलात् । पुनश्चाहीनां चतुर्थ्यर्थे षष्ठी, अहिभ्य आहन्तव्येभ्यो मेघेभ्य आहन्तव्याभ्यो नदीभ्योऽग्नयो वा दक्षं स्वकीयं बलं परिजानात् परिजानाति प्रस्नावयि प्रवाहयितुं बन्धं त्रोटयित्वा प्रस्नावयति प्रवाहयति च ॥

वाहिष्ठः ॥ २ ॥ दूतः ॥ ३ ॥

"वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।"

( ऋ० ८ । २६ । १६ )

वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ ।

नरा मनुष्या नृत्यन्ति कर्मसु । दूतो जवतेर्वा द्रवतेर्वा वारयते र्वा ।

"दूतो देवानामसि मर्त्यानाम्" (ऋ० १० । ४ । २) *

इत्यपि निगमो भवति ।

भा०—'वाहिष्ठः' इत्येतदनवगतम् । 'वोढृतमः' इत्यवगमः । 'दूतः' इत्येतत्पदमनवगतम् । जवनशीलः, द्रवणशीलः, वारणशीलो वा । 'वाहिष्ठः' अतिशयेन वोढा वाहिष्ठः । 'वोढृ' शब्दात् "तुश्छन्दसि" ( अष्टा० ५ । ३ । ५९ ) इत्यनेन तृच्प्रत्ययान्तात्–इष्ठन् प्रत्ययः, पुनः "तुरिष्ठेमेयःसु" (अष्टा० ६ । ४ । १५४ ) इत्यनेन तृचो लोपः पुनरुपधादीर्घत्वं छान्दसम् । अथ 'दूतः' इत्यनवगतं लक्षणशास्त्रतः । "दु द्रु गतौ" ( भ्वादि० ) "दुतनिभ्यां दीर्घश्च क्तः" ( उणा० ३ । ९० ) यद्वा 'जवति गतिकर्मा' ( निघं० २ । १४ ) ततो धातु-बाहुलकात् "जकारस्य दकारः ।" यद्वा णिजन्तात् "वृ वारणे" धातोः, पृषो-दरादित्वाद् रूपसिद्धिः ।

समग्रमन्त्रस्तदर्थश्च—

वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।

युवाभ्यां भूत्वाश्विना ॥

हे नरा गृहस्थाश्रमस्य नायकौ गृहकर्मणि नृत्यन्तौ–अश्विनौ–स्त्रीपुरुषौ वां युवाभ्यां युवयोर्जीवननिर्वाहाय वाहिष्ठोऽतिशयेन वोढा स्तोमः स्तुतियोग्यो मन्त्र-भागोऽस्ति तथा हवानामामन्त्रणीयानां दूतः प्रापयिता, द्रावयिता, वारयिता निजगृहेऽवरोधयिता भवतु ॥

वावशानः ॥ ४ ॥

वावशानो वष्टे र्वा वाश्यते र्वा ।

---

* "दूतो देवानामसि ···इति मन्त्रोऽस्थाने क्षिप्तः केनचिल्लिपिकारेण प्रमा-दतः ।" यतः "वाहिष्ठः" इति पदस्य निर्वचनप्रसङ्गः प्रधानः । स च दूतशब्द-विशिष्टः ,यद्वा दूतशब्देन संश्लिष्टः खलु यस्मिन् मन्त्रे भवेत् सोऽत्रोदाहर्तव्यः । न हि केवलस्य दूतशब्दस्य मन्त्रोऽत्रोदाहर्तव्यः । तथाभूतस्य मन्त्रस्य स्थानं त्वग्रे षष्ठाध्यायस्य त्रयोविंशे खण्डेऽस्ति । तत्रैव वयमिमं मन्त्रं व्याख्यास्यामः ।

"सप्त स्वसृररुषीर्वावशानः" ( ऋ० १० । ५ । ५ )

इत्यपि निगमो भवति ।

भा०—'वावशानः' इत्यनवगतम् । अनेकधातुजत्वकल्पनातः संदिग्धं पदम् । "वश कान्तौ" ( अदादि० ) ततः, यद्वा "वाशृ शब्दे" ( दिवादि० ) ततः कानच् "लिटः कानज् वा" ( अष्टा० ३ । २ । १०६ ) "तुजादीनां दीर्घोऽभ्यासस्य" ( अष्टा० ६ । १ । ७ ) वाशृ धातोरुपधाया ह्रस्वत्वं भवति ।

समग्रमन्त्रस्तदर्थश्च—

सप्त स्वसृररुषीर्वावशानो विद्वान् मध्व उज्जभारा दृशे कम् ।

अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥

अग्निः प्रकाशस्वरूपः परमात्मा सूर्यो वा विद्वान् जानन् लभमानो वा सप्तस्वसृः—अरुषीः—आरोचनाः "अरुषीः—आरोचनाः" ( निरु० १२ । ७ ) सप्त स्वसृः स्वसारिणीः सप्तवर्णान् रश्मीन् कामयमानः प्रभाषमाणो वा मध्वः—उदकात्—उदकमयाद् वाष्पमयादाकाशात्—उज्जभार—उद्भासितवान्, दृशे कम् सुखेन दर्शनाय यत् सर्वे जनाः सूर्यात् प्रकाशं प्राप्य सर्वं पश्यन्तु—इतीच्छन् सोऽन्तरिक्षेऽन्तः—आकाशस्य मध्ये येमे—नियमितवान् तान् रश्मीन् सञ्चरण-शीलान् कृतवान्, पूषणस्य पृथिव्याः "पूषा पृथिवी नाम" ( निघं० १ । १ ) पुराजाः पुरातनो जीवात्मा, अग्नि र्वा तत्सकाशाद् वव्रिं रूपमिच्छन् प्राप्तवान् ।

वार्यम् ॥ ५ ॥

वार्यं वृणोतेरथापि वरतमम् ॥

"तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्' (ऋ० ८।२५।१३)

तद् वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारो यूयं स्थ युष्मभ्यमिति वा ॥

भा०—"वार्यम्" इत्येतदनवगतम् । अनेकार्थं सन्दिग्धव्युत्पत्तिकम् । "वृञ् वरणे" ( स्वादि० ) ततः "एतिस्तुशास्वृदृजुषः क्यप्" ( अष्टा० ३ । १ । १०९ ) इति लक्षणशास्त्रतस्तु क्यप् प्रत्ययेन भवितव्यम्, परन्तु छान्दसत्वात् 'ण्यत्' प्रत्ययान्तः प्रयोगोऽर्थश्च वरणीयम्—इत्येकः पक्षः । वरः श्रेष्ठोऽतिशयेन श्रेष्ठो वरतमो वर्यो लोके यत् प्रत्ययान्तः स एव छान्दसो ण्यत् प्रत्ययान्तो वार्यः । "यतोऽनावः" ( अष्टा० ६ । १ । २०७ ) इतिवत् स्वरश्चाद्युदात्तः छान्दसः ।

समग्रमन्त्रस्तदर्थश्च—

तद् वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।

मित्रो यत् पान्ति वरुणो यदर्यमा ॥

तद् वरणीयं वरतमं वा वरिष्ठं बहुतमं महत्तमं गोपयत्यं गोपायितव्यं गोपयत्–गोपयितारो यम्–यूयम्–युष्मभ्यं गोपयितारस्तद्धनं मित्रोऽग्नि वरुणो मेघोऽर्यमा सूर्यश्च यद्वा मित्रो बन्धुर्वरुणो विद्वान् अर्यमा राजा च त्रयोऽपि रक्षन्ति ॥

अन्धः ॥ ६ ॥

अन्ध इत्यन्ननामाध्यानीयं भवति ।

"आमत्रेभिः सिञ्चता मद्यमन्धः" ( ऋ० २ । १४ । १ )

आसिञ्चतामत्रैर्मदनीयमन्धः ।

अमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति ।

पात्रं पानात् । तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति ।

न दर्शनमन्धन्तम इत्यभिभाषन्ते ॥

अयमपीतरोऽन्ध एतस्मादेव ।

"पश्यदक्षण्वान्न विचेतदन्धः" (ऋ० १ । १६४ । १६)

इत्यपि निगमो भवति ॥ १ ॥

भा०—'अन्धः' इत्येतदनवगतमनेकार्थं च । आध्यानीयमित्यर्थप्रदर्शनम् । 'अन्नम्' इत्यभिधेयम् । आङ् पूर्वात् "ध्यै चिन्तायाम्" ( भ्वादि० ) ततः 'असुन्' प्रत्ययः 'आध्या असुन्' आङः–उपसर्गस्य ह्रस्वत्वं धातो नुंट् आगमोऽन्तिमौ यकाराकारौ लुप्येते बाहुलकात् सर्वं सिद्धयति अत्र यास्कप्रक्रियायां निदर्शनेऽस्यां यतोऽन्नमाध्यानीयं भवति सर्वैरप्याध्यायतेऽन्धोऽन्नम् ॥

समग्रमन्त्रस्तदर्थश्च—

अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।

कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥

हे अध्वर्यवः ! आत्मनोऽध्वरमहिंसनं रक्षणं कामयमाना जनाः ! इन्द्राय तस्मै स्वस्मै–आत्मने सोमं सोमरसं भरत सम्पादयत तथा विविधैः पात्रैर्मद्यं हर्षकरमाणमन्नं सोममोषधिसम्भवमन्नमदनीयं समन्तात् सिञ्चत मुखद्वारेण क्षिपत । स कामी तदन्नमिच्छुको हि वीरो वीरयति सर्वकर्मसु सदैव यद्स्यात्मनः पीतिरौषधपानमस्ति तदेष आत्मा वृष्णे बलवर्धनाय वष्टि कांक्षति तद्दत ।

तमोऽन्ध उच्यते । न ध्यानमस्मिन्नस्ति न दर्शनमस्ति, अन्धन्तम उच्यते । "अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते" (यजु० ४० । १२) इत्यादि । अथमितरोऽन्धोऽन्धजनार्थकोऽकारान्त एतस्मादेव न दर्शनं ध्यानमस्मिनिति–अन्धः ।

'पश्यदक्षण्वान्न विचेतदन्धः' इति समग्रमन्त्रस्तदर्थश्च—

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।

कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥

अक्षण्वान् नेत्रवान् ज्ञाननेत्रवान् पश्यत् पश्यति खल्वध्यात्मतत्त्वानि विज्ञानानि चान्धो नेत्रहीनो ज्ञाननेत्रहीनो न विचेतत्–विपश्यति । तस्मात् सतीः स्त्रियः–सतीरध्यात्मज्ञानेन विज्ञानेन प्राप्तसत्ताका ब्रह्मवादिन्यः स्त्रियो याः सन्ति मह्यं मदर्थे 'पुंसः–तान्–आहुः' पुरुषान् तान् खल्वाचार्याः कथयन्ति । अल्पज्ञानेन पुरुषाः स्त्रीत्वं भजन्तेऽधिकज्ञानेनात्मज्ञानेन स्त्रियः पुरुषत्वं पुरुषवन्मानं लभन्ते । एवमेव पुत्रः–यः कविर्मेधावी स्यात्, स निश्चयेन यः खल्वध्यात्मज्ञानमाचिकेत विपश्यति स तानि विज्ञानानि विजानाति स पितुरपि पिता भवति । उक्तं यथा "शिशुराङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत, ते देवानपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृत्" ( तां० ब्रा० १३ । ३ । २४ ) ॥

आधिदैविकदृष्ट्या—याः खलूषसस्ताः स्त्रियः स्वसत्तां प्रकाशयमानाः प्रकाशप्रसारणेन रश्मयः पुरुषाः पुरुषभावेन प्रसिद्धिं गच्छन्ति । कविः सूर्यः पुत्रः तासामुषसां प्रकाशकत्वात् पिता कथ्यते । यः प्रकाशवान् स एव जनेभ्यः प्रकाशं प्रयच्छति चेतयति च तान्, न तु प्रकाशरहितः ॥

निरुक्तयः—अमत्रं पात्रं भवति यतोस्मिन् 'अमात्रुअदन्ति जनाः' 'अमा–अद्–त्रन्' बाहुलकात् त्रन् प्रत्ययो डिद्धर्मा ( उणा० ३ । १०५ ) 'अमा' इत्याकारस्य ह्रस्वत्वं च । 'अमा' अनिर्मितम्–अनिश्चितमितं बहु, बहवो जना भुञ्जते–अदन्ति यस्मिन् तदमत्रं यद्वा–अमा भवत्यपक्वं यस्मिन्–अपक्वं रसं यस्मिन्नदन्ति पिबन्ति तदमत्रम् । अपक्वरसपानस्य पात्रं वा–अमत्रं भवति । 'पात्रम्' पा धातोः–त्रन् प्रत्ययः "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" ( उणा० ४ । १७० ) ।

असश्चन्ती ॥ ७ ॥

"असश्चन्ती भूरिधारे पयस्वती" ( ऋ० ३ । ७० । २ )

असज्यमाने इति वा । अव्युदस्यन्त्याविति वा । बहुधारे उदकवत्यौ ॥

भा०—'असश्चन्ती' इत्येतदनवगतमप्रसिद्धधातुजत्वादनेकधातुरूपसा-म्यात्, न हि लोके 'सश्च' धातुर्वर्तते । तस्मादेवानेकधात्वर्थाभिधायि पद-मेतत् । तत्र प्रथमकल्पे "षञ्ज—सञ्ज—सङ्गे" ( भ्वादि० ) 'सञ्ज' इत्यस्य स्थाने 'सश्च' छान्दस आदेशः । शतृप्रत्यये प्रथमाद्विवचनं स्त्रीलिङ्गम् । तथाकृत्वा धात्वर्थो नञ्समासे—असज्यमाने अश्लिष्यमाणे अमिश्रिते । द्वितीयकल्पे "षस्ज—सस्ज गतौ" ( भ्वादि० ) 'सस्ज' इत्यस्य स्थाने 'सश्च' इत्यादेशश्छान्दसः कल्पनीयः । पूर्ववत्सर्वमन्यत् । धात्वर्थो नञ्समासे—अव्युदस्यन्त्यौ न व्युद-स्यन्त्यौ 'वि—उद्'—इत्युपसर्गपूर्वकात् "असुक्षेपणे" ( दिवादि० ) उत्प्लुत्य गमनं व्युदसनं तद्रहितां गतिं कुर्वन्त्यौ शान्तप्रवाहेण गच्छन्त्यौ । देवराजयज्वना तदनु-वर्तिना पण्डितचन्द्रमणिना च "सश्चति गतिकर्मा" ( निघं० २ । १४ ) इत्याश्रित्य व्याख्यातमत्र, न तद्युक्तं तत्प्रसङ्गस्तु पूर्वं गतः । तन्निर्वेन ह्यनवगत-प्रसङ्गेनात्र भवितव्यं तथाकृत्यैव यास्केनास्य पदस्यार्थद्वयप्रसक्तिरुक्ता ।

समग्रमन्त्रस्तदर्थश्च—

असंश्चन्ती भूरिधारे पर्यस्वती घृतं दुहाते सुकृते शुचिंव्रते।

राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मर्नुर्हितम् ॥

द्यावापृथिव्यौ देवते । हे द्यावापृथिव्यौ ! अस्य भुवनस्य विश्वस्य रोदसी रोधसी अवरोधिके उपर्यधःस्थिते भूरिधारे बहुधारे बहुधारिके यद्वा सुखस्य बह्वीभिर्धाराभिर्युक्ते जलवत्यौ स्थूलसूक्ष्मोदकवत्यौ घृतं जलं प्रपूरयतः शुचि-कर्मशीले राजमाने युवामस्मेऽस्मभ्यमस्मासु वा रेत उदकं वीर्यं वा मनुर्हितं मनुष्येभ्यो हितकरं "मनुर्मनुष्यः" ( निरु० ८ । १२ ) सिञ्चतं प्रवाहयतम् ॥

वनुष्यति ॥ ८ ॥

वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति ।

"वनुयाम वनुष्यतः" ( ऋ० ८ । ४० । ७ ) इत्यपि निगमो भवति ।

"दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः" ( ऋ० ७ । ८२ । १ ) दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियम् । पापः पाताऽपेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यते र्वा स्यात् ।

तरुष्यति ॥ ९ ॥
तरुष्यतिरप्येवङ्कर्मा ।
"इन्द्रेण युजा तरुषेम वृत्रम्" ( ऋ० ७ । ४८ । २ )
इत्यपि निगमो भवति ।

भा०—'वनुष्यति' इत्येष धातुप्रयोगोऽनवगतसंस्कारोऽस्ति । "वन हिंसायाम्" ( भ्वादि० ) विकरणत्रयसाङ्कर्यादनवगतत्वमस्य वनधातोः "व्यत्ययो बहुलम्" ( अष्टा० ३ । १ । ८५ ) इत्येतेन "तनादिकृञ्भ्य उः" ( अष्टा० ३ । १ । ७९ ) इति 'उः' विकरणो व्यत्ययेन, पुनः सिप्—"सिब्बहुलं लेटि" ( अष्टा० ३ । १ । ३४ ) अलेटि खल्वपि सिप् तस्य 'स्' पश्चात् दिवादिगणस्यापि 'श्यन्' विकरणः। वनुष्यति, तथाकृत्वा स्वर आद्युदात्तः। अत्रानवगतप्रकरणं पुनरनवगतसंस्कारकथनस्य प्रयोजनमनेकानवगतत्वस्य द्योतकम् । त्रयाणां विकरणानां सङ्कर इति द्योत्यते । तर्हि 'हन्तिकर्मा' इति कथने वन धातोरनेकार्थत्वादत्र हन्तिरेवार्थो ग्रहीतव्यस्तथा 'तरुष्यति' इत्यग्रिमपदस्यापि तथाविधत्वं प्रदर्शयितुमुक्तम् । 'तरुष्यतिरप्येवङ्कर्मा' हन्तिकर्माऽनेकविकरणत्वादनवगतसंस्कारश्चात्रार्थानवगतत्वमप्यपेक्ष्यते तस्मात् पूर्वं हन्तिकर्मेत्युक्तमनुवृत्त्यर्थम् । "तॄ प्लवनसन्तरणयोः" ( भ्वादि० ) अत्र तु हिंसार्थस्ततोऽपि 'उ–सिप–श्यन्' इति त्रीणि विकरणानि ॥ अथोदाहरणानि यास्कप्रदर्शितानि तत्र "वनुयाम–वनुष्यतः" इत्येकम् "दीर्घप्रयज्युमति यो वनुष्यति" इति द्वितीयम् ।

'वनुयाम वनुष्यतः' इति समग्रमन्त्रस्तदर्थश्च—

यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो ।
वनुयाम वनुष्यतो न भन्तामन्यके समे ॥

हे इन्द्राग्नी ! हे ब्राह्मण ! राज्ये प्राप्तप्रतिष्ठ विद्वन् ! तथा राज्यशासने सामर्थ्यवन् राजन् ! "ब्रह्मक्षत्रे वा इन्द्राग्नी" (कौ० १२।८) यद्वा विद्युत् ! अग्ने ! य यत–यतो–हीमे जनाः शत्रुपक्षीयास्तना विशालया गिरा वाण्या विह्वयन्तेऽस्मान् संग्रामायाह्वयन्ति पृतन्यतः पृतनां संग्राममिच्छन्तस्तानस्माकेभिरस्माकं पक्षीयैर्जनैः सह वयं सासह्याम सम्यगभिभवेम घ्नतो हन्याम । तथा युवां कुरुतं शस्त्रास्त्रयानादावुपयुक्तौ भवेतम् । अन्ये समे सर्वे मा भुवन् ।

"दीर्घप्रयुज्यमति यो वनुष्यति" इति समग्रमन्त्रस्तदर्थश्च—

इन्द्रा वरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम्
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥

हे राष्ट्रपते ! तथा हे धर्माध्यक्ष ! "वरुण धर्मणां पते" ( तै० ३ । ११ । ४ । १ ) युवामस्माकमध्वरायाध्वरवते 'अकारो मत्वर्थीयश्छान्दसः' यजनशीलाय विशे जनाय । विशः प्रजाः, प्रजायमानाय पुत्रपौत्रप्रभृतये जनाय महत्-शर्म शरणं यच्छतं प्रयच्छतं तच्छरणं प्राप्य वयं तं दुर्धियं पापधियं खलं पापिनं पृतनासु संग्रामेषु संघर्षेषु जयेम यः खलु दीर्घप्रयज्युं दीर्घकालात् निरन्तरं सततं यज्ञस्य कर्तारं राष्ट्रे श्रेष्ठकर्मणोऽनुष्ठातारमस्मज्जनमस्मादृत्य वनुष्यति।हन्तुमिच्छति ।

पूर्वः 'वनुष्यति' प्रयोगः सामान्यार्थे यतः, उत्तरः "वनुष्यति" सन्नन्तोऽभिमतः, तत्र 'उ, सन्, य' इति मध्यगतः सकारः सन्प्रत्ययस्य, अभ्यासलोपश्चेति, अत एव द्वितीयमुदाहरणं दत्तं चतुर्विधानवगतत्वार्थम् ।

निरुक्तयः—'प्रयज्युः' "यजिमनिशुन्धिदसि जनिभ्यो युच् (उणा० ३।२०) यज्युः प्रततः प्रतरां ततोऽनुष्ठितो येन यज्युर्यज्ञो सः, धात्वर्थे 'प्र' इत्युपसर्गः, दुर्धः, अम् स्थाने शस् छान्दसः, दुर्धियः स्थाने रेफे लोपे दीर्घे खलूकारे धकारस्य ढकारो यणादेशश्चेति सर्वं छान्दसम् । 'पापः'—पिबतीति पा योऽपानामपेयानां सुरादीनां पाता स विपर्ययेण पापः । पापः पुनः पुनः पत्यमानः पापतीति यः पापत्—यङ्लुकि डप्रत्यये पापः । नीचैः पतति वा पुनः पुनः पतनात् ।

तरुष्यति प्रसङ्गे—'इन्द्रे युजा तरुषेम वृत्रम्' इति समग्रमन्त्रस्तदर्थश्च—

ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम् ॥

ऋभुः—हे ऋभवः ! बहुभासमानाः शत्रवः ! "ऋभव उरु भान्तीति" ( निरु० ११।१६ ) तेजस्विनः शत्रवः ! आत्मानं तेजस्विनो मन्यमानाः शत्रवः ! वयमृभुभिः स्वपक्षीयैस्तेजस्विभिर्वो युष्मानभिभवेम, हे विभ्वो विभवः प्रभूतसाधनसम्पन्नाः शत्रवः ! स्वपक्षीयैः प्रभूतसाधनसम्पन्नै र्जनैः सह तथा युष्माकं शवांसि बलानि च शवसा स्वकीयेन बलेनाभिभवेम । अस्माकं वाजो बलं वाजसातौ संग्रामेऽस्मानवतु रक्षतु रक्षिष्यतीति निश्चयः, वयमिन्द्रेण शस्त्रास्त्राणां प्रक्षेप्त्रा सेनाया नायकेन सहायकेन शत्रुं तरुषेम हन्यामेत्याशा ।

वक्तव्यम्—"वनुष्यति" प्रसङ्गे यथा 'वनुष्यतः, वनुष्यति' इत्युदाहरणे तद्रूपे दत्तस्तथैव 'तरुष्यति प्रकरणेऽपि तद्रूपेणोदाहरणेन भवितव्यम् ।
तच्चेत्थम्—

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ( ऋ० ८ । ९९ । ५ )

हे इन्द्र ! ऐश्वर्यन् राजन् ! त्वं प्रतूर्तिषु संग्रामेषु "प्रपूर्वकात् तुर्वि हिंसार्थः" (भ्वादि०) अधिकरणे क्तिन्, प्रहिंस्यन्ते शत्रवोऽस्मिन् स संग्रामः । तेषु संग्रामेषु विश्वाः स्पृधः स्पर्धनशीलाः शत्रुसेनाः । स्पर्द्ध धातोः क्विपि 'स्पृध्' पूर्वाकारसहितस्य रेफस्य सम्प्रसारणं छान्दसम् । अभि–असि 'अभिभवसि' अशस्तिहा–अशस्तिमनिष्टं हन्तीति–अनिष्टस्य हन्ताऽथ जनिताऽस्माकं सत्कीर्तिस्य जनयिता विश्वस्य शत्रुबलस्य हिंसकोऽसि त्वं तरुष्यतो हतो हिंसिताऽसि ॥

इतिपूर्वोक्तमुदाहरणं यास्कमते खलूत्प्रेक्ष्यमस्ति हि न तन्मताद्बहिरस्ति यतः प्रथमपुरुषैकवचननिर्देशेन–अल्पेन नैयून्येनाऽपि तद्रूपमेव गृह्यते 'तरुषेम' इत्युदाहरणे यकाराभावेऽपि न धात्वर्थनैन्यून्यं भवति । पुनश्च 'वनुयाम वनुष्यतः' इत्यत्रोभयविधत्वमस्ति 'वनुष्यतः' इति यथानिर्देशम् । 'वनुयाम' इत्यल्पनैयून्येन पृथग् विकरणभेदेन चेष्टमेव । 'तरुषेम' इत्यत्र यकारापाये विकरणद्वयेनोदाहरणं दत्तं तिङन्तस्य प्राधान्यादाचार्येण, कृदन्तमुदाहरणमप्युत्प्रेक्ष्यं नाचार्यानुमतिरिति न ॥

भन्दनाः ॥ १० ॥

भन्दना भन्दतेः स्तुतिकर्मणः ।

"पुरु प्रियो भन्दते धामभिः कविः" ( ऋ० ३।३।४ )

इत्यपि निगमो भवति ।

"स भन्दना उदियर्ति प्रजावतीः" ( ऋ० ९।४६।४१ )

इति च ॥

भा०—'भन्दनाः' इत्यनवगतं पदं धात्वर्थप्रत्ययाभ्याम् । "भदि कल्याणे–सुखे च" अत्र तु स्तुतिव्यापारको धातुर्भदिः, स्तुतौ प्रमाणं दर्शयत्याचार्यो–यदत्र स्तुत्यर्थे प्रयुक्तोऽस्ति । 'पुरु प्रियः कविर्धामभिर्भन्दते स्तौति । तिङन्तमुदाहृत्य तस्य स्तुत्यर्थं प्रसाध्य 'भन्दनाः' इति यदनवगतं कृदन्तमुपस्थापयति स्तुत्यर्थे "भदि धातोः" "सुयुरुवृञो युच्" ( उणादि० २ । ७५ ) इत्यनेन युच् प्रत्ययो धातुबाहुलकात् । पुनः स्त्रियां टाप् । अतः 'भन्दनाः' स्तुतिव्यापाराः । 'स भन्दना प्रजावतीः ।' इति चोदाहरणमतिस्पष्टम् ।

'पुरु प्रियो भन्दत' इति समग्रमन्त्रस्तदर्थश्च—

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।

आ विवेश रोदसी भूरिवर्पसा पुरु प्रियो भन्दते धामभिः कविः ॥

विश्वस्य नायकः परमात्मा यज्ञानां सङ्गमनशीलानां ग्रहगोलानां पालको-रक्षकः, विपश्चितां विदुषामसुरः प्राणप्रदः स वैश्वानरोऽग्निर्वाघतां मेधाविनाम् "वाघतो मेधाविनः" ( निघं० ३ । १५ ) विमानमुच्चैर्गमनाय विमानयावभिमाय वयुनं च प्रज्ञानं मार्गस्य बोधकं च । स रोदसी द्यावापृथिव्यौ भूरिवर्पसा बहुगुणरूपेणऽऽविष्टवान्, तं तथाभूतं परमात्मानं पुरुप्रियः पुरवो बहवो गुणाः प्रिया यस्य स कवि मेधावी विद्वान् भन्दते स्तौति ।

'स भन्दना उदियर्ति' इति समग्रमन्त्रस्तदर्थश्च—

स भन्दना उदियर्ति प्रजावती विश्वायुर्विश्वाः सुभरा अहर्दिवि ।
ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्रमस्मभ्यं याचतात् ॥

स च इन्द्रो राजा विश्वायुः सर्वप्रजाहिताय गन्ता प्रजाहितवतीर्विश्वाः सुभराः सुष्ठु धारणीया भन्दनाः स्तुतीः सोमरूपं परमात्मानं प्रति प्रेरयति तथा ब्राह्मं सन्तानसहितं तदुपयोगिधनं चाश्वपस्त्यं व्याप्तगृहं यद्वा—अश्वादिपशवश्च यस्यं-गृहं च हे इन्दो ! सोम ! परमात्मन् ! तेनेन्द्रेण राज्ञाऽस्माभिश्च पीतोऽध्यात्मरीत्याऽऽत्मनि गृहीतः—उपासीतस्त्वमस्मभ्यं तमिन्द्रं राजानं याचतात् प्रापयतात् ॥

आहनः ॥ ११ ॥

"अन्येन मदाहनो याहि तूयम्" (ऋ० १० । १० । ८)

अन्येन मदाहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यात् ॥

भा०—'आहनः' इत्येतदनवगतमप्रतीयमानार्थकं च । आहंसि—इवेत्यर्थ-प्रत्यायकेन मध्यमैकवचनेन तिङन्तेन पदेनार्थप्रदर्शनम् । आहनः सम्बोधनैकवचने । आङ् पूर्वात् "हन् हिंसायाम्" ( अदादि० ) धातोः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) असुन् प्रत्ययः । आहनः—आहंसि—इव न तु बाह्यप्रहारेण मारयसि किन्तु भाषमाणा हि खल्वाहंसि कथमसभ्यभाषणात्, आहनः—इव भवति तस्मात् 'आहनः' सम्बुद्धौ । हे अयुक्तभाषणेनाघातकारिणि ! मत्तोऽन्येन सह शीघ्रं गच्छ ।

समग्रमन्त्रस्तदर्थश्च—

न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥

हे यमि रात्रे ! यत्त्वया विलापं कुर्वत्योक्तम् "बृहन्मित्रस्य वरुणस्य धाम कदु ब्रवः" ( ऋ० १० । १० । ६ ) यद्यपि मित्रस्य वरुणस्य धाम बृहद् लम्ब०

मार्व दूरं यदस्ति तद्धाम गन्तारो गमनशीलास्तु सन्तीहान्तरिक्षे ये चरन्ति चलन्ति परन्तु ते देवानां सूर्यादीनां स्पशः स्पृशन्तीति स्पशो ज्योतिर्विद्यायां नक्षत्राण्युच्यन्ते प्रवहनामके वायुमार्गे वर्तमानानि सूर्यादीन् देवान् स्पृशन्ति— इति यथा "स्पश बाधनस्पर्शयोः" "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३।२।७५ ) इति ताच्छीलिकः क्विप् । एवं स्वभावास्ते स्पश आकाशयात्रिणः सूर्यादीन् देवान् गच्छन्ति त एते न तिष्ठन्ति, न विरमन्ति, न निमिषन्ति स्वकीयमार्गं परित्यज्येतस्ततो न चेष्टन्ते, तर्हि हे रात्रे ! आवयोर्दुःखवृत्तान्तं को नयेत् कश्चास्मत्पितृकुलयोः श्रावयेत्—न कश्चिदपीत्यर्थः । अतोऽसाध्यं दुःखमेतत्, तस्मात्त्वमाहनः ! हृदयपीडिके ! योऽयं मद्दिवसादन्यस्तेन सह सङ्गमनं कुरु तं शीघ्रं प्राप्नुहि, तेन सह गार्हस्थ्यभारमुद्यच्छ रथस्य चक्रे इव ॥

नदः ॥ १२ ॥

ऋषिर्नदो भवति नदतेः स्तुतिकर्मणः ।

"न॒दस्य॑ मा रुध॒तः काम॒ आग॑न्" ( ऋ० १।१७९।४ )

नदनस्य मा रुधतः काम आगमत् । संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥

भा०—'नदः' इत्यनवगतं पदं शब्दतोऽप्रसिद्धार्थतश्च । कोऽत्राप्रसिद्धार्थः ? उच्यते 'ऋषिः' मन्त्रदृक् मन्त्रार्थस्य भाषिता वाग्मी । "णद् अव्यक्ते शब्दे" ( भ्वादि० ) ततोऽच् पचादिलक्षणस्तदा तु नदो महती नदी । सोऽत्र न गृह्यते "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( अष्टा० ३ । १ । १३४ ) इत्यनेनावगतत्वं तत्तु खल्ववगतमेव, परन्तु भौवादिकोऽत्र 'णद' धातुर्नेष्यते यतो नदो नदी भवतस्तस्य णदट् टित्त्वात् । किन्तु चुरादिगणीयः "णद भाषार्थः" (चुरादि०) ततोऽच् स्वतन्त्रो बाहुलकात् । तेन भाषिता वक्ता मन्त्रार्थस्य वक्ता, न तु साधारणो वक्ता । अत्र भाषार्थः स्तुत्यर्थे प्रयुक्तः । 'नदस्य मन्त्रार्थभाषमाणस्येन्द्रियनिरोधं कुर्वतो ब्रह्मचारिणः कामस्तेन सह विवाहं कर्तुमभिलाषो मां प्राप्तः । इति ऋषिपुत्र्या कृतब्रह्मचर्यया प्रार्थनां वेदयन्ते दर्शयन्त्याचार्याः ॥

समग्रमन्त्रस्तदर्थश्च—

न॒दस्य॑ मा रुध॒तः काम॒ आग॑न्नि॒त आजा॑तो अ॒मुतः॒ कुत॑श्चित् ।

लोपा॑मुद्रा॒ वृष॑णं॒ नीरि॑णाति॒ धीर॒मधी॑रा धयति श्व॒सन्त॑म् ॥

विवाहस्य प्रस्तावः कुमार्या कर्तव्यः—इति वैदिक आदर्शः "वधूरियं पतिमिच्छन्त्येति" ( ऋ० ५ । ३७ । ३ ) तद्वदत्र मन्त्रे कीदृशं कुमारं पतित्वाय

चाक्षेदिति च तथा कीदृशी कुमारी पतिमिच्छेदत्र वर्ण्यते—लोपामुद्रा लोपा छेद्या "लुपॢ छेदने" (चुरादि०) आमुद्रा क्षीत्वस्य प्रत्यायिनी समन्तात्पुष्टा मुद्रा योनिर्यस्याः सा-अक्षतयोनिः कुमारी पूर्णब्रह्मचारिणी, तथा लोपा विमोहिनी "लुप विमोहने" (दिवादि०) तेजस्विनी मुद्रा—आकृतिर्यस्याः सा गुणाचार-सम्पन्नाऽधीतवेददशाखा ब्रह्मचारिणी 'लोपा' इति, स्त्रियाः पुंवद्भावाभावश्छा-न्दसः। सा तथा भूत्वा ब्रह्मचारिणी तदाऽधीरा सती विवाहायोद्यता सती धीरं वृषणं वीर्यवन्तं वीर्यसेचनसमर्थं निर्—रिणाति नितरां गच्छेत्—अवश्यं गच्छेत् "रिणाति गतिकर्मा" (निघं० २। १४) सा श्वसन्तं तं प्राणवन्तं प्रकृष्टं जीवन्तं धयति पिबतीव पिबेदिवानुकूल्यमनुभवेत्। प्रार्थयेत च तव नवस्य वेदस्य वक्तु निरुद्धवीर्यस्य पूर्णब्रह्मचारिणः कामो मां प्राहः, स इतः कर्मफलात् पूर्वतः कुतोऽपि कर्मफलादाजातः—त्वं तं पूरयेत्यर्थः।

सोमो अक्षाः ॥ १३ ॥

"न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्र॑यः सोमो॑ अक्षाः" (ऋ० १० । ८९ । ६)

अक्षोतेरित्येवमेके।

"अनूपे गोमान् गोभिरक्षाः सोमो॑ दुग्धाभिरक्षाः" (ऋ० ९ । १०७ । ९)

["लोपाशः सिंहं प्रत्यञ्चमत्साः ॥" *] (ऋ० १०।२८।४)

क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके। अनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति। सर्वे क्षियतिनिगमा इति शाकपूणिः ॥

भा०—'अक्षाः' इति क्रियापदं 'सोमः' इत्यनेन पदेन सह युक्तमनवगत-मनेकार्थमनेकधातुजं च। "अक्षू व्याप्तौ" (स्वादि०) ततो लुङि मध्यमैक-वचनञ्च व्यत्ययेन प्रथमैकवचनस्य स्थाने, आडभावश्छान्दसः "बहुलं-छन्दस्य-माङ् योगेऽपि ॥" (अष्टा० ६ । ४ । ७५) इटो विकल्पिते पक्षे—इत्येकः कल्पः। "क्षि निवासे" (तुदादि०) ततो लुङि धातोरिकलोपोऽन्यत्पूर्ववत्—द्वितीयः

* एष पाठो मूलपुस्तकेषु दुर्गभाष्यपाठे चान्यथा कुतश्चिदागतोऽप्रासङ्गिको लेखकप्रमादात्। अस्य व्याख्यानं केनापि भाष्यकारेण न कृतं दुर्गभाष्येऽपि न। तस्मात् अप्रामाणिकं मत्वाऽस्माभिरपि न व्याख्याते।

कल्पः । "क्षर संचलने" ( भ्वादि० ) ततो लुङि—अडागमे 'अक्षारीत्' इति प्राप्ते "बहुलं छन्दसि" ( अष्टा० ७ । ३ । ९७ ) ईटोऽभावे रूपम् ।

समग्रमन्त्रस्तदर्थश्च—

न यस्य॒ द्यावा॑पृथि॒वी न धन्व॒ नान्तरि॑क्षं॒ नाद्र॑यः॒ सोमो॑ अक्षाः ।

यद॑स्य म॒न्युर॑धिनी॒यमा॑नः शृ॒णाति॑ वी॒ळु रु॒जति॑ स्थि॒राणि॑ ॥

यस्येन्द्रस्य राज्ञः स्वरूपं द्यावापृथिव्यौ नाश्नुवाते व्याप्नुतः, न धन्वं द्यावापृथिव्योर्मध्ये गमनशीलं जलं मेघरूपं समुद्ररूपं वाऽश्नुते व्याप्नोति नान्तरिक्षमश्नुते व्याप्नोति नाद्रयः पर्वताः—अश्नुवते व्याप्नुवन्ति । सोमः—अक्षाः—अश्नुते व्याप्नोति, सोमः शान्तो ब्राह्मणो व्याप्नोति येन यदस्य मन्युः प्रेर्यमाणः सन् शत्रुबलानि दृढान्यपि शृणाति हिनस्ति ॥ इत्यत्र 'अशूङ्' धातोः प्रयोगः 'अक्षाः' इत्येके—बहव आचार्या अनुभवन्ति ।

अपरश्च—

अ॒नूपे॒ गोमा॒न् गोभि॑रक्षाः॒ सोमो॑ दु॒ग्धाभि॑रक्षाः ।

स॒मु॒द्रं न सं॒वर॑णान्यग्मन्म॒न्दी मदा॑य तोशते ॥

अनूपे तृणोदकवति देशे गोमान् गोस्वामी गोपालो वा गोभिः सह क्षियति निवसति चेत्तदा सोमो दुग्धरसो दुग्धाभ्यो गोभ्योऽपि—अक्षाः क्षरति—ऊधसि प्रवर्तते, यथा समुद्रं संवरणान्युदकानि गच्छन्ति, इत्थं तथाभूतोऽयं मन्दी—आनन्दवान् मन्दयिता हर्षयिता सोमो दुग्धरसो गोमतो मदाय हर्षायान्येषां हर्षाय सुखाय च तोशते गच्छति प्रवर्तते ॥ यथान्यत्र वेदे "एष क॒विर॒भिष्टु॑तः प॒वित्रे॒ अधि॑ तोशते" ( ऋ० ९ । २७ । १ ) क्वचित् पाने "स नो॑ अर्षा॒भि दू॒त्यं॑ त्वमिन्द्रा॑य तोशसे" ( ऋ० ९ । ४५ । २ ) ॥

'गोभिरक्षाः' अत्र 'क्षि निवासे' इत्यस्य प्रयोगः, 'सोमो दुग्धाभिरक्षाः' इत्यत्र 'क्षर सञ्चलने' इत्यस्य प्रयोगः । शाकपूणिराचार्यस्तु सर्वत्र त्रिषु स्थानेष्वपि 'क्षि निवासे' धातोस्तान् प्रयोगान् मन्यते । अस्यार्थभेदो जायते "न यस्य द्यावापृथिवी....." इति यस्येति यस्मिन् यस्य मनसि वा द्यावापृथिव्यौ न वसतः—न जलराशिर्नान्तरिक्षं न पर्वताः किन्तु सोमः शान्तो ब्राह्मणो वसति, अग्रे पूर्ववत् । 'अनूपे गोमान्' इति 'अनूपदेशे गोमान् गोभिः सह यो वसति तस्य दुग्धाभिर्दुग्धासु स्वस्वपि गोदुग्धरसो वसति ॥

श्वात्रम् ॥ १४ ॥

श्वात्रमिति क्षिप्रनामाशु अतनं भवति ।

"स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जात-
वेदाः" ( ऋ० १० । ८८ । ४ )
स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत्क्षिप्रमग्निरकरो-
ज्जातवेदाः ॥

भा०—'श्वात्रम्' इत्यनवगतम् । क्षिप्रमभिधेयम् । आशु–अतनमिति व्युत्पाद्यार्थप्रदर्शनम् । 'आशु' इति शीघ्रार्थे प्रसिद्धः "अशूङ् व्याप्तौ" (स्वादि०) ततः 'उण्' प्रत्ययः ( उणादि० १ । १ ) आशु शीघ्रं तदर्थे 'शु' । "आशु इति च शु इति क्षिप्रनामनी भवतः" ( निरु० ६ । १ ) तत्पूर्वकात् 'अत सातत्य-गमने" ( भ्वादि० ) इत्यतः "स्फायित···शुभ्यो रक्" ( उणादि० २ । १३ ) रक् प्रत्ययो बाहुलकात् णिच्च 'श्वात्रं' भावे 'अतनम्' इति कथनात् । यद्वा 'आशु' इत्यस्य पूर्वं आकारोऽन्ते क्षिप्यते 'शु आ अत्रम्' यणादेशे श्वात्रम् । अथवा 'आशोः–अतनम्' आशुर्वायुस्तस्यातनं गमनमिव गमनं श्वात्रं पूर्ववदाकारस्यान्त आगमः, आशुर्वायुर्भवति "वायुर्वा आशुः" ( शत० ८ । ४ । १ । ९ ) ॥

समग्रमन्त्रस्तदर्थश्च—

यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः ।
स पतत्रीत्वरं स्था जगद् यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥

यः खलु जातवेदाः–जातप्रज्ञानः सर्वज्ञो वैश्वानरो विश्वस्य नायकः परमात्मा सृष्टियज्ञस्य प्रथमो होता प्रसारयिताऽस्ति तथा देवैर्मुक्तैर्मुमुक्षुभिश्च सेवितः सेवनीयो यं च देवा मुमुक्षुव आज्येन स्वात्मसमर्पणेन स्वात्मनाऽध्यात्मयज्ञेन "यज्ञो वा आज्यम्" ( कौ० १३ । ७ ) यज्ञो वै यजमानस्यात्मा" ( कौ० ४ । १४ ) आवृणानाः–भरमाणा धारयमाणाः समाञ्जन् सम्यक् साक्षात्कुर्वन्ति । स पक्षिणं सरिसृपं स्थावरं वृक्षादिकं जङ्गमं मनुष्यादिकं च यत्सर्वं शीघ्रमुत्पा-दयति स्वप्रकाशात्मकेन स्वरूपेण प्रकाशितं करोति ॥

ऊतिः ॥ १५ ॥
ऊतिरवनात् ।
"आ त्वा रथं यथोतये" ( ऋ० ८ । ६८ । १ ) इत्यपि
निगमो भवति ॥

भा०—'ऊतिः' इत्येतदनवगतम् । अवनादिति व्युत्पाद्यार्थप्रदर्शनम् । "अव-रक्षणगतिकान्तिप्रीतितृप्त्यादिषु" ( भ्वादि० ) ततः क्तिन् "मन्त्रे···ऊतियूति-जूतिसातिहेतिकीर्तयश्च" ( अष्टा० ३ । ३ । ९७ ) निपातनमेवानवगतत्वं तत्र सम्प्रसारणस्य दीर्घत्वं प्रत्ययस्योदात्तत्वं च ।

समग्रमन्त्रस्तदर्थश्च—

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥

हे शविष्ठ ! अतिशयेन बलवन् ! सतां पते ! इन्द्र ! ऐश्वर्यवन् ! परमात्मन् ! यद्वा राजन् ! त्वामूतये रक्षणाय यथेष्टगतये यथेष्टव्यवहाराय तथा सुम्नाय सुखाय रथं रथमिवावर्तयामः, रथं यथाभीष्टसाधनाय स्वाभिमुखी कुर्मः सेवामहे वा तथा त्वां तुविकूर्मिं बहुकर्माणं बहुकर्तारम् "तुवि बहुनाम" ( निघं० ३ । १ ) 'कूर्मिः कर्ता कर्म वा, कृञ् धातोः "अर्त्तेरूच–मिः" (उणा० ४ । ४४) इति बाहुलकात् 'मिः' प्रत्ययस्तथा 'उत्' च बाहुलकादेव तदकारस्य । ऋतीषहमृतिं दयनीयं सहते न तमुपेक्षते यस्तं यद्वा परप्रहारं सहते यस्तं त्वामावर्तयामः ॥

हासमाने ॥ १६ ॥

हासमाने इत्युपरिष्टाद् व्याख्यास्यामः ॥

भा०—'हासमाने' इत्येतदनवगतं पदं रूपानवगतत्वादविज्ञातार्थत्वाच्च । "हसे हसने हर्षणे" ( भ्वादि० ) यद्वा "हास स्पर्द्धायाम्" धातुर्वैदिकः । ततः शानच् स्वरव्यत्ययश्चाप्यनवगतत्वे विज्ञेयः । तदिदमग्रे ( दैवतकाण्डे ९ । ३९ ।–अश्वे इव विषिते हासमाने ) इत्यत्र व्याख्यास्याम इति निरुक्तकारः कथयति । अन्यत्रापि मन्त्रेषु तदर्थद्वयं संवर्तते, तद्यथा "नावाजिनं वाजिना हासयन्ति" ( ऋ० ३ । ५३ । २३ ) स्पर्द्धयन्ति हासयन्ति वा । तथा "मरुतां पृत्सुति हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ" ( ऋ० १ । १६९ । २ ) हासमाना हासं कुर्वती स्पर्द्धमाना वा ॥

पड्भिः ॥ १७ ॥

"बलूकः पड्भिरुपसर्पदिन्द्रम्" (ऋ० १० । ९९ । १२)

पानैरिति वा स्पाशनैरिति वा स्पर्शनैरिति वा कचित् ॥

भा०—'पड्भिः' इत्यनवगतं पदमनेकधातुसम्बन्धादनेकाभिप्रायकं च । "पा पाने" ( भ्वादि० ) इत्यतः, यद्वा "स्पश ग्रहणसंश्लेषणयोः" (चुरादि०) इत्यतः, अथवा "स्पृश संस्पर्शे" ( तुदादि० ) इत्यतः "सर्त्तेरटिः" ( उणा० १ । १३४ ) अटि प्रत्यये धातोर्बाहुलकात् तथा 'प' भावश्च धातोः । तृतीया बहुवचनम् ।

समग्रमन्त्रस्तदर्थश्च—

> एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम् ।
> स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥

एवं महान्—असुरः प्रज्ञावान् "असुः प्रज्ञानाम" (निघं० ३ । ९) 'वम्रकः' वमत्युद्गिरतीति वम्रः "स्फायितञ्चि···शुमिभ्यो रक्" ( उणा० २ । १३ ) इति बाहुलकात् रक्प्रत्ययान्तोऽनुकम्पायां वम्रकः "अनुकम्पायाम्" ( अष्टा० ५ । ३ । ७६ ) दोषाणामुदीरयिता निःसारयिता स्वान्तस्तो बहिर्निःसारकः, एवं मलानां दोषाणामन्तस्तो निःसारणाच्च लाघवं प्राप्तः "वम्रको ह्रस्वनाम" ( निघं ३ । २ ) मुमुक्षुर्वक्षथाय प्रकाशाय प्रकाशं प्राप्तुम् "सूर्यस्येव वक्षथो ज्योतिरेषां····" ( ऋ० ७ । ३३ । ८ 'वक्षथः प्रकाशः' इति सायणः ) "अनूनेन बृहता वक्षथेन" ( ऋ० ४ । ५ । १ ) "वक्ष" वैदिको धातुः प्रकाशे बले चेति गम्यते ततोऽथः प्रत्यय औणादिको बहुलात् । पड्भिः पानैरध्यात्मरसपानैः स्पाशनैरालिङ्गनैरिति वा "स्पश ग्रहणसंश्लेषणयोः" ( चुरा० ) स्पर्शनैः संस्पर्शैर्वा, इन्द्रं परमात्मानमुपसर्पत् गतवान् । इत्थं यत्नेन स इयानो गम्यमानः प्राप्यमाणः स इन्द्रः परमात्मा तस्मै स्वस्ति कल्याणं करति—करोति, इषमन्नमूर्जं रसं सुक्षितिं सुनिवासभूमिं सर्वमाभाः—आभासयति प्रकाशयति ॥

ससम् ॥ १८ ॥

"ससं न पक्वमविदच्छुचन्तम् ॥" ( ऋ० १०।७९।३ )

स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तदिवाविदज्ज्वाज्वल्यमानम् ॥

भा०—'ससम्' इत्येतदनवगतम् । 'स्वपनम्' इत्यवगमः । माध्यमिकं ज्योतिर्विद्युत्, इत्यभिधेयवचनम् । तच्च स्वपनं स्वप्नशीलं माध्यमिकं ज्योतिः । तस्यानित्यदर्शनात् तत्खलु स्वपनमुच्यते, "सस स्वप्ने" ( अदादि० ) ततः पचादिकश्चोऽच् । ससः स्वप्नः सुप्त इव सदा ज्वलयन् न तिष्ठति । वर्षाकाले हि जागर्ति विद्युज्ज्योतिः ॥

समग्रमन्त्रस्तदर्थश्च—

> प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
> ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥

अग्निः प्रकृष्टेन मातुर्निर्मात्र्याः पृथिव्याः प्रतरं गुह्यं गुप्तं स्तनं कुमार इवेच्छन् वीरुधः कक्षदेशस्था उर्वी बह्वीरोषधीः—उपसर्पति गच्छति दग्धुम् । तथा

पर्क सर्व स्वपनं स्वप्नस्वभावं शुचन्तं दीप्यमानं विद्युद्देवं तु खलु रिरिह्वांसं मेघं लिहन्तं रिपः पृथिव्याः "रिपः पृथिवीनाम" ( निघं० १ । १ ) षष्ठ्या लुक् "सुपां सुलुक्....." ( अष्टा० ७ । १ । ३९ ) पृथिव्या उपस्थे—अन्ते—उपरिस्थ-वस्तुनो मध्ये—अविदत्, प्राप्तमभवत् प्राप्तो भवति । पार्थिवोऽग्निरोषधिषु तथाऽन्तरिक्ष्याग्निर्मेघेषु वर्तते । तदुत्पादनं काष्ठघर्षणेन जलप्रपातेन कर्तुं शक्यते, इत्याशयः ।

द्विता ॥ १९ ॥

"द्विता च॒ स॒त्ता स्व॒धया॑ च श॒म्भुः ॥" (ऋ० ३।१७।५)

द्वैधं सत्ता मध्यमे च स्थान उत्तमे च । शम्भुः सुखभूः ॥

भा०—'द्विता' इत्येतदनवगतं पदम् । अवगतं त्वस्ति "तस्य भावस्त्वतलौ" (अष्टा० ५ । १ । ११८) भावेऽर्थे । परन्त्वत्र भावो न गम्यते किन्तु "संख्याया विधार्थे धा—अधिकरणविचाले च" ( अष्टा० ५ । ३ । ४३ ) इत्यनेन अधिकरण-विचाले लक्ष्यते, तस्मादनवगतं पदमन्यार्थेऽन्यप्रत्ययप्रवर्तनात् । तस्मात् "द्वैधम्" इत्यवगमः । 'द्विता' इत्यस्य 'द्विधा' इत्यवगमे वक्तव्ये केवलेनैकेन विकारेण कार्यं सिद्धं भवेत्, 'द्वैधम्' इति वक्तव्ये तु बहुकल्पनीयं भवति 'द्वि' इत्यस्य 'द्वै' भावः, 'ता' इत्यस्य 'धम्', परन्तु 'द्विधा' इत्यत्र केवलं धकार एव कल्पनीयः । उच्यते, असन्दिग्धार्थं यास्कः 'द्वैधम्' इत्यवगमं दर्शयति तस्याधिकरण-विचाले नियतत्वात्, 'द्विधा' इति वक्तव्येऽवगमे सन्देहः स्यात्, यदत्र विधोऽर्थोऽधिकरणविचालो वा । 'धा' प्रत्ययस्योभयार्थत्वात् । अधिकरणं सूचितं हि मध्यमं चोत्तमं च स्थानमिति द्वे स्थाने । तस्मात्—'द्विता' इति 'द्विधा' इति मन्तव्यं तच्च "द्वैधम्" इत्यर्थे । को द्वैधं वर्तते, उच्यते स शम्भुः सुखभूः । 'द्विता' इति पदमनवगतं वेदेऽन्यत्राप्युपलभ्यते—तद्यथा 'द्विता नक्षत्रं प्रपथन्त भूम' ( ऋ० ७ । ८६ । १ ) द्विता द्वैधं द्वयोः स्थानयोरुत्तरगोलार्द्धे दक्षिण-गोलार्द्धे च नक्षत्रगणं बाहुल्येन परमात्मा प्रथितवान् ॥

समग्रमन्त्रस्तदर्थश्च—

यस्त्वद्धोता पूर्वो॑ अग्ने॒ यजी॑यान्द्वि॒ता च॒ स॒त्ता स्व॒धया॑ च श॒म्भुः ।
तस्या॑नु॒ धर्म॒ प्र य॑जा चिकित्वोऽथा॑ नो धा अध्व॒रं दे॒ववी॑तौ ॥

हे पार्थिवाग्ने ! त्वत्तः पूर्वोऽग्निर्होता यजीयान् होतृकर्मणः कर्ताऽधिको यष्टा शम्भुः कल्याणरूपो द्वैधं द्वयोः स्थानयोर्मध्येऽन्तरिक्षे द्युलोके च स्वधया स्वधारकया सत्ता निषत्ता स्थाता स्थितिशीलो विद्युद्रूपः सूर्यरूपश्च तस्य धर्मानु प्रकृष्ट यज ।

हे चिकित्वः-प्रज्वलन्-अग्ने ! अथास्माकं यज्ञं देवानां दिव्यगुणानां प्राप्ती प्रारय । यथा सूर्योऽग्निराकाशीयपिण्डानि चालयति प्रकाशयति च यथा चाऽन्तरिक्ष्यो विद्युदग्निरन्तरिक्षस्थान्युदकानि प्रेरयति तथा पार्थिवेनाग्निना यन्त्र-चालनादिकार्याणि विधातव्यानि ।

व्राः ॥ २० ॥

"मृगं न व्रा मृगयन्ते" ( ऋ० ८ । २ । ६ )

मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

भा०—'व्राः' इत्येतदनवगतम् । 'व्रात्याः' इत्यवगमः । 'प्रैषाः' इत्यभि-धेयाः । 'व्रात्य' इति शब्दस्थस्य 'त्य' इत्यस्य लोपश्छान्दसः । यथा 'व्रात' इति शब्दस्थस्य 'त' इत्यस्य लोपश्छान्दसः सायणभाष्ये प्रदर्शितः "रश्मिभिः सूर्य-स्याञ्ज्यक्ते समनगा इव व्राः ।" ( ऋ० १ । १२४ । ८—सूर्यरश्मय इव व्राः व्राता इत्यत्र तकारलोपश्छान्दसः ) तथा "सुवर्ध्नवो ये विश्या इव व्राः" ( ऋ० १ । १२६ । ५—व्राः व्राताः । तकारलोपश्छान्दसः ) अत्र खलु 'त्य' लोपश्छान्दसः । 'त्य' इति लोप एवानवगतत्वम् । 'व्राः—व्रात्याः—प्रैषाः—राज-कर्मकराः ॥

समग्रमन्त्रस्त्वर्थश्च—

गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयन्ते ।

अभित्सरन्ति धेनुभिः ॥

अस्मदन्ये वैदिकेभ्योऽस्मत्तो भिन्ना अनार्याः सन्ति ये धेनुभिर्वाग्भिः "धेनु-र्वाङ्नाम" ( निघं० १ । ११ ) अवैदिकीभिः स्तुतिभिरिन्द्रं परमात्मानं स्तुवन्ति ते व्रात्या व्रतात् पतिताः—वस्तुतो न स्तुवन्ति किन्त्वभित्सरन्ति छद्मगतिमभि-चरन्ति ते तु व्राः—व्रात्याः प्रैषाः—मृगस्य निग्रहीतारो राजभृत्या गोभिरवश्यं मृगं न सिंहमिव मृगयन्तेऽन्विष्यन्ति । ते न वास्तविकाः स्तोतारः किन्तु वञ्चकाः सन्ति ॥

वराहः ॥ २१ ॥

वराहो मेघो भवति वराहारः "वरमाहारमाहार्षीः" इति च ब्राह्मणम् * ।

"विध्यद् वराहं तिरो अद्रिमस्ता" (ऋ० १ । ६१ । ७)

---

* उपलब्धब्राह्मणग्रन्थेषु नैतद् वचनं दृश्यते । क्वचिद्विनष्टे स्यात् ।

इत्यपि निगमो भवति । अयमपीतरो वराह एतस्मादेव वृहति मूलानि वरं वरं मूलं वृहतीति वा ।
"वराहमिन्द्र एमुषम्" ( ऋ० ८ । ७७ । १० ) इत्यपि निगमो भवति ॥

भा०—'वराहः' इत्येतदनवगतं पदमनेकार्थमनेकधा च व्युत्पाद्यम् । वराहो मेघः, वराहारः—वरः श्रेष्ठ आहारो यस्मात् स वराहारः सन् वराह उच्यते 'अरलोपेन' यथा व्रात्या एव व्रा उच्यन्ते त्यलोपेन । यद्वा 'वरमाहरति—इति 'वर' इत्युपपदे—आङ् पूर्वकात् "हृञ् हरणे" ( भ्वादि० ) ततो डः प्रत्ययः "अन्येभ्योऽपि दृश्यते वा" (अष्टा० ३।२।१०१) इति डप्रत्ययान्तं साध्यं वराह इति पदं मेघोऽभिधेये—उभयत्र 'वरः श्रेष्ठ आहारो यस्माद् भविष्यद्वृत्त्या लक्ष्यते जलवर्षणाद् वराहारोऽन्नादिकम् । इत्येकोऽर्थो व्युत्पत्तिश्चैका । अत्र प्रमाणमुद् ध्रियते ब्राह्मणवचनम्, यत् "वरमाहरमाहार्षीः" इति भूतकालप्रसङ्गश्च दर्शितः 'भूते' इत्यधिकृत्य हि डः प्रत्ययो विधीयते । निगमश्च दर्शयत्याचार्यः 'विध्य-द्वराहं तिरो अद्रिमस्ता ।' अयमन्यो वराहः शूकरः पशुः, एतस्मादेव वराहारत्वाद् वराहः । यद्वा वृहति मूलानि वृहति—इति कथमप्युपधावृद्धया 'वार्हः' रेफाकारयो-र्विपर्ययेण 'वराहः' अथवा 'वरं वरं मूलं वृहति' 'वरवर्हः' सन् वराहः 'वर्ह' इत्यस्य 'अह' भावः पृषोदरादित्वाद् विज्ञेयः । तदनुकूल्या च निगमः "वराह-मिन्द्र एमुषम् ।"

वक्तव्यम्—अत्र पण्डितचन्द्रमणिमहोदयेन 'अयमपीतरो वराहः 'वृहति मूलानि' इति कथने पर्वतो गृहीतस्तथा तदुदाहरणे 'वराहमिन्द्र एमुषम्' मन्त्रे च वराहपशुग्रहणं दुर्गाचार्यादिभाष्यकाराणां भ्रान्तिरस्तीति यदुक्तं तन्न युक्तम् । यतो हि निरुक्ते समाचार एष पदे पदे ह्युपलभ्यते, यदितरशब्देन लोकप्रसिद्धः पदार्थो गृह्यते तद्यथा "अयमपीतरो नदीकच्छ एतस्मादेव" ( निरु० ४ । १८ ) "अयमपीतरो हरिरेतस्मादेव" ( निरु० ४ । १९ ) 'वृहति मूलानि' इति निर्वच-नेन तु खल्वितरो वराहः शूकरः पशुरेव गृह्यते साक्षात् पश्यामो वयं स मूलानि वृहति—उद्यच्छति । मन्त्रेषु लोकप्रसिद्धस्य वराहस्य शूकरस्य वर्णनं नास्तीति न, उपलभ्यते हि तद्वर्णनम्, यथा 'लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात्" ( ऋ० १० । २८ । ४ ) अस्मिन् मन्त्रे लोपाशः—द्वीपः पशुः, सिंहः, क्रोष्टा, वराहः, चत्वारः पशवो वर्णिताः सन्ति । वराहः शूकरः पशुः स्पष्टो मन्त्रेऽस्ति । तथा "आ ग्नास्य जग्मिवदपि कर्णे वराहुः" ( ऋ०

१० । ८६ । ४ ) 'वराह-युः' वराहः शूकरस्तं आऽरण्यभा स इच्छति ग्रहीतुम् । अतः सन्निहितनिरुक्तिबलात् "वराहमिन्द्र एमुषम्" इति निगमे वराहः पशुः शूकरः । अथ चेदितरशब्देन मेघादितरः पर्वतो वराहो गृह्येत तदा पशुर्वराहो न वारयितुं शक्यते तस्यापि तदितरत्वात् । मन्त्रेषु सोऽपि वर्ण्यते हि यथा पूर्वमस्माभिरुदाहृतं 'लोपाशः' इति मन्त्रे । तस्मात् 'वृहति मूलानि' निर्वचनप्रक्रियानन्तरं 'वराहमिन्द्र एमुषम्' इति मन्त्रे प्राधान्येन तु पशोर्वराहस्य वर्णनेन भवितव्यं सामान्येन पर्वतस्य वराहस्य । पशोर्वराहस्य वर्णनेन भवितव्यं न केवलस्य पर्वतस्य वराहस्येति ।

'विध्यद् वराहम्' इति समग्रमन्त्रस्तदर्थश्च—

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।

मुषायद्विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता ॥

अस्य खलु सर्वनिर्माणाधारस्य सृष्टियज्ञस्य सवनेष्ववसरेषु निर्माणर्तुषु खल्विन्द्रः सूर्यो महः पितुं पपिवान् पानक्रियासामर्थ्यात् पितुं पानयोग्यं जलं महत् सद्यः पीतवान् पुनश्च स विष्णुर्व्यापको भूत्वा चारु—चारूणि रमणीयान्यन्नानि—ओषधिसारमयाणि मुषायत्—मुषितवान् जुगोप गुप्तरूपेण रक्षितवान् । पुनर्यदा तत्पीतं मुषितं गुप्तं वस्तु पचतो पक्वो वराहो मेघोऽभवत् तदा स इन्द्रः सूर्यो विष्णुर्व्यापकः—आकाशे व्यापनशीलो भूत्वा सहीयान् बहुबलवान्—अस्ता क्षेप्तेव—अस्त्रक्षेप्तेवाद्रिं पर्वतसमानं वराहं मेघं विध्यद् विद्धवान् ॥

"वराहमिन्द्र एमुषम्" इति मन्त्रस्तदर्थश्च—

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।

शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ॥

इन्द्र हे परमात्मन् ! त्वेषितस्त्वया प्रेरितो विष्णुर्महाप्रराक्रमवान् सूर्यः "विष्णुः स आदित्यः" ( शत० १४ । १ । १ । ६ ) तानि यानि विश्वानि जलप्रभवाणि—अन्नादीनि—आभरत्—आभरति लोकाय । तथा शतं महिषान् बहुसंख्याकान् महिष्यादिपशून् भारस्य वाहकान् तथा तेषां दुग्धवतां क्षीरे दुग्धे पाकं प्राप्तमोदनं पायसं वराहं मलस्य शोधकं दोषाणामपसारकं शूकरं पशुं च महीष्यादि पशुसंसर्गेऽपठत्, गृहस्थस्य निर्वाहकः पशुर्महीष्यादिर्दुग्धप्रदो मलशोधकः पशुरपेक्ष्यते तदित्थं दिवि पशुम्—एमुषम्—आमुषं समन्ताद् गुप्तमाभरति ॥

पर्वतपक्षे—पूर्वपंक्तेस्तु पूर्ववदर्थः । उत्तरपंक्तेस्तावत् शतं बहून् महिषान्

महेषान् महेष्टान् महार्घान् कमनीयपदार्थान् स्वर्णादीन् दुग्धपाकमोदनं वराहं पर्वतं वरणीयजलौषध्यादिप्रदं पृथिव्यां सुरक्षितमाभरति ।

पर्वताभिधायी वराहः शब्दो हि यस्मिन् स मन्त्रः प्रदर्श्यते—

स इद्दासं तुवीरवं पतिर्दन्षळक्षं त्रिशीर्षाणं दमन्यत् ।

अस्य त्रितो न्वोजसा वृधानो विपा वराहमयोअग्रया हन् ॥

( ऋ० १० । ९९ । ६ )

स त्रित इन्द्रः—पृथिव्यन्तरिक्षद्युलोकानां ज्ञानेषु व्याप्तः, तीर्णतमो मेधया वा तथाभूतो विद्वान् स्वस्यौजसा पौरुषेण वर्धमानस्तुवीरवं षळक्षं त्रिशीर्षाणं दासं वराहं तुविशब्दं जलप्रपातैर्बृहच्छब्दवन्तं षट्—अक्षाः—धुरो यस्य षळक्षेषु वर्तमानं पृथिव्याः सप्त स्तराः सन्ति तत्र षट् स्तराः पर्वतस्य एकं स्तरं गर्भभूतं विहाय द्वितीयस्तरादारभ्य यावद् बहिः पृष्ठं पृथिव्यास्तावत् पर्वतस्तिष्ठति पुनस्त्रि-शीर्षणं त्रीणि शिरांसि शृङ्गाणि दक्षिणदिशं विहायोत्तरस्यां दिशि स्थितः पर्वतः पूर्वस्यां पश्चिमायां च दिशि निजशिखराणि पक्षिवत् प्रसारयति तिष्ठति च तथैव प्रसारितपक्षमिव तं तथाभूतं दासं बहुधनस्य जलवनस्पतिखनिजपदा-र्थानां दातारम् "दासृ दाने" ( भ्वादि० ) वराहं—वराहारं वरस्य वरणीयस्य पदार्थस्याहर्तारं समर्पयितारं पर्वतं स एव पतिर्ज्ञानेन स्वामित्वमापन्नो निजे-नौजसा दमन्यत्—दमयन्—दमने समर्थो भवति । स तं वराहं पर्वतं—अयोऽग्रया विपा—अयो लोहोऽग्रे यस्याः साऽयोग्रा लोहाग्रया विपा विपातनसमर्थया विपाटनसमर्थया वा 'वि' पूर्वात् 'डः' प्रत्ययः "अन्येभ्योऽपि दृश्यते—वा" (अष्टा० ३ । २ । १०१ ) विपा टाविभक्तेर्लोपः । तथा विपाटनसमर्थया लोहाग्रया अङ्गुल्या वैद्युतशक्तिमय्या तं पर्वतं हन्ति, कुल्याप्रवाहाय वनस्पतिमूलानां बर्हणाय रत्नानां निःसारणाय च ॥

अङ्गिरसोऽपि वराहा उच्यन्ते ।

"ब्रह्मणस्पति र्वृषभिर्वराहैः" ( ऋ० १० । ६७ । ७ )

भा०—अङ्गिरसः खल्वपि वराहाः कथ्यन्ते वेदे । अङ्गिरसोऽत्र रश्मयस्ते वराहाः । यथा "ब्रह्मणस्पतिः" इति मन्त्रे । ब्रह्मणस्पतिः—ब्रह्म वाक् तस्याः पति-र्ब्रह्मणस्पतिः—स्तनयित्नुवाचः पतिरिन्द्रो विद्युद्वः सूर्यो वा स वृषभिर्जलस्य वर्षितृभिर्वराहैरश्मिभिः । वराहा अत्र रश्मयः, उक्तं हि सूक्तेऽस्मिन् द्वितीयमन्त्रे दिवस्पुत्रासः "ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः" ( २ ) दिवो द्योतमानस्य सूर्यस्य पुत्रा रश्मयः ॥

समग्रश्चमन्त्रस्तदर्थश्च—

स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिः द्रविणं व्यानट् ॥

स ब्रह्मणस्पतिः सूर्यो विद्युद्रूपोऽग्निर्वा निश्चयेन सत्यैः सर्वकालिकैः समानख्यानैः समानधर्मकैः शुचद्भिर्ज्वलद्भिः "शोचति ज्वलति कर्मा" ( निघं० १ । १६ ) धनसैर्धनसम्भाजयितृभिर्वृषभिर्जलस्य वर्षितृभिर्घर्मस्वेदिभिः—घर्मस्तापोऽहर्वा तन्मोचकैः "ञिष्विदा मोचने" ( भ्वादि० ) वराहैर्वरं वरणीयं जलमाहरद्भिः—रश्मिभिरस्मदर्थं गोधायसं गोर्माध्यमिकवाचो गर्जनस्याप्रस्य जलस्य वा धारकं मेघं व्यदर्दं व्यदर्दद् व्यदारयद् विदारितवान् पुरुषव्यत्ययेन मध्यमः । पुनश्च द्रविणं धनं व्याप्नोदवतारयति प्रेरयति ॥

अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते ।
"पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ॥"
( ऋ० १ । ८८ । ५ )

भा०—अथ च य एते माध्यमिका मध्यस्थानेऽन्तरिक्षस्थाने भवा देवगणा बहुवचनप्रचर्याः । सप्त मरुद्गणाः—वराहवः 'उकारान्ता वराहधर्मकाः—उच्यन्ते प्रत्ययभेदमात्रेण नार्थभेदस्तत्र । अन्यत्रापि यथा "वराहवस्स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेमेऽशिमिविद्विषः पर्जन्यास्सप्तपृथिवीमभिवर्षन्ति" ( तै० आर० १ । ९ । ४ ) पर्जन्यविशेषाः—वराहवः । 'वर आह द्रुः' यद्वा 'उर्वित्' बाहुलकात् ।

'पश्यन् हिरण्यचक्रानयो' इति समग्रमन्त्रस्तदर्थश्च—

एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।
पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून् ॥

हे मरुतः ! विद्युच्छक्तिमन्तो वायवः ! वायव इव गमनसमर्था वायुमिश्रिता विद्युत्तरङ्गाः ! गोतमो विद्युद्विद्यानिष्णातो विद्वान् वो युष्माकं यत्त्यदिव पूर्वोक्तं जलनिःसारणयोजनमिव यन्त्रयोजनं सस्वः—अशब्दयत्—अघोषयत् "स्वृ शब्दे" ( भ्वादि० ) लङि तिपि शपः श्लुः, तिपस्तकारलोपः "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" ( अष्टा० ६ । १ । ६६ ) अडभावश्छान्दसः । किं तद् योजनम् ? उच्यते यद् युष्मान् योजने युक्तान् यन्त्रयुक्तान् हिरण्यचक्रान् हिरण्यानि चक्राणि येषां तान् अयोदंष्ट्रान्, चक्राणामुपरि दंष्ट्रा भवन्ति परस्परं चक्रचक्रचालनाय तल्लोहमय्यो दंष्ट्रा येषां तानयोदंष्ट्रान् विशेषेण धावतो वरा-

हून् वराणां वरणीयानामभीष्टानामाहरकान् विमानादियाने देशदेशान्तरयात्राया निमित्तभूतान् पश्यन् जानन् सन् योजनमघोषयत्–इति सर्वैश्चेति चेत्यते संज्ञायते "चिति संज्ञाने" ( भ्वादि० ) सामान्यकाले कर्मणि लुङ्, चिणि प्रयोगः ॥

स्वसराणि ॥ २२ ॥

स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा । स्वरादित्यो भवति स एनानि सारयति ।

"उस्रा इव स्वसराणि" ( ऋ० १ । ३ । ८ ) इत्यपि निगमो भवति ॥

भा०—'स्वसराणि' इत्येतदनवगतं पदं व्युत्पत्तितोऽनेकार्थतश्च । 'स्वयं सारीणि' इति यद्वा 'स्वरादित्यः स सारयति–एनानि' इत्यर्थावगमः 'अहानि' इत्यभिधेयकथनम् । अहानि स्वयं सरणशीलानि खल्वग्रेऽग्रेगमनशीलानि चक्रवत् सन्ति पुनः पुनर्गच्छन्ति पुनःपुनर्भ्राम्यन्ति पृथिव्यां न हि यन्त्रचक्रवत् कमपि चालकं जनमपेक्षन्ते यद्वा सूर्यः स्वः स सारयति गमयत्येतानि तस्मात् स्वसराणि । स्वयमर्थे 'स्व' शब्दोपपदे 'सृ' गतौ" ( भ्वादि० ) ततः 'पचादिलक्षणोऽच्' शीलेऽर्थे । यद्वा सूर्यार्थे 'स्वर्' शब्दोपपदे णिजन्तात् सृधातोः कर्मण्यभिधेयेऽच् प्रत्ययः । "कृत्यल्युटो बहुलम्" ( अष्टा० ३ । ३ । ११३ ) कृतो बहुलमित्यपीष्यते । 'स्वर्' इत्यस्य रेफलोपः पृषोदरादित्वात् । देवराजयज्वना "पुंसि संज्ञायां घः प्रायेण" ( अष्टा० ३ । ३ । ११८ ) इति सूत्रतः । साधितस्तन्न सम्यक्, पुंसीत्युच्यते नपुंसकं खलु स्वसराणि ॥

वक्तव्यम्—'स्वसराणि' इत्यत्र पदनामसु ग्रन्थभागो लुप्तः प्रतिभाति । केवलमत्र 'स्वसराणि–अहानि भवन्ति' इत्येव कथने न कृतार्थता । पदनामसु पठनमनावश्यकं यतो हि "स्वसराणि–अहर्नाम" ( निघं० १ । ९ ) अहर्नामसु तस्य पठितत्वात्, यदा निःसंदिग्धं तदहर्नामसु पठितं तदाऽत्र पदनामसु सन्दिग्धेषु नामसु पठनेऽपि तदेवाहर्नामेति पिष्टपेषणमेव स्यात् । पुनश्च "स्वसराणि गृहनामसु" ( निघं ३ । ४ ) इत्यपि पठितम् । अहर्नामकस्यैव समर्थनमेकाकि न रोचते, तदत्र 'अहर्नाम गृहनाम' इति द्वयमपि गौणभावेन पुनरावर्तनीयं तदतिरिक्तार्थत्वं मुख्यरूपेण द्योतनीयम्, तदा तु पदनामसु पठनस्य सार्थक्यं भवेत् । तस्मादत्रास्माभिरनुमीयते–अहर्नाम गृहनाम च प्रदर्शनपूर्वकोऽन्यार्थस्य प्रदर्शकः पाठविशेषोऽत्रासीत् । कल्पनीयश्चेत्थम्—"स्वसराण्यहानि भवन्ति स्वयं सारिण्यपि वा स्वरादित्यो भवति स एनानि [ स्वरयन् गच्छन् ] सारयति । स्वसराणि गृहाणि भवन्ति स्वानि मत्वा [ स्वं स्वं;

स्वभावतः ] प्राणिनो येषु सरन्ति [ गच्छन्त्याश्रयाश्र ] स्वरादित्यो भवति स एनान् सारयति प्राणिनस्तेषु [ अस्तं गच्छन् ] "उस्रा इव स्वसराणि" एवं स्वसराणि, इति शब्दस्य अहानि, तथा 'गृहाणि' इत्यर्थौ निघण्टुपठितोऽस्ति, अत्र 'पदनामसु' अनेकार्थप्रसङ्गे पठनात् तस्यानेकार्थत्वं प्रोत्यते । अहर्गृहाभ्यामन्यत्रार्थेऽपि 'स्वसराणि' इतिशब्द उत्प्रेक्ष्यः, यास्कोदाहृते मन्त्रे तु तस्यानेकार्थत्वं खल्वस्ति । तद्दर्शयिष्यामः, प्रथमं तावत् पृथक् पृथक्-अर्थाभिधायी 'स्वसराणि' इतिशब्दः । यत्र मन्त्रेषु विद्यते ते–उदाह्रियन्ते ।

गृहाणि, स्वसराणि—

अस्य मन्दानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् ।

प्र यद्वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमन्त ॥

( ऋ० २ । १९ । २ )

'अस्य मध्वः–अस्यान्तरिक्षस्थस्य जलस्य द्रावणाय पातनायाधःपातनाय "मधु–उदकनाम" ( निघं० १ । १२ ) मन्दानो ज्वलन् सन् "मन्दते ज्वलतिकर्मा ( निघं० १ । १६ ) इन्द्रो विद्युद्रूपोऽग्निर्देवो वज्रहस्तो वज्रवद्धननशक्तिमान्, अर्णोवृतम् 'अर्णस्–उदकनाम" ( निघं० १ । १२ ) अर्ण उदकं वृतं–आवृतं येन तमुदकाच्छादकमहिं मेघम् "अहिर्मेघनाम" ( निघं० १ । १० ) यत्–यदा विवृश्चत् व्यच्छिनत्–मेघे विच्छिन्ने सति नदीनां प्रयांसि नदीरूपेण जलानि च "प्रयः–उदकनाम" ( निघं० १ । १२ ) प्र–अच्छाभिलक्ष्य समुद्रं निम्नं जलनिधानं प्रचक्रमन्त गन्तुमुपाक्रमन् वयः–न स्वसराणि पक्षिणः स्वसराणीव यथा पक्षिणः स्वसराणि स्वतः सराणि प्राप्तव्यानि गृहाणि नीडानि प्रक्रमन्तेऽस्तं गच्छति सूर्ये ॥

"आ हंसासो न स्वसराणि गन्तन" ( ऋ० २ । ३४ । ५ )

"धेनुर्न विश्वे स्वसरेषु पिन्वते" ( ऋ० २ । ३४ । ८ ) इति च ।

अहानि स्वसराणि—

"इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ।"

( ऋ० ३ । ६० । ६ )

हे इन्द्र ! तुभ्यं मनुष्यस्य धर्मभिः कर्मभि देवानां व्रतानि–इमानि स्वसराणि अहानि येमिरे न्यच्छन् "स्वसराणि अहानि" ( सायणः ) ।

अहर्गृहनामभ्यामन्यार्थेऽपि 'स्वसराणि' इति पदं वेदेषु प्रयुज्यते तस्य पदनामसु पाठात् । तद्यथा—स्वसराणि शरीराणि भवन्ति, जीवात्मनां स्वाङ्गानि

स्वतो वा सरणशीलानि न स्थिराणि नश्वराणि जन्ममरणधर्माणि सन्ति, यतः "स्वरसवाही विदुषोऽपि तन्वनुबन्धोऽभिनिवेशः" ( योगद० २ । ९ ) स्वरादित्यः स एव पुनः पुनरुदयेन कालमायुषः समाप्य सारयत्यग्रेऽग्रे जीवात्मनं येषु तानि शरीराणि स्वसराणि । तद्यथा—"आत्मेव वातः स्वसराणि गच्छतम्" ( ऋ० १ । ३४ । ७ ) स्वसराणि शरीराणि—"आत्मेव वातः, यथा प्राणिनामात्मभूतः प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत्" ( सायणः ) ।

स्वसर एकवचने स्वादित्यः । स्वतः सरणशीलत्वात् स्वतः प्रकाशस्य सारकत्वात् । तद्यथा । "अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ॥" ( ऋ० ३ । ६१ । ४ ) मघोनी धनवती—उषाः—स्यूमेव वस्त्रमिव तमोऽन्धकारमवचिन्वती—अपक्षयं प्रापयन्ती स्वसरस्य स्वतः प्रकाशस्य सारयितुः सूर्यस्य पत्नी गच्छति । तथा "विश्वाः पिन्वथः स्वसरस्य धेनाः" ( ऋ० ५ । ६२ । २ ) स्वसरस्य स्वयं सर्तुरादित्यस्य विश्वाः सर्वाः धेना लोकानां प्रीणयित्रीः पिन्वथः—वर्धयथो मित्रावरुणौ—इति सायणः ) ।

स्वसर इत्येकवचने मार्गार्थे प्रयुज्यते वेदे । स्वतः सरति तस्मात् स्वसरो मार्गः । तद्यथा—युवो रथो अध्वरं देववीतये प्रति स्वसरमुप यातिपीतये" ( ऋ० ६ । ६८ । १० ) हे इन्द्रावरुणौ—राजपुरोहितौ—राजा च पुरोहितश्च—युवयो रथो देवपीतये विदुषां पीतिः तृप्तिर्यस्मिन् भवति तथाभूतमध्वरं यज्ञं प्रति पीतये स्वतृप्तये स्वसरं मार्गमुपयाति । "स्वसरं मार्गम्" इति सायणः ।

अथ 'उस्रा इव स्वसराणि' इति यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च यत्र 'स्वसराणि' इति शब्दोऽनेकार्थकः—

विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः ।
उस्रा इव स्वसराणि ॥

हे सर्वे अप्तुरः—कर्माणि तुतुरन्ति शीघ्रतया कुर्वन्ति ये ते तूर्णयः शीघ्रगतयः सुतं सम्पादितं कर्मज्ञानसंस्थानं प्रतिविद्यास्थानमागन्तन—आगच्छत—प्राप्नुत, उस्राः—इव यथा उस्राः सूर्यरश्मयः स्वसराणि दिनानि प्रति प्राप्नुवन्ति यद्वा उस्राः—गावः स्वसराणि गृहाणि प्रतिगच्छन्ति प्राप्नुवन्ति । 'उस्रा गोनाम' ( निघं० २ । ११ ) अथवा—उस्राः—रसस्योत्स्राविण्यो नाड्यो यथा स्वसराणि शरीराणि तूर्णं सद्यः प्राप्नुवन्ति । नाड्योऽपि रश्मय उच्यन्ते ॥

शर्याः ॥ २३ ॥
शर्या अङ्गुलयो भवन्ति सृजन्ति कर्माणि ॥

शर्या इषवः शरमय्यः । शरः शृणातेः ।
"शर्याभिर्न भरमाणो गभस्त्योः" ( ऋ० ९।११०।५ )
इत्यपि निगमो भवति ॥

भा०—'शर्याः' इत्यनवगतम् । अनेकार्थं भिन्नभिन्नव्युत्पत्तिकं च । 'शर्याः' अङ्गुलयो भवन्ति—इति तु ( निघं० २ । ५ ) अङ्गुलिनामसु पठितम् । यतः कर्माणि सृजन्ति कुर्वन्ति—सृजन्ति—इति सर्जाः—"सृज विसर्गे" (दिवा० तुदा०) ततः 'अच्' कर्तरि सकारजकारयोः शकारयकारौ पृषोदरादित्वात् । पूर्वोक्तमेतदङ्गुलिनाम 'शर्याः' इत्यत्रैकस्मिन्मन्त्रे सन्दिग्धार्थप्रदर्शनाय यद्वा—अनेकार्थप्रदर्शनायात्र पुनरावृत्तम् । मुख्यरूपेण पदनामसु पाठोऽत्र 'शर्याः' 'शरमय्यः' इत्यवगमः 'इषवः' इत्यभिधेयवचनम् । "शॄ हिंसायाम्" ( क्र्यादि० ) ततोऽप् प्रत्ययः करणकारके "ऋदोरप्" ( अष्टा० ३ । ३ । ५७ ) शृणाति हिनस्त्यनेनेति शरो लोहपत्रकम्, तत्प्रायाः शर्याः शरमय्यः—मयडर्थे प्राचुर्यार्थे प्रधानार्थे छान्दसो यत् प्रत्ययः । "यतोऽनावः" ( अष्टा० ६ । १ । २०७ ) आद्युदात्तः । शरप्रधाना इषवो भवन्ति । उपमार्थत्वेन यद्वा—अनेकार्थत्वेनैष मन्त्रः स च । समग्रमन्त्रस्तदर्थश्च—

सुम्र्यमि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥

हे सोमस्याभिषोतः ! त्वं सोमं श्रवसा "श्रवोऽन्ननाम" ( निघं० २ । ७ ) अन्नेन हेतुनाहारलक्ष्येण पानलक्ष्येण सोममोषधिमभिततर्दिथ हिन्धि पिण्ढि पिंश कञ्चिदक्षितं जनपानमुत्सं न, यथा कूपखानकः कमपि क्षयरहितं स्थिरं जना यतो पिबन्ति तं जनपानं कूपमभितर्दन्ति खनन्ति यथा वा गभस्त्योर्बाह्वोर्धनुर्धारयन् शर्याभिरिषुभिः शत्रूनभितर्दति हिनस्ति । यद्वाऽङ्गुलिभिर्धनुर्धारयन् यथाऽभिहिनस्ति ॥

अथ पृथक् पृथगर्थका मन्त्रा अपि सन्ति, इषुविषयकोमन्त्रः—

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥
( ऋ० १ । ११९ । १० )

हे अश्विनौ ! ज्योतिष्प्रधानरसप्रधानशक्तिमयौ देवौ ! अग्निजले ! विद्युद्वायू ! युवां पेदवे प्राप्तिसमर्थाय, पद धातोः 'उः प्रत्ययः—औणादिकः । उपधाया एकारश्छान्दस यद्वा पेजवे बलवज्जनाय । "पिज बले" ( चुरादि० ) जकारस्य दकार-

यच्छान्दसः । स्तृणां तरुतारं स्पर्द्धकानां योद्धृणां तरुतारं तारयितारं बहुवर्णीयं श्वेतं वैद्युतं श्वेतमश्वं पुनः पृतनासु संग्रामेषु "पृतनाः संग्रामनाम" ( निघं० २ । १७ ) अभियुममभियोध्यमानं दुष्टरमसह्यं चर्कृत्यं पुनः पुनः कार्यसाधकं भृशं कार्यसाधकं पुनः पुनर्भृशं चोपयोगकरणीयं चर्षणीसहं शत्रुजनानामभि भवितार-मिन्द्रमिव साक्षाद् विद्युदिव शर्यैः पुंलिङ्गनिर्देशो हिंसितुं समर्थैरिषुभिर्हुवत्यथः परिचरथो युवां कथां पूरयथः ॥

अङ्गुलयः शर्याः—

मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता ।

आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ ॥

( ऋ० १० । ६१ । ३ )

हे अश्विनौ ! युवामध्यापनोपदेशाभ्यां येषु हवनेषु—आह्वानेषु निमन्त्रणेषु द्रवन्ता—द्रवन्तौ गच्छन्तौ शच्या प्रज्ञानेन "शची प्रज्ञानाम" ( निघं० ३ । ९ ) 'विपः'—इति "सुपां सुपो०" वा ( अष्टा० ७ । १ । ३९ ) अम् स्थाने सु । विपं मेधाविनम् "विपः—मेधाविनाम" ( निघं० ३ । १५ ) 'मनो न तिग्मं वनुथः' मन इव शीघ्रं सम्भजथः । "वन षण सम्भक्तौ" ( भ्वादि० ) यः स यश्च तुविनृम्णो बहुप्रहारधनः "तुवि बहुनाम" ( निघं० ३ । १ ) "नृम्णं धननाम" ( निघं० २ । १० ) अस्यज्ञानप्रापणस्य प्रत्युपकारार्थमादिशं समा-दिष्टमाश्रीतं सङ्कल्पितं भोज्यं द्रव्यं गभस्तौ हस्ते गृहीत्वा शर्याभिरङ्गुलिभिः 'स्त्रीलिङ्गनिर्देशः' श्रीणाति पचति "श्री पाके" ( क्र्या० ) ॥

'शर्याः'—इषवः' इति बहुवचने 'शरमय्यः' परन्तु 'शर्या' एकवचनेऽपि भवति 'इषुः' तदर्थो मन्त्रो निम्नः—

"सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।

सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्त युवतिं न शर्याम् ॥

( ऋ० १० । १७८ । ३ )

अत्र निरुक्तम्—"सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव लक्ष्यं मिश्रयन्तीमिव शरमयीमिषुम्" ( निरु० १० । २९ ) ॥

अर्कः ॥ २४ ॥

अर्को देवो भवति यदेनमर्चन्ति । अर्को मन्त्रो भवति यदनेनार्चन्ति । अर्कमन्नं भवत्यर्चति भूतानि ।

अर्को वृक्षो भवति संवृत्तः कटुकिम्ना ॥

"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥
(ऋ० १ । १० । १)

गायन्ति त्वा गायत्रिणः, चार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रतो उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वा ॥ ४ ॥

भा०—'अर्कः' इत्येतदनवगतं पदमनेकार्थं च । अर्च धातोः कर्तृकर्मकरणकारकेषु निष्पन्नम् । देवो मन्त्रोऽन्नं तन्नामकः प्रसिद्धो वृक्षश्चाभिधेयाः । "अर्च पूजायाम्" ( भ्वादि० ) ततः कः प्रत्ययः "कृदाधारार्चिकलिभ्यः कः" ( उणा० ३ । ४० ) । कर्मणि करणे कर्तरि च कारके । अर्कोऽर्चनीयो देवः, यत एनमर्चति जनः, अर्को मन्त्रोऽर्चनसाधनं यदनेनार्चन्ति जनाः, अर्कमन्नमर्चकं यतो हि भूतानि—प्राणिनोऽर्चति तृप्यति तर्पयति वा । अर्को वृक्षः 'अर्कनामा' तरुर्भवति । कटुकिम्नाऽतिकटुकत्वादेव 'अर्चितः' संवृत्तः संसक्तः पूर्णः ।

मन्त्रार्थः—

हे शतक्रतो—बहूनि कर्माणि प्रज्ञानानि यस्य स त्वं शतक्रतो ! बहुकर्म—प्रज्ञानवन् ! परमात्मन् ! त्वां गायत्रिणो गायकाः—उद्गातारः सामवेदिनो गायन्ति गीत्या प्रशंसन्ति त्वामर्कमर्चनीयं देवं परमात्मानमर्किण ऋङ्मन्त्राणां पाठका अर्कवन्तोऽर्चनसाधनं मन्त्रा येषां पार्श्वे तेऽर्किणो होतार ऋङ्मन्त्रवन्तो मन्त्रैरर्कैरर्चन्ति स्तुवन्ति । ब्रह्माणो ब्राह्मणाः—यजुरध्ययनशीलास्त्वां वंशमिवोद्येमिरे—उद्यच्छन्ति—ऊर्ध्वं प्रदर्शयन्ति—उद्घोषयन्ति समन्त्रककर्मभिः ॥

अस्मिन् मन्त्रे अर्को देवः परमात्माऽर्चनीयः, तथा—अर्को मन्त्रोऽर्चनसाधनं तद्वन्तोऽर्किणः । अर्कस्यार्थद्वये प्रयोगः, 'अर्चन्ति' इति क्रियावशात्, नाम्यार्थसमाविष्टः मूलसंहितासु, अन्नार्थे वृक्षार्थे 'अर्क' शब्दस्य प्रयोगो न लभ्यते किन्तु तद्भिन्ने वैदिकसाहित्ये तु प्राप्यते तथाकृत्वा यास्केन 'अर्कमन्नं भवति—अर्को वृक्षो भवती'त्युक्तम्, उदाहरणमुपलभ्यते—"अर्कपर्णेन जुहोति । अन्नमर्कोऽन्नेनैवेममेतत् प्रीणाति" ( शत० ९ । १ । १ । ४ ) । अत्र—अर्को वृक्षस्तस्य पर्णं—अन्नं चाप्यर्थक इति ।

निर्वचनम्—वंश वनशयः—वने लम्बमानः शेते सावकाशत्वाद् वनस्य । 'वनं शी डः' "अन्येभ्योऽपि दृश्यते—वा" ( अष्टा० ३ । २ । १०१ ) वनशः

पूर्वपदस्याकारलोपे वंशः पृषोदरादित्वात् । वननात् श्रूयते ? श्रयते यः कश्चन वनति तं तदा स श्रयते—आश्रयं प्रयच्छति । श्रूयते पाठे तस्य वंशस्य वननात् सेवनात्—वादित्रे सेवनात् तदा ततो निःसृतः शब्दो स्वरः श्रूयते । 'वनपूर्वात् 'श्रि' यद्वा 'श्रु' धातोः 'डः' पूर्ववत्, वंशः ॥

पविः ॥ २५ ॥

पवी रथनेमिर्भवति यद् विपुनाति भूमिम् ।

"उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥"

( ऋ० ५ । ५२ । ९ )

"तं मरुतः क्षुरपविना व्ययुः" ( मैत्रा० सं० १ । १० । १४ ) इत्यपि निगमौ भवतः ॥

भा०—'पविः' इत्येतदनवगतमनेकार्थमनेकव्युत्पत्तिकं च । 'पविः वाक् नाम ।' "उत्ते शुष्मास ईरते सिन्धोरूर्मिरिव स्वनः । वाणस्य चोदया पविम्" ( ऋ० ९ । ५० । १ ) पठितं पूर्वम् ( निघं० १ । ११ ) । "पूञ् पवने" ( क्र्यादि० ) "अच इः" ( उणा० ४ । १३९ ) "पविः वज्रनाम" ( निघं० २ । २० ) "पूषणश्चक्रं न रिष्यति न कोशोऽवपद्यते । नो अस्य व्यथते पविः" ( ऋ० ६ । ५४ । ३ ) इत्यपि गतं पूर्वम् । "पृ्वी विशरणे मारणे" (क्र्यादि०) बाहुलकात् लुप्तयकारात् 'इः' प्रत्ययः, यद्वा 'पू' धातोरेव भिन्नार्थे विशीर्णे 'इः' प्रत्ययः, अत्र पुनर्नेमिरित्यर्थे निघण्टुपठितात् "पवते गतिकर्मा" ( निघं० २ । १४) इत्यतः स एव 'इः' प्रत्ययः । नेमिर्गच्छति हि गच्छतो रथस्य । अत एवोक्तं यास्केन 'पविः' रथनेमिर्भवति यतो भूमिं विपुनाति विलिखन् गच्छति 'पू पवने' इत्यतो वा, भूमिं विपुनाति वृषयति विषमां करोति । रथचक्रस्योपरिगता धारा पविः "मरुतो रथानां पव्या नेम्याऽद्रिमोजसा भिन्दन्ति ।" तथा च मैत्रायणी संहिता "देवा वै वृत्रस्य मर्म नाविन्दन् । तं मरुतः क्षुरपविना तीक्ष्णधारया वारितवन्तः ॥" समग्रमन्त्रस्तदर्थश्च—

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।

उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥

ते मरुतः सैनिकजनाः शुन्ध्यवो मार्गस्य शोधकाः परुष्ण्यां पर्ववत्यां पार्वत्यां नद्यामूर्णाः—तत्तटमाच्छादयन्त आवसन्तु, अपि तत्र वसन्तस्ते रथानां नेम्या हेतुभूतया तत्परिक्रमणायाद्रिं पर्वतमोजसा बलेन भिन्दन्तु । पर्वतस्थाने नद्या सह नदीमभिलक्ष्य यत्र यत्र नदी गच्छेत् तामनु पाषाणमुत्पाट्य मार्गो निर्मातव्यो राजपुरुषैः ।

अथाधिदैविकार्थः—ते जलशोधनसमर्था:—मरुतः पवन्यां पर्वतस्यां मेघमालायामवश्यं सर्वत आच्छादमाना वसन्तु, अपि च रथानां रमणानां वेगानां रथरूपाणां पथ्या गमनाख्येन बलेन च मेघं भिन्दन्ति ॥

वक्षः ॥ २६ ॥

वक्षो व्याख्यातम् ( निरु० अ० ४ पा० २ ख० १६ )

भा०—अप्रसत् इति प्रकरणे "उपो अदर्शि शुन्ध्युवो न वक्षो" ( ऋ० १ । १२४ । ४ ) 'वहेः सुट् च' इत्यसुन् । अनेकार्थमनवगतम्' । सूर्यस्य भासः कायस्योरोभागः । समग्रमन्त्रश्चापि तत्रैव व्याख्यातः ।

धन्व ॥ २७ ॥

धन्वान्तरिक्षं धन्वन्त्यस्मादापः ।

"तिरो धन्वाति रोचते" ( ऋ० १० । १८७ । २ )

इत्यपि निगमो भवति ।

भा०—'धन्व' इत्येतदनवगतमनेकार्थं च । धन्वमन्तरिक्षनाम तत्तु गतम् । तत्कथं यत् 'धन्वन्त्यस्मादापः' इत्यर्थावगमः । 'अन्तरिक्षम्' इत्यभिधेयवचनम् । "धवि गत्यर्थः" ( भ्वादि० ) ततः "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" ( उणा० १ । १५६ ) इत्यनेन 'कनिन्' प्रत्ययः । अपादाने कारके धन्वन्—धन्व नपुंसके । "तिरो धन्वाति रोचते ।" अस्य भाष्यकारैर्मन्त्रेऽस्मिन् धन्वशब्दोऽन्तरिक्षार्थे हि योजितः । परन्तु यदा 'धन्व' शब्दोऽन्तरिक्षार्थे पूर्वमेव पठितस्तर्ह्यत्र पदनामसु पठनस्य तस्मिन्नेवाभिधेये नैरर्थक्यमापद्यते । पदनामसु तु निगमानि विचारणीयान्यनेकार्थानि पदानि पठ्यन्ते । तथैवात्रैष धन्वशब्दोऽनेकार्थकः—उदाहृतमन्त्रे चानेकार्थत्वभाक् चात्र धन्वशब्दोऽन्तरिक्षवाचकः, धनुर्वाचकः, मरुभूमिवाचकश्च । पृथक्पृथगर्थका मन्त्रा अन्ये सन्ति किन्त्वत्र प्रसङ्गेऽनेकार्थविचारो मन्त्रे द्योत्यते । 'धन्व' शब्देन पृथक्पृथगपि त्रयोऽन्तरिक्षादयोऽर्था मन्त्रेषु लक्ष्यन्ते यद्बुध्यन्ते तत्र निदर्शनानि दीयन्तेऽस्माभिः ।

धनुरायुधार्थो धन्वशब्दः—

ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना ।

तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः ॥

( ऋ० २ । २४ । ८ )

ब्रह्मणस्पतिर्वेदस्य मन्त्रस्य परिपालयिता रक्षको वेदज्ञ आचार्यः—ऋतज्येन धन्वना सत्यं ज्ञानमेव धनुष्यरज्जुर्यस्मिन् तथाभूतेन धन्वना धनुषा क्षिप्रेण

क्षेपकेण क्षिप्रकारिणा वा वष्टि यं प्रहर्तुं कामयते तं प्राश्नोति प्राप्नोति स्वाधीनीकरोति। यतस्तस्य वेदविदुषो नृचक्षसो जनान् पश्यतः कर्णयोनयः कर्णस्थानाः श्रवणीया मन्त्रशब्दा उपदेशा साध्वीः—साध्व्य इषवो वाणा ज्ञानाय मार्गदर्शनाय सन्ति याभिः—यैर्वाणैर्जनानामज्ञानं पापं दोषं वाऽस्यति परास्यति विनाशयति, यद्वा याभिः—याः 'सुपां सुपो भवति' इति द्वितीयास्थाने तृतीया। याः—यान् वाणान् जनान् प्रति—अस्यति क्षिपति ॥

"इषुर्न धन्वन् प्रतिधीयते" ( ऋ० ९ । ६९ । १ ) "यथा शरः धन्वन् धनुषि प्रतिधीयते" ( सायणः ) ।

मरुदेशार्थो धन्वशब्दः—

सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः ।

मिहं कृण्वन्त्यवाताम् ॥ ( ऋ० १ । ३८ । ७ )

देवता मरुतः—रुद्रियासो रुद्रियाः—रुद्रेण यज्ञाग्निना संस्कृताः—यज्ञाग्नेरिमे वा मरुतो वायवः। छान्दसो घः प्रत्ययः। रुद्रो यज्ञाग्निः "अथ यदेतत् प्रथमं समिद्धो भवति धूप्यत इव तर्ह्येषः—अग्निर्भवति रुद्रः" ( शत० २।३।२।९ ) त्वेषास्तप्यमानाश्च तेनैवाग्निना अमवन्त उदकवन्तः सन्तः "अमः—उदकनाम" ( निघं० १ । १२ ) धन्वन् चित् मरुस्थानेऽपि सत्यं ह्यवातां मिहं वृष्टिं वातेन विना यद्वा वातरहितां निश्चलां मिहं वृष्टिमाकृण्वन्ति सम्यक् कुर्वन्ति सम्यक् सिञ्चन्ति। "मिह सेचने" ( भ्वादि० ) "धन्वन् मरुदेशे मिहं वृष्टिं कुर्वन्ति" ( सायणः ) ।

"धन्वन्निव प्रपा असि" ( ऋ० १० । ४ । १ ) यथा धन्वनि मरुभूमौ निरुदकप्रदेशे प्रपा—प्रपिबन्त्यत्र जलमिति प्रपाऽस्ति तथा त्वं सुखदाताऽसि तथा च सायणः ॥

अन्तरिक्षार्थो धन्व शब्दः—

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्तसिन्धून् ।

हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥

( ऋ० १ । ३५ । ८ )

हिरण्याक्षः सौवर्णरश्मिः सूर्यो देवः पृथिव्या अष्टौ दिशः पूर्वाद्याश्चतस्रो मुख्यदिश आग्नेय्याद्या उपदिशश्चतस्र "ककुभः दिङ्नाम" ( निरु० १ । ६ ) तथा धन्व—धन्वनः "सुपां सुलुक्" ( अष्टा० ७ । १ । ३९ ) इति लुक् षष्ठ्याः। धन्वनोऽन्तरिक्षस्य त्री—त्रीणि योजना योजनानि—अवकाशरूपाणि स्थानानि—

उत्तरगोलार्द्धदक्षिणगोलार्द्धमध्यभागाख्यानि, "धन्व—अन्तरिक्षोपलक्षितान् त्रि-संख्यकान् लोकान्" ( सायणः ) । 'धन्व धन्वानि' ( स्कन्दस्वामी—ऋग्भाष्ये ) । तथा सप्तसिन्धून् स्यन्दमानान् निरन्तरं गमनशीलान् प्रकरणसामर्थ्यात् पृथिव्यन्तरिक्षयोः साहचर्यात्—द्युलोकस्य सप्तजातीयलोकस्तरान् व्यख्यत् प्रकाशितवान् प्रकाशते वा । सप्तरश्मीन् वा तथा च ( स्कन्दस्वामी ) । स एष दाशुषेऽग्निहोत्रे—आहुतेः प्रदात्रे वरणीयानि भोगरत्नानि धारयन्—आगच्छति ।

अथ यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च यत्रानेकार्थको धन्वशब्दः—

यः परस्याः परावतस्तिरो धन्वातिरोचते ।

स नः पर्षदति द्विषः ॥

यः सूर्योऽग्निः परस्या दिशो दूरदिक्कः परावतः परवर्तिदेशाद् दूरदेशादपि तिरस्तीर्णं धन्व—रश्मिधनुरतिरोचतेऽतिरोचयते प्रकाशयति प्रकाशितं करोति [ अन्तर्गतो णिजर्थः ] तेन धन्वना धनुषा स नोऽस्माकं द्विषो द्वेष्टॄन् शत्रून्—अन्धकारादीन्—अतिपर्षत्—अतिपारयेत् प्रहरेत् । उक्तं यथाऽन्यत्र वेदे "आदित्या रुद्रवः·····यो३ऽस्मान् द्वेष्टि·····।" ( अथर्व० ३ । २७ । १ ) इति धनुरर्थे ।

यः सूर्योऽग्निः परस्या दिशो दूरदिक्कः परावतो परवर्तिदेशाद् दूरदेशादपि तिरस्तीर्णं धन्व मरुस्थानमतिरोचते—अतितापयति [ अन्तर्गतो णिजर्थः ] स नोऽस्माकं द्विषो द्वेष्टॄन् प्राणिनो दंशमशकादीन्—अतिपर्षत्—नाशयेत्—नाशयति । इति मरुस्थानार्थे ।

यः सूर्योऽग्निः परस्या दिशो दूरदिक्कः परावतः परवर्तिदेशाद् दूरदेशादपि तिरस्तीर्णे "तिरस्तीर्णम्" ( निरु० ३ । २० ) धन्व—धन्वनि—अन्तरिक्षे 'तीर्णम्' इति 'अन्तरिक्षस्य' विशेषणमन्यत्र निरुक्ते प्रयुज्यते ।' "तार्क्ष्यः·····तीर्णे अन्तरिक्षे क्षियति" ( निरु० १० । १७ ) ऽतिरोचते बहुप्रकाशते । 'अतिरोचतेऽतीत्य-रोचते प्रकाशते ।' ( दुर्गाचार्यः ) । इत्यन्तरिक्षार्थे ।

सिनम् ॥ २८ ॥

सिनमन्नं भवति सिनाति भूतानि ।

"येन स्मा सिनं भरथः सखिभ्यः" ( ऋ० ३।६२।१ )

इत्यपि निगमो भवति ।

भा०—'सिनम्' इत्येतदनवगतम् । 'सिनाति भूतानि' इति भूतसम्बन्धात् सम्बन्धावगत्या धातुनिर्देशः । 'अन्नम्' इत्यभिधेयवचनम् । "सिनम्—अन्ननाम" ( निघं० २ । ७ ) इति गतत्वादत्र पाठेऽन्यार्थस्यापि सम्भावना । "षिञ् बन्धने"

( स्वादि० क्र्यादि० ) ततः "इण् सिञ्जिदीङुष्यविभ्यो नक्" ( उणा० ३ । २ ) इत्यनेन नक् प्रत्ययः । एवं सिनमन्नं बन्धनं च ।

सिनशब्दस्यान्नार्थे बन्धनार्थे पृथक् पृथक् चोदाहरणं दीयते ।

बन्धनार्थे—

यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच ।

पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम् ॥

( ऋ० २ । ३० । २ )

यः—यस्मै [ ङे स्थाने सुः सुपां सुपो भवति छन्दसि ] वृत्राय मेघाय जनित्री तस्य जनयित्री विद्युत् सिनं बन्धनम् "सिनं बन्धनम्" ( दयानन्दः ऋ० २ । ३० । २ ) अत्र—अस्मिन् कर्मप्रसङ्गे—अभरिष्यत्—भरति धारयति पुनश्च तं प्रोवाच—प्रवक्ति—निजगर्जनया स्तनयित्नुरूपया प्रताडितवती नीचैः प्रसारितवती ज्ञानवते जीवाय पुनर्नीचैः प्रसरणात्—धुनयो नद्यो जलप्रवाहाः "धुनयो नद्यः" ( निघं० १ । १३ ) पथो रदन्तीः—मार्गान् विलिखन्त्यः सम्पादयन्त्यः स्वगमनाय, अस्मै—अस्येन्द्रस्य जोषमनु परितर्कनं प्रेरणं पृथिव्यां पातमनु दिवे दिवे प्रतिदिनं निरन्तरमर्थनीयं प्रापणीयं समुद्रं यन्ति गच्छन्ति । अत्र सिनशब्दो बन्धनार्थः ।

अन्नार्थे—

परिवृक्तेव पतिविद्यमानट् पीप्याना कूचक्रेणेव सिञ्चन् ।

एषैष्या चिद्रथ्या जयेम सुमङ्गलं सिनवदस्तु सातम् ॥

( ऋ० १० । १०२ । ११ )

एषैष्या—एष एषणं गतिवाहनं यन्त्रमेष्यमेषणीयमभीष्टं यस्याः सा यन्त्र-वाहनस्य प्रेरिका रथ्या रथस्य यानस्य विद्युत्कला परिवृक्ता—पतिसम्पर्करहिता यथा कुमारी पतिविद्यं—पतिवेद्यं पतिर्विद्यते प्राप्यते यस्मिन् स विवाहस्तमानट्, प्राप्नोति पीप्याना वर्धमाना भवति तथा सा यानस्य प्रेरिका विद्युत्कला यन्त्रं प्राप्य वर्धमाना सती स्वशक्त्या यानं यन्त्रं कूचक्रेण—इव सिञ्चन् यथा कूपचक्रेण 'पकारलोपश्छान्दसः' क्षेत्रं भूमिं सिञ्चति तथा सिञ्चति चलति पुनः सुमङ्गलं कल्याणकरं सिनवत्—अन्नवत्—अन्नयुक्तं सातं सम्भजनीयं स्थानं युद्धे व्यवहारे जयेम प्राप्नुयाम । इत्यन्नार्थः सिनशब्दः ।

अथ यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च यस्मिन् सिनशब्दोऽनेकार्थः—

इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ।

क्व त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः ॥

हे इन्द्रावरुणौ! राजन्! तथा मन्त्रिन्! वां युवयोरिमाः खलु युवामनु भ्रमणशीलाः प्रजाः—मन्यमाना युवां नेतारौ मन्यमाना युवाभ्यां स्वकीया मन्यमाना स्वयं बलवत्य इति मन्यमानाः—युवावते युवाभ्यां सद्भाय—अन्यस्मै राज्ञे तुज्या हिंसनीयाः पराजेयाः पराजयं प्रापणीया नाभूवन् तथाभूतेभ्यः सखिभ्यः प्रजाभ्यो युवामिन्द्रावरुणौ राजा मान्त्री चोभौ युवां सिनमन्नं भरथः पूरयथो धारयथो वां युवयोर्यशः क्व कुत्रास्ति, न क्वापीत्यर्थः, महद्यशस्विनौ युवाम्। यद्वा तथाभूतेभ्यः सखिभ्यः प्रजाभ्यो युवां सिनं बन्धनं भरथो धारयथो वां युवयोः क्व कुत्र स्यात् तद् यशो न स्यात् क्वापि यशः। इति मन्त्रे सिनशब्दस्यानेकार्थत्वादुदाहरणं पदनामसु सार्थकम् ॥

इत्था ॥ २९ ॥

इत्थाऽमुथेत्येतेन व्याख्यातम् ॥

भा०—'इत्था' इत्येतदनवगतमनेकार्थं च। "इत्था सत्यनाम" (निघं० ३।१०) गतं तत्तु। सोऽप्यस्यैकोऽर्थः। व्युत्पत्तिरनेकधा कल्प्यते। 'इदम् शब्दात् था प्रत्ययः' छन्दसि प्रकारवचने हेतौ च "था हेतौ च छन्दसि" (अष्टा० ५।३।२६) चकारात् प्रकारवचने च। इत्था—अनेन प्रकारेण, अनेन हेतुना चेति द्वावर्थौ। "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" (अष्टा० ५।३।१११)—अत्र 'इम' 'इति' इदम्' शब्दस्य बहुवचनं गृहीतम्। क्वचिद् व्यत्ययेन 'इदम्' इत्येकवचनादपि था प्रत्ययेन भवितव्यम्। 'इत्था' इतीवार्थे। एवं 'इदम्' शब्दात् था प्रत्ययेऽर्थत्रैविध्यं जातम्। प्रकारः, हेतुः, उपमा च। इत्था सत्यनाम, 'इत्था' इति इदंविषयकास्त्रयोऽर्थाः एतेभ्यो विशिष्टार्थो यः 'इत्था' इत्यस्यानेकार्थत्वे ब्रवीत्याचार्यः। 'इत्थाऽमुथा' इत्येतेन व्याख्यातम्। 'अमुथा' शब्दस्य योऽर्थः सोऽस्यापि ग्राह्यः। उक्तः सोऽर्थस्तृतीयेऽध्याये "अमुथा यथासौ" (निरु० ३।१६) एवम् 'इत्था यथासौ—असाविव—इत्था' उपमायामित्येकोऽर्थः। सप्तम्यर्थेऽपि त्रलवत् क्वचिद् दृश्यते छन्दसि था प्रत्ययः "पूर्वानन्तरविषयोऽप्यनुकृष्यते "सप्तम्यास्त्रल्" (अष्टा० ५।३।१०) 'सप्तम्याः' पदम्—था हेतौ च चकारात् प्रकारवचने च सप्तम्याश्च था छन्दसि भवति। तदुदाहरणम्—"अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे।" (ऋ० १।८४।१५) "इत्था चन्द्रमसो गृहे अमुत्र चन्द्रमसो गृहे।" (निरु० ४।२५) इत्था—अमुथा—अमुत्र। इत्था शब्दस्य षडर्था जाताः। 'था' प्रत्ययः सप्तम्यन्तात् सप्तम्यां वापि भवति "था हेतौ च छन्दसि" (अष्टा० ५।३।२६) इति सूत्रे 'सप्तम्याः' इत्यनुकर्षणात् निरुक्तप्रदर्शितमुदाहरणम्। इत्था—अमुत्र इति दत्तं परन्तु भिन्न-

मुदाहरणमपि प्रदर्श्यतेऽस्माभिः 'विश्वथा' इति 'विश्वस्मिन्' इत्यर्थे "योऽवरे वृजने विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ । स देवो देवान् प्रति पप्रथे पृथु विश्वेदु ता परिभूर्ब्रह्मणस्पतिः" ( ऋ० २ । २४ । ११ ) यः खल्ववरे वृजने वर्जिते सृष्टे "कृपृवृजिमन्दिनिधाञः क्युः" ( उणा० २ । ८२ ) अत्र कर्मणि भूते क्युः प्रत्ययः" उणादयो बहुलं भूतेऽपि दृश्यन्ते ( अष्टा० ३ । ३ । २ ) विश्वथा विश्वस्मिन् जगति "विश्वथा विश्वस्मिन्" ( दयानन्दः—अत्रैव मन्त्रे ) विभुर्व्यापकस्तथा महाम्—उ महति कारणाख्येऽव्यक्तेऽपि रण्वो रमयिता रमणशीलः शवसा स्वबलेन ववक्षिथ । वोढुं समर्थोऽस्ति पुरुषव्यत्ययेन मध्यमः । स देवोऽन्यान् भौतिकदेवान् सूर्यादीन् प्रति पृथु पप्रथे प्रख्यानं प्रसिद्धिं देवत्वं प्रथयति प्रकटयति प्रकाशयति, तथा तानि विश्वानि भूतजातानि परिभूः परिभवति—इति तथाभूतः स ब्रह्मणस्पतिः परमात्माऽस्ति ॥

सचा ॥ ३० ॥

सचा सहेत्यर्थः ।

"वसुभिः सचा भुवा" ( ऋ० ८ । ३५ । १ )

वसुभिः सह भुवौ ॥

'सचा' अनवगतार्थो निपातो । 'सह' इत्यर्थावगमः ।

समग्रमन्त्रस्तदर्थश्च—

अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा ।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥

हे अश्विनौ ! राजन् ! तथा मन्त्रिन् ! युवाम्—अग्निविद्यानिष्णातेन वायुविदा विदुषा जलविज्ञानस्य वेत्रा भूविद्यापारङ्गतेन तथा राजसभासत्प्रमुखैः सेनाधिकारिभिः प्रजाजनप्रवरैः सह भवन्तौ—अथ आदित्यब्रह्मचारिणा तद्वद् ब्रह्मचारिण्या सह च समानप्रीतिमन्तौ सोमं परमात्मोपासनाया आनन्दरसं तथा राज्यैश्वर्यस्यानन्दरसं पिबतम् । यद्वा 'अग्निना, वायुना, जलेन, पृथिव्या' भूतचतुष्केण तथा द्युलोकस्थसूर्यकिरणैः, अन्तरिक्षलोकस्थविद्युद्धाराभिः पृथिवीलोकस्थजीवनप्रदवस्तुभिः सहभवन्तौ—उषोवेलया सूर्येण सह च समानप्रीतिं सेवमानौ—एतासां देवतानां शक्तियोगेनानन्दरसं पिबतम् ॥

चित् ॥ ३१ ॥

चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातः । अत्रापि पशुनामेह भवत्युदात्तः ।

"चिदसि मनासि धीरसि" ( यजु० ४ । १९, मै० सं० १ । २ । ४ ) चितास्त्वयि भोगाश्चेतयस इति वा ।

भा०—'चित्' इत्यनेकार्थः । स निपातोऽनुदात्तः पूर्वमेव "चिदित्येषोऽनेककर्माचार्यश्चिदिदं ब्रूयादिति पूजायां—दधिचिदुपमार्थे" ( निरु० १ । ४ ) तथा "चतुरश्चिद् ददमानाद्बिभीयादा निधातोः—( ऋ० १ । ४१ । ९ ) इत्युपमार्थे" ( निरु० ३ । १६ ) अथ चात्र "चिदसि मनासि धीरसि" मन्त्रे खल्वुदात्तः पशुनाम भवति । "चिञ् चयने" ( स्वा० चुरा० ) ततः क्विप्—अधिकरणे 'चित्' चतो हि चिताः सञ्चिता भोगा अस्याम् । यद्वा "चित सञ्चेतने" ( चुरादि० ) ततः क्विप् कर्त्तरि चेतयते—इति चित् । इति त्ववगमः । 'पशुः' इत्यभिधेयवचनम् । सर्वानुक्रमसूत्रेषु मन्त्रस्य देवता 'वाक्' सा च सोमक्रयणी गोरूपेण कल्प्यते याज्ञिकैः "चिदसि गौः सोमक्रयणी वाग्रूपा अध्यारोपकल्पनया" ( यजु० सर्वानुक्रमसू० ) महीधरेण भाष्यकारेण सम्बोधिता च वागेव "हे वाग्देवतारूपे सोमक्रयणि ! त्वं चिदसि....." ( महीधरभाष्यम् ) यास्केन निरुक्तकारेण "चित्—पशुः" इत्युक्तं तेन गौर्लक्षितेति वक्तुं शक्यते यज्ञप्रक्रियायां परन्तु गौर्वागपि भवति "गौर्वाङ्नाम" ( निघं० १ । १२ ) पशुशब्देन प्राणी पशुरेवाग्रहेण ग्राह्यमिति न मन्तव्यं पश्यतेः पशुरिति यास्को मन्यते—पश्यति दर्शयति वा खल्वन्यं ज्ञानविषयादिकमिति सा वाक् । तेन वागेव सोमक्रयणे गोरूपे कल्पितेति वाग्रूपा गौः सा हि पशुशब्देनापि कल्पिता ।

समग्रमन्त्रस्तदर्थश्च—

चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतः शीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥

हे वाक्—विद्यारूपे वाक् ! त्वमस्मदर्थं भोगानां सञ्चेत्री तथास्माकं चेतयित्री मना मननशक्तिप्रदा धीर्बुद्धिरूपाऽसि दक्षिणा विद्याधनस्य प्रापयित्री, क्षत्रिया क्षत्रं राष्ट्रं तस्य धारयित्री, यज्ञिया सदा सङ्गमनीया यज्ञस्य सम्पादिकाऽसि—अदितिरखण्डनीयाऽविनाश्याऽथोभयतःशीर्ष्णी—उभयतोमुखी—इहलोकपरलोकफलदायिनी—अभ्युदयनिःश्रेयससाधनी त्वमसि । सा त्वं नः सुप्राची सुप्रतीची—एधि आयुषः पूर्वभागः शोभनो यस्यां तथाभूता पश्चिमभागश्च शोभनो यस्यां च तथाभूता भव, मित्रो यस्त्वां मिनाति स त्वां पदि प्राप्तव्ये क्षेमे विज्ञाने बध्नीयाद् योजयेत् पूषा सर्वपोषकः परमात्माऽध्यक्षायाक्ष्णामधि—उपरिवर्तमानाय—इन्द्राय जीवात्मने—

ऽयनो जीवनस्य मार्गान् प्रति मार्गेषु वा सप्तमीस्थाने द्वितीया त्वां पातु पाति रक्षति ॥

आ ॥ ३२ ॥

आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः । अथाप्यध्यर्थे दृश्यते ।

"अभ्र आँ अपः" ( ऋ० ५ । ४८ । १ ) अभ्रे आ अपोऽपोऽभ्रेऽधीति ॥

भा०—'आ' इत्यनेकार्थः—उपसर्गः 'आ' पूर्वं हि व्याख्यातः । 'आ—इत्यर्वागर्थे' ( निरु० १ । ३ ) तथा समुच्चयार्थे "देवेभ्यश्च पितृभ्य आ" ( निरु० १ । ४ ) अथाप्युपमार्थे दृश्यते "जार आ भगम्" ( ऋ० १० । ११ । ६—निरु० ३ । १६ ) अत्र तु 'आ' इत्येषः 'अधि' इत्येतस्मिन्नर्थे दृश्यते—'अधि' उपरिभावमैश्वर्यं चाह ( निरु० १ । ३ ) अभ्रेऽधि खल्वपः, अपोऽभ्रेऽधि—मेघे जलं भवति ॥

समग्रमन्त्रस्तदर्थश्च—

कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयम् ।

आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी ॥

कः प्रजापतिः "प्रजापति वैं कः" (ऐ० २।३८) 'कम्' इति मकारस्य दकारश्छान्दसः । कम्—उ—प्रजापतिमेव वयं मनामहे याचामहे "मनामहे याच्ञाकर्मा" ( निघं० ३ । १९ ) प्रियाय धाम्ने धाम्यसम्पन्नस्थानाय स्वक्षत्राय स्वाधारराष्ट्राय महे महते स्वयशस्विस्वायायादिसम्पत्त्याऽन्येषामपि हितसाधनात् प्राप्तयशस्वित्वाय प्रजापतिं परमात्मानमवश्यं याचामहे, यत्—आमेन्यस्य—आ समन्तात् सर्वत्र मेन्यं मन्तव्यं मानकर्तृ निर्माणकर्तृ—मेघस्य निर्माणस्थानं यत् तस्य रजसोऽन्तरिक्षस्याभ्रे आँ मेघेऽधि मेघस्याभ्यन्तरे वर्तमानानि जलानि वृणाना सेवमाना मायिनी—इन्द्राणी विद्युद्धारा भिन्ननामिका तानि जलानि वितनोतु विकिरतु पृथिव्याम् ॥

द्युम्नम् ॥ ३३ ॥

द्युम्नं द्योततेर्यशो वा अन्नं वा ।

"अस्मे द्युम्नमधि रत्नं च धेहि ।" (ऋ० ७ । २५ । ३) अस्मासु द्युम्नं च रत्नं च धेहि ॥ ५ ॥

भा०—'द्युम्नम्' इत्येतदनवगतमनेकार्थं च। द्योततेरिति धातुनिर्देशोऽर्थावगमाय। यशो वाऽन्नं वाभिधेयवचनम्। "द्युत दीप्तौ" (भ्वा०) ततो न प्रत्ययः, मकारश्चान्तादेशः। "द्युम्नं धननाम" (निघं २।१०) तत्तु गतम्। अत्र पदनामसु द्युम्नशब्दस्यानेकार्थत्वात् तन्निनार्थप्रदर्शनमभीष्टम्। अत्र 'यशः' वा 'अन्नम्' वा—अर्थः। यत्र मन्त्रेऽर्थद्वयस्य सम्भवः सोऽत्रोदाह्रियते "अस्मे द्युम्नमधि रत्नं च धेहि" अस्मासु यशो वा अन्नं वा तथा रत्नं च धेहि। द्युम्नशब्देनात्र, धनान्नयशसां त्रयाणामर्थानां सन्देहसमावेशो नास्ति किन्तु यशोऽन्नात्मकार्थद्वयस्पर्शी मन्त्रोऽयं धनवाचिनो रत्नशब्दस्य पृथगवसमानत्वात् 'रत्नं च धेहि।' अन्नयशसोरेवात्र मिश्रणम्। धनान्नयशसामर्थे द्युम्नशब्दस्य पृथक् पृथगन्येऽनेका मन्त्राः सन्ति तेऽसन्दिग्धमेकमेवार्थं प्रत्याययन्ति, तेषां निदर्शनं निम्नम्—

धनार्थे—

विश्वा सोम पवमान द्युम्नानीन्दवा भर। विदाः सहस्रिणीरिषः॥
(ऋ० ९।४०।४)

हे इन्दो—ऐश्वर्यवन्! आनन्दधाराभिः प्राप्नुवन् सोम परमात्मन्! त्वं द्युम्नानि धनानि—आभर प्रापय, तथा सहस्रीः—इषः—बहुप्रकाराण्यन्नानि च विदाः प्रापय॥

समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम्।
वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे॥ (ऋ० ५।२८।२)

हे अग्ने! तव समिद्धस्य दीप्तस्य प्रकृष्टमहस्ववतः श्रियं दीप्तिं शोभां वन्दे प्रशंसामि। त्वं वृषभः सुखानां सुखवृष्टीनां होमद्वारेण वर्षिता द्युम्नवान् धनवानसि, यज्ञेषु सम्यग् दीप्यसे॥ 'द्युम्नवान् धनवान्' इति च सायणः।

अन्नार्थे द्युम्नशब्दः—

वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि। सहो नः सोम पृत्सु धाः॥
(ऋ० ९।८।८)

हे सोम! सर्वेषामुत्पादक प्रेरक परमात्मन्! त्वं दिवो द्युलोकान्मेघमण्डलाद् वृष्टिं परिस्रव प्रेरय पृथिव्याः—अधि पृथिव्युपर्यन्नं सर्वत्रोत्पादय, 'द्युम्नमन्नमुत्पादय' (सायणः)। नोऽस्माकं पृत्सु सेनासु सहो बलं धारय, यद्वा पृत्सु संग्रामेषु नोऽस्मभ्यं सहो, बलं देहि॥

यशोऽर्थे द्युम्नशब्दः—

अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरम्।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते॥
(ऋ० ६।५।७)

हे अग्ने ! तव त्वदीयायामूत्यां रक्षणे वर्तमाना वयं तं कामं प्राप्नुयाम यं कामयामहे रयिवः–हे धनवन् ! सुवीरं रयिं शोभनपुत्रादियुक्तं धनमश्याम प्राप्नुयाम तथा वाजयन्त आत्मनो वाजमन्नमिच्छन्तो वाजमन्नमश्याम प्राप्नुयाम तथा हे अजर ! जरारहितपरमात्मन् ! ते तव सकाशात् प्राप्तव्यं द्युम्नं यशोऽश्याम प्राप्नुयाम ॥

यास्कोदाहृतः समग्रमन्त्रस्तदर्थश्च यत्र द्युम्नशब्दोऽनेकार्थः—

शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।
जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥

हे शिप्रिन् प्रशस्तमुखनासिकावन् प्रशस्ताकृतिमन्–इन्द्र राजन् ! "शिप्रे हनूनासिके वा" ( निरु० ६ । १७ ) सुदासे कल्याणदानाय–उपहारदात्रे जनाय तव शतमूतयो रक्षासाधनानि सन्तु तथा सहस्रं शंसाः प्रशंसनीया गुणव्यवहाराः विद्यासदाचारोपकाराः सन्तु, अपि रातिर्दानं सुखप्रदानं चास्तु । वनुषो हिंसकस्य मर्त्यस्य वधं वधबलं नाशाय, अस्मासु द्युम्नं यशो च रत्नं च धेहि यद्वा अन्नं च रत्नं च धेहि ॥

इति पञ्चमाध्यायस्य प्रथमः पादः ।

---

## द्वितीयः पादः

---

पवित्रम् ॥ ३४ ॥

पवित्रं पुनातेः । मन्त्रः पवित्रमुच्यते ।

"येन देवा पवित्रेणात्मानं पुनते सदा"
( साम० ५ । २ । ८ । ५ )

इत्यपि निगमो भवति ।

भा०—'पवित्रम्' इत्येतल्लक्षणशास्त्रेण त्ववगतम् 'पुवः संज्ञायाम्–कर्तरि चर्षिदेवतयोः" ( अष्टा० ३ । २ । १८५–१८६ ) संज्ञायां तु कुशपिञ्जुलं पवित्रं मन्त्रो न कुशपिञ्जुलं तच्चेह नेष्यते । कर्मकाण्डे पारिषदी संज्ञा । ऋषिदर्शनात्–इति साक्षाद्द्रष्टा मनुष्य ऋषिर्मन्त्रश्च । देवता अपि निरुक्तेऽत्र परिगण्यन्ते का देवताः पवित्रशब्देन लक्ष्यन्तेऽनन्तरं वक्ष्यति ह्याचार्यो रश्म्यादीन् । तस्मादेवकार्थोऽत्र पवित्रशब्दः पठितः । 'पूञ् पवने' ( क्र्यादि० ) ततः 'इत्रः'

प्रत्ययः 'पुनातेः' इति धातुनिर्देशोऽवगमार्थः । मन्त्ररश्मिप्रभृतयोऽभिधेयाः । प्रथमं मन्त्रः पवित्रमुच्यते, तद्यथा ।

समग्रमन्त्रस्तदर्थश्च—

१२ ३१ ३ १२३ - १२ - १२३ १२
येन देवा पवित्रेणात्मानं पुनते सदा ।
१२ ३१२ २ १ २
तेन सहस्रधारेण पावमान्यः पुनन्तु नः ॥

येन पवित्रेण पावयित्रा मन्त्रेण मन्त्रगणेन देवा विद्वांसः सदाऽऽत्मानं पवित्री कुर्वन्ति तेन सहस्रधारेण 'सहस्रं बहुनाम' ( निघं० २ । १ ) "धारा वाङ्नाम" ( निघं० १ । ११ ) बहुवागावृत्तिकरणेन पावमानीः पावमान्यः पावयित्र्य ऋचो मन्त्राः—अस्मान् पुनन्तु पवित्रयन्तु ॥

रश्मयः पवित्रमुच्यन्ते ।
"गभस्तिपूतः" ( यजु० ७ । १ )
"गभस्तिपूतो नृभिरद्रिभिः सुतः" (ऋ० ९।८६।३४)
इत्यपि निगमौ भवतः ॥

भा०—'रश्मयः' पवित्रं शोधनमुच्यन्ते । "गभस्तिपूतः ।" इति यजुर्वेदीयः समग्रमन्त्रस्तदर्थश्च—

वाचस्पतये पवस्व वृष्णो अꣳशुभ्यां गभस्तिपूतः ।
देवो देवेभ्यः पवस्व येषां भागोऽसि ॥

'वृष्णो' इति 'वृष्णु' शब्दस्य सम्बुद्धौ व्यत्ययेन ङस् प्रत्ययः । । 'वृष्णुः' इति "वृषु सेचने" ( भ्वा० ) ततः "विषेः किच्च प्रत्ययः" णुः (उणा०३।३९) धातोर्बहुलात् । वृष्णोः—वृष्णो ! हे सुखस्य वर्षितः सोम ! यद्वा मेघ ! अग्रिम-मन्त्रे पठनात् । त्वं वाचस्पतये प्राणाय जीवनाय प्राणिने "प्राणो वै वाचस्पतिः" ( शत० ४ । १ । १ । ९ ) अंशुभ्यां बाहुभ्यां शुक्लाग्राभ्यामिन्द्रस्य विद्युतो धाराभ्यां पीड्यमानः पवस्व प्रक्षर प्रवह, अथ च त्वं देवो दिव्यगुणः सन् देवेभ्यो विद्वद्भ्यो गभस्तिपूतो रश्मिभिः पूतो भूक्षेत्रेऽन्तरिक्षे वा तैः शोधितः—पवस्व प्रक्षर प्रवह वा येषां भागो भजनीयोऽसि । "गभस्तयो रश्मयः" ( निघं० १ । ५ ) गभस्तयो रश्मयः सोमं मेघं पावयन्ति तस्मात् पवित्रम् ॥

"गभस्तिपूतो नृभिः...." इति ऋग्वेदीयः समग्रमन्त्रस्तदर्थश्च—

पवमान मह्यर्णो विधावसि सूरो न चित्रो अव्ययानि पव्यया ।
गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि ॥

हे पवमान सोम प्रवहमाण गहनमेघ ! त्वं बहूदकं बहूदकभावेन परिणतो भवसि सूरः—सूर्य इव चित्रो विचित्रः सन्—अव्ययानि—अक्षेतव्यानि स्थिराणि पव्यया पव्ययानि चक्रनेमिसम्बद्धानि स्थानानि विधावसि सूर्य इव, यथा सूर्यो द्युलोकेऽक्षेतव्यानि स्वरथनेमियोग्यानि विधावति तथा त्वमपि विधावसि, सूर्य-प्रतापेन त्वं शान्तभावेन सौम्यधर्मेण तस्य सूर्यस्य गभस्तिभीरश्मिभिः पूतः शोधितः सन् उपरि गच्छसि पुनः—अद्रिभिः—नृभिः पुनरद्रिभिर्भक्षयितृभिर्नायकैर्देवैर्मरुद्-गणेन "नरो वै देवानां ग्रामः" ( ता० ६ । ९ । २ ) सुतः स्थूलीकृता नीचैः प्रेरितश्च महते वाजायान्नाय धन्याय श्रेष्ठधनाय च गच्छसि ।

आपः पवित्रमुच्यन्ते ।

"शतपवित्रा स्वधया मदन्तीः" ( ऋ० ७ । ४७ । ३ )

बहूदकाः ।

भा०—आपो जलान्यपि पवित्रमुच्यन्ते ।

तत्र "शतपवित्राः" इति समग्रमन्त्रस्तदर्थश्च—

शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।

ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥

बहुजला नद्यो देव्यो दिव्यगुणाः—आकाशीयमेघधारा देव्यः स्वधयाऽन्नेन "स्वधा—अन्ननाम" ( निघं० २ । ७ ) मदन्तीर्मादयन्त्यः 'हेतौ' शतृप्रत्ययः "लक्षणहेत्वोः क्रियायाः" ( अष्टा० ३ । २ । १२६ ) मादयिष्यन्तीति हेतो-र्देवानां पाथो गमनीयमन्तरिक्षमपि "पाथोऽन्तरिक्षम्' ( निरु० ६ । ७ ) अपि शब्देन वृष्टिद्वारेण मर्त्यानामपि लोकं पृथिवीलोकं गच्छन्ति । ता नद्यः—इन्द्रस्ये-श्वरस्य नियमान् न मिनन्ति न हिंसन्ति, वृष्टिद्वारा पृथिव्यां ता आगच्छेयुरिति हेतोस्ताभ्यः सिन्धुभ्यो नदीभ्यो घृतमिश्रितं हव्यं जुहोत तेन नीचैर्वर्षणेन प्रवहन्तु । "सिन्धवो नद्यः" ( निघं० १ । १३ ) ।

अग्निः पवित्रमुच्यते वायुः पवित्रमुच्यते सोमः पवित्र-मुच्यते सूर्यः पवित्रमुच्यते इन्द्रः पवित्रमुच्यते ।

"अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु ।" ( आप० श्रौत० १२ । १९ । ६ )

इत्यपि निगमो भवति ॥ ६ ॥

भा०—अग्निप्रभृतयः पञ्च पवित्रशब्देनोच्यन्ते पवित्रीकरणात् ।

तोदः ॥ ३५ ॥

तोदस्तुद्यतेः ॥

"पुरु त्वा दाश्वान् वोचेऽरिरग्ने तव स्विदा।

तोदस्येव शरण आ महस्य ॥" (ऋ० १।१५०।१)

बहुदाश्वांस्त्वामेवाभिह्वयामि। अरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरेतस्मादेव। यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद् दृष्ट्वैवमवक्ष्यत्॥ "तोदस्येव शरण आ महस्य।" तुदस्येव शरणेऽधिमहतः॥

भा०—'तोदः' इत्येतदनवगतम् 'तुद्यतेः' इति धातुनिर्देशोऽवगमाय। 'तुदः' तोदकः प्रेरकः, इति धात्वनुसारी खल्ववगमः। "तुद व्यथने" (तुदा०) परन्त्वात्रार्थो व्यथनं पीडनं नास्ति किन्तु प्रेरणमाज्ञापनमत एव श्यन्विकरणको धातुर्मतो यास्केन तद्वत्तज्ञिसार्थे। इत्यतोऽप्यनवगतत्वम्। तुदधातोरच् प्रत्ययः॥ मन्त्रार्थः—

हे अग्ने यज्ञाग्ने! यद्वा परमात्मन्! पुरुदाश्वान् बहुदायी सर्वतोभावेन होम्यं द्रव्यं स्वात्मानं वा समर्पयितुकामोऽहं त्वामेवाभिह्वयामि। त्वमरिरसि। अरिः—अमित्रो भवति—ऋच्छतेः 'ऋच्छति' इति 'ऋ' धातोः श्तिपप्रत्ययान्तो निर्देशः। "पाघ्रा....दृश्यतिसर्तिशदसदां पिब....ऋच्छधौशीयसीदाः" (अष्टा० ७।३।७८) तथा चोणादौ "अच इः" (उणा० ४।१३९) अरिः। भवतु सोऽरिरमित्रः परन्तु सोऽत्र न लक्ष्यते, किन्तु 'ईश्वरः' अरिरत्र—ऋधातोरेव—अरिः—अर्यः "अर्यः स्वामिवैश्ययोः" (अष्टा० ३।१।१०३) स एषोऽग्निर्यज्ञाग्निः सर्वेषां जड-देवानामीश्वरः परमात्मा त्वीश्वर एव * यज्ञे वा—आहुतयोऽन्यदेवताका भवन्ति ताः सर्वाः खल्वग्नावेव हूयन्ते—इत्येतद् दृष्ट्वाऽवक्ष्यत्। अतस्तव स्वित् तवैव महतो भूतस्य समन्ताच्छरणेऽधि—आव्रजामि। तोदस्य प्रेरकस्य स्वामिनो गृह-स्वामिन इव यथा गृहस्वामिनः शरणं व्रजति भृत्यः। 'तोदस्य' प्रेरकस्य स्वामिन इत्येवार्थोऽत्र 'ईश्वरः' इत्यनुवादात्। यथा जडदेवाः—अग्नेः शरणं भजन्ते। तथैव चेतनदेवाः परमात्मनः शरणं भजन्ते।

स्वञ्चाः ॥ ३६ ॥

स्वञ्चाः सु अञ्चनः ॥

"आजुह्वानो घृतपृष्ठः स्वञ्चाः" (ऋ० ५।३७।१)

इत्यपि निगमो भवति॥ ७॥

---

* "त्वयथा न आदरिः...." (ऋ० ७।६४।३—अरिः—अर्यमा" (सायणः)

भा०—'स्वञ्चाः' इत्येतदनवगतं पदम् । 'सु–अञ्चनः' इत्यवगमः । अभिधेयं मन्त्रनिर्देश्यम् । सु पूर्वात् "अन्चु गतिपूजनयोः याचने च" ( भ्वादि० ) "ततः सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) ।

समग्रमन्त्रस्तदर्थश्च—

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः ।

तस्मा अमृध्रा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याह ॥

यस्य यजमानस्य गृहस्थस्यायं घृतपृष्ठः–घृतं पृष्ठं यस्य ज्वलनार्थं स्वञ्चाः स्वञ्चनः सुगमतया प्रापणीयः शोभनप्रापणीयश्च घृतपृष्ठ एव भवति नाघृतपृष्ठः । स तथाभूतः–आजुह्वानः समन्तात्–हूयमानः सूर्यस्य भानुना प्रकाशेनारम्भप्रकाशेन रात्रेरनन्तरमेवाहर्भूतेन सह संयतते स्पर्द्धते तद्वद् गुणकारी भवति तदधिकं च । तस्मै यजमानाय गृहस्थाय–उषसः प्रभातवेला अमृध्रा अहिंस्राः–लाभप्रदा व्युच्छान् व्युच्छन्ति–प्रकाशिता भवन्ति । अथ–इन्द्राय परमात्मने सुनवाम इत्यान्तरिकभावनया समर्पयेम, इति–आह यः सङ्कल्पयति तस्मै खल्वपि उषोवेलाः सुखप्रदा भवन्ति ॥

शिपिविष्टः ॥ ३७ ॥

विष्णुः ॥ ३८ ॥

शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥

"किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद् ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथ ॥" ( ऋ० ७ । १०० । ६ )

किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यातमेतद् भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति । मा वर्पो अस्मदपगूह एतत् । वर्प इति रूपनाम वृणोतीति सतः । यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः ॥ ८ ॥

भा०—'शिपिविष्टः' इति च 'विष्णुः' इति च विष्णोरेव नामनी स्तः, शिपिविष्टो नाम 'विष्णुः' इति नाम्ना साकमेव प्रयुज्यते । तस्य विशिष्टगुणवैभवात्

'शिपिविष्टः' इति नाम कुत्सितार्थीयमौपमन्यवो मन्यते। शिपिविष्टः—इत्येव पदमनवगतमनेकार्थं च निन्दाप्रशंसयोः। शेप इव निर्वेष्टितः—शिपिविष्टः 'शिपिः शेपः' इति पर्यायत्वेन मन्यते खल्वौपमन्यवः, यथा 'लिपिः—लेपः' तेन शिप धातुर्मतो भवेत्। शेपस्थाने शिपिः 'इव' 'निः' इति त्वर्थप्रदर्शनार्थम्। शिपि-वेष्टितः—वेष्टितोऽन्तर्गतणिजर्थः कल्पितः। शिपिविष्टः—निर्वेष्टितः शेप इव यथा कामुकेन योनौ निर्वेष्टितः शेपः—योनिस्थाने। इति निन्दार्थः। शिपयो रश्मय-स्तैराविष्टः शिपिविष्टो महातेजस्कः सूर्यो विष्णुः। इति प्रशंसार्थः।

मन्त्रार्थः—

हे विष्णो! तव किं परिचक्ष्यं निन्दनीयमप्रख्यातमेतद् भूद् भवति यन्मोऽ-स्मान् प्रब्रूषे शेप इव निर्वेष्टितोऽस्मि, अप्रतिपन्नरश्मिर्बहीरश्मयो न प्रतिपद्यन्ते गुहरश्मिः प्रातःकालीयः सूर्यो विष्णुरस्मि, इति—औपमन्यवमतम्। यद्वा प्रशंसानामैव 'शिपिविष्टः' विष्णो ते परिचक्ष्यं परितः कथनीयं प्रख्यातं प्रख्याप-नीयं प्रशंसनीयं रूपं भवति यत्त्वं स्वात्मानं शिपिविष्टः—रश्मिभिराविष्टः प्रतिपन्न-रश्मिरस्मीति पूर्णप्रकाशमानोऽस्मि। अतोऽस्मत्तो वर्पो रूपमेतन्नापगूह न गोपय किं तद्रूपं यदन्यरूपः संग्रामे तिमिरनाशनप्रसङ्गे भवसि। संयतरश्मिः—संयुक्त-रश्मिः—सर्वरश्मिसंयुक्तो भवसि। "वर्पः—रूपनाम" (निघं० ३।७) 'वर्पः' "वृञ् वरणे" (भ्वादि०) "वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च" (उणा० ४। २०१) इत्यनेन असुन् प्रत्ययः।

तस्योत्तरा भूयसे निर्वचनाय।

"प्र तत्ते॑ अ॒द्य शि॑पिविष्ट॒ नाम॒ार्यः शं॑सामि व॒युना॑नि वि॒द्वान्। तं त्वा॑ गृणामि त॒वस॒मत॑व्या॒न्क्षय॑न्तम॒स्य रज॑सः परा॒के॥" (ऋ० ७।१००।५)

तत्तेऽद्य शिपिविष्टनामार्यः प्रशंसाम्यर्योऽहमस्मीश्वरस्तो-मानामर्यस्त्वमसीति वा तं त्वा स्तौमि तवसमतव्यान्। तवस इति महतो नामधेयम्। उदितो भवति निवसन्त-मस्य रजसः पराके पराक्रान्ते॥

मन्त्रार्थः—

भा०—हे शिपिविष्ट! रश्मिभिः संयुक्त! विष्णो सूर्य! तवाद्याहमर्यस्तोमानां स्तुतीनामीश्वरोऽस्मि, स्तोमानां स्तोतव्यानां त्वमीश्वरोऽसि वा। तं त्वा तवसं महान्तं त्वां "तवसः—महन्नाम" (निघं०३।३) अतव्यान्—अमहान् खल्वहं गृणामि

स्तौमि रजसः पराके पराक्रान्ते दूरे क्षयन्तम्—अन्तरिक्षस्य परभागे निवसन्ताम् ॥
स एष शिपिविष्टो य एष उदितः सूर्यो भवति, स स्तूयते ॥

आघृणिः ॥ ३९ ॥

आघृणिरागतघृणिः ( आगतहृणिः ? * )

"आघृणे संसचावहै ।" ( ऋ० ६ । ५५ । १ )

आगतघृणे ( —हृणे ? ) संसेवावहै ॥

भा०—'आघृणिः' इत्येतदनवगतम् । 'आगतघृणिः' इत्यवगमः । आगतदीप्तिः—सद्यःप्राप्तदीप्तिः सूर्यः । "घृ दीप्तौ" ( जुहो० ) ततो निः प्रत्ययो नित् "घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः" ( उणा० ४ । ५२ ) निपातनाद्गुणाभावः । अथवा "घृणु दीप्तौ" ( तनादि० ) ततः "इगुपधात् कित्" ( उणा० ४।१२० ) इन् प्रत्ययः किन्तु 'घृणिः' साक्षात्—निपातनपक्षो बलीयान् । आगतघृणिः—आगतहृणिः—इत्याग्रहे । 'घृणिः' शब्दो "ज्वलतो नाम" ( निघं० १ । १७ ) मुख्यत्वेन पठितः स न तथा स्यात् 'हृणिः' इत्यपि पाठभेदेन स एव मुख्यः स्यात् । 'आघृणिः' इत्यस्य आगतहृणिः' निर्वचनमलौकिकं स्यात् । हृणिः शब्दो मूलसंहितासु न लभ्यते क्वचिदप्रसिद्धशाखायां यद्वा ब्राह्मणे हि तेन शब्देन भवितव्यमिति ।

समग्रमन्त्रस्तदर्थश्च—

एहि वां विमुचो नपादाघृणे सं सचावहै ।
रथीॠतस्य नो भव ॥

पूषा देवता, पूषा च सूर्यः "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति" ( निरु० १२ । १७ ) हे विमुचो नपात् ! हे विस्रष्टुः—विविधजगतः स्रष्टुः प्रजापतेः परमात्मनो नपात्—न पातयितः ! स्पष्टं घोषयितो दर्शयितः ! "तस्य भासा सर्वमिदं विभाति", ( कठो० व० ५ । १५ ) "योऽसावादित्ये पुरुषः सोऽसावहम् । ओ३म् खं ब्रह्म ॥" ( यजु० ४० । १७ ) आघृणे ! आगतदीप्ते प्राप्ततेजस्क रश्मिपोषक सूर्य ! वाम्—आवाम्—आकारलोपश्छान्दसः । आवां त्वं चाहं च तं प्रजापतिं परमात्मानं जगतः स्रष्टारं संसचावहै सम्यक् सेवावहै, त्वं तस्मात् प्रकाशं गृहीत्वा संसाराय प्रकाशं प्रयच्छसि । अहं तस्मादेव ज्ञानप्रकाशं गृहीत्वा संसाराय ज्ञानप्रकाशं प्रयच्छामि । त्वं नोऽस्मभ्यमृतस्य सत्यनियमस्य पालनार्थं रथीः—रंहिता—प्रेरको भव, अहं त्वत्तः प्रेरणां प्राप्नुयाम् ।

पृथुज्रयाः ॥ ४० ॥

---

* हृणिर्न लोकप्रसिद्धः शब्दः, तेनावगमेन न भवितव्यम् । 'आ' इत्यस्य 'आगतार्थेऽनवगतत्वम् ।

पृथुज्रयाः पृथुजवः ।

"पृथुज्रया अमिनादायुर्दस्योः" ( ऋ० ३ । ४९ । २ )

प्रामापयदायुर्दस्योः ॥ ९ ॥

भा०—'पृथुज्रयाः' इत्येतदनवगतम् । 'पृथुजवः' इत्यर्थरूपोऽवगमः । "ज्रि अभिभवे" अत्र जवोऽर्थोऽनवगतत्वे लक्षितः । ततः—असुन् प्रत्ययः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) करणे । ज्रयो जवः पराक्रमः पृथुर्यस्य स पृथुज्रयाः—विस्तृतपराक्रमः—पृथुजवः । पृथुज्रया दस्योरायुः प्रामापयत्—हिंस्यात् समापयेत् ।

समग्रमन्त्रस्तदर्थश्च—

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ।

इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥

यं खलु स्वराजं स्वाधीनसत्ताकं राजानं नृतमं नायकानामपि नायकमतिशयेन नेतारं हरिष्ठां हरिषु मनुष्येषु प्रजाजनेषु प्राप्तप्रतिष्ठं "हरयो मनुष्याः" ( निघं० २ । ३ ) नकिर्नकश्चित् पृतनासु संग्रामेषु द्विता द्वितया द्विविधया द्विविधबलेन निजबलेन शस्त्रबलेन तरति—उल्लङ्घयति । यः—इनतमः—ईश्वरतमः सत्त्वभिर्जनैर्जनबलैः शूषैः शस्त्रबलैश्च, पृथुज्रयाः विस्तृतपराक्रमो दस्योः—हिंसकस्य शत्रोरायुरमिनात्—हिनस्ति समापयति, स ईदृश इन्द्रो राजा करणीयः ॥

अथर्युम् ॥ ४१ ॥

"अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरे दृशं गृहपतिमथर्युम् ॥" ( ऋ० ७।१।१ )

दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृत एने । अग्निः समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या । जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् ॥ १० ॥

भा०—'अथर्युम्' इत्येतदनवगतम् । 'अतनवन्तम्' इत्यवगमः । "अत सातत्यगमने" ( भ्वादि० ) ततः 'असुन्' प्रत्ययः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) तकारस्य थकारादेशश्छान्दसः । अथस्—अतनं गमनं भावेऽसुन् मतुबर्थे युः प्रत्ययश्छान्दसः । अथर्युः—तमथर्युम्—अतनवन्तम् ।

मन्त्रार्थः—

नरो नायकजनाः—दीधितिभिरङ्गुलिभिररण्योर्घर्षणयोग्ययोर्हस्तप्रच्युत्या हस्त-

पालनक्रियया प्रशस्तं दूरेदृशं दूरेऽपि दृश्यमानं गृहपतिं गृहस्य पालकं गृहकार्यरक्षकमतनवन्तं निरन्तरं प्रगतिशीलमग्निं जनयन्ति ॥

दीधितयोऽङ्गुलयो भवन्ति कर्मसु धीयन्ते–इति हेतोः । अरणी द्वे काष्ठे ये मथ्यमाने स्यातां प्रत्यृतः प्राप्तो ह्यग्निरेते प्रति यतो ह्यनयोः समरणात् सङ्घर्षणादग्निर्जायते–इति वा । दूरेदृशं दूरे दर्शनं दूरेऽपि दर्शनं यस्य तम् ॥

काणुका ॥ ४२ ॥

"एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका ॥" ( ऋ० ८ । ७७ । ४ )

एकेन प्रतिधानेनापिबत् साकं सहेत्यर्थः । इन्द्रः सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा । इन्द्रः सोमस्य कान्त इति वा कणेघात इति वा कणे हतः कान्तिहतः । तत्रैतद् याज्ञिका वेदयन्ते–त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते । त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्येति नैरुक्ताः । तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति—"यमक्षितिमक्षितयः पिबन्ति" इति ( तै० २ । ४ । १४ । १–मै० २ । ७ । २ ) तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति—"यथा देवा अंशुमाप्याययन्ति" ( मै० २ । ७ । २–तै० सं० २ । ४ । १४ । १ ) इति ।

भा०—'काणुका' इत्येतदनवगतमनेकार्थं च विशेषणपदम् । 'सरांसि' इत्यस्य विशेषणं काणुका–काणुकानि "शेश्छन्दसि बहुलम्" (अष्टा० ६।१।६८) इत्यनेन शेर्लोपः । यद्वा 'इन्द्रः' काणुका, इन्द्रस्य विशेषणम् 'काणुका–काणुकः' "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" ( अष्टा० ७ । १ । ३९ ) इत्यनेन–आकारादेशः । 'सरांसि' इत्यस्य विशेषणपक्षे काणुका–काणुकानि कान्तकानि वा क्रान्तकानि वा कृतकानि वेत्यवगमः । 'कान्त, क्रान्त, कृत' एषामेकैकपक्षेण काणभावः पुनः स्वार्थे कः प्रत्ययस्ताद्धितश्छान्दसः । "कमु कान्तौ" (भ्वादि०) ततः क्तः कान्तं कान्तानि प्रियाणि, "क्रमु पादविक्षेपे" ( भ्वादि० ) ततः क्तः क्रान्तं क्रान्तानि प्रसृतानि प्राप्तानि वा उभयत्र "अनुनासिकस्य क्विझलोः क्ङिति" ( अष्टा० ६ । ४ । १५ ) "कृञ् करणे" ( तनादि० ) ततः क्तः कृतं कृतकं

कृतकानि सम्पादितानि संस्कृतानि वा। इन्द्रः—इत्यस्य पक्षे काणुका कान्तः—कामयिता। "कमु कान्तौ" ( भ्वादि० ) ततः "मृकणिभ्यामूकोकणौ" ( उणा० ४ । ३९ ) इति 'उकण्' प्रत्ययो धातुबहुलात्। धातोर्मकारस्य णकारश्छान्दसः। यद्वा कणधातुरत्र कान्तौ—इच्छायां यथा "कन् कान्तौ" (भ्वादि०) "कनति कान्तिकर्मा" ( निघं० २ । ६ ) यास्कस्यानुवादवचनसामर्थ्यात् 'काणुका कान्तः।' कण कान्तौ कान्त इत्यप्यवगमः। यद्वा 'कणे घातः' कणे—इच्छा तस्या घातः प्रपूर्य निवृत्तिव्यापारो यस्मिन् "कणेमनसी श्रद्धाप्रतीघाते" ( अष्टा० १ । ४ । ६५ ) कणे इत्य दुग्धं पीतम्, 'कणे' इत्यस्यार्थं इच्छा, इच्छां निवर्त्यातिक्रम्य प्रपूर्येति यावत् दुग्धं पीतम्। स एव विशेष्यते कणेहतः, कणे—इच्छा हता यस्य स कणेहतः स एव च स्पष्टयते कणे—इति कान्तिः—कान्तिहतः—इच्छा हता यस्य स कणेघातः। कणे घात एव काणुका। कथम्—उच्यते। कणे शब्दात् तद्वत्यर्थे छान्दस उकञ् ताद्धितः। 'कणे उकञ्' ञित्वात् तद्धितेष्वचामादेरिति 'काणे' इत्यस्य भसंज्ञत्वात् टिलोपे कृते च 'काण उक' काणुकः—अर्थः खलु कणेहतः—कान्तिहतः, ताद्धितः 'काणुकः' इत्यस्य बहुव्रीहिसमासे दर्शितः। हता निवृत्ता कणे कान्तिरिच्छा यस्य कणेहतः स कान्तिहतः। "वाहिताग्न्यादिषु" ( अष्टा० २ । २ । ३७ ) अभ्याहित इव कान्तिहतः। कणे—इच्छा तदनुरूपव्यापारस्य निवृत्तिः प्रपूर्तिः यस्य 'कणेघातः' इत्यवगमः।

मन्त्रार्थः—

इन्द्रः सूर्यः सोमस्य चन्द्रस्य काणुका कान्तानि कमनीयानि क्रान्तानि वा स्वस्मात्—यानि दूरं गतानि कृतानि सम्पादितानि सरांसि सरणशीलानि त्रिंशत्-संख्याकानि सन्ति शुक्लपक्षे त्रिंशदहोरात्रमये सूर्यत आगमनशीलानि—उदकानि—चान्द्रमस्यान्याह्लादकारीणि तानि खल्वपरपक्षे कृष्णपक्षे सूर्यरश्मयः पिबन्ति "यमक्षितिमक्षितयः पिबन्ति" इति यथोक्तम्। सूर्यरश्मिद्वारा चान्द्रमस्यानामुदकरूपाणां प्रभाणां पानं सूर्यद्वारैवास्ति। एवं स सूर्यः—एकया प्रतिधा—एकेन प्रतिधानेन कृष्णपक्षात्मकेन यद्वैकेन प्रणिधानेन प्रतिधारणबलेन साकमनन्तरमविरामं पिबति। अथवा—इन्द्रः सोमस्य चन्द्रस्य काणुका कामुकः—कामयिता तस्य त्रिंशत्सरांसि शीतचन्द्रिकारूपाण्युदकानि—एकेन प्रतिधानेन बलेन पिबति पूर्ववत्। यद्वा—इन्द्रः सूर्यश्चन्द्रमसस्त्रिंशत्संख्याकानि तान्येवोदकसदृशानि—एकेन प्रतिधानेन साकं सकृदेव कणेघातमिच्छाप्रतिघातपर्यन्तममावस्यापर्यन्तं पिबति॥

याज्ञिकास्तु यज्ञप्रसङ्गे वेदयन्ते भावयन्ति खलु विनियोगं कुर्वन्ति यत्

त्रिंशत् सन्त्युक्थपात्राणि माध्यन्दिने सवने—एकदेवताकानि सरांसि । तानि इन्द्रप्रेषाः पिबन्ति । परन्तु यास्को याज्ञिकपक्षं न मन्यते । नैरुक्तपक्षे प्रमाणमप्युद्धरति । "यथा देवा अंशुमाप्याययन्ति यमक्षितिमक्षितयः पिबन्ति । तेन चन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः" ( तै० सं० २ । ४ । १४ । १, मै० सं० २ । ७ । २ ) । यमक्षितिमक्षयरहितं सोमं चन्द्रमसमक्षितयः क्षयरहिताः—देवाः सूर्यरश्मयोऽपरपक्षे कृष्णपक्षे कलाशः पिबन्ति पुनराप्याययन्ति पूरयन्ति कलाशः शुक्लपक्षे । तथैव तेन धर्मेण हे विज्ञानिन् ! इन्द्रः—सूर्यः, वरुणः—जलम्, बृहस्पतिः—वायुः "अर्यो वै बृहस्पतिर्योऽयं वायुः पवते" ( शत० १४ । २ । २ । १० ) एते त्रयो विश्वस्य रक्षकास्त्वां स्वविज्ञातेन विज्ञानेनाप्याययन्तु पूरयन्तु ॥

अध्रिगुः ॥ ४३ ॥

अध्रिगुर्मन्त्रो भवति गव्यधिकृतत्वादपि वा प्रशासनमेवाभिप्रेतं स्यात् तच्छब्दवत्वात् "अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो" ( ऐ० ब्रा० २ । १ । ७ मै० सं० ४ । १३ । ४ ) इति ॥

भा०—'अध्रिगुः' इत्येतदनवगतमनेकार्थं च । 'गव्यधिकृतः' इत्यवगतम् । 'मन्त्रः' इति प्रथममभिधेयवचनम् । 'अध्रिगुः—मन्त्रः, 'गवि'—अधिकृतः, अध्रिगुः प्रादिसमासस्तत्पुरुषः तस्योपसर्जनत्वादोकारस्य ह्रस्वत्वम् 'अधिगुः' सन्—अध्रिगुः 'अधि' इत्यस्य टेः—रुट्—आगमश्छान्दसः । गौरिति वाचः पशोः पृथिव्याश्च नाम तेन वाचि पशौ पृथिव्यामधिकृतत्वात्—मन्त्रोऽध्रिगुर्भवति । अपि वा—अथवा प्रशासनमेवाभीष्टं स्यादत्र यः प्रशासनं करोति सोऽध्रिगुः—प्रशासनमादेशरूपा वाक् सा चापि गौस्तत्राधिकृतत्वे हि भवति प्रशासकः स चात्र वचने प्रशासनाय प्रार्थ्यते 'अध्रिगो' शब्देन हे अध्रिगो ! त्वं तव च येऽन्येऽनुचराः सर्वे यूयं सुशमि सुकल्याणं यथा स्यात् शमीध्वं शान्तिं स्थापयत । "शमु उपशमे" ( दिवा० ) ततः—'इन्' औणादिको भावे सुशमि क्रियाविशेषणम् ॥

अग्निरप्यध्रिगुरुच्यते ।

"तुभ्यं श्चोतन्त्यध्रिगो शचीवः ।" (ऋ० ३ । २१ । ४)

अधृतगमन कर्मवन् ॥

भा०—'अध्रिगुः' अग्निरपि भवति । 'अधृतगमन' इत्यभिधेयवचनम् । यतः—अध्रि—अधृतं गमनं यस्मिन्—सः 'अधृतगमनः' अध्रिगुः । अधृतमनिरुद्धं

सततप्रवृत्तं गमनं यस्मिन् तत्तेजस्वितया सोऽध्रिगुः "धृङ अवस्थाने" (भ्वादि०) धातोः क्रिन् प्रत्यय औणादिकः "अदिशदिभूशुभिभ्यः क्रिन्" (उणा० ४।६५) इत्यनेन धातोर्बाहुलकात् भूतेकाले कर्मणि ध्रिः। न ध्रिः—अध्रिः—अधृतम्। गु गमनम् "गाङ गतौ" (भ्वादि०) ततः कुप्रत्यय औणादिको बाहुलकाद् भावे। 'गु'। अध्रिरधृतं गु गमनं यस्मिन् सोऽध्रिगुरग्निः।

समग्रमन्त्रस्तदर्थश्च—

तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य।

कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर॥

हे शचीवः कर्मवन्! अध्रिगो! अनिरुद्धक्रिय! अग्ने तुभ्यं मेदसः—घृतस्य स्निग्धस्य घृतस्य न त्वस्निग्धस्य घृतस्योदकाख्यस्यादीपनयोग्यस्य किन्तु दीप्तिः प्राप्यते यस्मात् तथाभूतस्य क्षारितस्य स्तोकाः धारांशा धाराप्रवाहितांशाः श्चोतन्ति सिच्यन्ते कर्मणि कर्तृप्रत्ययः। मेधिर! हे मेधाशक्तिप्रदाग्ने! त्वं कविशस्तैर्मेधाविभिः प्रशस्तः प्रशस्तकार्ये प्रयुक्तो बृहता महता भानुना ज्वलनेन समन्तात् प्राप्तो भव, हव्या हव्यानि—अस्मद्योग्यानि ग्राह्याणि वस्तूनि पक्वभोजनानि वृष्टिजलं यन्त्रचालनेन प्रापणीयं च विविधं वस्तु जुषस्व जोषय प्रापय॥ आधिभौतिकदृष्ट्या—आध्रिग्रुर्ब्राह्मणोऽग्निस्तत्राप्यर्थो योजनीयः।

इन्द्रोऽप्यध्रिगुरुच्यते।

"अध्रिगव ओहमिन्द्राय" (ऋ० १।६१।१)

इत्यपि निगमो भवति॥

भा०—'अध्रिगुः' इन्द्रोऽपि भवति। पूर्ववत् 'अधृतगमनः' इत्यभिधेयवचनम्। अधृतमनिरुद्धं सततप्रवृत्तं गमनं यस्मिन् स इन्द्रो विद्युद्रूपो देवः।

"अध्रिगव…।" समग्रमन्त्रस्तदर्थश्च—

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय।

ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा॥

अस्मै हि खलु तवसे बलवते तुराय—कार्ये तूर्णं शीघ्रं प्रवर्तमानाय प्रतिद्वन्द्विहिंसकाय च महिनाय महनीयाय प्रशंसनीयाय "महेरिनण् च" (उणा० २।५७) ऋचीषमाय ऋचा स्तुत्या समत्वमापन्नाय यादृशी स्तुतिस्तादृशगुणलाभो यस्मात् तथाभूताय "ऋची समाय—ऋचा समाय" (निरु० ६।२३) अध्रि-

गवे—अहतगमनायानिरुद्धगमनधर्मवते—इन्द्राय विद्युद्रूपदेवाय तद्गुणवते राज्ञे वा प्रयो न—अन्नमिव—ओहं प्रापणसाधनम्—ओहम्—ओहति प्राप्नोति येन् तम् (दयानन्दः)। "उहिर्—गतौ" (भ्वादि०) स्तोमं प्रतिधिं प्रतिधानं तरं तत्प्रकटीभावप्रवर्धनाश्रयं ताम्रपत्रादिकम् "स्तोमा आसन् प्रतिधयः" (ऋ० १०।८५।८) "स्तोमो वै तरः" (तां० ११।४।५) राज्ञे च वैद्युतबलं वीरजननबलम् "वीरजननं वै स्तोमः" (तां० २१।९।३) तथा राततमा राततमानि दातव्यानि ब्रह्माणि तद्योग्यानि धनानि साधनानि प्रहर्मि प्रहरामि शपो लुक् छान्दसः। संयोजयामि समर्पयामि वा ॥

आङ्गूषः ॥ ४४ ॥

आङ्गूषः स्तोम आघोषः।

"एनाङ्गूषेण वयमिन्द्रवन्तः ॥" (ऋ० १।१०५।१९)

अनेन स्तोमेन वयमिन्द्रवन्तः ॥ ११ ॥

भा०—'आङ्गूषः' इत्येतदनवगतम्। 'आघोषः' अल्पशब्दसाम्यान्निर्वचनमवगमो वा। 'स्तोमः' अभिधेयवचनम्। आङ् पूर्वात् "घुष शब्दे" ततो घञ् "घोष" शब्दस्य 'गूष' इत्येष आदेशः "आङोऽनुनासिकश्छन्दसि" (अष्टा० ६। १।१२६) इत्यनेन—आकारोऽनुनासिकः, स्तूयतेऽनेनेति स्तोमो मन्त्रः। समग्रमन्त्रस्तदर्थश्च—

एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥

भा०—एना—ऐनेनानेनाङ्गूषेणाघोषेण स्तोमेन प्रतिधिना वैद्युतप्रयोगेण वयमिन्द्रवन्तो विद्युत्वन्तः सर्ववीरवन्तश्च संग्रामे शत्रूनभिभवेम। तस्मान्नोऽस्मान् मित्रः—दिवसः, वरुणो रात्रिः, अदितिः—उषाः, सिन्धुः—अन्तरिक्षम्, पृथिवी, द्युलोकश्च मामहन्तां भृशं वर्धयन्तु ॥

आपान्तमन्युः ॥ ४५ ॥

"आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः।" (ऋ० १०।८९।५)

आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी (सृप्रप्रहारी) * सोमो वेन्द्रो वा। धुनिर्धुनोतेः। शिमीति कर्मनाम। शम-

---

* इत्यपि क्वचिदधिकः पाठः।

यतेर्वा शेक्नोतेर्वा। ऋजीषी सोमो यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमः ॥ अथाप्यैन्द्रो निगमो भवति "ऋजीषी वज्री" ( ऋ० ५।४०।४ ) इति। हर्योरस्य स भागो धानाश्चेति ॥

धाना भ्राष्ट्रे हिता भवन्ति फले हिता भवन्तीति वा। "बब्धां ते हरी धाना उप ऋजीषं जिघ्रताम्" ( कुन्तापाध्याय: ६६ ) इत्यपि निगमो भवति।

आदिनाभ्यासेनोपहितेनोपधामादत्ते बभस्तिरत्तिकर्मा। सोमः सर्वाण्यतसानि वनानि नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैनमप्राप्य विनश्यन्तीति ॥

इन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मोभयप्रधानेत्यपरम् ॥

भा०—'आपान्तमन्युः' इत्येतदनवगतम्। 'आपातितमन्युः' इत्यवगमः। 'सोमः' वा 'इन्द्रः' वेत्यभिधेयवचनम्। 'आङ्' इत्युपसर्गपूर्वकात् 'पत गतौ" ( भ्वादि० ) णिजन्तात् क्तप्रत्यये 'आपातितः' शब्दः। आपातितो आपूरितः—आपातादागतो वा मन्युः क्रोधो यस्मिन् स इन्द्रः, "मन्यु क्रोधनाम" ( निघं० २।१३ ) यद्वा 'आपातितः—आपूरितो मन्युर्दीप्तिर्येनान्येषु स सोमः। "मन्युर्मन्यते र्दीप्तिकर्मणः" ( निरु० १०।२९ ) एवं सति समासे 'आपातितो मन्युर्यस्मिन् येन वा' 'आपातित' शब्दस्य 'आपान्त' भावश्छान्दसः।

"आपान्तमन्यु····" इति मन्त्रः सन्दिग्धदेवताकस्तत्र 'आपान्तमन्युस्तृपलप्रभर्मा' इत्येतेन वचनेन लक्षितः पूर्वार्द्धस्तु—इन्द्रदेवताकश्च सोमदेवताकश्च यास्कसम्मतौ, उक्तं हि "आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी सोमो वेन्द्रो वा।" उभयदेवताकः परन्तूत्तरार्द्धे पूर्वः पादः 'सोमो विश्वान्यतसा वनानि' इति साक्षात् सोमशब्दवत्त्वात् सोमदेवताकः। तथैव 'नार्वागिन्द्रं देभुः' अन्तिमः पादस्तस्य साक्षादिन्द्रशब्दवत्त्वात्—इन्द्रदेवताकः—इति प्रतिभाति। अत एव यास्केनोक्तमन्येषां मतं तदाश्रयेण 'इन्द्रं प्रतिमानानि' दृष्ट्वा इन्द्रप्रधाना—ऋक्—इत्येके नैघण्टुकं सोमकर्म परन्तु 'सोमो विश्वान्यतसा' इत्याश्रित्य—उभयप्रधाना—ऋक्—इत्यपरं मतम्। मन्त्रस्य पूर्वार्द्धस्तूभयत्र संगच्छते—इति यास्कमतम्, उत्तरार्द्धे सोमस्य पूर्वः पादः, इन्द्रस्योत्तरः पादः, एवं मन्त्रस्य प्रथमद्वितीयतृतीयपादास्तु सोमदेवताप्रसङ्गे, इत्येकः कल्पः। तदा इन्द्रो नैघण्टुकः।

प्रथम द्वितीयचतुर्थपादाः खल्विन्द्रदेवताप्रसङ्गे योक्तुमर्हा इति द्वितीयः कल्पस्तदा सोमो नैघण्टुकः । यद्वोभयप्रधाना—ऋक् तदा मन्त्रस्य पूर्वार्द्धभागः पादद्वययुक्तः श्लैषिकधर्मेण तृतीयपाददृष्टेन सोमेन देवतारूपेण सहापि तथा चतुर्थपाददृष्टेन—इन्द्रेण देवतारूपेण सहापि सम्बध्यते । इत्थंकरणेन मन्त्रस्य त्रयोऽर्थाः सञ्जाताः ।

सोमं देवतामथ—इन्द्रं नैघण्टुकं मत्वा—

आपान्तमन्युः—आपातितमन्युः—आपातितः—आवेशितो मन्युर्येन सः स्वपानं कुर्वति जने मन्युस्तेजोऽत्र, आवेशिततेजस्कः सोमः, सोमपानेन तज आविष्टं भवति । इति सोमस्य स्तवनम् । पुनश्च स सोमः तृपलप्रभर्मा तृप्रप्रहारी क्षिप्रप्रहारी पानानन्तरं क्षिप्रप्रहारी क्षिप्रप्रभावकारी धुनिः पीतवति शत्रूणां कम्पयित्रीं शक्तिं ददाति सः, शिमीवान् रोगशमनकर्मशक्तिमान् शरुमान् शत्रुहिंसनबलप्रदः स ऋजीषी—औषधतन्तुयुक्त ओषधिबुसाधारः सोमः सर्वाणि—अतसानि—अक्षेतव्यानि बलवन्ति वनानि वृक्षवनस्पतीन् व्याप्नोति—अभिभवतीति वाक्ययोजनासामर्थ्यादाकांक्षाबलाद्वा व्याप्तेरध्याहारः । तथाभूतस्य सोमस्य पानात् तत्पानस्य कर्तारमिन्द्रं प्रतिमानानि प्रसिद्धस्पर्द्धया योद्धुं सम्मुखं स्थितानि शत्रुबलानि न देभुः—न दभ्नुवन्ति न हिंसितुं शक्नुवन्ति, अर्वाग् भवन्ति—अर्वागेवेन्द्रमप्राप्य विनश्यन्ति, नेन्द्रबलं पारयितुं शक्नुवन्ति, इत्थं तुच्छानि भवन्ति । इति सोमस्य सोमपानस्य स्तवनाद् मन्त्रस्य देवता सोमो मुख्यतया, इन्द्रो नैघण्टुकः ।

इन्द्रं देवतां मत्वा—

आपान्तमन्युः—आपातितमन्युः—आपाततः स्वभावतः प्राप्तो मन्युः क्रोधः शत्रुप्रहाराय यस्मिन् स तथाभूत इन्द्रो राजा तृपलप्रभर्मा तृप्रप्रहारी क्षिप्रप्रहारी क्षिप्रं प्रहर्ता शत्रूणामुपरि क्षिप्रं प्रहारस्य कर्ता धुनिः शत्रूणां कम्पयिता शिमीवान् स्वराष्ट्रे रोग दुःखानां शमनकर्मणि शक्तः, तथा शत्रुप्रहारस्य शमनकर्मणि च शक्तः, शरुमान्—शत्रुहिंसकायुधवान्—ऋजीषी "ऋजीषी वज्री" ( ऋ० ५ । ४० । ४ ) वज्री वज्रवान्—इन्द्रः सोऽपि ऋजीषी भवति । सोम ऋजीषी भवति यतस्तस्मिन् ऋजीषं बुसं भवति, उक्तं हि यास्केन "सोमस्य पूयमानस्य यदतिरिच्यते तदृजीषमपार्जितम्" सोमस्य पीड्यमानस्य निश्चोत्यमानस्य—अपार्जितं पृथक्कृतं त्यक्तं वस्तु भवति तदृजीषम् । "अर्जेर्ऋज च—ईषन् कित्" ( उणा० ४ । २८ ) ऋजीषमस्मिन्नस्ति—इति सोमः—ऋजीषी । परन्तु ऋजीषी—इन्द्रः । यत इन्द्रस्य हर्योर्भाग ऋजीषम् । तदाधारौ हरी इन्द्रस्य, आधिदैविकक्षेत्रे विद्युदिन्द्रस्तस्य

हरी धारे शुष्कार्द्रे स्तः। लौकिकक्षेत्रे—इन्द्रो राजा तस्याश्वयोर्निःसारो बुसभाग ऋजीषमाहारः, तेन तदर्थी स इन्द्रो राजाऽपि ऋजीषी, इन्द्रो वज्री वज्रवान् वैद्युतास्त्रवान्, वैद्युतशक्तेराधारभूतमिध्मवत् पिष्टाग्निचूर्णतन्त्रीप्रभृति जलीयांश-शून्यं यस्यास्ति तेनापि स ऋजीषीन्द्रस्तमिन्द्रं प्रतिमानानि प्रतिद्वन्द्वित्वेन सम्मुखं स्थितानि शत्रुबलानि न देभुर्न दभ्नुवन्ति न हिंसितुं शक्नुवन्ति नाभिभवन्ति किन्तु—अर्वागेवेन्द्रमप्राप्य विनश्यन्तीत्यर्थः, इत्थं तुच्छानि भवन्ति। यः खलु सोमो विश्वानि—अक्षेतव्यानि वनानि—ओषधिवनस्पतिगुल्मप्रभृतीनि तानि सर्वाणि हीन्द्रस्य ऋजीषिणोऽल्पानि पेयानि खाद्यानि रक्षणीयानि, इत्यत इन्द्रो देवता सोमो नैघण्टुकः।

उभयप्रधानत्वे—

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी सोम इन्द्रश्चोभौ स्वस्वक्षेत्रे समानधर्मौ, अरण्ये सोमो ग्रामे इन्द्रः। सोमो राजा सर्वेषामतसानां वनानामोषधिवनस्पतीनाम्, इन्द्रो राजा जनानाम्, सोमः सर्वाणि बलवन्ति वनानि वने भवान्योषधीर्व्याप्नोति तथेन्द्रं प्रतिमानानि संग्रामे सम्मुखं प्राप्तानि शत्रुबलानि न दभ्नुवन्ति तस्य नीचैर्भवन्ति। तस्मादुभावपि शरण्यौ॥

'ऋजीषी वज्री' इति समग्रमन्त्रस्तदर्थश्च—

ऋ॒जी॒षी व॒ज्री वृ॑ष॒भस्तु॑रा॒षाट् छु॒ष्मी राजा॑ वृत्र॒हा सो॑म॒पावा॑।
यु॒क्त्वा हरि॑भ्या॒मुप॑ यासद॒र्वाङ् माध्य॑न्दिने॒ सव॑ने मत्स॒दिन्द्रः॑॥

इन्द्रः सोमपावा स्वयं सोमपानस्य कर्ता—ऋजीषी सोमरसनिःसृतादव-शिष्टस्य बुसभागस्याप्युपयोक्ता स्वाश्वाभ्यां वज्रवान् शस्त्रास्त्रवान् वृषभः शरीरेण बलिष्ठस्तुराषाट् तुरान् हिंसकान् यः सहते तत्प्रहारस्य प्रतीकारं कर्तुं शक्तः शुष्मी सैन्यबलयुक्तो वृत्रहा—आवरकाणामाक्रामणकारिणां हन्ता राजा हरिभ्यां यानं योजयित्वा—अर्वाङ्—उपयासत् प्रजाजनान् प्रति—उपगच्छेत् राज्यकार्यं च कुर्यात् माध्यन्दिने सवने मध्याह्नभोजनसमये मत्सत् भोजने सोमपानेन विश्रामेण आनन्दं प्राप्नुयात्॥

ऋजीषमश्वभोजनम्—

अश्वां ते हरी धाना उप ऋजीषं जिघ्रताम्॥

हे इन्द्र! तव हरी अश्वौ धानाः—अन्नधाना भक्षयतामथ—ऋजीषं सोमबुसं घासं चोपजिघ्रतां चर्वताम्, अत्र उपपूर्वक घ्रा धातुश्चर्वणार्थे प्रयुज्यते—उपसर्ग-बलाद्भोजनमसङ्गाच्च।

निरुक्तय:—तृप्रभर्मा तृपधातुरत्र तूर्णार्थे यास्कवचनसामर्थ्यात् ततो रक् प्रत्यय: (उणा० २ । १३) तृप्रं प्रभरति–इति "तृप्र प्रभृञ् मनिन् "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) । 'धुनि:' "धुञ् कम्पने" ( स्वादि० ) तत: सुवृषिभ्यां कित्–नि: ( उणा० ४ । ४९ ) इति धातुबहुलात् 'नि:' प्रत्यय: किच्च । शिमीवान्–कर्मवान् "शिमी कर्मनाम" ( निघं० २ । १ ) "शमु उपशमे" (दिवादि०) तत:–इन् स्त्रियां च ङीप् प्रत्यय: "कृदिकारादक्तिन:–वा" ( अष्टा० ४ । १ । ४५ ) धातोरकारस्य–इकारश्छान्दस: । यद्वा "शक्लृ शक्तौ" ( स्वादि० ) पूर्ववत् सर्वं धातो: ककारस्य मकारो विशिष्ट: । धाना: "धापृवस्यज्यतिभ्यो न:" ( उणा० ३ । ६ ) धा धातोर्न: प्रत्यय: कर्मणि भूते धाना स्त्रियां टाप् । धाना: खलु भ्राष्ट्रे हिता निहिता:–धृता:–भवन्ति या अग्निपक्का:, यद्वा फले हिता लोहफलके 'तवा' इत्याख्ये यद्वा फले फलस्याभ्यन्तरे वृक्षोपरि यथा फली स्त्रियां तथा नपुंसके फलं भवति, यद्वा खले इति पाठोऽपि लक्ष्यते दुर्गभाष्यत: खले नि:सारयन्तेऽन्नानि धानारूपाणि । 'बब्धाम्' इति "भस भर्त्सनदीप्त्यो:" (जुहो०) अत्र भक्षणार्थे वर्तते "बभस्तिरत्तिकर्मा" इति यास्कस्य विधानसामर्थ्यात्—निघण्टौ च "भसथ अत्तिकर्मा" ( निघं० २ । ८ ) ततो लोटि प्रथमपुरुषस्य द्विवचने श्लौ–आदिभूतेनाभ्यासेनोपधामादत्ते लोपयति "घसिभसोर्हलि च" ( अष्टा० ६ । ४ । १०० ) 'बभस् ताम्' बभ्स् ताम् पुन: सकारस्य जश्भावस्तकारस्य धकारश्चेति 'बब्धाम् ।'

श्मशा ॥ ४६ ॥

श्मशा शु अश्नुत इति वा श्माश्नुत इति वा ।

"अर्व श्मशा रुधद् वा:" ( ऋ० १० । १०५ । १ )

अवारुधच्छ्मशा वारिति ॥ १२ ॥

भा०—'श्मशा' इत्येतदनवगतमनेकार्थं च । शु–अश्नुते–आशिनी, श्माश्नुते श्माशिनी स्त्रियाम्–इत्यवगम: । शु क्षिप्रनाम, श्म शरीरम्–इत्युक्तं पूर्वम् । क्षिप्रव्यापिनी नदी बाह्ये जगति, शरीरव्यापिनी नाडी शरीरे । 'शु अश् अच् टाप्–श्वसा–श्मसा' वकारस्य मकार: 'श्म–अश्–अच्' श्मशा ।

समग्रमन्त्रस्तदर्थश्च—

कुदा वसो स्तोत्रं हर्यत आवश्मशा रुधद् वा: ।

दीर्घं सुतं वाताप्याय ॥

वसो ! वासयित: ! इन्द्र–राजन् ! हर्यते स्तोत्रं प्रशंसां कामयमानम्–

'तृतीयार्थे चतुर्थी व्यत्ययेन' त्वां पृच्छामि । श्मशा नदी या अवारुधत्—अवरुद्धाऽस्ति—वृष्टेरभावात् कदा तां वाः—वारयिष्यसि—प्रवाहयिष्यसि त्वं यतो दीर्घं दीर्घकालपर्यन्तं सुतं निजप्रयत्नेन सम्पादितं वाताप्याय—वाताप्यं जलं द्वितीयार्थे चतुर्थी, सा राज्ये प्रवाहयेत् । जलप्रसङ्गेन श्मशा नदी ।

वसो—वासयितः ! परमात्मन् स्तोत्रं स्तुतिं हर्यते कामयमानं त्वां प्रार्थये यैषा श्मशा शरीरे रससत्त्ववहा नाडी शरीररसवाहिनी नाडी वाः—शरीररसं मानवबीजं शक्तिं वा—अवरोधयति सा संयता नाडी वाताप्याय—वाताप्यायं वातेन प्राणवायुनाप्यायमानं दीर्घं दीर्घायुष्कं सुतं सन्तानमभिषुतं बलं च मह्यं कदा प्रयच्छेत्—कदाचिदपि—अवश्यं दास्यति ।

इति पञ्चमस्य द्वितीयः पादः ।

---

## तृतीयः पादः

---

उर्वशी ॥ ४७ ॥

उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्यामश्नुत उरुर्वा वशोऽस्याः । अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिः । यदप्स इत्यभक्तस्य । अप्सो नामेति व्यापिनः । तद्रा भवति रूपवती तदनयात्तमिति वा तदस्मै दत्तमिति वा ॥ १३ ॥

भा०—'उर्वशी' इत्येतदनवगतमनेकव्युत्पत्तिकं च पदम् 'उर्वभ्यश्नुते—ऊरुभ्यामश्नुते—उरुर्वा वशोऽस्याः, इति व्युत्पत्तिपरोऽवगमः.। 'अप्सरा' इत्यभिधेयवचनम् । अत्र सन्दर्भे 'उर्वशी' इत्येतेन यद्वा 'अप्सरा' इत्यनेन विद्युत्खलु लक्ष्यते । 'उर्वशी विद्युत्' ( दुर्गाचार्यः ) "नित्यपक्षे तु उर्वशी विद्युत्" (स्कन्दस्वामी ) अस्माभिरपि साधयिष्यतेऽग्रे यदुर्वशी विद्युत् ! उर्वशी कथमिति यास्को निर्वक्ति "उर्वभ्यश्नुते—बहुव्याप्नोति—आकाशे बहुव्यापिनी विद्युत्—ऊरुभ्यां विस्तृताभ्यां धाराभ्यां शुष्कार्द्राभ्यामश्नुते व्याप्नोति हि विद्युत्, उरुर्वशो बलवेगोऽस्यास्तस्माद् उर्वशी 'उरु' उपपदपूर्वकात्—अशूङ् व्याप्तौ धातोः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) उर्वशिः—पुनः स्त्रियाम् "कृदिकारादक्तिनः" ( अष्टा० ४ । १ । ४५—वा ) ङीष् । उर्वशी 'उरु—वशः—अस्याः' इति पक्षे 'उरु'

शब्दस्योत्तर उकारो लुप्यते । ङीप् प्रत्ययः । अथ 'अप्सरा' इत्यस्य शब्दस्यापि निर्वचनं करोति यास्कः । अप्सरा—अप्सारिणी—अप्सु सारिणी "आपोऽन्तरिक्षनाम" ( निघं० १ । ३ ) अन्तरिक्षे सारिणी तथा जले सारिणी तत्प्रभवत्वाद् विद्युतः । यद्वा 'अप्सः रूपनाम" ( निघं० ३ । ७ ) तच्च 'अप्सातेः' नञ्पूर्वकात्—"प्सा भक्षणे" ( अदादि० ) असुन् प्रत्यये, रूपं न भक्षणीयं भवन्ति किन्तु तदप्सानीयमादर्शनीयं भवति । यद्वा 'आप्तृ व्याप्तौ" ( स्वादि० ) ततः "धृतृवदिवचिवसिहनिकमिकपिभ्यः सः" ( उणा० ३ । ६२ ) इत्यनेन धातुबाहुलकात् सः प्रत्ययो धातोर्ह्रस्वत्वं च । रूपं व्यापनीयं स्पष्टं दर्शनायेति शाकपूणिराचार्यो मन्यते यत् 'अप्सः' इति भवत्यभक्षस्य * तथा 'अप्सः' नाम व्यापिनः तद्रा—'अप्सरा' अप्सवती रूपवती, 'अप्स' शब्दात् छान्दसो मत्वर्थीयो रः प्रत्ययः । अथवा तदप्सो रूपमनया—आप्तं प्राप्तं तस्मात् 'अप्सरा' अत्र "रा आदाने मतः "निघण्टौ गतिकर्मसु पाठात् प्राप्तिरादानमित्यनर्थान्तरम् "राति गतिकर्मा" ( निघं० २ । १४ ) यद्वा तदप्सो रूपमस्यै विद्युते वृत्तमीश्वरेणेति सम्प्रदाने कारकेऽप्सरा छान्दसोऽच् सम्प्रदाने 'अप्सरा ।'

तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादिन्येषर्ग् भवति—

"उ॒तासि॑ मैत्रावरु॒णो व॑सिष्ठो॒र्वश्या॑ ब्रह्म॒न्मन॒सोऽधि॑जा॒तः । द्र॒प्सं स्क॒न्नं ब्रह्म॑णा॒ दैव्ये॑न॒ विश्वे॑ दे॒वाः पुष्क॑रे त्वाददन्त ।" ( ऋ० ७ । ३३ । ११ )

अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन । द्रप्सः संभृतः प्सानीयो भवति सर्वे देवाः पुष्करे त्वा धारयन्त । पुष्करमन्तरिक्षं पोषति भूतान्युदकम् । पुष्करं पूजाकरं पूजयितव्यं वा । इदमपीतरत् पुष्करमेतस्मादेव पुष्करं वपुष्करं वा पुष्पं पुष्पतेः ॥ १४ ॥

भा०—तस्या उर्वश्याः—अप्सरसो दर्शनात् खलु मित्रावरुणयोः—रेतो वीर्यं स्कन्नं स्खलितं जातं तद्वृत्ताभिवादिनी । निदर्शनाऽस्त्यृक्—"उतासि मैत्रावरुण-

* "यद् ग्रामे यदरण्ये····यदेनश्चकृमा वय यदप्सश्चकृम वयम् ।" (काठक० सं० ६ । ४, मै० सं० १ । १० । २) 'अत्र—अप्सः—अभक्षः' गम्यते । ग्रामेऽरण्ये वा पापं कुर्मो यदभक्षं कुर्मस्तत् त्यजामः शोधयामः ॥

थोः·····।" वसिष्ठं प्रत्युक्तिरेषा 'वसिष्ठ ब्रह्मन्' त्वं मैत्रावरुणो मित्रावरुणयोः पुत्रोऽसि, उर्वश्याः—मनसोऽधिजातः "इतिवृत्तं कैश्चिदैतिहासिकं मन्यते, तन्न युक्तम्। यतो हि पूर्वमन्त्रतो विद्युत्प्रकरणं प्रवर्तते "विद्युतो ज्योतिः परिसञ्जिहानं मित्रावरुणा यदपश्यतां त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार॥" (ऋ० ७। ३३। १०) हे वसिष्ठ—प्रावृषि—आच्छादितोदक—संघात। तथा स्कन्दस्वामी 'वसिष्ठोऽप्याच्छादित उदकसंघातः' त्वं विद्युतो ज्योतिःसन्दीपनसमकालमेव मित्रावरुणौ त्वां यदपश्यतां जातमपश्यतां तत्तेऽप्येकं जन्म यदगस्त्योऽगानां वृक्षाणां वनस्पतीनां तद् बीजशक्तीनां संस्त्यायकः संग्राहको भौमाग्निर्विशे निजप्रजारूपाय वृक्षवनस्पतिगणाय त्वामाहृतवान् गृहीतवान्। एवमस्मिन् पूर्वमन्त्रे विद्युतो वर्णनात् ततश्च वृष्टिजलपतनादिप्रसङ्गात्। तदग्रिमे प्रस्तुतमन्त्रे "उतासि मैत्रावरुण·····।" इति न कश्चन लौकिक इतिहासः किन्तु वृष्टिविज्ञानमेवात्र, उर्वशी विद्युत् तत्सम्बद्धं वृष्टिविज्ञानमस्ति। अत्र मन्त्रगतस्य 'पुष्करे' पुष्करशब्दस्यार्थोऽन्तरिक्षमित्युक्तम्। मित्रावरुणावप्यत्रान्तरिक्षस्थावेव पदार्थावित्यनायासेन सिद्ध्यति यौ च वृष्टिप्रसङ्गे स्यातामुपयुक्तौ। मेघोदकस्य नीचैः प्रेरयिताऽग्न्यात्मा देवो मित्रः "ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्"—"प्रब्रुवाणः शब्दं कुर्वन् मित्रः" (ऋ० ३। ५९। १, निरु० १०। १२ 'प्रब्रुवाणः स्तनयित्नुशब्दं कुर्वन्' (दुर्गाचार्यः) अन्तरिक्षाद् वृष्ट्या पृथिवीमुन्दयिता क्लेदयिता देवो वरुणः "वरुणः कबन्धं प्रससर्ज····तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम"—वरुणः कबन्धं मेघम् (ऋ० ५। ८५। ३, निरु० १०। ४—स वियद् वृणोति मेघजालेनेति दुर्गाचार्यः) तथा "मित्रावरुणौ त्वा वृष्ट्यावताम्" (यजु० २। १६) "मित्रावरुणावपि वाय्वादित्यौ" (स्कन्दस्वामी) एवं प्रमाणैरायातमिदं वृष्टिसम्बद्धावादित्यवायू मित्रावरुणौ, आदित्यो मेघस्य प्रेरयितृत्वात्—मित्रः। वायुर्मेघस्य वरयितृत्वाद् धारयितृत्वाद् वरुणः। तयोर्मित्रावरुणयोः—रेतः—मेघरूपं चस्कन्द पुनर्वसिष्ठस्योदकसमूहस्य-प्रकटीभाव—इत्यालङ्कारिकमुक्तम्।

मन्त्रार्थः—

हे आकाशीयोदकसमूह ! त्वं रश्मिसमूहवतः सूर्यस्य सूक्ष्मवाष्पवतो वायोश्च सहयोगतः सम्भूतोऽसि, हे परिवृद्धवृष्टिजल ! त्वमुर्वश्या विद्युतो मनसः कान्तात्—चञ्चलघर्षणबलात् प्रकटीभूतः "मन्यते कान्तिकर्मा" (निघं० २। ६) वृष्टिबिन्दुः स्कन्नो यदाऽभूत् तदैव विश्वे देवा रश्मयः—"एते वै रश्मयो विश्वे देवाः" (शत० १२।४।४।६) त्वां परिवृद्धेन तेजसा—अन्तरिक्षे धारयन्ति॥

निरुक्तय:—द्रप्सः, सम्भृतः प्सानीयश्च "भृञ् भरणे" ( भ्वादि० ) सम्यग् भृत इति भ्रः कप्रत्यये भ्रश्च प्सानीयश्च प्सश्च कप्रत्यये भ्रश्च स एव प्सश्च समासे भकारस्य दकारः, द्रप्सः स च भरणीयः स्वान्तरे भक्षणीयश्च भवति । पुष्करम्—पोषति भूतानि पुष्करम् "पुषः कित् करन्" ( उणा० ४ । ४ ) यद्वा पुष्करमुदकं पूजाकरम्, पूजनीयाय प्रथमं जलं समर्प्यते तस्मात् । यद्वा पूजयितव्यं यथाऽन्नं पूजनीयं सद्भावेन भोज्यं तथा जलमपि सद्भावेन पेयम्, इतरत्र पुष्करं कमलपुष्पमेतस्मादेव पुष्करमिति वपुष्करं रूपकरं शोभाकरं वा वकारलोपेन "वपुः रूपनाम" ( निघं० ३ । ७ ) पुष्पम् "पुष्प विकसने" ( दिवा० ) पुष्प्यति पुष्पम्, अच्प्रत्ययान्तः शब्दः ।

वयुनम् ॥ ४८ ॥

वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा ।

"स इत्तमोऽवयुनं ततन्वत् सूर्येण वयुनवच्चकार ।"

( ऋ० ६ । २१ । ३ )

(स तमोऽप्रज्ञानं ततन्वत् सूतं सूर्येण प्रज्ञानवच्चकार *)

भा०—'वयुनम्' इत्येतदनवगतमनेकार्थं च । 'वेतेः' इति धातोर्निर्देशोऽवगमश्च । कान्तिः, प्रज्ञा वेत्यभिधेयवचनम् । "वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु" ( अदादि० ) तत उनन् प्रत्यय औणादिकः । "अजियमिशीङ्भ्यश्च उनन्" ( उणा० ३ । ६१ ) उणादिसूत्रे 'अजधातोरुनन्' विहितः, अजधातोश्च वी भवत्यादेशः "अजेर्व्यघञपोः" ( अष्टा० २ । ४ । ५६ ) रूपं तदेव 'वयुनम्' सिद्धयति हि । परन्तु यास्केन 'वी' इति साक्षात्—धातुरेवात्र मतः । 'अजधातुस्तु गतिक्षेपणयोरेव, परन्तु 'वी' धातुस्त्वनेकार्थः, तत्र—अज धातोरर्थाव्यप्यन्तर्भवतः । अतः 'वी' धातुग्रहणेन 'अजधातोरर्थौ तद्भिन्नार्थाश्च गृहीता भविष्यन्ति । 'वयुनम्' इति पूर्वं प्रशस्यनाम ( निघं० ३ । ८ ) प्रज्ञानाम ( निघं० ३ । ९ ) गतम्, अत्र 'कान्तिः' विशिष्टोऽर्थः प्रदर्शितः । अत्र पदनामप्रकरणे पूर्वोक्तेन 'प्रज्ञा' इति नाम्नाऽर्थेन वा 'कान्तिः' इत्येतन्नामार्थो वा सन्दिह्यते 'स इत्तमोऽवयुनम्' इति मन्त्रे ।

* कोष्ठान्तर्गतः पाठोऽनावश्यकः । प्रक्षिप्तः स्याद् भ्रमतः, यदा 'प्रज्ञा', वा कान्तिर्वा इत्यर्थद्वयं प्रतिज्ञायते तदैकेनार्थप्रदर्शनेन न भवितव्यम् । यद्वा द्वितीयेनार्थः कृतो भवेदतोऽवशिष्टो भागो विनष्टः स्यात् । अर्थस्यैकपक्षित्वं न प्रमाणम् । अस्मन्मते खल्वेतद्वचनमग्राह्यम् ।

समग्रमन्त्रस्तदर्थश्च—

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ।
कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥

सृष्टेः पूर्वमवयुनमप्रज्ञानं प्रज्ञानरहितं यत्तमस्तिमिरं ततन्वत्—तन्वत् प्रसृतं सद्वर्तत "तम आसीत् तमसा गूढमग्रेऽप्रकेतम्" ( ऋ० १० । १२९ । ३ ) "आसीदिदं तमोभूतमप्रज्ञानम्" ( मनु० १ । ५ ) तत्खलु स इन्द्रः परमात्मा सूर्येण—सूर्यद्वारेण वयुनवत् कान्तिमत् प्रकाशयुक्तं विश्वं कृतवान् । "इन्द्रः सूर्यमरोचयात्" ( ऋ० ८ । ३ । ६ ) । तमो भवत्यप्रज्ञानं तमोऽवयुनम्, इत्यत्र वयुनशब्दः प्रज्ञानार्थकः । 'वयुनवत्' इत्यत्र वयुनशब्दस्यार्थः कान्तिः प्रकाशः—इति स्पष्टम् । ते—उपासका मुमुक्षवो मर्ता मनुष्या अमृतस्य धाम तवामृतस्य धाम मोक्षमियक्षन्तः—गच्छन्तः प्राप्नुवन्तः प्राप्स्याम इति हेतोः "इयक्षतिगतिकर्मा" ( निघं २ । १४ ) स्वधावः ! हे मोक्षानन्दरूपान्नवन् परमात्मन् ! "स्वधा—उन्ननाम" (निघं० २ । ७) कदा न मिनन्ति कदापि नान्यं पीडयन्ति ॥

उक्तमन्त्रे वयुनशब्दस्य 'प्रज्ञा', 'कान्ति' अर्थौ वर्तेते पृथक्पृथगर्थकाश्च मन्त्राः सन्ति तद्यथा—

प्रज्ञानार्थे—

"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।"
( यजु० ४० । १६ )

हे अग्ने परमात्मदेव ! त्वं सर्वाणि वयुनानि—प्रज्ञानानि विद्वान् सन्—अस्मान् राये सुपथा नय ।

वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः" ( ऋ० ५ । ८१ । १ )

वयुनावित्—प्रज्ञावेत्ता ( सायणः )

कान्तिरर्थो वयुनस्य—

"इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।"
( ऋ० ४ । ५१ । १ )

पुरस्तात् पूर्वस्यां दिशि तमसोऽन्धकारात् पृथक्—अस्थात्—उदतिष्ठत् बहिर्निर्गतमिदं खलु तत् पुरुतमं प्रभूतमुषो ज्योतिर्वयुनावत् कान्तिमत् कान्तियुक्तमस्ति ॥

प्रशस्यार्थेऽप्युदाह्रियते प्रसङ्गात्—

"पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।"
( ऋ० ३ । ३ । ४ )

वैश्वानरोऽग्निर्यज्ञानां पिता—पालयिता विपश्चितां विदुषामसुरः—प्राणदः, वाघतां मेधाविनामृत्विजां वा वयुनं प्रज्ञानं विमानमाश्रयः सर्वेषाम् ॥

वाजपस्त्यम् ॥ ४९ ॥
वाजपस्त्यं वाजपतनम् ।
"सनेम वाजपस्त्यम्" ( ऋ० ९ । ९८ । १२ )
इत्यपि निगमो भवति ।

भा०—'वाजपस्त्यम्' इत्येतदनवगतम् । 'वाजपतनम्' इत्यवगमः । 'पत' धातोः "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) इत्यनेन यक् प्रत्ययः । निपातनात्, धातोर्मध्ये सकार उपजनः । पस्त्यमिति पतनम्—करणे । वाजानां बलानां पतनं भवति येन—यस्य सेवनात् स्वतो बलानि पतन्ति—आविशन्ति यस्य सेवनात् स सोमः । 'सनेम वाजपस्त्यम्' इति मन्त्रार्थः "वाजगन्ध्यम्' इति प्रसङ्गे द्रष्टव्यः ।

वाजगन्ध्यम् ॥ ५० ॥
वाजगन्ध्यं गध्यत्युत्तरपदम् ।
"अश्याम वाजगन्ध्यम्" ( ऋ० ९ । ९८ । १२ )
इत्यपि निगमो भवति ।

भा०—'वाजगन्ध्यम्' इत्येतदनवगतम् । 'वाजगध्यम्' इत्यवगमः । उत्तरपदं गन्ध्यं गध्यतिः 'गध' दिवादि० कण्ड्वादि० वा मतो यास्केनात्र छान्दसः । स च मिश्रीभावकर्मा "गध्यति मिश्रीभावकर्मा" ( निरु० ५ । १५ ) 'गधिता' ॥ ५५ ॥ इत्यस्योपरि ।

वाजस्यान्नस्य मिश्रीभावो यस्मिन् स सोमः—आहाराय पर्याप्तः । गधमिश्रीभावार्थकात् पूर्ववद् यक्प्रत्ययोऽधिकरणे धातोर्नुमागमश्च । 'वाजपस्त्यम्' 'वाजगन्ध्यम्' इत्युभयोरपि मन्त्र एकः, समाम्नायक्रमस्य पौर्वापर्यं न मन्त्रपाठस्य । समग्रमन्त्रस्तथैवं—

तं सखायः पुरोरुचं यूयं वयं च सूरयः ।
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥

सोमो देवता—हे सखायः सूरयो विद्वांसः ! स्तोतारः ! यूयं वयं च तं वाजगन्ध्यं वाजस्यान्नस्याहारस्य मिश्रीभावो यस्मिन्—अन्नस्य गुणो मिश्रितो यस्मिन्, अन्नस्य गुणस्तूदरपूर्तिर्जीवनं चेत्युभयं यस्मिन् तं तथा वाजपस्त्यं वाजानां

बलानां पतनं येन—यस्य सेवनात् स्वतो बलानि पतन्ति—आविशन्ति तथाविधं पुरोरुचं पुरतो रोचमानं सोममश्याम भक्षयाम पिबेम ॥

गध्यम् ॥ ५१ ॥

गध्यं गृह्णातेः ।

"ऋज्रावाजं न गध्यं युयूषन्" ( ऋ० ४ । १६ । ११ )

इत्यपि निगमो भवति ।

भा०—'गध्यम्' इत्येतदनवगतम् । 'गृह्णातेः' इति अर्थप्रत्ययाय धातुनिर्देशः । 'ग्राह्यम्' इत्यवगमः । 'ग्रह' धातोः 'यक्'—प्रत्ययः कर्मणि "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) निपातनात् 'ग्रह' इत्यस्य गधभावः ।

समग्रमन्त्रस्तदर्थश्च—

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।

ऋज्रा वाजं न गध्यं युयूषन् कविर्यदहन् पार्याय भूषात् ॥

हे इन्द्र ! विद्युद्रूपदेव ! त्वं कुत्सेन वज्रेण "कुत्सो वज्रनाम" ( निघं० २ । २० ) विद्युदुत्पत्तिनिमित्तेन पदार्थेन सरथं रथसहितं विमानयानसहितं यासि—आकाशे गच्छसि, अवस्युः—यानं यानारोहकं च रक्षन् सन् वातस्य वायोस्तोदस्तोदयिता प्रेरयिता सन्, हर्योः स्वशुष्कार्द्रधाराभूतयोर्गमनागमनशक्त्योः स्वामीभूतः । ऋज्रौ तौ ऋजुभूतौ हरी धाराभूतावश्वौ गध्यं वाजं ग्राह्यमन्नमिव रथं प्रति योक्तुमिच्छन् कविर्विद्वान् यन्ता यदहनि पार्याय यात्रायाः पारगमनाय समर्थो भवेत् । इति विद्युद्रथयानस्य विमानस्य वर्णनम् ।

गधिता ॥ ५२ ॥

गध्यतिर्मिश्रीभावकर्मा ।

"आगधिता परिगधिता" ( ऋ० १ । १२६ । ६ )

इत्यपि निगमो भवति ।

भा०—'गधिता' इति लक्षणशास्त्रतस्तु सिद्धं परन्त्वर्थतोऽनवगतं पदम् 'गध्यतिः—गधधातुर्लोकतोऽप्रसिद्धश्छान्दसो मिश्रीभावकर्मा मिश्रणार्थः । अमिश्रितस्य पृथग्भूतस्य पुनः सम्मेलनं मिश्रीभावः । मिश्रीभावार्थाच्छान्दसाद् गध धातोः क्तः स्त्रियां गधिता, आगधिता—आभिमुख्येन मिश्रिता, परिगधिता सर्वतोभावेन मिश्रिता ।

समग्रमन्त्रस्तदर्थश्च—

आगधिता परिगधिता या कशीकेव जङ्गहे ।

ददाति मह्यं यादुरी याशूनां भोज्या शता ॥

जङ्गहे—अत्यन्तं भृशं वा ग्रहीतव्ये व्यवहारे । 'ग्रह धातोर्यङ्लुगन्तात् "कृत्यार्थे तवैकेन्केन्यत्वनः" ( अष्टा० ३ । ४ । १४ ) इत्यनेन कृत्यार्थे केन् प्रत्ययः । अभ्यासस्य नुक् च धातो रेफलोपश्च छान्दसः । आगधिता पत्नी राजनीतिर्वा स्यात्—आभिमुख्येन मिश्रिता समन्ताद् योगप्रदा, परिगधिता परितः सर्वतः कायवाङ्मनोभिर्योगप्रदा या च खलु कशीका—इव शासिका राजनीतिरिव गृहस्य शासनकर्त्री भवेत् 'कश शासने" ( अदादि० ) ततः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) 'कृदिकारादक्तिनः' ङीष् वा' कशी । स्वार्थे छान्दसः कः प्रत्ययः कशीका ह्रस्वाभावश्छान्दसः । सा याशूनां प्रयतमानानाम् "यसु प्रयत्ने" (दिवादि०) ततो बाहुलकादुण् प्रत्ययः सकारस्य शकारश्च। यातुरी प्रयत्नशीला "यत प्रयत्ने" धातोर्बाहुलकादौणादिक उरी प्रत्ययः, सदृशी सती मह्यं शता शतानि बहूनि भोज्या भोज्यानि गृहसुखानि राजभोज्यानि ददाति ॥

कौरयाणः ॥ ५३ ॥

कौरयाणः कृतयानः ।

"पाकस्थामा कौरयाणः" ( ऋ० ८ । ३ । २१ )

इत्यपि निगमो भवति ।

भा०—'कौरयाणः" इत्येतदनवगतम् । 'कृतयानः' इत्यवगमः । "कृञ् करणे" इत्यतः "कठिचकिभ्यामोरन्", "किशोरादयश्च" ( उणा० १ । ६४–६५ ) इति ओरन् प्रत्ययस्तथा बाहुलकात् 'औरन् ङित्' औणादिकः कर्मणि भूते । कृतं संस्कृतं सज्जितं समर्थं संग्रामाय प्रयोज्यं यानं यस्य स कृतयानः कौरयाणः । समग्रमन्त्रस्तदर्थश्च—

यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः ।

विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥

पाकस्थामा पक्वबलः सर्वेषां बलानि यस्मिन् पच्यन्ते भक्षणीकृत्य स कौरयाणः कृतयानः संग्रामे योद्धुं सज्जितानि समर्थानि यानानि यस्य स इन्द्रस्तथा मरुतश्च तत्सहयोगिनो यं रथं मह्यं दुर्दत्तवन्तः । तं खलु विश्वेषां देवानामात्मना गुणजातेन सम्यक्समतिशयेन शोभयितारं शोभमानम् । इव वाक्यालङ्कारे "परोक्षप्रिया इव हि देवाः" ( शत० २४ । ६ । ११ । २ ) खलु दिवि—उप—आकाशोपरि धावमानं पश्यन्ति द्रष्टारो जनाः ॥

तौरयाणः ॥ ५४ ॥

तौरयाणस्तूर्णयानः ।

"स तौरयाण उपयाहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषा" * इत्यपि निगमो भवति ।

भा०—'तौरयाणः' इत्येतदनवगतम् । 'तूर्णयानः' इत्यवगमः । तूर्णस्य तौरभावः । स त्वं हे इन्द्र ! तौरयाणस्तूर्णयानस्तूर्णं क्षिप्रं क्षिप्रगतीनि यानानि यस्य स त्वमिन्द्र राजन् ! मरुद्भिः सखिभिः सहयोगिभिः सह यज्ञमुपगच्छ प्राप्तो भव ॥

अहयाणः ॥ ५५ ॥

अहयाणोऽह्रीतयानः ।

"अनुष्टुया कृणुह्यह्रयाणः" ( ऋ० ४ । ४ । १४ )

इत्यपि निगमो भवति ।

भा०—'अह्रयाणः' इत्यनवगतम् 'अह्रीतयानः' इत्यवगमः । अह्रीतयानः—अशिथिलयानः, ह्रीतशब्दस्य ह्रभावश्छान्दसः ।

समग्रमन्त्रस्तदर्थश्च—

त्वया वयं सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ।

उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥

अह्रयाण हे अह्रीतयान ! अशिथिलयान ! अग्ने राजन् ! त्वया सह वयं सधन्यः समानधनाः "अत्र मत्वर्थीय ईप्" ( दयानन्दः ) तथा त्वोतास्त्वया रक्षिताः, तव प्रणीत्या प्रकृष्टनीत्या वाजान् अन्नादीन् पदार्थान्—अश्याम भुञ्जमहि । सत्यताते सत्यस्याचरितः ! सत्यस्य प्रचारक ! उभे शंसे प्रशंसे ऐहिकपारलौकिकप्रशंसयोः कार्ये शरीरात्मबलकरे सूद प्रक्षर प्रापय, अनुष्ठुया सत्यानुष्ठानक्रिययाऽऽनुकूल्येन वा सम्पादय ॥

हरयाणः ॥ ५६ ॥

हरयाणो हरमाणयानः ।

"रजतं हरयाणे" ( ऋ० ८ । २५ । २२ )

इत्यपि निगमो भवति ।

भा०—'हरयाणः' इत्येतदनवगतम् । 'हरमाणयानः' इत्यवगमः । हृधातोरच् हरः । गमनशीलयानः ।

समग्रमन्त्रस्तदर्थश्च—

ऋज्रमुक्षण्यायने रजतं हरयाणे ।

रथं युक्तमसनाम सुषामणि ॥

---

* अलब्धमूलं वचनमिदं कस्याश्चिद् गुप्ताया लुप्ताया शाखायाः स्याद्वचनम् ।

उक्षण्यायने—उक्षाणो मङ्गलशुक्रादयो ग्रहा यन्ति यस्मिन् स उक्षण्यायन आकाशस्तस्मिन् "उक्षाणो माध्यमिकाः" ( निरु० १२ । १० ) हरयाणे हरमाणयाने हरमाणानां भ्रमतां याने गमनस्थाने सुषामणि सु शोभनो ग्रहगतीनामन्तो यस्मिन् तस्मिन्नाकाशे युक्तं ज्योतिश्चक्ररथमृज्रमृजुगामिनं रजतं धवलं रजतप्रभं सनाम सम्भजेमहि ॥

आरितः ॥ ५७ ॥

"य आरितः कर्मणि कर्मणि स्थिरः" (ऋ० १।१०१।४)

प्रत्यृतः स्तोमान् ॥ १५ ॥

भा०—'आरितः' इत्येतदनवगतम्, 'प्रत्यृतः' धातुप्रत्ययरूपकोऽवगमः । "स्तोमान्" इति तत्सम्बद्धस्य कर्मणः प्रदर्शनं प्रतिगतः प्राप्तः स्तोमान् । "ऋ गतौ" यङ्लुगन्तात् क्तप्रत्यये रूपम् । "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम्" ( अष्टा० ३ । १ । २२ इत्यत्र वा० ) इति विहितस्य यङ् "यङोऽचि च" ( अष्टा० २ । ४ । ७४ ) चकारेण 'बहुलं छन्दसि' इत्यनुवर्तनात्—अनचि च यङो लुक् छान्दस इडागमो निष्ठायाम् । प्रत्ययलक्षणेन "सन्यङोः" ( अष्टा० ६ । १ । ९ ) द्विर्वचने कृते "उरत्" ( अष्टा० ७ । ४ । ६६ ) इत्यनेनाभ्यासस्य 'ऋ' इत्यस्य 'अत्' आदेशः स च रपरः पुनः "रुग्रिकौ च लुकि" ( अष्टा० ७ । ४ । ९१ ) रुक्—र् पश्चात् "रो रि" ( अष्टा० ८ । ३ । १४ ) अभ्यासरेफस्य लोपे कृते "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( अष्टा० ६ । ३ । १०९ ) अभ्यासस्य 'अ' इत्यस्य दीर्घः । यद्वा 'ऋ' धातो णिच् स्वार्थे तत्र आगमानुशासनस्यानित्यत्वात्—छान्दसत्वाद्वा पुगभावः ।

समग्रमन्त्रस्तदर्थश्च—

यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः ।
वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ॥

य इन्द्र ऐश्वर्यवान् राजाऽश्वानां प्राणानां च वशी वशयिता यश्च गवामिन्द्रियाणां च गोपतिः स्वामी, यः कर्मणि कर्मणि—प्रत्येकस्मिन् शासनकर्मणि स्तोमान् प्रतिधीन् तरान् स्तोतव्यविधीन् प्रति—स्थिरो निश्चलः स आरितः—प्रत्यृतः प्रतिगतः प्राप्तः । योऽसुन्वतो यज्ञमकुर्वतो राष्ट्रैश्वर्यमवर्धयतो बलवतोऽपि वधो वज्ररूपो घातकस्तं मरुत्वन्तं प्रशस्तविद्वद्राजपुरुषवन्तं सख्यायामन्त्रयामहे ॥

व्रन्दी ॥ ५८ ॥

व्रन्दी व्रन्दतेर्मृदुभावकर्मणः ।

"नियद्वृणक्षि श्वसनस्य मूर्द्धनि शुष्णस्य चिद् व्रन्दिनो-रोरुवद्वना ।" ( ऋ० १ । ५४ । ५ )

निवृणक्षि यच्छ्वसनस्य मूर्द्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा वधेनेति वा ।

"अव्रदन्त वीळिता" ( ऋ० २ । २४ । ३ )

इत्यपि निगमो भवति ।। वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ पूर्वेण सम्प्रयुज्येते ।।

भा०—'व्रन्दी' इत्येतदनवगतं धातोरप्रसिद्धत्वादर्थतश्चाज्ञानात् । मृदुभावस्य कर्ता । 'व्रन्द' धातुर्नैरुक्तो यद्वा वैदिकोऽप्यल्पप्रयोगवान् मृदुभावकर्मा । ततः "गमेरिनिः" ( उणा० ४ । ६ ) इति धातोर्बाहुलकात्–इनिः प्रत्ययः । समग्रमन्त्रस्तदर्थश्च—

नियद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद्वना ।

प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥

हे इन्द्र ! ऐश्वर्यवन् परमात्मन् ! त्वं यत् श्वसनस्य शब्दकारिणो वायोस्तथा द्रवीभूतानां शोषयितुरपि च व्रन्दिनः कठोराण्याम्रादिफलानि स्वकिरणैस्तापयित्वा तेषु मृदुभावं प्रापयितुः सूर्यस्य मूर्धनि उपरि–आधारे रोरुवत्–रोरूयमाणो भृशं स्तनयित्नुशब्दं कारयन् वना–वनानि–उदकानि निवृणक्षि नियोजयसि यद्वा तानि–उदकानि मेघवधेन निवृणक्षि निवर्जयसि नीचैः पातयसि । वायुसूर्याभ्यां मेघानां सम्पादनं ताभ्यामेव तेषां च नीचैर्निपातनं करोति परमात्मा, एवं प्राचीनेन शाश्वतेन बर्हणावता ताडनशक्तिमता मनसा यदद्ययावत्–अद्यपर्यन्तमपि कृणवः करोषि त्वामुपरि कः । न कोऽपि ॥

यास्कः "व्रन्दी वन्दतेः" इत्युक्तवान् स दर्शयति ह्यस्ति वेदे 'व्रन्दतिः' व्रन्दधातुः स मन्त्रमुदाहरति "अव्रन्दत वीळिता" तदत्रोदाहृतमन्त्रेऽपि खल्वप्रसिद्धो धातुर्वैदिक आगतः 'वीडिता' तद्विषये च कथयति 'वीळयतिः, इति च 'व्रीळयतिः' इति च संस्तम्भकर्माणौ । पूर्वेण व्रन्दतिप्रयोगेण सह सम्प्रयुज्येते । समग्रमन्त्रस्तदर्थश्च—

तद्देवानां देवतमाय कर्त्वमश्रथ्नन् दृळ्हाव्रदन्त वीळिता ।

उद् गा आजदभिनद् ब्रह्मणा वलमगूहत्तमो व्यचक्षयत् स्वः ॥

देवानां देवतमाय–देवतमस्य ब्रह्मणस्पतेः परमात्मनः 'षष्ठ्यर्थे चतुर्थी' तत् कर्त्वं कृत्यम् "कृत्यार्थे तवैकेन्केन्यत्वनः" ( अष्टा० ३ । ४ । १४ ) इति त्वन्

प्रत्ययः कृत्यार्थे । यत् तत्सम्मुखे तत्तापेन वा दृढा—दृढानि—अश्रथ्नन्—श्रथितानि शिथिलानि विकीर्णान्यभवन् । वीळिता वीडितानि संस्तब्धानि कठोराणि—अम्रदन्त मृदुभावं प्राप्तानि, सः—गाः—रश्मीन्—उदाजत्—मेघाद् बहिरुद्धृतवान् ब्रह्मणा ब्रह्मास्त्रेण रश्मिसमूहेन वाग्वज्रेण स्तनयित्नुना वलं मेघमभिनद् भिन्नवान् तमोऽगूहत्—अन्धकारं संवृतवान् स्वान्तरे धृतवान् स्वः—व्यचक्षयत्—आदित्यं प्रकाशितवान् ॥

वीडिता—वीडितानि कठोराणि—अम्रदन्त प्रतिद्वन्द्वितया म्रन्दतिर्मृदुभावकर्मेति स्पष्टं भवति ॥

वक्तव्यम्—वीडिता वीड धातुश्छान्दसः, अस्य प्रयोगास्तु वेदे बहव उपलभ्यते परन्तु यदुक्तं व्रीडयतिः—इत्यस्य प्रयोग एकोऽपीत्थमेव कुत्रचिदपि वेदेषु नोपलभ्यते शाखासंहितासु ब्राह्मणग्रन्थेष्वपि न । यद्यपि "व्रीड चोदने लज्जायाम्" ( दिवादि० ) वर्तते । अस्य रलयोरभेदेन 'व्लीड' इत्यस्य प्रयोगाः शाखासंहितासु ब्राह्मणेषु मिलन्ति । यास्केन 'संस्तम्भनकर्मा' इत्युक्तं लज्जा हि संस्तम्भनं भवेत् । लज्जा सङ्कोचः संस्तम्भनं स्यात् । तत्प्रयोगाः—

१—"इन्द्रो वै वृत्राय वज्रमुद्यच्छत् सोऽव्लीयत" (मै० सं० ३ । ९ । ४)। अव्लीयत वज्रोद्यमनभयात्—भीत्वा सङ्कुचितोऽभवत् ।

२—"दक्षिणतो देवानां यज्ञोऽव्लीयत तं स्तोमभागैः प्रत्युदस्तभ्नुवन्" (काठक सं० २१ । २) यज्ञो अव्लीयत सङ्कुचितो जातः । तं यज्ञं स्तुतिमन्त्रैः—उदारं कृतवन्तः ।

३—"देवा वै वरुणमयाजयन् स यस्यै यस्यै देवतायै दक्षिणामानयत् तामव्लीनात् तेऽब्रुवन् व्यावृत्य प्रतिगृह्णीम तथा नो दक्षिणा न व्लेष्यतीति" ( तै० ब्रा० २ । २ । ५ ), ताम्—अव्लीनात् संग्रथितवान् एकत्रीकृतवान् । न तथा कर्तव्यं व्यावृत्य पृथक्—पृथक् कृत्वा दातव्या ।

निष्षपी ॥ ५९ ॥
निष्षपी स्त्रीकामो भवति विनिर्गतसपः * ।
सपः सपतेः * स्पृशतिकर्मणः ।

---

* 'विनिर्गतसपः सपः सपतेः 'इति पाठो दुर्गभाष्ये मतः' 'विनिर्गतपसाः पसः पसतेः' इति स्कन्दभाष्ये मतः । 'सप—षप समवाये (भ्वादि०) 'सपति" (निघं० ३ । ५, ३ । १४) इति सप धातोर्लोके वेदे च वर्तमानत्वात्—दुर्गभाष्यपाठः समीचीनः प्रतिभाति । सायणभाष्येऽपि पाठ एष मतः ।

"मा नो मुघेर्व निष्षपी परादाः" (ऋ० १ । १०४ । ५)

स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः ।

भा०—'निष्षपी' इत्येतदनवगतम् । 'विनिर्गतसपः' इत्यर्थावगमः । स्त्रीकामः स्वैरी—व्यभिचारी—इत्यभिधेयवचनम् । "षप समवाये" ( भ्वादि० ) । समवायोऽत्र स्पर्शविशेषः । स्त्रीपुरुषप्रजननेन्द्रियविषयकः । स्त्री योन्यां सपति समवैति सङ्गच्छते यः स सपः पुरुषप्रजननं शेपः पचाद्यच् सप धातोः । स विनिर्गतोऽसंयतो यस्येति विशिष्टे निन्दार्थे मत्वर्थीय इनिः प्रत्ययः निष्षपी प्रत्ययस्वरेणान्तोदात्तः ।

समग्रमन्त्रस्तदर्थश्च—

प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।

अर्धस्मा नो मघवञ्चर्कृतादिन्मा नो मुघेर्व निष्षपी परा दाः ॥

यदा सा नीथा न्यायेन पालिता प्रजा दृष्टा भवति दस्योः—दस्युः 'सुपां सुपो भवन्तीति' ओकः—न यथा तदा दस्युश्चोरः—ओकः—न्यायालयं दण्डगृहं बन्धन-स्थानमच्छाऽभिप्राप्नोति तथैवेषा न्यायेन पालिता सदाचारिणी प्रजा स्वगृहं गात्—गता भवति । अधस्म—अत एव मघवन्! इन्द्र! राजन्! त्वं चर्कृतात् पुनः पुनराचरितात् पापात्—नोऽस्मान् निष्षपी व्यभिचारी कामी भूत्वा मघानि धनानि—इव मा परादाः—न खण्डयेन विनाशयेः । राज्ञा चोराणां दण्डनं प्रजानां पालनं तथा कामुकत्वात् पृथक् स्थातव्यम् कामुकत्वाद् राष्ट्रविनाशो भवति ॥

तूर्णाशम् ॥ ६० ॥

तूर्णाशमुदकं भवति तूर्णमश्नुते ।

"तूर्णाशं न गिरेरधि ।" ( ऋ० ८ । ३२ । ४ )

इत्यपि निगमो भवति ।

भा०—'तूर्णाशम्' इत्यनवगतम् । 'तूर्णमश्नुते' इत्यर्थप्रदर्शनम् । 'उद-कम्' इत्यभिधेयवचनम् । "तूर्णिः क्षिप्रनाम" ( निघं० २ । १५ ) तस्य तूर्ण-भावः "अशूङ् व्याप्तौ" ( स्वादि० ) ततो घञ्—आशः । तूर्णिः—आशो व्याप्ति-र्यस्येति बहुव्रीहिसमासे तूर्णाशम्, "बहुव्रीहौ प्रकृत्या पूर्वपदम्" ( अष्टा० ६ । २ । १ ) नित्स्वरेणाद्युदात्तः 'तूर्णिः' शब्दस्तस्यैव स्वरः समासे । 'मेघस्याभ्यन्तरे वर्तमानमुदकमिव ।

समग्रमन्त्रस्तवर्थश्च—

प्रति॑ श्रु॒ताय॑ वो धृ॒षत् तूर्णा॑शं॒ न गि॒रेरधि॑ ।

हु॒वे सु॑शि॒प्रमू॒तये॑ ॥

हे प्रजाजनाः ! वो युष्माकं प्रतिश्रुताय याचितमभीष्टं सुखं स्वीकर्तुमूतये रक्षणार्थं धृषत्—शत्रून् धृषन्तं हिंसन्तं सुशिप्रं सुहनुनासिकं सुमुखमिन्द्रं राजानं हुवे युष्मभ्यं ददामि "हु दानादनयोः" ( जुहो० ) स राजा गिरेरधि मेघस्याभ्यन्तरं वर्तमानमुदकमिव शान्तिप्रदोऽस्ति ॥

क्षुम्पम् ।। ६१ ।।
क्षुम्पमहिच्छत्रकं भवति यत्क्षुभ्यते ।
"क॒दा मर्त॑मरा॒धसं॑ प॒दा क्षुम्प॑मिव स्फुरत् ।
क॒दा नः॑ शुश्रव॒द्गिर॒ इन्द्रो॑ अ॒ङ्ग ।" (ऋ० १ । ८४ । ८)
कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः शृणोति च गिर इन्द्रो अङ्ग । अङ्गेति क्षिप्रनाम । अञ्चितमेवाङ्कितं भवति ।। १७ ।।

भा०—'क्षुम्पम्' इत्येतदनवगतम् । 'अहिच्छत्रकम्' इत्यभिधेयवचनम् । क्षुभ्यते विशीर्यतेऽनायासेन । "क्षुभ सञ्चलने" ( दिवा० ) ततः "पानीविषिभ्यः पः" ( उणा० ३ । २३ ) इति धातोर्बाहुलकात् पः प्रत्ययः कर्मणि भकारस्य मकार आदेशः ।

मन्त्रार्थः—

इन्द्रः—ऐश्वर्यवान् राजा कदा—कदापि कस्मिन्नपि कालेऽराधसमनाराधयन्तमुपासनामकुर्वाणं नास्तिकं कृतघ्नं जनं कदा क्षुम्पमिव यथा कश्चन पादेनाहिच्छत्रकं स्फुरत्—अवस्फुरिष्यति—हिंसिष्यति "स्फुरति वधकर्मा" ( निघं० २ । १९ ) तथा सोऽपि हिंसिष्यति । कदा कदापि कस्मिन्नपि कालेऽङ्ग—क्षिप्रमवश्यमस्माकं गिरः—प्रार्थनाः श्रोष्यति हि ॥

अङ्गेति क्षिप्रनाम । यदञ्चितं तदेवाङ्कितमङ्गितम् । इत्येकमेव प्राप्तमिति क्षिप्रं कार्यं हस्तगतम् ।

निचुम्पुणः ।। ६२ ।।
निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति ।
"पत्नी॑वन्तः सु॒ता इ॒म उ॒शन्तो॑ यन्ति वी॒तये॑ ।
अ॒पां जग्मि॑र्निचुम्पु॒णः ।" ( ऋ० ८ । ९३ । २२ )

पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापां गन्ता निचुम्पुणः ॥

समुद्रोऽपि निचुम्पुण उच्यते निचमनेन पूर्यते। अवभृथोऽपि निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा।

"अवभृथ निचुम्पुण" ( यजु० ३ । ४८ )

इत्यपि निगमो भवति। निचुम्पुण निचुङ्कुणेति च ॥१८॥

भा०—'निचुम्पुणः' इत्येतदनवगतमनेकार्थं च। 'सोमः, समुद्रः, अवभृथः' इत्यभिधेयाः सन्ति। प्रथमं तावत् सोमोऽभिधेयः। निचान्तपृणः-निचान्तः 'चमु अदने' नितरां धैर्येण भक्षितः पीतः पृणति निचुम्पुणः "पृण प्रीणने" ( तुदादि० ) धातोः "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३ । १ । १३५ ) कः प्रत्ययः। 'निचान्त' शब्दस्य 'निचुम्' भावः पृण इत्यस्य पुणश्च निचुम्पुणः। निचमनेन निरन्तरं पानेन प्रीणाति तर्पयति निचुम्पुणः निचमनोपपदे "प्री तर्पणे" ( क्र्यादि० ) "धापॄवस्यज्यतिभ्यो नः" ( उणा० ३ । ६ ) धातोर्बाहुलकात् 'नः' प्रत्ययः—उपपदस्य निचुम् 'प्री' इत्यस्य पुभावश्च। यद्वा—औणादिक डुणक प्रत्ययः, 'नीचैः' उपपदे "क्वण शब्दे" (भ्वादि०) नीचैः शब्दस्य 'निचुम्' भावः 'क्वण' इत्यस्य सम्प्रसारणं छान्दसमचि प्रत्यये। ककारस्य पकारः निचुम्पुणः पक्षे निचुङ्कुणश्चावभृथपक्षे।

सोमो निचुम्पुणः, इत्यत्र "पत्नीवन्तः सुता०" इति मन्त्रस्यार्थः—

इमे सोमा ओषधिरूपाः पत्नीवन्तः पालयित्र्य आपस्तद्वन्तस्ताभिरद्भिः सह "योषा वा आपः" ( शत० १ । १ । ११८ ) "आपो वरुणस्य पत्न्य आसन्" ( तै० १ । १ । ३ । ८ ) रसवन्तः सोमाः सुता अभिषुता निःसारिता—निश्चोडितास्ते वीतये खादनाय पानायेत्यर्थः—उशन्तः कामयमानाः—इन्द्रो राजा तेषां पानं कुर्यादिति कामयमाना इव कूलं पिपतिषतीतिवत् तमिन्द्रं राजानं प्राप्नुवन्ति, अद्भिः सह मिश्रितत्वाद् बहुवचने प्रयुक्ताः पुनर्निचुम्पुणः स एष निचान्तपृणो निचमनेन पृणन् सन् वा निचुम्पुण इति नामतः प्रसिद्धः सोमः पीतः सन् प्रीणयिता, पानेन तर्पयिताऽपामपः शरीरान्तर्वर्तिरसान्, अपामिति द्वितीया स्थाने षष्ठी प्रति जग्मिर्गतो भवति तन्मयतां गतो भवति। 'जग्मिः' इति किन् प्रत्ययान्तः "आदृगमहनजनः किकिनौ लिट् च" ( अष्टा० ३ । २ । १७१ ) इत्यनेन किन् प्रत्ययः।

समुद्रश्च निचुम्पुणः, निचमनेन—उदकेन पूर्यते यतः, उदकपूर्णः सन् समुद्रो

निचुम्पुणः । इत्यत्र वक्तव्यम्—यास्केनोक्तं यत्—"समुद्रोऽपि निचुम्पुण उच्यते निचमनेन पूर्यते" निचुम्पुणशब्दः समुद्रस्य वाचको भवति । ऋग्वेदे तु तदेवैकं स्थानं यत्र निचुम्पुणशब्दः सोमाय—उदाहृतः । यजुर्वेदे सामवेदे नास्ति निचुम्पुण-शब्दः सोमार्थकः । यजुर्वेदे त्रिषु स्थानेषु निचुम्पुणशब्दोऽवभृथस्य विशेषणरूपेण पठ्यते । शाखासंहिताग्रन्थेषु निचुम्पुणशब्द एव नास्ति निचुङ्कुणशब्दोऽस्ति सोऽप्यवभृथस्य विशेषणपरः । ब्राह्मणग्रन्थेऽपि निचुम्पुणशब्दोऽवभृथस्य विशेषणं प्रयुज्यते तर्हि प्रश्न एष क्व तर्हि समुद्रवाचको निचुम्पुण इति । अत्रोच्यते यस्मिन् मन्त्रे निचुम्पुणः सोम उक्तः तस्मिन्नेव मन्त्रे समुद्रोऽपि निचुम्पुणशब्देनोच्यते—इति यास्कस्य लक्ष्यम् । तथाकृत्वा मन्त्रार्थः प्रदर्श्यते—

इमे सुताः प्रेरिताः पत्नीवन्तो नदीवन्तो नदीषु वर्तमानाः जलप्रवाहाः काम-यमानाः स्थितिं कामयमानाः—वीतये प्राप्तये यन्ति प्रवहन्ति । कस्य वीतये प्राप्तये, उच्यते—अपां जग्मिः—निचुम्पुणो योऽपां जलप्रवाहाणां नदीस्थानामपां जग्मिर्गमन-स्थानं प्राप्तिस्थानं निचुम्पुणः समुद्रोऽस्ति यो निचमनेनोदकेन निरन्तरं पूर्यते । जग्मिरधिकरणे छान्दसः प्रयोगः ।

अवभृथः खल्वपि निचुम्पुण उच्यते । यज्ञप्रसङ्गे कर्मविशेषोऽवभृथस्तस्मिन् नीचैः क्वणन्ति शब्दं कुर्वन्ति कर्मणां कर्तारः "अवभृथेष्टयोपांश्वेव चरन्ति" इति दुर्गभाष्ये । नीचैर्वाऽधोमुखानि यज्ञपात्राणि दधति तेनावभृथः, 'अव' उपसर्गो नीचैरर्थकः । "भृञ् धारणे" तदनुवादो धा धातुना कृतः । "अवे भृञः कथन्" ( उणादि० २ । ३ ) पात्राणां तथाविधकरणेऽपि गुडगुडाशब्दो भवति नीचैः पात्राणां तेनापि निचुम्पुणोऽवभृथः । तदर्थो मन्त्र उदाह्रियते "अवभृथो निचुम्पुणः" इति ।

समग्रमन्त्रस्तदर्थश्च—

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।

अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम् ।

पुरुराव्णो देवरिषस्पाहि ॥ ( यजु० ३ । ४८ )

हे अवभृथयज्ञ ! निचुम्पुण ! त्वं निचुम्पुणः—नीचैर्धैर्येण शब्दं क्वणन्ति त्वयि स्तोतार उपांशु जपन्ति—इति निचुङ्कुणोऽपरनाम्ना निचुम्पुणो निचेरुः—निहित-गतिशीलोऽसि । निचुम्पुणो नि—नितरां चोपति मन्दं गच्छति—उपांशुमन्त्रपाठेन समाप्तिमेति यः स निचुम्पुणः । "चुप मन्दायां गतौ" ( भ्वादि० ) अतो निचुङ्कुणः—निचुम्पुणस्त्वम्, उक्तं हि यास्केनात्रैव "निचुम्पुण निचुङ्कुणेति

च ।" अत्र माध्यन्दिनीययजुर्वेदसंहितायां 'निचुम्पुणः' इति पाठः । मैत्रायणीसंहितायां काठकसंहितायां च "अवभृथ निचुङ्कुण निचेररसि निचुङ्कुणो गृहे गृहेऽवभृथ नो देवैर्देवकृतमेनो····" ( मै० सं० १ । ३ । ३९ काठक सं० ४ । १३, ३८ । ५ ) इत्येवंक्रमेण निचुङ्कुण' इति शब्दं पठन्ति । त्वमवभृथ यज्ञ ! निचेरः—अवभरणात् फलस्य यज्ञफलस्य निचेता सन्धाताऽसि । त्वदनुष्ठानेनाहं देवैर्द्योतनात्मकैरात्मशक्तिभूतैरिन्द्रियमनोभिर्देवकृतं तत्कृतमेनः पापमयासिषं त्यजामि भविष्यद्वृत्त्या, तथा मर्त्यैर्मरणधर्मैः शरीराङ्गैर्मर्त्यकृतं तत्कृतमेनः पापमवत्यजामि भविष्यद्वृत्त्या । हे देव ! पुरुराव्णः—बहुदुःखस्य दातूरिषो हिंसकात् पापात्—नः पाहि रक्ष ॥

पदिम् ॥ ६३ ॥

पदिर्गन्तुर्भवति यत् पद्यते ।

"सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति । यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ।" ( ऋ० १ । १२५ । २ )

सुगुर्भवति सुहिरण्यः स्वश्वो महच्चास्मै वय इन्द्रो दधाति । यस्त्वायन्तमन्नेन प्रातरागामिन्नतिथे 'मुक्षीजयेव पदिमुत्सिनाति' कुमारः । मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च ॥

भा०—'पदिम्' इत्येतदनवगतम् । 'गन्तुः' गन्तुरित्यत्र गमनशील उड्डयनशीलो लघुपक्षी पतङ्गः खल्वभिधेयः । 'पद्यते' इति धातुनिर्देशो हेतुप्रदर्शनं च । "पद गतौ" ( दिवा० ) तत इन् "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) । 'मुक्षीजा' इति मोचनात्—मुच्लृ धातोः, सयनात्—षिञ् धातोः, ततनात् ( जननात् ) । 'मुच्—सी—ज' मुक्षीजः, मुच्यते सीयते तन्यते सा मुक्षीता सती मुक्षीजा तकारस्य जकारः पृषोदरादित्वात् । मुच्यते—मुच्, तथा सीयते पक्षी तस्मात् सा मुक्षी सा च तन्यते, मुक्षीजा ।

मन्त्रार्थः—

प्रातरित्वः ! प्रातरागामिन् ! अतिथे ! दिनस्य पूर्ववेलायामतिथेरागमनं गृहस्थेषु स्यात्—गार्हस्थ्यशिक्षां दत्वा भोजनं कुर्यात् । तथाभूत विद्वन्नतिथे ! त्वामायान्तं वसुनाऽन्नेन यो गृहस्थः—उत्सिनाति उत्कृष्टं बध्नाति मुक्षीजया—इव बन्धनरज्ज्वा यथा पदिं पदनशीलं गमनशीलमुद्गमनशीलमितस्तत उत्पतनशीलं लघुपक्षिणं पतङ्गमुत्सिनाति कश्चित् प्रेप्सुः कुमारो बालकः । स पतङ्गो लघुपक्षी

बद्धोऽपि सन्नुत्पतेत्, उत्पत्योत्पत्य पुनर्बन्धनमाश्रयेत् तथाऽन्नेन भोजनेन बद्धोऽतिथिः प्रस्थितोऽपि पुनः पुनर्गृहस्थस्य गृहमागच्छेदेवं यो गृहस्थस्त्वामुत्सिनाति—उत्कृष्टं बध्नाति स गृहस्थः सुगुः सुन्दरगोमान् सुधनवान् सुन्दराश्ववान् भवतु तथास्मै यजमानाय—इन्द्रः—ऐश्वर्यवान् परमात्मा वयः—आयुर्जीवनं वा दधाति धारयति ॥

पादुः ॥ ६४ ॥

पादुः पद्यतेः ।

"आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ।" ( ऋ० १० । २७ । २४ )

आविष्कुरुते भासमादित्यो गूहते बुसम् । बुसमित्युदकनाम ब्रवीतेः शब्दकर्मणः । भ्रंशते र्वा यद् वर्षन् पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते ॥ १९ ॥

भा०—'पादुः' इत्येतदनवगतम् । 'पद्यतेः' इति धातोर्निर्देशस्तदर्थप्रतिपत्त्यावगमः । स एवाभिधेयः । "पद गतौ" ( दिवादि० ) ततः "छन्दसीणः" ( उणा० १ । २ ) इति धातुबाहुलकात्—उण् प्रत्ययः । यद्वा "णित्कशिपद्यर्तेः ऊः" ( उणा० १ । ८५ ) छान्दसं ह्रस्वत्वं प्रत्ययस्य । अकारकं विधानं 'पद्यतेः' धातुतस्तस्मात् पादुः पदनं व्यवहारः । इन्द्रदेवताको मन्त्रः, इन्द्रः सूर्यः । समग्रमन्त्रस्तदर्थश्च—

सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये ।

आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥

हे प्राणधारिन् मनुष्य ! सा—इन्द्रस्य नायिका देवता सूर्यरूपा ते जीवातु जीविका जीवनाधारोऽस्ति 'जीवेरातुः" ( उणा० १ । ७८ ) तस्येन्द्रस्य विषये त्वं विद्धि जानीहि, समर्ये समरणे जीवनसंग्रामे जीवनसंघर्षे त्वं मा स्म न कदापि—एतादृक्—एतादृशं सूर्यमपगूहः स्वदृष्टितोऽपावृणु । स इन्द्रः सूर्यः स्वः—भासं प्रकाशमाविष्कुरुते बुसमुदकं "बुसमुदकनाम" ( निघं० १ । १२ ) अत्रान्तरिक्ष्यमुदकं मेघः पार्थिवं च जलमुभयमपि गृह्यते । तदुदकं गूहते संवृणोति संगृह्णाति । आन्तरिक्ष्यं मेघं चाकाशे स्थूली करोति तेजोधर्मेण जलरूपेण नीचैः पतन्तं रश्मिभिस्तत् प्रत्यादत्ते प्रतिगृह्णाति, स पादुर्व्यवहारोऽस्य निर्णिजः शोधयितुं न मुच्यते हीयते परित्यज्यते वा ।

निरुक्तयः—बुसं ब्रवीतेः "स्नुव्रश्चिकृत्यृषिभ्यः कित् सः" (उणा० ३ । ६६)

इति धातुबाहुलकात् 'भ्रू' इत्यस्य 'बु' भावश्छान्दसः। मेघोदकमपि वर्षद् ब्रवीति पृथिव्यां गच्छदपि ब्रवीति। 'भ्रंशते:' "भ्रंशु अवस्रंसने" (भ्वादि०) "भ्रंशु अधःपतने" (दिवादि०) "पचाद्यचि" 'भ्रंश' इत्यस्य बुसभावः। यतोऽन्तरिक्षाद् भ्रष्टः सन् मेघः पातयति निजान्तस्तो जलं तत् प्रत्यादत्ते सूर्यः॥

इति पञ्चमाध्याये तृतीयः पादः।

---

## चतुर्थः पादः

---

वृकः॥ ६५॥

वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा॥ २०॥

"अरुणो मासकृद् वृकः पथा यन्तं ददर्श हि।
उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी॥" (ऋ० १।१०५।१८)

अरुण आरोचनो मासकृन्मासानां चार्द्धमासानां च कर्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी जानीतं मेऽस्य द्यावापृथिव्याविति॥

भा०—'वृकः' इत्येतदनवगतमनेकार्थं च। प्रथमोऽभिधेयश्चन्द्रमाः। 'विवृतज्योतिष्कः, विकृतज्योतिष्कः, विक्रान्तज्योतिष्कः' इत्यवगमवचनानि। वृकशब्दो मूलतस्तु "वृञ् वरणे" (स्वादि०) ततः कक्प्रत्ययः "सुवृभूशुषिमुषिभ्यः कक्" (उणा० ३।४१) परन्तु यास्कस्त्वनेकवृत्तितो निर्वक्ति। प्रथमं तावत्—वृकश्चन्द्रमाः। कुतः, यतोऽयं विवृतज्योतिष्कः प्रसृतज्योतिष्कः, रात्रौ नक्षत्राणां ज्योतिर्न प्रसरति किन्तु चन्द्रमसो ज्योतिः प्रसरति—इति हेतोर्विवृतज्योतिष्कः, 'वि' उपसर्गस्तु 'वृ' धातोरेवार्थविवरणाय प्रयुक्तः, 'वृतज्योतिष्कः' आद्यन्तभागौ प्रत्याहृत्य 'वृकः' कल्पितः पृषोदरादिवत्। अथवा 'विकृतज्योतिष्कः' चन्द्रमसो-ज्योतिर्न प्रखरं तीक्ष्णं तेजोमयं सूर्यज्योतिरिव भवति किन्तु चन्द्रमसो ज्योतिस्तु शीतं ज्योतिर्हि, तस्मात्—चन्द्रमा विकृतज्योतिकः, अत्रापि पृषोदरादिवद् वृकः, विक्रान्तज्योतिष्कः, रात्रौ चन्द्रमसो ज्योतिरेव विक्रान्तं भवति दूरपर्यन्तं पृथिवी-पर्यन्तं गतं भवति तस्मात्—चन्द्रमा विक्रान्तज्योतिष्कः, तथैव पृषोदरादिवत्।

मन्त्रार्थः—

अरुणः—आरोचमानो रात्रौ समन्तात् प्रकाशमानो मासकृत्—मासानां चार्द्धमासानां च कर्ता वृकश्चन्द्रमाः, अत्र यास्केन 'अर्द्धमासानां च' इत्यधिकमुक्तं यतश्चन्द्रमा ह्यर्द्धमासानां कर्ता, मासानां कर्ता तु सूर्योऽप्यस्ति सोऽर्द्धमासानां पक्षाणां कर्ता न, वृकश्च सूर्योप्युच्यते वक्ष्यति ह्यनन्तरं यास्कः "आदित्योपि वृक उच्यते सोऽत्र न गृह्येत, इति हेतोः—अर्द्धमासानां चोक्तम् । अर्द्धमासपूर्वकाणां मासानां कर्ता चन्द्रमा इति लक्ष्यम् । स चन्द्रमाः पथा यन्तं मार्गेण गच्छन्तं नक्षत्रगणं ददर्शाथ च निचाय्य संलक्ष्य दृष्ट्वा "चायृपूजानिशामनयोः" ( भ्वादि० ) परन्तु निरुक्ते दर्शनार्थेऽपि युज्यते 'चिक्यत....' प्रभृतीनि पश्यतिकर्मसु । अत्र चायतिप्रकृतीनि च नामान्यामिश्राणि । 'चायृ' दर्शने । काश्चित् तारामुज्जिहीतेऽभिजिहीतेऽभिगच्छति—अभिप्राप्नोति—संयुज्यते येन येन नक्षत्रेण योक्ष्यमाणश्चन्द्रमा भवति "ओहाङ् गतौ" ( जुहोत्यादि० ) पृष्ठ्यामयी तद्वेव पृष्ठरोगी वर्धकिरिव वर्धकिः काष्ठं तक्ष्णुवन् नतपृष्ठो भवति तत्कष्टमनुभवन् यथा भवति तथा नतश्चन्द्रमा भवति । अस्यैतज्ज्योतिर्विज्ञानवृत्तं मे हे रोदसी—द्यावापृथिव्यौ स्त्रीपुरुषौ युवां जानीतम् ।

> आदित्योऽपि वृक उच्यते यदा वृङ्क्ते— ।
> "अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य" ( ऋ० १ । ११७ । १६ )
> आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानम् ।।

भा०—'वृकः' इत्यनवगतम् 'आदित्यः' अभिधेयः । 'आवृङ्क्ते' इत्यवगमो धातुनिर्देशरूपः । आङ् पूर्वकाद् वृजीधातोर्वर्जनार्थात् कर्त्तरि कारके प्रयोगः । आवृङ्क्ते समन्तादपाकरोति छिनत्ति तमः । "वृजी वर्जने" ( रुधादि० ) ततः कक् प्रत्ययो धातोर्बाहुलकात् । जकारस्थानीयस्य ककारस्य लोपः ।

समग्रमन्त्रस्तदर्थश्च—

> अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
> वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥

वर्तिका वर्तयति प्रवर्तयति कार्येषु प्राणिन इत्युषा जलपक्षिणीव वर्तमाना, अश्विनौ—अश्ववन्ताविव "कालो अश्वो वहति" ( अथर्व० १९ । ५३ । १ ) कालमश्वमाखढावहोरात्रौ "तत्कावश्विनौ....अहोरात्रावित्येके" (निरु० १२ । १)

स्वपार्श्ववर्तिनौ खल्वाह्वयत्–आह्वयतीव यत्–यदोदितेनादित्येन ग्रस्ता सीम् खल्वासीत्–हे अश्विनौ ! वां युवां वृकस्यादित्यस्य तमोनुदस्य सूर्यस्यारण्यशुन इवास्य आस्यान्मुखादमुञ्चतं मुञ्चथः । इति वृहदाख्यानं महत्त्वपूर्णमालङ्कारिकं वर्णनम् । तेन तथाचरितव्यमश्वारूढाभ्यां राजप्रजाजनगणाभ्यां यजयुषा जयसाधकेन "जि जये" ( भ्वादि० ) तत उसि प्रत्ययः "जनेरुसिः" ( उणा० २ । ११६ ) धातुबाहुलकात् । तेन जयसाधकेन यानेन यन्त्रयानेनाद्रेः पर्वतस्यापि सानु शिखरं विपथपथुर्विशिष्टं गच्छतं तत्र विश्वाचो विषमभावं गतस्य दस्योर्जातं वस्तुजातं विषेण विप्रयोगेण युवामहतं नाशयतम् ।

श्वापि वृक उच्यते विकर्त्तनात् ।
"वृकश्चिदस्य वारण उरामथिः" ( ऋ० ८ । ६६ । ८ )
उरणमथिः । उरण ऊर्णावान् भवत्यूर्णा पुनर्वृणोतेरूर्णोतेर्वा ।

भा०—'वृकः' इत्यनवगतम् । 'श्वा' इत्यभिधेयः । विकर्त्तनं दंष्ट्राभिश्छेदनं तस्य कर्म इत्यवगमः । वृको दंष्ट्राभिर्जीवितमपि प्राणिनं विकृतन्ति "कृती छेदने" ( तुदादि० ) 'विकृत्' इत्यतः पचाद्यचि, उपसर्गस्य 'व्' भावः, अस्यान्ते 'कृ' इत्यतः 'ऋ' स्थापितः अन्तिमतकारस्य लोपः । यद्वा "अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३।२।१०१ ) इति, डः प्रत्ययः, टिलोपे विक् अ, उपसर्गस्येकारस्य स्याद्दकारः ।

समग्रमन्त्रस्तदर्थश्च—

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥

अस्येन्द्रस्य राज्ञो वृकः श्वाऽपि वारणश्चोरादिकस्य वारयिताऽस्ति तथा च स वृकः श्वा–उरामथिः–उरणमथिः–उरणः खल्वूर्णावान् पशुर्भवति, 'उरणः' इति शब्दे नकारो मत्वर्थीयः, यथा 'पामनः, वामनः, अङ्गनः' इत्येतेषु शब्देषु नकारो मत्वर्थीयः, 'उरा' अत्रापि–अकारो मत्वर्थीयः, 'उरा' इति 'उरणः' 'उरण' 'वृ' धातोर्नक् प्रत्ययः "वृणुसिभुजिदीकुण्यविभ्यो नक्" ( उणा० ३ । २ ) धातोर्बाहुलकात्, धातोः 'उर्' भावश्छान्दसः कृतसम्प्रसारणः वारयति हि शीतमूर्णा । यद्वा 'ऊर्णुञ् आच्छादने' धातोः "ऊर्णोतेर्डः" (उणा० ५ । ४७) 'ऊर्णु–ड'–ऊर्णा । आच्छादयति शरीरम् । ऊर्णावतः पशून् मेषादीन् मथ्नाति तान् स्वाधीनी करोति वयुनेषु प्रज्ञानेषु स्वामिनो निर्देशनेषु–आभूषति–अभिभवति कार्यसाधनाय समन्तात् समर्थो भवति । सेमं स इमं 'सन्धिश्छान्दसः स इन्द्रो

राजा नोऽस्माकमिमं स्तुतिसमूहं प्रथित्रया विचित्रया बुद्ध्या सेवमानः सेवनहेतवे प्रतिधिं तरं रक्षणसाधनं वा सेवमानः सन्दधानोऽस्ति स त्वमिन्द्र राजन्! आगच्छ माप्तो भव ॥

वृद्धवाशिन्यपि वृक्युच्यते ।
"शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार" ( ऋ० १ । ११६ । १६ )
इत्यपि निगमो भवति ॥ २१ ॥

भा०—'वृकी' इत्यनवगतं पूर्ववत् । वृकः श्वा स्त्रियां शुनी तु पूर्वोक्तेन वृकेण ग्रहीतुं शक्यते हि परन्त्वत्र तद्भिन्नजातिरपेक्ष्यते । हिंस्रो वन्यः पशुः सिंहोऽपि स्त्रियां वृकी, कुतः ? यतो वृद्धा व्याघ्री निरुद्धगर्भा भवति ह्युन्मत्ता सा हि प्रवृद्धवाशिनी–घोरध्वनिं घोरगर्जनां करोति हि सा वृकी ।
समग्रमन्त्रस्तदर्थश्च—

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥

वृक्यै–उन्मत्तायै व्याघ्र्यै शतं बहुसंख्याकान् मेषान् मेषादीन् पशून् चक्षदानं विनाशयमानं तन्निग्रहाय तत्पालनाय वा बहून् मेषादीन् यो जनो राजकुमारोऽपि वा ददाति तम्–ऋज्राश्वं सरलाश्ववन्तं सिद्धाश्ववन्तं पिता–तस्य पिता राजा वा तमन्धमवनद्धनेत्रवन्तं चकार–प्रस्तरबद्धनेत्रं कतिपयवर्षेभ्यश्चकार दण्डविधानेन । पुनस्तस्मै–'अनर्वन्' इति चतुर्थ्या व्यत्ययेन, अनाश्रिताय विचक्षे विद्रष्टुं नासत्यौ सिद्धहस्तौ दस्रौ रोगस्य क्षयितारौ भिषजौ शल्यौषधचिकित्सकौ, अक्षी–नेत्रे स्वस्थे नेत्रे आधत्तं युवामश्विनौ चिकित्सकाविति राजाज्ञा भवति । दण्डदानानन्तरं राज्ञा दण्डितस्य चिकित्सा कार्या ॥

जोषवाकम् ॥ ६६ ॥
जाषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति ।
"य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥"
( ऋ० ६ । ५९ । ४ )
य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथोऽथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः ॥

भा०—'जोषवाकम्' इत्येतदनवगतम् । 'अविज्ञातनामधेयम्' इत्यवगमः । जोषयितव्यं परितर्कणीयं भवति "जुष परितर्कणे" ( चुरादि० ) मनसा कल्पनीयं भवति तथानिवर्चनीयम् । "'जोषम्' इत्यव्ययं तूर्ष्णीभावे मौने" ( अव्ययार्थ-शास्त्रम् ), 'जोषः' जुष ततो घञ् कर्मणि जोषः, वाकः—वच् धातोर्घञ् वाकः । जोषयितव्यः परितर्कणीयो वाको वादो यस्मिन् तत्—जोषवाकमपरितर्कणीय-मनिर्वचनीयं वचनं जपः ।

मन्त्रार्थः—

इन्द्राग्नी हे राजन् ! हे पुरोहित ! ऋतावृधौ राज्यनियमधर्मोचारयोर्वर्ध-यितारौ ! यो जनः सुतेषु सोमाद्योषधिषु क्षेत्रे वोद्याने वोत्पन्नेषु वां युवां स्तौति प्रशंसति पूजयति सत्करोति करप्रदानेनोपहारदानेन च तस्य युवामभीथो भक्षयथ । अथ योऽयं जोषवाकं तूर्ष्णीं परितर्किणीयमनिर्वचनीयं मानसवचनं जपति, विजअपः—विशिष्टं जपति—'ओ३म्' इति पदं तस्य पञ्चद्योषिणौ प्रार्जितहोमिणौ प्रार्जितघोषिणौ देवौ ! राजन् ! पुरोहित ! युवां सुखप्रदौ तस्य न भसथोऽभीथः । राजपुरोहिताभ्यां भूमिहाराद् ब्राह्मणात् संन्यासितश्च शुल्कोपहारौ न ग्राह्यौ ॥

कृत्तिः ॥ ६७ ॥

कृत्तिः कृन्ततेर्यशो वा अन्नं वा ।

"म॒ही॒व कृत्तिः॑ श॒र॒णा त॑ इन्द्र ॥" (ऋ० ८ । ९० । ६)

सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति ॥

इयमपीतरा कृतिरेतस्मादेव सूत्रमयी । उपमार्थे वा ॥

( "कृत्तिं॒ वसा॑न॒ आच॑र॒ पिना॑कं॒ बिभ्र॒दाग॑हि * ।" )

( यजु० १६ । ५१ )

इत्यपि निगमो भवति ।

"अवततधन्वा पिनाकहस्तः कृत्तिवासाः †"

---

* दुर्गाचार्यभाष्ये बहिस्तः पाठो मतस्तत्र कोष्ठे प्रक्षिप्तः । स्कन्दस्वामिभाष्ये हि प्रदर्शितं वचनमिदं न मूले । वैदिकयन्त्रालये प्रकाशिते मूलपुस्तके मूलरूपेण पाठो मत एषः ।

† दुर्गभाष्ये मूलत्वेन दत्तो न तु व्याख्यातः स्कन्दस्वामिभाष्ये न मूलत्वेन न च भाष्यरूपेण वचनमिदं दत्तम् । वैदिकयन्त्रालयीये निरुक्तेऽपि न विद्यते । निरुक्ते चतुर्थाध्यायस्य चतुर्थे पादे मूलरूपेण पाठ एष पिनाकशब्दस्य प्रसङ्गे स्वीकृत एव, तत्र व्याख्यातत्वादत्र पञ्चमाध्याये न पुनरावृत्तो भवेत्, इत्यतः कारणाद् वैदिकयन्त्रालयीये स्कन्दभाष्ये पाठोऽत्र नाङ्गीकृतः स्यात् ।

भा०—'कृत्तिः' इत्येतदनवगतमनेकार्थं च । 'कृन्ततेः' इति धातुनिर्देशेनार्थावगमः । 'यशः, अन्नम्' इत्यभिधेयवचनम् । "कृती छेदने" ( रुधादि०, तुदादि० ) ततः क्तिन् प्रत्ययः कर्तर्यपि, इत्येवानवगतत्वम् । अपवादमप्रसिद्धिं वा यशः कृन्तति छिनत्तीत्यतः कृत्तिः, क्षुधं कृन्तति छिनत्ति अन्नं यद्वा क्षेत्राद् वृक्षात् कर्तनीयं भवत्यन्नमित्यतोऽन्नं कृत्तिः । "महीव कृत्तिः" इत्यत्र पदप्रसङ्गे मन्त्रे कृत्तिः शब्दोऽनेकार्थः ।

समग्रमन्त्रस्तदर्थश्च—

तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।

महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥

हे असुर प्राणवन् ! बलवन् शक्तिमन् ! इन्द्र—राजन् ! तं त्वामेव प्रचेतसं प्रकृष्टप्रज्ञानवन्तं राधं राध्यं साध्यं प्रापणीयं भागं भागमिव यथा पितुः सकाशात् प्रापणीयं भागं याचामहे प्राप्नुमो वा तथा पितृतुल्यं त्वां स्वतः स्वभागं—तव राज्ये सुखभागमीमहे याचामहे । यतो हि ते तव मही सुमहत् शरणा शरणं शरण्यं कृत्तिर्यशोवाऽन्नं वा गृहं वाऽस्ति, अन्तरिक्षे विद्युत इव यथा विद्युतो यशः शोभाऽन्नं मेघो गृहं स्थानं वासोऽस्ति । एवं राज्ये देशे राष्ट्रे वा सर्वत्र तव यशोऽन्नं गृहं वा त्वं च सुयशस्वी पुष्कलान्नवान् शुभ्रप्रासादवान् वाऽसि, इत्यतस्ते तव सुम्ना सुखानि नोऽस्मान् प्राप्तानि भवेयुः । ऋग्वेदे कृत्तिशब्दविषयको मन्त्र एष एवैकोऽस्ति तस्मादनेकार्थाः कृत्तिशब्दस्यात्रैव निविशन्ते यशोऽथवाऽन्नं वा गृहञ्च "कृत्तिः—गृहनाम" ( निघं० ३ । ४ ) ।

इतरा कृत्तिश्चर्मकृता यद्वा सूत्रमयी वस्त्रखण्डरूपा 'कृती' छेदने धातोरेव । चर्मकृता पशुशरीरात् कर्तिता, सूत्रमयी वस्त्रात् कर्तिता भवति । तस्योदाहरणं पिनाकशब्दप्रसङ्गे ( निरु० अ० ३ पा० ४ ख० २१ ) गतम् "अवतत धन्वा पिनाकहस्तः कृत्तिवासाः" व्याख्यातो हि तत्र मन्त्र एषः । तथा "कृत्तिं वसान आ चर पिनाकं बिभ्रदागहि" ( यजु० १६ । ५१ ) व्याघ्रचर्मकृतामङ्गरक्षणीं वसान आच्छन् विचर पिनाकं धनुर्दण्डं धारयन्—समन्ताद् गच्छ ॥

श्वघ्नी ॥ ६८ ॥

श्वघ्नी कितवो भवति स्वं हन्ति स्वं पुनराश्रितं भवति ।

"कृतं न श्वघ्नी विचिनोति देवने" ( ऋ० १०।४३।५ )

कृतमिव श्वघ्नी विचिनोति देवने । कितवः किंतवास्तीति शब्दानुकृतिः, कृतवान् वाशीर्नामकः ॥ २२ ॥

भा०—'श्वघ्नी' इत्येतदनवगतम् । 'कितवः—द्यूतक्रीडी—इत्यभिधेयवचनम् । स्वं हन्ति—इत्यर्थे श्वघ्नी, कर्मणि स्वशब्दोपपदे हन् धातोर्णिनि प्रत्ययः "कर्मणि हनः" (अष्टा० ३ । २ । ८६) स्वशब्दस्य श्वभावः । स्वं स्वामिनमाश्रयति तदाश्रितं वस्तु स्वम् । 'कितवः' किं तव, अस्ति अत्र देवने द्यूतक्रीडास्थले—आस्तरे, इति शब्दानुकृतिः किंतव यः कथयति स कितवः । अथवा कृतवान् कार्यं कृतवान् कृतकार्यः कृतवान् कृतः पाशो विजयिनस्तद्वान् कृतपाशवान् कृतवान् स्यादित्याशीर्नाम यस्य यस्मै वाऽन्येषां स कृतवान् कितवः कृतस्य कितस्तद्वान् कितवो मतुबर्थे ।

समग्रमन्त्रस्तदर्थश्च—

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।

न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥

मघवा सर्वधनी—इन्द्रः सूर्यम्, सूर्यः सूर्यरूपः संवर्गस्तं संवर्गं संसक्तवर्गं शत्रुवर्गं जयत्—जयन् विजेतुं यतमानो देवने द्यूतस्थाने श्वघ्नी कृतं न यथा द्यूतक्रीडी कृतपाशं विचिनोति लक्षयति विश्लेषयति निर्धारयति तथा विजयशीलः सन् वर्तते । स त्वं मघवन् राजन् ! ते तव तुल्योऽन्योऽनुवीर्यमनुरूपं न शकत् न शक्नोति न पुराणः—आसीत्, नोत—नापि नूतनोऽद्यतनः ॥

समस्य ॥ ६९ ॥

सममिति परिग्रहार्थीयं सर्वनामानुदात्तम् ।

"मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः ।

ऊर्मिर्न नावमावधीत् ॥" ( ऋ० ८ । ७५ । ९ )

मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसो अंहतिरूर्मिरिव नावमावधीत् ।

ऊर्मिरूर्णोतेर्नौ प्रणोत्तव्या भवति, नमतेर्वा ।

तत्कथमनुदात्तप्रकृति नाम स्याद् दृष्टव्ययं तु भवति ।

"उतो समस्मिन्नाशिशीहि नो वसो" (ऋ० ८।२१।८)

इति सप्तम्यां शिशीतिर्दानकर्मा ।

"उरुष्याणो अघायतः समस्मात्" (ऋ० ५ । २४ । ३)

इति पञ्चम्यामुरुष्यतीरक्षाकर्मा ।

अथापि प्रथमाबहुवचने ।

"नभन्तामन्यके समे ( ऋ० ८ । ३९-४२ ) ॥ २३ ॥

भा०—'समस्य' इत्येतदप्राप्तसंस्कारं पदमनेकार्थञ्च। 'समम्' इति निपात-रूपं भवति—इति तु प्रसिद्धमेव "साकं सार्द्धं समं सहार्थे" ( अव्ययार्थशास्त्रम् ) परन्त्वत्र 'समम्' इति परिग्रहार्थीयं परितः सर्वतो ग्रहणमर्थोऽस्येति सर्वार्थीयं सर्वनामपदमनुदात्तमस्ति। उक्तं हि फिट् सूत्रे "त्वत्वसमसिमनेमेत्यनुच्चानि" ( फि० ४ ) इति नामवाचकान्यनुदात्तानि भवन्ति तानि च सर्वनामसु पठितानि "त्व, त्वत्, नेम, सम, सिम सर्वनामानि" (गणपाठे)। अथ समशब्दस्य नामत्वे वैदिकं हेतुं प्रदर्शयति कथमनुदात्तधर्मं नाम स्यादित्यत्रोच्यते दृष्टव्ययं तु भवति दृष्टो व्ययो विभक्तिषु परिणामो यस्येति तथाभूतं तु भवति तस्मात् 'समम्' इत्यनुदात्तं सदपि नाम सर्वनाम।

'मा नः समस्य' इति मन्त्रस्यार्थः—

समस्य सर्वस्य दुर्धियः पापबुद्धेः सर्वप्रकारतो द्वेषं कुर्वतः शत्रोरंहतिर्हननसाधनं शस्त्रास्त्रं नोऽस्मान् मा वधीत्र हन्यात् समुद्रस्य जलतरङ्गो यथा सहसा नौकां हन्ति। 'समस्य' इति षष्ठ्यां परिणामः। ऊर्मिः "ऊर्णुञ् आच्छादने" ( अदादि० ) ततः "अर्त्तेरूच्च—मिः" ( उणा० ४। ४४ ) धातोर्बाहुलकात् मिः प्रत्यय—'णु' इत्यस्य लोपश्च पृषोदरादित्वात्। आच्छादयति ह्यूर्मिर्नावम्। नौः "ग्लानुदिभ्यां डौः" ( उणा० २। ६५ ) इत्यनेन "णुद प्रेरणे" ( तुदा० ) धातोर्डौप्रत्ययः सा नद्यां समुद्रे वा प्रणोतव्या प्रेरणीया भवति पारं गन्तुम्। यद्वा "नम" धातोः पूर्ववदेव डौप्रत्ययो धातोर्बाहुलकात्। भारेण जलाशये नमते हि सा।

'उतो समस्मिन्' इति समग्रमन्त्रस्तदर्थश्च—

विद्मा सखित्वमुत शूर भोज्यमा ते ता वज्रिन्नीमहे।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति॥

हे वज्रिन् शूर इन्द्र! राजन्! ते तव सखित्वं सख्यं विद्मो जानीमः—उत—अपि भोज्यमपि सुखभोगमपि जानीमः, तव ता—ते उभे सख्यभोज्ये आ—ईमहे समन्ताद् याचामहे "ईमहे याच्ञाकर्मा" ( निघं० ३। १९ ) उतापि सुशिप्र! सुन्दरहनुनासिक! सुन्दरमुखाकृतिमन्! प्रसन्नवदन्! वसो वासयितः! राजन्! समस्मिन् सर्वस्मिन् गोमति गोधनवति वाजे वाजवति राष्ट्रे 'वाजे' मत्वर्थीयोऽकारश्छान्दसः। नोऽस्मभ्यं ते एव सख्यं भोज्यं चोभे—आशिशीहि देहि प्रयच्छ। "शिञ् दाने" यास्कस्य विधानसामर्थ्यात्। अत्र 'समस्मिन्' इति सप्तम्याम्॥

"उरुष्याणो अघायतः समस्मात्' इति समग्रमन्त्रस्तदर्थश्च—

स नो॑ बोधि श्रु॒धी हव॑मुरु॒ष्या णो॑ अघाय॒तः स॑मस्मात् ।

तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥

हे शोचिष्ठ ! अतिशयेन पवित्रयितः ! तेजसा देदीप्यमान ! अग्रणेतः ! शासक ! स त्वं नोऽस्माकमभिप्रायं बुध्यस्व श्रुधी शृणु—स्वीकुरु नोऽस्मान् समस्मात् सर्वस्मात्—अघायतः पापमिच्छतो जनाद्—उरुष्य—रक्ष 'उरुष्यति' कण्ड्वादिगणीयश्छान्दसो धातुर्मतो रक्षार्थे यथा 'तरुष्यति' । तं त्वां सखिभ्यः—सखायः 'विभक्तिव्यत्ययः' अविरोधिनस्त्वद्भक्ताः सन्तः सुम्नाय सुखमीमहे याचामहे 'समस्मात्' इति पञ्चम्याम् ।

अथ प्रथमा बहुवचने "नभन्तामन्यके समे" समे सर्वे इति व्याख्यातं पूर्वं पञ्चमाध्यायस्य प्रथम पादे ( निरु० ५ । ख० २ । श० ८ ) "यदिन्द्राग्नी" ( ऋ० ८ । ३९ । ७ ) मन्त्रे, अग्रे च दशमाध्यायेऽपि ( निरु० १० । ख० ५ ) 'नभन्तामन्यके समे' इत्यागमिष्यति ॥

कुटस्य ॥ ७० ॥

चर्षणिः ॥ ७१ ॥

"ह॒विषां॑ जा॒रो अ॒पां पिप॑र्ति॒ पपु॑रि॒र्नरा॑ ।

पि॒ता कु॑ट॒स्य च॑र्ष॒णिः ॥" ( ऋ० १ । ४६ । ४ )

हविषापां जरयिता पिपर्त्ति पपुरिरिति पृणाति निगमौ वा प्रीणाति निगमौ वा । पिता कृतस्य कर्मणश्चायितादित्यः ।

भा०—'कुटस्य' अथ 'चर्षणिः' इत्येतेऽनवगते पदे । 'कृतस्य' अथ 'चायिता' इति विशेषणरूपो यथाक्रमं प्रत्येकस्यावगमः । 'कुटस्य' इत्यभ्यार्थस्य धातोरभ्यार्थेऽभिनयनमज्ञानवगतत्वम् । 'कृतस्य कर्मणः' अथ 'आदित्यः' इत्यभिधेयवचनम् । "कुट छेदने" ( चुरादि० ) ततः कर्मणिः कः प्रत्ययश्छान्दसः । 'चर्षणिः' शब्दः "चायृ" धातोः साधितः, उक्तं हि पूर्वं पश्यतिकर्मसु । "विचर्षणि प्रभृतयः····उत्तरे धातवश्चायतिप्रकृतीनि नामानि" ( निरु० ३।१३ ) । "चायृ" धातुश्च "पूजानिशामनयोः" ( भ्वादि० ) पूजनं सत्कारः, निशामनं श्रवणं प्रायेण गृह्यते परन्तु निशामनं दर्शनमप्युच्यते "शम आलोचने" ( चुरादि० ) अन्यः शमुधातुर्दैवादिकस्तु 'उपशमे' अर्थे । यः शमधातुर्दर्शने—आलोचनेऽर्थे विद्यते तस्य मित् संज्ञा न भवति, उक्तं हि "शमोऽदर्शने" ( भ्वादि० ) अस्य मित् संज्ञा न । तस्मात् "मितां ह्रस्वः" ( अष्टा० ६ । ४ । ९२ ) अत एव 'निशाम-

यति' इत्युदाह्रियते तद्वदेव 'पूजानिशामनयोः' निशामनं दर्शनमित्यर्थो युक्तः। इत्थं 'चायृ' इत्यस्य 'दर्शनम्' इत्यर्थोऽत्र पश्यतिकर्मसु 'चर्षणिः' शब्दः—चायति-प्रकृतिरुक्तः। 'चायृ' धातोः—चर्षणिशब्दो व्युत्पादितः। 'चायृ' ततः 'अनिः' प्रत्ययः "कृषेरादेश्च चः—अनिः" (उणा० २।१०५) धातोर्बाहुलकात्। 'चायृ' धातोः सर्वादेशो बाहुलकाच्छान्दसः। 'चर्ष्' इति ततः 'चर्षणिः' अत्र मन्त्रे चर्षणिः प्रकृतिरूपोऽर्थश्चायिता दर्शयिताऽऽदित्यः प्राणिनो दर्शयति द्रष्टुं प्रेरयति तथा दृष्टिपथान् करोति सर्वान् पदार्थान्।

मन्त्रार्थः—

चर्षणिरादित्योऽपां दानादानाभ्यां तासां जारो जरयिताऽस्ति। दिवि स्थितानामपां पृथिव्यां दानात् प्रदानात् प्रेरणात् तथा पृथिवीस्थानामपामादानादाकर्षणादित्यर्थः। एवं नरौ हे द्यावापृथिव्यौ! युवयोः स पपुरिः पूरयिता पालयिता च सन् पिपर्त्ति पूरयति पालयति च दिवं पूरयति अद्भिः पृथिवीं पालयति यद्वोभेऽपि प्रीणाति तर्पयति। स आदित्यः कृतस्य कृतस्य कर्मणः 'कृतम्' इति कर्मपर्यायोऽत्र "कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः" (अथर्व० ७।५०।८) इतिवत्। कृषिप्रभृतिकार्यस्य पिता पाता रक्षकः पालयिता पूरयिता चास्ति। 'पिपर्त्ति' 'पपुरिः' शब्दौ "पृ पालनपूरणयोः" (जुहो०) प्रथमपुरुषैकवचने 'पिपर्त्ति' "आदृगमहनजनः किकिनौ लिट् च" (अष्टा० ३।२।१७१) इति किन् प्रत्ययः। "प्रीञ् तर्पणे" (क्र्यादि०) छन्दसि जुहोत्यादिगणे मत्वा तस्य 'पृ' भावः पुनः पूर्ववत् 'पिपर्त्ति पपुरिः' इति प्रयोगौ सिद्ध्यतः।

शम्बः ॥ ७२ ॥
शम्ब इति वज्रनाम, शमयतेर्वा शातयतेर्वा।
"उग्रो यः शम्बः पुरुहूत तेन" (ऋ० १०।४२।७)
इत्यपि निगमो भवति ॥

'शम्बः' इत्येतदनवगतं पदम्। शमयिता शातयिता वेत्यर्थावगमः। 'वज्रः' इत्यभिधेयवचनम्। "शम् लक्षे वेथ्यलक्षे", "शमने नाशने" ततः "शमेर्बन्" (उणा० ४।९४) यद्वा "शाति णिजन्तो वधे" वैदिकधातोः पूर्ववत् बन् प्रत्ययो धातोर्बाहुलकात् शातेः शम् भावश्च। पृषोदरादित्वाद् रूपसिद्धिः।

समग्रमन्त्रस्तदर्थश्च—

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥

पुरुहूत हे बहुप्रकारेणाह्वातव्य ! इन्द्र राजन् ! यद्वा यजमान ! यस्तव—उग्रस्तीक्ष्णः शम्बो वज्रो युद्धे प्रयोक्तव्यः, धान्ये प्रयोक्तव्यं मुषलमुखं लोहमयं तेन शत्रुं पीडकजनं शमनीयं शातनीयं त्रोटनीयं तुषमारात् समीपाद्—दूरमपबाधस्व दूरं पीडय पीडयित्वा दूरं गमय पुनरस्मभ्यं यवमत्—यवाद्ययुक्तमपगततुषं गोमद्—दुग्धयुक्तं पायसं चापगततुषतण्डुलैर्युक्तं कृधि सम्पादय देहि जरित्रे स्तोत्रे ब्राह्मणाय वाजरत्नामन्नरत्नपूर्णां धियं कर्मक्रियां कृधि सम्पादय ॥

केपयः ॥ ७३ ॥

केपयः कपूया भवन्ति कपूयमिति पुनाति कर्म कुत्सितं दुष्पूयं भवति ॥ २४ ॥

"पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा। न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥" ( ऋ० १० । ४४ । ६ )

पृथक् प्रायन्, पृथक् प्रथतेः । प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वन्त श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन् यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वा । ईर्म इति बाहुनाम, समीरिततरो भवति ॥ २५ ॥

भा०—'केपयः' इत्येतदनवगतम् । 'कपूयाः' अक्षरसामान्येन शब्दावगमः । 'कपूयम्' अस्त्येषु ते कपूयाः, अत्र—अकारो मत्वर्थीयश्छान्दसः । कपूयं पुनर्यत् कर्म पुनाति—यत् कर्म मनुष्यः पुनाति शोधयति मनसा अपध्यानादि कृत्वा, किम्भूतं तत्कर्म यत्पुनाति, कुत्सितं निन्दितं कर्म, यतो दुष्पूयं दुःशोधनीयं भवति । एवं कुत्सितं कर्म पवितव्यं शोधनीयं येषां येषु वा ते कपूयाः, उक्तं यथा "अथ य इह कपूयाचरणा अभ्याशो ह ते कपूयां योनिमापद्येरन्" ( छान्दो० ५ । १० ) । कुत्सितस्य 'क' "पूञ् पवने" ( क्र्यादि० ) ततः क्यप् प्रत्ययश्छान्दसः । इति कपूयाः—बहुवचने । कपूयाः केपयः । 'क' इत्यस्य स्थाने 'के' इत्यादेशः 'पूय' इत्यस्य स्थाने 'पय' इत्यादेशः । 'केपयाः' इत्यस्य स्थाने 'केपयः' जसः स्थाने सुः प्रत्ययः ।

मन्त्रार्थः—

प्रथमाः श्रेष्ठजनाः देवहूतयो देवधर्मान् दिव्यगुणानाह्वयन्ति ये निजान्तःकरणे देवधर्माणं मुमुक्षुगुणानामाह्वातारो संवेशयितारः स्तोतारः श्रवस्यानि

श्रवणीयानि श्रवणमननिदिध्यासनसाक्षात्काराख्यानि यशांसि यशोरूपाणि दुष्टरा—दुस्तराणि यान्यन्यैरप्रथमैरश्रेष्ठैर्दुरनुकरणीयानि क्षुरस्य धारेव दुरत्ययानि, अकृण्वत कुर्वन्त्यनुतिष्ठन्ति यज्ञियामध्यात्मयज्ञयोग्यां नौकामुपासनां स्तुतिमारोढुं शक्नुवन्ति ते पृथक् प्रायन् पारमायन् संसारनद्याः पृथक् पारं मोक्षधाम प्राप्नुवन्ति । येऽप्रथमा अश्रेष्ठा केपयः पापकर्माणो जना यज्ञियां नौकां स्तुतिमुपासनामारोढुं न शक्नुवन्ति ते 'ईर्मा—एव' इहैव लोके संसारे—निविशन्ते यद्वा—ऋणे पितृणनिवारणव्यवहारे पुत्रोत्पत्तिकरणे—गृहस्थे निविशन्ते ।

'ईर्मं' इति बाहुर्भवति समीरिततरः सुसमीरयिता सुप्रेरयिता भवति । प्रसङ्गतो निर्वचनं कृतम् । पृथक् "प्रथेः" कित्संप्रसारणं च—अजिः प्रत्ययः । असंसक्तम् ।

तूतुमाकृषे ॥ ७४ ॥

"एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ।" ( ऋ० १० । ५० । ६ )

एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्व ॥ २५ ॥

भा०—'तूतुमाकृषे' इत्येतन्मिश्रितं पदद्वयं क्रिया तद्विशेषणं च । शाकल्यपदपाठे तु 'तूतुमा—कृषे' यास्कमते 'तूतुम्—आकृषे ।' 'तूतुम्' इति 'तूर्णम्' शब्दसमाधिः, 'आकृषे' इति 'उपाकुरुषे ।' "तूर्णं तूर्णि क्षिप्रनाम" (निघं० २।१५) 'आकृषे'—'उप' उपसर्गगर्भितः—आङ्पूर्वकः 'कृ' धातुस्तत्र "तनादि कृञ्भ्य उः" (अष्टा० ३।१।७९) इत्यनेन प्राप्तस्य—उविकरणस्य लुक् छान्दसः । समग्रमन्त्रस्तदर्थश्च—

एता विश्वा सवना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥

सहसः सूनो ! बलस्य पुत्र ! प्रकृष्टबलरूप ! यद्वा बलस्य सवितः ! प्रेरयितः ! स्वामिन् राजन् ! एतानि सर्वाणि सवनानि बलं येषु सूयते पूर्यते वर्ध्यते वा तानि स्थानानि तूतुमाकृषे तूर्णं क्षिप्रमुपाकुरुषे—उपयुङ्क्षे—कार्ये नियोजयसि यानि कान्यपि स्थानानि तानि त्वं दधिषे—धत्स्व—रक्ष—ध्याने स्थापय, लोडर्थे लिट् छान्दसः । पुनर्वराय शत्रूणां वारकाय धर्मणे प्रजाजनानां धारकाय ते तुभ्यं पात्रं रक्षणं भवतु, यद्वा पात्रं रक्षणसाधनमस्माभिः तना धनम् "तना धननाम" ( निघं० २ । १० ) यज्ञः श्रेष्ठतमकर्म, मन्त्रो वेदाध्ययनं ब्रह्म परिवृढं सशक्तं

कुलं पुत्रादियुक्तम्, उद्यतं वचो जयघोषं समर्प्यते। राष्ट्ररक्षणार्थं प्रजाजनैर्धना-दिभीराज्ञः सहयोगः कार्यः॥

अंसत्रम्॥ ७५॥

अंसत्रमंहसत्राणं धनुर्वा कवचं वा। कवचं कु अञ्चितं भवति काञ्चितं भवति कायेऽञ्चितं भवतीति वा।

"प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम्। द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम्॥" (ऋ० १० १०१ ७)

प्रीणीताश्वान् सुहितं जयथ जयनं वा हितमस्तु स्वस्तिवाहनं रथं कुरुध्वं द्रोणाहावं द्रोणं द्रुममयं भवति आहाव आह्वानादावह आवहनादवतोऽवातितो महान् भवत्यश्मचक्रमशनचक्रमसनचक्रमिति वा अंसत्रकोशमंसत्राणि वः कोशस्थानीयानि सन्तु कोशः कुष्णातेर्विकुषितो भवति। अयमपीतरः कोश एतस्मादेव सञ्चय आचितमात्रो महान् भवति सिञ्चत नृपाणं नरपाणं कूपकर्मणा संग्राममुपमिमीते॥ २६॥

भा०—'अंसत्रम्' इत्येतदनवगतमनेकार्थं च। 'अंहसत्राणम्' इत्यवगमः। 'धनुः' वा 'कवचम्' वेत्यभिधेयवचनम्। अंहस् पापम् "अमेर्हुक् च—असुन्" (उणा० ४। २१३) अथवा "अंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् विपरीतात्" (निरु० ४। २५) आहन्ति प्रहरतीति—अंहस् हननसाधनं तत्त्राणं धनुः, अंहस् पापं दुःखं तत्त्राणसाधनम्। अंहस्—शब्दस्य, अंसभावस्तत्त्रायते "आतोऽनुपसर्गे कः" (अष्टा० ३। २। ३) सुप्युपपदेऽपि छान्दसः कः। यद्वा त्रायत—इति त्रः, अनुपपदेऽपि कश्छान्दसः करणे। अंहसत्रम्—अंसत्रम्। धनुषो निर्वचनं त्वग्रे नवमाध्याये करिष्यति। कवचं निर्वक्ति कवचं कु—अञ्चितम्, 'कु अञ्चु' ततः कः प्रत्यय औणादिको भूते काले। "अनिदितां हल उपधायाः क्ङिति" (अष्टा० ६। ४। २४) यत् कु—कुत्सितं वक्रं यथाङ्गं यथा शरीरं तथा वक्रीभूयाञ्चितं गतं भवति, उकारस्यावादेशः। 'कव् अच् अ'—कवचम्। यद्वा काञ्चितं भवति, का—ईषत्—अञ्चितं पुनरपि 'कव्' आदेशः। शरीरे यद्वा—अङ्गे—ईषत् प्राप्तं भवतीति काञ्चितं कवचम्। अथवा कायेऽञ्चितं, कायशब्दस्य कव्भावः, अन्यत् सर्वं पूर्ववत्। काये देहे प्राप्तं सङ्गतं भवति।

मन्त्रार्थः—

हे योद्धारो जनाः ! अश्वान् प्रीणीत यवसादिना तर्पयत तृप्तान् युद्धार्थं सज्जीकुरुतेति यावत् तथा स्वस्तिवाहं स्वस्तिं सुप्रतिष्ठां वहति यः स स्वस्तिवाहस्तम् "स्वस्ति सु-अस्ति" ( निरु० ३ । २१ ) सुप्रतिष्ठितगतिमन्तं रथमवश्यं कुरुत यतो हितं सुहितं जयथ युष्माकं जयनं हितमस्तु तथा जयनं भवतु यस्मिन् निजपक्षस्थानां विशिष्टं हननं न स्यात् । अपि तु यूयं द्रोणाहावं द्रोणो द्रुममयो काष्ठमयो रथ आहावो यस्मिन् स्थितः शत्रूनाह्वयति—आमन्त्रयते तथाभूतो द्रुममयो रथ आहावो यस्मिन् संग्रामे तं संग्राममवतं कूपं कूपरूपम् "अवतः कूपनाम" ( निघं० ३ । २३ ) अश्मचक्रमशनचक्रम्, अशनानि व्यापनशीलानि चक्राणि चक्रशस्त्राणि यद्वाऽसनचक्रम्, असनानि क्षेपणीयानि प्रबलानि चक्राणि चक्रशस्त्राणि यस्मिन् संग्रामे तमंसत्रकोशम्, अंसत्राणि धनूंषि कवचानि कोशाः कोशस्थानीयानि भयात्—निष्कर्षकाणि रक्षकाणि यस्मिन् संग्रामे तं संग्रामं नृपाणं नृणां पानं न तु जलस्य पानं नरो जना यस्मिन् पीयन्तेऽन्योन्यैर्योद्धृभिस्तं सिञ्चत स्वशस्त्रहतैः परपक्षीयैर्योद्धृभिर्नृभिः पूरयत—इति कूपव्यवहारेण संग्राम उपमीयते ।

निरुक्तयः—आहाव आह्वानात्, आङ्पूर्वकात् 'ह्वेञ् स्पर्धायाम्' धातोर्घञि सम्प्रसारणं छान्दसम्, संग्रामार्थे "आङि युद्धे" ( अष्टा० ३ । ३ । ७३ ) "छन्दसि सर्वे विधयो विकल्प्यन्ते" इत्यतो घञ् प्रत्ययो विकल्पितः । य एष आवहः संग्रामवाचकः स छन्दसि आङ्पूर्वकात् 'वह प्रापणे' धातोः, इति यास्कमतम् । 'अवतः'—अवातितः, अवपूर्वकात्—अतधातोः पचाद्यचि "शकन्ध्वादिषु पररूपम्" वा० (अष्टा० ६ । १ । ९४) पररूपेण 'अवतः' रूपसिद्धिः । अशनम्—"अशूङ् व्याप्तौ" तथा 'असनम्'—"असु क्षेपणे" उभाभ्यामपि "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४५ ) इत्यनेन मनिन् प्रत्ययः । 'कोशः' "कुष निष्कर्षे" ( क्र्यादि० ) पचाद्यचि षकारस्य शकारश्छान्दसः । त्रिकुषितः—विशिष्टः कुषितो रिक्तीकृतो भवति भयाद् रक्षणाय त्राणाय । इतरो लोकप्रसिद्धः कोशोऽप्येतस्मादेव धातोर्भवति सञ्चयः 'आचितमात्रः' आचिताः पूरिता मात्रा धनमात्राः—यस्मिन् सः ॥

उक्तमन्त्रे 'अंसत्रकोशम्' इति समस्ते पदे 'अंसत्र' इति शब्दो धनुर्वाचको यद्वा कवचवाचक इत्यनेकार्थत्वं द्योतयति, अन्यत्र केवलो धनुर्वाचकस्तथा कवचवाचकश्च भवति तत्र नानेकार्थत्वस्याभिनिवेशः । यथा धनुषीऽर्थेऽसंत्रम्—

वातोप्यते ध्रुवा स्थूणांसत्रं सोम्यानाम् ।

द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा ॥ ( ऋ० ८।१७।१४ )

हे वातोप्यते गृहपते ! तव गृहे ध्रुवा निश्चला स्थूणा स्तम्भरूपा गृहस्तम्भिनी गृहरक्षणाय, अंसत्रं धनुरस्त्रं तत्रत्यजनानां परप्रहाराद् रक्षणाय, अन्यमपकारिणं प्रहर्तुम्, सोम्यानां सोमगुणानामोषधिवनस्पतीनां द्रप्सो रसः फलमन्नं च, शश्वतीनां पुरातनीनां वासनानगरीणां भेत्ता, मुनीनां मननशीलानामुपासकानां सखाऽस्ममशान्तये, इन्द्र ऐश्वर्यवान् परमात्मा । इत्येते भवन्तु ।

कवचार्थेऽसंत्रम्—

ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा ।

ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥

( ऋ० ४ । ३४ । ९ )

ये—ऋभवः शिल्पिनः "ऋभूरथस्येवाङ्गानि सन्दधत् परुषापरुः" ( अथर्व० ४ । १२ । ७ ) इति रथकार ऋभुः । ऊती—ऊत्या रक्षणक्रियया—अश्विनौ अश्व—व्याप्तिमन्तौ ज्योतीरसप्रधानपदार्थौ ये ऋभवः पितरौ पालकौ दुर्गप्राकारौ धेनुं विद्युत्कलां ये अश्वौ—आशुगामिनौ यन्त्ररूपावश्वौ ततक्षुस्तष्टवन्तः । ये अंसत्राणि कवचानि ये रोदसी रोधसी—रोधस्यौ जलखनिजबन्धौ पृथक् पृथक् चक्रुः कृतवन्तः, तथा ये विभ्वो व्यासशक्तिमन्तो विद्वांसः शिल्पिनो जनाः स्वपत्यानि—सु—अपत्यानि सुशिक्षया सुकलया च योग्यसन्तानि च चक्रुः । यद्वा—ऋभवो मेधाविनो विद्वांसः "ऋभुः—मेधाविनाम" ( निघं० ३ । १५ ) अश्विनौ राजानं राज्ञीं च योग्यौ पितरौ मातापितरौ—प्रजावर्गस्य स्त्रीपुरुषौ गृहस्थाश्रमे कुशलौ धेनुं गां योग्यां दुग्धप्रदां तथाऽश्वौ रथे आरोहणे च योग्यौ ततक्षुः सम्पादयन्ति सम्पादयेयुः, अन्यत् पूर्ववत् ॥

काकुदम् ॥ ७६ ॥

काकुदं तात्वित्याचक्षते जिह्वा कोकुवा सास्मिन् धीयत, जिह्वा कोकुवा कोकूयमाना वर्णान्नुदतीति वा कोकूयतेर्वा स्याच्छब्दकर्मणः । जिह्वा जोहुवा । तालु तरतेस्तीर्णतममङ्गं लततेर्वा स्याद् लम्बकर्मणो विपरीताद् यथा तलं लतेत्यविपर्यय: ? ( लततेर्विपर्ययः—इति पाठः स्यात् )

भा०—'काकुदम्' इत्येतदनवगतमनेकार्थं च । एकोऽर्थस्तु गतः । 'काकुत्' इति गतं वाङ्नामसु ( निघं० १।११ ) । द्वितीयेऽर्थे 'तालु' इत्यभिधेयवचनम् ।

कथमिति निरुच्यते । जोहुवा सती जिह्वा भवति, "ह्वेञ्" धातोर्यङ्लुगन्तादचि सम्प्रसारणं यद्वा "हु" धातोर्यङ्लुगन्तादचि रूपं जोहुवा स्त्रियाम्, पुनः–ओकारस्य–इकारादेशे–उकारलोपे च 'जिह्वा' भवति तथा 'कोकुवा' इति शब्दस्य जिह्वावाचकस्य 'काकुः' शब्दो जिह्वावाचकः । कोकुवा–जिह्वा, काकुः–जिह्वा । कोकूयमाना पुनः पुनः शब्दं कुर्वाणा जिह्वा कोकुवा "कु शब्दे" (अदादि०) ततो यङ्लुगन्तादचि 'कोकुवा' भवति स्त्रियाम् । पुनस्तस्य ओकारस्य–आकारः, 'वा' इत्यस्य लोपः । इति 'काकुः' । सा काकुवा जिह्वाऽस्मिन् धीयते धार्यते–'काकुवा' इत्यस्य 'काकु' भावो धकारस्य दकारे कृते काकुद्, द्वितीयायां–काकुदम्–तालु इति तालुपक्षे । यद्वा काकून् वर्णान् नुदति प्रेरयतीति काकुद्, 'नु' भागस्य लोपे वाक् जिह्वा–इति वाक् पक्षे । तालु तरतेः । तालुशब्दः "तॄ प्लवनसन्तरणयोः" (भ्वादि०)–मुखान्तर्गताङ्गेभ्यस्तीर्णतममस्युत्तीर्णमङ्गं भवति "तॄ" धातोः "त्रो रश्च लः–ञुण्" (उणा० १ । ५) इति ञुण् प्रत्ययः । रेफस्य लकारश्च । अथवा 'लत' धातोर्लम्बव्यापारकाद् विपरीतात् स्यात् 'लत' धातुरौणादिकः "कृतिभिदिलतिभ्यः कित्–तिकन्" (उणा० ३ । १४७) 'लत' धातोर्विपर्ययः–'तल' पुनः 'ञुण्' प्रत्ययो धातोर्बहुलात्, यदुपरि लम्बतेऽङ्गं तत् तालु । यथा 'तलम्' शब्दः 'लत' इत्यस्य विपर्ययः ।

"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥
(ऋ० ८ । ६९ । १२)

सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण यस्य ते सप्तसिन्धवः । सिन्धुः स्रवणाद् यस्य ते सप्त स्रोतांसि तानि ते काकुदमनुक्षरन्ति सूर्मि कल्याणोर्मि स्रोतः सुषिरमनु यथा ॥ २७ ॥

भा०—विज्ञप्तिः–अत्र यास्केन सप्तसिन्धवः–स्रोतांसि–इत्येवोक्तं तानि स्रोतांसि कानि सप्त च कथमिति न विवृतं तथा 'काकुदम्' इत्यस्य स्थाने 'तालु' इति नानूदितम् । तथाकरणं 'काकुदम्' इति शब्दस्यानेकार्थतां सूचयति । तत्रानेकार्थत्वे जिह्वा, तालु, उच्छ्रितप्रदेशः–पर्वतशिखरम् * "त्रिककुत् पर्वते" (अष्टा० ५ । ४ । १४७) इत्येतेषां त्रयाणां ग्रहणं श्लैषिकम् ।

---

* "अग्निर्मूर्धा दिवः ककुत्" (ऋ० ८ । ४४ । १६) 'ककुत् उच्छ्रितः' (सायणः) ।

वाक्-जिह्वार्थे 'काकुत्' शब्दः—

"या ते काकुत्सुकृता या वरिष्ठा यया शश्वत्पिबसि मध्व ऊर्मिम् ।"

( ऋ० ६ । ४१ । २ )

हे इन्द्र ! तव या काकुत्-वाक्-जिह्वा शोभना संस्कृता या च श्रेष्ठा वरतमा यया सदैव मधुरस्य सोमस्योदकस्य धारां पिबसि । स्त्रीलिङ्गेन पानप्रसङ्गेन वाक्-जिह्वा काकुत्-इति स्पष्टम् । तस्याः प्रस्तुतमन्त्रे 'सुदेवोऽसि' 'काकुदम्' इति द्वितीयायां भवति ।

पर्वतशिखरसम्बद्धः काकुदः शब्दः—

यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ।

( ऋ० १ । ८ । ७ )

यः—इन्द्रः सूर्यः—कुक्षिः—आकर्षकः पार्थिवानां रसानाम् "कुष निष्कर्षे" ( भ्वादि० ) ततः "प्लुषिकुषिशुषिभ्यः क्सिः" ( उणा० ३ । १५५ ) यतः सोमपातमः सोमानामोषधीनां रसस्यातिशयेन पाता समुद्र इव, यथा समुद्रः पृथिवीस्थानां जलानामाकर्षकोऽतिशयेन पाता च । अथ च स इन्द्रः सूर्यः काकुदो न—उर्वीरापः पिन्वते, ककुद्—इति पर्वतशिखरं तत्सम्बद्धो निम्नप्रदेशः काकुदः—द्वयोः ककुदोर्मध्ये वर्तमानो वा निम्नप्रदेशः "तत्र भवः" (अष्टा० ४ । ३ । ५३) यथा खलूर्वीर्बह्वीरपः शसः स्थाने जस् छान्दसः सुपां सुपो भवतीति । पिन्वते सिञ्चति समतले भूभागे तथा—इन्द्रः सूर्यः सिञ्चत्यपि वृष्टिद्वारेण, पृथिवीतो रसान्—तथा चाप आकर्षति पुनर्मेघमण्डलात् पृथिव्यां सिञ्चति च । 'सुदेवो असि वरुण' इति मन्त्रे 'काकुद' इति शब्दोऽकारान्तो द्वितीयैकवचने 'काकुदम्' इति ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यत्रानेकार्थः 'काकुदम्' इति शब्दः—

वरुण ! मेघस्य सन्धातः ! मेघमण्डले प्रविष्ट सूर्य ! "स वा एष सूर्योऽपः प्रविश्य वरुणो भवति" (कौ० १८।९) त्वं कल्याणदेवः कल्याणस्य साधको देवोऽसि, यद्वा सु सुन्दरः कमनीयो देवोऽसि यस्य तव सप्त सप्तसंख्याकाः सिन्धवः स्रवणशीलानि स्रोतांसि जलस्रोतांसि प्रधानभागशः सप्तविधानि काकुदं पर्वतशिखरसम्बद्धं यद्वा द्वयोः ककुदोर्मध्ये वर्तमानं निम्नप्रदेशमनुक्षरन्ति निम्ननिम्नतरनिम्नतमक्रमेण प्रवहन्ति कल्याणोर्मिं सौगम्येनाग्नेरूर्मयस्तरङ्गा ज्वाला यत्र प्रवेष्टुं शक्नुवन्ति तं सुषिरं सुच्छिद्रं सुसावकाशं काष्ठमप्रतिबन्धेन क्षरन्ति वहन्ति तद्वद् वहन्ति निष्प्रतिबन्धेनाबाधनेन । पर्वतशिखरसम्बद्धं काकुदं द्वितीयान्तं पदमत्र । अथवा वरुण ! शब्दार्थसम्बन्धानां वरयितः ! आत्मन् ! त्वं शरीरे सुदेवः

स्वस्यान्येषां च कल्याणसाधकदेवोऽसि यस्य तव सप्तसिन्धवः सप्त स्रवणशीलानि स्रोतांसि शब्दस्रोतांसि सप्तोदात्तादीनि स्वरात्मकानि, सप्त षड्जादीनि गीतिरूपाणि, सप्त गायत्रीप्रभृतीनि छन्दांसि, सप्तविभक्तिरूपाणि काकुदं वाचं जिह्वामनुक्षरन्ति प्रकटीभवन्ति यद्वा काकुदं तालुमनुव्यक्तीभवन्ति यथा सूर्मिं सुषिरमन्तः प्रविश्यकाष्ठमप्रतिबन्धेन दहति तद्वद्ज्ञानं दग्धीकुर्वन्ति ॥

निरुक्त्यः—'सिन्धुः स्रवणात्' इत्यर्थप्रदर्शनम् "स्यन्दू प्रस्रवणे" (भ्वादि०) ॥

बीरिटे ॥ ७७ ॥

बीरिटं तैटीकिरन्तरिक्षमेवमाह पूर्वं वयतेरुत्तरमिरतेर्वयांसीरयन्त्यस्मिन् भांसि वा । तदेतस्यामृच्युदाहरन्त्यपि निगमो भवति ॥

"प्रवावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥" ( ऋ० ७ । ३९ । २ )

प्रवृज्यते सुप्रायणं बर्हिरेषामेयाते सर्वस्य पातारौ वा पालयितारौ वा । बीरिटमन्तरिक्षं भियो वा भासो वा ततिः । अपि वोपमार्थं स्यात् सर्वपती इव राजानौ बीरिटे गणे मनुष्याणां रात्र्या विवासे पूर्वस्यामभिहूतौ वायुश्च नियुत्वान् पूषा च स्वस्त्ययनाय । नियुत्वान् नियतोऽस्याश्वाः । नियुतो नियमनाद्वा नियोजनाद्वा ॥ २७ ॥

भा०—'बीरिटे' इत्येतदनवगतमनेकार्थं च । 'अन्तरिक्षम्, गणः' इत्यभिधेयकथनम् । तैटीकिमते त्वन्तरिक्षमर्थः, यास्कमतेऽन्तरिक्षं, गणश्चेत्यर्थद्वयम् । तैटीकिमतेऽस्य पूर्वोभागः 'वयतेः *' "वी गति⋯" ( अदादि० ) इति 'वी' धातोः, उत्तरोभागः 'इरतेः'—'ईरतेः' इति पाठेन भवितव्यम् । "ईर गतौ" ( अदादि० ) 'ईर' धातोः । एवं वियन्ति—इति वयो वयांसि पक्षिणः, तेषाम् 'ईरणं' गतिस्थानं वीरिटम् । 'वी' धातोः "वातेर्डिच्च—इण्" ( उणा० ४ । १३४ ) इत्यनेन धातोर्बाहुलकात् 'इण् डित्' डित्वात्—टिलोपः । न पुनर्णित् । 'ईर्' धातोः 'इटन्' प्रत्ययो बाहुलकादौणादिकः । वीनां पक्षिणामीरिटं वीरिटमन्तरिक्षम् । वयांसि—ईरयन्ति ईरते—गच्छन्ति—उड्डयन्तेऽस्मिन्—इत्युक्तम् । यद्वा वयो भांसि ज्योतींषि ईरते—गच्छन्ति यस्मिन—तदन्तरिक्षम् । वयो—भांसि

* निर्देशे 'वेतेः' इति वाच्यं तथापि सामान्येन निर्देशः कृतो भौवादिकः ।

ज्योतींषि सूर्यरश्मयः "वयः सुपर्णा उपसेदुरिन्द्रम्–वयो वेर्बहुवचनं....आदित्य-रश्मयः–उपसेदुरिन्द्रम्" ( निरु० ४ । १ ) एवं वीरिटमन्तरिक्षं यस्मिन् मन्त्रे स उदाह्रियते "प्रवावृजे...." ❀ ।

मन्त्रार्थः—

एषां देवानां मध्ये नियुत्वान् वायुः । नियुतो निरन्तरगमनाः प्रवाहाः सर्वेषामाकाशीयलोकां नियामकाश्च सर्वेषां प्राणिनां च जीवननियतिहेतुभूताः प्रवाहास्तद्वान् वायुः, तथा पूषा पोषकः सूर्यः 'असौ वै पूषा योऽसौ सूर्यः तपति" ( गो० उ० १ । १२ ) । विश्पतीव निश्चितं विशां पालकौ विशां प्रजानां स्वस्तये कल्याणायाक्तो रात्रेरनन्तरमुषसः प्रभातस्य पूर्वहूतौ पूर्ववेलायां शयनानन्तरं सर्वे प्राणिनः सर्वदेवेभ्यः पूर्वं वायुं सूर्यं चाह्वयन्तीव श्वासं ग्रहीतुं द्रष्टुं च । तस्मात् पूर्ववेलायां बीरिटेऽन्तरिक्षे आ–इयाते–आगच्छतस्ततः सुप्रयाः सुप्रायणं सुजीवनगतिहेतुकं बर्हिर्बर्हणं पोषणं सुप्रया प्रववृजे प्रवृज्यते सृज्यते । इति बीरिटशब्दस्यान्तरिक्षार्थे मन्त्रयोजना । अथ गणार्थे–विश्पती–इव सर्वपती राजानाविव शासकाविव सभासेनाध्यक्षाविव यथा तौ विशां वीरिटे मनुष्याणां गणे–आ–इयाते–एयाते–आगच्छतस्तेषां स्वस्तये कल्याणाय साधनाय "विशो–मनुष्याः" ( निघं० २ । ३ ) आ–इयाते–आगच्छतः ॥

निरुक्तयः—सुप्रयाः सुपूर्वकात् 'या गतौ' धातोः सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) करणेऽसुन् प्रत्ययः । बीरिटम्–भियो भीतेस्ततिः, भासो ज्योतिषस्ततिः । 'भी' यद्वा 'भास्' शब्दस्य 'बी' भावः, तन् धातोः 'डः' अधिकरणे कारके रिट् चागमः । बीरितः–तकारस्य टकारश्च । बीरिटः । यद्वा ( यजु० ३३ । ४ ) मन्त्रभाष्ये दत्तं निरुक्तपाठमनुसरन् तन धातोः 'रिटः' इत्यादेशः कल्पनीयः । वीरिटः । अन्तरिक्षे निरालम्बने भीतिर्भवति भयस्थानं हि तत्, भयं ततं तत्र, यद्वा भासः स्थानमन्तरिक्षं भा ज्योतिस्ततं भवति तत्र दिने रश्मयः। रात्रौ रश्मिप्रकाशितानि चन्द्रादिग्रहनक्षत्राणि ततानि भवन्ति । एवमेव सैनिकानां गणे भयं ततं भवति, सभ्यानां विदुषां गणे ज्ञानज्योतिस्ततं भवति । वायुर्नियुत्वान् नियुतोऽस्याश्वा अश्वस्थानीया नेतारस्तस्यैव वेगाः प्रवाहाः "नियुतो वायोः–आदिष्टोपयोजनानि" ( निघं० १ । १५ ) ।

---

❀ तैटीकिमतप्रदर्शकवचनं स्कन्दस्वामिनिरुक्तभाष्ये न विद्यते दुर्गाचार्य-निरुक्तभाष्ये मुद्रितं तूपलभ्यते परन्तु व्याख्यानमस्य नास्ति, सायणभाष्येऽपि नावलम्बितमिदं तेनायास्कीयं वचनमिदमिति सम्भवः ।

अच्छ ॥ ७८ ॥

अच्छाभेराप्तुमिति शाकपूणिः ॥

भा०—'अच्छ' इत्येतदनवगतं स्वरूपतः प्रसिद्धं तस्य निपातत्वात् । अनेकार्थ-ज्ञातोऽत्र परिगणितमनेकार्थप्रकरणे । 'अभेः—'अभि' इत्यस्यार्थे प्रयुज्यते 'अभि' उपसर्गं आभिमुख्येऽर्थे प्रयुज्यते सोऽस्यार्थः । 'आप्तुम्' इत्यर्थे मन्यते शाक-पूणिराचार्यः । सम्यगर्थे, अपिशब्दस्यार्थे खल्वपि प्रयुज्यते । यास्केनोदाहरणं न दत्तं तस्य प्रयोगप्राचुर्यात् प्रसिद्धार्थत्वाद्वा । अन्यभाष्यकारैरपि न दत्तम् । अस्माभिरत्र विषये मन्त्रा—उदाह्रियन्ते—

अभेरर्थे 'अच्छ' शब्दः—

वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः ।

सुतसोमा अहर्विदः ॥ ( ऋ० १ । २ । २ )

वायो ! ज्ञानस्वरूप सर्वत्र विभुगतिमन् परमात्मदेव ! त्वामच्छ त्वामभि-मुखी कृत्य "त्वामभिलक्ष्य" ( सायणः ) जरितारः स्तोतारो जरन्ते स्तुवन्ति । नाम्ना सह सम्बद्धः 'अच्छ' शब्दः ।

अभेः स्थाने क्वचित्—

"प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे" ( ऋ० ३ । ३३ । ५ )

"प्राभिह्वयामि सिन्धुं बृहत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वा अवनाय" ( निरु० २ । २५ )

सम्यगर्थे 'अच्छ' शब्दः—

अच्छावदा तना गिरा जराये ब्रह्मणस्पतिम् ।

अग्निं मित्रं न दर्शितम् ॥ ( ऋ० १ । ३८ । १३ )

वेदस्वामिनमग्निमग्रणायकं परमात्मानं दर्शनीयं मित्रमिव जरया—स्तुत्या तना तनया गुणानां विस्तारयित्र्या वाण्या अच्छवद, सम्यग् वद । इति लोकप्रसिद्धस्य 'अच्छशब्दस्य' सम्यगर्थे प्रयोगः ।

'आप्तुम्' इत्यर्थे अच्छ शब्दः—

शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।

( ऋ० १० । ६ । ४ )

अग्निः शूषैः—ज्वलनबलैर्वृधो वर्द्धितः "शूषं बलनाम" ( निघं० २ । ९ ) अर्कैर्मन्त्रैः सेव्यमानो रघुपत्वा शीघ्रगामी सन् देवान् अच्छ—आप्तुं जिगाति—ऊर्ध्वं गच्छति ॥

अपि शब्दस्यार्थे च—

"अवश्राच्छा पशुमच्च यूथम्" ( ऋ० ४ । ३८ । ५ )

"अवश्राच्छा पशुमच्च यूथम् । अवश्रापि पशुमच्च यूथम्" ( निरु० ५।२४ )

परि ॥ ७९ ॥ ईम् ॥ ८० ॥ सीम् ॥ ८१ ॥

परींसीमिति व्याख्याताः ॥

भा०—'परि, ईम्, सीम्' इत्येते त्रयो निपाता अनेकार्थाः सन्ति, व्याख्याता ह्येते–उपसर्गनिपातप्रकरणे प्रथमाध्याये 'परि' ( १ । ३ ) 'ईम्' ( २ । ८ ) 'सीम्' ( १ । ६ ) तत्र 'सीम्' परिग्रहार्थीयः पदपूरणश्चेति द्वयोरर्थयोः । 'ईम्' उदकार्थेश्च । 'परि' सर्वतोभावे वर्जने चापि । तत्तत्प्रकरणे मन्त्रा उदाहृताः सन्ति ।

एनम् ॥ ८२ ॥ एनाम् ॥ ८३ ॥

एनमेनामस्या अस्येत्येतेन व्याख्यातम् ॥

भा०—'एनम्' पुंल्लिङ्गे 'एनाम्' स्त्रीलिङ्गे, इत्येते अनेकार्थे सर्वार्थे, अन्वादेशत्वादनवगते पदे । ते एते पदे 'अस्य' 'अस्याः' इत्येताभ्यां पदाभ्यां यथासंख्यमन्वादेशत्वादनुदात्तस्वरयुक्ते स्तः । यथा ते चतुर्थाध्याये ( ४ । २५ ) व्याख्याते ।

सृणिः ॥ ८४ ॥

सृणिरङ्कुशो भवति सरणात् ।

अङ्कुशोऽञ्चतेराकुञ्चितो भवतीति वा ।

"नेदीय इत्सृण्यः पक्वमेयात्" ( ऋ० १० । १०१ । ३, यजु० १२ । ६८ ) इत्यपि निगमो भवति ॥

अन्तिकतममङ्कुशादायात्पक्वमौषधमागच्छत्वित्यागच्छत्विति ॥ २८ ॥

भा०—'सृणिः' इत्येतदनवगतमनेकार्थं च । 'अङ्कुशः' अभिधेयः । स च द्विविधः, धारकश्च छेदकश्च, उक्तं हि निरुक्ते "द्विविधा सृणिर्भवति भर्ता च हन्ता च" ( निरु० १३ । ६ ) भर्त्ता धारकः, हन्ता छेदकः । भर्त्ता धारकस्तु हस्त्यादीनां स्वाधीने धारणाय, हन्ता छेदकः शस्यानां कर्तनाय भवति, द्विविधाऽपि सृणिरङ्कुशो भवति, लोके तु केवलं हस्तिनं धारयितुं साधनमङ्कुश उच्यते, वेदे द्विविधमपि साधनं धारकं छेदकं च यास्कस्य परिभाषायामङ्कुश एवोच्यते । संग्रामे द्विविधा सृणिर्धारिका छेदिका चोपयुज्यते 'सृणिः' इति नाम्ना । वैज्ञानिकक्षेत्रेऽग्नेर्ज्वालाऽपि सृणिरुच्यते सरणशीलत्वात् । "घृ

गतौ" ( भ्वादि० ) ततः "सृवृषिभ्यां कित्–नि" ( उणा० ४ । ४९ ) सृणिः, अन्तोदात्तः । तथा "जनिदाच्युसृ····भ्य····क्निन्····" ( उणा० ४ । १०४ ) सृधातोः क्निन् प्रत्ययः, तेन 'सृणिः' आद्युदात्तः । सृधातुरपि द्विविधः, भौवादिको जुहोत्यादिगणीयश्च । सृणेर्धारणार्थो लक्ष्यते सृ धातोः "सृ स्थिरे" ( अष्टा० ३ । ३ । १७ ) । उभयस्वरवान् सृणिशब्दो वेदेषूपलभ्यते । निरोधनाय धारणाय, प्रहरणाय छेदनाय च प्रयुज्यतेऽङ्कुशः, 'अञ्चु' धातोः 'उशच्' प्रत्यय औणादिकः "सानसि····अङ्कुश····शल्याः" ( उणा० ४ । १०७ ) इत्यनेन निपातितः । आकुचितो भवति वा 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु" ( भ्वादि० ) कौटिल्ये प्रतिष्टम्भने चार्थे, आङ्पूर्वात्–उशच् प्रत्ययो डिच्च स बाहुलकात् । आङः–आकारः सानुनासिको ह्रस्वत्वमापन्नश्च पूर्वः । अङ्कुशः कुटिलो भवति, प्रतिष्टम्भनसाधनं च भवति ।

सृणिर्धारकार्थे—

वि वार्तजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।
तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥
( ऋ० १ । ५८ । ४ )

बहुसम्भक्ता वातप्रेरितः सन्नपि अग्निरतसेषु व्यापनीयेषु वृक्षकाष्ठादिषु जुहूभि र्ज्वालाभिर्यदा वृथा प्रज्वलितोऽनभिव्यक्तः सन् सृण्याऽङ्कुशेनाकुचितस्वरूपेणाप्रकटज्वलनधर्मेण धारकेण वितिष्ठति कार्यनिवृत्तस्तिष्ठति । पुना रुशदूर्मे ! ज्वलत्तरङ्गवन् ! अजराग्ने ! त्वं तृषु–क्षिप्रं वृषायसे वृषवदाचरसि प्रकटज्वलनबलयुक्तो भवसि तदा वनिनो वनस्थान् वृक्षान् कृष्णं दग्धं कृष्णान् दग्धान् भस्मसात् करोषि–इति यावत् ते तथा प्रकाशस्वरूपं वयमेम–प्राप्नुयाम यद्वा तव–एम मार्गो धर्मो धूमवान् भवति ।

सृणिर्हननार्थे छेदनार्थे वा—

वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।
( ऋ० ४ । २० । ५ )

यः–इन्द्रो राजा ऋषिभिर्वेदविद्भिर्नवैरविस्मृततत्त्वज्ञानैः–ररप्शे स्तूयते स कृतप्रशंसो घृतज्ञानो राजा पक्वो वृक्ष इव पक्वं वृक्षफलमिव प्रजाजनेभ्यः सुखप्रदस्तथा सृण्यो न जेता यथा कश्चिज्जेता विजेता संग्रामाणां विजेता सृणिमायुधं शस्त्र मर्हति तच्चालनयोग्यो भवति स च विजेता भवति तथैष इन्द्रो राजाऽस्ति । अत्र छेदिका सृणिः "सृणिशब्दोऽङ्कुशवाची तेनायुधमात्रं लक्ष्यते सृण्यः–आयुधकुशलः" ( सायणः ) ।

अथ यास्कप्रदर्शितो मन्त्रो यत्र सृणिर्भर्त्ता धारको हन्ता छेदकश्च चोत्यते लक्ष्यते—

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च * श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात् ॥

हे कृषीवलाः ! सीराणि हलानि युनक्त योजयत युगानि योक्त्राणि वितनुध्वं बलिवर्देषु बध्नीत, इह कृते योनौ संस्कृते कृष्टे क्षेत्रभक्तिस्थाने सीताख्ये बीजं गोधूमादिकं वपत निक्षिपत, एवं कृषिविज्ञानवर्णनकर्त्र्या वाचा सम्पादिता श्रुष्टिः शस्यश्लाकाऽन्नफली वा "अन्नं हि श्रुष्टिः" ( शत० ७ । २ । २ । ५ ) सभरा पुष्टियुक्ता पूर्णा स्थूला दृढा भवेत् तदा सृण्योऽङ्कुशात् दात्राख्यात् तद्द्वारा कर्तनेनास्मकं नेदीयो समीपतरमेव पक्वमौषधमोषधितः पृथग्भूय—एयात्—आयात्—आगच्छतु । अत्र मन्त्रे सृणितो द्वे कार्ये सम्पन्ने छेदनं भरणं च, अन्न-नालस्य छेदनं शस्यश्लाकाया अन्नफल्याः—भरणमाहरणं च । अतः सृणिर्हन्त्री छेत्त्री च भर्त्री—धर्त्री—आहर्त्री च । एवं प्रयोजनद्वयसाधनाद् द्व्यर्थिका सृणिः ॥

मूलपाठे 'आगच्छत्वित्यागच्छत्विति' द्विरुक्तिरध्यायस्य समाप्त्यर्था ॥

इति पञ्चमाध्यायस्य चतुर्थः पादः ।

पञ्चमाध्यायश्च समाप्तिं गतः ।

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

—

* 'विराजः' इति पाठोऽथर्ववेदेऽन्यत्र ( अथर्व० ३ । १७ । २ )

## षष्ठोऽध्यायः

### तत्र

### प्रथमः पादः

---

आशुशुक्षणिः ॥ १ ॥

"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥"
(ऋ० २ । १ । १)

त्वमग्ने द्युभिरहोभिस्त्वमाशुशुक्षणिः। आशु इति च शु इति च क्षिप्रनामनी भवतः। क्षणिरुत्तरः क्षणोतेः, आशु शुचा क्षणोतीति वा सनोतीति वा। शुक् शोचतेः। पञ्चम्यर्थे वा प्रथमा तथा हि वाक्यसंयोग आ इत्याकार उपसर्गः पुरस्तान्निकीर्षितज उत्तर आशुशोचयिषुरिति। शुचिः शोचतेर्ज्वलतिकर्मणः। अयमपीतरः शुचिरेतस्मादेव। निष्षिक्तमस्मात् पापकमिति नैरुक्ताः ॥

भा०—'आशुशुक्षणिः' इत्येतदनवगतम्। अनेकव्युत्पत्तिकमनेकार्थं च। 'आशुशुक्षणिता यद्वा—आशु शुचा क्षणिता यद्वा—आशु शुचा सनिता, अथवा—आशुशोचयिषुः।' इत्यवगमः। अग्निर्वा मनुष्यो वा—अभिधेयः। 'आशु शु' इति क्षिप्रनामकयुगलादुत्तरःक्षणिः "क्षणु हिंसायाम्" (तनादि०) ततः "सर्वधातुभ्य इन्" (उणा० ४ । ११८) क्षिप्रक्षिप्रं हिंसिता नाशयिता शीघ्राच्छीघ्रं नाशयिता भवति ह्यग्निर्दग्ध्वा वस्तुजातम्। यद्वा क्षिप्रनामयुगलमुपपदं न स्यात्, आशु शुचा क्षणोति, एकं पूर्वं क्षिप्रनामापरं शुच् पश्चात् क्षणिः क्षिप्रं शुचा ज्वलनेन क्षणोति नाशयति सोऽग्निः। "शोचतिर्ज्वलतिकर्मा" (निघं० १।१६) क्विप्—शुच्—शुक्—ज्वलनम्। यद्वा—आशु शुचा प्रकाशेन सनोति—आशु शुच् सनिः—आशुशुक्षणिः, पूर्ववत् सन धातोरिन् प्रत्ययः क्षिप्रं ज्वलनेन प्रकाशेन सनति सम्भजति प्रकाशयति। अथवा 'आ' उपसर्गपूर्वकात् सनन्त शुच् धातोः-अनिः प्रत्ययः "आङि शुषेः सनश्छन्दसि" (उणा० २ । १०४) धातोर्बाहुलकाद् यास्कनिर्वचनम्। आशुशुक्षणिः—आशुशोचयिषुरग्निः समन्ताद् दीपयितु-

मिच्छति यः स यजमानो गृहपतिरग्निविद्याविद् विद्वान्। व्युत्पत्तिकल्पस्तु चतुर्विधः, अभिधेयौ तु द्वौ, अग्निरग्नेः प्रयोक्ता च।

मन्त्रार्थः—

नृणां नृपते नायकानां जीवननिर्वाहकाणामपि नेतृत्वस्य पालक ! अग्ने ! त्वं द्युभिः—अहोभिः—द्योतमानैर्दिवसैः—सहानायासादातपरूपेण प्रवर्तमानः—आशुशुक्षणिः शीघ्रच्छीघ्रं दहनीयस्य क्षणिता नाशयिता, शीघ्रं ज्वलनेन भस्मीकर्ता शीघ्रं प्रकाशेन सनिता प्रकाशयिता सन्। अद्भ्यः—जलाशयेभ्यो जलीयविद्युद्रूपेण, अश्मनः पाषाणात् खनिजात् तस्य स्फुटनात् तथा मेघाच्च घर्षणान्मिश्रणात् वज्ररूपेण, वनेभ्यो रश्मिभ्यः काष्ठेभ्यो वा तेजोरूपेण, ओषधिभ्यः पृथिवीस्थाभ्यः पृथिव्या बाह्याभ्यन्तरस्तरेभ्यः परि पृथग्भूय: शुचिः प्रकाशस्वरूपो ज्वलनरूपश्च जायसे प्रकटी भवसि स्वतः स्वयम्। आशुशुक्षणिः प्रथमा पञ्चमीस्थाने पञ्चम्यर्थे वा विज्ञेयाऽन्यत्र वाक्ये पञ्चमीवाक्यसाहचर्यादत्रापि पञ्चमी। आशुशुक्षणेः। त्वमाशुशुक्षणितः परिजायसे। यदा कश्चनाग्नेः प्रयोक्ता जनो यजमानो गृहपतिर्यद्वाऽग्निविद्यावित् त्वां प्रकाशयितुमिच्छति तस्मात् समन्तात् प्रकाशयितुमिच्छतो जनाद्धेतुभूताज्जायसे। तस्मादत्र 'आशुशुक्षणिः' अग्निवाचको मनुष्यवाचकश्च, आदिसृष्टौ परमात्मनश्च जायसे सोऽपि 'आशुशुक्षणिः।' आशुशोचयिषुः सूर्यरूपस्याग्नेः प्रकाशकः परमात्मा, उक्तं हि वेदेऽन्यत्र "इन्द्रः सूर्यमरोचयत्" ( ऋ० ८। ३। ६ ) शुचिः ज्वलनार्थात् 'शुच' धातोः "इगुपधात् कित्—इन्" (उणा० ४। १२० )। इतरः शुचिः शुद्धः—एतस्मादेव शुचधातोर्विज्ञेयः। यतो ह्यस्मात् पापकं मलिनत्वं निष्षिक्तं निःक्षरितं निःसृतं कृतम्॥

आशाभ्यः॥ २॥

"इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्।"

( ऋ० २। ४१। १२ )

आशा दिशो भवन्त्यासदनात्। आशा उपदिशो भवन्त्यभ्यशनात्॥

भा०—'आशाभ्यः' इत्येतदनवगतम्। अस्य विशिष्टविभक्तियुक्तस्य ग्रहणमनेकार्थतायाः स्थानं सूचयितुम्। "आशाः दिङ्नामसु" ( निघं० १। ६ ) इत्युक्तं पूर्वम्। तत्र दिशः—उपदिशश्चोभयविधा दिशो गृह्यन्ते। दिशः 'आसदनात्।' आङ्पूर्वकात् "सद्लृ विशरणगत्यवसादनेषु" (भ्वादि० तुदादि०) ततः 'इः' प्रत्ययः "अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३। २। १०१ ) सकारस्य

शकारश्छान्दसः। सर्वान् प्रति तासामासदनात्—आसन्ना हि दिशः सर्वान् प्रति, इति हेतोः 'आशाः।' अथ 'उपदिशः' भवन्ति 'अभ्यशनात्।' अभिलक्ष्याशनाद् व्याप्तनात् प्रवर्तनात्। मुख्यां दिशमभिलक्ष्य ह्युपदिशो भवन्ति "अशूङ् व्याप्तौ" (स्वादि०) ततो घञ् प्रत्ययः स्त्रियां छान्दसः 'आङ' उपसर्गश्चाभ्यर्थकः पूर्वः। यद्वा—अनुपसर्गात् केवलादेव, 'आशाः' 'अभ्यशनात्' इत्यत्रार्थप्रकाशनायैव 'अभि' उपसर्गः प्रयुक्तः, एतादृशः समाचारो बहुत्रोपलभ्यतेऽत्र निरुक्ते तथाऽन्यत्रापि "शमु उपशमे" (दिवा०) "यती प्रयत्ने" (भ्वादि०) यदत्र 'उपदिशः' इति वाच्ये 'आशाः' शब्दे 'अभि' इत्यस्यार्थोऽपि लक्ष्यः। 'आशाभ्यः' इत्यत्र पञ्चम्यां खल्वन्यार्थनिवेशोऽप्यस्ति—इत्येतदर्थमत्र पदनामसु पठितमिदम्। अन्योऽर्थः 'आशा—इच्छा' "आशा प्रतीक्षे" (कठो० १।८) "आशा वा इदमग्र आसीद् भविष्यदेव" (जै० उ० ४।२२।१) तथा 'आशाः—आशावन्तो मनुष्याः—आशाः। अकारो मत्वर्थीयः "अर्श आदिभ्योऽच्" (अष्टा० ५।२।१२७) तस्याकृतिगणत्वात्। अत्र "आशाभ्यः" इति पदे सर्वेषामर्थानां समावेशोऽस्ति। पृथक् पृथगर्थकाः पृथक् पृथङ् मन्त्राः प्रदर्श्यन्ते—

दिशामर्थे 'आशाः' शब्दः—

"पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत्।"

(ऋ० १०।१७।५)

पूषा सूर्यः "पूषा यद्रश्मिपोषं पुष्यति" (निरु० १२।१७) "असौ वै पूषा योऽसौ सूर्यः—तपति" (गो० उ० १।२०) इमाः सर्वाः—आशा दिशोऽनुजानाति प्रकाशयति सूर्य एव दिशः प्रकाशयति सोऽस्मान् उदितः सन्—अभयतमेन मार्गेण नयति।

उपदिशामर्थे 'आशाः' शब्दः—

परा ह यत् स्थिरं हथ नरो वर्तयथा गुरु।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम्॥ (ऋ० १।३९।३)

हे नरो नायकाः! वायवः सैनिका वा यूयं यत् खलु स्थिरमाकाशेऽचलमिव दृश्यमानं नक्षत्रं यद्वा संग्रामेऽचलं योद्धारं पराहथ परातास्यथागमनाय प्रेरयथ यद्वा प्रहरथ गुरु—आकाशे भारवत्पिण्डं गुरुत्वयुक्तं स्थूलं पिण्डं यद्वा संग्रामे ज्येष्ठं बलिष्ठं परावर्तयथ परिभ्रामयथ यद्वा संग्रामाद् बहिर्निःसारयथ। तथा पृथिव्याः सम्बन्धिनो वनिनः—वनसम्बन्धिनः प्रदेशान् विचालयथ विध्वंसयथ। पर्वतानामाशाः—उपदिशः पर्वतसम्बन्धिन्यः पार्श्वदिशः सीमानः (Sides) वियाथ विभेद्य गच्छथ विध्वंसयथ। अत्र पर्वतसम्बन्धात्—'आशाः' उपदिशः।

इच्छार्थे 'आशाः' शब्दः—

"उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।"

( ऋ० १ । १६२ । ७ )

मन्म मननीयं मनोरथं मम मनसि–अधायि धारितं यद्वा–अध्यायि–ध्यातम् "उप प्रागात् सुमन्मेऽधायि मन्म–उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि" (निरु० ६।२२) तत् सुमत् स्वयमुपप्रैतु प्राप्नोतु । वीतपृष्ठः कान्तपृष्ठोऽश्वः, अश्वारूढज्ञान-पृष्ठो विद्वान् देवानाम्–आशाः–इच्छाः–उपागात्–उपगच्छतु पूरयितुम् । "देवाना-माशाः पूरयितुमुपगच्छतु" ( सायणः ) "आशाः प्राशीच्छाः" ( दयानन्दः ) ।

आशावन्तः–इच्छावन्तः आशाः, इत्यर्थे 'आशाः' शब्दः—

"सर्वा आशा मम मित्रं भवन्तु" ( अथर्व० १९ । १५ । ६ )

सर्वा आशावत्यः–इच्छावत्यः प्राणिप्रजाः–मम मित्रं भवन्तु ॥

तथा—

"देवानां युगे प्रथमेऽसतः सदजायत ।

तदाशा अन्वजायन्त तदुत्तानपदस्परि ॥

भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त ।" ( ऋ० १०।७२।३,४ )

देवानां सृज्यमानानां प्रथमे युगे प्रारम्भे कालेऽसतः–अव्यक्तात्–सत् सत्ता-त्मकं प्राथमिकं विकृतिरूपं महत्तत्त्वादिकं सूक्ष्मं मण्डलं ब्रह्माण्डमण्डलं जातं तदनु–तस्य विकसनाद् भेदनाद्वा–आशाः–दिशोऽजायन्त तत्परि तस्य पश्चात्–उत्तान-पात् सुस्थाने जस् विभक्तिः । उत्तानपात् संसारवृक्षोऽजायत । अत्र 'आशा' दिशोवाचकः परन्तु–उत्तानपदः–संसारवृक्षात्–भूः पृथिवीलोको जातः, भुवः पृथिव्याः पृथिवीतः–आशाः–आशावत्यो मनुष्याद्याः प्राणिप्रजाः–अजायन्त । अत्र पुनः 'आशाः'–आशावन्तः–इच्छावन्तः प्राणिनः ।

अथ यास्केन पदप्रसङ्गोक्ते मन्त्रे 'आशाभ्यः' इति पञ्चम्यन्तमनेकार्थं यत् तद् विभ्रियते चतुःस्वर्थेषु—

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।

जेता शत्रून् विचर्षणिः ॥

विचर्षणिः–विशिष्टो द्रष्टा सर्वद्रष्टा सर्वज्ञः शत्रून् जेता शत्रून् जेतुं शीलं यस्य, अत्र ताच्छीलिकस्तृन् प्रत्ययः, तथाभूतः–इन्द्र ऐश्वर्यवान् परमात्मा सर्वाभ्यः–आशाभ्यो दिग्भ्यो मुख्यदिग्भ्य आकाशस्थाभ्य आकाशवद्व्यापिनीभ्यः पृथगस्माक-भयं करोतु । यद्वा–आशाभ्य उपदिग्भ्यः परिच्छिन्नदिग्भ्यः पृथिवीप्रदेशसम्बन्धि-

नीभ्यः पृथगस्मानभयं करोतु । यद्वा—आशाभ्यः—इच्छाभ्यो वासनाभ्यः पृथगस्मानभयं करोतु । यद्वा—आशाभ्यः—इच्छावतीभ्यो वासनावतीभ्यः प्रजाभ्यो मनुष्याद्याभ्यः पृथगस्मानभयं करोतु ॥

काशिः ॥ ३ ॥

काशिर्मुष्टिः प्रकाशनात् । मुष्टिर्मोचनाद्वा, मोषणाद्वा, मोहनाद्वा ।

"इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन् काशिरित्ते ।" ( ऋ० ३ । ३० । ५ )

इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनात् । रोधः कूलं निरुणद्धि स्रोतः । कूलं रुजतेर्विपरीताल्लोष्टोऽविपर्ययेण । अपारे दूरपारे यत् सङ्गृभ्णासि मघवन् काशिस्ते महान् ॥

भा०—'काशिः' इत्येतदनवगतम् । 'प्रकाशनात्' धातुनिर्देशकनिर्वचनम् । 'मुष्टिः' इत्यभिधेयवचनम् । "काशृ दीप्तौ" ( भ्वादि० दिवादि० ) ततः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) इति 'इन्' प्रत्ययः करणे कारके । प्रसक्तसक्तं मुष्टिं निर्ब्रवीति मुष्टिर्मोचनाद्वेत्यादि । "मुच्लृ मोक्षणे" ( तुदादि० ) ततः क्तिच्, मुष्टिः । मुच्यते हि बन्धनमनया, यद्वा मुच्यते हि दानमस्या अन्यस्मै, यद्वा "मुष स्तेये" (क्र्यादि०) पूर्ववत् क्तिच्, मुष्टिः, मुष्यतेऽन्यस्य धनादिकमनया । यद्वा "मुह वैचित्ये" ( दिवादि० ) विचितिश्चेतनावैपरीत्यं तदज्ञानरागभयानां प्राबल्याद् भवति । मुह्यतेऽपरो जनोऽनया भयादिकं दृष्ट्वा । सर्वत्रापि चकारषकारहकाराणां षकारः स्वरूपतः सन्धितो वा योज्यः । समग्रमन्त्रस्तदर्थश्च—

उताभये पुरुहूत श्रवोभिरेको दृह्ळमवदो वृत्रहा सन् ।

इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते ॥

पुरुहूत इन्द्र ! हे बहुप्रकारेण ह्वातव्य स्तोतव्य शक्तिसम्पन्न परमात्मन् ! त्वं वृत्रहा पापाज्ञानान्धकारयोर्नाशकः सन्—उत—अपि—अवश्यं नितान्तमस्माकं मनुष्याणामभयेऽभयनिमित्तम्, निमित्तसप्तमी, अभयायेति यावत्, श्रवोभिः श्रवणीयैर्वेदैर्मन्त्रैर्दृढमविचलं निर्बाधं ज्ञानमवदो वदसि—उपदिशसि यद्वा श्रवोभिः—श्रवांसि वेदान् मन्त्रान् 'श्रवांसि' इति 'सुपां सुपो भवन्तीति' शसः स्थाने भिस् । दृढमिति क्रियाविशेषणं दृढं साधिकारं निर्भ्रान्त्येति यावत्, वदसि—उपदिशसि

प्रयच्छसि। न केवलं निर्बाधज्ञानवान् निर्भ्रान्तज्ञानवानेवापि तु इमे, अपारे रोदसी चित्—एते दूरपारे न पारो ययोर्दूरं दूरपर्यन्तं पारः परभागो ययोः परभागो न लक्षयितुं शक्यते तथाभूते रोदसी रोधसी जगतो रोधनं कुर्वत्यौ द्यावापृथिव्यौ जगत ऊर्ध्वाधरावधिं निबन्धयित्र्यौ जगत उत्तरगोलार्द्धदक्षिणगोलार्द्धसीमवर्तिन्यौ चिदपि तत्—यतस्त्वं मघवन्! ऐश्वर्यवन् देव! संगृभ्णाः—संगृह्णासि मुष्टावल्पद्रव्यमिव ते काशिः—इत्—तव मुष्टिरेवेत्थंकरणे समर्था नान्यस्य कस्यचिदतस्तव मुष्टिर्महती। मुष्टेः कार्ये द्वे अन्यस्मै वस्तुप्रदानं भारस्य शासनस्य वहनं धारणं च। त्वं ज्ञानं ददासि, जगतो भारं शासनं चादत्से। इत्यन्यत्राप्युक्तम्—"इन्द्रो मह्ना रोदसी पप्रथच्छवः" ( ऋ० ८। ३। ६ )

अथाधिभौतिकार्थः—हे बहुह्वातव्य बहुप्रकारेण सत्करणीय राजन्! त्वं शत्रोः पापस्य च नाशकः सन् नितान्तमस्माकं प्रजाजनानामभये—अभयाय भयरहितसुखाय श्रवोभिः श्रवणीयैर्यशोभिर्यशस्करैर्ज्ञानगुणाचारबलैर्दृढमबाध्यमनिवार्यं घोषणं नितान्तमस्माकं प्रजाजनानामभयाय भयरहितसुखाय वदसि करोषि। एवं तु स्वकीयैः श्रवोभिः श्रवणीयैर्यशोभिर्यशस्करैर्ज्ञानगुणबलैरिमे अपारे दूरपारे रोदसी द्यावापृथिव्यौ संगृभ्णाः—चित् संगृह्णासीव यत्—यतस्तव मुष्टिः—इत् इत्थं महानस्ति। यद्वा 'चित्' नोपमायां रोदसी रोधसी राष्ट्रस्य रोधनं कर्त्र्यौ मर्यादे उत्तरदक्षिणस्थौ पर्वतसमुद्रौ संगृह्णासि॥

निरुक्तयः—द्यावापृथिव्यौ रोदसी रोधसी विरोधनात् परस्परविपरीतदिग्देशरोधनात्, रोधः कूलं तटः, यतः स्रोतो जलप्रवाहं निरुणद्धि "रुधिर् आवरणे" ( रुधादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४। १८९ ) धकारस्य दकारश्छान्दसः—इति रोदसी, कूलं रुजते। "रुजो भङ्गे" ( तुदादि० ) तद्विपरीतः 'जुर्' ततः कः "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३। १। १३५ ) जकारस्य ककारो रेफस्य लकारः। अल्पसाम्यतः। अविपर्ययेण लोष्टः, 'रुज्' धातोः क्तः प्रत्ययः "लोष्टपलितौ" ( उणा० ३। ९२ ) निपातनात्—रेफस्य लकारः। जकारस्य षकारः॥

कुणारुम्॥ ४॥

"अहस्तमिन्द्र सम्पिणक् कुणारुम्" ( ऋ० ३।३०।८ )

अहस्तमिन्द्र कृत्वा सम्पिण्ढि परिक्वणनं मेघम्॥ १॥

'कुणारुम्' इत्येतदनवगतं द्वितीयायाम्। 'क्वणनं परिक्वणनम्' इत्यवगमः। 'मेघम्' इत्यभिधेयवचनम्। "क्वण शब्दार्थः" ( भ्वादि० ) ततः "शृस्वृस्निहि...रारुः"

( अष्टा० ३ । २ । १७३ ) इत्यविहितोऽपि भवति छान्दसस्ताच्छीलिकः 'आरुः' प्रत्ययो नित् सम्प्रसारणं चापि छान्दसम् । कुणारुः—कुणारुम् ।

समग्रमन्त्रस्तदर्थश्च—

सुहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सम्पिणक् कुणारुम् ।

अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥

पुरुहूत हे बहुप्रकारेणाह्वातव्य बहुप्रशंसनीय ! इन्द्र राजन् ! त्वं सहदानुं दानुभिः प्रजाराष्ट्रावध्वंसकैर्दस्युभिः सह स सहदानुस्तं दस्युपतिम् । बहुव्रीहिसमासः, तथाकृत्वा हि पूर्वपदं प्रकृतिस्वरम् "दो अवखण्डने" ( दिवा० ) ततः "दाभाभ्यां नुः" ( उणा० ३ । ३२ ) अन्यत्र वेदे च दानुर्हिंसकः "धिष्वा शवः शूर येन वृत्रमवाभिनद्—दानुमौर्णवाभम् ।....दस्युरिन्द्र ॥" (ऋ० २।११।१८) अत्र दानुर्दस्युरित्युक्तम् । तं सहदानुं दस्युदलयुक्तं महादस्युं क्षियन्तं स्वराष्ट्रे स्वराष्ट्रपार्श्वे वा निवसन्तमहस्तं छिन्नहस्तमसमर्थं कृत्वा कुणारुं मेघमिव गर्जन्तं सम्पिण्ढि सञ्चूर्णय । तथा वर्धमानं पियारुं देवहिंसकम् "पियारुं देवपीयुं पीयतिर्हिंसाकर्मा" ( निरु० ४ । २५ ) वृत्रं पाप्मानं पापिनम् "पाप्मा वै वृत्रः" ( शत० ११ । १ । ५ । ७ ) तवसा बलेन "तवः—बलनाम" ( निघं २ । ९ ) अपादं छिन्नपादं कृत्वा—अभिजघन्थ—अभिहन्याः ॥

अलातृणः ॥ ५ ॥

"अलातृणो बल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार । सुगान् पथो अकृणोन्निरजे गाः प्रावन् वाणीः पुरुहूतं धमन्तीः ॥" ( ऋ० ३ । ३० । १० )

अलातृणोऽलमातर्दनो मेघो बलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद् भयमानो व्यार । सुगान् पथो अकृणोन्निरजे गाः । सुगमान् पथोऽकरोन्निरजनाय गवाम् । प्रावन् वाणीः पुरुहूतं धमन्तीः । आपो वा वहनाद् वाचो वा वदनात् । बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा ॥ २ ॥

भा०—'अलातृणः' इत्येतदनवगतम् 'अलमातर्दनः' इत्यवगमो विशेषणरूपः । अभिधेयो न सूचितः । यथानन्तरं पूर्वं "कुणारुं परिक्वणनं मेघम्" इति सूचितम् । तस्माद् यस्मिन् यस्मिन् मन्त्रे यस्य यस्य विशेषणमिदं स स एवाभिधेयोऽस्येति । तद्यथा मरुतां सूक्ते "अलातृणासो विदथेषु सुष्टुताः" ( ऋ० १ ।

१६६।७ ) 'अलातृणास:–मरुत: ।' मरुतोऽभिधेयाः, मरुतोऽलमातर्दनाय मेघानाम्, इति कर्त्तरि प्रयोगः । अत्र प्रस्तुतमन्त्रे–अलमातर्दनयोग्यः–अलमातर्दनीय इन्द्रेण इति कर्मणि प्रयोगः । 'अलम्' पूर्वपदे 'आङ्' उपसर्गपूर्वकात् "तृदिर् हिंसायाम्" (रुधादि०) धातोर्युचि दकारस्य लोपो गुणाभावश्च, 'अलम्' इत्यस्य मकारलोपश्च पृषोदरादित्वाद्रूपसिद्धिः । "बहुलमन्यत्रापि–युच्" ( उणा० २ । ७९ ) अत्र कर्मणि 'अलातृणास:–मरुत:' इत्यत्र कर्त्तरि ।

मन्त्रार्थः—

इन्द्र ! विद्युत् ! योऽयं बलो मेघो गगनस्यावरको व्रजोऽन्तरिक्षे व्रजनशीलोऽलातृणो यस्तर्दनयोग्योऽलं पर्याप्तोऽलं तर्दनीयो ध्वंसनीयो ध्वंसनाय प्राप्तकालो जलपूर्णत्वात्–गोर्वाचोऽस्यास्तव माध्यमिकायाः स्तनयित्नुरूपाया हन्तोर्हननात् प्रहारात् 'हनधातोश्छान्दसः–तोसुन् प्रत्ययः ।' भयमानः सन् व्यार विकीर्णो जातः शैथिल्यं गतो विपतनोन्मुखोऽभवत् । पुनर्गाः–गवां–गमनशीलानामपां गवामिवापां वा निरजे निरजनाय निर्गमनाय सुगान् सुगमान् मार्गान्–अकृणोद्-करोदाविरकरोत् पश्चाद्–धमन्तीर्गच्छन्त्यः "धमति गतिकर्मा" (निघं २ । १४) वाणीः–आपो वाण्यो वा पुरुहूतं बहुभिराहूतमाकांक्षितमुदकं पृथिव्यामुदकं प्रावन्–प्रावहन् प्रावदन् वा, 'प्रावन्' इत्यत्र हकारस्य दकारस्य वा लोपो मन्तव्यश्छान्दसः । यदा प्रावन्–प्रावहन् तदा वाणीर्वाण्य आप आन्तरिक्ष्याः "वाश्रा इव····समुद्रमवजग्मुरापः" (ऋ० १।३२।२) यदा 'प्रावन्–प्रावदन् तदा वाणीर्वाण्यो वाचः । अघोषयन्–उदकमुदकमिति–आगच्छति ।

आधिभौतिकक्षेत्रे–राजन् ! यथाऽन्तरिक्षे प्रकाशाच्छादकं प्रवृद्धं मेघं विद्युत् स्वस्तनयित्नुवाचः प्रहारात् छिन्नभिन्नं करोति । मेघश्च तत्ताडनेन पृथिव्यां पतति तदा पृथिव्यां सुखप्रदा जलस्य वृष्टिर्भवति । तथा त्वमपि राष्ट्रे धर्मज्ञानाच्छादकं दुष्टं जनं राष्ट्रे यत्र तत्र भ्राम्यन्तं स्वराजघोषणायाः प्रहारात् पातय, यतो राष्ट्रे सुखस्य ज्ञानस्य च वृष्टिर्भवेत् सर्वेषां मार्गाः सुगमना भवेयुः ॥

निरुक्तयः—बलः–'वृञ्' वरणे धातोः कर्त्तरि 'अच्' प्रत्ययः । लत्वं छान्दसम् । 'व्रजः'–"व्रज गतौ" ( भ्वादि० ) ततोऽपि पचाद्यच्–इति 'अच्' प्रत्ययः कर्त्तरि । 'निरजे' 'निर्' उपसर्गपूर्वकात् 'अज्' गतौ धातोः क्विप् भावे छान्दसः, 'निरज्' चतुर्थ्यां निरजे निर्गमनाय । 'वाणी' अत्र प्रसङ्गे "वह प्रापणे" ( भ्वादि० ) यद्वा "वद सन्देशवचने" ( चुरादि० ) ततो ङणिञ् प्रत्ययो बाहुलकात् पुनः कृदिकाराद् ङीप् स्त्रियाम् । तेन वाणी वहनादापः, वदनाद् वाच् यथा चोक्तम् ॥

सलल्लूकम् ।। ६ ।।

"उद्वृ॑ह॒ रक्षः॑ स॒हमू॑लमिन्द्र वृ॒श्चा मध्यं॒ प्रत्यग्रं॑ शृणीहि।
आकी॑वतः सल॒लूकं॑ चकर्थ ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥"
( ऋ० ३० । ३० । १७ )

उद्धर रक्षः सहमूलमिन्द्र। मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा। वृश्च मध्यं प्रतिशृणीह्यग्रमग्रमागतं भवत्या कियतो देशात्। सलल्लूकं संलुब्धं भवति पापकमिति नैरुक्ताः। सररूकं वा स्यात् सर्तेरभ्यस्तात्। तपुषिस्तपतेर्हेतिर्हन्तेः ।।

भा०—'सलल्लूकम्' इत्येतदनवगतमनेकार्थं च। 'संलुब्धम्' यद्वा 'सररूकम्' इत्यवगमः। 'पापः—पापी यद्वा दस्युः' इत्यभिधेयवचनम्। 'सम्' पूर्वात् "लुभ विमोहने" ( तुदादि० ) धातोः "वलेरूकः" ( उणा० ४ । ४० ) धातोर्बाहुलकात् 'ऊकः' प्रत्ययः क्तार्थे भूते वा "उणादयो....भूतेऽपि दृश्यन्ते" ( अष्टा० ३ । ३ । २ ) धातोः परभागस्य कृतगुणस्य लोपश्छान्दसः। संल्लूकः—सलल्लूकः। अनुस्वारस्य लकारभावश्छान्दसः। संल्लुब्धः—इत्यर्थनिर्देशः। यद्वा 'सम् लुभ क्त कन्' स्वार्थे, संल्लुब्धकः। सलल्लूकः—अत्र बहुकल्पनीयं भवतीति नैरुक्तपक्षे। यद्वा सररूकः—सृ धातोः—अभ्यस्तात्—यङन्तात्—ऊकः प्रत्ययः—औणादिकः, अभ्यासश्च।

मन्त्रार्थः—

हे इन्द्र राजन्! त्वं रक्षः—रक्षितव्यमस्मात् तथाभूतं घातकं प्राणिनं समूलमुद्वृह—उद्धर—उत्पाटय वृक्षमिव तथा तन्मध्यगतमङ्गं वृश्च छिन्धि छिन्नं कुरु, अपि च तदग्रमङ्गं प्रतिशृणीहि—प्रतिहन्याः। तत्कथमित्युच्यते—आकीवतः—इत्यत्र—आङ् उपसर्गो मर्यादायाम्, कियतः—इत्यत्रस्थस्य 'इय' इत्यस्य स्थाने 'ईव' भावश्छान्दसः। कियतः कुतश्चिदपि स घातकः समीपतो वा दूरतो वा स्वराष्ट्रतः परराष्ट्रतो वाऽऽगतो भवेत्, "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्युक्तत्वात्। तं सलल्लूकं संल्लुब्धं सम्मूढं महामूढं धर्मज्ञानशून्यं पापकं पापकारिणं पापिनं जनमिति नैरुक्तपक्षे, सलल्लूकं सररूकं पुनः पुनः सरणशीलं नगरे पुनः पुनरागमनस्वभावं दस्युं लौकिकमते, तथाभूतं पापिनं जनं यद्वा दस्युं चकर्थ हिन्धि हिंस्या वा 'चकर्थ' इति "कृञ् हिंसायाम्" ( स्वादि० ) पार्श्वे सन्तं शस्त्रेण छेदकेनेति यावत्। अथ प्लायिताय दूरं गताय तस्मै ब्रह्मद्विषे यो ब्रह्म—परमात्मानं वेदं ब्राह्मणं च द्वेष्टि तस्मै नास्तिकाय ब्रह्मघ्ने तपुषिं तापकं सन्तापकरं हेतिं वज्रमस्त्रं दूरप्रहारकरमस्य क्षिप। "हेतिर्वज्रनाम" ( निघं २ । २० )

निरुक्तयः—'मूलम्' "मुच्लृ मोचने" यद्वा "मुष स्तेये" यद्वा "मुह वैचित्ये" धातोः "मूशक्यबिम्यः क्लः" ( उणा० ४ । १०८ ) धातोर्बाहुलकात् क्लः प्रत्ययः । समग्रस्य धातोर्मूभावः । "मूलम्" अङ्कुरादिं मुञ्चति मूलं सति मूलेऽङ्कुरादयः । यद्वाऽदृश्यमन्तर्हितं स्तेन इव मुष्णाति स्वाहारं पृथिवीतः, यद्वा मोहमापादयति द्रष्टरि जने कथं नीचैर्गतं रसं चूषति कथं बहुभारं वृक्षस्य स्तभ्नाति । अग्रमागतम् । आङ्पूर्वात् "गम्" धातोः "रन्" प्रत्ययः "वृधि वपिभ्यां रन्" ( उणा० २ । २८ ) धातोर्बाहुलकात् रन् प्रत्ययो डिच्च । उपसर्गस्य ह्रस्वत्वं यद्वा "ऋज्रेन्द्राग्र····" (उणादि० २ । २९) इति निपातनाद् यथोक्तसिद्धिर्विज्ञेया । "तपुषि" तपधातोः—उषिन् प्रत्ययः । "हेतिः" हन धातोः क्तिन् प्रत्ययान्तो निपात्यते "ऊतियूतिजूतिहेतिकीर्तयश्च" (अष्टा० ३।३।९७) ॥

कत्पयम् ॥ ७ ॥
"त्यं चिदित्था कत्पयं शयानम् ॥" ( ऋ० ५।३२।६ )
सुखपयसम् । सुखमस्य पयः ॥

भा०—'कत्पयम्' इत्येतदनवगतम् "कम्पयसम्—सुखपयसम्—अस्य पयः सुखकरम्" इत्यवगमः । विशेषणमिदं मेघस्य । विशेषणलक्षितो मेघोऽभिधेयः । समग्रमन्त्रस्तदर्थश्च—

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् ।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान ॥

इन्द्रो राजा यथा विद्युत्—इत्थाऽमुत्रान्तरिक्षे त्यं चित् तं खलु शयानं वर्तमानमसूर्ये सूर्यरहिते तमसि वर्धमानं कत्पयं सुखपयसं सुखकरजलपूर्णं मेघमुद्यम्य जघान हन्ति तथा सुतस्य मन्दानः—राज्यैश्वर्यस्य सुनिष्पादितस्य प्रापणात्—लाभात्—मन्दानो मोदमानो हर्षप्राप्तिहेतवे वृषभः सुखस्य वर्षिता तच्चित् मेघमिवान्धकारे वर्धमानं चोरादिकं जनानां सुखस्यापहारकं शस्त्रमुच्चैः—उद्यम्य हन्ति । 'कत्पयम्' इत्यत्र 'कम्' इत्यस्य 'कत्' भावः सति समासे समासान्तश्च डच् छान्दसः ॥

विस्रुहः ॥ ८ ॥
विस्रुह आपो भवन्ति विस्रवणात् ।
"वया इव रुरुहुः सप्त विस्रुहः" ( ऋ० ६ । ७ । ६ )
इत्यपि निगमो भवति ॥

भा०—'विस्रुहः' इत्येतदनवगतम् । 'विस्रवणात्' इति धातुनिर्देशपूर्वकं

हेतुवचनम् । 'विस्रवाः' इत्यवगमः । 'आपः' इत्यभिधेयवचनम् । विपूर्वकात् "स्रु गतौ" (भ्वादि०) ततः क्विप्प्रत्यये धातोस्तुक्स्थाने हुक्-आगमश्छान्दसः ॥
समग्रमन्त्रस्तदर्थश्च—

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।

तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥

वैश्वानरस्य विश्वस्य यो नायकस्तस्य परमात्मनश्चक्षसा स्वाभाविकेन ज्ञानेन केतुना स्वाभाविकेन कर्मणा च "तस्य स्वाभाविकी ज्ञानबलक्रिया च" (श्वेताश्व० उ० ६ । ८) अमृतस्य दिवः—अमरस्वरूपमोक्षस्य प्रकाशमयस्य "त्रिपादस्यामृतं दिवि" ( ऋ० १० । ९० । ३ ) सानूनि—उच्चस्थानानि मुक्तात्मनां धामानि विमितानि धृतानि तथा तस्य इत्—उ तस्यैव वैश्वानरस्य परमात्मनः स्वाभाविकेन ज्ञानेन कर्मणा च मूर्धनि—अधि सूर्ये—आधारभूते सूर्ये "एष वै मूर्धा य एष सूर्यः—तपति" ( शत० १३ । ४ । १ । ३ ) विश्वानि भुवनानि लोकलोकान्तराणि पिण्डानि तथा सप्त सर्पणशीला विस्रुहो विविधरूपेण स्रवन्त्य आपो वयाः शाखा इव वृक्षशाखा इव रुरुहूरोहन्ति प्रादुर्भवन्ति । भुवनानि पिण्डानि विस्रुह आपश्च तस्य परमात्मन एकपाद्रूपाणि "पादोऽस्य विश्वा भूतानि" ( ऋ० १० । ९० । ३ ) परमात्मा मोक्षधाम्नः संसारस्य चोद्यानभूतस्य स्वामीत्यर्थः ॥

वीरुधः ॥ ९ ॥
वीरुध ओषधयो भवन्ति विरोहणात् ।
"वीरुधः पारयिष्णवः ।" ( ऋ० १० । ९७ । ३ )
इत्यपि निगमो भवति ॥

भा०—'वीरुधः' इत्यनवगतम् । 'ओषधयः' इत्यभिधेयवचनम् । 'विरोहणात्' इति धातुप्रदर्शनात्मकोऽवगमः । विपूर्वकात् "रुह बीजजन्मनि प्रादुर्भावे च" (भ्वादि०) ततः क्विप् प्रत्ययः । उपसर्गस्य दीर्घत्वं धातोर्हकारस्य धकारश्च ।
समग्रमन्त्रस्तदर्थश्च—

ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।

अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥

हे ओषधीः—ओषधयः ! यूयं रोगिणं तथा क्षुधितं प्रति हर्षं प्रापयत 'प्रति' योगेनान्तर्गतणिजर्थः—हर्षयत, यद्वा प्रति प्रतिकारेण चिकित्सया सेवनेन भोक्तरि भोक्तुः शरीरे वा संसृष्टाः सङ्गता सात्म्यंगता भवत "मुद संसर्गे" ( चुरादि० )

तत्र संसर्गं प्राप्य तत्रस्थमोषं रोगं क्षुधं च धयत पिबत यथा नाम तथाकार्यं विधत्थ 'ओषधिः' ता यूयमोषधयः पुष्पवतीः प्रशस्तपुष्पवत्यः। अत्र 'सर्वत्र जसः स्थाने शस्' प्रसूवरीः—पुष्पप्रादुर्भावानन्तरं प्रसविन्योऽर्थात् फलवत्यः प्रशस्तफलवत्यः "अन्येभ्योऽपि दृश्यन्ते" (अष्टा० ३ । २ । ७५) इत्यनेन प्रपूर्वकात् 'षूङ्' धातोः क्वनिप् प्रत्ययश्छन्दसि ततः स्त्रियाम् 'वनोरच" (अष्टा० ४ । १ । ७) सजित्वरीः सजित्वर्यः सहसंगता जयशीलवत्योऽश्वा वडवा घोटिका इव यथा ताः संग्रामं जयन्त्यो भवन्ति तथा यूयं रोगं क्षुधं च सहयोगं प्राप्य जयन्त्यः "जि जये" धातोः "इण् नशजिसर्तिभ्यः क्वरप्" (अष्टा० ३।२।१६३) ततः "टिड्ढ....क्वरपः" (अष्टा० ४ । १ । १५) इत्यनेन ङीप् स्त्रियाम्। हे वीरुधः! विविधं रोहन्त्यः—ओषधयः पारयिष्णवो रोगं क्षुधं पारयिष्यः स्थ ॥

नक्षद्दाभम् ॥ १० ॥

नक्षद्दाभमश्नुवानदाभमभ्यशनेन दभ्नोतीति।

"नक्षद्दाभं ततुरिं पर्वतेष्ठाम्।" (ऋ० ६ । २२ । २)

इत्यपि निगमो भवति ॥

भा०—'नक्षद्दाभम्' इत्येतदनवगतं वैयाकरणधात्वर्थतश्च व्युत्पत्तितश्च। 'अश्नुवानदाभम्' द्वितीयायाम्—इत्यवगमः। पूर्वपदस्य 'नक्षत्' इत्यस्यार्थ—प्रदर्शयन्। 'नक्ष' धातुर्व्याकरणे लक्षणशास्त्रे गत्यर्थेऽस्ति "णक्ष गतौ" किन्तु छान्दसो 'नक्ष' धातुरत्र व्याप्त्यर्थः "नक्षति व्याप्तिकर्मा" (निघं० २ । १८) तस्मादेव 'अश्नुवान....' पूर्वभागेन दर्शितः "अशूङ् व्याप्तौ" धात्वन्तरप्रयोगो व्याप्त्यर्थप्रदर्शनाय। तथैवोत्तरभागे '....दाभम्' इत्यत्र 'दम्भ' धातुर्व्याकरणे लक्षणशास्त्रे दम्भनार्थेऽहम्भावार्थे "दम्भु दम्भने" (स्वादि०) नात्र तथा, किन्तु छन्दसि तु वधार्थः। 'दभ्नोति वधकर्मा" (निघं० २ । १९)। व्युत्पत्तितोऽप्यनवगतत्वं यतः 'नक्षत्' इति समासे शतृप्रत्ययान्तं 'पठत्' इति यथा नक्षन्—अश्नुवानो व्याप्नुवन् दभ्नोति—इति नक्षद्दाभः। "कर्मण्यण्" (अष्टा० ३ । २ । १) इति कर्मस्थाने कर्त्ताऽत्र 'कर्तरि—उपपदे—अण्' अत्र छान्दसः। उपपद—मत्र कर्त्ताऽस्ति, इति तु द्योतयति ह्याचार्यः। "अभ्यशनेन दभ्नोति" इति वचनात्। व्यापनेन दभ्नोति हिनस्ति। सोऽश्नुवानः शक्त्या व्यापनशक्त्या दभ्नोति। इन्द्रः—अभिधेयः ॥

मन्त्रमन्त्रार्थश्च—

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः।

नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥

पूर्वे पितर आरम्भसृष्टावुत्पन्नाः परमर्षयस्तथा नवग्वाः–नवीनगतयः "नव-तगयः" ( निरु० ११ । १९ ) सप्त सृप्ता ये तेभ्यो वेदानधीत्य प्रसिद्धिं गता विप्रासो मेधाविनो विद्वांसस्ते सर्वे नक्षद्दाभं यः सर्वत्र संसारेऽश्नुवानो व्याप्नुवन् प्रातिकूल्यस्य कर्तारं नास्तिकं पापिनं जनं दभ्नोति तं ततुरिं धर्मात्मनो दुःखात् तारयितारम् "आदृगमहनजनः किकिनौ लिट् च" ( अष्टा० ३ । २ । १७१ ) इत्यनेन 'तॄ' धातोः किन् प्रत्ययः । पर्वतेष्ठां विविधपर्ववति संसारे यस्तिष्ठति स्वामित्वं करोति 'पर्वते' उपपदे 'स्था'धातोः क्विप् सप्तम्या अलुक् च छान्दसः । यद्वा पर्वतसदृशे उच्चधाम्नि मोक्षे तिष्ठन्तं "त्रिपादस्यामृतं दिवि" ( ऋ०१०।९०।३ ) यद्वा पर्वते मेघे स्थितां विद्युतमिव प्रहर्तारं सुखवृष्टेः कर्तारं वाह्रौघवाचमद्रोघवाचमनतिक्रमणीयवाचं वेदज्ञानस्य प्रसारकं शविष्ठमतिशयेन बलवन्तं परमात्मानं मतिभिर्वाग्भिः स्तुतिभिरभिवाजयन्तोऽर्चन्तः स्तुवन्तः "वाजयति अर्चतिकर्मा" ( निघं० ३ । १४ ) सदा वर्तन्ते ॥

अस्कृधोयुः ॥ ११ ॥

अस्कृधोयुरकृध्वायुः, कृध्विति ह्रस्वनाम निकृत्तं भवति । "यो अस्कृधोयुरजरः स्वर्वान्" ( ऋ० ६ । २२ । ३ ) इत्यपि निगमो भवति ॥ ३ ॥

भा०—'अस्कृधोयुः' इत्येतदनवगतम् । 'अकृध्वायुः–दीर्घायुः' इत्यवगमः । 'याचनीयभागः' इति विशेष्यरूपोऽभिधेयः । "कृधु ह्रस्वनाम" (निघं० ३।२) न कृधु–आयुर्यस्य सः–अकृधायुः–अस्कृधोयुः, 'कृधु' इत्यस्य 'सुट्' आगमः, अन्तिमस्य–उकारस्य–ओकारश्छान्दसः । 'आयुः' इत्यस्य 'आकारस्य' पूर्वरूपं छान्दसं । यद्वा 'कृधु–आयुः' वैपरीत्येनापि गुण ओकारश्छान्दः । अस्कृधोयुः–दीर्घायुश्चिरस्थायी वा । 'कृधु' निकृत्तं निच्छिन्नं दीर्घवस्तुतः भवति "कृती छेदने" ततः "पृभिदिव्यधिगृधिधृषिहृषिभ्यः–उः कित्" ( उणा० १ । २३ ) तकारस्य धकारश्छान्दसः ।

समग्रमन्त्रस्तदर्थश्च—

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः ।
यो अस्कृधोयुरजरः स्वर्वान् तमा भर हरिवो मादयध्यै ॥

तमिन्द्रमैश्वर्यवन्तं राजानमीमहे याचामहे । "ईमहे याच्ञाकर्मा" ( निघं० ३ । १९ ) किं याचामहे–इत्युच्यते–अस्येन्द्रस्य राज्ञो रायो धनस्य कथम्भूतस्य राष्ट्ररूपस्य धनस्य पुरुवीरस्य पुरवो बहवो वीराः सैनिका यस्मिन् तस्य, तथा नृवतः प्रशस्ता नरो जना प्रजाजना यस्मिन् तस्य, पुरुक्षोः पुरुर्बह्वी निवासभूमि-

यस्मिन् पुरुपूर्वात् क्षि निवासे डुः प्रत्ययः। तस्य भागं याचामहे, यो भागोऽस्माभिः प्रजाजनैर्भोक्तव्योऽक्रुधोयुर्दीर्घायुश्चिरस्थायी—अजरो जरारोगरहितोऽजनशीलः पितृसकाशात् पुत्रं पुत्रात् तत्पुत्रं पौत्रं पौत्रात् प्रपौत्रप्रभृतिपर्यन्तमग्रे सरन् यः स्यात् स न शीघ्रं क्षीणत्वं गच्छेत् तथा स्ववांन् सुखवान्, न तु दुःखवान् किन्तु धर्म्यो भागः स्यात् तं भागं हे हरिवः ! नृपते ! "हरयः—मनुष्याः" ( निघं० २ । ३ ) मादयध्यै—अस्मान् मादयितुं तर्पयितुम्" मद तृप्तियोगे" ( चुरादि० ) ततस्तुमर्थे "तुमर्थेसेसेनसेऽसेन्क्सेनध्यै...." (अष्टा० ३।४।९) इत्यनेन 'अध्यै प्रत्ययः।" आभरास्मासु—समन्तात्—पूरय धारय ॥

निश्रृम्भाः ॥ १२ ॥

निश्रृम्भा निश्रथ्यहारिणः ।

"आजासः पूषणं रथे निश्रृम्भास्ते जनश्रियम् ।

देवं वहन्तु बिभ्रतः ॥" ( ऋ० ६ । ५५ । ६ )

आवहन्त्वाजाः पूषणं रथे निश्रथ्यहारिणस्ते जनश्रियं जातश्रियम् ॥

भा०—'निश्रृम्भाः' इत्यनवगतम् । 'निश्रथ्यहारिणः' निश्रथ्येनाशैथिल्येन हारकाः—इत्यर्थप्रदर्शनरूपोऽवगमः । अजाः—अजनाः—गमनशीलाः—अश्वविशेषाः—इत्यभिधेयवचनम् । निपूर्वात् "श्रथि शैथिल्ये" ( भ्वादि० ) धातोः, यद्वा "श्रथ दौर्बल्ये" ( चुरादि० ) धातोर्घञि प्रत्यये निश्रन्थः 'नि' अत्र निषेधेऽर्थे "नि निधाने निषेधे च" ( अव्ययार्थनिबन्धनम् ) पुनः—निश्रन्थेन हरन्तीति "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इत्यनेन डः प्रत्ययः । निश्रथस्य निश्रृम् भावः, हकारस्य भकारः, एवं निश्रृम्भाः—बहुवचने ।

मन्त्रार्थः—

अजासः—अजाः "अजाः पूष्णः—आदिष्टोपयोजनानि" ( निघं० १ । १५ ) "असौ वै पूषा योऽसौ सूर्यः—तपति" ( गो० उ० १ । २० ) "यद् रश्मिपोषं पुष्यति तत् पूषा भवति" ( निरु० १२ । १७ ) एवं पूषा सूर्यः । यद्वा रश्मयस्तस्य प्रखराः सञ्चरन्ति ते रश्मयो हि तस्याजाः—अजनाः—गमनशीलाः—अजा इव सूक्ष्माः सन्ति । ते च निश्रृम्भाः—निश्रथ्यहारिणः पूष्णो रथं निश्रथ्येनाऽदौर्बल्येनाऽशैथिल्येन वा हरन्ति वहन्ति तस्मात् ते निश्रथ्यहारिणो निरन्तरं वहनशीलाः सन्ति, जनश्रियं जनानां श्रीः शोभा लक्ष्मीश्च यस्मात् तं पूषणं सूर्यं रथे रथरूपे रमणमण्डले रमणीयसंसारे बिभ्रतो धारयमाणाः—आवहन्तु

समन्ताद् वहन्तु । यथा सूर्यस्य सर्वत्र प्रचारोऽन्धकारं नाशयितुं प्रकाशं प्रसारयितुं निरन्तरं सबलं सफलं च वर्तते तथा राष्ट्रे राज्ञोऽपि प्रगतिः पापमज्ञानं निवारयितुं धर्मज्ञानं च प्रसारयितुं भवेत् ॥

बृबदुक्थम् ॥ १३ ॥
बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थमिति बृबदुक्थो वा ॥
"बृबदुक्थं हवामहे" ( ऋ० ८ । ३२ । १० )
इत्यपि निगमो भवति ॥

भा०—'बृबदुक्थम्' इत्येतदनवगतम् । 'महदुक्थम्' अर्थप्रदर्शनम्, तदा 'बृहदुक्थम्' इत्यवगमः । अथवा 'वक्तव्यमस्मै—उक्थम्' अर्थप्रदर्शनम्, तदा 'ब्रुवदुक्थम्—वक्तव्योक्थम्' इत्यवगमः । "बृहू वृद्धौ" ( भ्वादि० ) ततः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवत्" ( उणा० २ । ८५ ) अतिप्रत्ययान्तो 'बृहत्' इति निपात्यते कर्तरि करणे वा कारके यथायोग्यम्, वर्धते यः वर्धनसाधनं वा । उक्थम् "वच परिभाषणे" ( अदादि० ) ततः "पातॄतुदिवचिरिचिसिचिभ्यस्थक्" ( उणा० २ । ७ ) इत्यनेन थक्प्रत्ययः, उक्थं मन्त्रस्तवनं वेदः । यद्वा "ब्रूञ् व्यक्तायां वाचि" ( अदादि० ) ततोऽपि पूर्वोक्तात् ( उणा० २ । ८५ ) धातोर्बाहुलकात्—अतिप्रत्यये । बृबद् वर्तमाने निपात्यते कर्मणि । तदुत्तरमुक्थमिति शब्दः । बृबद्—वक्तव्यम्, उक्थं स्तुतिवचनमस्मै । स बृबदुक्थस्तं । बृबदुक्थं द्वितीयायाम् ।

समग्रमन्त्रस्तदर्थश्च—

बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधु कृण्वन्तमवसे ॥

बृबदुक्थं बृहन्महदुक्थमुपदेशवचनं वेदो यस्यास्मदर्थं यद्वा वक्तव्यमुक्थं स्तुतिवचनमस्माकं यस्मै—उपास्यदेवाय स इन्द्रः परमेश्वरस्तं सृप्रकरस्नं सृप्रौ सर्पणशीलौ सर्वत्र व्याप्तौ करस्नौ बाहू ताविव निर्माणपालनकरौ गुणौ यस्य तम् "सृप्लृ गतौ" ( भ्वादि० ) ततो रक् प्रत्ययः ( उणा० २ । १३ ) "करस्नौ बाहुनाम" ( निघं २ । ४ ) साधु कृण्वन्तं कुर्वन्तं न कदाचिदसाधु करोति सः, यथावत् कर्मानुरूपं फलं सुखं दुःखं च यो ददाति तमूतये स्वकीयायै रक्षायै तथाऽवसे ज्ञानभोगयोः प्रापणाय हवामहे—आह्वयामः स्वात्मनि—उपास्महे ।

ऋदूदरः ॥ १४ ॥
ऋदूदरः सोमो मृदूदरो मृदुरुदरेष्विति वा ।

"ऋदूदरेण सख्या सचेय" ( ऋ० ८।४८।१० )
इत्यपि निगमो भवति ॥

भा०—'ऋदूदरः' इत्यनवगतम् । 'मृदूदरः' इत्यवगमः । 'सोमः' विशेष्योऽभिधेयः । मृदुः—उदरः—उद्दरणीयश्चर्वणीयो भक्षणीयो मध्यतो यः स मृदूदरः सोमः, यद्वा मृदुः—उदरेषु स्थितः स्यात्—गुरुर्न स्यात् । अथवा—ऋदूदरः—ऋजूदरः, जकारस्य दकारश्छान्दसः । सोमेन सह ऋजुशब्दस्य सम्बन्धोऽपि वेदे दृश्यते "आर्पवस्व दिशां पत आर्जीकात् सोम मीढ्वः ।" ( ऋ० ९।११३।२ ) यत् खलु मृदूदरः, इति त्वर्थप्रदर्शनम्, उक्तं यथा पूर्वं बृबदुक्थं महदुक्थं बृहदुक्थम्, बृहत्—महत् । अत्रापि मृदुः—ऋजुः ।

समग्रमन्त्रस्तदर्थश्च—

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥

हे हर्यश्व ! हरयो हरिता ओषधयोऽशनाय दत्ता येन स त्वं परमात्मन् ! सोम्येनाहारेण—ऋदूदरेण ऋजूदरेण मध्यतो मृदुरसवता सोमेन सह सख्या सख्यानि सचेय सेवेय सदा सोम्यमाहारं कुर्यां यः पीतो भक्षितश्च मां न हिंस्यात् । अयं यः सोमः सोम्योऽन्नरसोऽस्मेऽस्मासु न्यधायि स्वाभ्यन्तरे पीतो भक्षितश्च निविष्टः । तस्मै पीताय तत्पीतप्रतीकाराय तं त्वामिन्द्रं परमात्मानं प्रतिरं प्रवृद्धमायुषं याचामहे ॥

ऋदूपे ॥ १५ ॥
ऋदूपे इत्युपरिष्टाद् व्याख्यास्यामः ॥

भा०—'बुन्दः' इति पदप्रसङ्गे "तुविक्षं ते···ऋदूपे चिदद्वृधा" इति मन्त्रव्याख्याने ( निरु० ६।३३ ) 'ऋदूपे' पदं व्याख्यास्यते यास्केन । अत उक्तं व्याख्यास्यामः ॥

पुलुकामः ॥ १६ ॥
पुलुकामः पुरुकामः ।
"पुलुकामो हि मर्त्यः" ( ऋ० १।१७९।५ )
इत्यपि निगमो भवति ॥

भा०—'पुलुकामः' इत्येतदनवगतम् । 'पुरुकामः' इत्यवगमः । बहुकामो मनुष्यो विशेष्यत्वेनाभिधेयः । "पुरु बहुनाम" ( निघं० ३।१ ) रेफस्य लकारः, रलयोरभेदः प्रसिद्ध एव ।

समग्रमन्त्रस्तदर्थश्च—

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे ।
यत्सीमागश्चकृमा तत् सु मृळतु पुलुकामो हि मर्त्यः ॥

इमं खलु पीतं सोमं सौम्यमौषधरसं हृत्सु हृदयेषु हृदयगतान्तःकरणेषु—अन्तितः समीपतः समीपमन्तरे रसभावमनुभूतमुपब्रुवे शान्तिमुपगत्य ब्रवीमि यत् पुनः—आगः कामवासनाया उत्थापनमिति पापं कुर्मस्तत् सु सम्यक् मृळतु सुखं करोतु—शान्तं करोतु, मनुष्यः पुरुकामो बहुकामी भवति, कामस्य बाहुल्यादयं भ्रष्टो विनष्टश्च भवति तस्मात् सोमस्य पानं कुर्यां यत् कामवासनाया उद्रेको न स्यात् ॥

असिन्वती ॥ १७ ॥
असिन्वती असङ्खादन्त्यौ ।
"असिन्वती बप्सती भूर्यत्तः" ( ऋ० १० । ७९ । १ )
इत्यपि निगमो भतति ॥

भा०—'असिन्वती' इत्येतदनवगतमर्थतो न तु लक्षणशास्त्रतः । 'असङ्खादन्त्यौ' इत्यवगमो विशेषणरूपः । "षिञ् बन्धने" ( स्वादि० ) इत्युक्तं धातुपाठे परन्तु नात्र बन्धनेऽर्थे किन्तु खादनेऽर्थे प्रयुज्यते । शतृप्रत्ययान्तः स्त्रीलिङ्गः प्रयोगः प्रथमाद्विवचने नञ्पूर्वकः । न खादन्त्यौ ।

समग्रमन्त्रस्तदर्थश्च—

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥

अस्यामर्त्यस्य मरणधर्मरहितस्य जन्ममरणप्रबन्धरहितस्य मर्त्यासु मरणधर्मयुक्तासु विक्षु प्रजासु मनुष्याद्यासु वर्तमानस्य महतो विभोः परमात्मनो महित्वं महत्त्वमपश्यं पश्यामि जानामि, यत् तेन विभृते विधृते गर्भे मनुष्यशरीरे नाना—पृथक् पृथगूर्ध्वाधःस्थिते हनू असिन्वत्यौ न खादन्त्यावपि बप्सती खादन्त्यौ भूरि—अत्तः—बहु भक्षयतश्चर्वतः सम्भरेते शरीरं पोषयतः । भक्षयन्त्यावपि न भक्षयतः—न स्वार्थं भक्षयतः किन्तु शरीरं सम्भरेते पोषयत इत्येतदर्थमेव भक्षयतः । आश्चर्यजनकं रचनमिदं परमात्मनः ॥

कपनाः ॥ १८ ॥
कपनाः कम्पनाः क्रिमयो भवन्ति ।
"मोषथा वृक्षं कपनेव वेधसः ।" ( ऋ० ५ । ५४ । ६ )
इत्यपि निगमो भवति ॥

भा०—'कपनाः' इत्यनवगतम् । 'कम्पनाः' इत्यवगमो विशेषणरूपेण । क्रिमयोऽभिधेयाः–विशेष्यरूपेण । "कपि चलने–कम्पने" ( भ्वादि० ) ततः "बहुलमन्यत्रापि–युच्" ( उणा० २ । ७९ ) आगमानामनित्यत्वाद् धातोः 'नुम्' आगमो न भवति ।

समग्रमन्त्रस्तदर्थश्च—

अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।
अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥

हे वेधसो मेधाविनो मरुतः–ऋत्विजः ! "वेधाः–मेधाविनाम" ( निघं० ३ । १५ ) "मरुतः–ऋत्विजः" ( निघं० ३ । १८ ) यज्ञकर्मणि निष्णाता वेदज्ञा महानुभावाः ! युष्माकं शर्धो बलं ज्ञानबलं भ्राजते दीप्यति "शर्धः–बलनाम" (निघं० २ । ९) यत्–येन ज्ञानबलेन–अर्णसं मेघम् "अर्णस्–उदकनाम" (निघं० १ । १२ ) 'तदस्मिन्नस्ति' इति–अकारो मत्वर्थीयः । कपनेव–कपनाः–इव, इव-शब्देन सह समासः, यथा कपनाः–कम्पनाः क्रिमयो घुणाः–वृक्षं मुष्णन्ति चोरयन्ति तस्य वृक्षस्य सारभागं रसं तदन्तस्तो गृह्णन्ति तद्वद् यूयं मेघं मोषथ चोरयथ स्वज्ञानबलात् तदन्तस्तो जलं गृह्णीध्वं लोकहितार्थम् । अध स्म तर्हि खलु यूयं सजोषसः समानसेवनीयभागवन्तः समानभावेन ज्ञानबलस्य प्रसारकाः ! नोऽस्माकम्–अरमतिम्–अलमतिम्–पर्याप्तमतिमन्तं ज्ञानबलस्य ग्रहणाय पर्याप्तबुद्धिमन्तं कुमारं चक्षुरिव यन्तं नेत्रमिव ज्ञानबलं प्राप्नुवन्तं शिष्यत्वेन स्वीकृत्योपनीय सुगं सुगमनीयं ज्ञानसदनं ज्ञानमार्गं वाऽनु नेषथानुक्रमेण नयेत "नेषथ" लिडर्थे लेट् सिप् च ।

भाऋजीकः ॥ १९ ॥
भाऋजीकः प्रसिद्धभाः ॥
"धूमकेतुः समिधा भाऋजीकः" ( ऋ० १०।१२।२ )
इत्यपि निगमो भवति ॥

भा०—'भाऋजीकः' इत्येतदनवगतम् । 'प्रसिद्धभाः' इत्यवगमः । 'अग्निः' अभिधेयो विशेष्यत्वेन । ऋजुः सरलोऽनवरुद्धः स्वार्थे कन् । ऋजुका–अनवरता–निरन्तरवर्तमाना स्वाभाविकी भा दीप्तिर्यस्य स भाऋजीकः, उपसर्जनस्य परनिपातत्वमनवगतत्वं तथा 'ऋजुक' शब्दस्य 'ऋजीक' भावश्चाप्यनवगतत्वम् ।

समग्रमन्त्रस्तदर्थश्च—

देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ॥

हे अग्ने ! त्वं देवः सन्—ऋतेन यज्ञेन देवान्—अन्यान् देवान् परिभवसि, स त्वं नोऽस्माकं हव्यं द्रव्यं वह तान् देवान् प्रति त्वद्द्वारा ते देवा अनुकूला भवेयुः, त्वं प्रथमश्चेतनावान् स्वप्रकाशेन प्रकाशितोऽसि । त्वं धूमकेतुः धूमः केतुः प्रज्ञानं लिङ्गं यस्य तथाभूतः सन् समिधा समिन्धनेन भाऋजीकः प्रसिद्धदीप्तिकोऽनवरतदीप्तिको मन्द्रो हर्षयिता होता हव्यानामादाता नित्यः प्रत्यहं वाचा वेदवाण्या प्रयुज्यमानो यजीयान्—अतिशयेन यष्टाऽसि, वेदविधिमन्तरेण यज्ञो न भवति न ह्यग्निमन्तरेण यज्ञो भवति ॥

रुजानाः ॥ २० ॥
रुजाना नद्यो भवन्ति, रुजन्ति कूलानि ।
"संरुजानाः पिपिष इन्द्रशत्रुः" ( ऋ० १ । ३२ । ६ )
इत्यपि निगमो भवति ॥

भा०—'रुजानाः' इत्येतदनवगतम् । 'नद्यः' अभिधेयवचनम् । रुजन्ति कूलानि तटस्थानानि भञ्जन्ति भग्नानि कुर्वन्ति—इति धातुनिर्देशरूपोऽवगमः सहेतुकः । पूर्वं नदीनामसु पठितमिदं पदमत्रानवगतत्वात् पठितम् । अस्यानवगतत्वमपि विलक्षणमन्येषामनवगतानामपेक्षया । परस्मैपदिनो धातोरात्मनेपदत्वमित्येकं द्वितीयं चानामप्रत्ययेन शानचा सिद्धं न च शतृशानचौ नामप्रत्ययौ किन्तु वर्तमाने काले लटि क्रियां कुर्वन्तमाचष्टे शतृ वा शानच् वा प्रत्ययः । तत्रापि मुकोऽभावोऽप्यनवगतत्वे । "रुजो भङ्गे" (तुदादि०) लक्षणशास्त्रमतमेवास्य सिद्धिरस्य किन्तु विपरीता नामवाचित्वेन, अनामवाचित्वेऽपि नामवाचित्वमत्र ॥

समग्रमन्त्रस्तदर्थश्च—

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥

अयं वृत्रो मेघो दुर्मदः सुरापो ऽयोद्धा—इव हि सन् महावीरं महाविक्रमिणं तुविबाधं बहूनां शत्रूणां बाधकं बहुबाधकशक्तिमन्तं वा—ऋजीषं शत्रुं हत्वा तत्सर्वस्वस्योपार्जकं सूर्यमाजुह्वे युद्धायाहूतवान् पुनरस्य समृतिं वधकप्रकाराणां समृतिं प्रहारयोगं नातारीत्—न पारितवान् न सोढवान् पुनः स इन्द्रशत्रुः—इन्द्रः सूर्यः शत्रुः शातयिता शमयिता वा यस्य तथाभूतो वृत्रो मेघो रुजानाः—नदीः प्रति—रुजानासु तटान् भग्नान् कुर्वतीषु नदीषु सम्पिष्टो विकीर्णोऽभवत् । निर्बलोऽयुद्धकुशलो राजा बलिना युद्धकुशलेन साधनसम्पन्नेन सह युद्धं न कुर्यात् ॥

जूर्णिः ॥ २१ ॥

जूर्णिर्जवतेर्वा द्रवतेर्वा दुनोतेर्वा ।
"क्षिप्ता जूर्णिर्न वक्षति" ( ऋ० १ । १२९ । ८ )
इत्यपि निगमो भवति ॥

भा०—'जूर्णिः' इत्येतदनवगतम् । "जवतेः, द्रवतेः, दुनोतेः" इति धातुनिर्देशरूपोऽवगमः । अभिधेयो यथायोग्यमस्त्रशक्तिप्रभृतिः । "जवति गतिकर्मा" ( निघं० २ । १४ ) इति छान्दसो जू धातुर्गतौ ततः "वीज्याज्वरिभ्यो निः" ( उणा० ४ । ४८ ) धातोर्बाहुलकात्—निः प्रत्ययः । प्रत्ययात्—पूर्वमेव धातोरेफागमः । 'जूर्—निः' जूर्णिः, शत्रुसेनायां याऽप्रतिहता गमनशीला गन्तुमर्हा । यद्वा "द्रु गतौ" ( भ्वादि० ) प्रत्ययः पूर्ववत्—दकारस्य जकारः, उकाररेफयोः स्थानव्यतिहारः, उकारस्य दीर्घत्वं च तदा 'जूर्' निः, जूर्णिः । अर्थः पूर्ववत् । अथवा "दु उपतापे" ( स्वादि० ) प्रत्ययः पूर्ववत् । धातोर्जूभावः । उपतापयति शत्रुसेनां जूर्णिः ।

समग्रमन्त्रस्तदर्थश्च—

प्रप्रा वो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् । स्वयं सा रिषयध्यै या न उपेषे अत्रैः । हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥

हे प्रजाजनाः ! एष इन्द्र ऐश्वर्यवान् राजा स्वयशोभिः स्वकीयैर्यशस्करैर्बलैः स्वराष्ट्रे वो युष्माकं प्रजाजनानाम्—अस्मे—अस्माकं राजपुरुषाणां च—ऊती—रक्षणे तथा दुर्मतीनां पापबुद्धीनां स्वराष्ट्रियाणामपकारबुद्धीनां शत्रूणां परराष्ट्रियाणां च परिवर्गे परिवृज्यन्ते योद्धृणां प्राणा यस्मिन् तस्मिन् संग्रामे दरीमन्—विदारणे नाशने प्र प्र—प्रबलः समर्थः, "दॄ विदारणे" ( क्र्यादि० ) ततः "अनिमृकभ्यामिमनिन्" ( उणादि० ४ । १४९ ) धातोर्बाहुलकात् 'इमनिन्' प्रत्ययो भावे बाहुलकादेव "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३५ ) इति दीर्घत्वम् । अत्रैर्भक्षकैराततायिभिः शत्रुभिर्नोऽस्मान् प्रति रिषयध्यै हिंसितुं प्रक्षिप्ता या जूर्णिः प्रहारिकाऽस्त्रशक्तिः—आक्रामयन्ती सेना—उपेषे—उपगच्छति सा स्वयं ईमवश्यं हताऽसत् नष्टा व्यर्था भवति सा न वक्षति नास्मान् प्राप्नोति नितान्तं न प्राप्नोति ॥

ओमना ॥ २२ ॥
"परिह्वृतस्मेमना वां वयोऽगात्" ( ऋ० ७ । ६९ । ४ )
पर्यगाद् वां घ्रंसमहृत्वनायान्नम् ॥ ४ ॥

भा०—'ओमना' इत्यनवगतम् । 'अवनाय' धातुनिर्देशपूर्वको चतुर्थ्यामव-

गमः । "अव रक्षणादिषु" ( भ्वादि० ) ततः "अवतेष्टिलोपश्च—मन्" ( उणा० १ । १४२ ) इत्यनेन मन् प्रत्ययः, तत्र विहितस्य टिलोपस्य बाहुलकादभावः धातोरुपधावकारयोरूठ् । 'ओमन्' पुनः "सुपां सुलुक्पूर्वसवर्णाच्छेया····" ( अष्टा० ७ । १ । ३९ ) अनेन 'के' स्थाने—आकारादेशश्छान्दसः ॥

समग्रमन्त्रस्तदर्थश्च—

युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।

यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥

अश्विनौ देवता मन्त्रस्य । अत्राश्विनौ स्तः खल्वहोरात्रौ—आधिदैविकदृष्टौ "तत्कावश्विनौ···अहोरात्रावित्येके" ( निरु० १२ । १ ) हे अश्विनौ—अहोरात्रौ ! युवयोः श्रियं श्रयणीयां सेवनीयां ग्रहणीयां शक्तिं गुणात्मिकां शोभाम् "श्रिञ् सेवायाम्" ( भ्वादि० ) सूरः—दुहिता, सूरः सूर्यः "सुपां सु०····" ( अष्टा० ७ । १ । ३९ ) इत्यनेन ङसः स्थाने सुः । सूर्यस्य दुहिता—उषा योषा या युवाभ्यां सह मिश्रणं मेलनं करोति सा परि—अवृणीत परिगृहीतवती, परितक्म्यायां युवयोर्मध्ये रात्रिरेका व्यक्तिस्तस्यां—तस्या रात्रेः श्रीः शान्तिस्तां परिगृहीतवती "परितक्म्या रात्रिः" (निरु० ११ । २५) तथा घ्रंसं परि परिरधेरर्थेऽत्र "परावध्यर्थे" ( अष्टा० ८ । ३ । ५१ ) "घ्रंसोऽहर्नाम" ( निघं० १ । ९ ) अहनि यद्वा घ्रंसमभिलक्ष्य दिनमभिलक्ष्य दिने युवयोर्मध्ये दिनं द्वितीया व्यक्तिस्तत्र तस्य दिनस्य श्रीः दीप्तिस्तां परिगृहीतवती । तत्र—उषसि—उषोवेलायां देवयन्तम्—आत्मनो देवं परमात्मानमिच्छन्तं तमुपासमानं युवामश्विनौ—अहोरात्रौ शचीभिः कर्मभिः स्वधर्मैः शान्तिज्ञानदीप्तिगुणैरवथो रक्षथः, अतो वां युवयोः—ओमना—अवनाय रक्षणाय रक्षणं प्राप्तुमुपासको युवयोरागमनकाले सन्धिकाले प्रातः सायं वयोऽध्यात्मभोजनं परिप्राप्नोति "वयोऽन्ननाम" ( निघं २ । ७ ) ॥

इति षष्ठाध्याये प्रथमः पादः ।

---

## द्वितीयः पादः

---

उपलप्रक्षिणी ॥ २३ ॥

उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा । इन्द्र ऋषीन् पप्रच्छ 'दुर्भिक्षे केन जीवति' इति, तेषामेकः प्रत्युवाच—

"शकटः शाकिनी गावो जालमत्स्यदनं ( जालमस्यन्दनम् ? * ) वनम् । उदधि पर्वतो राजा दुर्भिक्षे नव वृत्तयः" † इति सा निगदव्याख्याता ।

"कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परिस्रव"
( ऋ० ९ । ११२ । ३ )

कारुरहमस्मि कर्ता स्तोमानाम् । ततो भिषक्, तत इति सन्ताननाम पितुर्वा पुत्रस्य वा । उपलप्रक्षिणी सक्तुकारिका । नना नमतेर्माता वा दुहिता वा । नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम् । 'इन्द्रायेन्दो परिस्रव' इत्यध्येषणा ॥

भा०—'उपलप्रक्षिणी' इत्यनवगतम् । 'उपलेषु प्रक्षिणाति' यद्वा 'उपलप्रक्षेपिणी' इत्यवगमः । 'सक्तुकारिका' अभिधेया । 'उपल' शब्दोपपदात् "क्षि हिंसायाम्" ( स्वादि० ) इत्यस्मात् यद्वा "क्षिप प्रेरणे क्षेपणे" ( तुदादि० ) इत्यस्मात् "सुप्यजातौ णिनिस्ताच्छील्ये" ( अष्टा० ३ । २ । ७८ ) घालोपश्छान्दसः । उपलेषु पाषाणेषु प्रक्षिणोति हिनस्ति, यद्वा—उपलेषु प्रक्षिपति पिनष्टि । उपलप्रक्षिणी सक्तुकारिका चूर्णीकरणवृत्तिमती ॥

मन्त्रार्थः—

अहं कारुः स्तोमानां कर्ता—अन्नादीनामोषधिवनस्पतीनां कर्ता सम्पादयिता—उत्पादयिता यतस्ततो नगराद् वनाच्च सन्वेता "अन्नं वै स्तोमाः" ( शत० ९ । १ । ३ । ६ ) ततः—सन्तानः, स पिता वा पुत्रो वा, सन्तन्यतेऽस्मात्—इति पिता, सन्तन्यतेऽसौ—इति पुत्रः, स भिषक् चिकित्सकः, मयोत्पादितानोषधिवनस्पतीनादाय भैषज्यं चिकित्सां करोति जनानाम् । नना नमनशीला माता वा दुहिता वा । माता नमति पुत्रं प्रति स्तन्यपानादिकर्मणा । दुहिता नमति मातापितरौ प्रति तयोरानुकूल्ये वरं वरयितुम्, सा माता वा दुहिता वा—उपलप्रक्षिणी—उप-

---

* 'जालमत्स्यदनम्' इति स्यात् ।

† दुर्गभाष्ये न व्याख्यातं वचनमिदं स्कन्दभाष्ये तु दत्तमेव न, मूलपुस्तकेषु क्वचिदयं श्लोको दत्त एव न । क्वाचित्कं स्मार्त्तं वचनं दुर्भिक्षे निर्वाहप्रदर्शनार्थम् । दुर्गस्कन्दभाष्यकाराभ्यामपि पुरातनेन केनचिद् भाष्यकारेण स्वभाष्ये स्मृतिवचनमिदं दुर्भिक्षे वृत्तिप्रदर्शनार्थमुद्धृतं भवेत् ॥

लेषु भैषज्याय चिकित्सार्थं तानोषधिवनस्पतीन् प्रकृष्टं क्षिणोति प्रकृष्टं क्षिपति पिनष्टि पिष्ट्वा चौषधं निर्माति । एवं वयं नानाधियः—नानाकर्माणो वसूयवो वसुकामा धनकामाः—अनु—तस्थिम—अन्वास्थिताः परस्परमानुकूल्येन स्वस्मिन् परिवारे स्थिताः स्मः, गा इव लोकम्, 'गो' शब्दोऽत्रोभयलिङ्गाभिधायी, 'गाः—इव' गोशब्दस्य 'इव' इत्यनेन सह समासः, सुपो लुक्स्थाने 'शस्' आदेशश्च छान्दसः । यथा गावो लोकं प्रति—एकस्मिन् गोव्रजे गोष्ठे वानुतिष्ठन्ति केचन गावः क्षेत्रं कर्षन्ति केचिद् रथं वहन्ति काश्चिद् गावो दुग्धं प्रयच्छन्ति । अतः इन्दो हे सोम ऐश्वर्यवन् परमात्मन् ! त्वमिन्द्राय जीवात्मनेऽध्यात्मानन्दधारया प्राप्तो भव ।

कर्मकाण्डे यज्ञप्रसङ्गेऽहं कारुः स्तोमानां स्तवनमन्त्राणां कर्ता—पाठको सोमयागे मन्त्रान् पठामि । 'कृ' धातुः पठनार्थे "दक्षिणत उदङ्मुखो मन्त्रकारः" ( वाराहगृह्य सू० ख० १३ ) 'मन्त्राणां पाठको दक्षिणे—आसने—उपविशेत्' । मम पिता पुत्रो वा भिषक्—तस्य यज्ञस्य ब्रह्मा "भेषजकृतो ह वा एष यज्ञो यत्रैवं-विद् ब्रह्मा भवति····त्रय्या विद्यया भिषज्यति" "यज्ञस्य हैष भिषग् यद् ब्रह्मा यज्ञायैव तद् भेषजं कृत्वा हरति" ( ऐ० ५ । ३५ ) तथा माता वा दुहिता वा—उपलप्रक्षिणी—उपलेषु हव्यानि द्रव्याणि होमाय प्रकृष्टं क्षिणोति प्रकृष्टं क्षिपति कुट्टयति, इत्येकस्मिन् परिवारे वयमेवं परस्परमानुकूल्येनातिष्ठामो यथा गावो लोकं प्रति—अनुतिष्ठन्ति क्षेत्रकर्षणे रथवहने दुग्धदाने । गोभिरिव परस्परं सह-योगे मनुष्यैर्भवितव्यं गृहचालनयज्ञसम्पादनादिकार्याय । इत्यध्येषणा प्रेरणा ग्राह्या ।

निरुक्तयः—'नना' नम धातोः "रमेस्त च नः" ( उणा० ३ । १४ ) इत्यनेन धातोर्बाहुलकात् 'नः' प्रत्ययो नम धातोश्चान्तलोपश्च बाहुलकादेव । सन्तानः सम् पूर्वकात् तनुधातोरपादाने कर्मणि वा कारके घञ् प्रत्ययः—औणादिको मन्तव्यः ॥

उपसि ॥ २४ ॥

"आसीन ऊर्ध्वामुपसि क्षिणाति" ( ऋ० १०।२७।१३ )

उपस्थे ॥ ५ ॥

भा०—'उपसि' इत्यनवगतम् । 'उपस्थे' इत्यवगमः उपपूर्वकात् 'स्था' धातोः क्विप्प्रत्यये धातोरादिवर्ण एवावशिष्टः उपस् सप्तम्याम् 'उपसि' । यद्वा 'उपस्थे' इति स्यादर्थप्रदर्शनम् । उपपूर्वात् "आस उपवेशने" ततः क्विप् धातोरा-कारस्य लोपश्छान्दसः । उपस् सप्तम्याम्—उपसि—उपस्थे ।

समग्रमन्त्रस्तदर्थश्च—

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ।

आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥

पत्तः पादैः "पञ्चम्यास्तसिल्" (अष्टा० ५ । ३ । ७) तृतीयास्थाने पञ्चमी छान्दसी । सूर्यः पादैरश्मिरूपैः—जगार जग्राह—गृहीतवान् गृह्णाति वरूथं वरणीयमुदकम्, गिरतिरत्र गृह्णात्यर्थे । प्रत्यञ्चमत्ति प्रतिप्राप्तमुदकराशिमत्ति खादति विलीनीकरोति सूक्ष्मं करोति, पुनः शीर्ष्णा स्वकीयेन शिरसा भारवता शिरसेव परिणतेन स्वरूपेण शिरः—प्रतिदधौ जनानां शिरः प्रति धारितवान् वर्षित्वा प्रेरितवान् । कथमित्युच्यते उपसि—उपस्थे द्युलोकस्योपस्थे—उपस्थाने—आसीनः सूर्यः—उत्तानां भूमिं यथा यथा भूमिरुत्ताना समुन्नतः—उच्चा—उच्चा भवति तथा तथा स तां तामुद्गतामुद्गतां विशेषतः—यथोच्चप्रदेशम्—उपरि—ऊर्ध्वां दिशं गतं जलम्, ऊर्ध्वां जलधारां वा न्यङ् न्यक्—नीचैः क्षिणाति प्रक्षारयति । इति वृष्टिसिद्धान्तः ॥

'उपसि—उपस्थे—उपस्थाने—आसङ्गे, इत्यर्थस्य प्रदर्शका अन्येऽपि मन्त्राः सन्ति परन्त्वत्र पदप्रकरणे तु विशेषणभूतानां यद्वाऽस्पष्टार्थकानां शब्दानां मन्त्रा उदाहर्तव्याः, 'उपसि'—'उपस्थे' इत्यर्थे प्रयुज्यते, अस्य स्पष्टार्थस्य द्योतको मन्त्रः— "पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि ।" (ऋ० ५ । ४३ । ७) यथा पितुरुपस्थे—आसङ्गे पुत्र आसीदति तथा यज्ञोऽग्निमासीदति ॥

प्रकलवित् ॥ २५ ॥

प्रकलविद् वणिग् भवति, कलाश्च वेद प्रकलाश्च ।

"दुर्मित्रासः प्रकलविन्मिमानाः" (ऋ० ७ । १८ । १५)

इत्यपि निगमो भवति ॥

भा०—'प्रकलवित्' इत्यनवगतम् । 'कलाप्रकलावित्' इत्यवगमः । 'वणिक्' इत्यभिधेयवचनम् । 'कल गतौ संख्याने च, चकारात् प्रतियत्ने च' (चुरादि०) राष्ट्रे भोज्योपयोज्यानां धान्यादिनिर्वाहकवस्तूनां गवादिपशूनां च कलां गतिमर्थात् प्राप्तिं गुणदोषान् रक्षणं संख्यानं परिमाणं परीक्षणं च तथा प्रकलां प्रतियत्नमर्थात् प्रयोगं प्रवर्धनं च यो वेत्ति यद्वा लाघवेन तेषामेवोपयुक्तवस्तूनां युक्तिं प्रयुक्तिं च यो वेत्ति स प्रकलवित् । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्'' (अष्टा० ३ । २ । ६१) यदा लक्षणशास्त्रेण सिद्धं रूपं तदाऽनवगतं कथम्, पुनः कथं पदनामसु पाठः । उच्यते । प्रकल-

शब्देन कलाश्च प्रकलाश्च लक्ष्यन्ते तथा स्त्रीलिङ्गप्रत्ययस्य–आकारस्य लोपः, इत्यनवगतत्वम् । पदनामसु च पाठः–न हीदं मुख्यं नाम किन्तु पदनामात्र विशेषणरूपं नामेति पदनामसु पाठः । विशेष्योऽस्ति वणिक्–व्यापारी ।

समग्रमन्त्रस्तदर्थश्च—

इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।

दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥

विश्वानि सर्वाणि भोजनानि भोजनीयानि भोग्यानि वस्तूनि मिमाना निर्मिमाणाः प्रकलवित्–प्रकलविदो वणिजस्तानि सर्वाणि सुदासे सुदात्रे यथायोग्यं विभक्तृ राज्ञे जहुस्त्यजन्ति प्रयच्छन्ति–उपहरन्ति । ते रक्षणीयाः, इति सामर्थ्यात् । ये दुर्मित्रासः–मित्रवद् भूत्वा ये प्रवञ्चन्ति लुण्ठन्ति–एते खल्विन्द्रेण शक्तिमता राज्ञा तृत्सवस्तर्दनीयाः–हिंसनीयाः "तृदिर् हिंसायाम्" ( रुधादि० ) ततः कर्मणि क्सुः प्रत्ययो निद्धर्मवान् । वेविषाणाः–आपः–न–आकाशे व्याप्यमाना आपो यथा सृष्टाः क्षिप्ताः–नीचीः–दिशो नीचैर्भूमिषु–अधवन्त–अधावन्त धावन्ति तथैव तेऽपि हिंसनीया दुर्मित्रवृत्तिकाः प्रवञ्चकाः प्रहारप्राप्ता नष्टा भवन्तु राष्ट्राद् बहिर्वा प्लायिताः स्युः ॥

अभ्यर्द्धयज्वा ॥ २६ ॥

अभ्यर्द्धयज्वाभ्यर्द्धयन् यजति ।

"सिषक्ति पूषा अभ्यर्द्धयज्वा" ( ऋ० ६ । ५० । ५ )

इत्यपि निगमो भवति ॥

भा०—'अभ्यर्द्धयज्वा' इत्यनवगतम् । 'अभ्यर्द्धयन् यष्टा' इत्यवगमः । 'पूषा' मन्त्रे विशेष्यरूपेणाभिधेयः । "ऋधु वृद्धौ" ( दिवादि०, स्वादि० ) ततो णिजन्तात् कर्तरि–अभ्यर्धयति–इति पचाद्यच् । णिचो लोपः–इत्यनवगतत्वं तथा यजतीति यज्वा, 'ङ्वनिप्' (अष्टा० ३।२।१०४) भूते विहितो वर्तमाने भवतीत्यपि–अनवगतत्वम् । योऽभ्यर्द्धयति सोऽभ्यर्द्धः स एव यज्वा 'अभ्यर्द्धयज्वा ।'

समग्रमन्त्रस्तदर्थश्च—

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्द्धयज्वा ।

श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते ॥

मरुतः–यद्–ह हवं श्रुत्वा याथ, हे मरुतः ! वृष्टेः–प्रेरयितारो वायवः ! अस्माकं वृष्टिविषयकं निमन्त्रणं श्रुत्वा–श्रुत्वेवेत्यालङ्कारिकं कथनम्, यदाह खलु याथ

प्राप्ता भवथ । अथ येषु युष्मासु मरुत्सु—आन्तरिक्ष्यवायुषु रोदसी रुद्रस्य कुपितस्य सूर्यस्य पत्नी माध्यमिका वाग् विद्युद् देवी द्योतमाना "रोदसी रुद्रस्य पत्नी—सचा मरुत्सु रोदसी" (निरु० ११।५०) नु क्षिप्रं मिम्यक्ष—गच्छति प्राप्ता भवति द्योतते "म्यक्षति गतिकर्मा" ( निघं० २ । १४ ) सामान्यकाले लिट् तथा—अभ्यर्द्धयज्वा मेघानभिवर्धयन् स्वरश्मिभिः पृथिवीतो जलान्याकृष्य पुनश्च स एव यज्वा यजनशीलस्तान् मेघान् वर्षयित्वा यष्टा तेषां मेघानां दाता पूषा सूर्यो मेघानां यश्च पोषकः—तान् मरुतः सिषक्ति समवैति प्राप्तो भवति "षच समवाये" ( भ्वादि० ) "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) इति शपः श्लुः । तदा मरुतां चलने विद्युतो विद्योतने मेघस्य पतने सति प्रविक्तेऽध्वनि पृथग्भूतेऽनाश्रितमार्गे प्रवृत्तानि भूमा भूमानि भूतानि प्राणिनः—रेजन्ते धावन्ति यद्वा प्रविक्ते विविक्ते गुप्ते सुरक्षिते मार्गे गच्छन्ति गुप्तं मार्गं स्थानं प्राप्नुवन्ति—इति सृष्टेः स्वाभाविकं विज्ञानं प्रदर्शितं भवति । इत्याधिदैविकदृष्टिः ।

अथाधिभौतिकदृष्टिः—

हे मरुत ऋत्विजः "मरुतः—ऋत्विजः" ( निघं० ३ । १८ ) इवं राजनिमन्त्रणं श्रुत्वा यदा खलु यूयं याथ प्राप्ता भवथ तदा स्वयंवरे राज्याभिषेके रोदसी देवी रुद्रस्य पूर्णयौवनप्रतापपराक्रमवतो राजकुमारस्य पत्नी स्वसौम्यदयापरहितगुणैर्देदीप्यमाना सती मरुत्सु—ऋत्विक्षु स्वयंवरराज्याभिषेकार्थं सद्यो मिम्यक्ष प्राप्ता भवति तथैव राजकुमारोऽभ्यर्धयज्वा—अभिवर्धयन् राज्यशासनार्थं तद्गुणानभिवर्धयन् सन् यष्टा प्रजाभ्यः सर्वविधसुखरक्षणत्राणानां दाता युष्मान् मरुतः—ऋत्विजः सिषक्ति समवैति प्राप्तो भवति तदा भूमा भूमानि भूतानि मनुष्याः प्रविक्ते यथायोग्ये पृथक् पृथङ् मार्गे विवेकयुक्ते मार्गे वा रेजन्ते गच्छन्ति । योग्यराजकुमारीकुमारयोः स्वयंवरराज्याभिषेकाभ्यां भवितव्यं तथाकृत्वैव प्रजासुखरक्षणत्राणादिकं यथायोग्यं सम्भवति ॥

ईक्षे ॥ २७ ॥
ईक्षे ईशिषे ।
"ईक्षे हि वस्व उभयस्य राजन्" (ऋ० ६ । १९ । १०)
इत्यपि निगमो भवति ॥

भा०—'ईक्षे' इत्यनवगतम् । 'ईशिषे' इत्यवगमः । "ईश ऐश्वर्ये" ( अदादि० ) ततो लटि मध्यमपुरुषे 'से' आत्मनेपदप्रत्यये "ईशः से" ( अष्टा० ७ । २ । ७७ ) इत्यनेन 'इट्' आगमो भवति सोऽत्र न भवति—इत्येवामकान्तत्वम् ।

समग्रमन्त्रस्तदर्थश्च—

नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम् ॥

हे इन्द्र परमेश्वर ! राजन् ! वा ते तव नृवत्—नर इव यथा नरो नराः—लोके सम्बन्धमनुवर्तन्ते तद्वद् वयमपि तव सम्बन्धिनः पुत्रा भक्ताः—इत्येवमादयः सन्तो नृतमाभिः प्रशस्तनृयोग्याभिर्यद्वा नृणां तमास्तमनीयाः कांक्ष्याः "तमु कांक्षायाम्" ( दिवादि० ) याः सन्ति ताभिः—ऊती:—ऊतिभिः—रक्षाभिस्ताः प्राप्नुयुरिति निमित्तभूताभिर्वामं वननीयं सम्भजनीयं त्वां श्रोमतेभिः श्रोतमेभिः, 'श्रु' धातोः विन् "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति विन् प्रत्ययः, कर्मणि छान्दसः 'श्रो' अतिशायने तमप्, श्रोतमास्तैः श्रोमतेभिः 'तम' इत्यनयोर्वर्णयोर्विपर्ययः । श्रोतव्यतमैर्वेदवचनैः स्तवनैर्वंसीमहि सम्भजेमहि । यतस्त्वमुभयस्य द्विविधस्य वस्वो धनस्य सांसारिकस्याभ्युदयिकस्य नैःश्रेयसिकस्य च यद्वा स्थूलधनस्य ज्ञानधनस्य च—ईक्षे—ईशिषे स्वामित्वं करोषि, अतो राजन् जगतो राजन् राष्ट्रस्य राजन् वा महि महद् बहुस्थूलं रत्नं बृहन्तं महद्वास्थूलमाध्यात्मिकं रत्नं विद्यारत्नं वा धेहि ॥

क्षोणस्य ॥ २८ ॥
क्षोणस्य क्षयणस्य ।
"मह: क्षोणस्याश्विना कण्वाय" (ऋ० १ । ११७ । ८)
इत्यपि निगमो भवति ॥

भा०—'क्षोणस्य' इत्यनवगतम् । 'क्षयणस्य' इत्यवगमः । "क्षि निवासगत्योः" ( तुदादि० ) ततो ल्युटि 'क्षयणस्य' इति 'य' भागस्य—उकारादेशो पुनराद्गुणः—क्षोणस्य—इति रूपम् ।

समग्रमन्त्रस्तदर्थश्च—

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥

महो महतो बृहतः क्षोणस्य क्षयणस्य निवासप्रदेशस्य राष्ट्रस्य—अश्विनौ खगोलभूगोलविद्ययोरग्निजलविद्ययोश्च व्याप्तौ वैज्ञानिकौ भिषजौ च युवं युवां श्यावाय यत्र तत्र भूमौ जले—आकाशे च गमनशीलाय "श्यैङ् गतौ" (भ्वादि०) ततः "इण्शीभ्यां वन्" (उणा० १ । १५२) धातोर्बाहुलकात् 'वन्' प्रत्ययः । रुशतीं रोचमानां विद्युद्गर्भ्रीं विद्युद्यानं तेजोमयीं गतिशक्तिं वा दत्तम्—लोडर्थे

लुक् । कण्वाय भाषणकरणशीलाय प्रवक्त्रे "कण शब्दार्थः" ( भ्वादि० ) ततः "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" ( उणा० १ । १५१ ) प्रवाच्यं प्रवचनयन्त्रं प्रवचनबलं वा दत्तम् । "कृत्यल्युटो बहुलम्" ( अष्टा० ३ । ३ । ११३ ) इति ण्यत् प्रत्ययः करणे कारके । वृषणा सुखानां वर्षकौ ! नार्षदाय नरः सीदन्ति यस्मिन् नृषद्–तत्र प्रवृत्तः श्रवणप्रियस्तस्मै श्रवणप्रियाय श्रवः श्रवणयन्त्रं श्रवणबलं चाध्यधत्तमधियोजयतम् ॥

अस्मे ॥ २९ ॥

"अस्मे ते बन्धुः ।" ( यजु० ४ । २२ )

वयमित्यर्थः ।

"अस्मे यातं नासत्या सजोषाः ।" (ऋ० १।११८।११)

अस्मानित्यर्थः ।

"अस्मे समानेभिर्वृषभ पौंस्येभिः ।" (ऋ० १।१६५।७)

अस्माभिरित्यर्थः ।

"अस्मे प्रयन्धि मघवन्नृजीषिन् ।" (ऋ० ३।३६।१०)

अस्मभ्यमित्यर्थः ।

"अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ।" (ऋ० ६।४७।१३)

अस्मदित्यर्थः ।

"ऊर्व इव पप्रथे कामो अस्मे ।" (ऋ० ३।३०।१९)

अस्माकमित्यर्थः ।

"अस्मे धत्त वसवो वसूनि ।" (यजु० ८।१८)

अस्मास्वित्यर्थः ।

भा०—'अस्मे' इत्येतदनवगम् "सर्वनाम सर्वविभक्त्यर्थमस्मद्विषयकम्" इत्यवगमः । रूपमस्मद्वाच्यस्य सर्वविभक्तिकस्य । 'अस्मद्' शब्दात् "सुपां सुलुक्पूर्वसवर्णाच्छे" ( अष्टा० ७ । १ । ३९ ) अनेन 'शे' प्रत्ययस्तत्र टिलोपश्छान्दसः ।

तत्र प्रथमायाम्—

'अस्मे ते बन्धुः' * इति समग्रमन्त्रस्तदर्थश्च—

अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्याऽइडायास्पदमसि घृतवत् स्वाहा । अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳ रायस्पोषेण वियौष्म तोतो रायः ॥

* 'तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती

अदित्याः—अदीनायाः पृथिव्याः पार्थिव्यास्तन्वाः—मूर्धन्—मूर्धनि प्रमुखे देवयजने—निजेष्टदेवस्य यजनस्थाने हृदये हे परमात्मन्। त्वां घृतवत् स्वाहा—यथा घृतेन स्वाहाकृत्याग्निर्दीप्यते तथा त्वामुपासनया प्रदीपयामि यतस्त्वं खल्विडायाः स्तुतेस्पदमास्पदमसि, अतस्त्वमस्मे—अस्मासु रमणं कुरु। अस्मे ते बन्धुः—अहं ते बन्धुरस्मि—इत्यर्थेन भवितव्यम्, "बन्धुः" इत्येकवचनप्रयोगात्, परन्तु यास्केन वयमित्यर्थः, बहुवचने कृतः। सर्वत्रापि बहुवचनेऽर्थो विहितः, तस्मादत्र बहुवचने ह्यर्थो विधेयः। तत्र बहुवचनस्य लिङ्गमपि मन्त्रे "मा वयं" रायस्पोषेण वियोष्म 'तस्माद्' अस्मे ते बन्धुः—वयं तव बन्धवः स्मः, त्वे त्वयि रायः—आनन्दैश्वर्याणि मे—अस्मासु भवन्तु, वयं रायस्पोषेण धनलाभेन न वियुक्ता भवेम किन्तु तोतो वर्धकस्य रायः—ऐश्वर्यस्य भागिनः स्याम। "तु वृद्धौ" (अदादि०) ततः 'तुन्' प्रत्ययः औणादिको बहुलात्—उन् भागस्य लोपे 'तोत्' षष्ठ्यां तोतः॥

तत्र द्वितीयायाम्—

"अस्मे यातं नासत्या सजोषाः" इति समग्रमन्त्रस्तदर्थश्च—

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः।

हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ॥

हे अश्विनौ राष्ट्रस्य परमविद्वांसौ युवां श्येनस्य भासपक्षिणो वेगेन तद्वेगसदृशेन नूतनेन शोभनेन यानेनास्मे—अस्मानागच्छतम्, यथार्थज्ञानवन्तौ समानप्रीतिव्यवहारवन्तौ! युवामहं रातहव्यो दत्तहव्यः कृताग्निहोत्रः शश्वत्तमायाः

---

अस्मे ते बन्धुः पुषेयम्" इति दुर्गाचार्यस्कन्दस्वामिनोर्भाष्ये वचनमिदम् "तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्त्ये सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणास्यस्मे ते बन्धुः" (तै० सं० १।२।३।७)

"तपसस्तनूरसीति तपसी ह्येषा तनूः प्रजापतेर्वर्ण इत्यग्निर्वै पशुनां सहस्रपोषं पुष्यत्यतो ह्येष त्रीन् जनयत्यथो द्वौ परमेण पशुना क्रीय इति परमो ह्येषा पशूनामस्मे ते बन्धुरित्यात्मन्नेवास्या वीर्यं धत्ते तया निर्वीर्यया भूतया विक्रीणीते" (काठक सं० २४।६)

"तपसस्तनूरसि प्रजापतेर्वर्णः सहस्रपोषं पुष्यन्ति परमेण पशुना क्रीयसे अस्मे ते बन्धुः" (मै० सं० १।२।५।३)

यास्केन "अस्मे ते बन्धुः" इत्येव प्रतीकं दत्तं तद् यजुर्वेदे विद्यते तल्लक्ष्यपूर्तये तस्यैवोदाहरणेन भवितव्यं न पुनरन्यस्थलस्य पाठेन भवितव्यम्।

शाश्वतिकतमाथाः—उषसः—उषसो वेलायां हुवे—आह्वयामि राष्ट्रे ज्ञानं वर्धयितुम् ॥

तत्र तृतीयाम्—

"अस्मे समानेभिर्वृषभः पौंस्येभिः" इति समग्रमन्त्रस्तदर्थश्च—

भूरि॑ च॒कर्थ॒ युज्ये॑भिर॒स्मे स॑मा॒नेभि॑र्वृषभ॒ पौंस्ये॑भिः ।

भूरी॑णि॒ हि कृ॒णवा॑मा शविष्ठे॒न्द्र क्रत्वा॑ मरुतो॒ यद्व॒शाम ॥

हे वृषभ ! राष्ट्रे सुखस्य वर्षक बलवत्तम राजन् ! त्वं समानेभिः समानगुणैर्युज्येभिर्योक्तुमर्हैरस्मेऽस्माभिर्मरुद्भिः—राजजनैः सह भूरि बहूनि—कार्याणि करोषि । तथा वयं मरुतो राजजनाश्च भूरीणि बहूनि हि कार्याणि राष्ट्रस्य क्रत्वा प्रज्ञया कुर्मो यानि कामयामहे ॥

तत्र चतुर्थ्याम्—

"अस्मे प्र यन्धि मघवन्नृजीषिन्" इति समग्रमन्त्रस्तदर्थश्च—

अ॒स्मे प्र य॑न्धि मघवन्नृजीषि॒न्निन्द्र॑ रा॒यो वि॒श्ववा॑रस्य॒ भूरेः॑ ।

अ॒स्मे श॒तं श॒रदो॑ जी॒वसे॑ धा अ॒स्मे वी॒राञ्छश्व॑त इन्द्र शिप्रिन् ॥

हे मघवन् ! विद्याधनस्य स्वामिन्—ऋजीषिन् सरलसत्योपदेशवन् ! इन्द्र ! आचार्यदेव ! विश्ववारस्य विश्वैर्वरणीयस्य रायो धनं यद्वा विश्वेषां दुःखानां निवारकं बहुविधं धनम् 'द्वितीयायां षष्ठी' अस्मे अस्मभ्यं प्रयच्छ । तथा, शतं शरदः जीवसे जीवितुं धा धारय, इन्द्र—शिप्रिन् ! प्रगतिशील ! शीघ्रकारिन् ! शश्वतः शाश्वतिकान् वीरांश्चास्मभ्यं धारय ॥

तत्र पञ्चम्याम्—

"अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु" इति समग्रमन्त्रस्तदर्थश्च—

तस्य॑ व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।

स सु॒त्रामा॒ स्ववाँ॒ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द् द्वेषः॑ सनु॒तर्यु॑योतु ॥

तस्य यज्ञियस्य यज्ञार्हस्य श्रेष्ठस्य राज्ञः सुमतौ सुनीत्यामथ कल्याणकरे शासने सौमनसे सुमनस्त्वकरे धर्म्यव्यवहारे स्याम वर्तेमहि । स सम्यक् त्राता स्वसामर्थ्यवान्—इन्द्रो राजा द्वेषो द्वेष्टॄन् शत्रून्—अस्मे—अस्मत्—अस्मत्तः—आरात्—दूरं सदैव पृथक्करोतु ॥

तत्र षष्ठ्याम्—

"ऊर्व इव पप्रथे कामो अस्मे" इति समग्रमन्त्रस्तदर्थश्च—

आ नो॑ भर॒ भग॑मिन्द्र द्यु॒मन्तं॒ नि ते॑ दे॒ष्णस्य॑ धीमहि प्ररे॒के ।

ऊ॒र्व इ॑व पप्रथे॒ कामो॑ अ॒स्मे तमा पृ॑ण वसुपते॒ वसू॑नाम् ॥

हे इन्द्र ! राजन् ! नोऽस्मभ्यं प्रकाशवन्तं भ प्रकाशयुक्तमैश्वर्यं समन्ताद् धारय दातुस्तव प्ररेके प्ररेचने दानव्यवहारे यद् दानं धनं तन्निधारयेम । वसूनां वसुपते राजन् ! अस्मेऽस्माकं कामोऽभिलाषः शुष्के–इन्धनेऽग्निरिव प्रथितोऽस्ति तं काममाभार पूरय ।

तत्र सप्तम्याम्—

"अस्मे धत्त वसवो वसूनि ।"

हे वसवः ! अस्मासु वसूनि धत्त धारयत ।

समग्रो मन्त्रोऽग्रे ( निरु० अ० १२ ख० ४२ ) आगमिष्यति ॥

पाथः ॥ ३० ॥

पाथोऽन्तरिक्षं पथा व्याख्यातम् ।

"श्येनो न दीयन्नन्वेति पाथः" ( ऋ० ७ । ६३ । ५ )

इत्यपि निगमो भवति ।

भा०—'पाथः' इत्यनवगतम् । विशेषणरूपेणानेकार्थं च । अत्र मन्त्रेऽन्तरिक्षं विशेष्यत्वेनाभिधेयम् । 'पथिन्' इत्येतेन व्याख्यातं विज्ञेयमस्मिन् मन्त्रे । "पथ गतौ" ( भ्वादि० ) "पथि गतौ" ( चुरादि० ) ततः "सर्वधातुभ्योऽसुन्" (उणा० ४।१८९) उपधाभूतस्य 'अकारस्य' 'पथ्' इत्यत्र, नकारस्य 'पथि–पन्थ' इत्यत्र 'आकारः ।' उदकार्थेऽन्नार्थे च "पा पाने भोजने" ( अदादि० ) "उदके थुट् च, अन्ने च "असुन्" ( उणा० ४ । २०४, २०५ ) ।

समग्रमन्त्रस्तदर्थश्च—

यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।

प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ॥

अमृता यावत्कल्पमनश्वरा वरुणपाशा मरुतो वातसूत्रप्रवाहाः–अस्मै सूर्याय यत्राकाशप्रदेशेऽन्तरिक्षं गातुं मार्गं कृतवन्तः "उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ" ( ऋ० १ । २४ । ८ ) "आ ये विश्वा पार्थिवानि पप्रथन् रोचनान् दिवः । मरुतः सोमपीतये ।" ( ऋ० ८ । ९४ । ९ ) मरुतो देवाः सर्वान् सूर्यादीन् लोकान् धारयन्ति चेति स्पष्टं तस्मात् मरुतो देवा सूर्याय गातुं यस्मिन्नाकाशप्रदेशे कृतवन्तः स सूर्यः श्येनो न श्येन इव भासः पक्षीव दीयन् गच्छन् पाथोऽन्तरिक्षमनुगच्छति । तदा तस्मिन् सूर उदिते–उदिते सूर्ये हे मित्रा-वरुणौ प्राणापानौ मम प्राणापानौ ! वां युवाम् "प्राणापानौ मित्रावरुणौ"

( तां० ६ । १० । ५ ) नमोभिरन्नैः प्रातराशैः "नमोऽन्ननाम" ( निघं० २।७ ) उतापि हव्यैः सूक्ष्मैरदनैर्होमद्रव्यैः स्वास्थ्यप्रदैर्विधेमोपचरेम ॥

उदकमपि पाथ उच्यते पानात् ।
"आचष्ट आसां पाथो नदीनाम्" (ऋ० ७ । ३४ । १०)
इत्यपि निगमो भवति ।

समग्रमन्त्रस्तदर्थश्च—

"आचष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥"

उग्रस्तेजस्वी प्रखरतापवान् सहस्रचक्षाः सहस्ररश्मिः—सहस्रदर्शनरश्मिमान् बहुदर्शकशक्तिमान् स्वयं बहुप्रकाशवान्—अन्येषां स्वप्रकाशेन बहुप्रकाशयिता नदीनां वरुणो वरयिता सर्वेषामाकर्षकस्तज्जलानामाकर्षकः सन् पुनरासां पाथो जलमाचष्टे समन्तादाकाशे व्यक्तं दर्शयति प्रकाशयति "चक्षिङ् व्यक्तायां वाचि-दर्शनेऽपि" ( अदादि० ) इति वृष्टिजलविज्ञानं प्रदर्श्यते । तदनेन बहुज्ञानदर्शन-शक्तिमता जनानां वरयित्रा तच्चित्तमाकृष्य पुनर्ज्ञानं दर्शनशक्तितुल्यं प्रदाय, व्यक्तं ज्ञानदर्शनयुक्तं कर्तव्यमिति ॥

अन्नमपि पाथ उच्यते पानादेव ।
"देवानां पाथ उपवक्षि विद्वान् ।" (ऋ० १०।७०।१०)
इत्यपि निगमो भवति ।

समग्रमन्त्रस्तदर्थश्च—

वनस्पते रशनया नियूया देवानां पाथ उपवक्षि विद्वान् ।
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥

वनस्पते हे अग्ने यज्ञाग्ने ! "अग्निर्वै वनस्पतिः" ( कौ० १० । ६ ) "वन-स्पतिः—अग्निरिति शाकपूणिः''''तस्यैषापरा भवति"—"वनस्पते रशनया नियूय" ( निरु० ८ । २० ) त्वं देवानां वायुप्रभृतिदेवानां पाथोऽन्नं हविःस्वरूपं हव्यं वा रशनया—अशनया—अशनशीलया भक्षणशीलया व्यापनशीलया वा ज्वालया "अशो रश च युच्" ( उणा० २ । ७६ ) नियूय नियम्य स्वायत्तीकृत्य, उप-वक्षि—उपहरसि—उपवह—उपरि प्रापय विद्वान् स्वोपकारं जानन् जन इव, एवं पृथिवीतः—उपरि यो देवो वायुः स्वदाति—आस्वदते स पुनर्हवींषि स्वप्रवाहैः हवींषि हव्यानि कृणवत् प्रसृतानि करोति, इत्थं मम हवं होतव्यं दानं द्यावा-पृथिव्यौ—आकाशमण्डलं पृथिवीस्थानं चावतां प्राप्नुताम् । आकाशमण्डलं तत् प्राप्य मेघं प्रीणीतां पृथिवीस्थलं प्राप्यौषधिवनस्पतीन् पुष्णीताम् ॥

सवीमनि ॥ ३१ ॥
सवीमनि प्रसवे ।
"देवस्य वयं सवितुः सवीमनि" (ऋ० ६ । ७१ । २)
इत्यपि निगमो भवति ॥

भा०—'सवीमनि' इत्यनवगतम् । 'प्रसवे' इत्यवगमः, धातोरनेकार्थत्वाद्-नेकार्थं च । "षु प्रसवैश्वर्ययोः" ( भ्वादि० ) ततः "हृभृधृसृस्तृश्रम्भ्य इमनिच्" ( उणा० ४ । १४८ ) धातोर्बाहुलकात् ।

वक्तव्यम्—यद्यप्यन्येऽपि मन्त्राः सन्ति यत्र 'सवीमनि' इति शब्दोऽस्ति परन्तु यास्केन "देवस्य वयं सवितुः सवीमनि...." इति मन्त्र एव कथमुदाहृतः । उच्यते । अन्यत्र मन्त्रेषु 'सवीमनि' शब्दः सकृत् पठितः, तत्र सः 'प्रसवे' इत्यर्थेऽनायासेन योजयितुं शक्यते परन्तु प्रस्तुते मन्त्रे 'प्रसव' इति शब्दः पृथगपि पठ्यते तेन तस्मिन्नेवार्थे सन्देहजनकः, सन्दिग्धत्वादस्पष्टत्वादुदाहृतो मन्त्रः, 'षु' धातुः 'प्रसवैश्वर्ययो' इत्यनेन प्रसवः—प्रसूतिः प्रादुर्भावः, तथा 'प्रसवः' ऐश्वर्यम्—ईश्वरता—शासनम् । प्रस्तुते मन्त्रे द्वयोरर्थयोः समावेशः । अन्यत्र मन्त्रेषु 'सवीमनि' शब्दस्य सकृत्प्रयुक्तत्वात्—एक एवार्थो लक्ष्यते । प्रकटीभावो यद्वा—ऐश्वर्यं शासनम् ।

तद्यथा—

इदं ह नूनमेषां सुम्नं भिक्षेत मर्त्यः ।
आदित्यानामपूर्व्यं सवीमनि । ( ऋ० ८ । १८ । १ )

एषामादित्यानां सूर्यरश्मीनां सवीमनि प्रसवे प्रकटीभावे प्रातर्वेलायाम् "प्राचीदिगग्निरधिपतिरसितो रक्षिता, आदित्या इषवः" (अथर्व० ३ । २७ । १) आदित्याः सूर्यरश्मयः । मर्त्यो मनुष्यो नूनमवश्यमिदमपूर्व्यमनश्वरं सुम्नं सुख-मध्यात्मसुखं परमात्मोपासनसुखं भिक्षेत प्रार्थयेत ॥

आ प्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।
प्र बाहू अस्राक् सविता सवीमनि निवेशयन् प्रसुवन्नक्तुभिर्जगत् ॥
( ऋ० ४ । ५३ । ३ )

सविता देवः सूर्यो देवो दिव्यानि दिवि भवानि द्युमण्डलस्थानि पार्थिवा—पार्थिवानि रजांसि लोकलोकान्तराणि—आ प्रा आपूरयति स्वाय धर्मणे स्वधर्म-पालनाय लोकानां प्रकाशनं धारणं च सूर्यस्य स्वधर्मस्तदर्थाय श्लोकं कृणुते श्रवणीयं प्रशस्तं प्रसिद्धिकरं कर्म करोति "श्लोकः शृणोतेः" ( निरु० ९ । ९ )

"पत्यौ मे श्लोकं उत्तमः" ( ऋ० १० । १५९ । ३ ) स सूर्योऽक्तुभिः कान्तैः किरणैः "अञ्जू कान्तौ" ( रुधादि० ) बाहू धारणाकर्षणाख्यौ भुजौ प्रासृजत् प्रसृजति प्रसारयति सवीमनि प्रसवे–ऐश्वर्ये शासने–इव स्ववशे जगत् जातमात्रं प्रसुवन्–उत्पादयन् निवेशयन् प्रलीनीकुर्वन् नाशयन् मारयन् बाहू प्रसारयति ॥

यास्कप्रदर्शिते मन्त्रे–ऐश्वर्यं प्रकटीभावश्च द्वावर्थौ लक्ष्येते—

देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने ।

यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥

सवितुरुत्पादकस्य देवस्य परमात्मनः सूर्यस्य वा श्रेष्ठे सवीमनि प्रसवे, ऐश्वर्ये शासने नियमे च वयं स्याम तत्रैवं तु वसुनो वासकस्य धनस्य दातव्ये दावने दाने "दावने दानस्य" ( निरु० ४ । १७ ) स्याम–स्थिताः स्याम । "दाञ् दाने" ( भ्वादि० ) ततः "आतो मनिन्क्वनिप्वनिपश्च" ( अष्टा० ३ । २ । ७४ ) इत्यनेन कर्मणि वनिप् प्रत्ययोऽल्लोपाभावश्च छान्दसः । यस्त्वं सवितः ! भूमनो भूम्नो महतः 'अल्लोपाभावश्च छान्दसः' विश्वस्य विश्वस्मिन् जगति वर्तमानस्य द्विपदो मनुष्यादेः, चतुष्पदो गवादेः प्रसवे प्रकटीभावे–उत्पादे जागरणे वा निवेशने विनाशे शयने वापि–असि–प्रभुरसि ॥

सप्रथाः ॥ ३२ ॥

सप्रथाः सर्वतः पृथुः ।

"त्वमग्ने सप्रथा असि" ( ऋ० ५ । १३ । ४ )

इत्यपि निगमो भवति ॥

भा०—'सप्रथाः' इत्यनवगतम् । 'सर्वतः पृथुः' इत्यवगमः । विशेषणमिदं विशेष्यस्याग्नेः । अग्निरभिधेयो विशेष्यत्वेन । सर्वत्र प्रथनशीलः सर्वत्र प्रसिद्धो वा । सर्वस्मिन् प्रथते–इति सर्वशब्दोपपदात् "प्रथ प्रख्याने–प्रसिद्धौ" (भ्वादि०) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) सर्वशब्दस्य 'स' भावः । समग्रमन्त्रस्तदर्थश्च—

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।

त्वया यज्ञं वितन्वते ॥

हे अग्ने परमात्मन् ! विद्वन् ! भौतिकाग्ने ! वा त्वं परमात्मन् ! सप्रथाः सर्वतः सर्वत्र गुणतः स्वरूपतश्च प्रसिद्धो व्यापकोऽसि । विद्वन् ! त्वं सर्वत्र विद्यया प्रख्यातोऽसि, भौतिकाग्ने ! त्वं सर्वतः सर्वत्र वा प्रकाशस्वरूपतः प्रसिद्धः प्रथनशीलश्चासि । अथ परमात्मन् ! त्वमुपासकैर्जुष्टः सेवितव्य उपास्यो ध्यातव्यस्तेषां

स्वीकर्ता वरणीयश्चासि, विद्वन् ! त्वं शिष्यैः सेवितव्यस्तेषां स्वीकर्ता वरणीयश्चासि, भौतिकाग्ने ! त्वं याज्ञिकैर्यजमानैः सेवितव्यस्तैस्तस्य हविष आदाता वरणीयश्चासि । परमात्मन् ! त्वयाऽध्यात्मयज्ञमुपासका विशिष्टमनुतिष्ठन्ति, विद्वन् ! त्वया ज्ञानयज्ञं विद्यार्थिनो विशिष्टमनुतिष्ठन्ति । भौतिकाग्ने ! त्वया हवनयज्ञं याज्ञिका विशिष्टमनुतिष्ठन्ति ॥

विदथानि ॥ ३२ ॥
विदथानि वेदनानि ।
"विदथानि प्रचोदयन्" ( ऋ० ३ । २७ । ७ )
इत्यपि निगमो भवति ॥ ७ ॥

भा०—'विदथानि' इत्यनवगतं पदम् । 'वेदनानि' इत्यवगमः । विद्धातो र्भावकरणाधिकरणानि सम्स्याभिधेयानि । यथायोग्यं ज्ञानाद्यर्थकात्—विद् धातोः "हविदिभ्यां कित्—अथ" (उणादि० ३।११५) 'विदथानि' इति पदमनेकेषु मन्त्रेषूपलभ्यते भावे करणेऽधिकरणे वा पृथक् पृथगर्थे परन्तु—उदाहृते मन्त्रे भावकरणाधिकरणानां सर्वेषामर्थानां साङ्कर्यं लक्ष्यते । प्रथमं तावत् पृथक्पृथगर्थको मन्त्रः प्रदर्श्यते । विदथानि वेदनानि ज्ञानानि—

प्राञ्चं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन् ।
दिवः शशासुर्विदथा कवीनां गृत्साय चित्तवसे गातुमीषुः ॥
( ऋ० ३ । १ । २ )

प्राञ्चं प्राञ्चन्ति प्रकृष्टं पूजयन्ति विदुषो यस्मिन् जनास्तं विद्वत्सङ्गं विद्यासम्मेलनं यज्ञं वयं कुर्मः, तत्र गीर्वाक्—विद्या वर्धतां तथा समिद्भिः प्राणैः प्राणायामैः "प्राणा वै समिधः प्राणा ह्येतं समिन्धते" ( शत० ९ । २ । ३ । ४४ ) नमसा नमस्कारेण जपोपासनेनाग्निं, परमात्मनं दुवस्यन् दुवस्येम सेवेमहि 'दुवस्यन्' पुरुषव्यत्ययेनोत्तमस्य स्थाने प्रथमपुरुषो लेटि । कवीनां विदुषां विदथा—विदथानि ज्ञानानि "ज्ञानानि" ( सायणः ) "विज्ञानानि" ( दयानन्दः ) दिवो द्योतमाना विद्वांसः शशासु—शंसन्ति प्रशंसन्ति, गृत्साय स्तोतव्याय तवसे बलवते प्रवृद्धाय महते गातुं गानं स्तवनमीषुरिच्छेयुर्जनाः ॥

विदथानि वेदनानि लाभाः—

एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव । ( ऋ० १।१३०।१ )

इन्द्रः परावतो दूरदेशात्—न—इव, आयाहि—आगच्छ, नोऽस्मान्—उप—उपगच्छेत् प्राप्नुयात् । अयं समीपवर्ती—अग्निरग्रणेता विदथानि वेदनानि लाभान्—इव—अच्छाभि प्राप्तुम् "अच्छाभेराप्तुम्" ( निरुक्त० ५ । २८ ) ॥

विदथानि वेदनानि करणानि—

नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।

(ऋ० ३ । १ । १८)

मर्त्यानां मनुष्याणां राजा—अमृतो मरणधर्मरहितः परमात्मा विदथानि वेदनानि ज्ञानकरणानि—अन्तःकरणानि साधन् साधयन्—शोधयन् दुरोणे गृहे हृदयप्रदेशे निषसाद निषीदति ॥

विदथानि वेदनानि—अधिकरणानि—

वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः ।

ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥

(ऋ० ६ । ५१ । २)

यो विप्रः स्वसत्तया विश्वं जगत् विशेषेण पूरयति स सूरः—उत्पादकोऽर्यः स्वामी परमेश्वरोऽस्येषां स्वस्मान्निम्नानां देवानां वसुरुद्रादित्यानां त्रीणि विदथानि वेदनानि विद्यन्ते तिष्ठन्ति येषु तानि स्थानानि पृथिव्यन्तरिक्षद्युलोकाख्यानि वेद जानाति "विदथानि स्थानानि" (सायणः) सनुतरन्तर्हितं जन्म च आ—समन्ताद् वेद जानाति । अथ मर्तेषु मनुष्येषु—ऋजु ऋजूनि सत्यानि पुण्यकर्माणि वृजिनानि पापानि च पश्यन् जानन् तदनुरूपं फलमभिचष्टे प्रकाशयति तथा—एवान् मार्गान् योनीः शरीराणि च प्रकाशयति ॥

अथ यास्कोदाहृतो मन्त्रो यत्रानेकार्थसमावेशः—

होता देवो अमर्त्यः पुरस्तादेति मायया ।

विदथानि प्रचोदयन् ॥

आध्यात्मिकदृष्ट्या—

अमर्त्योऽमरो होता सृष्टियज्ञस्य होता देवः परमात्मा "अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारम्०" (ऋ० १ । १ । १) पुरस्तात् प्रारम्भसृष्टौ मायया प्रज्ञाधर्मेण मानसप्रवाहेण प्राप्नोति—प्रारम्भिकान् साङ्कल्पिकदेहवतः परमर्षीन् विदथानि प्रचोदयन्, विदथानि वेदनानि ज्ञानानि लाभान् ज्ञानकरणानि यद्वा ज्ञानाधिकरणानि वेदान्, वेदो घञन्तः शब्दः करणेऽधिकरणे च कारके, वेदनानि विद्यमानत्वस्य स्थानानि वा प्रेरयन् ।

आधिदैविकदृष्ट्या—

होता देवः सूर्यः प्रकाशस्य दाता रसानामत्ता—आदाता—आकर्षयिता देवो द्योतमानः "असौ वै होता योऽसौ सूर्यस्तपति" ( गो० उ० । ६ । ३ ) "अस्य

वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः" (ऋ० १ । १६४ । १) सूर्यो होता मन्त्रवर्णनात्। अमर्त्यः—अस्तं गच्छन्नपि न मर्त्यः प्रत्यहं प्राप्तः स पुरस्तात् पूर्वस्यां दिशि प्रत्यहमेति प्राप्तो भवति, एति—इण् गतौ, गतेर्ज्ञानगमन-प्राप्तयोऽर्था मन्यन्ते, अत्र प्राप्तिरर्थो गृह्यते। स च मायया प्रज्ञानेन केतुना प्रकाशेन रश्मिसमूहेन वा "माया, केतुः, प्रज्ञाननाम" ( निघं० ३ । ९ ) "उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्" (ऋ० १ । ५० । १ ) एवं प्रज्ञानेन केतुना रश्मिसमूहेन स विदथानि वेदनानि वस्तुज्ञानानि वस्तुलाभान् ज्ञानकरणानि नेत्रादीनि ज्ञानाधिकरणान्यतःकरणानि प्राणिनां स्वस्वविद्यमानत्वस्य निवासस्य स्थानानि प्रचोदयन् प्रेरयन् प्राप्तो भवति ॥

आयन्तः ॥ ३४ ॥

"आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम॥" ( ऋ० ८ । ९९ । ३ )

समाश्रिताः सूर्यमुपतिष्ठन्ते। अपि वोपमाथ स्यात् सूर्यमिवेन्द्रमुपतिष्ठन्त इति। सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः। स यथा धनानि विभजति जाते च जनिष्यमाणे च, तं वयं भागमनुध्यायामौजसा बलेन। ओज ओजतेर्वोब्जतेर्वा।

भा०—'आयन्तः' इत्यनवगतम्। 'आश्रयन्तः' इत्यवगमः। 'समाश्रिताः' इत्यर्थप्रदर्शनम्। "श्रिञ् सेवायाम्" ( भ्वादि० ) ततः शतृप्रत्ययः, तत्र शपि, इकारस्य गुणे प्राप्ते वृद्धिश्छान्दसी। आङ्मध्येगतो वा आयन्तः शतृप्रत्ययान्तश्चैष प्रयोगो भूतकालार्थाभिधायी। 'आयन्तः—इव सूर्यम्' इति, 'समाश्रिताः सूर्यमुपतिष्ठन्ते' इवशब्दोऽनर्थकः। यद्वा 'सूर्यमिवेन्द्रमुपतिष्ठन्ते।'

मन्त्रार्थः—

आयन्तः समाश्रिताः सन्तो रश्मयः सूर्यमुपतिष्ठन्ते सूर्यमुपसेवन्ते यद्वा सूर्यमिव—उपासकाः खल्विन्द्रं परमात्मानमुपसेवन्ते। एवमिन्द्रस्य परमात्मनो विश्वा सर्वाणि धनानि भक्षत—विभक्षमाणाः—भक्तुमिच्छन्तः—इन्द्रं सेवध्वम्। भक्षत 'भज' धातोः सेवार्थात् सन्नन्तात् 'अतच्' औणादिकः कर्तरि, अभ्यासस्याभावो असो लुगामन्त्रितम् 'भक्षत' स—इन्द्रो यथा सेवकेभ्यो धनानि विभजति, जाते जनमाने जन्यमाने—जनिष्यमाणे च तथा वयमपि, न सम्प्रत्यर्थे

सम्प्रति मागं धनभागमोजसा बलेनाधिकारेण प्रतिदीधिम-अनुध्यायाम। ओजस्-'उज सामर्थ्ये' इति नैरुक्तो धातुः। "सर्वधातुभ्योऽसुन्" (उणा० ४। १८९) यद्वा "उब्ज आर्जवे" (तुदादि०) ततः "उब्जेर्बले बलोपश्च" (उणा० ४। १९२) बलेऽर्थे 'ओजः'॥

आशीः॥ ३५॥

आशीराश्रयणाद्वाऽऽश्रपणाद्वा। अथेयमितराशीराशास्तेः।

"इन्द्राय गाव आशिरम्" (ऋ० ८। ६९। ६)

इत्यपि निगमो भवति।

"सा मे सत्याशीर्देवेषु" (मै० सं० १। ४। ५, काठ० ५। ३, ३२। ३) इति च॥

भा०—'आशीः' इत्येतदनवगतमनेकार्थं च। आश्रयणात्, आश्रपणात्-धातुनिर्देशरूपोऽवगमः, इत्येकस्मिन्नर्थे। 'आशास्तेः' इत्यवगमो धातुरूपः, द्वितीयेऽर्थे। आङ्पूर्वकात् "श्रिञ् सेवायाम्" (भ्वादि०) यद्वा आङ्पूर्वात् "श्रा पाके" (अदादि०) अत्र निरुक्ते "श्रपणात्' कथनेन 'श्रा पाके' गृह्यते न तु 'श्रीञ् पाके' (क्रयादि०) 'श्रपणम्' 'श्रा' धातोः पुकि मित्संज्ञत्वात्-णिचि ह्रस्वत्वं जातम्, श्रपणं पाचनम्। ततः क्विप्, धातोः 'शीर्' भावः प्रत्ययमभिलक्ष्य पूर्वमेव, इत्यनवगतत्वम्। ततो भिन्ना 'आशीः' "आङः शासु इच्छायाम्" (अदादि०) ततोऽपि क्विप् प्रत्ययः, उपधाया ईकारः, आशीः।

वक्तव्यम्—यास्केन 'आशिरम्' शब्दस्य वाच्यं नोक्तम्। 'आशिरम्' इत्यनेन किं वस्तु ग्राह्यं केवलं निरुक्तिरेव कृता, सा च द्विविधा 'आश्रयणात्', 'आश्रपणात्' एवं निरुक्तिद्वैविध्येन द्वे वस्तुनी लक्ष्येते, तत्रैकं तु क्षीरं द्वितीयं घृतम्। इन्द्रस्य पानं सोमः, पूयमाने सोमे क्षीरमपेक्ष्यते, पूते सोमे संस्कारार्थं घृतमपेक्ष्यते। पूयमाने सोमे 'आशिरम्' इत्यनेन क्षीरं दुग्धं गृह्यते-आश्रयणाय, पूते सोमे 'आशिरम्' शब्देन घृतं गृह्यते श्रपणाय संस्काराय। यास्केन तथाभूतो मन्त्र उदाहृतः, यत्रार्थद्वयेन भवितव्यम्, क्षीरं च घृतं च।

क्षीरार्थे आशीः "आशिर्' शब्दः—

पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः।

हरे सृजान आशिरम्॥ (ऋ० ९। ६४। १४)

हे गिर्वणः-वाचा प्रशंसनीय हरे हरितवर्ण सोम! त्वं पुनानः पूयमानः-

आशिरमाश्रयणीयं क्षीरं दुग्धं प्रति सृजमानस्तत्र सङ्गच्छमानो जनाय वरिवो धनं स्वास्थ्यधनमूर्जमन्नं बलञ्च कुरु ॥

घृतार्थे आशीः 'आशिर्' शब्दः—

इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।

एनामृतस्य पिप्युषीः ( ऋ० ८ । ६ । १९ )

हे इन्द्र ! तव—इमाः पृश्नयो गावो यज्ञस्य पिप्युषीः पिप्याना वर्धयित्र्यः—एनामाशिरमाश्रपणीयं घृतं दुहते दुहन्ति ॥

आशीः 'आशिर्' शब्दः क्षीरघृतयोरर्थे यास्कोदाहृते "इन्द्राय गाव" इति मन्त्रे प्रयुक्तः स समग्रो मन्त्रस्तदर्थश्च—

इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।

यत्सीमुपह्वरे विदत् ॥

वज्रिणे वाग्मिने विदुषे ब्राह्मणाय "वाग्वि वज्रः" ( ऐ० ४ । १ ) तथा शासकाय "वज्रः शासः" ( शत० ३ । ८ । १ । ५ ) अथ च—अग्निहोत्रिणे "वज्रो वाऽग्निः" ( शत० ३ । ५ । ४ । २ ) इन्द्राय—इन्द्रियाणां स्वामिने ब्राह्मणाय, ऐश्वर्यवते राज्ञे यजमानाय "इन्द्रो वै यजमानः" ( शत० २ । १ । २ । ११ ) गावः—आशिरम्—आश्रयणीयं क्षीरं दुग्धं तथा, आशिरम्—आश्रपणीयं पाच्यं घृतं मधुरं दुग्धे दोग्धि दोग्धा, उपह्वरे—गवामुपह्वरेऽल्पगुप्ते—उपगूढे—ऊधः-प्रदेशे यल्लभते ॥

द्वितीया, 'आशीः'—आकांक्षा मङ्गलभावना या—आशीर्वादे प्रयुज्यते "आङः शासु इच्छायाम्" ( अदादि० ) इत्यतो निरुक्तकारेण यास्केन प्रदर्शिता तदुदाहरणं शास्त्रग्रन्थाद् दत्तं न तु वेदेभ्यः । कुतः । उच्यते—वेदेषु तु स्पष्टमाकांक्षा मङ्गलकामना लक्ष्यते तस्याः सकारान्तायाः प्रत्यक्षमुपलभ्यमानत्वात् । रेफान्तः, 'आशिर्—आशिरम्' इति प्रयोगस्तु क्षीरवाची घृतवाची वा भवति परन्तु सकारान्तः शब्द—'आशिस्' आकांक्षा मङ्गलकामना कथ्यते सा च 'आशीः' सत्य-शब्देन सम्बद्धा खलूपलभ्यते, तद्यथा—

"सत्या देवेष्वाशिषो जगाम" ( ऋ० १ । १७९ । ६ )

"देवेभ्यः सत्या आशिषः प्राप्तवान्" ( सायणः )

"विद्वत्सु सिद्धा इच्छाः—गच्छन्ति" ( दयानन्दः )

"सत्या भवन्त्वाशिषो नो अद्य ( ऋ० ७ । १७ । ५ )

यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् ।
"स्युष्टे सत्या इहाशिषः ॥" ( ऋ० ८ । ४४ । २३ )
"सत्यामाशिषं कृणुता" ( ऋ० १० । ६७ । ११ )
"अस्माकं सन्त्वाशिषः सत्याः" ( यजु० २ । १० )
"सत्या एषामाशिषः सन्नमन्ताम्" ( यजु० ३५ । २० )
"सत्यामाशिषं कृणुता" ( अथर्व० २० । ९१ । ११ )

वेदेषु प्रयुक्तस्य सकारान्तस्य मङ्गलकामनार्थत्वेन 'आशिस्' शब्दस्य निःसन्दिग्धत्वाद् यास्केन वेदेभ्यः—उदाहरणं न दत्तम्, किन्तु प्रथमैकवचने 'आशीः' प्रयोगः सन्देहभाक् समानो हि क्षीरादौ मङ्गलकामनायां च । तस्माद् वेदबाह्यं शास्त्रीयमुदाहरणं दत्तं मङ्गलार्थप्रकाशने । यथा वेदेषु सत्यशब्देन युक्ता प्रयुज्यते तथैव परम्परया शास्त्रीयवचनेऽपि सत्यशब्देन युक्ता, 'आशीः' प्रयुज्यते । तच्च समग्रवचनम्—

सा मे सत्याशीर्देवेषु गम्यात् । शृण्वन्तु ते समर्धयन्तु जुष्टाज्जुष्टतरा पण्यात् पण्यतरा । अहेडता मनसा नु गच्छ यज्ञो देवान् गच्छतु * ( मै० सं० १ । ४ । ५, काठ० ५ । ३, ३२ । ३ )

शाखामन्त्रार्थः—

मम सा सत्याऽऽशीराकांक्षा मङ्गलकामना देवेषु—देवान् प्रति विदुषः प्रति गच्छेत् ते तां शृण्वन्तु श्रुत्वा पूरयन्तु । सा मङ्गलकामना प्रियादपि प्रियतरा तथा पण्यात् स्तुत्याद् बहुमूल्याद् रत्नादपि स्तुत्यतरा बहुमूल्यतरा, हे प्रियजन ! त्वमक्रोधवता मनसा देवाननु—देवान् प्रति गच्छ एष यज्ञश्च देवान् गच्छतु ।

यद्यपि प्रथमैकवचने 'आशीः' शब्दः ऋग्वेदे ह्येकस्मिन् स्थले विद्यते "मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः" (ऋ० १० । १२८ । ३) अत्र द्रविणमिव 'आशीः' वस्तुरूपमस्ति, न तु मङ्गलकामना, मङ्गलकामनार्थे सत्यशब्दः सह प्रयुज्यते, इति पूर्वं परम्परा प्रदर्शिता साऽत्र न तथा ।

अजीगः ॥ ३६ ॥
"यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ।" ( ऋ० १ । १६३ । ७ )

---

* 'सा मे सत्याशीर्देवान् ब्रह्मवर्चसे मा गम्यात्' (तै० सं० ३ । २ । ७ । २) इति पाठः ।

यदा ते मर्तो भोगमन्वापदथ प्रसितृतम ओषधीरगारीः ।
जिगर्तिर्गिरतिकर्मा वा गृणातिकर्मा वा गृह्णातिकर्मा वा ॥

भा०—'अजीगः' इत्यनवगतम् । 'अगारीः' इत्यवगमः "गॄ" वैदिको धातुर्जुहोत्यादिगणीयः 'निगरणे, शब्दे, उपादाने' वाऽर्थे, ततो लङ्, तत्र मध्यमपुरुषस्यैकवचने रूपं छान्दसम् ।

समग्रमन्त्रस्तदर्थश्च—

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥

हे अश्वरूपाग्ने सूर्य ! संसारस्य वोढः ! सूर्यः ! अत्रास्मिन् वसन्तकाले ते—उत्तमं रूपमपश्यम् । कथमपश्यं यत्—गोः पृथिव्याः—आपदे पृष्ठे प्राणिभ्यः—इषोऽन्नाद्योषधीर्गमयितुं प्रेरयितुमिच्छन्तमपश्यम् । "जिगाति गतिकर्मा" (निघं० २ । १४ ) त्वं पृथिव्यादीन् लोकान् वहसि न केवलमेतावदेवापि तु प्राणिभ्योऽन्नाद्योषधिवनस्पतीनपि वहसि । यदा मर्तो मनुष्यस्तव भोगं त्वया प्रापितमन्नाद्योषधिभोगमन्वानट्—प्राप्नोति भोक्तुम्, आत्—अनन्तरं त्वमपि ग्रसिष्ठो भक्षयितृतमः सन्—ओषधीरन्नाद्योषधीः—अजीगः—अगारीः—निगिरसि भक्षयसि, प्रतिगृणासि—स्वीकरोषि, गृह्णासि वा रसरूपेणेति ते व्यवहारः परोपकारपूर्वकः । अत्र शोभनो रूपकालङ्कारोऽस्ति यथा लोकेऽश्वोऽन्नादिभोजनं वहति मनुष्यार्थं मनुष्याय समर्प्यानन्तरं स्वयमपि भक्षयति तद्वद् वर्णनमत्राश्वरूपस्य सूर्यस्यास्ति ॥

अमूरः ॥ ३७ ॥
"मूरा अमूर न वयंचिकित्वो महित्वमग्ने त्वमङ्ग वित्से" ( ऋ० १० । ४ । ४ )
मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेदत्थ ॥

भा०—'अमूरः' इत्यनवगतम् । 'अमूढः' इत्यवगमः । "मुह वैचित्त्ये" ( दिवादि० ) ततः क्त प्रत्ययः । 'मूढः' लोके, ढकारस्य रेफश्छान्दसो वर्णव्यापत्त्या, नञ्पूर्वः ।

समग्रमन्त्रस्तदर्थश्च—

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन् रेरिह्यते युवतिं विश्पतिः ॥

हे चिकित्वः ! चेतनावन्—अमूर—अमूढ सदा सर्वज्ञ ! अङ्ग प्रिय ! अग्ने परमात्मन् ! त्वं महित्वं जगतो महत्त्वं विस्तारं वित्से वेत्सि, वयं न—वयं जीवा न विद्मो यतो वयं मूरा मूढाः—अल्पज्ञाः स्म । जीवस्तु शये शयने—इव जगति बहिरन्तर्हितः सन् चरति यत्र तत्र विचरति, यथोक्तमन्यत्र वेदे—"न विजानामि यदिवेदमस्मि निण्यः सन्नद्धो मनसा चरामि" ( ऋ० १।१६४।३७ ) विश्पतिः प्रजापतिः सन्तानपतिर्गृहस्थो जनः सन् । युवतिं मिश्रणधर्मवर्ती सृष्टिं जिह्वया पुनः पुनर्लेढि भुङ्क्ते ॥

शशमानः ॥ ३८ ॥

शशमानः शंसमानः ।

"यो वां यज्ञैः शशमानो ह दाशति" (ऋ० १।१५१।७)

इत्यपि निगमो भवति ॥

भा०—'शशमानः' इत्यनवगतम् । 'शंसमानः' इत्यवगमः । "शंसु स्तुतौ" ( भ्वादि० ) 'शंस' इत्यस्य शशभावस्ताच्छीलिके चानशि प्रत्यये ।

समग्रमन्त्रस्तदर्थश्च—

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।

उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥

हे मित्रावरुणौ—विद्याक्षेत्रे प्रेरयितृवरयितारौ—उपदेशकाध्यापकौ ! युवाभ्यां युवयोरर्थसाधनाय यो मेधावी ज्ञानस्य ग्रहीता यज्ञैः सत्सङ्गैः प्रशंसाकरणशीलः—उपहारं ददाति मननीयस्य विज्ञानस्य साधयिता यजति सङ्गतिं करोति—अध्ययनश्रवणयज्ञं करोति तं खलु युवामुपगच्छतं तदीयमुपहाररूपयज्ञं च भुञ्जीयाथाम् । गिरोऽध्यापनप्रवचनान्यच्छाभिलक्ष्याथ सुमतिं चाभिलक्ष्यास्मान् कामयमानौ—अस्माकं तथाभूतं सत्सङ्गयज्ञं प्राप्नुतम् ॥

देवो देवाच्या कृपा ॥ ३९ ॥

"देवो देवाच्या कृपा" ( ऋ० १ । १२७ । १ )

देवो देवान् प्रत्यक्तया कृपा ।

कृपू कृपतेर्वा कल्पतेर्वा ॥ ८ ॥

'देवो देवाच्या कृपा' इति त्रीणि पदानि खल्वानुपूर्वी दर्शयितुम् । तत्र 'देवाच्या', 'कृपा' द्वे पदे 'देवो' इति शब्देन सह सम्बद्धेऽनवगते । 'देवप्रत्यक्तया देवप्रतिगतया, कृपया' इत्यवगते । देवशब्दोपपदात् "अन्चु" धातोः "ऋत्वि-

"स्पृशकृसगदिगुष्णिगञ्चुयुजिकुञ्चां च" ( अष्टा० ३ । २ । ५९ ) इत्यनेन कर्मण्युपपदे भूते च छान्दसः क्विन् प्रत्ययः "विश्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये" ( अष्टा० ६ । ३ । ९० ) इति टिस्थाने अद्रेरभावश्छान्दसः पुनः, अनिदितस्य नकारलोपः क्विति: देवाची "अञ्चतेश्चोपसंख्यानम्" वा० ( अष्टा० ४ । १ । ६ ) इति ङीप् स्त्रियाम् । तृतीयैकवचने 'देवाच्या' इति विशेषणम् 'कृपा' इति शब्दस्य "कृपा" इति तृतीयैकवचनं स्त्रियाम्, "कृपु सामर्थ्ये" ( भ्वादि० ) इत्यतः, यद्वा "कल्प अर्चनायाम्" वैदिको धातुः "कल्पते अर्चतिकर्मा" (निघं० ३।१४) इत्यतः केवलाद् धातोरविहितोऽपि क्विप् प्रत्ययः ।

समग्रमन्त्रस्तदर्थश्च—

अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तं॒ वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसं॒ विप्रं॒ न जा॒तवे॑दसम् । य ऊ॒र्ध्वया॑ स्वध्व॒रो दे॒वो दे॒वाच्या॑ कृ॒पा । घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॒ऽऽजुह्वा॑नस्य स॒र्पिषः॑ ॥

जातवेदसं प्रसिद्धविद्यं पुरातनं विप्रं न विप्रमिव जातवेदसं प्रकटविद्यं सम्प्रति विद्याजातं सहसः सूनुं बलवतो जनस्य पुत्रं तथा बलवतः पुत्रस्योत्पादयितारम्, उक्तं यथाऽन्यत्र "मम पुत्राः शत्रुहणो...." ( ऋ० १० । १५९ । ३ ) "सभेयो युवाऽस्य यजमानस्य वीरो जायताम्" ( यजु० २२ । २२ ) वसुं वसुसंज्ञकं ब्रह्मचारिणमग्निं गृहस्थाश्रमस्याग्रणीं होतारमादातारं कन्यायाः स्वीकर्तारं तस्याः पाणेर्ग्रहीतारं दास्वन्तं कन्यायै वीर्यस्य दातारं तस्यां वीर्यस्य सेक्तारं मन्ये यः खलु स्वध्वरः सुष्ठुयज्ञवान् विवाहसंस्कारे शोभनयज्ञवान् सन्—ऊर्ध्वया—ऊर्ध्वरेतस्विन्या देवाच्या देवान् प्रत्यक्तया विदुषां सम्मुखं विवाहसंस्कारे स्वयंवरे प्राप्तया कृपा सन्तानोत्पादने समर्थया तथाऽर्चनीययाऽर्चनस्वाभावया च कन्यया सह देवस्तस्याः—देवो मान्यः पतिदेवः सन् "कृप् कृपतेर्वा कल्पते र्वा", "कल्पते अर्चतिकर्मा" ( निघं० ३ । १४ ) "यत्र नार्यस्तु पूज्यन्ते" ( मनु० ३ । ५६ ) जुह्वानस्य हूयमानस्य सर्पिषः आज्यस्य शोचिषा तेजसा घृतस्य दीप्तस्य विभ्राष्टिं दीप्तां ज्वालामनु दीप्तज्वालानुरूपं कन्यां वष्टि कामयते ॥

उक्तमन्त्रे विवाहप्रसङ्गः स्पष्टः, स्वामिदयानन्देनापि सूचितम् "अथ कीदृशयोः स्त्रीपुरुषयोर्विवाहो भवितुं योग्य इत्याह ॥

विजामातुः ॥ ४० ॥

"अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा

घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम्॥ (ऋ० १।१०९।२) अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः। विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षते। असुसमाप्त इव वरोऽभिप्रेतः। जामाता जा अपत्यं तन्निर्माता। 'उत वा घा स्यालात्'—अपि च स्यालात्। स्याल आसन्नः संयोगेनेति नैदानाः। स्याल्लाजानावपतीति वा। लाजा लाजतेः। स्यं शूर्पं स्यतेः। शूर्पमशनपवनं शृणातेर्वाऽथ सोमस्य प्रदानेन॥ "युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम्" नवतरम्॥

'विजामातुः' इत्यनवगतम् 'द्विविधमनवगतत्वमत्र, प्रथमं तु "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ...." (उणा० २।९६) अनेन निपातनात्, तत्र जाः—अपत्यं निर्माति दुहितरि यः स जमाता जाः—अपत्यमित्यनवगतं लोके लक्षणशास्त्रे च, द्वितीयं च 'वि' उपसर्गस्य 'असुसमाप्तार्थता' इत्यनवगतत्वम्। असुसमाप्तो जामाताऽपूर्णो जामाता यौवनकुलाचारादिभिर्जामातृगुणैर्विहीनः क्रीतायाः पतिर्यः स्वरूपवैगुण्यात् खलु धनेन कन्यां क्रीत्वा भार्यात्वाय विवहति, सोऽभिधेयः।

मन्त्रार्थः—

हे इन्द्राग्नी विद्युदग्नी! हे विद्युत्! हे अग्ने! विजामातुः—अपूर्णजामातृतोऽपि च स्यालात्—भगिन्याः—भ्रातृतो भूरिदावत्तरौ बहुधनस्यातिशयेन दातारौ वा युवामश्रवं शृणोमि हि सामान्यकाले लङ्। युवामतिशयेन बहुविधदातारौ स्थः, यथा विजामाता जामातृगुणैर्विहीनः कन्यायाः पित्रे बहुधनं ददातीति हीनोपमा, यथा वा स्यालः स्वभगिन्यै—उदारतया धनं ददातीति सदुपमा, ताभ्यामपि बहुधनस्य दातारौ युवां स्थः, एवं ताभ्यामपि दातृतमौ युवां हे विद्युत्! त्वमाकाशान्मेघं स्रावयसि जलवृष्टिं द्रावयसि जलं प्रयच्छसि तद् बहुदानं बृहद्दानमस्तं हि जलं जीवनहेतु, अग्ने त्वं पृथिवीतोऽन्नाद्योषधीः प्रेरयसि—अन्नौषधीर्ददासि। अथ युवयोर्गुणश्रवणज्ञानानन्तरं युवाभ्यां युवयोरर्थं सोमस्य सौम्यद्रव्यस्य हव्यस्य प्रयतीप्रदानेन हेतुना प्रयतिर्दानम्, प्रपूर्वको यम धातुर्दाने प्रयुज्यते 'प्रयच्छति' इति वत्। ततः क्तिन् प्रयतिस्तृतीयायाम् "सुपां सुलुक्—पूर्वसवर्ण॰" (अष्टा० ७।१।३९) इति पूर्वसवर्णः, प्रयती। नव्यं नवतरं स्तोमं मन्त्रं विचारं जनयामि—उत्थापयामि। यद्वा 'युवाभ्याम्' इति पञ्चमी तदा युवाभ्यां युवयोः

सकाशात् सोमस्य सौम्यधर्मस्य मेघजलस्थानादेश्च प्रयती प्रदानकरणेन हेतुना नवतरं स्तोमं विधानेन जनयामि सम्पादयामि ।

निरुक्तय:—'भूरिदावत्तरौ' 'दाण् दाने' धातोः "आतो मनिन् क्वनिब्वनिपश्च" ( अष्टा० ३ । २ । ७४ ) इति वनिप् । भूरिदावा—अतिशयेन भूरिदावत्तरः "नाद् घस्य" ( अष्टा० ८ । २ । १७ ) इत्यत्र "भूरिदाव्नस्तुड्वक्तव्यः" वा० इत्यनेन तुट्' विजामाता—असुसमाप्तजामाता 'वि' अपूर्णेऽर्थे, जामातृगुणैः पूर्णत्वाद् दुहितरं गृह्णाति—इति हेतोस्तु जामाता, परन्तु यौवनकुलाचारगुणरहितः सन् धनं दत्त्वा कन्यां गृह्णाति । स विजामाता तथाभूतः क्रीतायाः कन्यायाः पतिः 'विजामाता' इति शश्वद्दाक्षिणाजाः—आचक्षते । दाक्षिणाजाः—दक्षिणदेशस्य दक्षिणदिशो वा सम्बन्धेन वेदे न भवितव्यम् । यथा पूर्वं तृतीयाध्याये—अभ्रातृका कन्या 'दाक्षिणाजी' उक्ता दायाद्याधिकारे, अभियोगस्य द्वौ पक्षौ भवतः, तत्रैको दक्षिणोऽन्यो वामः, दक्षिणः पक्षो वादिनः, वामः प्रतिवादिनः । आजिः संग्रामः "आजिः संग्रामनाम" ( निघं० २ । १७ ) संग्रामः संघर्षः प्रतिद्वन्द्विता शस्त्रैर्वाग्भिश्च, वचनानि तत्र क्षिप्यन्ते न्यायालये वंशसभायां वा । दक्षिणश्चाजिश्च दक्षिणाजिः सोढोऽस्य दक्षिणाजिना प्रवर्तते—दाक्षिणाजी स्त्रियाम्, दाक्षिणाजाः पुंल्लिङ्गबहुवचने । तत्र—अभ्रातृका दाक्षिणाजी—अभियोगे वादिनी पितृदायाद्ये, तथैवात्र क्रीतायाः कन्यायाः प्रसङ्गे तत्पितृवंशीया जनाः—दाक्षिणाजाः—वादिनस्ते क्रीतायाः पतिं 'विजामाता' इति कथयन्ति । 'स्यालः' पत्न्याः—भ्राता, सः संयोगेनासन्नः सम्बन्धेन समीपवर्ती—इति नैदानाः—वैवाहिकसम्बन्धस्य व्यवस्थापका लोकाचारकुशलाः कथयन्ति । "सद गतौ" ततो ज्यालच् प्रत्ययो बाहुलकादौणादिकः, यथा 'स्था' धातोरालच् ( उणादि० १ । ११६ ) अथवा 'स्यात्—लाजान्—आवपति भगिनीतत्पत्योर्विवाहे तयोरुपरि स्यं शूर्पं तस्मात्—लाजान्—आवपति विकिरतीति—'स्यात् लाज् ड:' स्याल्लः—स्यालः । लाजाः "लाज भर्जने" ( भ्वादि० ) घञि । भृष्टानि तण्डुलानि लाजाः । स्यं शूर्पं स्यतेः "षोऽन्तकर्मणि" ( दिवादि० ) ततः क्यप् करणे "कृत्यल्युटो बहुलम्" धातोर्बाहुल्येऽर्थबाहुल्ये च । पुनः "आतो लोप इटि च क्ङिति च" ( अष्टा० ६ । ४ । ६४ ) शूर्पम्—अशनपवनम्—'अश भोजने' अश्यते—शू—'अश' इत्यस्य—अकारलोप कूश्च प्रत्ययः कर्मणि, तस्य पवनं शोधनसाधनम् । शू पू—डः "अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३ । २ । १०१ ) शूर्पम्, रेफोपजनः । अथवा "शु शृभ्यां निच्च किच्च—पः" ( उणा० ३ । २६ ) ॥

अोमासः ॥ ४१ ॥

ओमास इत्युपरिष्टाद् व्याख्यास्यामः ॥ ९ ॥

भा०—'ओमासः' इत्यनवगतमनेकार्थं च विशेषणरूपम् । 'अवितारः, अवनीयाः' चाभिधेया विशेष्यरूपाः । इति—तूपरिष्टात् ( निरु० १२ । ४० ) व्याख्यास्यामः ।

इति षष्ठाध्यायस्य द्वितीयः पादः ।

---

## तृतीयः पादः

---

सोमानम् ॥ ४२ ॥

"सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ।" ( ऋ० १ । १८ । १ )

सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावान्, औशिज उशिजः पुत्रः । उशिग् वष्टेः कान्तिकर्मणः । अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्त सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते ॥ १० ॥

भा०—'सोमानम्' इत्यनवगतम् । 'सोमानां सोतारम्' इत्यवगमः । विशेषणपदमतोऽभिधेयो न निश्चितः पदार्थः, विशेष्य एवाभिधेयः । अवगतमिव प्रतीयते पदमिदं किमत्रानवगतत्वमुच्यते । 'षुञ् अभिषवे' ( स्वादि० ) ततो मनिन् प्रत्यय औणादिको मध्यस्वरं पदं स्वरव्यत्ययोऽनवगतत्वमस्य पुनः प्रत्येकः सोता यस्य कस्यापीति न किन्तु सोमानामेव सोता—सोमा तं सोमानम् । निपातने—औणादिको मनिः प्रत्ययो वा । यद्वा 'सोमानम्' अन्तर्गतणिजर्थकं पदं लुप्तणिच्प्रत्ययकं तत्करोतीत्यर्थे णिच्—सोमान् करोति—इति शानचि सोमानः, द्वितीयायां सोमानं तथाकृत्वा विवरणं सोमानां सोतारम्, लुप्ते णिच् प्रत्यये स्वरस्तस्य पदे तेन मध्योदात्तं पदम् ॥

मन्त्रार्थः—

हे ब्रह्मणस्पते वेदज्ञानस्य स्वामिन् परमेश्वर ! त्वं मां सोमानां सौम्यगुणानां त्वद्दर्शनयोग्यानां गुणानां सोतारं निष्पादयितारं, त्वयि वर्तमानानामानन्दप्रवाहाणां ग्रहीतारं स्वरणं प्रकाशनवन्तं तैः सोमैः सौम्यगुणैः प्रकाशनवन्तं कुरु, योऽहमौशिजः—उशिजि प्रकाशे जातः । प्रकाशकात् सूर्याज्जातः कक्षीवान् कक्षागतः समीपवर्ती—अल्पप्रकाशः स इवाहं जीवात्माऽल्पज्ञो योऽहमस्मि तं मां कक्षीवन्तं

त्वत्समीपवर्तिनं तथा कुरु । यद्वा योऽहं जीवात्मा मनुष्यकक्षे देहे जातः—औशिजः सर्वप्रकाशकः परमात्मा त्वम् । परमात्मसम्बद्धस्त्वत्सम्बद्धः । उशिक् परमात्मा—अग्निः । उक्तं यथाऽन्यत्र वेदे "उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्ते॑ष्व॒ग्निर॒मृतो॒नि धा॑यि" ( ऋ० १० । ४५ । ७ ) ।

वक्तव्यम्—प्रकाशकात् सूर्याज्जातोऽल्पप्रकाशमयो यः कक्षीवान् तद्विवरणं क्रियते यत् कक्षीवान्—अस्ति तस्य द्वौ सम्बन्धिनौ स्तः, एको दीर्घतमाः, द्वितीयः—उशिक्, अतएव स दैर्घतमसः, औशिजश्चोच्यते । "नासत्याभ्यां पञ्चाधिका कक्षीवान् दैर्घतमसः—उशिक्प्रसूतः" ( ऋग्वेदीयसर्वानुक्रमणी ) 'कक्ष' शब्दः सन्धिसामान्यवाचकः, उशिग्दीर्घतमसोः सन्धितः प्रकटीभूतः कक्षीवान्—आकाश-प्रदेशः । उशिजो बहुवचने सूर्यरश्मयः—

इन्द्रः॒ स्व॒र्षा ज॒नय॒न्नहा॑नि जि॒गायो॒शिग्भिः॒ पृत॑ना अ॒भिष्टिः॑ ।
प्रारो॑चय॒न् मन॑वे के॒तुमह्ना॒मवि॑न्द॒ज्ज्योति॑र्बृ॒ह॒ते रणा॑य ॥
( ऋ० ३ । ३४ । ४ )

स्वःसा द्युस्थानसम्भक्तः—इन्द्रः सूर्यः—अहानि जनयन् दिनानां प्रकटीकरण-हेतोः—उशिग्भिः—प्रकाशकिरणैः—अभिष्टिरभिघातको भूत्वा पृतनाः तमसः सेनाः—जिगाय जयति मनवे कालमन्वन्तरप्रचारायाह्नां दिनानां केतुं प्रकाशकं रश्मि-समूहं प्रकाशयति बृहते महते रणाय रमणकालाय कल्पाय स ज्योतिर्विन्दते । एवं सूर्यरश्मिसमूहो यद्वा सूर्यप्रकाशः—उशिक् । दीर्घतमास्तु सूर्यप्रकाशात् पूर्वो महानन्धकारः । सूर्यप्रकाशान्धकारयोः सन्धौ प्रसिद्धः—आकाशप्रदेशः पृथिव्यां सूत्रवृतं सूत्रगोलः कक्षीवान् तत्तुल्योऽहं जीवात्मा कक्षीवान्, इति लक्ष्यमुपरि-गतम् । आधिदैविकदृष्टौ 'कक्षीवान्' इत्यत्र चित्रं पश्यन्तु भवन्तः—




आधिभौतिकदृष्टौ—हे ब्रह्मणस्पते वेदपते वेदाचार्य ! त्वं मां सोमानं विविध-

ज्ञानैश्वर्याणां सोतारं सम्पादयितारं प्रकाशनवन्तं ज्ञानवन्तं कुरु, योऽहमौशिजः–मेधाविनः सकाशात्–मातृकक्षे गर्भे जातोऽस्मि। "उशिजो मेधाविनाम" ( निघं० ३। १५ ) यद्वा–उशिजो मेधाविनो भवादृशस्य यः कश्चन शिष्यः–औशिजः कक्षीवान् कक्षावान् बद्धकौपीनो ब्रह्मचारी खल्वस्ति स इवाहं कक्षीवानस्मि तं मां तथा कुरु॥

आध्यात्मिकदृष्टौ—उशिक् परमात्मा, दीर्घतमा ममत्वसम्बद्धो देहः—"दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे।" ( ऋ० १। १५८। ६ ) ममतायाः प्रसिद्धः, ममतायां प्रवृत्तो देहो दशमे युगे, युगं युगलं दशसंख्या तद्दशमं तद्दशगुणितं शतं भवति शतवर्षपरिमिते काले जीर्णो भवति। दीर्घतमसि देहे वर्तमानो दैर्घतमसो जीवात्मा तथाऽन्तर्यामिनि–उशिजि परमात्मनि वर्तमानत्वाच्चेतनधर्मेण तस्य व्याप्यत्वात्–औशिजोऽहं कक्षीवान्–देहपाशवान् जीवात्माऽस्मि तं मां प्रकाशनवन्तं कुर्विति।

निरुक्तयः—'स्वरणम्' स्वः–स्वर् प्रकाशस्ततो मतुबर्थे युन् छन्दसि। 'कक्षीवान्' कक्ष्या बन्धनी यस्यास्ति कक्षीवान् "कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं कर्तव्यम्" ( अष्टा० ६। १। ३७ ) इति वार्तिकेन सम्प्रसारणम्। उशिक् "वश कान्तौ" (अदादि०) ततः "वशः कित् इजि" (उणा० २।७२)॥

अनवायम्॥ ४३॥ किमीदिने॥ ४४॥

"इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं तपु॒र्य॑यस्तु च॒रुर॑ग्नि॒वाँ इ॑व। ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑॥" ( ऋ० ७। १०४। २ )

इन्द्रासोमावघस्य शंसितारम्। अघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति। तपुस्तपतेः। चरुर्मृच्चयो भवति चरतेर्वा समुच्चरन्त्यस्मादापः। ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे क्रव्यादे क्रव्यमदते। घोरचक्षसे घोरख्यानाय। क्रव्यं विकृताज्जायत इति नैरुक्ताः। द्वेषो धत्तम्। अनवायम्–अनवयवम्, यदन्ये न व्यवेयुर्द्वेषस इति वा। किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा। पिशुनाय चरते। पिशुनः पिंशतेर्विपिंशतीति॥ ११॥

भा०—'अनवायम्' इति च 'किमीदिने' इति च द्वेऽनवगते पदे, एकस्मिन्नेव मन्त्रे वर्तमानत्वात् सहैव पठ्येते। 'अनवायम्' इत्यस्य 'अनवयवम्' यद्वा

'अव्यवायम्' इत्यवगमः । 'सकलम्' यद्वा 'अव्यवधानम् ।' 'निरन्तरं निष्पक्षम्' इत्यभिधेयम् । 'किमीदिने' इत्यस्य 'किमिदानीम्' इत्येव मह्यं देयं भक्ष्यं यद्वा 'किमिदं किमिदम्' वृत्तमिति प्रष्टा' इत्यवगमः । प्रष्टा विशेषणरूपो यथायोग्यं विशेष्योऽभिधेयः । 'पिशुनः' इत्यभिधेयः । 'अनवयव' शब्दस्य 'अनवाय' भावः । 'किमिदानीम्' इति शब्दस्य यद्वा 'किमिदंकिमिदम्' शब्दस्य 'किमिदिन' भावः ।

मन्त्रार्थः—

हे इन्द्रासोमौ ! राजन् तथा राजपुरोहित ! युवाम्—अघशंसं पापस्यानर्थस्य पापिनश्च प्रशंसितारमेवमघमागत्य हन्तारं पापिनमनर्थकारिणमपि समभि—सम्यगभिभवतं स्वाधीनं कुरुतं बन्धीगृहे निवेशयतं समभितापयतं दण्डयतं वा 'अभि' उपसर्गो योग्यक्रियां 'तपति' इति सन्निकृष्टामपेक्षते । "तप सन्तापे" (भ्वादि०) ततः कर्मणि 'उसिः' प्रत्ययः ( उणा० २ । १८ ) स सन्तप्यमानस्तपुः—अग्निमान् चरुरिव, यथा चरुर्मृण्मयो मृत्पात्रं जलपात्रमग्निना तप्तं योग्यकार्यकरणाय समर्थं भवति तथा सोऽपि तप्यमानः शुद्धो निर्दोषः सन् ययस्तु—यायस्यतु—भृशमायासं करोतु "यसु प्रयत्ने" ( दिवादि० ) तस्य यङ्लुगन्तप्रयोगोऽभ्यासस्य दीर्घाभावश्छान्दसः । अथ खलु ब्रह्मद्विषे यो ब्रह्म परमात्मानं वेदशास्त्रं ब्राह्मणं च द्वेष्टि तस्मै तथा क्रव्यादे मांसभक्षकाय घोरदृष्टिमते कटुशब्दवते किमीदिने यः किमिदानीमिति चरितरि यः पापं हिंसां कृत्वाऽपि न बिभेति, कथयति चाच्छेदानीं मम किं करिष्यसि त्वमित्येवं दुराग्रहवते यद्वा किमिदं किमिदमिति चरते किं तुच्छं किं तुच्छमिदमिति किमपीदं नास्तीति पिंशति—अवयवान् खण्डानि करोति पीडयति दुःखयत्यन्यान् वाचा वाऽन्येन प्रहरणेन सः पिशुनः सूचको नाशको वा । "पिश अवयवे" ( तुदादि० ) ततः "क्षुधिपिशिमिथिभ्यः कित्—उनन्" ( उणा० ३ । ५५ ) इति 'उनन्' प्रत्ययः, तथाभूताय—अनवायमनवयवमखण्डम्—अथवा—अनवायम्—अव्यवायम्—व्यवायो व्यवधानं बाधा व्यवधानमन्तरेण बाधामन्तरेण निरन्तरं निष्पक्षं क्षमारहितं च यदन्येऽद्वेषसोऽब्रह्मद्विषोऽद्वेष्टारो न व्ययेयुः—न व्यवधानं कुर्युरित्थं द्वेषस् 'असुन् प्रत्ययान्तम्' द्वेषं कोपं धत्तं धारयतं यद्वा येऽन्येऽद्वेषसोऽद्वेष्टारो ब्रह्मप्रति न द्विषन्ति ते न व्ययेयुः—व्यवगतास्तद्वद् द्वेष्टारो न भवेयुरिति दण्डं प्रयच्छतम् । अभद्राय दण्डदानेन भद्राः—अभद्रा न भवेयुः । अवायमन्तरेण द्वेषः कोपो दण्डो विधेयः । 'अवायः—त्यागः—आग्रहः पक्षो वा त्यागमन्तरेण पक्षमन्तरेण ॥

निरुक्तयः—'अघम्' आङ्पूर्वात् 'हन्' धातोः "अन्येभ्योऽपि दृश्यते"—

वार्तिकम् ( अष्टा० ३ । २ । १०१ ) इति डः प्रत्ययः, उपसर्गस्य ह्रस्वत्वं हकारस्य घकारश्च पृषोदरादित्वात् । 'चरुः' "चिञ् चयने" कुर्डित्-औणादिको बाहुलकात्-चरुः, यद्वा 'चर' धातोः-उः प्रत्ययः । ( उणादि० १ । ७ ) तापकालेऽस्मात्-आपः-उच्चरन्ति वाष्पीभूय-उपरि गच्छन्ति । तस्मात्-'चरुः ।' 'क्रव्यम्' विकृत्तात्-छिन्नात्पशोर्जायते तस्मात् 'क्रव्यम् ।' कृती छेदने ततः तव्यः प्रत्ययः, तत्र धातुप्रत्ययोस्तकारयोर्लोपोगुणाभावश्च छान्दसः पृषोदरादित्वाद्वा 'कृ-अव्य' यणादेशेन क्रव्यम् ॥

अमवान् ॥ ४५ ॥

"कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥" ( ऋ० ४ । ४ । १ )

कृणुष्व पाजः । पाजः पालनात् । प्रसितिमिव पृथ्वीम् । प्रसितिः प्रसयनात्, तन्तुर्वा जालं वा । याहि राजेवामात्यवानभ्यमनवान्-आत्मवान् [ स्ववान् ? ] वेराभूता गणेन गतभयेन हस्तिनेति वा । तृष्व्यानु प्रसित्या द्रूणाननः । तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा । असितासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः प्रपिष्टतमैरिति वा ॥१२॥

भा०—'अमवान्' इत्यनवगतमनेकार्थं चानेकव्युत्पत्तिकं च । 'अमात्यवान्, अभ्यमनवान्, आत्मवान्-आत्मज्ञानवान्-आत्मबलवान्' [ स्ववान् ] इत्यवगमो विशेषणरूपेण । विशेष्योऽभिधेयः । 'अमा' सहार्थेऽव्ययम्, ततो मतुप् प्रत्ययो ह्रस्वश्च तस्य 'अमवान्' सहायवान्-अमवान्-राजेव-अमवान्-इति कथने, अमात्यः सहायो भवति तस्मात्-अमवान्-अमात्यवान्-इति लक्ष्यार्थः परन्तु-अमवान्-अमात्यवान्, अमात्यः-अमा शब्दात् त्यप्, अमात्यशब्दात्-मतुप्प्रत्यये 'अमात्य' शब्दस्य 'अम' भावः-इत्येवात्र-अनवगतत्वं वस्तुतः । इत्येकोऽर्थः । 'अमवान्-अभ्यमनवान् ।' "अम रोगे" ( चुरादि० ) अभिपूर्वात्-अम धातोर्ल्युट् करणे कारके-अभ्यम्यते परः शत्रूरुग्णी क्रियते येन तदभ्यमनं तद्वान्-अभ्यमनवान्, अमवान् नतु स्वयं रोगवान् किन्तु-अभिशब्देन परस्मै रोगप्रदसाधनवान् शत्रवे रोगप्रदमस्त्रं यस्य सः 'अम' इति 'अभ्यमनार्थे ।' इत्येवानवगतत्वम् । राजा हि शत्रवे रोगं प्रसारयत्यौषधाद्धेणेत्ति-अमवान् । स्ववना 'स्ववान्' इति, अर्थनिर्देशः । आत्मा स्वः । तद्वान्-आत्मवान्-'आत्मवान्' एव पाठः

स्यात्, तथा च स्कन्दभाष्ये 'आत्मवान्।' मूलपाठ उपलभ्यते आत्मा चात्मीयेऽर्थे तथा 'आत्मन्' शब्दस्य 'अमभावः' आत्मीयैः सैनिकजनैः स्वैस्तद्वान्-अमवान्। इत्येवानवगतत्वम्।

मन्त्रार्थः—

देवता रक्षोहा-अग्निः-अग्निरग्रणीरग्रे नायकः। रक्षोहा-रक्षितव्यं राष्ट्रं येभ्यस्तेषां हन्ता तेषां हनने समर्थः सो रक्षोहा-अग्निः संग्रामे सेनाया नायकः सेनाध्यक्षः सेनापतिर्वा। राजा भवति सभाध्यक्षः सभापतिः-राजसभापतिः। राजाऽपि युद्धं करोति परन्तु तदाज्ञया स्वराष्ट्रसीमोपरि तद्बहिर्वा शत्रुभिः सह ससेनो युध्यते तदा स राजेव सर्वाधिकारी भूत्वा सैनिकानाज्ञापयति स्वयं च युध्यते। इत्येतद् वृत्तं मन्त्रेऽस्मिन् विद्यते। यत्-हे शत्रूणां संहारक ! सेनाया नायक ! अमवान् राजा-इव, अमात्यवान्-आत्मीयैः पुरुषैः सैन्यजनैस्तद्वानिव त्वमिभेन-इराभूतेनान्नभूतेन गणेन सैनिकगणेन "इरा अन्ननाम" ( निघं २।७ ) यद्वा गतभयेन-इतं गतं भयं यस्य स इतभयस्तेन शूरगणेन, इण् धातोः केवलादपि क्विन् प्रत्ययो भूते बाहुलकात्। "भी भये" ( जुहोत्या० ) ततः "अन्येभ्योऽपि दृश्यते वा०" ( अष्टा० ३।२।१०१ ) इति डः प्रत्ययः-"भः"-भयम्। इभेन हस्तिना वा हस्तिनमारुह्य पृथ्वीं प्रथितां संग्रामस्थलीं याहि-गच्छ, तत्र प्रसितिं न, पाजः कृणुष्व बन्धनरज्जुमिव जालमिव वा 'न' उपमार्थे। पाजो बलं सैन्यबलं कृणुष्व कुरु प्रसारय "पाजोबलम्" (निघं० २।९)। पुनस्तृष्वीमनु-"तृषु क्षिप्र नाम" ( निघं० १।१५ ) निरुक्ते स्त्रीलिङ्गे तृष्वी क्षिप्रनाम। अनुयोगात् तृतीया कल्पिता यास्केन क्षिप्रकारिण्या प्रसितिमिति प्रसित्या पूर्वोक्तया प्रसारितया जालरूपया स्वकीयसेनया सह रक्षसः शत्रून् वृणानो हिंसन् अस्-हननहेतोः "वृञ् हिंसायाम्" (क्रया०) शानच्। तपिष्ठैस्तप्ततमैरतिशयेन सन्तापकैरस्त्रैस्तान् विध्य छिन्धि ताडय, यतस्त्वमस्ता तेषामस्त्राणामस्ता क्षेप्ताऽसि।

निरुक्तयः—'पाजः' पालनात् पाल रक्षणे ( चुरादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४।१८९ ) तस्य जकारादेशः। यद्वा 'पालनात्' अर्थप्रदर्शनं न तु धातुनिर्देशः "पा" धातोः "पातेर्बले जुट् च" ( उणा० ४।२०३ ) प्रसितिः-प्रपूर्वकात् "षिञ् बन्धने" ( स्वादि० क्र्यादि० ) ततः-क्तिन् स्त्रियाम्। 'तृष्वी' "तॄ प्लवनसन्तरणयोः" ( भ्वादि० ) यद्वा "त्वरा सम्भ्रमे" ( भ्वादि० ) षुक् बाहुलात् धातोः 'तृ' भावः।

अमीवा ॥ ४६ ॥

"यस्ते गर्भममीवा दुर्णामा योनिमाशये।" ( ऋ० १०,

१६२ । २ ) अमीवाभ्यमनेन व्याख्यातः । दुर्णामा क्रिमिर्भवति पापनामा । कृमिः क्रव्ये मेद्यति, क्रमतेर्वा स्यात्सरणकर्मणः * क्रामते र्वा ॥

भा०—'अमीवा' इत्यनवगतम् । 'अभ्यमनवान्' इत्यवगमः । 'दुर्णामा' क्रिमिः अभिधेयः । "अम रोगे" ( चुरादि० ) ततः—ईवः प्रत्ययः बाहुलकात् "शेवायह्वजिह्वाग्रीवाऽप्वामीवाः" ( उणा० १ । १५४ ) इतिवत् ।

समग्रमन्त्रस्तदर्थश्च—

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥

हे स्त्रि ! यो दुर्णामा दुः—दुःखं नामयति प्रापयति दुर्णामा स हि पापनामा पापं तदेव दुःखं नामयति प्रापयति पापं दुःखम् "चित्तनामोभयतो वाहिनी नदी वहति कल्याणाय च वहति पापाय च" ( योग० १ । १२ व्यासः ) स दुर्णामाऽमीवाऽभ्यमनवान् रोगप्रदः क्रिमिस्ते गर्भं योनिमाक्रम्य तत्र शेते सन्तिष्ठते तं क्रव्यादमन्तस्थमांसस्य भक्षकमग्निः—चित्रक ओषधिः "चित्रकोऽनलनामा च पाठीव्यालस्तथोषणः" ( भावप्रकाश नि० ) "चित्रकोऽग्निश्च शार्दूलश्चित्रः पालीकटुशिखी कृशानुर्दहनो व्यालो ज्योतिष्कः पालकस्तथा, अनलो दारुणो वह्निः पावकः" ( राजनिघण्टु ) स चित्रक ओषधिविशेषो ब्रह्मणा—उदुम्बरेण सह मिश्रितः "उदुम्बरः—ब्रह्मवृक्षः" ( नि० २० ) "ब्रह्मवृक्षः—उदुम्बरे" ( र० मा० वैद्यकशब्दसिन्धुः ) निरमीनशत् निःशेषेण नाशयति ।

निरुक्तथः—क्रिमिः 'क्रव्ये मेद्यति—स्निह्यति गृध्यति भक्षयितुं—'क्रव्ये' उपपदात् 'ञिमिदास्नेहने' ( दिवादि० ) 'क्रव्यमिद्' इन् डिद्धर्मा क्रव्यस्य क्रिभावः क्रिमिः । यद्वा 'क्रम' धातोर्हिंसार्थस्य 'आङ् पूर्वस्य, आक्राम्यति हिनस्ति "क्रमितमिशीङ्स्तम्भामत इच्—इन् प्रत्ययः" ( उणा० ४ । १२२ ) । यद्वा सरणकर्मणः क्रमतेः, सरणमत्र निरन्तरं सृतिः 'सरसर' इति यदुच्यते सरसरायते इत्यनुकरणं यस्य ॥

दुरितम् ॥ ४७ ॥

---

* 'क्रमतेर्वा स्यात्—हिंसार्थस्य' इति क्वचित्पाठः । अहम्मन्ये—अत्रोभाभ्यां पाठाभ्यां भवितव्यं यथाक्रमं सङ्गत्यर्थम् । अर्थात्—क्रमते हिंसार्थस्य क्रामतेः सरणकर्मणः ।

"अतिक्रामन्तो दुरितानि विश्वा।" ( पै० सं० १७ । ३२ । ८ ) अतिक्रममाणा दुर्गतिगमनानि सर्वाणि ॥

भा०—'दुरितम्' इत्यनवगतम् । 'दुर्गतिगमनम्' इत्यवगमः साभिप्रेयः । "दुस् दुःखे" ( अव्ययार्थशास्त्रम् ) यथा दुःसह, दुर्बोधः—दुर्ज्ञेयः । "दुर् निन्दायां पापे" ( अव्ययार्थशास्त्रम् ) यथा दुर्जनः, दुर्बुद्धिः, दुष्कर्म, दुष्कृतम् । अत्रानवगतप्रसङ्गे दुर् निन्दायां पापेऽर्थे वर्तते । 'दुर्—इतम्' दुर्—पापं दुर्गतिः दुर्गतेः पापस्य गमनानि—आचरणानि प्रवृत्तयः—दुर्गतिगमनानि पापाचरणानि पापप्रवृत्तयः । इति त्वनवगतप्रसङ्गे । अवगतप्रसङ्गे । 'दुस्—दुःखे' दुस्—इतम्—दुर्गतं, दुःखेन—एति गच्छति यस्मिन् दुष्पथः—दुर्मार्गः, तमोऽन्धकारस्तथा दुः—दुःखं गम्यते प्राप्यते यस्मिन् रोगः । अत्रानेकार्थसन्दर्भत्वात् "क्तोऽधिकरणे च ध्रौव्य-गतिप्रत्यवसानार्थेभ्यः" (अष्टा० ३ । ४ । ७६ ) तस्मात् ! दुरितं दुःस्थलं दुष्पथ-स्तमो रोगश्च । यस्मिन् मन्त्रे 'दुरित' शब्दोऽनेकार्थः स शाखीयो मन्त्रो यास्के-नोदाहृतः "अतिक्रामन्तो दुरितानि विश्वा" इति । प्रथमं चतुर्णामर्थानां पृथक्पृथ-गर्थकाः—मन्त्राः प्रदर्श्यन्तेऽस्माभिः ।

दुरितानि—दुर्मार्गाः—

हिरण्यत्वङ् मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।
मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥

( ऋ० ५ । ७७ । ३ )

अत्र मन्त्रे—अश्विनौ येन रथेन विश्वा दुरितानि सर्वान् दुःखेनैतुं गन्तुं योग्यान् मार्गान्—दुर्मार्गान्—अतियाथः, इति स्पष्टं दुरितानि दुर्मार्गाः "दुरितानि दुर्गमनान् मार्गान्—अतियाथ—अतिक्रम्य गच्छथ" ( सायणः ) "दुरितानि दुःखेनैतुं प्राप्तुं योग्यानि स्थानान्तराणि" ( दयानन्दः )

दुरितानि—तमांसि—

चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।
दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥

( अथर्व० १३ । २ । ३४ )

देवानां ग्रहनक्षत्राणामद्भुतः प्रज्ञानरूपः प्रमुखो ज्योतिष्मान् दिवाकरः सूर्यः प्रदिशः—प्रदिशि प्रधानदिशि पूर्वस्यां दिशि—उद्यन्—उदयमानो द्युम्नैर्द्योतमानै-रश्मिभिः "द्युम्नं द्योततेः" ( निरु० ५ । ५ ) विश्वानि दुरितानि दुःखेन गमनं भवति येषु तानि तमांसि—अत्यतारीत्—अतितारयति—अत्यन्तमपसारयति ।

दुरितानि–रोगाः—

अत्यैनं नेषद् दुरितानि विश्वा दीर्घायुत्वाय शतशारदाय ।

( अथर्व० ६ । ११० । २ )

ओषधे चित्रक ! * विश्वानि दुरितानि सर्वान् रोगान्–अति–अतिक्रम्य 'अति' उपसर्गो धात्वर्थाभिधायी–एनं रोगिणं दीर्घायुष्ट्वाय शतवर्षजीवनाय नेषत्–नयेत्–'णीञ् प्रापणे' धातोर्लेटि प्रयोगो लिङर्थे ।

दुरितानि–पापाचरणानि पापवृत्तयः—

विश्वानि देव सवितर्दुरितानि परासुव । यद् भद्रं तन्न आसुव ।

( ऋ० ५ । ८२ । ५, यजु० ३० । ३ )

सवितर्देव परमात्मन् ! विश्वानि सर्वाणि दुरितानि दुर्गतिगमनानि पापगमनानि सर्वाः पापप्रवृत्तीर्दूरं गमय, यद् भद्रं कल्याणं पुण्यमस्मान् प्रापय । "चित्तनामोभयतोवाहिनी नदी वहति कल्याणाय वहति पापाय च" ( योग० १ । १२ व्यासः ) ।

अथ यास्कप्रदर्शितोऽनेकार्थको मन्त्रो व्याख्यायते—

वैश्वदेवीं सूनृतामारभध्वं शुद्धा भवन्तो यज्ञियासः † पावकाः ।

अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम ॥ ‡

विश्वदेवानां सर्वविदुषां विश्वस्य जगतो देवा दिव्यगुणाः पदार्थास्तेषां सम्बन्धिनी वैश्वदेवी सूनृता वेदवाक् "इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सूनृतावती । ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय" ( अथर्व० ३ । १२ । २ ) सूनृता शोभना वाक्–वेदवाक् "आशाप्रतीक्षे सङ्गतं सूनृतां च" ( कठो० १ । १ । ८ ) तथा विश्वे देवाः सूर्यरश्मयः "रश्मयो ह्यस्य सूर्यस्य विश्वे देवाः" ( शत० ३ । ९ । २ । ६ ) उभयत्र "तस्येदम्" ( अष्टा० ४ । ३ । १२० ) इति वैश्वदेवी सूनृता–उषाः "सूनृता–उषोनाम" (निघं० १ । ८) तां वैश्वदेवीं समस्तानां देवीं सूनृतां कल्याणीं मन्त्रवाचमुषसं च श्लेषालङ्कारेण हे

---

* अत्र चिकित्साप्रसङ्गोऽस्ति–अस्मात् पूर्वसूक्ते "पिप्पली क्षिप्तभेषजी:" तथाग्रिमे सूक्ते 'कृणोमि विद्वान् भेषजम् ।' अग्निश्चित्रक ओषधिर्भवति ।

† 'शुचयः' क्वचित्पाठः ।

‡ ····वैश्वदेवीं वर्चस आरभध्वं शुद्धा भवन्तः शुचयः पावकाः ।

अतिक्रामन्तो दुरिता पदानि शतं हिमाः सर्ववीरा मदेम ॥

(अथर्व० १२ । २ । २८)

अपि सम्बध्येते । हे ऋत्विजः ! भद्रजनाः ! आरभध्वं सेवध्वम्—अधीध्वं तद्वेलायामुत्तिष्ठत भ्रमणादिकं च कुरुत तथा मन्त्रवाचा तया चोषसा तत्सेवनेन शुद्धाः—अग्निः स्नाता इव शुद्धाः—यज्ञिया होमयज्ञकरणयोग्याः—जीवनयज्ञसञ्चालनयोग्याः पावकाः—अग्नय इव तेजस्विनो ज्ञानेन देहेन च भवन्तो वर्तमानाः सन्तो विश्वानि दुरितानि दुर्गतिगमनानि—पापगमनानि पापाचरणानि—अतिक्रम्य, यद्वा विश्वानि दुरितानि दुःखेन यन्ति गच्छन्ति येषु तानि तमांसि—अतिक्रम्य, अथवा दुःखेन गच्छन्ति येषु तान् दुर्मार्गान्—अतिक्रम्य, यद्वा दुःखं यन्ति प्राप्नुवन्ति येषु तान् रोगान्—अतिक्रम्य ज्ञानरूपया मन्त्रवाचा उषसा च पापान् तमांसि दुर्मार्गान् रोगांश्चातिक्रामन्ति जनाः । इति सिद्धम् । पुनः शतं हिमाः संवत्सराणि—अधिकाधिकवर्षाणि सर्ववीराः सपुत्रपौत्राः सन्तो मदेम मोदामहि । इति मन्त्रवाचः—उषसश्च सेवनात् फलं तयोर्महिमा वा ॥

वक्तव्यम्—यास्केनाथर्ववेदस्य मन्त्रो नोदाहृतः किन्तु तेन पैप्पलादशाखासंहिताया मन्त्र उदाहृतः कथं नाथर्ववेदीयो मन्त्रो दत्तः । अत्रानेकार्थसन्दर्भेऽथर्ववेदीये मन्त्रे 'दुरितानि' इत्यस्य नियतार्थत्वादेकार्थत्वात् । यतो हि तत्राथर्वमन्त्रे 'दुरितानि पदानि' इति 'पदानि' इत्यस्य विशेषणं सञ्जातम्, एकस्मिन्नेवार्थे 'दुरितानि' इति शब्दो नियुक्तः । पद्यन्ते गच्छन्ति येषु तानि पदानि मार्गाः—च दुरिताः—दुःखेन गमनीयाः । परन्तु 'पदानि' इत्यनेन विना केवलः 'दुरितानि' शब्दः स्वतन्त्र एव नामपरः, 'पापानि' दुर्मार्गाः, तमांसि, रोगाः' इति चतुरर्थको जातः । अतोऽथर्ववेदस्य मन्त्रो यास्केन न दत्तः । पैप्पलादशाखायाः—मन्त्रोऽनेकार्थक उदाहृत इति यास्कस्य ज्ञानगाम्भीर्यम् ॥

अप्वे ॥ ४८ ॥

अप्वा यदेनया विद्धोऽपवीयते । व्याधिर्वा भय वा ।

"अप्वे परेहि" ( ऋ० १० । १०३ । १२ )

इत्यपि निगमो भवति ।

'अप्वे' इत्यनवगतमनेकार्थं च । 'अपवायः' इत्यवगमः । 'व्याधिः', यद्वा 'भयम्' अभिधेयकथनम् । "शेवायह्वजिह्वाग्रीवाऽप्वामीवाः" ( उणा० १ । १५४ ) इत्यनेन 'अप्वा' पदं वन्प्रत्ययान्तं निपात्यते । 'अप' पूर्वात् "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" ( अदादि० ) इत्यतः—असनार्थो गृह्यते । यतो व्याधिना भयेन वा मनुष्योऽपवीयतेऽपास्यते स्वास्थ्याद् यद्वा समावस्थातः शान्तितः । अभिप्रायश्चैष मन्त्रे लक्ष्यतेऽपि "अमीषां चित्तं प्रतिलोभयन्ती

[ अमीषां चित्तानि प्रमोहयन्ती—अथर्व० ]……निर्दह हृत्सु शोकैः ( ऋ० १० । १०३ । १२, अथर्व० ३ । २ । ५ ) ।

'अप्वाम्, अप्वे' इति द्वे पदे वेदेषु विद्येते 'अप्वे' इति सम्बोधनपदमृग्यजुरथर्ववेदेषूपलभ्यते । 'अप्वाम्' इति कर्मपदमथर्ववेदे हि विद्यते । अत्र यास्केन 'अप्वे' इति सम्बोधनपदमवलम्ब्य मन्त्र उदाहृतः सोऽनेकार्थत्वात् । व्याधौ भये च लक्ष्यते, अन्यत्र 'अप्वाम्' इति व्याधावेव प्रयुज्यते ।

व्याध्यर्थाभिधायी 'अप्वा' शब्दो यस्मिन् मन्त्र उपलभ्यते स प्रथमं प्रदर्श्यते—

हरिमाणं ते अङ्गेभ्योऽप्वामन्तरोदरात् ।
यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ॥ ( अथर्व० ९ । ८ । ९ )

हे रोगिन् जन ! तवाङ्गेभ्य हरिमाणं हलीमकं रोगं तथान्तरोदरात्—अप्वामुदररोगं वातव्याधिं यक्ष्मोधां रोगाधारमात्मनः शरीराद् बहिर्निमन्त्रयामहे—पृथक् कुर्मः—निःसारयामः । आमन्त्रणमुपादानं निमन्त्रणं तद्विरुद्धं पृथक्करणम् । अग्रिमे मन्त्रेऽपि "विषं निरवोचमहं त्वत् ।" 'त्वत्' पञ्चमीनिर्देशात्—विषं रोगविषं त्वत्तः पृथक् करोमि । अस्मिन् रोगप्रकरणके रोगवर्णनपरे मन्त्रे 'अप्वा' व्याधिः स्पष्टमेवास्ति ॥

अथ यास्कोदाहृतः समग्रमन्त्रो व्याख्यायते यस्मिन् 'अप्वा' शब्दोऽनेकार्थकः—

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रांस्तमसा सचन्ताम् ॥

हे अप्वे ! स्वास्थ्यादपक्षेपयितो व्याधे ! यद्वा शान्तितोऽपक्षेपक ! भय ! त्वं परेहि—इतः परं गच्छामीषां शत्रूणां चित्तानि प्रज्ञानानि मनबुद्धिचित्ताहङ्कारात्मकान्यन्तःकरणानि प्रतिमोहयमानाऽप्वा व्याधिरूपा भयरूपा वा तेषामङ्गानि गृहाण स्वप्रभावेण शिथिलानि कुरु, तान्—अभिप्रेहि तानभिप्राप्नुहि, अभिप्राप्य च शोकैः सन्तापैर्हृदयेषु हृदयानि निर्दह दग्धी कुरु, एवं हृदयाघाते—आहते हृदये तेऽमित्राः शत्रवोऽन्धेन तमसा सचन्तां संसक्ता भवेयुः ।

अमतिः ॥ ४९ ॥
अमतिरमामयी मतिरात्ममयी ।
"ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि ।"
(अथर्व० ७ । १४ । २, साम० पू० अ० ५ । २ । ३ । ८)
इत्यपि निगमो भवति ॥ १२ ॥

भा०—'अमतिः' इत्यनवगतम् । 'अमामयी मतिः' इत्यवगमः । 'आत्ममयी मतिः' इत्यभिधेयकथनम् । 'आत्ममयी मतिः' इत्यस्य स्थाने—'आत्ममतिः', पुनः 'आत्ममतिः' इत्यस्य स्थाने 'अमामतिः', पुनः 'अमतिः' इत्येव बहुविकल्पितमनवगतत्वम् ।

समग्रमन्त्रस्तदर्थश्च—

अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।

अर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ॥ १ ॥ *

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि ।

हिरण्यपाणिरमिमीत सुक्रतुः कृपात् स्वः ॥ २ ॥

ओण्योः—द्यावापृथिव्योः सवितारमुत्पादयितारं "ओण्यौ द्यावापृथिवीनाम" ( निघं० ३ । ३० ) अभि—अर्चामि—अभिष्टौमि त्यं तं तमेव कविक्रतुं कान्तप्रज्ञं देवं परमात्मदेवमर्चामि पुनरभिष्टौमि, पुनस्तमेव सत्यशासकं रमणीयानां पदार्थानां धारकं प्रियं मतिं—मननशक्तिमन्तमभिष्टौमि । यस्य—अमतिः—अमामतिः—आत्ममयीमतिः स्वाधारा मतिर्ज्ञानशक्तिर्भाः—ज्ञानज्योतिः—ऊर्ध्वा सर्वेषां ज्ञानज्योतिष्मतामुपरि—आदिद्युतत्—देदीप्यते तस्मात्—तस्य सवीमनि प्रसवे शासने सर्वं जगत् प्रवर्तते स हिरण्यपाणिः सौवर्णहस्तो न तु मृद्धस्तः सुक्रतुः—सुकर्मा कृपासामर्थ्येन स्वः सुखमयं मोक्षाख्यं धामामिमीत निर्मितवान् ॥

श्रुष्टी ॥ ५० ॥ पुरन्धिः ॥ ५१ ॥

श्रुष्टीति क्षिप्रनाम—आशु अष्टीति ।

"ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्" ( ऋ० ७ । ३९ । ४ )

तानध्वरे यज्ञे, उशतः कामयमानान्, यजाग्ने । श्रुष्टी भगं नासत्यौ चाश्विनौ । सत्यावेव नासत्यावित्यौर्णवाभः, सत्यस्य प्रणेतारावित्याग्रायणः, नासिकाप्रभवौ बभूवतुरिति वा । पुरन्धिर्बहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात् तस्यान्वादेश इत्येकम् । इन्द्र इत्यपरं स बहुकर्मतमः पुरां च दारयितृतमः, वरुण इत्यपरं न प्रज्ञया स्तौति—"इमामू नु कवितमस्य मायाम्" ( ऋ० ५ । ८५ । ६ )

* प्रसङ्गानुरूपतयार्थस्पष्टीकरणाय पूर्वमन्त्रोऽपि गृहीतः ।

इत्यपि निगमो भवति ॥ १३ ॥

भा०—'श्रुष्टी' इति च 'पुरन्धिः' इति च द्वे पदे एकस्मिन्नेव मन्त्रे स्तस्ते चोभे अनवगते अनेकार्थे च । 'श्रुष्टी' इत्यस्य 'आशु-अष्टी' इत्यवगमः 'क्षिप्रम्, सुखम्, अन्नम्' इत्येतान्यभिधेयानि । 'पुरन्धिः' इत्यस्य 'बहुधीः' इत्यवगमः । भगः [ मन्त्रे पुरन्धिशब्दात् पूर्वो य उक्तः 'भगं पुरन्धिम्' भगस्य विशेषणरूपे पश्चादादेशः ] इन्द्रः—पुरन्धिः, स बहुधीर्बहुकर्मतमः । अथ च स पुरां दारयितृतमः । 'वरुणः' पुरन्धिः—बहुधीः, तथा च तं प्रज्ञया स्तौति मन्त्रः । 'इमामू नु कवितमस्य मायाम्" एवं 'पुरन्धिः' इत्यस्य 'भगः, इन्द्रः, वरुणः' अभिधेयाः सन्ति । एवम् 'श्रुष्टी' तथा 'पुरन्धिः' इत्येतयोरनेकार्थयोरत्र पदनामप्रकरणेऽनेकार्थतां प्रदर्शयितु यास्केन "तौ अध्वर उशन्तो....." इति मन्त्र उदाहृतो यत्रानयोरनेकार्थत्वं सार्थकं भवति तथैवास्माभिर्मन्त्रो व्याख्यास्यते । प्रथमं तावदनयोः येऽनेकार्थास्तेषां प्रत्येकं पृथक् पृथगर्थानां द्योतका मन्त्राः प्रदर्श्यन्ते । तत्र 'श्रुष्टी' शब्दो ङीलिङ्गो ङीप्प्रत्ययान्तः, पूर्वं तु 'श्रुष्टिः' शब्दः क्तिच् प्रत्ययान्तः, ततः "कृदिकारादक्तिनः" ( अष्टा० ४ । १ । ४५ वा० ) इत्यनेन ङीप् प्रत्यये 'श्रुष्टी ।' 'आशु' उपपदे "अशूङ् व्याप्तौ" ( स्वादि० ) "अश भोजने" ( क्र्यादि० ) ततः क्तिच् 'आशु' शब्दस्य 'श्रु' भावः, धातोरकारस्य लोपश्चेति छान्दसौ । श्रुष्टिः, विकल्पितो ङीप् च । 'श्रुष्टिः, श्रुष्टी' इति द्वे पदे समानार्थे । परन्तु 'श्रुष्टी' ङीबन्तोऽनेकार्थोऽत्र यास्कप्रदर्शिते मन्त्रे । आशु सद्योव्यापनं श्रुष्टिः श्रुष्टी वेति क्षिप्रम्—आशु सद्योऽल्पकालमल्पकालपर्यन्तमश्यते भुज्यतेऽन्नमन्नभोगः, सुखं सुखभोगश्चेति 'श्रुष्टिः, श्रुष्टी ।' अन्नं सुखं च तदुभयं तयोः सद्यस्तनत्वात् क्षणिकत्वादस्थिरत्वात् ।

क्षिप्रार्थे श्रुष्टिः, श्रुष्टी—

"आ ते सपर्यू जवसे युनज्मि ययोरनु प्र दिवः श्रुष्टिमावः ।"

( ऋ० ३ । ५० । २ )

हे इन्द्र ! विद्युत् ! तव सपर्यू परिचारकौ हरी—अश्वौ तरङ्गरूपौ रथे आयुनज्मि—आयुक्तौ करोमि जवसे वेगेन गमनाय ययोस्त्वं प्रकृष्टाकाशात् श्रुष्टिं क्षिप्रवेगमन्वावः—आगच्छसि । "अव गतौ" ( भ्वादि० ) "श्रुष्टिवेगं श्रुष्टीति क्षिप्रनाम" ( सायणः )

"श्रुष्टी जातास इन्दवः स्वर्विदः" ( ऋ० ९ । १०६ । १ )

'श्रुष्टी क्षिप्रं जाताः' ( सायणः ) ।

अन्नार्थे श्रुष्टिः श्रुष्टी—

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।

गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात् ॥

( ऋ० १० । १०१ । ३ )

स्पष्टार्थो मन्त्रः 'श्रुष्टिः अन्नम्' ( सायणः ) ।

"श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ।"

( ऋ० ६ । १३ । १ )

अपां रीतिः—गमयिता प्रेरयिता देवः—इन्द्रः "री गतौ" ( क्र्यादि० ) ततः 'क्तिन्' औणादिकः कर्तरि । तथाकृत्वा स्वरश्चान्तोदात्तः । सोऽपां प्रेरयिता—ईड्यः प्रशंसनीयः, यतस्तद्द्वारा वृत्रतूर्ये मेघानां छेदने सति दिवोऽन्तरिक्षात्—श्रुष्टी—अन्नं रयिः धनं वाजः—बलम् 'वियन्ति वनिनो नवयाः' वृक्षाच्छाखा—इव पृथग्भवन्ति ।

सुखार्थे श्रुष्टिः, श्रुष्टी—

"अध्वर्यवः कर्तना श्रुष्टिमस्मै" ( ऋ० २ । १४ । ९ )

'सोमं श्रुष्टिं सुखकरं कुरुत' ( सायणः )

"श्रुष्टीवरीर्भूतनास्मभ्यमापः" ( ऋ० १० । ३० । ११ )

अत्र निरुक्तं च "श्रुष्टीवरीर्भूतनास्मभ्यमापः सुखवत्यो भवतास्मभ्यमापः" ( निरु० ६ । २२ )

अथ 'पुरन्धिः' अनेकार्थस्तस्यानेकार्थत्वे 'भग, इन्द्रः, वरुणः' इत्येते समाविशन्ति ।

'भगः' इत्यस्याभिधायकः पुरन्धिः शब्दो विशेषणभावेन यथा यास्केनोक्ता ते मन्त्रे—

"भगः पुरन्धिं जिन्वतु प्र राये" ( ऋ० ६ । ४९ । १४ )

'पुरन्धिः बहुधीर्बहुप्रज्ञो वा बहुकर्मा वा भगः भजनीय एतत्संज्ञो देवश्च' ( सायणः ) ।

इन्द्रवाचकः पुरन्धिः—

आदाय श्येनो अभरत् सोमं सहस्रं सवाँ अयुतं च साकम् ।

अत्रा पुरन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥

( ऋ० ४ । २६ । ७ )

'पुरन्धिर्बहुकर्मा अमूरः—अमूढः प्राज्ञः—इन्द्रः सोमस्य मदे हर्षे सति मूराः—मूढाः—अरातीः शत्रून् अजहात् अत्यजत् जघानेत्यर्थः' ( सायणः ) ।

वरुणवाचकः पुरन्धिः, इत्यस्मिन् तु स एव यास्केनोदाहृतो मन्त्रः—

इमामू नु कवितमस्य मायां मुहीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥

देवता वरुणः—अस्मात् पूर्वमन्त्रे स्पष्टः स—उच्यतेऽपि "मुहीं मायां वरुणस्य प्रवोचयम्" (५) तत्रोक्तं स वरुणः "मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण" (५) विश्वाकाशे स्थितो व्याप्तः सन् त्रीन् लोकान् मानेन—इव—यथा मानसाधनेन कस्यापि परिच्छित्तिः क्रियते सीमा निर्धार्यते तथा वरुणः परमात्मा निजप्रज्ञारूपेण मानेन सूर्येण सह पृथिवीं विममे सूर्योऽत्र द्युलोकार्थे द्युलोकं पृथिवीलोकं यथाऽन्तरिक्षे व्याप्तत्वादन्तरिक्षं च विवमे परिच्छिन्नवान् त्रीन् लोकानपि सीमिताम् कृतवान्—इति वरुणस्य स्तवनं तत्प्रज्ञयाऽनुवर्तत—इत्येवम्भूतस्य तस्य कवितमस्यातिशयेन मेधाविनो देवस्य द्योतमानस्य वरुणस्य सर्वस्य जगत आवरकस्य परमात्मन—इमां महीं—महतीं मायां प्रज्ञाम् "माया प्रज्ञानाम" (निघं० ३ । ९) उ नु—खलु नकिः—न कश्चित्—कश्चिदपि न—आधर्षयति—न बाधते न तं वरुणं पारयन्ति । 'एकं यदुद्ना न.....' एष नकार उभयथा व्याख्यातव्य उपमायां निषेधे च । यत्—एनीः—गम्यो गच्छन्त्यो गमनशीला अवनयो नद्यः "अवनयो नद्यः" (निघं० १ । १३) उद्ना न यथा जलेन—एकं समुद्रमासिञ्चन्त्यो निरन्तरं सिञ्चन्त्यः पृणन्ति पूरयन्ति तदन्तर्भवन्ति न तु बहिः प्रवर्तन्ते तथा सर्वाः प्रज्ञाः तं वरुणं पृणन्ति तदन्तर्भवन्ति तस्मिन्नाविशन्ति लुप्यन्ते न्यूनी भवन्ति वा । अथ निषेधे 'एकं समुद्रं नद्यो वहन्त्योऽपि न पृणन्ति न पूरयन्ति तथाऽसंख्याता लौकिक्यः प्रज्ञास्तं वरुणं न पूरयन्ति ।

अथ यास्कप्रदर्शितो मन्त्रोऽनेकार्थभ्यां श्रुष्टी पुरन्धिशब्दाभ्यां युक्तो व्याख्यायते—

ते हि युज्ञेषु युज्ञियास ऊमाः सुधस्थं विश्वे अभिसन्ति देवाः ।
तां अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम् ॥

हे अग्ने गृहयज्ञस्य राष्ट्रयज्ञस्य वा नायक यजमान ! ते हि ये खलु यज्ञेषु यज्ञियाः—यज्ञार्हाः यज्ञेषु सत्करणीयाः—ऊमा यज्ञरक्षका विधानेन यज्ञानां सम्पादयितारः सततपरिपालकाः—विश्वेदेवाः—देवानां प्रतिनिधिभूताः सर्वेदेवाः सधस्थमभियन्ति, सहस्थानं यज्ञमण्डपं सभापीठं वा साधिकारं स्वधा कृताधिकारा अभिविशन्ति । अध्वरेऽस्मिन् प्रस्तुते यज्ञे तान्—उशतः—विद्यया देदीप्यमानान् "वशकान्तौ" (अदादि०) कान्ति दीप्तिरिच्छा च । त्वं श्रुष्टी क्षिप्रं यज

'श्रुष्टी क्षिप्रार्थः, अथवा तान् देवान् श्रुष्टी—अन्नमुशतः कामायमानान्, यद्वा सुखम्—उशतः कामायमानान् यज । कान् यज, उच्यते—भगं नासत्या पुरन्धि यज । पुरन्धिः—भगः, इति दर्शितं यास्केनास्माभिश्च, पुरन्धिर्विशेषणं भगो विशेष्यः । एकः पुरन्धिर्भगः, द्वौ च नासत्यौ—इति त्रयो देवाः । यद्वा पुरन्धिर्न विशेषणं भगस्य, किन्तु तद्भिन्नो देवः—इन्द्रो वा वरुणो वा । तौ द्वावपि साधितौ यास्केनास्माभिश्च, इन्द्रः पुरन्धिः, वरुणः पुरन्धिः । तदा भगः, द्वौ नासत्यौ पक्षे—इन्द्रो वरुणो वा, चत्वारो देवा यज्ञे सत्करणीयाः—यज्ञस्य सम्पादयितारश्चेति । भगादिशब्दैर्यज्ञे के गृह्यन्ते । उच्यते—अध्यात्मदृष्टौ तु—एक एव परमात्मा बहुगुणयोगेन बहुभिर्नामभिरुपास्यः स एव भगो भजनीयत्वात् । नासत्यौ—अविचलधर्मवत्तया प्रकृतिं प्रति जीवान् प्रति च, प्रकृतिं विविधसृष्टिरूपे परिणमयति, जीवानां भोगाय जीवान् प्रति कर्मणां फलप्रदाने स्थिरः । तस्माद् जगतो निर्माता कर्मफलस्य दाता, भोगस्य मोक्षस्य च प्रदाता—इति नासत्यरूपयोर्वहमानः परमात्मा, इन्द्र राजेव पालकः, वरुणः—आचार्य इव ज्ञानप्रदः । स श्रुष्टी क्षिप्रमनन्तरमध्यात्मयज्ञे—उपास्यः । राष्ट्रयज्ञे सभापीठे भगः—धनाध्यक्षो धनेमान्नपशुधनादीनि ग्राह्याणि । नासत्यौ—स्वराष्ट्रपरराष्ट्रनीतिनिष्णातौ नीत्यां स्थिरौ, इन्द्रः सेनानीर्वरुणः पुरोहितः, एते सर्वे स्वानां प्रजाजनानां च सुखं कामयमानाः स्युः । गृहयज्ञे भगः—भजनीयोऽतिथिः, नासत्यौ—अध्यापको ब्राह्मणः—उपदेशकः सन्यासी द्वौ सत्यज्ञानस्यप्रसारकौ, इन्द्रः—नगरपतिः, वरुणः—धर्माध्यक्षः, आचार्यः पुरोहितो ब्रह्मा वा । ते—एतेऽन्नं कामयन्तेऽन्नं कामायमाना गृहयज्ञे प्रवर्तन्ते ॥

अवशिष्टनिरुक्तयः—यक्षि 'यजधातोर्लोटिमध्यमैकवचने 'बहुलं छन्दसि' इति शपो लुक्, पुनः "हुझल्भ्योहेर्धिः" ( अष्टा० ६ । ४ । १०१ ) इति सिपो धिर्न भवति सर्वे विधयश्छन्दसि विकल्प्यन्ते । 'नासत्यौ' असत्यौ न,—सत्यौ हि, और्णवाभ आचार्यो मन्यते । सत्यस्य प्रणेतारौ, इति—आग्रायण आचार्यो मन्यते सत्यस्य नौ—नेतारौ "नृ नये" ( क्र्या० ) ततः 'डः' प्रत्ययः "अन्येभ्योऽपि दृश्यते—वा०" ( अष्टा० ३ । २ । १०१ ) सत्यस्य नौ नेतारौ—"राजदन्तादिषु परम्" ( अष्टा० २ । ३ । ३१ ) सत्यशब्दस्य परनिपाते 'न' इत्यकारस्य दीर्घः—इति नासत्यौ । नासात्यौ नासिकाप्रभवौ प्रसिद्धौ शरीराङ्गभूतनासिकातः प्रभवौ प्राणोदानौ नासत्यौ—इति संज्ञया प्रसिद्धौ जातौ । शरीरयज्ञे तौ योजनीयौ भविष्यतः । नासत्यावश्विनौ "नासिके अश्विनौ" ( शत० १२ । ९ । १ । १३७ ) तौ च तत्राध्वर्यू प्रसिद्धौ जातौ । "अश्विनावध्वर्यू" ( ऐ० १ । १८ ) । पुरन्धिः—बहुधीः—"पुरुधीः" इत्यस्य 'पुरन्धिः' पृषोदरादि-

स्वात् । स भगः, स यः पूर्वं भगस्तस्यायं पश्चादादेशः पुरन्धिः, इत्येकं मतम् । पुरन्धिः—इन्द्रः, इत्यपरं मतम् । स बहुकर्मतमः सोऽतिशयेन बहुकर्मा स्वराष्ट्रेऽथ परराष्ट्रे शत्रूणां पुरामतिशयेन दारयिता विदारयिता—पुरन्धिः 'पुराम्' इति—अलुक्समासे छान्दसे 'पुराम्' इत्याकारस्य ह्रस्वत्वं च, दृधातोर्दकारस्य धकारः—डिच् प्रत्ययः पुरन्धिर्वरुण इत्यपरं मतं यतस्तं प्रज्ञया—प्रज्ञामभिलक्ष्य मन्त्रः स्तौति । पुरन्धिः पुरुधीः—धीः प्रज्ञा तथा स्तौति । व्याख्यातो मन्त्रोऽस्माभिरत्रैवं स यस्मिन् वरुणः प्रज्ञया स्तुतः ॥

रुशत् ॥ ५२ ॥

रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः ।

"समिद्धस्य रुशददर्शि पाजः" ( ऋ० ५ । १ । २ )

इत्यपि निगमो भवति ॥ १३ ॥

भा०—'रुशत्' इत्यनेकार्थं पक्षेऽनवगतम् । अनवगतत्वं रोचते रुच धातोः, चकारस्य स्थाने शकारापत्त्या 'शुभ्रवर्णः' अभिधेयः । 'रोचतेर्ज्वलति कर्मणः, सार्थधातुनिर्देशः । 'रोचनम्' इत्यवगमः । "रुचदीप्तावभिप्रीतौ च" (भ्वादि०) इत्यर्थद्वयाद्—दीप्तिरत्र गृह्यते यद्वा "रोचते ज्वलतिकर्मा" ( निघं० २ । १६ ) इति धातोः शतृप्रत्ययान्तं नपुंसकलिङ्गं पदं छान्दसं निपात्यते तत्र गुणाभावश्च-कारस्य शकारश्च निपातनादेव । वर्णाद् भिन्नेऽर्थेऽवगतपक्षे तु "रुश हिंसायाम्" ( तुदादि० ) तथैव शतृप्रत्ययान्तम् । यास्कप्रदर्शितमन्त्रे—द्वयोरर्थयोः सम्भवस्तस्मादेव यास्केनोदाहृतो मन्त्रः । भिन्नभिन्नार्थका सन्ति ह्यन्ये मन्त्राः ।

हिंसार्थे रुशत्—

ये ते पाशा वरुण सप्त सप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः ।

छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥

( अथर्व० ४ । १६ । ६ )

हे वरुण देव ! तव ये पाशाः सप्त सप्त त्रेधा—त्रिषु स्थानेषु पृथिव्यन्तरिक्ष-द्युस्थानेषु त्रिः सप्त—एकविंशतिः, रुशन्तो हिंसन्तो विषिता जालमिव प्रसृताः सन्ति ते सर्वेऽनृतं वदन्तं छिनन्तु हिंसन्तु—इति स्पष्टं रुशन्तो हिंसन्तः ।

इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि ।

यो भद्रो रोचनस्तमुदचामि ॥ ( अथर्व० १४ । १ । ३८ )

अहमिदं रुशन्तं हिंसन्तं तनूदूषिं शरीरदूषकं पापरूपं पानं सुरापनमपो-

हामि—पृथक् करोमि त्यजामि 'अप' पूर्वकाद् "उहिर् अर्दने" (भ्वादि०) यो भद्रः कल्याणकरो रोचनः शोभनः स्वास्थ्यकरः सोमस्तमुदचामि पिबामि ॥

"....निर्जगन्वान् तमसो ज्योतिषागात् ।

अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥

(ऋ० । १० । १ । १)

"रुशतिर्हिंसार्थः । तमसां हिंसकेन भानुना तेजसा सर्वाल्लोकानापूरयति" (सायणः) ।

अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥

(ऋ० ३ । २९ । ३)

"अस्य अग्नेः रुशत् तमो विनाशयत् पाजः ।" (सायणः)

अथ केवलवर्णार्थे रुशत्—

प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।

(ऋ० १ । ९२ । ५)

उषा देवता—अस्या उषसो रुशच्छुभ्रं प्रकाशमयमर्चिः—तेजः प्रत्यदर्शि जनैः साक्षाद् दृश्यते वितिष्ठते विस्तृतं भूत्वा तिष्ठति क्षितिजसंलग्ने—आकाशेऽभ्वं महत् कृष्णं महान्धकारं बाधतेऽपसारयति ।

अत्र कृष्णस्य वर्णस्य साम्मुख्ये प्रतिद्वन्द्वित्वेन रुशत्—शुभ्रो वर्णः स्पष्टः ।

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।

अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥

(ऋ० १ । ११५ । ५)

सूर्यस्तस्य मित्रस्य दिनस्य "अहर्मित्रः" (तां० २५ । १० । १) वरुणस्य रात्रेः "रात्रिर्वरुणः" (तां० २५ । १०) अभिचक्षे—प्रकटीकरणाय तयोः—रूपं करोति द्युमण्डलस्याश्रये तद्रूपमुच्यते—अनन्तं पूर्णं रुशत्—शुभ्रं प्रकाशमयमन्यद् दिनस्य रूपं तथाऽन्यदनन्तं पूर्णं कृष्णं रात्रेः—रूपं करोति—इत्येतेन सम्बन्धः । इत्थमस्य सूर्यस्य पाजो बलमस्ति "पाजो बलनाम" (निघं० २ । ९) सूर्यस्य पाजं बलं तं सूर्यं वा हरितो हरणशीलाः सूर्यरश्मयः सम्भरन्ति सम्यग्धारयन्ति ॥

अत्रापि कृष्णवर्णस्य साम्मुख्ये प्रतिद्वन्द्वित्वेन रुशत्—शुभ्रवर्णः प्राकाशमयो वर्णः स्पष्टः ।

अथेदानीं रुशत्—शब्दस्यार्थद्वयलक्ष्येणोदाहृतः समग्रो मन्त्रो यास्केन यः स व्याख्यायते—

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशदर्दर्शि पाजो महान् देवस्तमसो निरमोचि ॥

हिंसार्थे रुशत्—

देवान् यजथाय सुमनाः—होता—इव—अबोधि—यथा देवान् यजथाय यष्टुं सुमनाः—होता रात्रौ शयित्वा बुध्यते जागर्ति तथा—ऊर्ध्वोऽग्निः सूर्यः प्रातः—अबोधि जागृतवान् पुनः—अस्थात्—उदस्थात्—उदेति । अत्र लुप्तोपमावाचकालङ्कारः । पुनः समिद्धस्य सुदीप्तस्य जाज्वल्यमानस्य सूर्यस्य रुशत् पाजो हिंसनशीलं बलम् "पाजो बलम्" ( निघं० २ । ९ ) अदर्शि दृष्टमभवत् प्रकटतामगच्छत् तेन स्वेन हिंसनशीलेन बलेन स महान् देवः सूर्यस्तमसो निर्मुक्तो जातस्तत्तमो हिंसित्वेत्यर्थः ।

शुभ्रवर्णार्थे रुशत्—

ऊर्ध्वोऽग्निः—सूर्यः—होता प्रकाशस्य दाता स्वप्रकाशेन देवान् चेतनदेवान् जडदेवांश्च यजथाय यजनाय 'यज धातोः—अथः प्रत्यय औणादिको बाहुलकात्—छान्दसः । अबोधि बोधयति स सुमनाः—सु शोभनं विकसितं मनो यस्माद् स प्रातः—अस्थात्—उदस्थात्—उदेति तस्य समिद्धस्य सम्यक् प्रकाशितस्य रुशत् पाजः—शुभ्रं रक्षणबलमदर्शि जनैर्दृष्टं तेन महान् देवः सूर्यः—तमसो निरमोचि सर्वान् मनुष्यादीन्—अन्धकारात्—निर्मोचितवान्—निर्मोचयति—अन्धकाराद् रक्षति ॥

रिशादसः ॥ ५३ ॥

"अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम्" ( ऋ० ८ । २७ । १० )

अस्ति हि वः समानजातिता रैशयदासिनो * देवाः । अस्त्याप्यम् । आप्यमाप्नोतेः ।

भा०—'रिशादसः' इत्यनवगतम् । 'रैशयदासिनः' रेशयतामसितारो यद्वा रेशयाणां दसितारः—इत्यवगमः । 'यथायोग्यं विशेष्यम्' अभिधेयम् । अवगत-

* 'रेशयदारिणः' इति पाठोऽपि लभ्यते । परन्तु नैष पाठो युक्तः, नगरदुर्गाणां विदारणं नात्र लक्ष्यते । 'रेशयदासिनः' पाठ एव शोभनः, दुर्गभाष्ये पाठ एष युक्तो मतः "रिशादसः 'रेशयदासिनः' इत्यवगमः" रिशादसः—रेशयदासिनः' यो हि रेशयति हिंसावान् भवति तस्मै त आयुधान्यस्यन्ति । रेशयदारिणः—इति केचिदधीयते निर्वचनम्" (दुर्गाचार्यः) स्कन्दभाष्येऽपि 'रेशयदासिः' पाठं मत्वाऽर्थो विहितः "रेशयतामसितारः" (स्कन्दमहेश्वरभाष्ये) ।

मप्यस्ति तत्पक्षे रिशामत्तारः । "रिश् हिंसायाम्" ( तुदादि० ) ततः शतृप्रत्यये 'रिशात्' अन्तर्गतणिजर्थे प्रयोगः । दीर्घश्छान्दसः । पुनः "असु क्षेपणे" ( दिवादि० ) ततः 'विच्' प्रत्ययः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) 'अस्' अस्यति क्षिप्यति—अस् बहुवचने—असः—असितारः । रिशतां रेशयतां हिंसतां दुष्टानां शत्रूणां वाऽसितारः क्षेप्तारो दण्डयितारः प्रहर्तारः—रिशादसः । तथा रेशयदासिनः—'रिश' हिंसायां ततः—इगुपधलक्षणः कः प्रत्ययः, रिशः रिशाणां 'रेशयानां' णिजर्थे—आदसितारः—रिशादसः—रिश—आदस पूर्ववत्—विच् प्रत्ययः । अवगतपक्षे रिशानदन्ति भक्षयन्ति ते रिशादसः, रिश—अद—असुन्, रिशादाः—एकवचने, रिशादसो बहुवचने । एवं 'रिशादसः' इति शब्दस्य त्रयोऽर्थाः । रिशानां रोगाणामत्तारो भक्षयितारः सोमादिवनस्पतयो भौतिकदेवाश्च । रिशतां रेशयतां हिंसयितॄणां पापानामसितारोऽपसारयितारो धर्मात्मनो विद्वांसो महात्मानः । रिशतां रेशयतां हिंसयितॄणां शत्रूणां दसितारो नाशयितारः सैनिकाः । एषामेकैकार्थस्य सन्ति पृथक् पृथङ्मन्त्राः । प्रस्तुते मन्त्रे सर्वेऽर्था सङ्गच्छन्ते । प्रथममेकैकार्थाय मन्त्राः प्रदीयन्ते ।

अदने भक्षणेऽर्थे 'रिशादस्' शब्दः—

"स नो॑ नृणां नृत॑मो रि॒शादा॑ अ॒ग्निः" ( ऋ० १ । ७७ । ४ )

'रिशादाः रिशानामत्ता भक्षयिता" ( सायणः ) इत्येकवचने ।

"आ नो॑ गन्तं रिशादसे॒मं स्तोमं॑ पुरुभुजा" ( ऋ० ८ । ८ । १७ )

'पुरुभुजा बहुलस्य भोक्तारौ रिशानामत्तारौ भक्षयितारौ' (सायणः) द्विवचने ।

"ये शु॒भ्रा घो॒रव॑र्पसः सुक्ष॒त्रासो॑ रि॒शाद॑सः ।" ( ऋ० १ । १९ । ५ )

"रिशानां हिंसकानां भक्षकाः मरुतः" ( सायणः ) ।

रिशादस्—असने—

"इन्द॒विन्द्रा॑य बृह॒ते पव॑स्व सुमृ॒ळीको अ॑नव॒द्यो रि॒शादा॑ः ।"

( ऋ० ९ । ६९ । १०—रिशादाः रिशतां बाधकानामसिता सायणः )

इति स्तुतासो॑ असथा 'अस्थ' रिशाद॒सो ये स्थ त्रय॑श्च त्रि॒ंशच्च॑" ( ऋ० ८ । ३० । २—'रिशादसः रिशतां हिंसतामसितारः'—सायणः )

रिशादसः—दसने—

"न॒हि व॒ः शत्रु॑र्विवि॒दे अधि॒ द्यवि॒ न भूम्यां॑ रिशादसः" ( ऋ० १ । ३९ । ४—'रिशादसः शत्रुहिंसकाः' सायणः )

एवमेते पृथक् पृथगर्थका मन्त्रा—आसन् । यास्कप्रदर्शिते मन्त्रे त्रयोऽप्यर्थाः समाविशन्ति तस्यानेकार्थप्रसङ्गत्वात् ।

स 'अस्ति हि वः सजात्यं रिशादसः' इति समग्रमन्त्रस्तदर्थश्च—

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।

प्र णः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे ॥

हे रिशादसो देवाः ! वः—युष्मासु रिशादसः—अस्माकं रिशानां पीडकानां रोगाणामस्तारः, केचिदस्माकं रिशानां रेशयानां पीडकानां शत्रूणाम्—आदसितारः समन्तान्नाशयितारोऽथ केचिदस्माकं रिशतां रेशयतां पीडकानां पापानां क्षेप्तारः स्थ । तथाभूतास्ते यूयं केचन चिकित्सकाः केचिद् धर्मोपदेशकाः केचिद्राजपुरुषाः स्थ । एवम्भूतानां वो युष्माकमस्माभिः सह सजात्यमस्ति सजात्यं समानजन्यत्वं यतः—ईश्वराद् युष्माकं जन्म तत एवास्माकं जन्म, तथा आप्यमस्ति, आप्यं भ्रातृत्वसम्बन्धोऽस्ति तस्मादेव जातत्वात् । नोऽस्माकं पूर्वस्मै सुविताय जगति—जन्मनो यः सुवितः सुगतो मोक्षस्तस्मै तथा नवतरायऽद्यतनाय सुम्नाय सुखाय च प्रवोचत प्रवचनं कुरुत । यतो वयं—आध्यात्मिकाधिभौतिकाधिदैविकदुःखेभ्यो विमुक्ताः स्याम । भैषज्यदेवा रोगाणां भक्षयितारः, महात्मनो विद्वांसः पापानामसितारोऽस्मत्तो बहिरपगमयितारः, सैनिकाः शत्रूणामादसितारो नाशयितारः । इति स्पष्टम् ।

सुदत्रः ॥ ५४ ॥
सुदत्रः कल्याणदानः ।
"त्वष्टा सुदत्रो विदधातु रायः" (ऋ० ७ । ३४ । २२)
इत्यपि निगमो भवति ॥

भा०—'सुदत्रः' इत्यनवगतम् । 'सुदानः' इत्यवगमः । 'कल्याणदानः' इत्यर्थप्रदर्शनम् । अस्य विशेषणशब्दत्वाद् विशेष्योऽभिधेयः । सुपूर्वात् "दाञ दाने" ( अदादि० ) ततः "सुविदेः कत्रन्" ( उणादि० ३ । १०८ ) इति धातोर्बाहुलकात् कत्रन् प्रत्ययः । "आतो लोप इटि च" (अष्टा० ६ । ४ । ६३) आकार लोपः ।

वक्तव्यम्—'सुदत्रः' इति पदमनवगतमस्ति । तत्तु भवतु, परन्त्वेष मन्त्रो यास्केनानेकार्थत्वेनोदाहृतः । अत्र 'सुदत्रः' इत्यस्य 'कल्याणदानः' इत्यधिकोऽर्थः । अस्य त्रयोऽर्थाः सन्ति, तेषामुदाहरणानि दीयन्ते ।

सुदत्रः—"दो अवखण्डने" ( दिवादि० ) तन्निष्पन्नः सुखण्डयिता—

"त्वष्टा सु॒दत्रो॒ वि द॑धातु रा॒योऽनु॑माष्र्टु त॒न्वो॒ यद्विलि॑ष्टम् ।"

( ऋ० २ । २४ )

त्वष्टा तष्टा वर्धकिः "तक्ष त्वक्ष तनूकरणे" ( भ्वादि० ) स तष्टा सुदत्रः— सुद्यति सुखण्डयति यः सः सुदत्रः सुखण्डयिता शोभनसंशोधयिता तन्वः शरीरस्य यद् विलिष्टं विकृतं विषमीभूतमङ्गं तदनुमाष्र्टु—अनुकूलं शोधयतु । "तन्वः शरीरस्य यद्विलिष्टं विश्लिष्टम्" ( उव्वटः ) "तन्वः शरीरस्य यद् विशेषेण न्यूनमङ्गं न्यूनत्वपरिहारेणानुकूलं कृत्वा शोधयतु ।" ( महीधरः ) ।

सुदत्रः—"सूद क्षरणे" (चुरादि०) ततः पूर्ववत् कत्रन् प्रत्ययो बाहुलकात्— ऊकारस्य ह्रस्वत्वं छान्दसम्, सुदत्रः क्षारणशीलः । मन्त्रः—

यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॑ पु॒ष्यसि॒ वार्या॑णि ।

यो र॑त्न॒धा व॑सु॒विद् यः सु॒दत्रः॒ सर॑स्वति॒ तमि॒ह धात॑वे कः ॥

( ऋ० १ । १६४ । ४९ )

हे सरस्वति वाग्देवि ! यस्तव स्तनः सुदत्रः सूदत्रः क्षारणः—ज्ञानरूपस्य दुग्धस्य क्षारयिता तमिह मनसि धातवेऽस्मभ्यं पातुं पानाय कः कुरु "धेट् पाने" ( भ्वादि० ) ।

सुदत्रः कल्याणदानः केवलदानार्थे—

"कु॒दा भ॑वेम॒ पत॑यः सुदत्र रा॒यो व॒न्तारो॑ दु॒ष्टर॑स्य सा॒धोः ।"

( ऋ० ७ । ८ । ३ )

दुष्टरस्यान्यैश्चोरयितुं दुष्पारस्य साधोः कल्याणकरस्य रायो धनस्य पतयः स्वामिनो वनितारः सम्भक्तारो भोक्तारो वयं कदा भवेम हे सुदत्र कल्याणदान ! अग्ने !

अथ यास्केनोदाहृतो मन्त्रो यत्र सुदत्रशब्दोऽनेकार्थः प्रोक्तार्थत्रययुक्तः समग्र-मन्त्रस्तदर्थश्च—

ता नो॑ रासन् राति॒षाचो॑ वसू॒न्या रोद॑सी वरुणा॒नी शृ॑णोतु ।

वरू॑त्रीभिः सुश॒र॒णो नो॑ अस्तु॒ त्वष्टा॑ सु॒दत्रो॒ वि द॑धातु॒ रायः॑ ॥

सुदत्रः—सूदत्रः क्षारणः क्षारयिता—

रोदसी—रुद्रस्य पत्नी—रौद्रशक्तिरन्तरिक्षस्था विद्युत् "रोदसी रुद्रस्य पत्नी" ( निरु० १२ । ४६ ) वरुणानी—आवरकस्य मेघस्य शक्तिः सूक्ष्माऽम्बधारा तथाऽन्याः—रातिषाचः—रातिं दानं सिञ्चन्त्यो जलं क्षरन्त्यः "षच सेचने" ( भ्वादि०)

"षिच क्षरणे" ( तुदादि० ) पत्नयः, 'पत्नय' इति पूर्वमन्त्रात् "आ यन्नः पत्नी-र्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान्" ( ऋ० ७ । ३४ । २० ) नोऽस्मभ्यं तानि वसूनि—आ—शृणोतु प्रत्येकं स्वीकरोतु वृष्टिजलानि धनानि प्रेरयितुमनुजानातु तासां पतिः—त्वष्टा सूर्यः सुदत्रः सूदत्रः क्षारयिता "सूद क्षरणे" उक्तं हि पूर्वम् । शुक्ररूपस्य स्वतेजसः क्षारयिता वरुत्रीभिः सूर्यस्य पतित्वेन वरयित्रीभिस्ताभिः पत्नीभिर्वरुणानीप्रभृतिभिः सह सुशरणः—शोभनगृहवान् गृही गृहस्थोऽस्तु भवतु—इति गृहस्थालङ्कारः । एवं पत्नीभिः सह सङ्गतः सूर्यो नोऽस्मभ्यं रायो धनानि वृष्टिजलानि धनानि विदधातु सिञ्चतु । पत्नीभिः सह गृहस्थः शुक्रक्षारणमन्तरेण न भवति तस्मात् सुदत्रः सूदत्रः क्षारयिता ॥

सुदत्रः—कल्याणदानः—कल्याणाय खण्डयिता—

वरुणानी रोदसी रातिषाचो देव्यो मेघजलसेचने प्रवृत्ता भवन्तु ताभिः सह सूर्यस्त्वष्टा तष्टा वर्धकिः सुदत्रः कल्याणाय मेघस्य खण्डयिता भवतु । अनन्तरमस्मभ्यं धनानि—अन्नानि वृष्टिजलेनान्नानि निर्मातु ।

सुदत्रः—कल्याणदानः कल्याणकारिणो धनस्य दाता—

वरुणानी प्रभृतयो वसूनि धनानि दातुमाशृण्वन्तु त्वष्टा—आदित्यः "त्वष्टा—आदित्यः" ( निरु० १२ । ११ ) "इन्द्रो वै त्वष्टा" ( ऐ० ६ । १० ) सुदत्रः—कल्याणदानः कल्याणकारिधनस्य दाता रायो धनानि विदधातु सम्पादयतु । पत्नीपतिभ्यां दाने प्रवृत्ताभ्यां भवितव्यम् । यथा वरुणानीप्रभृतयः सूर्यपत्न्योऽपां सूक्ष्मजलानि दातुं प्रवृत्तास्तथा तत्पतिः सूर्योऽपि दानशीलो धनं स्वप्रकाशं दातुं प्रवृत्तः । एवम्—"अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते" ( निरु० २ । १६ ) इति वृष्टिविज्ञानम् ॥

सुविदत्रः ॥ ५५ ॥
सुविदत्रः कल्याणविद्यः ।
"अग्ने याहि सुविदत्रेभिरर्वाङ्" ( ऋ० १०।१५।९ )
इत्यपि निगमो भवति ॥

भा०—'सुविदत्रः' इत्यनवगतं पक्षेणानेकार्थं च । 'सुविद्यः' इत्यवगमः । 'कल्याणविद्यः' इत्यर्थप्रदर्शनम् । सुपूर्वात् 'विद' धातोरनेकार्थात् कत्रन् प्रत्ययः "सुविदेः कत्रन्" ( उणा० ३ । १०८ ) अन्यपक्षे सुविदत्रशब्दस्यार्थाः ।

तत्र धनार्थः—

विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या ।"
( ऋ० २ । २४ । १० )

बृहस्पतेः—माध्यमिकायाः—वाचः स्वामिनो देवस्य यानि विभूनि व्यापानि प्रभूणि प्रबलानि प्रथमानि प्रमुखानि सुविदत्राणि धनानि राध्यानि सेवितव्यानि "सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद् ददातेर्वा स्याद् द्व्युपसर्गात्" ( निरु० ७ । ९ ) "विदॢ लाभे" ( तुदादि० ) इत्यस्मात् सुपूर्वात् "सुविदेः कत्रन्" ( उणा० ३ । १०८ ) सुप्राप्तव्यं हि धनम् । अथवा 'सु' 'वि' उपसर्गद्वयपूर्वात् "दाञ् दाने" ( जुहोत्यादि० ) बाहुलकात् कत्रन् । सु सम्यक् विविशिष्टेभ्यो दातव्यं हि धनम् ॥

सुविदत्रं धनं यस्यास्ति—इति मत्वर्थीयेऽकारे प्रत्यये सुविदत्रो धनवान्, तत्राप्युदाहरणम्—

"सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति ।"

( ऋ० २ । ९ । ६ )

अग्ने ! यजमान ! स त्वमस्मभ्यमनेनानीकेन ज्वलन्मुखेनाग्निना देवानां यष्टा सुविदत्रः सुधनः स्वस्ति—आयजिष्ठः, समन्ताद् यष्टृतमोऽसि ॥

सुविदत्रः सुसत्तावान् प्रतिष्ठावान्—

"आग्ने याहि सुविदत्रेभिरर्वाङ् परैः पूर्वैर्ऋषिभिर्घर्मसद्भिः ।"

( अथर्व० १८ । ३ । ४८ )

हे अग्ने ! विद्वन् ! त्वं घर्मसद्भिर्घर्मे यज्ञे ये सीदन्ति तैर्यज्ञासने—उपवेष्टुमधिकारिभिः पूर्वैः प्राक्प्राप्तविद्यैः परैः पश्चात्प्राप्तविद्यैः—ऋषिभिः सुविदत्रैः सुसद्भिः सुप्रतिष्ठावद्भिः सह सुपूर्वात् "विद सत्तायाम्" ( दिवादि० ) "सुविदेः कत्रन्" ( उणा० ३ । १०८ ) अस्मिन्यज्ञे—आयाहि ॥

सुविदत्रः कल्याणविद्यः—

"ते अर्वाणः कवय आ शृणोत सुविदत्रा विदथेषु हूयमानाः ।"

( अथर्व० १८ । ३ । १९ )

विदथेषु यज्ञेषु "विदथः—यज्ञः" (निघं० ३ । १७) आहूयमानास्तेऽर्वाणः—ईरणवन्तः प्रेरणावन्तः "अर्वा—ईरणवान्" ( निरु० १० । ३१ ) कवयो मेधाविनो सुविदत्राः कल्याणविद्याः—आशृणोत, अस्माकं प्रश्नं प्रार्थनां स्वीकुर्वन्तु—उपदिशन्तु ॥

अथ यास्कप्रदर्शितः सुविदत्रविषयकानेकार्थको मन्त्रः सार्थः प्रस्तूयते—

ये तातृपुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।

आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥

"सत्यैः कव्यैः घर्मसद्भिः' त्रिभिर्विशेषणैस्तु 'सुविदत्रेभिः' सुसद्भिः सुप्रतिष्ठावद्भिरर्थो लक्ष्यते । 'देवत्रा जेहमाना तातृपुः' इत्येतौ खलु 'सुविदत्रेभिः' धनवद्भिः—इति गम्यते । 'होत्राविदः स्तोमतष्टासो अर्कैः' पदैः सुविदत्रेभिः—कल्याणविद्यैः ।

सुविदत्रः—सुसन्—सुसत्तावान्—सुप्रतिष्ठावान्—इत्यर्थः—

हे अग्ने ! त्वं सत्यैः स्थिरवृत्तिभिः कव्यैः कविषु ये साधवः सन्ति तैः कवीनां मेधाविनामपि मान्यैर्घर्मसद्भिर्यज्ञे सत्तुमुपवेष्टुं योग्यास्तैः सुविदत्रैः सुसद्भिः सुसत्तावद्भिः सुप्रतिष्ठावद्भिः सह—आयाहि—अर्वाङ् यज्ञप्रसङ्गे । ये खलु देवत्रा देवान् गच्छन्तः प्राप्नुवन्तो होत्राविदो यज्ञविदः—अर्कैः—मन्त्रैः स्तुतिवचनानां वक्तारस्तृप्ताः सन्ति—आप्तकामाः सन्ति ।

सुविदत्रः धनवान्—

अग्ने ! ये देवत्रा देवेषु गन्तारो निमन्त्रयितुं होत्राविदः—होत्रं यज्ञं वेदयितुमुत्सुकाः—अर्कैः स्तवनस्य कर्तारः सन्ति तैः सुविदत्रैर्धनवद्भिः सहार्वाङ् यज्ञावसरे त्वमायाहि तथा सत्यैः कविशस्तैर्घर्मसद्भिः पितृभिः—मान्यजनैश्चायाहि । यथा ते तृप्येरन् ।

सुविदत्रः कल्याणविद्यः—

हे अग्ने ! होत्राविदो यज्ञविधानस्य वेत्तारोऽर्कैर्मन्त्रैर्वेदमन्त्रैः स्तोमानां स्तवनानां कर्तारो देवत्रा देवान् विदुषो गच्छन्तस्तातृपुस्तृप्यन्ते तैः सुविदत्रैः—कल्याणविद्यैः सत्यैः कविशस्तैर्घर्मसद्भिः पितृभिरर्वाङ् यज्ञप्रसङ्गे—आयाहि ॥

आनुषक् ॥ ५६ ॥

आनुषगिति नामानुपूर्व्यस्यानुषक्तं भवति ।

"स्तृणन्ति बर्हिरानुषक्" ( ऋ० ८ । ४५ । १ )

इत्यपि निगमो भवति ॥ १४ ॥

भा०—'आनुषक्' इत्यनवगतम् । 'अनुषक्तम्' इत्यवगमः । निपातः सम्प्यानुपूर्व्यस्य पूर्वमभिलक्ष्य पश्चात् प्रवृत्तस्य नाम इत्यभिप्रेयम् । अनुपूर्वात् "षञ्ज सङ्गे" ( भ्वादि० ) ततः क्विप् "अनिदितां हल उपधायाः क्ङिति" ( अष्टा० ६ । ४ । २४ ) इति नकारलोपः, 'अनु' इत्यस्य—अकारस्य दीर्घत्वं छान्दसम् । 'आनुषक्' आनुपूर्व्यस्य वाचकं प्रसिद्धं लोके "आनुषक्—आनुकूल्ये" ( अव्ययार्थशास्त्रे—बड़ोदाप्राच्यविद्यामन्दिरस्थे ) भवतु तदपि । नाम पदं यदनुसम्बद्धं वेदे । एवमर्थद्वयद्योतकः—'आनुषक्' शब्दः । यास्कप्रदर्शिते मन्त्रे द्वयोर-

र्थयोः सम्भवस्तस्यानेकार्थसन्दर्भत्वात् । भिन्नभिन्नार्थप्रदर्शका मन्त्राः पूर्वं प्रदर्श्य-न्तेऽत्रास्माभिः ।

आनुपूर्व्येऽर्थे—आनुषक्—

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।
यत्रामृतस्य चक्षणम् ॥ ( ऋ० १ । १३ । ५ )

हे मनीषिणः ! मननशीला विद्वांस ऋत्विजो यष्टारः ! यूयं यज्ञे—आहुति-भिरानुषक्—आनुपूर्व्येणानुक्रमेण "आनुषक्—अनुक्रमेण" ( सायणः ) बर्हिः—अन्तरिक्षम् "बर्हिः—अन्तरिक्षनाम" ( निघं० ३ । १ ) घृतमुदकं सूक्ष्मीभूतं जलं पृष्ठे यस्य तथाभूतम् "घृतमुदकनाम" ( निघं० १ । १२ ) स्तृणीत—छादयत पूरयत, यत्रान्तरिक्षेऽमृतस्योदकस्य "अमृतमुदकनाम" (निघं० १।१२) ( चक्षणम् ) दर्शनं मेघरूपेण दर्शनं प्रकटीभावो भवति ।

प्र देवं देव्या धिया भरता जातवेदसम् ।
हव्या नो वक्षदानुषक् ॥ ( ऋ० १० । १७६ । २ )

हे ऋत्विजः ! जातवेदसं जात एव यो वेद्यते ज्ञायते स्वप्रकाशधर्मेण तमग्निं प्रखरया प्रज्ञया यज्ञकुण्डे भरत धरत यतः सोऽस्माकं हव्यानि—आहुतीरानुषक्—आनुपूर्व्येणानुक्रमेण "अनुषक्—आनुपूर्व्येणानुक्रमेण" ( सायणः ) वक्षत् आकाशे वहेत् ॥

अनुषक्तार्थे—आनुषक्—

न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः ।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥
( ऋ० १ । ५२ । १४ )

हे इन्द्र ! परमात्मन् ! द्यावापृथिव्यौ यस्य तव व्यचो व्यापनमनु न तिष्ठतः रजसोऽन्तरिक्षस्य सिन्धवः स्यन्दनशीलाः सूक्ष्माः पदार्था वाष्पादयस्ते-ऽन्तं न प्राप्नुवन्ति । नापि स्ववृष्टिं मेघवर्षणं प्रति—अस्य सूर्यस्य युध्यत इव मदे हर्षे वर्तमानस्य मेघोऽन्तमाप्नोति, एकस्त्वं परमात्मन्—अन्यत् सर्वं यदानुषक्—अनुषक्तम् 'अनुषक्तम्' ( सायणः ) सम्बद्धं चकृषे करोषि तत्सर्वं नान्तं व्याप्नोति ॥

अग्ने कदा त आनुषग्भुवद् देवस्य चेतनम् ।
अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्वीड्यम् ॥ ( ऋ० ४ । ७ । २ )

हे अग्ने परमात्मदेव ! तव देवस्य चेतनं प्रकाशनं कदा मयि आनुषक्—अनुषक्तं प्राप्तं भवेत् "आनुषक्—अनुषक्तम्" ( सायणः ) । अथा हि—यतो हि मर्तासो मनुष्या विक्षु जडचेतनप्रजासु व्याप्तं स्वामीड्यं स्तुत्यं जगृभ्रिरे गृह्णीयुः ॥

अथ यास्केनोदाहृतो मन्त्रोऽनेकार्थःसमग्रो व्याख्यायते—

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।

येषामिन्द्रो युवा सखा ॥

इन्द्रोऽन्तरिक्षस्थानो विद्युद्रूपो देवो युवा सदा यौवनसम्पन्नो येषां सखेव सुखवृष्टिकरो ज्ञातो येऽपि—अग्निं यज्ञाग्निं समन्ताज् ज्वलयन्ति ते—आनुपूर्व्येण बर्हिरन्तरिक्षं हव्यैश्छादयन्ति—यद्वा—आनुषक्—अनुषक्तमिन्द्रेणानुषक्तं सम्बद्धमन्तरिक्षं हव्यैश्छादयन्ति ।

तुर्वणिः ॥ ५७ ॥

तुर्वणिस्तूर्णवनिः ।

"स तुर्वणिर्महाँ अरेणु पौंस्ये" ( ऋ० १ । ५६ । ३ )

इत्यपि निगमो भवति ॥

भा०—'तुर्वणिः' इत्येतदनवगतम् । 'तूर्णवनिः' इत्यवगमः । 'तूर्णं वनति सम्भजते' इति तूर्णशब्दोपपदे "वन सम्भक्तौ" ( भ्वादि० ) "सर्वधातुभ्य इन्" (उणा० ४।११८) तूर्णवनिः—हि तुर्वणिः, 'तूर्णं' शब्दस्य 'तुर्' भावः । तुर्वणिः । क्षिप्रसम्भाजी, इति विशेषणमभिधेयम् । इति निर्वचनं नैरुक्तदृष्ट्या, अत्रानेकार्थप्रकरणेऽन्यथाऽप्यर्थदृष्ट्या भवितव्यं—तदित्थम्—"तुर्वी हिंसायाम्" (भ्वादि०) ततः 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः" ( उणा० २ । १०३ ) धातोर्बाहुलकात् 'अनिः' प्रत्ययः, इति तुर्वणिः—हिंसकः । यास्कप्रदर्शिते मन्त्रे द्वाभ्यामर्थाभ्यां भवितव्यं तस्यानेकार्थप्रसङ्गत्वात् । प्रथमं पृथक् पृथगर्थवान् मन्त्रः प्रदर्श्यते ।

हिंसार्थः—तुर्वणिः—

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।

ओजिष्ठेभिर्नृपतिर्वज्रबाहुः सङ्गे समत्सु तुर्वणिः पृतन्यून् ॥

( ऋ० ४ । २० । १ )

नोऽस्माकम्—अभिष्टिकृत्—अभीष्टपूर्तेः कर्ता—उग्रस्तेजस्वी—इन्द्रो नोऽस्माकमवसे रक्षणाय दूरात्, आसात्—आसन्नात् । समीपात्, आयासत्—आगच्छतु, आगत्य स वज्रबाहुः वज्रहस्तो नृपतिः—राजा सङ्गे शत्रुभिः साम्मुख्ये संयोगे वा समत्सु संग्रामेषु "समत्सु संग्रामनाम" ( निघं० २ । १७ ) ओजिष्ठेभिर्बलिष्ठैः

सैनिकैः पृतन्यून् युध्यमानान् शत्रून्—तुर्वणि हिंसन्—"तुर्वणिः हिंसन्" (सायणः)।

क्षिप्रसम्भक्ता—तुर्वणिः—

प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः।

असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः॥

(ऋ० १। १८६। ३)

हे यजमानाः! वः—युष्मभ्यं प्रेष्ठं—प्रियतमम्—अतिथिमग्निम्—अग्रेणेतारं शस्तिभिः प्रशंसाभि गृणीषे—अहं प्रशंसेयं यः सजोषाः—युष्माभिः सह प्रीयमाणः—तुर्वणिः क्षिप्रसम्भक्ता "तुर्वणिः शीघ्रं सम्भक्ता" (सायणः) युष्माकं कर्मणः फलं शीघ्रं सम्भाजयति—अथ च सुकीर्तिः—सुयशाः—सुयशस्वी—अरिगूर्तः—अरीन् अदातॄन् गृणाति—उपदिशति स नोऽस्माकं वरुणो वरयिता—असद्—भवेत् स सूरिः प्रेरयिता—इषः—अन्नानि पर्षत् पूरयेत्॥

अथ यास्कप्रदर्शितोनेकार्थकः समग्रो मन्त्रो व्याख्यायते—

स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः।

येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन् नि दामनि॥

हिंसकः तुर्वणिः—

स इन्द्रो महान् तुर्वणिः शत्रूणां हिंसकः "तुर्वी हिंसायाम्" (भ्वादि०) अस्मादौणादिकः 'अनिः' प्रत्ययः। अरेणु—अरेणौ पौंस्ये रेणुरहिते सप्तम्या लुक्। पौंस्ये संग्रामे "पौंस्ये संग्रामे" (निघं० २। १७) घने संग्रामे गिरेः—भृष्टिः—न मेघे भर्जनधर्मिणी विद्युदिव भ्राजते दीप्यते तुजा हिंसनसाधनेन वज्रेण सह "तुज हिंसायाम्" (भ्वादि०) शवः—शवस्वी बलवान्—अस्ति मतुपो लोपश्छान्दसः। "शवो बलनाम" (निघं० २। ९) येन तुजा वज्रेण स आयसोऽयोमयकवच-युक्तः—दुध्रो दुर्जनानां शत्रूणामध्वंसयिता "धृङ् अवध्वंसने" (भ्वादि०) ततो दुः पूर्वात् कः प्रत्ययो मूलभुजादिषु। एवं मदे बलस्य हर्षे स्थितः शुष्णं शोषणीयं मायिनं मायाविनं शत्रुमाभूषु प्रसृतगृहेषु प्राकारगृहेषु दामनि बन्धनसृङ्कायां निरमयत् निवासयति।

क्षिप्रसम्भक्ता तुर्वणिः—

हे वधू! स इन्द्रो यजमानो वैवाहिकयज्ञस्य यजमानो वरः—महान् तुर्वणिः क्षिप्रसम्भक्ता शीघ्रं गार्हस्थ्य सुखस्य सम्भाजयिता प्रदाता—अरेणु रेणुरहिते नीरोगे निर्दोषे पौंस्ये पुंसो भावे सन्तानसंस्थापनसमर्थे पुरुषत्वे पुरुषबले "पौंस्यानि बलनाम" (निघं० २। ९) तथाभूते पुरुषत्वे गिरेः—भृष्टिः—न मेघे वर्तमाना

विद्युदिव भ्राजते दीप्यते तुजा—आदानधर्मेण पाणिना "तुज आदाने" (चुरादि०) शवस्वी धनी त्वदर्थधनोपार्जने समर्थपाणिः, मतुबर्थप्रत्ययस्य लोपश्छान्दसः। "शवः धननाम" (निघं० २।१०) येन तुजा पाणिना—आयसः—आयस्यतीति स—आयसः, आङ्पूर्वात् "यसु प्रयत्ने" (दिवादि०) ततः पचाद्यच् चित्त्वा-दन्तोदात्तः, तेन पाणिना स समन्तात् प्रयत्नशीलः दुध्रः सुखैश्वर्यप्रपूर्णः "दुह प्रपूरणे" (अदादि०) ततः 'रक्' प्रत्यय औणादिकः "बहुलमन्यत्रापि संज्ञा-च्छन्दसो—रक्" (उणा० २।१३) मदे हर्षे—आनन्दे सुखे स्थितं शुष्णं दुःखानां शोषयितारं मायिनं प्रज्ञावन्तम्—"माया प्रज्ञानाम्" (निघं० ३।९) हे देवि! त्वं वृणीष्व वरय—इत्याकांक्षाऽत्र। पुनर्दामनि सुखप्रदे गृहस्थे यद्वा धामनि गृहे धकारस्य दकारश्छान्दसः, धा धातोर्वा दामन् निपात्यते। एवं गृहस्थाश्रमे त्वाम्—आभुषु—आभूषुः "सुपां सुलुक्...." (अष्टा० ७।१।३९) इति सोर्लुक् स एतादृशस्तव पतिः—आभूषुः—समन्तादाभूषयिता स्वर्णरत्नादिभिराभूषयन् सन् निरा-मयन् निरमयन् तिष्ठतु॥

गिर्वणाः॥ ५८॥
गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति।
"जुष्टं गिर्वणसे बृहत्" (ऋ० ८।८९।७)
इत्यपि निगमो भवति॥ १४॥

भा०—'गिर्वणाः' इत्यनवगतम्। 'गीर्वाणः—गीर्वणनीयः' इत्यवगमः। 'गीर्भिः' स्तुतिभिरेनं यं वनयन्ति स्वार्थसम्भाजने नमयन्ति। इति निर्वचनमर्था-नुरूपम्। 'देवः—इष्टदेवः' अभिधेयः। 'गीर्भिः' इति तृतीयान्तादुपपदात् "वन सम्भक्तौ" (भ्वादि०) ततो ण्यन्तात् "सर्वधातुभ्योऽसुन्" (उणा० ४।१८९) असुन् कर्मणि, णेर्लोपः। यः स्तुतिभिः गीर्भिर्वन्यते सम्भज्यते सम्भक्तः सन्नभीष्टं प्रापयति—अभीष्टेन संयोजयतीत्याशयः। इति त्वनवगतदृष्ट्या णिलोपेनान्तर्गत-णिचा वा "वन सम्भक्तौ" (भ्वादि०) णिच्सम्पर्करहितात् "वन याचने" (तनादि०) इति धातोश्च गीर्भिः स्तुतिभिर्याच्यते यः स गिर्वणाः, असुन् कर्मणि। एवमर्थद्वययुक्तो गिर्वणाः। यास्कप्रदर्शिते मन्त्रेऽर्थद्वयसम्भवस्तस्याने-कार्थसन्दर्भे पठितत्वात्। अन्यत्र मन्त्रेष्वेकैकार्थस्य योग्यता वर्तते। पूर्वमेकैकार्थ-युक्ता मन्त्राः प्रदर्श्यन्तेऽस्माभिः।

गीर्भिर्वननीयो याचनीयः—गिर्वणाः—

तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः।
सपर्येम सपर्यवः॥ (ऋ० २।६।३)

हे द्रविणोदः ! धनस्य दातः ! "द्रविणं धननाम" ( निघं० २ । १० ) अग्ने परमात्मन् ! तं त्वां द्रविणस्युम्—अस्मभ्यं द्रविणमिच्छन्तम् 'द्रविणस्युम्' क्यच्-प्रत्ययान्तं पदमिदं परेच्छायाम् "छन्दसि परेच्छायामिति वक्तव्यम्" इति वार्तिकेन । गीर्भिः स्तुतिभिर्वन्यते याच्यते य स गिर्वणाः—तं गिर्वणसं सपर्यवः परिचरणकर्तारो वयम् "सपर्यति परिचरणकर्मा" (निघं० ३।५) सपर्येम परिचरेम ॥

न यं हिंसन्ति धीतयो न वाणीरिन्द्रं नक्षन्तीदभि वर्धयन्तीः ।

यदि स्तोतारः शतं यत्सहस्रं गृणन्ति गिर्वणसं शं तदस्मै ॥

( ऋ० ६ । ३४ । ३ )

यमिन्द्रं धीतयस्तदर्थसेवाकर्माणि "धीः कर्मनाम" ( निघं० २ । १ ) न हिंसन्ति न वाणीः स्तुतयो हिंसन्ति किन्तु—अभिवर्धयन्तीः—अभिवर्धयन्त्यो नक्षन्ति गच्छन्ति प्राप्नुवन्ति "नक्षतिर्गतिकर्मा" ( निघं० २ । १४ ) यदि स्तोतारः शतं यद्वा सहस्रं गृणन्ति स्तुवन्ति गिर्वणसं गीर्भिः स्तुतिभिर्वननीयं याचनीयमिन्द्रम् । सोऽभीष्टवस्तूनां महाधनी परिचरणकर्मणां स्तुतीनां फलानामभीष्टवस्तूनां दाता, दानाय नाभावस्तत्र तेषामभावे हि परिचरणकर्माणि स्तुतयो वा हिंसेयुस्तं कुतो दद्यामिति । किन्त्वस्मै तत्—शं कल्याणं भवति दत्त्वा यतस्ते याचन्ते स्तोतारस्तद् याचनीयं तैर्लभ्यते ।

गीर्भिर्वनयितव्यः सम्भाजयितव्यः स्वसम्भागप्रदाने नम्रीकर्तव्यो गिर्वणाः—

अभि त्यं वीरं गिर्वणसमर्चेन्द्रं ब्रह्मणा जरितर्नवेन ।

श्रवदिद्धवमुप च स्तवानो रासद्वाजाँ उप महो गृणानः ॥

( ऋ० ६ । ५० । १ )

हे जरितः स्तोतः ! त्वं त्यं तं वीरं गिर्वणसं गीर्भिः स्तुतिभिर्वनयितव्य सम्भाजयितव्यमभीष्टवस्तूनां सम्भाजने प्रेरयितव्यमिन्द्रं नवेन स्तुतिसाधनेन ब्रह्मणा मन्त्रेणार्च पूजय स्तुहि । अथ च सोऽस्माकं हवं प्रार्थनामुपश्रवत्—इत्—उपशृणुयात् । एवं स स्तवानः स्तूयमानो गृणानः प्रार्थ्यमानः, उभयत्र कर्मणि कर्तृप्रत्ययः । वाजान्—अन्नानि बलानि च "वाजोऽन्ननाम" (निघं० २।७) "वाजो बलम्" (निघं० २।९) उपरासत् प्रदद्यात् "रासति दानकर्मा" (निघं० ३।२०)

अथ यास्कप्रदर्शितोऽनेकार्थः समग्रो मन्त्रो व्याख्यायते—

आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।

घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥

हे इन्द्र ! परमात्मदेव ! देवानां देव ! त्वम्–आमासु–अपक्वासु अग्निसंयोग-रहितासु सजलासु भूमिषु भोजनाय पक्वं भोज्यं फलमैरय प्रेरय–भोजनं प्रापय पृथिव्यामस्मभ्यम्, दिवि द्युलोके सूर्यमारोहय–संस्थापयास्मभ्यं प्रकाशं दातुम्। सूर्यो दिवि हि तिष्ठेत्। ओषधिपक्वं फलं भोजनं पृथिव्यां हि तिष्ठेत्। सूर्योऽग्निर्न नीचैरागच्छेत्–अन्नं भोजनं नीचैः पृथिव्यामेव तिष्ठेत्। प्रत्युत्तरयति–तथा-भवतु। हे स्तोतारः! यूयमपि सामन् स्वर्लोके दिवि द्युलोके घर्मं सूर्यमिव तपत यथा द्युलोकेऽहं परमेश्वरः सूर्यं तपामि तप्तं करोमि तथा यूयं स्वमनस्तपत "स्वर्गो लोकः सामवेदः" (ष० १।५) "आदित्यो वै घर्मः" (शत० ११। ६।२।२) एवं सुवृक्तिभिर्जुष्टं–शोभनस्तुतिभिः "सुवृक्तिभिः शोभनाभिः स्तुतिभिः" (निरु० २।२) जुष्टं प्रीतं तन्मनो गिर्वणसे ताभिः स्तुतिभिर्गिर्व-णसे वनयितव्याय सम्भाजयितव्याय देवाय समर्पयत। यद्वा सुवृक्तिभिः सम्यक् त्यागवृत्तिभिर्भौतिकांक्षारहिताभिरुपासनाभिः–"वृजी वर्जने" (अदादि०) ततः क्तिन्। सेवितं मनो निरुद्धं मनो गिर्वणसे गीर्भिः स्तुतिभिर्वननीयाय याचनीयाय समर्पयत। स याचनीयस्तत्स्वरूपलाभाय। सम्भाजयिता गिर्वणा लोकपदार्था-कांक्षारहिताः। यज्ञादिकर्मकाण्डपराः स्तुतीराकांक्षति कर्मफलदानाय। वननीयो याचनीयो गिर्वणास्त्यागवैराग्ये कांक्षति स्वात्मस्वरूपप्रदानायेति भेदः॥

असूर्ते सूर्ते ॥ ५९॥

"असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्-निमानि" (ऋ० १०।८२।४)

असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमका देव-गणास्ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति त आयजन्तेत्यतिक्रान्तं प्रतिवचनम्॥

भा०—'असूर्ते सूर्ते' इत्यनवगते पदे सहैव प्रयुज्येते। 'असुसमीरिताः सुसमीरिताः' इति चावगमः। 'असुशब्दपूर्वात् 'सु' शब्दपूर्वाच्च "ईर गतौ" (अदादि०) ततः क्तः प्रत्ययः–उभयत्र पूर्वसवर्णदीर्घः, इडभावश्च छान्दसः। असुसमीरिताः–वातसमीरिता माध्यमका देवगणा मरुतः पदद्वययुक्त एष एक एव चतुर्षु वेदेषु मन्त्रः, तथाऽन्यत्र वैदिकवाङ्मये च।

समग्रमन्त्रस्तदर्थश्च—

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना।

असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि॥

असूर्ते—असुसमीरिताः—असुः प्राणः, प्राणो वायुस्तेन समीरिता वातेन प्रेरिताः—माध्यमका देवगणाः—मरुन्मेघादयो निषत्ते निश्चेष्टे रजसि—अन्तरिक्षलोके वर्तमानाः—वृष्टिजलरूपेण रसेन पृथिवीं तर्पयन्तः—भूतानि कुर्वन्तीति। कृतेषु भूतेषु ये—आसन् पूर्वे ऋषयः साङ्कल्पिका ऋषयः वेदस्य प्रवक्तारस्ते जरितार इव स्तोतार इव पश्चादुत्पद्यमाना स्तोतार इव भूना भूम्ना स्वमहत्त्वेन 'मकारलोपश्छान्दसः' अस्मै विश्वकर्मणे परमात्मने द्रविणं स्वात्मबलम्—स्वात्मभावम् "द्रविणं बलम्" (निघं० २।९) समायजन्त समार्पयन्त।

असूर्ते सूर्ते—इत्यनेकार्थत्वेनाप्यत्रैव भवितव्यम्—

पूर्वे—ऋषयः—आरम्भसृष्टौ जाता ऋषयः स्तोतार इव केवलमात्मभावं द्रविणं विश्वकर्मणे परमात्मने समार्पयन्त तस्माज्ज्ञानमादाय सूर्ते सरणशीले जङ्गमेऽसूर्तेऽसरणशीले स्थावरे निषत्ते निस्तब्धे ज्ञानशून्ये रजसि लोके—गणे यानि—इमानि सर्वाणि भूतानि योग्यानि—अकुर्वन्। मनुष्येभ्यो ज्ञानं दत्तवन्तः पशून्—उपयोगाय साधितवन्तः स्थावराणि च पिष्टपक्वयनसंयोजनैर्व्यवहृतवन्तः॥

अम्यक्॥ ६०॥

"अम्यक् सा त इन्द्र ऋष्टिः" (ऋ० १।१६९।३)

अमाक्तेति वाऽभ्यक्तेति वा॥

भा०—'अम्यक्' इत्यनवगतम्। 'अमाक्ता' यद्वा 'अभ्यक्ता' इत्यवगमो विशेषणरूपः। 'ऋष्टिः' विशेष्यत्वेन—अभिधेया। अमा सहार्थे—आत्मार्थे च 'अमा' उपपदात् "अञ्चु गतौ" धातोः क्विन्। आकारस्य—इकारापत्तिः। अम्यक्, यद्वा 'अभि' पूर्वात् "अञ्चु गतौ धातोः क्विन्, शत्रुमभिगतत्वात्—अभ्यक्—अम्यक्, भकारस्य मकारश्छान्दसः॥

समग्रमन्त्रस्तदर्थश्च—

अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि॥

हे इन्द्र! ते तव सा—अम्यक्—अमाक्ता शत्रुणा सहाक्ता शत्रुसंसक्ता यद्वा—अभ्यक्ता शत्रुमभिगता या भवति सा—ऋष्टिः—वज्राख्यास्त्रम् "ऋष्टिमन्त्रिः" (ऋ० १।८८।१) अग्निश्चित्—अग्निरिव चित्—उपमार्थे "दधिचित्—उपमार्थे" (निरु० १।४) अतसे काष्ठसमूहे शुशुकान् दीपयन् तथा दीप्यमाना—ऋष्टिः—तथा मरुतो वायवोऽस्मभ्यं सनेमि पुरातनम् "सनेमि पुराणनाम" (निघं० ३।१७) पुराणं पुष्टमभ्वं मेघम् "अभ्वं मेघः" (निघं० १।१०) जुनन्ति नीचैः प्रेरयन्ति तस्माज्जलं क्षिपन्ति तेन वृष्टिपातेन क्षेत्रे—उत्पन्नानि प्रयांसि—अन्नानि—आपो न

द्वीपं दधति । यथा—आपो द्वीपं प्रदेशं परिवार्य धारयन्ति तद्वदन्नानि हरितशस्यानि क्षेत्रं प्रपूर्य धारयन्ति ।

अनेकार्थप्रकरणत्वात् 'अभ्यक्' शब्दोऽन्यार्थेऽपि द्रष्टव्यः—तदा 'अभ्यक्' क्रियापदम् "म्यक्षति गतिकर्मा" ( निघं० २ । १४ ) स भ्वादादिगणीयः । लङि 'अभ्यक्' प्रथमपुरुषैकवचने । तदा मन्त्रस्यायमर्थो भविष्यति—

हे इन्द्र ! तव सा—ऋष्टिर्वज्रास्त्रं मरुतः प्रति—अभ्यक्—अगच्छत्—गच्छति ते च—ऋष्टिमन्तः सन्तोऽस्मभ्यं सनेमि पुराणं पुष्टं मेघं जुनन्ति क्षिपन्ति नीचैः प्रेरयन्ति तेन प्रयांसि—अन्नानि शस्यानि—ओषधिवनस्पतयश्च प्राचुर्येण जायन्ते तदा—अग्निरपि—अतसे सततयज्ञकर्मणि ह्यवश्यं शुशुक्वान् दीप्यमानो वर्तते ॥

याद्दश्मिन् ॥ ६१ ॥

"याद्दश्मिन् धायि तमपस्यया विदत्" (ऋ० ५।४४।८)

याद्दशेऽधायि तमपस्यया विदत् ।

भा०—'याद्दश्मिन्' इत्यनवगतम् । 'याद्दशे' इत्यवगमः । विशेषणपदत्वा-दभिधेयो विशेष्यः । 'याद्दश्' इत्यसर्वनामापि सर्वनाम सप्तम्यां 'स्मिन्' इत्यस्य सकारलोपः, इत्यत्रानवगतत्वम् ।

समग्रमन्त्रस्तदर्थश्च—

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
याद्दश्मिन् धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥

हे प्रियजन! अस्य स्वसम्बद्धस्य यतुनस्य यत्नशीलस्य ज्ञानिनः केतुना ज्ञानो-पदेशेन—ऋषिस्वरमृषयो यं नित्यं स्वरन्ति पठन्ति तं ज्यायांसं ज्यायस्तरं मानव-ज्ञानापेक्षयोत्कृष्टतरं ज्ञानमयं वेदं चरति—अनुतिष्ठति तदा तु यासु ह्याकांक्षासु याद्द-श्मिन् याद्दशे फललाभे ते तस्य 'व्यत्ययेन ते' नाम स्वनमनं नमनशीलं मनोऽधायि ध्रियते तं फललाभमपस्यया स्वकीयकर्मप्रवृत्त्याऽविदत् प्राप्नोति, यतो हि य उ य एव स्वयं वहते कार्यमनुष्ठानं वहत्याचरति सोऽरं करत् स्वात्मानमलङ्करोति ॥

जारयायि ॥ ६२ ॥

"उस्रः पितेव जारयायि यज्ञैः" ( ऋ० ६ । १२ । ४ )

उस्र इव गोपिताजायि यज्ञैः ॥ १५ ॥

भा०—'जारयायि' इत्यनवगतम् । 'अजायि' इत्यवगमः ।

समग्रमन्त्रस्तदर्थश्च—

सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।
द्रुवन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥

एतरि न दमे—गृहे यथा यातरि—अतिथौ—आगते, इण् धातोस्तृजन्तः प्रयोगः सप्तम्येकवचने तथा च पदपाठः 'एतरि' "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३७ ) इति दीर्घः । सोऽतिथिः, अस्मदीयैः—अस्माभिर्दत्तैः शूषैः सुखैः सुहितभोजनैः "शूषं सुखनाम" ( निघं० ३ । ६ ) आस्तवे—आस्तूयते सत्क्रियते सेव्यते तथा स जातवेदाः—जात एव वेद्यते ज्ञायते स्वप्रकाशधर्मवत्त्वेन यज्ञसदने सेव्यते यज्ञैर्यजनयोग्यैर्हव्यद्रव्यैस्तदा सोऽग्निः—द्रुवन्नः—द्रुर्द्रुमोऽन्नं यस्य तथाभूतः काष्ठान्नः काष्ठानि वन्वन् सम्भजन् सेवमानः क्रत्वा क्रतुना कर्मणा न स्वकीयबल-कर्मणा यथा—अर्वा—अश्वो वोढा भवति स भवति हव्यस्य वोढा यद्वा—उस्रः पिता—इव, पिता गोपिता गवां पिता—उस्रो वृषभ इव जारयायि—अजायि प्रसिद्धो जायते ॥

अनेकार्थसन्दर्भत्वात् तस्य 'जारयायि' शब्दस्यान्यार्थसम्भवोऽस्मिन्नेव मन्त्रे न ह्यन्यत्र वैदिकसाहित्ये जारयायि शब्दः क्वचिदस्ति तस्मादस्मिन्नेव मन्त्रेऽर्थद्वयं सङ्गच्छते तद्यथेत्थम्—

शरीरस्य नेता स जातवेदाः—जातानि यो वेद जातप्रज्ञो वा—आत्मा सत्कर-णीयो यथा ऽऽगते एतरि यातरि—अतिथौ गृहेऽस्माभिर्दत्तैः शूषैः सुखैः सुहितैः—आस्तवे सत्क्रियते । यथा सोऽतिथिः—द्रुवन्नो द्रवभोजनानि पायसादीनि—अदनी-यानि यस्मै दीयते स तानि भुक्त्वा तृप्तो भवति तथायमात्मा—अतति—इत्यात्मा—अतनशीलस्तथैव सुहितैर्भोजनैः—आसेव्यः । यथा स्वक्रतुना स्वकर्मणा पौरुषेण—अश्वः सम्यग्भारं वहति तथाऽयमपि शरीरभारं सम्यग् वहेत् स्वार्थं परार्थं तेन साधयेत् यथा वा—उस्रो गोपिता गवां पिता पालयिता वृषभो भवति तथाऽय-मात्माऽपीन्द्रियाणां स्वाधीने रक्षिता भवेत्, संयमेन चालयेत्, तानि यज्ञैर्देव-पूजासङ्गतिकरैर्धनैः संरक्षेत्, अस्मिन् दमे गृहे शरीरे हि कल्याणानि साधनीयानि भवन्ति "इयं कल्याण्यजरा मर्त्यस्यामृता गृहे" ( अथर्व० १० । ८ । २६ ) गृहं शरीरं खलु जारयायि, जारं जरां यातीति तच्छीलम्—तथा चात्र दयानन्दः "( जारयायि ) जारं जरावस्थां यातुं शीलं यस्य तच्छरीरम्" अत्र ताच्छीलिको णिनिः प्रत्ययः "सुप्यजातौ णिनिस्ताच्छील्ये" ( अष्टा० ३ । २ । ७८ ) धातु-स्वरश्छान्दसः ॥

अग्रिया ॥ ६२ ॥

"प्र वोच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥" ( ऋ० ४ । ३४ । ३ )

प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति वाऽग्रगर-
णेनेति वाऽग्रसम्पादिन इति वा। अपि वाऽग्रमित्येतद-
नर्थकमुपबन्धमाददीत ॥

भा०—'अग्रिया' इत्येतदनवगतम्। 'अग्रगमनेन' अथवा 'अग्रगरणेन' यद्वा 'अग्रसम्पादिनः' अथवा 'अग्रम्' इत्यवगमः। 'अग्रम्' हि 'अग्रिया' इतिपक्षे 'इया' उपबन्धः प्रत्ययोऽनर्थकः, 'अग्र' शब्दस्यार्थे हि स्थितस्तस्य स्वार्थे।

अग्रशब्दोपपदात् 'इण्' गतौ धातोः "क्विप् च" (अष्टा० ३।२।७६) छान्दसः क्विप् प्रत्ययो भावे तुकोऽभावश्च छान्दसः, अग्रशब्दस्यान्तलोपश्च—अग्रिः, अग्रगमनं तेन तृतीयैकवचनप्रत्ययस्य स्थाने छान्दसो याच् प्रत्ययः "सुपां सुलुक्...." (अष्टा० ७।१।३९)—'अग्रिया' चित्वादन्तोदात्तं पदम्। अथवा—अग्रे गरणं भोजनमर्हति—इति अर्हार्थे घः प्रत्ययश्छान्दसः। तृतीयैकवचनविभक्तेराकारादेशश्च। अथवा अग्रशब्दात् सम्पादिनि—अर्थे घः प्रत्ययश्छान्दसः, आकारादेशो जसः स्थाने यद्वा—अग्रशब्दात्—स्वार्थे डियाच् प्रत्ययश्छान्दसः। एवम्—अग्रम्—'अग्रिया' शब्दोऽनेकार्थः।

समग्रमन्त्रस्तदर्थश्च—

अयं वो युज्ञ ऋभवोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः॥

हे ऋभवो मेधाविनो जनाः! वो युष्मभ्यमयं यज्ञो ज्ञानयज्ञोऽध्यापनोपदेशरूपोऽकारि क्रियते यं यस्मिन् यज्ञे यूयं मनुष्वत्—मननशीला मनुष्या इव प्रदिवः प्रकृष्टविद्याप्रकाशवतो विदुषोऽध्यापकानुपदेशकांश्चादधिध्वे—आचार्यत्वेनाधारयत, ते विद्वांसो वो युष्मान्—अच्छा जुजुषाणासः—भृशं सेवमानाः प्रास्थुः प्रतिष्ठेरन् प्रतिष्ठां प्राप्नुयुस्तैः सह यूयं सर्वेऽपि वाजा वाजवन्तो ज्ञानवन्तः—अग्रिया—अग्रगन्तारो वा अग्रेभोजनार्हा वा कार्यस्याग्रसम्पादिनो वा—अग्राः श्रेष्ठा वा भूत भवत॥

चनः॥ ६४॥ पचता॥ ६५॥

"अद्धीदिन्द्र प्रस्थितेमा हुवींषि चनो दधिष्व पचुतोत सोमम्।" (ऋ० १०।११६।८)

अद्धीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व। चन इत्यन्ननाम। पचतिर्नामी भूतः

"त मेदस्तः प्रति पचताग्रभीष्टाम्" ( मैत्रायणी सं० ४ । १३ । ९ ) इत्यपि निगमो भवति । अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्याद् यत्र ह्येकवचनार्थः प्रसिद्धं तद् भवति ॥

"पुरोळा अग्ने पचतः" ( ऋ० ३।२८।२ ) इति यथा

भा०—'चनः' इति च 'पचता' इति च द्वेऽनवगते । एते द्वे एकस्मिन् मन्त्रे स्तस्तस्मादेकत्र पठिते । 'चनः' इत्यस्य 'अन्नम्' अभिधेयम् । 'पचता' इति पचधातोर्नाख्यातं पदं किन्तु नामीभूतमत्र नाम पदं भवति । 'चनः' इति "चायृ पूजायाम्" ( भ्वादि० ) ततः "चायतेरन्ने ह्रस्वश्च–नुट् च" ( उणा० ४ । २०० ) इति 'असुन्' प्रत्ययः–अन्नेन पूज्यते विद्वान् । अथवा 'पच' धातोः–ल्युट्प्रत्यये पचनं कर्मणि "कृत्यल्युटो बहुलम् ।" ( अष्टा० ३ । ३ । ११३ ) तत् पचनं पच्यमानं सत् लुप्तपकारं चनं लोके, वेदे तु चनस् चनः । इति स्कन्द-स्वामी । यद्वा "चमु भक्षणे" ( स्वादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) असुन् प्रत्ययः । मकारस्य नकारः–चनः । 'पचता' इति 'पच' धातोः "भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्" ( उणा० ३ । ११० ) इत्यनेन 'अतच्' प्रत्ययः कर्मणि भूते काले । "भूतेऽपि दृश्यन्ते–उणादयः" ( अष्टा० ३ । ३ । २ ) 'पचता' पक्वः, पक्वौ, पक्वाः–यथाविशेष्यम् ॥

समग्रमन्त्रस्तदर्थश्च—

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ॥

हे इन्द्र ! इन्द्रियाणां स्वामिन् जितेन्द्रियब्रह्मन् ! इमा–इमानि प्रस्थिता–प्रस्थितानि–उपहृतानि हवींषि–अदनीयानि मृदूनि पायसादीनि "हु दानादनयोः" ( जुहो० ) अदनार्थोऽत्र गृह्यते ततः "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः" ( उणा० २ । १०९ ) चनोऽन्नं शष्कुल्यादिकमद्धि भुङ्क्ष्व हि पुनः पचता पचतानि पक्वानि स्वयं पक्वानि फलानि वृक्षोद्भवानि–उत–अपि सोमोषधिरसं दधिष्व–उपरि धारय । भोजनान्ते फलरसा आस्वाद्याः पेयाश्चेति भोजनविधिः । वयं खलु प्रयस्वन्तोऽन्नभोजनवन्तः स्मो नैषामस्माकं गृहे न्यूनत्वमतो वयं त्वां प्रतिहर्यामसि–त्वां प्रतिवाञ्छामो याचामहे यजमानस्य यजनशीलस्य देवपूजा-सङ्गतिकरणदानानि कर्तुः कामाः सत्याः सफलाः सन्तु ॥

'पचता' इत्यस्य बहुवचनविषयकमुदाहरणप्रदर्शनानन्तरं द्विवचनविषयक-

मुदाहरणमुपस्थापयति "तं मेदस्तः प्रति पचताग्रभीष्टाम्" मैत्रायणी संहितातः। द्विदेवताप्रयोज्यत्वात् तत्र द्विवचनेन 'पचता' शब्देन भवितव्यमिति हेतोः। माध्यन्दिनीययजुर्वेदसंहितायां त्वेकदेवतापरकत्वान्न दत्तं भवेत्। मैत्रायणीसंहिता-पाठः खलु प्रदश्यंते—

अग्निमद्य होतारमवृणीतायऽयजमानः पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नया आज्यं गृह्णन्त्सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागऽसूपस्था अद्य देवो वनस्पतिरभवदग्नया आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाघस्तां तं मेदस्तः प्रति पचताग्रभीष्टाम्" ( मैत्रा० ४ । १३ । ८ )

अद्य विदुषां सेवावसरे यज्ञेऽयं यजमानः पूर्वं होतारं यज्ञाग्निं वृतवान् यज्ञं कृतवान् पश्चात् पक्तीः पाकान् पचन् पुरोडाशं प्रसादरूपेण पूर्वं दातव्यं पाक-विशेषं च पचन् पक्तीः पुरोडाशं च गृह्णन्—गृहीत्वाऽग्नये तेजोधर्मप्राप्तये तथाऽयं घृतं गृह्णन्—गृहीत्वा सोमाय सौम्यधर्मप्राप्तये—इन्द्राग्निभ्यामध्यापकोपदेशकाभ्यां विप्राभ्यामाज्यं घृतं छागं रोगोच्छेदकरं स्वास्थ्यप्रदं रसायनं च बध्नन् परस्परं सम्बध्नन् मिश्रयन् सूपस्थाया सूपे तिष्ठन्ति प्रयोगमर्हन्ति ता ओषधीरपि मिश्रयन् स्थितः—अद्य वनस्पतिर्देवः—वनानां रश्मीनां पाता रक्षकः सूर्यो देव इव तेजोधर्म-प्राप्तये—आज्येनेव तथा सौम्यधर्मप्राप्तये च भवति तथा यजमानोऽस्ति, अतः—इन्द्राग्निभ्यां तयोरिन्द्राग्न्योरर्थे पचता यथारुचि पक्तौ—आहारौ इन्द्राग्नी—अध्या-पकोपदेशकौ विद्वांसौ छागेन रोगोच्छेदकरेण रसायनेन मेदस्तः स्निग्धात् घृतात्—च पाकं च पुरोडाशं च पचता पक्तौ—अघस्तां भुञ्जीयाताम्—अतो गृह्णीतां यथारुचि पृथक् पृथक्—यत् स्वस्वानुकूलम्—इन्द्रेणोपदेशकेन भोक्तव्यः पुरोडाशः, अग्निना-ऽध्यापकेन भोक्तव्यः पाकः, तस्मात् ताभ्यां पृथक् पृथग्दृष्ट्या भोक्तव्यौ पचता पक्तौ द्वयोराहारौ । माध्यन्दिनीययजुर्वेदे—इन्द्र एक भोक्ता तस्मात् तस्याहारः पचता पक्तः—इति—एकवचने वक्तुं शक्यः, अत्र द्विवचनेनोदाहातुं युक्तं वचनम् । द्वयोर्देवयोः पृथक् पृथगाहारत्वाद् द्वावाहारौ पक्तौ । अत एवोक्तं यास्केन बहु-वचनस्योदाहरणं दत्त्वा "अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्यात्" अपि वा मेदसः स्निग्धस्य घृतस्य घृतमिश्रितस्य वस्तुनः पुरोडाशस्य च "पशवो वै पुरोडाशाः" ( तां० २१ । १७ । १० ) इति तयोः सात्त्वं सत्त्वविषयकं सत्ता-विषयकं तयोः सत्ताद्वयं लक्षयित्वा 'पचता'—पक्तौ—इति द्विवचनं स्यात्, यथान्यत्र मन्त्रेषु "द्वा सुपर्णा दैव्या होतारा भिषजा अश्विना नासत्या ।"

'यत्र ह्येकवचनार्थः प्रसिद्धं तद् भवति' यत्र ह्येकवचनविषयकं तत् पदं

प्रसिद्धं न तत्र सन्देहावसरः। यथा "पुरोडा अग्ने पचतः" इति, एकवचनमत्र स्पष्टम्।

समग्रमन्त्रस्तदर्थश्च—

"पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः।

तं जुषस्व यविष्ठ्य॥"

हे अग्ने! अग्रेणायक विद्वन्! तुभ्यं चापि पुरोडाशः पचतः पक्वः परिष्कृतः संस्कृतोऽस्ति यविष्ठेषु साधुः—भवो वा यविष्ठयस्तत्सम्बुद्धौ यविष्ठय! अतिशयेन यूनामग्रगण्य! सर्वाधिकशक्तिसम्पन्न! तं सेवस्व॥

शुरुधः॥ ६६॥

शुरुध आपो भवन्ति शुचं संरुधन्ति।

"ऋतस्य हि शुरुधः सन्ति पूर्वीः" (ऋ० ४। २३। ८)

भा०—'शुरुधः' इत्यनवगतम्। 'शुचं संरुधन्ति' इति निर्वचनम्। 'आपः' अभिधेयाः। शुचं तापमग्निं संरुधन्ति प्रतिबध्नन्ति—निवारयन्ति शुचं कर्मोपपदे "रुधिर् आवरणे" ( रुधादि० ) ततः क्विप् प्रत्ययः "अन्येभ्योऽपि दृश्यन्ते—क्विप् च" ( अष्टा० ३।२।७६ ) 'शुच्' इत्यस्योपपदस्यान्तलोपः। अनवगतपक्षे शुरुध आपः, अवगतपक्षे शु शिप्रं रुधन्ति यास्ताः शुरुधः, यथासम्भवं विशेष्यं वस्तु। अत्रानेकार्थसन्दर्भे यो मन्त्र उदाहृतो यास्केन तत्र 'शुरुधः' इति शब्दस्यानेकार्थत्वसूचनाय 'आपः' एवार्थो न तत्र "ऋतस्य हि शुरुधः सन्ति पूर्वीः" इति मन्त्रे। पुनश्च ऋग्वेदे दशकृत्वः 'शुरुधः' शब्दः—आगतः तस्मात् पूर्वं त्रिरागतः, तत्रत्यः कुतस्त्यक्तो यास्केन, तत्रैकार्थे नियतत्वात्। अन्यत्र पक्षीया अर्थाः स्त्रीलिङ्गे—'ओषधयः, गावः, भूमयः, सेनाः, पापवृत्तयः' एवं ताः कथमित्युच्यते। शु क्षिप्रं रुन्धन्ति "शुरुधः सद्यो रुन्धन्ति" ( ऋ० ७। २३। २—दयानन्दः ) शु 'क्षिप्रं' क्षुधं रोगं क्षिप्रं रुन्धति—ओषधयस्ताः—द्विविधाः क्षुधोर्निवारिकाः—रोगस्य निवारिकाश्च, शु क्षिप्रं दारिद्र्यमशोभां च रुन्धन्ति निवारयन्ति गावः, भूमयश्च। शु क्षिप्रं रुन्धन्ति शत्रून् निवारयन्ति विविधाः सेनाः। शु शिप्रं रुन्धन्ति प्रतिबध्नन्ति सद्गुणान् ताः दुर्वृत्तयः। तत्र प्रत्येकार्थस्य प्रदर्शकमन्त्रा उदाह्रियन्तेऽस्माभिः—

ओषधयोऽदनीयाः भक्षणीयाः—शुरुधः—

"विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः।"

( ऋ० १। ७२। ७ )

अग्ने ! क्षितीनां भूमीनाम् "क्षितिः पृथिवी" ( निघं० १ । १ ) वयुनानि प्रज्ञानानि—लक्षणानि विद्वान्—जानन् जीवसे—जीवनाय—प्राणधारणाय क्षुरुधः—ओषधीः—भोज्याः—विविधाः—गोधूमाद्याः—आनुषक्—अनुषक्ताः, धाः—विधेहि सम्पादय । "क्षुरुधः—हृषोऽन्नानि" ( सायणः ) ।

ओषधयो रोगनिवृत्तिकराः—क्षुरुधः—

अयामि घोष इन्द्र देवजामिरिरज्यन्त यच्छुरुधो विवाचि ।

नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ।

( ऋ० ७ । २३ । २ )

इन्द्र ! क्षुरुधः—ओषधयो रोगाणां नाशिकाः "क्षुरुध ओषधयः" (सायणः) इरज्यन्ते परिचर्यन्ते रोगावस्थायाम् । ताभीरोगिपरिचर्या क्रियते हि । "इरज्यति परिचरणकर्मा" ( निघं० ३ । ५ ) यतः स्वं स्वकीयमायुर्न हि जनेषु चिकिते ज्ञायते तान्यंहांसि पापाः रोगाः—तेभ्योऽस्मान्—अतिपर्षि दूरं कुरु । "यैः—आयुः क्षीयते" ( सायणः ) तेभ्योऽस्मानतिपर्षि—पारय दूरं कुरु ॥

गावः क्षुरुधः—

"स नो रासच्छुरुधश्चन्द्राग्रा धियं धियं सीषधाति प्र पूषा ॥"

( ऋ० ६ । ४९ । ८ )

स पूषा देवः पशूनां य ईष्टे "पूषा वै पशूनामीष्टे" ( शत० १३ । ३ । ८ । २ ) नोऽस्मभ्यं चन्द्राग्राः क्षुरुधः स्वर्णाग्राः स्वर्णश्रृङ्गाः "चन्द्रं हिरण्यनाम" ( निघं० १ । २ ) गाः—रासत्—ददातु "क्षुरुधः गाः" ( सायणः ) कर्मकर्म प्रसीषधाति प्रसाधयतु ॥

भूमयः—क्षुरुधः—

त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः ।

( ऋ० १ । १६९ । ८ )

हे इन्द्र ! राजन् ! यजमान ! वैश्यकृषक ! त्वं मरुद्भिः—मनुष्यैः कर्मकरैः सह मानेभ्यो मानैर्मीयन्ते निर्मीयन्ते—उत्पाद्यन्ते यैस्तानि मानानि हलादीनि साधनानि तैर्मानैर्हलैः—वृषभयुक्तैर्हलैर्विश्वजन्या विश्वं सर्वमन्नादिकं जन्यं यासु ता भूमयोः—विश्वजन्याः, क्षुरुधो भूमीः—रद विलिख विदारय—उत्पाटय बीजवपनाय "रद विलेखने" ( भ्वादि० ) यतः 'विद्यामेषं वृजनं जीरदानुम्' इषमन्नं मन्नं जीवनप्रदं स्वास्थ्यप्रदं प्राप्नुयाम ॥

दुर्मतयः प्रजाः—शुरुधः—

"वृषा शुष्मेण बाधते वि दुर्मतीरादेदिशानः शर्यहेव शुरुधः ।"

( ऋ० ९ । ७० । ५ )

पवमानः सोमो देवता—सुखस्य वर्षकः सोमो राजा शर्यहा—इव—शर्येण हन्ता—इव शुष्मेण बलेन "शुष्मं बलनाम" ( निघ० २ । ९ ) आदेदिशानः—भृशमाह्वयन् दुर्मतीः—दुष्टमतीः शुरुधः शु क्षिप्रं रुन्धन्ति सुमतीः प्रजाः—सज्जनान् सद्गुणेभ्यो रुन्धन्ति ताः—दुर्मतीः प्रजाः—विबाधते दण्डयति ॥

आपः शुरुधः—

"असूत पूर्वो वृषभो ज्यायानिमा अस्य शुरुधः सन्ति पूर्वीः ।"

( ऋ० ३ । ३८ । ५ )

वृषभो वर्षको जलानां ज्यायान्—इन्द्रः पूर्वः पुरातनोऽस्य—इमाः पूर्वीः पुरातनीः, यथेन्द्रः पूर्वस्तथा तस्य शुरुधोऽपि पूर्व्यः पूर्वाः, पूर्वशब्दात् स्त्रियां ङीष् "पुंयोगादाख्यायाम्" ( अष्टा० ४ । १ । ४८ ) यद्वा छान्दसो ङीष् "यस्यामापः परिचरा समानीः" ( अथर्व० १२ । १।९ ) इति ङीष् । पुरातन्यः—आपः सूक्ष्माः पृथिवीतलसम्पर्कात् पूर्वस्वरूपाः शुचं पृथिवीतापं रुन्धानाः—असूत ससर्ज ।

अथेदानीं यास्केनोदाहृतोऽनेकार्थसन्दर्भकः समग्रो मन्त्रो व्याख्यायते—

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।

ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥

ऋतस्य मेघस्य "ऋतो व्याख्यातः—तस्यैषा भवति"—ऋतस्य हि शुरुधः "ऋ० ४ । २३ । ८ ॥" ( निरु० १० । ४१ ) ऋतो व्याख्यात इति कथने पुल्लिङ्गनिर्देशेन 'ऋतम्—उदकम्' अत्र न गृह्यते । यतस्तत्र आयोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वा, इति पाक्षिके 'उदकस्य' इत्यर्थे 'ऋतस्य' इत्यस्यापि, उदकार्थे मन्तव्ये 'उदकस्य—उदकम्' इति न सङ्गच्छते । तस्मादत्र मन्त्रे प्रयुक्तः 'ऋत' शब्दः मेघवाची खल्वस्ति । तदा मेघस्य—उदकम्, इति युक्तिरुचिता । ऋतस्य मेघस्य हि शुरुधः—आपः पूर्वीः प्रारम्भिकीः पृथिवीतलाद् या यथा—पूर्वमासन् तथा स्वाभाविक्यः श्रेष्ठाः सन्ति, यद्वा शुरुधो गोधूमाद्या भोज्यास्तथा रोगनाशिन्य ओषधयः पूर्वीः स्वाभाविक्यः श्रेष्ठा वा सन्ति न तु कूपस्य कूपजलादुद्भवाः । तथा शुरुधः—भूमयः क्षेत्रभक्तयश्च स्वाभाविक्यः श्रेष्ठा वा भवन्ति तथा मेघजलं पीत्वा तदुद्भवं च घासं भक्षयित्वा शुरुधः—गावः पूर्वीः पूर्वकालिकाः श्रेष्ठाश्च भवन्ति । ऋतस्य मेघस्य तद्वर्षणात् खलु शुरुधः—दुर्मतयः—उदासीनत्वनी-

राद्यखिन्नत्वादियुक्ताः प्रजाः पूर्वीः पूर्ववत् सुमतयः स्वस्था भवन्ति । ऋतस्य मेघस्य धीतिर्धारा वृजनानि वर्जनीयानि—औष्ण्यशुष्कत्वदुष्कालत्वानि हन्ति । ऋतस्य मेघस्य श्लोको वाक्—शब्दो घोषो वा बोधयन् ज्योतिष उदकस्य च दीपयिता सन् बधिरस्य कर्णौ बोधयन् ततर्द—तृणत्ति—उद्घाटयति, अध्ययनाध्यापनकृत्यादिकरणाय "श्रवणेन स्वाध्यायानुपाकरोत्याचार्योऽन्तेवासिनां योगमिच्छन्" ( वाराहगृह्यसूत्रम् १३ ) चिकित्साद्दष्टयापि कर्णरोगो बधिरत्वं नाशयेदिति सम्भावना ॥

अमिनः ॥ ६७ ॥
अमिनोऽमितमात्रो महान् भवत्यभ्यमितो वा ।
"अमिनः सहोभिः" ( ऋ० ६ । १९ । १ )
इत्यपि निगमो भवति ॥

भा०—'अमिनः' इत्यनवगतम् । 'अमितमात्रः' इत्यवगमः । 'महान्' अभिधेयः । यद्वा 'अभ्यमितः' इत्यवगमः । 'आभिमुख्येऽहिंसितः' इत्यभिधेयो विशेषणरूपः । नञ्पूर्वात् "माङ्माने" ( दिवादि० ) धातोः "इण्मिञिदीङुष्यविभ्यो नक्" ( उणा० ३ । २ ) इत्यनेन धातोर्बाहुलकात् 'नक्' प्रत्ययः कर्मणि भूते काले "भूतेऽपि दृश्यन्ते" ( अष्टा० ३ । ३ । २ ) इकारश्चादेशो धातोराकारस्य बाहुलकाच्छान्दसो वा तथाकृत्वा हि यास्कस्य—अमिनः—अमितमात्रः—इति बहुव्रीहावनुवादः—अमितः—मात्राभिः । मात्राः—भक्तयोऽवयवा मानसाधनानि वा । यद्वा "मिनोति वधकर्मा" ( निघं० २ । ९ ) ततो नञ्पूर्वात् पूर्ववत् 'नक्' प्रत्ययः—अमिनः स च—अभ्यमितः—आभिमुख्ये—अमितः—अमिनः, अभिरर्थनिर्देशने कथमहिंसितोऽमितः—आभिमुख्ये—अभ्यमितो हि—'अमिनः ।' एतदपेक्ष्याऽवगतप्रकरेणापि योजयितुं शक्योऽसंग्रामपक्षे "अम गतौ" ( चुरादि० ) ततः "बहुलमन्यत्रापि—इनच्" ( उणा० २ । ५० ) 'अमिनः'—गमनशीलः—प्रगतिशीलः । यास्कप्रदर्शिते मन्त्रे तिस्रो व्युत्पत्तयः सम्भवन्ति, द्वे—अनवगतस्यमाश्रित्य, एका च सारल्यमवलम्ब्य ।

पूर्वं सरलव्युत्पत्तिको मन्त्रः प्रदर्श्यते—

"आ द्विबर्हा अमिनो यात्विन्द्रो वृषा हरिभ्यां परिषिक्तमन्धः ।"
( ऋ० १० । ११६ । ४ )

द्विबर्हाः—द्वयोः स्थानयोर्पृथिव्यन्तरिक्षलोकयोः परिवृढो वृषा सुखवृष्टेः कर्ता—अमिनः—गमनशीलः—इन्द्रो विद्युद्रूपो देवो हरिभ्यां शुष्कार्द्राभ्यां धाराभ्या-

आयातु नद्यागमने सङ्कोचेन भवितव्यं तव गमनशीलत्वात्—अन्ध:—सोमाऽन्नं परिषिक्तं परिपूरितं याने यन्त्रे वा वर्तते । "अमिनः—अमतेर्गत्यर्थादौणादिक इनच् सर्वत्र गन्ता" ( साय : ) ।

यास्कप्रदर्शितः समग्रो मन्त्रस्तदर्थश्च—

म॒हाँ इन्द्रो॒ नृव॒दा च॑र्षणि॒प्रा उ॒त द्वि॒बर्हा॑ अमि॒नः सहो॑भिः ।

अ॒स्म॒द्र्य॑ग्वावृधे वी॒र्या॑योरुः पृ॒थुः सुकृ॑तः क॒र्तृभि॑र्भूत् ॥

महान्—तापे प्रकाशे तथाकारे महान्—इन्द्रः सूर्यः—नृवत्—यथा कश्चन नरो महान् भवति प्रतापेन ज्ञानप्रकाशेन शरीरेण तथा जनानामुपकारकरणेन तथा सूर्योऽपि—'आ—चर्षणिप्राः' समन्तात् मनुष्याणां कामपूर्तिकरो यद्वा मनुष्याणामन्तरे तद्वाह्ये प्रदेशे च प्राणशक्तिप्रदः, उतापि न केवलं दिवि स्थितो दिवि ह्युपकुर्यात् किन्तु द्विबर्हा—द्वयोर्दिवि चान्तरिक्षे च परिवृढः—अन्तरिक्षशब्देन पृथिवीपर्यन्तं स्थानं लक्ष्यते । एवं स सहोभिर्बलैः—अमिनः—अमितः, तस्य बलानां मानं नास्ति—अपरिमितबलः, यद्वा सहोभिः शत्रुबलैः प्रतिद्वन्द्विबलैराभिमुख्ये साम्मुख्येऽहिंसितो न हिंसितुं शक्यः, तथा सहोभिः—रश्मिबलैः—अमिनः—सर्वत्र गमनशीलः दिवि स्थितोऽपि । सोऽस्मद्र्यक्—अस्माकं सम्मुखीभूतः "विश्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये" ( अष्टा० ६ । ३ । ९० ) अस्मदः टेरद्रिर्भवति—अञ्चुप्रयुक्ते—उत्तरपदे । वीर्याय वीर्यं पराक्रमं कर्तुं प्रदातुं च वावृधे संसारे प्रवृद्धो वर्तते तथा—उरुः पृथुः—महान् विस्तीर्णः प्रकाशरश्मिः कर्तृभिः कार्यकृज्जिर्जनैः सुकृतः सूपयुक्तो भवेत् ॥

जज्झतीः ॥ ६८ ॥

जज्झतीरापो भवन्ति शब्दकारिण्यः ।

"म॒रुतो॒ जज्झ॑तीरिव" ( ऋ० ५ । ५२ । ६ )

इत्यपि निगमो भवति ॥

भा०—'जज्झतीः' इत्यनवगतम् । 'शब्दकारिण्यः' इत्यवगमः । 'आपः' अभिधेयाः । अत्र शब्दानुकरणमेवानवगतत्वं यतः पर्वतात् पतन्त्यो वेगाच्च प्रवहन्त्य आपः 'जज्झ' इति शब्दं निरन्तरं कुर्वन्ति तस्मादानुकरणिकात् 'जज्झ' धातोः शतृप्रत्यये नुमोऽभावश्छान्दसः जसः स्थाने पूर्वसवर्णः "सुपां सुलुक् पूर्वसवर्णः" ( अष्टा० ७ । १ । ३९ ) ।

समग्रमन्त्रस्तदर्थश्च—

आ रु॒क्मैरा यु॒धा नर॑ ऋ॒ष्वा ऋ॒ष्टीर॑सृक्षत ।

अन्वे॑नाँ॒ अह॑ वि॒द्युतो॑ म॒रुतो॒ जज्झ॑तीरिव भा॒नुर॑र्त॒ त्मना॑ दि॒वः ॥

ऋष्वाः—महान्तो नरो नायका मरुतः सैनिका रुक्मैर्हिरण्यमयैः रक्षासाधन-कवचैः—युधा युध्यतेऽनया—इति युध् तया युधा युद्धेऽस्त्रप्रक्षेपणिकया सम्बद्धा ऋष्टीः—अस्त्ररूपाः शक्तीः—आसृक्षत—समन्तात् सृजन्तु, एनान्—ऋष्टिप्रक्षेपकान् विद्युतः—विद्युत्वतो मरुतोऽनु, 'विद्युतः' अत्र मतुब्लोपश्छान्दसः । अन्यत्र वेदे विद्युता सह मरुतां सम्बन्धः प्रतिपाद्यते "आ विद्युन्मद्भिर्मरुतः स्वर्कैं रथेभिर्यात—ऋष्टिमद्भिरश्वपर्णैः" ( ऋ० १ । ८८ । १ ) एषां विद्युत्वतां मरुतां भानुर्दीप्तिः—अहावश्यं दिवः—आकाशात्—त्मना—आत्मना निजस्वरूपेण बलेन जज्झतीः—जज्झत्य आप इव—आ—अर्तं—आव्रजति प्रवहति ॥

अप्रतिष्कुतः ॥ ६९ ॥

अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा ।

"अस्मभ्यमप्रतिष्कुतः" ( ऋ० १ । ७ । ६ )

इत्यपि निगमो भवति ॥

भा०—'अप्रतिष्कुतः' इत्यनवगतम् । 'अप्रतिष्कृतः' धातुनिर्देशसमाधि-रूपोऽवगमः । नञ्पूर्वकात् प्रतियुक्तात् ससुट्कात् "कृञ् हिंसायाम्" (स्वादि०) धातोः क्तप्रत्यये रूपं तत्र "हिंसायां प्रतेश्च" ( अष्टा० ६ । १ । १४१ ) अत्र सामान्येन हिंसायां "कृञ् हिंसायाम्" ( स्वादि० ) अपीष्यते यास्कविधानात् । सुट् हिंसाप्रदर्शने । निरुक्तकारेण 'अप्रतिष्कृतः' इत्यवगमो दर्शितः । ऋकारस्य—उकारापत्तिरेवास्यानवगतत्वम् । यद्वा 'अप्रतिस्खलितः' नञ्पूर्वकात् प्रतियुक्तात् "स्खल सञ्चलने" ( भ्वादि० ) धातोः क्तप्रत्यये रूपम्, 'स्खल' इत्यस्य स्थाने 'स्कु' आदेशः, आधिक्यानवगतत्वेन रूपम् । इति त्वनवगतप्रसङ्गे, अवगतप्रसङ्गे च नञ्पूर्वकात् प्रतेरुत्तरात् "स्कुञ् आप्रवणे" ( क्र्यादि० ) धातोः क्तप्रत्यये रूपम् । तस्मात् यास्कोदाहृते मन्त्रेऽनेकार्थसन्दर्भके 'अप्रतिष्कुतः' पदस्य त्रयोऽर्था जाताः । अप्रतिष्कृतः—अप्रतिहिंसितः । अप्रतिस्खलितः—अप्रतिसञ्चलितो दृढः । अप्रति-प्लुतः—अप्रतिप्लुतः । तत्र पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्ते ।

अप्रतिष्कुतः—अप्रतिप्लुतः—

"वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।

ईशानो अप्रतिष्कुतः ।" ( ऋ० १ । ७ । ८ )

स इन्द्र 'यूथा—इव' यूथानां गोयूथानां गोसमूहानां वंसगो वंशगो यद्वा सम्भक्तभोक्ता वृषा वृषभ—इव—कृष्टीः मनुष्यान् शत्रुजनानोजसा बलेन—इयर्ति

"इयर्ति गतिकर्मा" ( निघं० २ । १४ ) संग्रामात्—इयर्त्ति क्षिपति स्वयं च ईशानः स्वसेनानां स्वामित्वं कुर्वन्—अप्रतिष्कुतः—अप्रतिप्लुतस्तिष्ठति ।

अप्रतिष्कुतः—अप्रतिष्कृतः—

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।

( ऋ० ८ । ९७ । १३ )

तं मघवानं शवांसि सैन्यबलानि सत्रा सत्यं वास्तविकं धारयन्तमुग्रं तेजस्विनमप्रतिष्कुतमप्रतिष्कृतमहिंसितमसोढं जोहवीमि—आह्वयामि ॥

अप्रतिष्कुतः—अप्रतिस्खलितः—

अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ।

( ऋ० ३ । २ । १४ )

दिवो द्युलोकस्य मूर्धानमग्निं मूर्धन्यमग्निं सूर्यमप्रतिष्कुतमप्रतिस्खलितं प्रतिस्खलनरहितं सञ्चलनरहितं यः सूर्यो न सञ्चलति स्वधुरि हि तिष्ठति, अन्यलोकवन्न परिभ्रमति तं सूर्यं बलं बलवन्तं महान्तं परमात्मानं नमसा नमस्कारेण याचामहे । याचनार्थधातुद्विकर्मको भवति याचते पुस्तकं गुरुं नमसा तद्वदत्रापि ।

अथानेकार्थको यास्कोदाहृतः समग्रो मन्त्रो व्याख्यायते—

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।

अस्मभ्यमप्रतिष्कुतः ॥

हे वृषन् हे वृष्टेः कर्तः ! सत्रादावन् सत्यधनस्य दातः ! परमात्मन् ! यद्वा सूर्य ! स त्वं नोऽस्मभ्यम्—अमुं चरुं मोक्षानन्दपात्रं यद्वा जलपूर्णमेघम् "चरुर्मेघनाम" ( निघं० १ । १० ) अपावृधि—अपावृणु—अनावृतं कुरु, यतस्त्वमस्मभ्यमप्रतिष्कुतः—वृष्टिकरणे—अप्रतिप्लुतः—अप्रतिलङ्घयिता नोलङ्घयिता यद्वा सत्यधनस्य दाने—अप्रतिष्कुतः—अप्रतिस्खलितः—दानं हि तव स्वभावस्ततो न प्रतिचलितो भवसि दृढव्रती हि त्वं तद्दाने । यद्वा—मोक्षानन्दपात्रस्य—जलपूर्णमेघस्यानावरणे—अप्रतिष्कृतः—अप्रतिहिंसितः—नैव केनापि तदा हिंसितुं शक्यः—प्रतिहिंसितुमशक्यः ॥

शाशदानः ॥ ७० ॥

शाशदानः शाशाद्यमानः ।

"प्र स्वां मतिमतिरच्छाशदानः" (ऋ० १ । ३३ । १३)

इत्यपि निगमो भवति ॥ १६ ॥

भा०—'शाशदानः' इत्यनवगतम् । 'शाशाद्यमानः' इत्यवगमः । "शद्लृ शातने धातोर्यङ्लुकस्माद् व्यत्ययेन कर्मणि कर्तृप्रत्ययः शानच् ।
समग्रमन्त्रस्तदर्थश्च—

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥

अस्येन्द्रस्य राज्ञो यद्वा सूर्यस्य सिध्मः प्रहारकरणे सिद्धो वज्रः शत्रून् शातयितव्यान् जनान् मेघावयवान् वा—अभिजिगात्—अभिगच्छति स इन्द्रस्तेन तिग्मेन तीक्ष्णेन वृषभेण शरवृष्टिकरेण जलवृष्टिकरेण वा पुरो नगराणि भिनत्ति पुनर्वज्रेण वृत्रं शत्रुं मेघं वा—इन्द्रो राजा सूर्यो वा समसृजत्—सङ्किरति—निःसत्त्वं करोति पुनः शाशदानः शाशाद्यमानो वज्रेण वृत्रः शत्रुर्मेघो वा स्वामनम्रां मतिमतिरत् प्रतिरति प्रवर्तयति—इन्द्राय नम्री भवितुम्—आत्मसमर्पणं कर्तुम् ।

इति षष्ठाध्यायस्य तृतीयः पादः ।

---

## चतुर्थः पादः

---

सृप्रः ॥ ७१ ॥
सृप्रः सर्पणात् । इदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा ।
"सृप्रकरस्नमूतये" ( ऋ० ८ । ३२ । १० )
इत्यपि निगमो भवति ।
करस्नौ बाहू कर्मणां प्रस्नातारौ ॥

भा०—'सृप्रः' इत्यनवगतम् । 'सर्पणः' इत्यवगमः । 'सर्पणशीलः' अभिधेयो विशेषणरूपः । "सृप्लृ गतौ" ( भ्वादि० ) ततः "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपि··· भ्यो रक्" ( उणा० २ । १३ ) । इतरदिदं लोकप्रसिद्धं सृप्रं सर्पिर्वा तैलं वा यदुच्यते सर्पणात् । करस्नौ भुजौ भवतः कराणां कर्मणां स्नौ प्रस्नातारौ, भवन्ति स्नातारो जलानां नदीनां वा परन्तु भुजौ तु कराणां कर्मणां प्रस्नातारौ । अस्य मन्त्रस्तूक्तः, 'बृबदुक्थम्' इति प्रसङ्गेऽत्र सृप्रपदस्यानवगतत्वमनेकार्थत्वञ्च दर्शयितुं 'सृपः' शब्दः पठितः ।

मन्त्रः खलु सः—

बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधु कृण्वन्तमवसे ॥

मन्त्रस्तु व्याख्यातस्तत्रैव, सृप्रः सर्पणशीलः सर्पः, सर्पिः सर्पणशीलं तैलं च, सर्प इव सर्पिरिव तैलमिव करस्नौ भुजौ—इन्द्रस्य—ईश्वरस्य निर्माणपालनधर्मौ, सूर्यस्य प्रकाशतापधर्मौ, विद्युतः शुक्लार्द्रे धारे ॥

सुशिप्रः ॥ ७२ ॥
सुशिप्रमेतेन व्याख्यातम् ।
"वाजे सुशिप्र गोमति" ( ऋ० ८ । २१ । ८ )
इत्यपि निगमो भवति । शिप्रे हनू नासिके वा । हनुर्हन्तेः ।
नासिका नसतेः ॥
"विष्यस्व शिप्रे विसृजस्व धेने" (ऋ० १।१०१।१०)
इत्यपि निगमो भवति । धेना दधातेः ।

भा०—'सुशिप्रः' इत्यनवगतम् । सृप्रतुल्यो व्याख्यातव्यः । सुपूर्वात् "सृप्लृ गतौ" ( भ्वादि० ) रक् प्रत्ययः, 'सृप्' इत्यस्य स्थाने 'शिप्' भावः । सुशिप्रः । शिप्रे हनू नासिके यस्य शोभने स सुशिप्रः सुहनुः सुनसः सुन्दर-मुखाकृतिमान् ।

"वाजे सुशिप्रे गोमति" इति सम्पूर्णो मन्त्रो व्याख्यातः ( अ० ५ पा० ४ ख० २३ ) 'समस्मिन्' शब्दप्रसङ्गे । अत्र तु केवलं 'सुशिप्रः' इत्यस्यानवगतत्वा-यानेकार्थत्वाय च पाठः । शिप्रे हनूनासिके वेति प्रदर्शयितुं मन्त्र उदाह्रियते ।

विष्यस्व" इति समग्रमन्त्रस्तदर्थश्च—

मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे वि सृजस्व धेने ।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व ॥

इन्द्रो जीवात्मा "इन्द्रमितीन्द्रियवन्तम्" ( शत० ६ । १ । २ । ४ ) "इन्द्रियमिन्द्रलिङ्ग...." ( अष्टा० ५ । २ । ९३ ) हे इन्द्र ! जीवात्मन् ! नव-जातशिशो ! त्वं हरिभिर्गन्धरसादीनामाहर्तृभिः प्राणैरिन्द्रियरूपैरश्वैः "प्राणो वै हरिः स हि हरति" ( कौ० १७ । १ ) "प्राणा इन्द्रियाणि" ( तां० २ । १४ । २ ) "इन्द्रियाणि हयानाहुः" ( कठोपनि० १ । ३ । ४ ) मादयस्व तृप्तो भव "मद तृप्तियोगे" ( चुरादि० ) ये हरयो रसादिहरणशीला तव सन्ति त्वदधीने सन्ति, त्वं शिप्रे द्वे हनू मुखस्योर्ध्वाधोभागौ स्तन्यपानार्थं तथा नासिकाछिद्रे श्वासग्रहणार्थं विष्यस्व—उद्घाटय, धेने द्वे वाची वागिन्द्रियस्य बाह्याभ्यन्तरभागौ विसृजस्व विचालय भाषणाय रसास्वादनाय बाह्यभागेन भाषणं भवति—आभ्य-न्तरभागेन रसास्वादनं भवति । हे सुशिप्र सर्वप्राणिषु सुन्दरहनुनासिकावन् !

सुन्दरमुखाकृतिमन् ! मानवशिशो ! सर्वप्राणिषु मानवस्य हि हनुनासिके सुन्दरे भवतः । तस्मात् सुन्दरहनुनासिक ! हरयो गन्धरसहरणशीलानि तवेन्द्रियाणि त्वामावहन्तु–समन्तात् प्रापयन्तु नोऽस्माकं त्वत्सम्बन्धिनां पित्रादीनां दत्तानि हव्यानि–अदनीयानि पेयादीनि वस्तूनि प्रतिजुषस्व निरन्तरं सेवस्व येन त्वं निरन्तरं वृद्धिं गच्छेः ।

निरुक्तय:—हनुः "हन् हिंसागत्योः" ( अदादि० ) ततः 'उः' प्रत्ययः ( उणा० १ । १० ) भोज्यं वस्तु हिंस्तश्चर्वंतस्तस्मिन् काले चलतश्च हनू । नासिका नसतेः "नसते गतिकर्मा" ( निघं० २ । १४ ) गन्धं प्राप्नोति ण्वुलि । धेना "धाञ् धारणपोषणयोः" ( जुहो० ) ततः "इण्–नः" ( उणा० ३।११ धातोर्बाहुलकात् ॥

रंसु ॥ ७३ ॥

रंसु रमणीयेषु रमणात् ।

"स चित्रेण चिकिते रंसु भासा ।" (ऋ० २ । ४ । ५)

इत्यपि निगमो भवति ॥

भा०—'रंसु' इत्यनवगतम् । 'रमणीयेषु' इत्यवगमः । 'रमणात्' धातुनिर्देशः । "रम्" धातोः विच् कर्मणि "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) । इति रम्, तेषु रंसु ।

समग्रमन्त्रस्तदर्थश्च—

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।

स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥

यदा मे मम–आत्माग्नेः–जीवात्मनोऽभ्वं महत्त्वम् "अभ्वं महन्नाम" ( निघं० ३ । ३ ) वनदः–अवनदोऽवघोषयितारः, अवपूर्वात्–नद धातोः क्विपि बहुवचनमुपसर्गाकारलोपः "अवाप्योः ।" आपनन्तः–समन्तात्प्रशंसन्तः–आत्मविद आध्यात्मिकविद्वांसः, अत्र जसो लुक् । यदा जीर्णेन शरीरेण महत्त्वमापन्नो जीर्णः सन्नहमस्माज्जीर्णाच्छरीरान्म्रियमाणो भवामि तदा–उशिग्भ्यस्तेभ्यो मेधाविभ्यः कश्चित्–मम वर्णं स्वरूपं चैतन्यं न–अमिमीत न निर्मिमीते । "उशिजो मेधाविनः" ( निघं० ३ । १५ ) परन्तु ते मेधाविनः–आध्यात्मिका आत्मविदो जानन्ति यत् रंसु रमणीयेषु शरीरेषु चित्रेण शरीरेभ्यो भिन्नेन विचित्रेण गुणेन चैतन्येन चिकिते तानि शरीराणि चेतयति स जुजुर्वान् जीर्णेन शरीरेण जीर्णः सन् "मामतेयो

जुजुर्वान् दशमे युगे" (ऋ० १।१५८।६) दशमे युगलाङ्कवर्षगणे शतवर्षेषु । मुहुः पुनर्भासा चैतन्येन युवा—आभूत्—नवायुष्को नवेन शरीरेण मिश्रणं प्राप्तो भवति ॥

द्विबर्हाः ॥ ७४ ॥

द्विबर्हा द्वयोः स्थानयोः परिवृढो मध्यमे च स्थान उत्तमे च ।

"उत द्विबर्हा अमिनः सहोभिः" ( ऋ० ६ । १९ । १ )

इत्यपि निगमो भवति ॥

भा०—'द्विबर्हाः' इत्यनवगतम् । 'द्वयोः स्थानयोः परिवृढः' इत्यवगमः । 'इन्द्रः' अभिधेयो विशेष्यः । मध्यमेऽन्तरिक्षे स्थाने विद्युद्रूपेण, उत्तमे स्थाने सूर्यरूपेण । द्विशब्दोपपदे सप्तम्यन्ते "बृह वृद्धौ" ( भ्वादि० ) ततः 'असुन्' प्रत्ययः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) अनेकार्थः—मध्यस्थानीय इन्द्रो विद्युद्रूपः, द्युस्थानीयः सूर्यश्च । मन्त्रो व्याख्यातः 'अमिनः' इत्यस्य प्रसङ्गे ( निरु० ६ । १६ ) ।

अक्रः ॥ ७५ ॥

अक्र आक्रमणात् ।

"अक्रो न बभ्रिः समिथे महीनाम्" (ऋ० ३।१।१२)

इत्यपि निगमो भवति ॥

'अक्रः' इत्यनवगतम् । 'आक्रमिता' इत्यवगमः । 'आक्रमणात्' इति धातुनिर्देशः । अभिधेयो विशेष्यो यो मन्त्रे लक्ष्येत । आङ् पूर्वात् 'क्रमु' धातोः "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) अपि ग्रहणेनान्येभ्योऽपि भवति । उपसर्गस्य ह्रस्वत्वं छान्दसम् । अनेकार्थसन्दर्भत्वादन्यार्थेनापि भवितव्यम् । अनवगतदृष्टौ 'अक्रः' इत्यत्र 'आङ्' उपसर्गस्य ह्रस्वत्वं लक्ष्यतेऽवगतत्वे तु मन्येऽत्र 'अकारः' 'अक्रः' परैरक्रमितव्यो न क्रमितुं शक्यः प्रतापातिशयात् । एवम् 'अक्रः' पदं द्व्यर्थकः, अनवगतदृष्टया 'आक्रमिता' अवगतत्वेन 'अक्रमितव्यः ।' यास्कप्रदर्शिते मन्त्रे द्वयोरर्थयोः समावेशः *, पृथक् पृथगर्थका मन्त्राः—अन्ये सन्ति ते प्रथममुपस्थाप्यन्ते ।

---

* वेदे 'अक्रः' विशेषणं पदमस्ति बहुवचनेऽपि प्रयुज्यते—

आदित्यानां विशेषणम्—

"दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः"

(ऋ० १० । ७७ । २)

अक्रमितव्यः—अक्रः—

इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ।

( ऋ० १ । १४३ । ७ )

विदथेषु यज्ञेषु "विदथो यज्ञनाम" ( निघं० ३।१७। ) अग्निरिन्धानो दीप्यमानः सन्—अक्रः परैरक्रमितव्यः—शुक्रवर्णां धियं प्रज्ञायमानां ज्वालां दीद्यत्—ज्वलयति तां नोऽस्मभ्यमुद्यंसते—उन्नयति । "अक्रः—अन्यैः—अनाक्रान्तः" ( सायणः ) "अक्रः—अन्यैरक्रान्तः" ( दयानन्दः ) ।

आक्रमिता—अक्रः—

अभिप्रित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ।

( ऋ० १ । १८९ । ७ )

अभिप्राप्ते काले यजनकाले मर्मृजेभ्योऽत्यन्तं शोधयिताऽग्निः—उशिग्भिर्मेधाविभिर्ऋत्विग्भिः शास्यः सन् तेषां शासने विधौ वर्तमानो मनवे मननशीलाय यजमानाय—आक्रमिता ज्वालाभिस्तस्य विनाशको हे अग्ने ! त्वं न भवेः ।

अथ द्व्यर्थको यास्कोदाहृतः समग्रो मन्त्रो व्याख्यायते—

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।

उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥

नृतमोऽतिशयेन नेता रसानां पृथिव्यादिपिण्डानां च "नयतेर्डिच्च ऋ" ( उणा० २ । १०१ ) भाऋजीकः प्रसिद्धभाः प्रसिद्धज्योतिष्कः "भाऋजीकः प्रसिद्धभाः" ( निरु० ६ । ४ ) यह्वो महान्—अग्निः—सूर्यः "यह्वः—महन्नाम" ( निघं० ३ । ३ ) सूनवे प्रजायै प्राणिमात्राय "प्रजा वै सूनुः" ( शत० ७ । १ । १ । २७ ) दिदृक्षेयः—द्रष्टुमिच्छायोग्यो यश्च समिथे संग्रामे "समिथे संग्रामे" ( निरु० २ । १७ ) महीनां महतीनां स्वकीयसेनानां बभ्रिर्भर्त्ता धर्ता—अक्रो न—परेषामाक्रमिता—इव यद्वा परैरक्रमितव्य इवास्ति, पुनर्यश्च—उस्रियाः—उस्राणां रश्मीनां जनिता जनयिता प्रादुर्भावयिता "उस्राः रश्मयः" ( निघं० १ । ५ ) "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः—इयाडियाजीकाराणामुपसंख्यानम्" वा० ( अष्टा० ७ । १ । ३९ ) इत्यनेन षष्ठीबहुवचने 'इयाङ्' प्रत्ययः । यः—यश्चापां गर्भो गर्भम् 'अमः' स्थाने 'सु' उज्जजान—ऊर्ध्वमन्तरिक्षे प्रादुर्भावयति पृथिवीस्थजलाशयेभ्यो वाष्पानाकृष्य सूर्योऽपां वर्षिता प्रकाशस्य प्रदाता चेत्येतद्विषये विरोधिन आक्रमिता विरोधिनाऽक्रमितव्यश्च ॥

उक्षणः ॥ ७६ ॥

उराण उरु कुर्वाणः ।
"दूत ईयसे प्रदिव उराणः" ( ऋ० ४ । ७ । ८ )
इत्यपि निगमो भवति ॥

भा०—'उराणः' इत्यनवगतम् । 'उरु कुर्वाणः' इत्यवगमः । विशेषणमिदं विशेष्योऽभिधेयः । 'उरु' इत्यस्य 'उर्' भावः । कुर्वाण:—इत्यस्य 'आनः' गृहीतः 'उर्—आनः' उराणः । इत्यनवगतपक्षे । अनेकार्थसन्दर्भत्वात् खल्ववगतपक्षे 'उरां मेषं मेषीं वा नयति'—गृह्णाति 'उराणः ।' 'उरा' इत्युपपदात् 'णी' धातोः "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इत्यनेन डः प्रत्ययः । उरा—उरणस्तु मेषो मेषी वा तद्ग्राही वृकः । "वृकश्चिदस्य वारण उरामथिः—उरणमथिः—उरण ऊर्णावान्" ( निरु० ५ । २१ ) तथा "अत्रा वि नेमिरेषामुरां न धूनुते वृकः ॥" ( ऋ० ८ । ३४ । ३ ) एवम्प्रमाणात् 'उरा मेषो मेषी तद्ग्राही वृकः—उराणः ।

उराणो वृकोऽवगतपक्षे मन्त्रः—

समत्सु त्वा शूर सतामुराणं प्रपथिन्तमं परितंसयध्यै ।
सजोषस इन्द्रं मदे क्षोणीः सूरिं चिद्ये अनु मदन्ति वाजैः ॥
( ऋ० १ । १७३ । ७ )

हे शूर ! बलवन्—इन्द्र ! समत्सु संग्रामेषु त्वां सतां श्रेष्ठानां योद्धृणामुराणं वृकम् 'नरशारदूलं नरव्याघ्रमिव' प्रपथिन्तमं प्रकृष्टमार्गगामितममतिशयेन प्रकृष्टमार्गगमिनं मृगमिव त्वामिन्द्रं परितंसयितुं परिभूषयितुं सजोषसः समानप्रीतिसेवनाः—मदे हर्षे क्षोणीः—क्षोणीभिर्भूमिप्रदेशैर्वाजैर्बलैः सूरिं 'विद्वांसमपि—अनुमदन्ति—अनुहर्षन्ति मरुतः सैनिकाः ॥

उराणः—उरु कुर्वाणो बहुकुर्वाणः—

इन्दुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ।
( ऋ० ९ । १०९ । ९ )

पुनानः पूयमानः सोमो नोऽस्माकं प्रजां सन्ततिं वंशं सर्वाणि धनानि—उराणः—उरु कुर्वाणो बहुकुर्वाणः करत्—बहु करोतु ॥

अथ यास्कोदाहृतोऽनेकार्थक उराणशब्दो यस्मिन् स समग्रो मन्त्रो व्यख्यायते—

वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् ।
दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥

हे परमात्मन्! वेः—व्यासस्य—अध्वरस्य विश्वयज्ञस्य वृत्यानि प्रसारणीयानि कर्माणि विद्वान्—उभे रोदसी रोधसी ऊर्ध्वाधःस्थिते द्यावापृथिव्यौ तयोरन्तर्भूतं प्रवेशं च चिकित्वान् सञ्ज्ञापयन्निव सम्यक् चेष्टयन् प्रदिवः पुराणः शाश्वतिकस्त्वं चितुष्टरो जीवेभ्यो ज्ञानवत्तरः सर्वज्ञो दूतः प्रेरयिता दिवो द्युलोकस्याकाशस्य रोचनानि ग्रहकक्षास्थानानि—उराणो वृक इव वशे नेतुमीयसे प्राप्नोषि यद्वा—उराण उरु कुर्वाणो बहूनि विस्तृतानि कुर्वाणः—ईयसे प्राप्नोषि ॥

स्तियानाम् ॥ ७७ ॥
स्तिया आपो भवन्ति स्त्यायनात्।
"वृषा सिन्धूनां वृषभः स्तियानाम्" (ऋ० ६।४४।२१)
इत्यपि निगमो भवति ॥

भा०—'स्तियानाम्' इत्यनवगतम्। 'स्तियाः—आपः' अभिधेयाः। 'स्त्यायनात्' इति धातुनिर्वचनम्। "स्त्यै शब्दसंघातयोः" (भ्वादि०) ततः "अन्येभ्योऽपि दृश्यन्ते" (अष्टा० ३।२।७५) इति विच् प्रत्ययः, 'स्त्या' इति रूपे विच् प्रत्ययान्ते 'इ' इति धातुमध्ये वर्णद्वयानन्तरमुपजनश्छान्दसः। स्तियाः संहताः—संघातं प्राप्ताः संग्रथिता वा आपः—स्तियाः। स्तित्या आपो द्विविधा भवन्ति, अत्रानेकार्थसन्दर्भे यास्केन यो मन्त्र उदाहृतस्तस्मिन्नुभयविधानां स्तियानामपां समावेशः। पृथिवीसंसृष्टा आपः स्तियाः—नदीनदजलाशयस्थाः। तथान्तरिक्षसंसृष्टा आपः स्तियाः—मेघरूपाः। मेघेभ्यो नीचैः क्षरन्त्य आपः स्तियाः—नोच्यन्ते तास्तु वर्षाः कथ्यन्ते, एवं पृथिवीस्थजलाशयेभ्य उपर्युत्थिता आपोऽपि स्तियाः—न कथ्यन्ते तास्तु वाष्पाः प्रोच्यन्ते। यतो वर्षारूपाः—आपो यद्वा बाष्परूपा आपः संहता संघातरूपा न सन्ति विकीर्णत्वमापन्नाः सन्ति। 'स्तिया आपः' इत्येतस्य शब्दस्य सर्वस्मिन्नपि वैदिकसाहित्ये द्वौ मन्त्रौ स्तः, अन्यस्मिन् मन्त्रे केवलं पृथिवीस्थाः—आपः स्तियाः सन्ति। अस्मिन् यास्कप्रदर्शिते मन्त्रे पृथिवीस्था अन्तरिक्षस्था आपः स्तिया उक्ताः सन्ति। द्वयोर्मन्त्रयोर्भिन्नभिन्नदेवतावत्त्वात्—आपः स्तियाः सन्ति—मन्त्रयोरुभययोः।

पृथिवीस्था आपः स्तियाः—

पृष्टो दिवि धाय्यग्निः पृथिव्यां नेता सिन्धूनां वृषभः स्तियानाम्।
सा मानुषीरभि विशो विभाति वैश्वानरो वावृधानो वरेण ॥

(ऋ० ७।५।२

वैश्वानरोऽग्निः पृथिव्यां धायि धृतः स्थितो दिवि पृष्टः स्पृष्टः संस्पृष्टः। अग्नेः

स्वभावः पृथिव्यां ज्वलन्–ऊर्ध्वंगमनो भवति, सिन्धूनां नदीनां नेता नदीर्नयति हि पृथिवीपृष्ठे स्तियानां संहतानामपां समुद्रियाणां वृषभो वाडवानलरूपेण धारयिता स्वाधीनीकर्ता गवां वृषभ इव । स मानुषीः प्रजाः–अभि, ताः प्रति तासां प्रजानां हिताय वरेण वरणीयेनोपयोगेन विभाति । पृथिवीसमुद्रस्थाः संहता आपः स्तियाः । तत्राग्नेर्वशगाः सन्ति ॥

यास्कोदाहृतः समग्रो मन्त्रस्तदर्थश्च—

वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम् ।
वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥

हे इन्द्र ! सूर्य ! त्वं दिवो द्युस्थानस्य वृषा महति द्युस्थाने स्थितस्ततोऽपो वर्षिताऽसि, पृथिव्याः पृथिवीलोकस्य वृषभः–लौकिक वृषभ इव वोढा स्वाकर्षणधर्मेण धारयिताऽसि, पुनः सिन्धूनां द्वयोर्लोकयोः, स्थितानां सिन्धूनां स्यन्दमानानां पृथिवीस्थनदीनां भ्रमणशीलानां द्युस्थाभ्रधाराणां वृषा वर्षिताऽसि त्वं हि पृथिवीस्था नदीर्दिवो वर्षसि वृष्टिद्वारा त्वं द्युस्थाभ्रधारा वर्षसि पृथिवीतो वाष्पोत्थापनद्वारा त्वं स्तियानां संहतानामपां द्वयोर्लोकयोः स्थितानां समुद्रात्मकानां मेघात्मकानां च वृषभः–गवां वृषभ इव वोढा वाहकोऽसि । अतो हे वृषभ ! पृथिव्याः स्तियानां च वोढ ! वाहक ! ते तुभ्यं वृष्णे दिवः सिन्धूनां च स्वादुर्मधुपेयः–मिष्टः पातुं योग्यः–रसः–रसरूप इन्दुः सोमः सुतो होमयज्ञे वराय वरमस्मभ्यं दद्याः–इति हेतवे पीपाय स सुतः सोमः प्यायतां वर्धतां वृद्धिं गत्वा वृष्टिरूपेणास्मान् प्राप्तो भवत्वित्याकांक्षा । 'पीपाय' "प्यायी वृद्धौ" ( भ्वादि० ) लोडर्थे लिट् परस्मैपदं च व्यत्ययेन "लिड्यङोश्च" ( अष्टा० ६ । १ । २९ ) 'प्यायी' इत्यस्य लिटि 'पी' भावः ।

वक्तव्यम्—'स्तियानाम्' एतत्पदविषयको यः पूर्वमन्त्रः प्रदर्शितोऽस्माभिस्तस्याग्निर्देवतासीत् स च पृथिवीस्थानः, अत एव मन्त्रे 'पृष्टो दिवि धाय्यग्निः पृथिव्याम्' पृथिव्यां रत उक्तः । 'वृषासि दिवो वृषभः पृथिव्याः' इति यास्कप्रदर्शिते मन्त्रे खल्विन्द्रो देवता द्विस्थानस्थः, यथा च पूर्वं द्विबर्हाः–नामतः कथितः । यास्कशब्दे 'द्वयोः स्थानयोः परिवृढः' उक्तः । तथैव प्रस्तुते मन्त्रे वर्णनम् ।

स्तिपाः ॥ ७८ ॥
स्तिपाः स्तियापालन उपस्थितान् पालयतीति वा ।
"स नं स्तिपा उत भंवा तनूपाः" ( ऋ० १०।६९।४ )
इत्यपि निगमो भवति ॥

भा०—'स्तिपाः' इत्यनवगतम् । 'स्तियापालनः' । यद्वा 'उपस्थितपालः' इत्यर्थरूपोऽवगमः । स्तियाः पाति–इति "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति 'विच्' प्रत्ययः । 'या' इत्यस्य लोपश्छान्दसः, अथवा 'उपस्थित' शब्दोपपदे "पा रक्षणे" ( अदादि० ) ततो विच् प्रत्ययः । 'उपस्थित' शब्दस्य 'स्ति' भावश्छान्दसः पृषोदरादित्वाद्वा । इत्यनवगतपक्षे स्तियानां पाता 'स्तिपाः' यद्वा–उपस्थितानां पाता–'स्तिपाः परन्तु 'या' लोपमन्तरा यद्वा–अनेकवर्णलोपमन्तरा 'स्ति' शब्दोपपदे "पा रक्षणे" ( अदादि० ) धातोः क्विपि रूपं 'स्तिपाः' एकवचने । 'स्ति' शब्दो गृहवाचकः, यथा "ष्टै वेष्टने" ( भ्वादि० ) क्विप्रत्यये 'स्ति' गृहम्, गृहं स्वाभ्यन्तरे वासिनं वेष्टते परितो रक्षति विशेषेण गुहागृहम्–अध्यात्मक्षेत्रे हृदयं गुहा । 'स्ति' गृहेऽर्थे । "नू इ॑न्द्र····उप॑ नो॒ वाजा॑न् मिमी॒ह्युप॒स्तीन्" ( ऋ० ७ । १९ । ११–'स्तीन् गृहान् उपमिमीहि'–सायणः ) तस्मात् 'स्तिपाः' गृहस्य रक्षकः । एवम् 'स्तिपाः' इत्यस्य त्रयोऽर्थाः सञ्जाताः, द्वावर्थौ तु यास्कप्रदर्शितौ–अनवगतपक्षियौ । एकः स्वतन्त्रोऽवगतः । अनेकार्थसन्दर्भेऽस्मिन् मन्त्रे 'स्तिपाः' त्रीनर्थानपेक्षते ।

'स्तिपाः' अवगतार्थे केवले प्रयुज्यते—

ता न॑ः स्ति॒पा त॑नू॒पा वरु॑ण जरितॄ॒णाम् ।
मित्र॒ साध॑यतं॒ धिय॑ः । ( ऋ० ७ । ६६ । ३ )

मित्रावरुणौ देवते–तौ युवां हे मित्र ! वरुण ! हे प्राण ! अपान ! "प्राणो वै मित्रोऽपानो वरुणः" ( शतपथ० ८ । ४ । २ । ६ ) जरितॄणां नः स्तोतॄणां परमात्मन उपासकानामस्माकं जीवात्मनाम् "जरिता स्तोतृनाम" (निघं ३।१६) स्तिपा–स्तिपौ गृहपौ हृद्गुहारूपस्य गृहस्य रक्षकौ "स्तयो गृहाः तान् पातः" ( सायणः ) जीवात्मनो गृहं हृदयं तत्रैव च प्राणापानयोः प्रसूतिः, तस्मात् प्राणापानौ मित्रावरुणौ हृदयगृहस्य रक्षकौ । तनूपा–शरीरपौ–शरीरस्य रक्षकौ च स्तः । धियं कर्मव्यवहारं "धीः कर्मनाम" ( निघं० २ । १ ) साधयतं सम्पादयतम् । परमात्मोपासकानां प्राणापानौ दीर्घजीवनं कुरुतः कार्यं च साध्नुतः ।

अथ यास्कोदाहृतोऽनेकार्थप्रसङ्गकः समग्रो मन्त्रो व्याख्यायते—

यं त्वा॒ पूर्व॑मीळि॒तो व॑ध्र्य॒श्वः स॑मी॒धे अ॑ग्ने॒ स इ॒दं जु॑षस्व ।
स न॑ः स्ति॒पा उ॒त भ॑वा तनू॒पा दा॒त्रं र॑क्षस्व॒ यदि॒दं ते॑ अ॒स्मे ॥

हे अग्ने परमात्मन् ! वध्र्यश्वः–वध्र्यां चर्मबन्धन्यामश्व इव देहबन्धन्यां बद्धोऽहं जीवात्मा यं त्वां पूर्वं पूर्वजन्मनि–ईडितः ईडितवान्–अत्र कर्तरि क्तः । पुनरिदा-

नीमस्मिन् जन्मनि समिधे स्वात्मनि स्वहृदये स्तवनेनोपासनेन । इयं स्तवनमुपासनं स त्वं जुषस्व सेवस्व स्वीकुरु । हे परमात्मन् ! स त्वं नोऽस्माकं स्तिपा हृदयगृहस्य रक्षकः "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य" ( कठो० ४ । १३ ) यद्वा स्तिपाः—स्वसमीपे—उपस्थितानामुपासकानां मुमुक्षूणां मुक्तानां च रक्षकः, अथवा 'स्तिपाः' स्तियानां संहतानामन्तरिक्षस्थमेघानां पृथिवीस्थसमुद्रियाणामपामिव शरीरे—ऊर्ध्वाधःस्थितानां संहतानां जीवनरसानां रक्षकः—उतापि न केवलमन्तःस्थानां वस्तूनामेव रक्षकोऽपि तु तनूपा बाह्यदेहस्यापि रक्षको भव पुनश्च यदिदं किञ्चास्मभ्यं चतुर्थ्यर्थे 'शे' प्रत्ययः 'सुपां सुलुक्पूर्वसवर्णाच्छे०" ( अष्टा० ७ । १ । ३९ ) ते त्वया दात्रं दत्तं दीयमानं दातव्यं कर्मफलं तदपि रक्ष । दात्रमिति सामान्यकाले कर्मणि 'त्रः' प्रत्यय औणादिकः "गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ( उणा० ४ । १६७ ) धातोर्बाहुलकात् ॥

जवारु ॥ ७९ ॥

जवारु जवमानरोहि जरमाणरोहि गरमाणरोहीति वा ।

"अग्ने रूप आरुपितं जवारु" ( ऋ० ४ । ५ । ७ )

इत्यपि निगमो भवति ।

भा०—'जवारु' इत्यनवगतम् । 'जवमानरोहि, जरमाणरोहि, गरमाणरोहि' इति निर्वचनप्रधानाः पक्षेणावगमाः, विशेषणरूपाः । अभिधेया विशेष्या यथायोग्यं मन्त्रेषु । जवमानं गतिं कुर्वन्तं सूर्यं रोहति, जरमाणं रात्रिं जरयन्तं सूर्यं रोहति, गरमाणं तमो गिरन्तं निगिरन्तं सूर्यं रोहति—इति तच्छीलं पृथिवीसंलग्नमाकाशमण्डलम् । सर्वत्र जवमानजरमाणगरमाणानां पूर्वपदानां जवभावः, तदुत्तरात्—आङ्पूर्वात् 'रुह' धातोः इश्छन्दसि, जवारु । 'आङ्' अत्र यास्कमतेऽनर्थकः ।

समग्रमन्त्रस्तदर्थश्च—

तमिन्न्वेव समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रूप आरुपितं जवारु ॥

समना समाना सूर्येण समाना धीतिर्दीप्यमाना "धीधीङ् दीप्तिदेवनयोः" ततः क्विप् कर्तरि 'दी' लोपश्छान्दसः । पुनती शोधयित्री—अन्धकारं नाशयित्री यद्वा—अन्तरिक्षं शोधयित्री खलूषोदेवते ! तं समानं स्वसमानं सूर्यं क्रत्वा तदनुसारिणा कर्मणा—अभ्यश्याः—अभिप्राप्नुयाः—अभिप्राप्नोषि । रात्री सूर्यमन्तरेण पृश्नेः—आकाशस्य ससस्य सुप्तस्य जनस्येव चर्मन्नधि—चर्मणि निष्कम्पस्य पृथिवीसंलग्ने

प्रवेशे जवारु जवमानं गतिं कुर्वन्तं सूर्यं यद्वा रात्रिं जरयन्तं सूर्यमथवा तमोनिगिरन्तं सूर्यं रोहतीति तच्छीलं पृथिवीसंलग्नस्य गमनस्याकाशमण्डलस्याग्रे तव उषसो भाः—रूपो विमोहनीयं—चारु सुन्दरं भासनमारुपितमाविर्भूतं भवति । इत्याधिदैविकदृष्टिः ।

अथाधिभौतिकदृष्ट्याम्—

कन्ये ! पुनती—आत्मानं शोधयन्ती वस्त्राभूषणादिभिश्चात्मानं भूषयन्ती धीतिर्ज्ञानस्य धारयित्री ज्ञानेन दीप्यमाना समना समाना कन्या समानं ज्ञानादिगुणवन्तं वरं कृत्वा क्रतुविशेषेण वैवाहिकयज्ञेन विवाहसंस्कारेणाऽभ्यश्याः—अभिप्राप्नुयाः । पुनश्च तथाभूतं वरमभिगच्छेः, तस्य पत्युः ससस्य शयितुश्चमेन्—अधि देहस्याधीने पृश्नेराकाशस्याग्रभागे जवारु गतिंकुर्वन्तं रात्रिं जरयन्तं तमो निगिरन्तं सूर्यं रोहतीति—तच्छीलं पृथिवीसंलग्नस्य गगनमण्डलस्याग्रे—उषसो भाः—रूपो विमोहनीयं चारु सुन्दरमारुपितमाविर्भूतं यथा भवति तथा जवारु जवमानं गतिं कुर्वन्तमज्ञानान्धकारं जरयन्तं दुःखं निगिरन्तं नाशयन्तं पुत्रमारोहयति धारयतीति तथाविधं गार्हस्थ्यजीवनं चारु सुन्दरमाविर्भूतं भवेत् ॥

जरूथम् ॥ ८० ॥

जरूथं गरूथं गृणातेः ।

"जरूथं हन्यक्षि राये पुरंन्धिम्" ( ऋ० ७ । ९ । ६ )

इत्यपि निगमो भवति ॥ १७ ॥

भा०—'जरूथम्' इत्यनवगतम् । 'गरूथम्' इत्यवगमः । 'गृणातेः' इति धातुनिर्देशः । विशेष्योऽभिधेयः । "गृणाति—अर्चतिकर्मा" (निघं० ३ ।१४) ततः "जॄवृञ्भ्यामूथन्" ( उणा० २।६ ) इति धातोर्बाहुलकात् 'ऊथन्' प्रत्ययः । इति त्वनवगतत्वं प्रदर्श्य जरूथः स्तोता साधितः । अवगतपक्षे "जॄ वयोहानौ" ( क्र्यादि०, चुरादि ) जरूथो जीर्णः शुष्कः । "जरति अर्चतिकर्मा" ( निघं० ३ । १४ ) इति निघण्टौ पठिताज्जधातोर्न साधितो यास्केन, किन्तु "गॄ" धातोः साधितः, अनवगतप्रसङ्गे "गॄ" धातुतः साधने भवति, "जॄ" वयोहानौ 'इत्यस्यापि खल्ववगतप्रसङ्गस्याप्यवसरः' इति गॄ धातोरत्र साधितेऽनवगतप्रसङ्गे "जॄ वयो हानौ" इत्यस्यापवादो न स्यात् । अनेकार्थप्रसङ्गत्वादनेकार्थको जरूथशब्दो यस्मिन् मन्त्रे भवेत् स उदाहृतः । प्रथममुभयोरर्थयोः पृथक् पृथगर्थको मन्त्रः प्रदर्श्यतेऽस्माभिः ।

जरूथः—जीर्णः शुष्कः—

विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् ।

प्र निस्वरं चातयस्वामीवाम् ॥ ( ऋ० ७ । १ । ७ )

हे अग्ने ! त्वं विश्वाः—अरातीः सर्वाः शत्रुसेनाः—अपदह—भस्मी कुरु येभिस्तपोभिः—यैस्तापकज्वलनैः—जरूथं जीर्णं वृक्षं शुष्कं काष्ठम्—"जरूथं जीर्णकाष्ठम्" ( दयानन्दः ) अदह दहसि दग्धं करोषि भस्मी करोषि तथा निस्वरं नितरामुपतापकं पीडकम् "स्वृ शब्दोपतापयोः" ( भ्वादि० ) अमीवां रोगं प्रचातयस्व प्रणाशय "चातयतिर्नाशने" ( निरु० ६ । ३० )

जरूथः—स्तोता—

अग्निर्ह त्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम् ।

अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजयासृजत्सम् ॥

( ऋ० १० । ८० । ३ )

अग्निरग्रणेता परमात्मा ह निश्चयेन जरतः स्तुवतः स्तुतिं कुर्वतः—उपासकस्य त्यं तं कर्णं स्तुतिं शृण्वन्तम्—आव—अवति रक्षति स्वस्तुतौ स्थापयति—अयुक्तशब्दान्तरात् पृथक् करोति, अग्निः स परमात्मा जरूथं गरूथं स्तोतारमुपासकं निष्कामं स्वकामं परमात्मकाममद्भ्योऽमृतेभ्यः प्राणेभ्यः "प्राणा वा आपः" (तै० ३ । २ । ५ । २ ) "अमृता ह्यापः" ( शत० ३ । ९ । ४ । १६ ) निरदहत् निरयच्छत्—निर्यच्छति—प्रयच्छति ददाति, दह धातुरत्र दानेऽर्थे "मातिधक्—मास्मानतिहाय दाः" ( निरु० १ । ७ ) यद्वा "निरदहत्" भौतिकाग्निरिव न दहति 'निर्' उपसर्गो निषेधे निराकरणे वर्तते "निर् निषेधे" ( अव्ययार्थशास्त्रम् ) यथा निःशुल्कः, निष्कामः, निर्दोषः, निरुपद्रवः, निःस्पृहः, निःशङ्कः, निर्जनः, निर्भ्रान्तः, निर्बन्धनः, इत्यादयः । शास्त्रेऽपि निषेधे तथैव प्रयुज्यतेऽत्रैव "न निर्बद्धा उपसर्गा अर्थान्निराहुः" (निरुक्त० अ० १ पा० १ ख० ३) इति 'निर्बद्धाः—अबद्धाः' "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" (योग० १।५१) इति 'निर्बीजः' एवमत्र मन्त्रे 'निरदहत्' न दहति, अपितु तद्विपरीतम् 'अद्भ्यः' अलेभ्यः समर्पयति शान्त्यर्थं दहनस्य तापस्य तु का कथा? समर्पयतीति योग्यक्रियाया आकाङ्क्षाऽस्ति । अथाग्निः परमात्मा 'अत्रिं घर्मं उरुष्यत्' जरतः—इति सम्बध्यते । जरतः स्तुवतः स्तुतिं कुर्वतोऽत्रिं वाचं घर्मे यज्ञे स्तुतिं कुर्वतीं स्तोत्राणि पठन्तीम् "वागेवात्रिः" ( शत० १४ । ५ । २ । २ ) उरुष्यत्—रक्षति "उरुष्यति रक्षाकर्मा (निरु० ५।२३) पुनः सोऽग्निः परमात्मा 'नृमेधं प्रजया सम्—असृजत्' मेधा

क्रतुः सङ्कल्पः, इत्यनर्थान्तरम् । नृषु प्रजासु "प्रजा वै नरः" ( ऐत० २ । ४ ) सन्ततिषु मेधा प्रज्ञा सङ्कल्पः कामोऽस्य स नृमेधस्तं जरन्तं स्तुवन्तं नृमेधं प्रजाकामं जनं प्रजया पुत्रादिकया समसृजत् संसृष्टं संयुक्तं करोति ।

अथ यास्कप्रदर्शितोऽनेकार्थको समग्रमन्त्रो व्याख्यायते—

त्वाम॑ग्ने समि॒धा॒नो वसि॑ष्ठो॒ जरू॑थं ह॒न् यक्षि॑ रा॒ये पुर॑न्धिम् ।

पु॒रु॒णी॒था जा॑तवेदो जरस्व यू॒यं पा॑त स्व॒स्तिभि॒: सदा॑ नः ॥

हे अग्ने ! परमात्मन् ! अहं वसिष्ठोऽतिशयेन त्वयि वसिता त्वां समिधानः स्वात्मनि दीपयन् तिष्ठेयम् । तदा त्वं मां जरूथं गरूथं स्तोतारं पुरन्धिं बहुप्रज्ञानं हन् प्राप्नुवन् "हन हिंसागत्योः" ( अदादि० ) "हन्ति गतिकर्मा" ( निघं० २ । १४ ) राये—मोक्षैश्वर्याय—यक्षि—यज—अध्यात्मयज्ञस्य ऋत्विग् भूत्वा । यद्वा—अग्ने ! परमात्मन् ! योऽहं त्वयि वसिष्ठः सर्वात्मना वसिता त्वां स्वात्मनि समिधानो जीवन्मुक्तो भवामि तदा त्वं जरूथं जीर्णं शरीरम् हन्—हंसि, पुरन्धिं बहुप्रज्ञं ज्ञानवन्तं चेतनं मां राये—मोक्षैश्वर्याय यक्षि—मोक्षे सङ्गमयसि । जातवेदः ! जातानां वेत्तः ! जातेषु विद्यमान ! परमात्मन् ! पुरुणीथा—पुरुणीथानि त्वत्तः पृथक्कराणि बहुत्रणेतॄणि वृत्तानि यानि मनसि वर्तन्ते तानि जरस्व जरय नाशय स्वस्तिभिः कल्याणकरैर्नोऽस्मान् सदा पात रक्षत । बहुवचनमादरार्थम् । व्यत्ययेन वा ।

कुलिशः ॥ ८१ ॥

कुलिश इति वज्रनाम कूलशातनो भवति ।

"स्कन्धां॑सीव॒ कुलि॑शेना॒ विवृ॑क्णा॒हि॑: शयत उप॒पृक् पृ॑थि॒व्याः" ( ऋ० १ । ३२ । ५ )

स्कन्धो वृक्षस्य समास्कन्नो भवति ।

अयमपीतरः स्कन्ध एतस्मादेवास्कन्नं काये, अहिः शयत उपपर्चनः पृथिव्याः ॥ १७ ॥

भा०—'कुलिशः' इत्यनवगतम् । कूलशातनः, इत्यर्थप्रदर्शनम् । 'वज्रः' अभिधेयः ॥ "कूल आवरणे" ( भ्वादि० ) कूला आवरका उच्छ्रितभागाः । ते कूलाः—पर्वतकूलाः—मेघकूलाः—तेषां शातनो ध्वंसयिता । कूलशब्दोपपदे "शद्लृ शातने" ( भ्वादि० तुदादि० ) ततो ण्यन्तात् "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) अपि शब्देनान्येभ्यश्च धातुभ्यश्च डः प्रत्ययः । कूलशब्दस्य कुलिभावः । इत्यनवगतपक्षे । "कुलिशः वज्रनाम" ( निघं० २ । २० ) पुनरत्र

पदनामसु पठनमनेकार्थम् । वज्रः, इन्द्रस्य वज्रः सर्वनाशकः, शातनार्थयोगेन वैद्युताग्निः । वज्रभिन्नेऽर्थेऽवगतपक्षे 'कुलिशः' हस्तः कुलौ हस्ते सन् श्यति तनूकरोति स कुलिशः । "शो तनूकरणे" ( दिवादि० ) ततो डः । स वासिः—काष्ठच्छेदनसाधनं कुठारस्तक्षकस्य साधनं स न सर्वं नाशयति तनूकरोति हि । 'कुलिबन्धः'—कुल्योः कुलिषु शेते कुलिशो नदः स्त्रियां नदी कुलिशी, एवं कुलिशः शब्दस्य त्रयोऽर्था जाताः । पूर्वं पृथक्पृथगर्थका मन्त्राः प्रदर्श्यन्तेऽस्माभिः ।

कुलिशः—नदः—कुलिशी—नदी—

युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।

अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥

( ऋ० १ । १०४ । ४ )

शूरः—इन्द्रो विद्युद्रूपो देवो राष्टि यो मध्यमे स्थानेऽन्तरिक्षे राजते स आयोः—अयनस्य गमनशीलस्योपरस्य मेघस्य नाभिः—नाभिं नहनं बन्धनं प्रसृतं युयोप मूर्च्छितं संवेष्टितं करोति पुनः स मेघः पूर्वाभिः सूक्ष्माभिरद्भिः पूर्णः सन् प्रतिरते प्रवर्धते स्थूलत्वमापद्यते घनो भवति पुनस्तद्वर्षणात् "अञ्जसी कुलिशी वीरपत्नी" इति । तिस्रो नद्यः "तिस्रो नद्यः" इति "( सायणः )" "प्रीतिकारिका नद्यः" ( दयानन्दः ) अञ्जसी नदी वृष्टिधारा याऽऽञ्जस्येनानायासेनाकाशात् पृथिवीमागच्छति, कुलिशी वृष्टेरनन्तरं पर्वतेषु वहमाना स्वपार्श्वबन्धयोः प्रवहन्ती, वीरपत्नी वीरान् प्राणान् प्राणिनः पालयन्ती पर्वतेभ्यो भूस्थलवहा "प्राणा वै वीराः" ( शत० १२ । ८ । १० । २२ ) उदभिरुदकैः पयोऽन्नम् "पयोऽन्ननाम" ( निघं० २ । ७ ) हिन्वानाः प्रेरयन्त्यो भरन्ते पोषयन्ति ॥ कुलिशी नदी, कुलिशो नदो महती नदी ॥

कुलिशः—वासिः कुठारः काष्ठच्छेदनसाधनम्—

वृश्चामि तं कुलिशेनेव वृक्षं यो अस्माकं मनो इदं हिनस्ति ।

( अथर्व० २ । १२ । ३ )

योऽस्माकमिदं मनो हिनस्ति दुःखयति तं कुलिशेन वासिना कुठारेण वृक्षमिव वृश्चामि छिनद्मि छिन्नं करोमि कृन्तामि ॥

अनेकार्थकेन कुलिशशब्देन युक्तो यास्कोदाहृतो मन्त्रो व्याख्यायते—

अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।

स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥

इन्द्रो विद्युद्रूपो देवो वृत्रतरमतिशयेनावरकमन्धकारमयं घनं मेघं व्यंसं विगतांसं, विगताः—अंसाः स्कन्धरूपा अवयवा यस्य तथाभूतं महता वधेन वधकेन

कुलिशेन कुलिशनामकेन कूलशातकेनोच्छ्रितदलानां ध्वंसकेन वज्रेण–अहन्–हत-वान्–हन्ति–पुनस्तस्यांसाः–अवयवाः स्कन्धांसि–मनुष्यस्कन्धांसि विवृक्णा–विवृक्णानि छिन्नानि–इव च्छिन्ना जाताः, इति छिन्नत्वमुपमीयते । यद्वा स्कन्धांसि कुलिशेनेव, कुलिशेन यथा वासिना–कुठारेण स्कन्धांसि–वृक्षस्कन्धांसि प्रधान-खण्डानि विवृक्णा–छिन्नानि भवन्ति तथा वज्रेण वैद्युतास्त्रेण मेघो ध्वंसो हतस्तस्यांसाश्छिन्नाः–जाताः । इति 'कुलिशेन' कुलिशशब्देनोपमा दर्शिता भवति । अथवा कुलिशेन नदेन प्रबलवेगवता यथा स्कन्धांसि बन्धा विवृक्णा श्छिन्ना भवन्ति तथा मेघस्यांसा स्थूलावयवाश्छिन्ना भवन्ति येषु खल्वापो बद्धा आसन् । स्कन्धांसि–इत्युपमामात्रम् । तदा छिन्नभिन्नः सन्–अहिर्मेघः पृथिव्याः–उपपृक्–उपसम्पर्कं कुर्वन् तस्यां शेते, इतो जन इव शेते–इत्यलङ्कारः । स्कन्धः खलु वृक्षस्य समास्कन्नः वृक्षस्योपगतभागो भवति, इतरः स्कन्धो मनुष्यादि-स्कन्धोऽपि काये–उपगतत्वात्–उपपृक्–उपपर्चनः–उपरि सम्पर्कस्य कर्ता ॥

तुञ्जः ॥ ८२ ॥

तुञ्जस्तुञ्जतेर्दानकर्मणः ।

तुञ्जे॑तु॑ञ्जे॒ य उत्त॑रे॒ स्तोमा॒ इन्द्र॑स्य व॒ज्रिणः॑ ।

न वि॑न्धे अस्य सुष्टु॒तिम् ॥ (ऋ० १ । ७ । ७)

दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः ॥

भा०—'तुञ्जः' इत्यनवगतम् । तुञ्जतेः–दानार्थस्य, इति सार्वधातुकनिर्देश-रूपोऽवगमः । "तुजि पालने" (भ्वादि०) शब्विकरणो गृहीतः परन्तु दानार्थे-ऽस्यानवगतत्वमस्ति, निघण्टौ दानार्थे मतः "तुञ्जति दानकर्मा" (निघं० ३।२०) तुजि धातोर्घञ् प्रत्ययः । अनेकार्थसन्दर्भे 'तुञ्जे' शब्दस्य पठितत्वादन्यैरर्थैरपि भवितव्यम् । प्रथमं तु 'तुञ्जः' "वज्रनामसु" (निघं० २।२०) पठितः–इतोऽन्यत्र चतुर्वेदेषु क्वापि 'तुञ्जः' शब्दो न विद्यते तस्यानवकाशत्वात् खल्वत्र मन्त्रे 'तुञ्जे' इति शब्दो वज्रार्थोऽपि विज्ञेयः । अन्यत्र–अनवगतादन्यत्र–तुञ्जतेः–तुजिधातोर्येऽ-र्थास्तेऽपि योजनीयाः–अस्य अनेकार्थप्रसङ्गस्य सामर्थ्यात् । तुञ्जो दानम्–वज्रिण इन्द्रस्य परमात्मनस्तुञ्जे तुञ्जे प्रत्येकस्मिन् दाने पेयलेह्यभोज्यपरिधानीय-दर्शनीयवस्तुनां दाने ये–उत्तरे–उत्कृष्टतया सिद्धाः स्तोमाः, स्तुतिवचनसमूहाः सन्ति तैरस्य सुसम्यक् पूर्णां स्तुतिं स्तुतेः समाप्तिं न विन्धे विन्दामि तस्यासंख्य-दानानां दातृत्वात् "विन्धे" इति दकारस्य धकारो वर्णव्यत्ययेन ।

तुञः—वज्रः—

इन्द्रस्य परमात्मनो वज्रिणो वज्रवतस्तुञ्जे तुञ्जे प्रत्येकस्मिन् वज्रे, सन्ति बहवो हि वज्रा यैः स पापिनो जनान् दण्डयति हिनस्ति, मानवेन्द्रस्य राज्ञो दण्ड-प्रकारान् दण्डसाधनानि वा गणयितुं शक्यन्ते । परन्तु परमात्मनो दण्डवज्रा न गणयितुं पार्यन्ते । विविधानि वानस्पत्यविषाणि नाना खनिजजन्तवानि च, भिन्न-भिन्नाः सिंहादयो जन्तवः, आधिदैविका उत्पाताः—इति तु दृष्टा वज्राः । अदृष्टा वज्रा ये पुनर्जन्मनि देहान्तरे प्रहरन्ति जन्मतोऽन्धत्वबधिरत्वमूकत्वपङ्गुत्वकुब्जत्वाङ्ग-विकलत्वादीनि दुःखानि प्रयच्छन्ति । एवं तस्य प्रत्येकस्मिन् वज्रे दण्डप्रहारे ये—उत्तरे—उत्कृष्टतमा सिद्धा न्याय्याः स्तोमाः स्तवनीयास्तद्दण्डशासनप्रकाराः सन्ति तैर्न्याय्यदण्डविधानगुणैरस्य स्तुतेः समाप्तिं न विन्धे न विन्दामि न प्राप्नोमि । अत्र वर्णव्यत्ययेन दकारस्य धकारः ।

"तुजि पालने" तुञः पालनम्—

वज्रिणः—इन्द्रस्य परमात्मनस्तुञ्जे तुञ्जे प्रत्येकस्मिन् पालने गर्भस्थस्य पालने, तदानीं न मातापितरौ पालयतः, पुनर्जातस्य पालने यदा दन्ता नासन् मातुः स्तनयोः स्तनेषु च दुग्धं दत्त्वा पालनं करोति, सुप्तस्य सुषुप्तस्यापि पालने ये—उत्तरे—उत्कृष्टाः स्तोमाः स्तुतिशब्दसमूहास्तैरप्यस्य स्तुतेः समाप्तिं न विन्दामि ।

"तुजि हिंसाबलादाननिकेतनेषु" ( चुरादि ) हिंसार्थस्तु वज्रे गतस्तदग्रे तुजः—बलम्—

इन्द्रस्य परमात्मनो वज्रिणस्तुञ्जे तुञ्जे प्रत्येकस्मिन् बले ये—उत्तरे—उत्कृष्टा अपि स्तुतिसमूहाः सन्ति तैरस्य स्तुतेः समाप्तिं न विन्दामि तस्य बलानां न पारः, पृथिवीचन्द्रसूर्यादीनसंख्यान् लोकान् धारयति चालयति मनुष्यान् कर्मफल-भोगाय स्वाधीनीकरोति ।

तुञः—आदानं—स्वीकारः—

इन्द्रस्य वज्रिणः परमात्मनस्तुञ्जे तुञ्जे प्रत्येकस्मिन्नादाने स्वीकारे ये—उत्तरे—उत्कृष्टा अपिस्तुतिसमूहाः सन्ति तैरप्यस्य स्तुतेः समाप्तिं न विन्दामि पतितान् पापिनो जानानपि स्वपापविषये कृतपश्चात्तापान्—अग्रे न करिष्याम इति कृत-निश्चयान् स स्वीकरोति यतः ।

तुञः निकेतनम्—

वज्रिण इन्द्रस्य परमात्मनस्तुञ्जे तुञ्जे प्रत्येकस्मिन् निकेतने संसारस्य समस्तानि वस्तूनि तस्य निकेतनानि निवासस्थानानि सन्ति प्रत्येकं वस्तु तस्य

निकेतनं तत्र तस्य व्यापकत्वात् भिन्नभिन्ने वस्तुनि तस्यान्तर्यामित्वात् स तत्र निवसति हि तस्मिन् वस्तुनि तद्गुणाः–दृश्यन्ते हि गुणा गुणिनं ज्ञापयन्ति तत्स्वरूपस्य ज्ञापका स्तोमाः स्तुतिसमूहा उत्कृष्टाः सन्ति तैरस्य परमात्मनः स्तुतेः समाप्तिं पूर्णतां न विन्दामि ॥

बर्हणा ॥ ८३ ॥
बर्हणा परिबर्हणा ।
"बृहच्छ्रवा असुरो बर्हणा कृतः" ( ऋ० १ । ५४ । ३ )
इत्यपि निगमो भवति ॥ १८ ॥

भा०—'बर्हणा' इत्यनवगतम् । 'परिबर्हणा' इत्यवगमः ।

"बर्ह हिंसायाम्" ( चुरादि० ) ततः कर्मणि भूते यद्वा "बृह वृद्धौ" ( भ्वा० ) ततः कर्तरि "बहुलमन्यत्रापि–युच्" ( उणादि० २ । ७९ ) युच् प्रत्ययोऽचिद्व्मंश्चानवगतत्वे । 'पूर्वं पृथक्पृथगर्थको मन्त्रः प्रदर्श्यतेऽस्माभिः' बर्हणा–हिंसार्थे—

वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
( ऋ० १ । ५६ । ५ )

हे इन्द्र ! यत्–धरुणमुदकम् "धरुणम्–उदकनाम" ( निघं० १ । १२ ) तिरः–वृत्रेण तिरोहितमच्युतं च्यवनरहितमक्षरणरूपं कृतमासीत्–तत्–त्वं बर्हणा वृत्रस्य मेघस्य हिंसको दिवः स्थानात्–रजो जलं कृत्वा–आतासु 'पृथिव्याः–दिक्षु व्यतिष्ठिपः–विविधरूपेणास्थापयः स्थापयसि ।

बर्हणा–वृद्धौ—

परिसुवानास इन्दवो मदाय बर्हणा गिरा ।
सुता अर्षन्ति धारया ( ऋ० ९ । १० । ४ )

सुवानासः–अभिषूयमाणाः–इन्दवः सोमरसा यदा बर्हणा गिरा प्रवृद्धया महत्या स्तुत्या सुताः–इन्द्राय प्रेरिता भवन्ति । तदा ते धारया–तस्येन्द्रस्य मदाय हर्षाय पर्यर्षन्ति परितो गच्छन्ति ॥

अथ यास्कप्रदर्शितोऽनेकार्थकबर्हणाशब्दयुक्तो मन्त्रो व्याख्यायते—

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

हे विद्वन् ! त्वं दिवे विद्याशुभगुणानां प्रकाशकाय बृहते स्वयञ्च सद्व्यवहारैर्महत्त्वमापन्नाय राज्ञे शूष्यं शूषे बले साधु, यन्मद् बलकरं बलोत्साहवर्धकम्

"द्युम्नं बलनाम" ( निघं० २ । ९ ) वचो वचनमाशीर्वचनमर्चं समर्पय-उपहर यस्य खलु धृषतः शत्रूणां धर्षयितू राज्ञः स्वक्षत्रं स्वकीयं क्षत्रं क्षत्रियाभिमानि बलं यस्मिन् तथाभूतं धृषत्-धर्षणशीलं मनोऽस्ति । किमर्थं स द्युम्न्येन बलोत्साहवर्धकेन वचनेनार्चनीयोऽत्रोच्यते लुप्तोपमावाचकेन रूपकालङ्कारेण यत्-यथाकाशीयेन विद्युद्देवेन बृहच्छ्रवाः-महच्छब्दवान् बृहद्गर्जनवान्-असुरो मेघः "असुरो मेघनाम"-( निघं० १ । १० ) बर्हणा परिबर्हणा परितो बर्हितो हिंसितो जर्जरीकृतो निःसत्त्वः क्षीणीकृतः सः-तस्य "सुपां सु....." ( अष्टा० ७ । १ । ३९ ) विद्युद्देवस्य हरिभ्यां हरणशीलाभ्यां शुष्कार्द्राभ्यां धाराभ्यां सह पुरः-पुरातनः शाश्वितको रथः-रथ इव गमनप्रवाहो वेगो वृषभो मेघानां वर्षिता अस्ति तथा स स्वदेशस्य राजाऽप्यसुरस्य दुष्टस्य शत्रोर्वैद्युतेनास्त्रेण विद्युद्धाराभ्यां सम्पन्नेन रथमारुह्य नाशयिता भवेत् । यद्वा स राजा यस्मै द्युम्न्यं बलोत्साहवर्धकमाशीर्वचनमुपहृतं स बृहच्छ्रवाः-प्रभूतयशाः-महायशस्वी "श्रवः श्रवणीयं यशः ( निरु० ११ । १ ) असुरः प्रजाजनानां प्राणदः प्रज्ञानदो वा, असुः प्राणः प्रज्ञानं वा "असुः प्रज्ञानाम" ( निघं ३ । ९ ) बर्हणा परिबर्हणा परिवृढः सुप्रतिष्ठासम्पन्नः प्रजाजनैः पुरःकृतः-पुरस्कृतः सदैवोपहारप्राप्तो भवेत् तथा तस्य हरिभ्यामश्वाभ्यां सह रथः-वृषभः प्रजाजनेभ्यः सुखं वर्षिता हि गमनं कुर्यात् ॥

ततनुष्टिः ॥ ८४ ॥

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह । अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥ ( ऋ० ५ । ३४ । ३ )

घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन् रसाः । गोरूध उद्धततरं भवति, उपोन्नद्धमिति वा । स्नेहानुप्रदानसामान्याद् रात्रिरप्यूध उच्यते । स योऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति भवत्यह द्योतनवानपोहत्यपोहति शक्रस्तितनिषुं धर्मसन्तानादपेतमलङ्करिष्णुमयज्वानं तनूशुभ्रं तनूशोभयितारं मघवा यः कवासखो यस्य कपूयाः सखायः ॥

भा०—'ततनुष्टिः' इत्येतदनवगतम् । 'तितनिषुः' सिद्धोऽवगमो धातुमर्थञ्च प्रस्थापयन् । "तनु विस्तारे" ( तनादि० ) धातोः सन्नन्तात् क्विप् कर्तरि 'तन् सन् क्विप्-'तितनिष्टिः' इत्यस्य स्थाने "ततनुष्टिः", अभ्यासस्य-इकाराभावः सनि प्रत्यये-इटः स्थाने 'उट्' आगमश्छान्दसः, स्वरव्यत्ययेन क्तिस्वरश्च ।

अतः—ततनुष्टिः—तितनिषुः, किं तितनिषु धर्मसन्तानादपेतं वित्तं भोगं धनं च तितनिषुम् । 'ततनुष्टिः' शब्दोऽनवगत एव सकृच्च प्रयुक्तः सर्वस्मिन् वैदिक-साहित्ये तस्मात्तस्य नानेकार्थावसरः । "घ्रंसोऽहर्नाम" ( निघं० १ । ९ )

मन्त्रार्थः—

अस्मै—इन्द्राय परमात्मने यो जनो घ्रंसे दिने—प्रातः—उत वा—अपि च—ऊधनि—रात्रौ—सायम् "ऊधो" रात्रिनाम" ( निघं० १।७ ) सोमं सुनोति सोम-यागं करोति—स्वकीयाध्यात्मभावमुपासनं समर्पयति—अह निश्चयेन स द्युमान् द्योतनवान् भवति । इत्याध्यात्मिकजनस्य सत्कर्मिणः फलसिद्धिः । अथ तद्भिन्नं ततनुष्टिं धर्मादपेतं भोगं धनञ्च तितनिषुं भोगधनयोर्विस्तारं चिकीर्षुं तनूशुभ्रं—तनूशोभयितारं धनेन भोगेन चालङ्करिष्णुमयज्वानं यज्ञविहीनं पुनश्च यः कवासखाः-यस्य पापिनः सखायस्तं स मघवा—ऐश्वर्यवान् शक्रः शक्तः सर्वशक्तिमान् परमात्मा-अपोहति—अपार्दयति—अपहिनस्ति—अवश्यमपहिनस्ति "उहिर—अर्दने' ( भ्वा० ) अर्द हिंसायाम् ( चुरादि० ) ।

निरुक्तयः—घ्रंसोऽहः, अस्मिन् रसा ग्रस्यन्ते तापकारणात् तेनाह्ना यद्वा तस्मिन् रसाः प्राणिभिर्ग्रस्यन्ते भुज्यन्ते । 'ग्रस धातो घंञि पृषोदरादित्वाद्रूपसिद्धिः । ऊधस्—गोर्भवति—उद्धततरं गोरधोभागादुद्गततरं यद्वा—उपोनद्धमुपसंसक्तम् । 'उद् हन्—असुन्' यद्वा 'उद्नह असुन्' पृषोदरादित्वात्—ऊधः । गोरूधसः स्नेहमयं दुग्धं स्रवति स्नेहसामान्यादवश्यायस्य स्रावणाद्रात्रेरपि—ऊधोनाम ॥

इलीविशः ॥ ८५ ॥

न्यांविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्ण-मिन्द्रः ॥ ( ऋ० १ । ३३ । १२ )

निरविध्यदिलाबिलशयस्य दृढानि व्यभिनच्छृङ्गिणं शुष्ण-मिन्द्रः ॥ १९ ॥

भा०—'इलीविशः' इत्यनवगतं नामपदम् "इलाविलशयः" इत्यवगमः । मेघो दस्युर्वा अभिधेयः । "इला—अन्ननाम" ( निघं० २ । ७ ) अन्नस्य बिल-मुदकम्, उदकेऽन्नं गुप्त वर्तते, यतस्तस्य सेचनादन्नमुत्पद्यते यथा वीर्यसेचनान्म-नुष्यादेरुत्पत्तिर्भवति । तस्यान्नबिलस्योदकस्य शयः शयनं शयनस्थानमुदकशयो-मेघः, यथा पृथिव्यां जलाशयः पार्थिवस्तथान्तरिक्षे—आन्तरिक्ष्य उदकाशयो मेघः । एवम्—"इला—पृथिवीनाम" ( निघं० १ । १ ) पृथिव्या बिलानि गुहास्थानानि तेषु यः शेते स इलाबिलशयो दस्युः । गर्तशयो गिरिशय इव—इलाबिलशयः ।

स इलाबिलशयः सन् इलीबिशः—उच्यते "इला" शब्दस्य इली भावश्छान्दसः "बिलशयः" इत्यस्य लकारयकारयोर्लोपश्छान्दसः । 'इलीबिशः' मेघो दस्युश्च क्षेत्रभेदेनानेकार्थको न शब्दव्युत्पत्त्या ।

समग्रमन्त्रस्तदर्थश्च—

न्य॑विध्यदिली॒बिश॑स्य दृ॒ळ्हा वि शृ॒ङ्गिण॑मभिन॒च्छुष्ण॒मिन्द्रः॑ ।

याव॒त्तरो॑ मघव॒न् याव॒दोजो॒ वज्रे॑ण॒ शत्रु॑मवधीः पृत॒न्युम् ॥

इन्द्रो विद्युद्रूपो देव इलीबिशस्य—इलाबिलशयस्याबस्य बिलमुदकं तस्य शयस्योदकाशयस्य मेघस्य दृढानि बन्धनानि यैरुदकं बध्नाति नोदकं त्यजति तानि न्यविध्यत्—नितान्तं सर्वथा विध्यति—छिनत्ति, अथ तं विश्रृङ्गिणं विगतश्रृङ्गं कृत्वा, श्रृङ्गाणि मेघस्योन्नतघनदलानि तद्रहितमसमर्थमनुद्धतं कृत्वा, शुष्णं शुष्कमुदकविहीनं यथास्यात् तथाऽभिनत्—भिनत्ति नाशयति । तदिदं वृत्तं प्रत्यक्षमन्तरिक्षे दृश्यते तद्वदग्रे लुप्तोपमावाचकेन श्लेषालङ्कारेणोच्यते । मघवन्! ऐश्वर्यवन्! राजन्! त्वमपि विद्युद्देव इव शत्रुं पृतन्युं पृतनां संग्रामं संघर्षमिच्छुकम् "पृतनाः—संग्रामाः" ( निघं० २ । १७ ) यद्वा "पृतनाः—मनुष्याः" ( निघं० २।३) परान् मनुष्यान्—अस्माकं प्रजाजनान्—इच्छुकं लुण्ठयितुं भक्षयितुं "छन्दसि परेच्छायामपि क्यच्—भवति—तथाभूतं तमिलीबिशमिलाबिलशयं पृथिवीगुहाबिलेषु शयानं निवसन्तं दस्युं हिंसकपशुं वा यावत् 'तस्य दस्योः शत्रोर्वा तरो बलं बाह्यबलं "तरो बलनाम" ( निघं० २ । ९ ) यावत् तस्यौजः साहसमान्तरिकं बलम् "ओजो बलनाम" ( निघं० २ । ९ ) अवशिष्येत तावत्पर्यन्तं वज्रेण वधकरेणास्त्रेण तं वधीर्हिन्धि, तं निर्बलं निःसाहसं च कुरु तं हन्याः ॥

कियेधाः ॥ ८६ ॥

अ॒स्मा इदु॒ प्र भ॑रा॒ तूतु॑जानो वृ॒त्राय॒ वज्र॒मीशा॑नः कि॒येधाः॑ । गोर्न पर्व॒ वि र॑दा तिर॒श्चेष्य॒न्नर्णां॑स्य॒पां च॒रध्यै॑ ॥ ( ऋ० १ । ६१ । १२ )

अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः । कियेधाः कियद्धा इति वा क्रममाणधा इति वा । गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय ॥

भा०—"कियेधाः" इत्यनवगतमनेकार्थं च । 'कियद्धाः' यद्वा 'क्रममाणधाः' अवगमः । 'कियत्' शब्दोपपदे यद्वा 'क्रममाण' शब्दोपपदे "धाञ्—धारणपोषणयोः" ( जुहो० ) धातोः 'विच्' प्रत्ययः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा०

१ । २ । ७५ ) 'कियत्' शब्दस्य यद्वा 'क्रममाण' शब्दस्य 'किये' भावोऽनवगतत्वे छान्दसः । 'कियन्ति' अनेकानि बहूनि बलानि दधाति धारयतीति–'कियेधाः' क्रममाणानि–आक्रममाणानि स्वानि पराणि च दधाति धारयतीति 'कियेधाः ।' यास्केनोदाहृते मन्त्रे तु 'कियेधाः' शब्दस्यार्थद्वयसम्भवस्तस्यानेकार्थसन्दर्भत्वात् । केवलं द्वावेव मन्त्रौ हि वैदिकवाङ्मये ऋग्वेदेऽथर्ववेदे स्तो यत्र 'कियेधाः' शब्दः प्रयुक्तः । पूर्वमेकार्थको मन्त्रः प्रदर्श्यते—

कियेधाः—कियद्धाः–अनेकबलानां धारको बहुबलधारी—

अ॒स्मा इदु॒ त्वष्टा॑ तक्ष॒द्वज्रं॒ स्वप॑स्तमं स्व॒र्यं॑ रणा॑य ।

वृ॒त्रस्य॑ चिद्वि॒दद्येन॒ मर्म॑ तु॒जन्नीशा॑नस्तुज॒ता कि॑ये॒धाः ॥

( ऋ० १ । ६१ । ६ )

अस्मै–इन्द्राय विद्युद्देवाय राज्ञे वा हि खलु त्वष्टा सूर्यः शिल्पी वा वज्रं किरणसमूहं प्रक्षेपणास्त्रं वा सुकर्मतमं सुकार्यकारि रणाय युद्धाय स्वर्यं सुप्रेरणीयम् । येन तुजता हिंसता वज्रेण स ईशानः समर्थः । 'कियेधाः' कियद्धा कियन्ति बहूनि बलानि दधानो वृत्रस्य मेघस्य शत्रोर्वा मर्मस्थानं जलपूर्णं रक्तपूर्णं वा तुजन् हिंसन् हिंसनाय "हेतौ शतृप्रत्ययः विदत्–वित्–विन्देत जानीयाद्वा । इति वृत्रस्य शत्रोर्वा यथावसरं प्रहाराय सामर्थ्यप्रदर्शनम् ।

अथ यास्कोदाहृतो मन्त्रो यत्र "कियेधाः" तदुक्तार्थद्वयभाक् स व्याख्यायते–

अ॒स्मा इदु॒ प्र भ॑रा॒ तूतु॑जानो वृ॒त्राय॒ वज्र॒मीशा॑नः किये॒धाः ।

गोर्न पर्व॒ वि र॑दा तिर॒श्चेष्य॒न्नर्णां॑स्य॒पां च॒रध्यै॑ ॥

हे इन्द्र ! राजन् ! त्वं ईशानः समर्थः कियेधाः–कियन्ति बहूनि बलानि दधानोपि वा क्रममाणानि शत्रोरुपर्याक्रममाणानि बलानि धारयन्–अस्मै वृत्राय सत्रवेऽस्वयं खलु तूतुजानो हिंसन् हिंसनहेतोर्वज्रं प्रभर प्रक्षिप, पुनश्च–अपां चरध्यै सञ्चरणाय–अन्तरिक्षाद् भूप्रदेशं प्रति गमनाय–अर्णांसि वृष्टिजलानि–इष्यन् प्रेरयन् प्रेरणहेतवे तिरश्चा तिरश्चीनेन कुटिलेन कोणगत्या कर्षणहलगत्या 'गोर्न पर्व विरद' यथा हलेन तिर्यग्भूतेन गोः पृथिव्याः "गौः पृथिवीनाम" ( निघं० १ । १ ) बीजवपनयोग्यां पृथिवीं सम्पादयितुं तस्याः पर्व पर्व विरदति विलिखति । अद्यत्वे तु हलयन्त्रेण ट्रैक्टराख्येन बहुवेगतस्तिर्यग्गतेन कृषको विलिखति "रद विलेखने कर्षणे वपने" ( भ्वादि० ) यथा विद्युद् विरदति मेघं तथा राजन् ! त्वमपि शत्रुं विरद तत्स्थानं शत्रुस्थानं विदारय तद्रक्तं प्रवाहय ॥

भूमिः ॥ ८७ ॥

भूमिर्भ्राम्यतेः ।
"भूमिरस्यृषिकृन्मर्त्यानाम्" ( ऋ० १ । ३१ । १६ )
इत्यपि निगमो भवति ॥

भा०—"भूमिः" इत्यनवगतम् । 'भ्राम्यतेः' धातुर्निर्देशरूपोऽवगमः । विशेषणपदम् । विशेष्योऽभिधेयो यथायोग्यम्—अग्निः, वायुः, इन्द्रः—विद्युत्, मेघः, दरिद्रश्च । "भ्रमु चलने" ( भ्वादि० ) "भ्रमु—अनवस्थाने" ( दिवादि० ) ततः "भ्रमेः सम्प्रसारणं च कित्—इन्" ( उणा० ४ । १२१ ) 'भ्रमु' धातोर्द्वावार्थौ चलनम्—अनवस्थानञ्च, यास्कप्रदर्शिते मन्त्रे 'भूमिः' शब्द उभयार्थकः । प्रथमं पृथक् पृथगर्थको मन्त्रः प्रस्तूयते—

'भूमिः'—अनवस्थाता—

इमे रध्रं चिन्मरुतो जुनन्ति भृमिं चिद् यथा वसवो जुषन्त ॥
( ऋ० ७ । ५६ । २० )

राष्ट्रे यथा वसवो विद्यायां वासयितारो ब्राह्मणाः समानभावेन जनानुपदिशन्ति तेषामज्ञानान्धकारं निवारयन्ति तथा—इमे मरुतो राजपुरुषा रध्रं चित् संसिद्धं समृद्धं जनं चित् तथा भृमिमनवस्थातारमनवस्थितं जनं दरिद्रं चिदपि जुनन्ति प्रेरयन्ति । "भृमिं—दरिद्रम्" ( सायणः ) ।

"भृमिः भ्रमणशीलः—गमनशीलः"—

'भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा । चित्रं कृणोष्यूतये ।'
( ऋ० ४ । ३२ । २ )

हे इन्द्र ! राजन् ! चित्र ! अद्भुतगुणकर्मवन् ! चित्रिणीषु त्वादृगद्भुतगुणकर्मयुक्तासु प्रजास्वस्मासु चित्रं शोभनमनुपमं सुखमाकृणोषि सम्पादयसि, अतएव त्वमूतयेऽस्माकं रक्षायै भृमिर्भ्रमणशीलो गमनशीलोऽसि ॥

यास्कोदाहृतो मन्त्रो यस्मिन् 'भूमिः' शब्दो द्व्यर्थकः स समग्रो व्याख्यायते—

इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
अग्निः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥

हे अग्ने ! परमात्मन् ! नोऽस्मत्सम्बन्धिनीमिमां शरणिं हिंसिकां घातिकाम् "शॄ हिंसायाम्" ततोऽनिःप्रत्ययः ( उणा० २ । १०३ ) पुनःपुनर्जन्महेतुकां भोगवासनां मीमृषः—पवित्रजलेनेव पवित्रसोम्येन रसेन सिञ्च प्रक्षालय शोधय "मृषु सेचने" ( भ्वादि० ) ततो णिजन्तात्—चङि लुङि रूपम् । यमिममध्वानंच

एतं भोगमार्गं दूरात् त्वत्तो दूरं दूरकालाच्चिरात् खलु वयमगाम प्राप्ताः स्मः। परमात्मन् ! त्वमस्माकमापिः प्राप्तव्यः सखा तथा पिताऽसि त्वं सोम्यानां सोम-मुपासनारसं सम्पादयमानानामुपासकानामापिः प्राप्तव्यः सखा पिता, प्रमतिः प्रकृष्टमतिमान् गुरुस्तथा–ऋषिकृत् स्वदर्शनस्य कारयिता तथा तांश्च ऋषीन् सम्पादयिता भ्रमिः–भ्रामयिता, गमयिता स्वपार्श्वे प्रापयिताऽसि किन्तु मर्त्यानां साधारणजनानामसोम्यानां भोगे रममाणानां तु भ्रमिरेव संसारे भ्रामयिताऽनव-स्थापयिता यत्र तत्र जन्मजन्मान्तरेषु भिन्नभिन्नयोनिषु विचालयिताऽसि ॥

विष्पितः ॥ ८८ ॥

विष्पितो विप्राप्तः ।

"पारं नो अस्य विष्पितस्य पर्षन्" ( ऋ० ७।६०।७ )

इत्यपि निगमो भवति ॥ २० ॥

भा०—"विष्पितः" इत्यनवगतम् । "विप्राप्तः" इत्यवगमः । वैशिष्ट्येन–अनायासेन प्राप्तः [ अज्ञानान्धकारः ] यद्वा वैपरीत्येन प्राप्तः [ असदाचारः ] इति द्वावभिधेयौ । 'वि' उपसर्गो विशेषे विपरीते च तदनन्तरं प्र पूर्वकात् "आप्लृ" धातोः क्तः 'प्राप्' इत्यस्य स्थाने "ष्पि" भावः "विष्पितः । विप्राप्तः शब्दो द्व्यर्थको "वि" इत्युपसर्गस्य द्व्यर्थकत्वात् "वि" विशेषे यथा–विशुद्धः, विस्पष्टः, 'वि' वैपरित्ये यथा विमनाः–यस्य वैमनस्यम् । विकर्म, विमतिः, यास्कोदाहृते मन्त्रे "विष्पितः" द्व्यर्थः, अत्रानेकार्थसन्दर्भत्वात् । प्रथमैकार्थको मन्त्रोऽस्माभिः प्रदर्श्यते—

'विष्पितः' विपरितत्वेन प्राप्तः–असदाचारः–असदाचरणम्—

अति नो विष्पिता पुरु नौभिरपो न पर्षथ । यूयमृतस्य रथ्यः ॥

( ऋ० ८ । ८३ । ३ )

हे मित्र ! वरुण ! अर्यमन् ! * त्रयो विद्वांसः ! यूयं खल्वृतस्य सत्यस्य रथ्यः–रथिनो यात्राया यानस्य स्वामिनः स्थ, अतो यूयं नोऽस्मान् पुरु–पुरूणि बहूनि, विष्पिता–विष्पितानि–अनृतानि–असत्यानि–दुष्कृतानि "नौभिः–अपः–न–अति पर्षथ" नौकाभिर्जलाशयानिव पारयथ–तारयथ तथा तारयथ । ऋतस्य रथ्यो रथिन एवानृतानि–दुष्कृतानि–तारयन्ति । अन्यत्र वेदेऽप्युक्तम्—"ऋतस्य पन्थां न तरन्ति दुष्कृतः" ( ऋ० ९ । ७३ । ६ )

---

* पूर्वमन्त्रात् "ते नः सन्तु युजः सदा वरुणो मित्रो अर्यमा" (ऋ० ८।८३।२)

अथानेकार्थकेन 'विष्पित' शब्देन युक्तो यास्कोदाहृतो मन्त्रो व्याख्यायते—

इ॒मे दि॒वो अनि॑मिषा पृथि॒व्याश्चि॑कि॒त्वांसो॑ अचे॒तसं॑ नयन्ति ।

प्र॒व्रा॒जे चि॑न्न॒द्यो॑ गा॒धम॑स्ति पा॒रं नो॑ अ॒स्य वि॑ष्पि॒तस्य॑ पर्षन् ॥

इमे—एते मित्रावरुणार्यमाणः * त्रयो विद्वांसो दिवो—द्युलोकस्य पृथिव्याः—पृथिवीलोकस्यान्तरिक्षस्यापि † स्वरूपं चिकित्वांसो विज्ञापयन्तस्तेषां ज्ञानं प्रकाशयन्तः—मित्रो दिवो द्युलोकस्य ग्रहनक्षत्रविद्यां ज्योतिर्विद्यां, वरुणः पृथिव्याः पृथिवीलोकस्य भूगोलभूपृष्ठभूगर्भविद्यामथार्यमान्तरिक्षस्यान्तरिक्षस्थानां वातप्रवाहाणां मेघानां विद्युद्धाराणां सूर्यरश्मीनां विद्यां प्रकाशयन्तोऽनिमिषा निरन्तरं ते मित्रादयो विद्वांसोऽचेतसमज्ञानिनं ज्ञानरहितं नयन्ति स्वाश्रये नयन्ति ता विद्या विज्ञापयितुम् । ते प्रव्राजे प्रव्रजने प्रव्रजन्ति प्रगच्छन्ति यस्मिन् तस्मिन् मार्गे—नद्यः—चित्—गाधं—नद्याः—गाधं गहनं जलपूर्णं स्थानमिव, 'चित्' इत्युपमार्थः "चिदित्युपमार्थे" ( निरु० १ । ४ ) अस्ति तस्यास्य विष्पितस्य विप्राप्तस्य विशेषेणप्राप्तस्य—आत्मना सहजस्य प्राप्तस्याज्ञानान्धकारस्य, उक्तं हि "न विजानामि यदिवेदमस्मि" ( ऋ० १ । १६४ । ३७ ) नोस्मान्—पारं पर्षन् पारयन्तीति विष्पितः—विशेषेण—आत्मना सहजः प्राप्तोऽज्ञानान्धकारस्ततः पारयन्ति ।

पुनरपरा व्याख्या—

इमे—इमौ—व्यत्ययेन द्विवचनस्य स्थाने बहुवचनं यतोऽस्मात् पूर्वं मन्त्रे द्वौ मित्रावरुणौ हि पठ्येते "इ॒मे मि॒त्रोव॑रु॒णो" (६) तौ मित्रावरुणौ—मित्रश्च वरुणश्च मित्रो दिवः प्रकाशस्वरूपस्य परमात्मनो मोक्षधाम्नः "पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि" ( ऋ० १० । ९० । ३ ) विद्यां ब्रह्मविद्यां निःश्रेयसं तथा वरुणः पृथिव्याः प्रथितायाः सृष्टेर्विद्यामभ्युदयं चिकित्वांसः—चिकित्वांसौ—पूर्ववद् वचनव्यत्ययः, प्रज्ञापयन्तौ—अचेतसमसावधानं नयन्ति—नयतः—उन्नयतः, तौ मित्रावरुणौ निःश्रेयसाभ्युदययोरुपदेष्टारौ प्रव्राजे प्रव्रजने मोक्षमार्गे नद्या गाधमिव—गहनस्थानं यदस्ति तस्यास्य विष्पितस्य विपरीतत्वेन प्राप्तस्यानृतस्यासत्यस्य दुष्कर्मणः पापाचारस्य पारं नोऽस्मान् पर्षन् पारयतः—मोक्षं प्रापयतः—

---

* "इमे चेतारो अनृतस्य भूरेर्मित्रो अर्यमा वरुणो हि सन्ति" इति पञ्चममन्त्रादनुवर्तन्ते ।

† 'इमे' इति बहुवचनमाश्रित्य त्रयो विद्वांसो मित्रावरुणार्यमाणो यथा तथा त्रयाणां लोकानाम् ॥

यतः—"ऋतस्य पन्था न तरन्ति दुष्कृतः" इत्युक्तं पूर्वम् । इति—विष्पितः—विप्राप्तः—विपरीतत्वेन प्राप्तः—दुराचारः—पापाचारस्तत्पारगमनपरा व्याख्या ॥

तुरीपम् ॥ ८९ ॥

तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना ।

त्वष्टा पोषाय विष्यतु राये नाभा नो अस्मयुः ॥

( ऋ० १ । १४२ । १० )

तन्नस्तूर्णापि महत्सम्भृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्वित्यस्मयुरस्मान् कामयमानः ॥

भा०—"तुरीपम्" इत्यनवगतम् । 'तूर्णापि' इत्यवगमः । उदकम्, रेतः—प्राणिबीजम् । इत्यभिधेये । तूर्णं क्षिप्रम्—आप्नोतीति तच्छीलमिति "तूर्णोपपदे "आप्लृ" धातोः क्वन् प्रत्ययस्ताच्छीलिकश्छान्दसः । "तूर्ण" शब्दस्य 'तुर्' भावः धातोराकारस्य—ईकारादेशः । अथावगतपक्षे तुरीं गर्भे नलिकां यः पीतवान्—नवजातः शिशुः ।

तुरीपो गर्भाज्जातो नव शिशुः—

तन्नस्तुरीपमद्भुतं पुरुक्षु देव त्वष्टा रायस्पोषं विष्य नाभिमस्य ॥

( अथर्व० ५ । २७ । १० )

हे त्वष्टः—देव ! प्राणिनां शरीरस्य प्रसाधक विद्वन् ! शल्यचिकित्सक ! तुरीपं गर्भे नलिकां यः पिबति स्म तदस्माकं सन्तानमद्भुतमभूतं नवं पुरुक्षु बहुबुभुक्षितम् । पुरुपूर्वकात् "क्षुध्—बुभुक्षायां" ( दिवादि० ) ततः "डुः" औणादिक तत् सन्तानं रायस्पोषमस्मदर्थं रायो धनस्य पोषकं जातमित्यर्थः । अस्य नवजातस्य नाभिं नहनं नालबन्धनं विष्य सूत्रबन्धनेन पृथक्कुरु—नालच्छेदनं कुरु ।

तुरीपम्—तूर्णापि—तूर्णं क्षिप्रं देहभावमाप्नोति योनौ पतितं रेतः—

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।

यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥

( ऋ० ७ । २ । ९ )

हे त्वष्टः देव ! सन्तानस्य तक्षक कामदेव ! त्वं रराणो—स्त्रीयोनौ रममाणः, नोऽस्माकं तत् पोषयित्नु—पोषकरं वंशवृद्धिकरं तुरीपं तूर्णापि तूर्णं देहभावमाप्नुवत्—रेतः—वीर्यं 'रेतः' ( सायणः ) देहबीजमध रमणानन्तरं विष्यस्व विकिर—विमोचय । यतः कर्मण्यः कर्मशीलः सुदक्षः सुकुशलः—युक्तग्रावा—युक्ताः—

साधिता ग्रावाणः प्राणा येन योगाभ्यासात्तथाभूतः 'देवकामः' देवाय देवभावाय-कामो यस्यात्मानं देवं सम्पादयितुं कामनावान् वीरः पुत्रः "पुत्रो वै वीरः" (शत० ३ । ३ । १ । १२) जायेत जायते-लिङर्थे लट् ॥

अथ यास्कोदाहृतो मन्त्रो यस्मिन् 'तुरीपम्' शब्दोऽनेकार्थकः स व्याख्यायते-

तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना ।
त्वष्टा पोषाय विष्यतु राये नाभा नो अस्मयुः ॥

त्वष्टा-परमात्मा पुरुत्मनाऽत्यन्तमात्मभावेन-अस्मयुरस्मानिच्छन् पुरु बहु वा-अथ च-अरम्-बहुसमर्थमद्भुतं नोऽस्माकं पोषाय राये पोषणकराय रायेऽपत्य-धनाय तदद्भुतं योग्यमपूर्वं तुरीपं तूर्णं क्षिप्रं देहभावं-पुत्रभावं प्राप्नुवद्रेतो नोऽस्माकं नाभा-नाभौ-नाभेरधः-रेतःस्थाने-वीर्यस्थाने विष्यतु-विभावयतु-विकसितं करोतु । इति रेतोऽभिधायि 'तुरीपम्' ॥

पुरुत्मनाऽत्यन्तमात्मभावेन पुरु-अरं बहुसमर्थमेव चाद्भुतमभूतं नवं नोऽस्माकं तत्तुरीपम्-गर्भे-तुरीं नलिकां पिबतीति तुरीपमपत्यं जातमित्यर्थः, नोऽस्माकं पोषाय पोषकाय राये पुत्रधनायास्मयुरस्मानिच्छन्-त्वष्टा-शल्यचिकित्सकः शरीरस्य प्रसाधकः तस्यापत्यस्य नाभा नाभिं विष्यतु विच्छिन्नं करोति जरायुतः ॥ इत्यपत्याभिधायि तुरीपम् ॥

नोऽस्मभ्यं तत्-अद्भुतमुत्तमगुणं-पुरु-बहु-अरं-पर्याप्तं पूर्णं यथाभीष्टं तुरीपं-तूर्णापि-क्षिप्रं-प्राप्तियोग्यमुदकं पृथिवीतले शीघ्रं प्राप्येतेत्यतः त्वष्टा सूर्योऽस्मयुर-स्मानिच्छन्निव नोऽस्माकं पोषाय पोषकाय रायेऽन्नायान्नोत्पादनाय नाभा तस्योद-कस्य नाभिं नहनं बन्धनं मेघं विष्यतु छिनत्तु । इत्युदकाभिधायि तुरीपम् ॥

रास्पिनः ॥ ९० ॥
रास्पिनो रास्पी रपतेर्वा रसतेर्वा ।
"रास्पिनस्यायोः" ( ऋ० १ । १२२ । ४ )
इत्यपि निगमो भवति ॥

भा०—'रास्पिनः' इत्यनवगतम् । 'रास्पी' इति प्रथमाविभक्तिप्रदर्शनार्थो-ऽनवगतशब्दः प्रयुक्तः, य एव रास्पी प्रथमायां स एव रास्पिनः प्रत्ययान्तरान्तः, अर्थे न भेदः, यथा रास्पिनस्तथा वेदेऽन्यत्र रास्पी प्रयुक्तः "मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन्" ( ऋ० ५ । ४३ । १४ ) 'रास्पिरासः' 'रास्पि-र-असुक्-जस्' अत्र 'रास्पी' इनिप्रत्ययान्तः । समानार्थौ द्वौ । 'रपतेः' यद्वा 'रसतेः' इति धातुनिर्देशः । "रप व्यक्तायां वाचि" ( भ्वादि० ) तथा "रस आस्वादनस्नेहनयोः" ( चुरादि० ) ततो घञ् प्रत्ययः कर्मणि 'रापः रासः'

इति शुद्धं रूपं भवति पुनघञन्तात् 'राप:' इत्यस्मिन् पकारात् पूर्वं सकारोपजनः 'रासः' इत्यस्मिन् सकारस्यानन्तरं पकारोपजनश्छान्दसः। रास्पः, शब्दः—ध्वनिः। यद्वा—आस्वादः स्नेहः। सोऽस्यास्तीति मतुबर्थीयः "बहुलं छन्दसि" ( अष्टा० ५। २। १२२ ) इत्यनेन इनच् प्रत्ययः, यथा फलात् फलिनः, तथा रास्पिनः प्रथमैकवचनम्। तदनुवादरूपश्छान्दसः 'रास्पी' इनिप्रत्ययान्तो मतुबर्थप्रत्यय-विषयकः प्रयोगः। सोऽपि तद्वदनवगत एव। यथायोग्यमभिधेयो विशेष्यः। रास्पिनः शब्दोऽत्रानेकार्थसन्दर्भत्वादुक्तः, 'रास्पी' शब्दो नानेकार्थस्तस्मात् तद्युक्तो-मन्त्रो नोदाहृतः। पूर्वं 'रास्पी' शब्देन युक्तो मन्त्रः प्रदर्श्यतेऽस्माभिः।

रास्पी—आस्वादस्नेहवान् पदार्थः—

मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन्।
सुशेव्यं नमसा रातहव्याः शिशुं मृजन्त्यायवो न वासे॥

मातुः—अग्नेर्निर्मातृभूतायाः पृथिव्याः परमे पदे श्रेष्ठे स्थानेऽग्निकुण्डे शुक्रे शुभ्रे प्रज्वलिते—आयोर्यजमानजनस्य "आयुर्मनुष्यः" ( निघं० २। ३ ) रास्पिरासः—रास्पिराः, रास्पः—आस्वादः स्नेहो यस्मिन् स रास्पी—आस्वाद-स्नेहवान् पदार्थः—घृतं बातामादि मधुरं च हव्यं वस्तु। तस्मादास्वादस्नेहवन्तं हव्यं पदार्थं ये रान्ति ददति प्रयच्छन्ति—अग्नौ जुह्वति ते रास्पिराः—विपन्यवो मेधाविन ऋत्विजः "विपन्यवो मेधाविनाम" ( निघं० ३। १५ ) ते अग्मन् वेदिं प्राप्नुवन्ति यजन्ति—इति यावत्। ते रातहव्याः—रातव्यानि दातव्यानि हव्यानि येषां ते रातहव्याः—नमसा मधुरवचसा मन्त्रेण वेदमन्त्रेण सुशेव्यं सुन्दरं शेव्यं सुख-योग्यम् "शेवं सुखनाम" ( निघं० ३। ६ ) यज्ञाग्निं मृजन्ति शोधयन्ति शिशुम्—आयवो न यथा मनुष्याः शिशुं नववत्सं शोधयन्ति जलादिना वासे वासाय वस्त्रपरिधानार्थम्॥

अथ 'रास्पिनः' इत्यनेकार्थको यस्मिन् मन्त्रे स यास्कोदाहृतो मन्त्रो व्याख्यायते—

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै।
प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः॥

अहमौशिजः—उशिजां मेधाविनामृत्विजामग्रणीर्ब्रह्मा "उशिजो मेधाविनः" ( निघं० ३। १५ ) उतापि मे मदीयौ स्वकीयौ यजमानौ स्त्रीपुरुषौ यशसा यशसौ 'यशस्' शब्दादकारो मत्वर्थीयश्छान्दसः, यशस्विनौ व्यन्ता व्यन्तौ प्रजनयन्तौ "वी गतिव्याप्तिप्रजनन...." ( अदादि० ) पान्ता पान्तौ परस्परं

गृहस्थधर्मं पालयन्तौ "पा रक्षणे" ( अदादि० ) युवां मित्रावरुणभूतौ "अतं मे मित्रावरुणा हवेम" ( ६ ) "स्तुषे सा वां वरुणमित्र" ( ७ ) "जनो यो मित्रावरुणा०" ( ९ ) रथो वां मित्रावरुणा" ( १५ ) श्वेतनायै-श्वेत्यायै श्वेत्या विद्युत् "श्वित्रो रक्षिता वर्षमिषवः" ( अथर्व० ३ । २७ । ६ ) मित्रावरुणौ विद्युतो धारे शक्ती ताभ्यां विद्युत् प्रकाशते । विद्युदिव या स्त्रीपुरुषयोर्योगाद् दीप्यते जीवनज्योतीरूपा कान्तिस्तस्यै हुवध्यै होतुं याजयितुमुद्यतोऽस्मि "हु दानादनयोः-आदाने च" ( जुहोत्या० ) ततः कध्यै प्रत्ययस्तुमर्थे छान्दसः "तुमर्थे सेसेन···कध्यै····" ( अष्टा० ३ । ४ । ९ ) वः-यूयमन्ये मदधीने-ऋत्विजो यूयम् "सुपां सुपो भवन्तीति" वार्त्तिकसूत्रेण सुपो व्यत्ययः । अपां नपातम्, अद्भ्य ओषधिवनस्पतयो जायन्ते-ओषधिवनस्पतिभ्योऽग्निर्जायते तस्मादपां नपात्-अग्निस्तं प्रकृणुध्वं मया सह मन्त्रविधिना सम्पादयत जुहुत तथा 'रास्पिनस्य-आयोर्मातरा प्र-कृणुध्वम्, रास्पिनस्य यो रास्पवान् शब्दवान् तथा रास्पवान्-आस्वादस्नेहवान्-आयुर्मनुष्यः "आयुर्मनुष्यनाम" (निघं० २।३) यो मनुष्यः शब्दवान् हि नान्यत् किञ्चित् कर्तुं समर्थः शब्दमेव करोति, यः-आस्वादवान् हि-आस्वादयति केवलं न तूपार्जयति यः स्नेहवानेन स्नेहमेव करोति कारयति च स शिशुर्भवति तस्यायोः शिशोः-मातरा मातरौ मातृभूतौ निर्मातारौ अर्थयितारौ मित्रावरुणाविव स्त्रीपुरुषौ यज्ञे यजमानौ प्रकृणुध्वं सम्पादयत । इत्याधिभौतिकदृष्ट्या व्याख्या ।

आधिदैविकदृष्ट्या—अहमौशिजो मेधाविनां विदुषामग्रगण्यो विद्युद्विद्यावित्-मित्रावरुणौ विद्युद्धारे शुष्कार्द्रे जुहोमि-आददे योजयामि श्वेत्यायै श्वित्रायै विद्युते तत्प्रकाशाय तत्प्राप्तये वा योऽपां न पातयति स्वस्मात् पृथगपो न करोति न त्यजति सोऽग्निरप्सु विद्यते तमपां नपातं यूयं शिल्पिनो निःसारयत, अथा-अन्तरिक्षे मित्रावरुणयोर्योगतो विद्युत् प्रकाशते तथैव मित्रावरुणौ रास्पिनस्य शब्दवतो गर्जनशब्दवतः-आस्वादस्नेहवतः-आयोर्गमनशीलस्य पृथिवीम्प्रति गति-शीलस्योदकस्य "छन्दसीणः" ( उणा० १ । २ ) इण् धातोः-उण्प्रत्ययः । तस्योदकस्य मातरौ निर्मातारौ भवतः । इति विद्युद्विज्ञानं वृष्टिविज्ञानम् ॥

ऋञ्जतिः ॥ ९१ ॥

ऋञ्जतिः प्रसाधनकर्मा ।

"आ व ऋञ्जसे ऊर्जां व्युष्टिषु" (ऋ० १० । ७६ । १)

इत्यपि निगमो भवति ॥

भा०—वक्तव्यम्—'ऋञ्जतिः प्रसाधनकर्मा' इत्यस्य विषये दुर्गाचार्यभाष्ये तथा स्कन्दस्वामिभाष्ये लिखितं यत् "भा ऋजीकः—इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो [ निरुक्तकारः ] निगमं नाधीते" (दुर्गः) "निगमो नाध्यगीष्ट" ( स्कन्दः )। एवं प्रतीयते यो हस्तलेखो दुर्गाचार्यपार्श्वे यद्वा स्कन्दस्वामिसन्निधावासीत् तत्र मन्त्रो न भवेत्—लिपिकारस्य प्रमादतः 'भा ऋजीकः' शब्दे ऋञ्जतिः क्रिया न साक्षाद् वर्तते यत्र साक्षाद् वर्तेत तेनोदाहरणेन भवितव्यम्। "आ व ऋञ्जसे....." इति निगमं दत्त्वा, इत्यपि निगमो भवति। एवमत्रैतेन निगमेनावश्यं भवितव्यम्। पुनश्च 'भा ऋजीकः प्रसिद्धभाः' इत्युक्तं परन्त्वत्रानेकार्थप्रसङ्गः, 'भाऋजीकः' नात्रोदाहरणं भवितुमर्हति तस्यैकार्थनिश्चयात्।

'ऋञ्जतिः' इत्यनवगतम्। अर्थदृष्ट्या, न तु स्वरूपदृष्ट्या, "ऋजि भर्जने" ( भ्वादि० ) तस्य 'ऋञ्जति' प्रयोगो भवति। अत्रानेकार्थप्रसङ्गत्वात्—उदाहृते मन्त्रेऽनवगतः प्रसाधनमर्थः, तथावगतो भर्जनार्थश्च मन्तव्यः। पूर्वं पृथक् पृथगर्थको मन्त्रः प्रदर्श्यते।

ऋजि—ऋञ्जतिः—भर्जनार्थः—

आरे सा वः सुदानवो मरुत ऋञ्जती शरुः।
आरे अश्मा यमस्यथ ॥ ( ऋ० १ । १७२ । २ )

हे सुदानवः—सुखण्डयितारो मरुतः सैनिका वो युष्माकं सा ऋञ्जती भर्जमाना शरुर्हिंसिका—ऋष्टिः—आरे दूरे भवतु। अश्मा वज्रं दूरे क्षिपथ।

अग्निर्जम्भैस्तिगितैरत्ति भर्वति योधो न शत्रून्त्स वना न्यृञ्जते ॥
( ऋ० १ । १४३ । ५ )

अग्निर्वनानि न्यृञ्जते भर्जते दहति।

ऋञ्जतिः प्रसाधनकर्मा—

अग्ने नेमिरराँ इव देवाँस्त्वं परिभूरसि।
आ राधश्चित्रमृञ्जसे ॥ ( ऋ० ५ । १३ । ६ )

हे अग्ने! त्वम्—अरान् प्रति नेमिरिव देवान् प्रति परिभूः परिभविताऽसि, त्वमस्मभ्यं चित्रं राधो धनमासमन्ताद्दञ्जसे प्रसाध्नोषि।

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्।
यजिष्ठमृञ्जसे गिरा ॥ ( ऋ० ४ । ८ । १ )

दूतं दोषस्य दूरीकर्तारं गुणानां प्रेरकं विश्ववेदसं सकलैश्वर्यवन्तं सर्वज्ञं हव्य-

वाहस्यात्मभावस्योपासनस्य मोक्षयाचनस्य वोढारम्—अमर्त्यममरदेवमतिशयेनाऽध्यात्मयज्ञस्य कर्तारमृत्विजमग्निं परमात्मानं गिरा स्तुत्याऽहमृञ्जसे प्रसाध्नोमि ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन् ऋञ्जतिरनेकार्थकः—

आ वं ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन ।

उभे यथा नो अहनी सचा भुवा सदःसदो वरिवस्यात उद्भिदा ॥

देवता ग्रावाणः—हे ग्रावाणः प्राणाः ! "प्राणा वै ग्रावाणः" ( शत० १४ । २ । २ । ३३ ) वो युष्मान्—ऊर्जा व्युष्टिषु शरीरात्ममनोबलानां विवासनवेलासु विकासवेलासु प्रातर्वेलासु "ऊर्ज बलप्राणनयोः" (चुरादि०) "वस आच्छादने" ( अदादि० ) विपूर्वात् क्तिन् । आसमन्तादृञ्जसे प्रसाध्नोमि योग्यान् करोमि प्राणायामाभ्यासेन, यद्वा—ऊर्जां प्राणनक्रमाणां "ऊर्ज बलप्राणनयोः" व्युष्टिषु विशिष्टोष्णत्वस्य कर्त्रीषु—उषोवेलासु । विपूर्वात् "उष दाहे" ( भ्वादि० ) ततः क्तिन् । प्राणायामाभ्यासेन—आसमन्तादृञ्जसे भर्जयामि तेजस्विनः सम्पादयामि "भ्रस्ज भर्जने" ( भ्वादि० ) अतो यूयमिन्द्रमैश्वर्यवन्तं परमात्मानं मरुतः—ऋत्विजो विदुषः "मरुतः—ऋत्विजः" ( निघं० ३ । १८ ) रोदसी द्यावापृथिव्यौ "रोदसी द्यावापृथिव्यौ" ( निघं० ३ । ३० ) द्यावापृथिव्यौ—मातापितरौ "द्यौर्मे पिता···माता पृथिवी महीयम्" ( ऋ० १ । १६४ । ३३ ) अनक्तन—अनक्त कामयध्वं यथायोग्यं सेवध्वम् "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रुधादि० ) ततः 'त' स्थाने 'तनप्' "तप्तनप्तनथनाश्च" ( अष्टा० ७ । १ । ४५ ) परमात्मनः उपासनां विदुषां सत्कर्तारं मातापित्रोः सेवां कुरुत । यथा च नोऽस्माकमुभे अहनी अहर्निशे अहोरात्रे—रात्रिदिवसौ सचाभुवौ जन्मतः सहयोगिनौ सदः सदः प्रत्येकस्मिन् जीवनसदने जीवनस्थाने जीवनमार्गे वा—उद्भिदा—उत्थानेन—उत्थानकरणधर्मेण वरिवस्यतः—अनुतिष्ठतः—आनुकूल्यमाचरतः ॥

ऋजुनीती ॥ ९२ ॥

ऋजुरित्यप्यस्य भवति ।

"ऋजुनीती नो वरुणः" ( ऋ० १ । ९० । १ )

इत्यपि निगमो भवति ॥

भा०—'ऋजुनीती' इत्यनवगतम् । कथमनवगतं नीतिशब्दोऽप्यवगतः 'ऋजुः' अप्यवगतः "ऋज गतिस्थानार्जनोपार्जनेषु" ( भ्वादि० ) तन्नवः । इदमेवात्र वैशिष्ट्यं यत् 'ऋजुनीती' इति पदे 'ऋजुः' अपि पूर्वप्रसक्तः—'ऋञ्जतिः' इत्यस्य ऋञ्जतेः प्रसिद्धिकर्मणो रूपम् 'ऋजुः' इति तस्मात् 'प्रसिद्धनीती' इत्यवगमः ।

समग्रमन्त्रस्तदर्थश्च—

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।

अर्यमा देवैः सजोषाः ॥

वरुणः क्षत्रियः "क्षत्रं वै वरुणः" ( शत० २ । ५ । २ । ६ ) मित्रः—ब्राह्मणः "ब्रह्म हि मित्रः" ( शत० ४ । १ । ४ । १०० ) अर्यमा वैश्यः "अर्यमेति तमाहुर्यो ददाति" ( तै० १ । १ । २ । ४ ) वैश्यो दानमन्नादिदानं करोति । विद्वान्—प्रत्येकं विद्वान्, क्षत्रियो विद्वान् ब्राह्मणो विद्वान् वैश्यो विद्वान् देवैः—अन्यैर्ब्राह्मणक्षत्रियवैश्येभ्यो भिन्नैः शूद्रैर्देवैर्विद्वद्भिः सह "विद्वांसो हि देवाः" ( शत० ३ । ७ । ३ । १० ) सजोषाः समानप्रीतियुक्तः सन् नोऽस्मान् प्रजाजनान् ऋजुनीती प्रसिद्धनीत्या "सुपां सुलुक्–पूर्वसवर्णा०" ( अष्टा० ७ । १ । ३९ ) पूर्वसवर्णादेशः । नयतु सुखाय गमयतु । प्रजाशासनाय राष्ट्रशासनाय चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां ये विद्वांसः स्युस्ते राजसभायां प्रतिनिधिरूपाः स्युस्ते सर्वेषां वर्णानां हितं यथावत् साध्नुवन्ति ॥

प्रतद्वसू ॥ ९३ ॥

प्रतद्वसू प्राप्तवसू ।

"हरी इन्द्र प्रतद्वसू अभि स्वर" (ऋ० ८ । १३ । २७)

इत्यपि निगमो भवति ॥ २१ ॥

भा०—'प्रतद्वसू' इत्यनवगतम् । 'प्राप्तवसू' इत्यवगमः । विशेषणपदम्—अभिधेयौ हरी । प्राप्तानि वसूनि याभ्यां तौ प्रतद्वसू । 'प्राप्त' शब्दस्य 'प्रा' इत्यस्य ह्रस्वत्वम् 'प्त' इत्यस्य पकारलोपोऽन्ते तकारोपजनः, एवं 'प्रतत्' जातः ।

समग्रमन्त्रस्तदर्थश्च—

इह त्या सधमाद्या युजानः सोमपीतये ।

हरी इन्द्र प्रतद्वसू अभि स्वर ॥

हे इन्द्र ! हे राजन् ! त्या तौ सधमाद्यौ सह मादयितव्यौ हर्षयितव्यौ प्रतद्वसू प्राप्तानि वसूनि धनानि याभ्यां भवन्ति यौ तवार्थं वसूनि प्रापयतस्तौ यौ हरी वसूनामुपहारव्यवहारौ कुरुत इति तच्छीलौ सभाध्यक्षसेनाध्यक्षौ ताभ्यां युजानो योगं सम्बन्धं प्राप्नुवन्–इह प्रजाभिः समारब्धे यज्ञे सम्मेलने ताभिश्चामन्त्रितस्त्वं सोमपीतये–आनन्दशान्तिप्रदस्य सोमस्य पानाय–अभिस्वर–अभिगच्छ गत्वा तत्र प्रजानामभिप्रायं शृणु पूरय च ॥

हिनोत ॥ ९४ ॥

"हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्। ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥" ( ऋ० १० । ३० । ११ )

प्रहिणुत नोऽध्वरं देवयज्यायै । प्रहिणुत ब्रह्म धनस्य सवनाय । ऋतस्य योगे यज्ञस्य योगे याज्ञे शकट इति वा। शकटं शकृदितं भवति शनकैस्तकतीति वा, शब्देन तकतीति वा । "श्रुष्टीवरीर्भूतनास्मभ्यमापः ।" सुखवत्यो भवतास्मभ्यमापः ॥

भा०—'हिनोत' इत्यनवगतं क्रियापदम् । 'प्रहिणुत' इत्यवगमः । "हि गतौ वृद्धौ च" ( स्वादि० ) ततो लोटि थस्य 'त' "छन्दस्युभयथा" ( अष्टा० ३ । ४ । ११७ ) इत्यार्धधातुकत्वात्–ङित्त्वाभावे गुणः । अत्र यास्कोदाहृते मन्त्रेऽयं प्रयोगो द्व्यर्थकोऽनेकार्थप्रसङ्गत्वात्, गतौ च वृद्धौ च । प्रथमं पृथक् पृथगर्थको मन्त्रः प्रदर्श्यतेऽस्माभिः ।

गत्यर्थे हिनोत—

तं सोतारो धनस्पृतमाशुं वाजाय यातवे ।

हरिं हिनोत वाजिनम् ॥ ( ऋ० ९ । ६२ । १८ )

हे सोतारः प्रेरयितारो जनाः ! तं धनस्पृतं धनानां सेवयितारं प्रापयितारम् "स्पृ प्रीतिसेवनयोः" ( स्वादि० ) आशुमध्वानं व्याप्नुवन्तं हरिं प्रसह्यकारिणं शत्रोरूपर्याक्रमणकारिणं वाजिनमश्वम् "वाजी अश्वनाम" ( निघं० १ । १४ ) वाजाय संग्रामाय "वाजे संग्रामनाम" ( निघं० २ । १७ ) यातवे यातुं हिनोत गमयत तमारुह्य चालयत 'यातवे' या धातोस्तुमर्थे 'तवेन्' प्रत्ययः "तुमर्थे सेसेन····तवेन" ( अष्टा० ३ । ४ । ९ )।

वृद्ध्यर्थे हिनोत—

यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ।

( ऋ० २ । १४ । ४ )

य इन्द्रो विद्युद्देवोऽर्बुदं मेघम् "अर्बुदो मेघो भवति" ( निरु० ३ । १० ) मेघं नीचा नीचैः कर्तुमवबबाधेऽवबाधतेऽवपीडयति तमिन्द्रं सोमस्य भृथे–भृथेन भरणेन समर्पणेन सोमं पाययित्वा हिनोत वर्धयत "हिनोत वर्धयत" (सायणः)।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन् द्व्यर्थको 'हिनोत' शब्दः—

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।

ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥

हे ऋत्विजः ! देवयज्यायै—देवा इज्यन्ते यस्यां तस्यै देवेयज्यायै—देवेष्ट्यै देवाः—चेतनदेवा विद्वांसः, जडदेवाः सूर्यादयः—इन्द्रियाणि वेज्यन्ते तृप्यन्ते यस्यां तस्यै—अध्वरं यज्ञं हिनोत प्रहिणुत—प्रगमयत—इत्यभ्युदयार्थम् । अथ च धनानां सनये—धनस्य सननाय—ऐश्वर्यस्य मोक्षैश्वर्यस्य सम्भजनाय ब्रह्म—स्तवनं हिनोत प्रहिणुत, प्रवर्धयत—इति निःश्रेयसार्थम् । अथ ऋतस्य योगे—यज्ञस्य योगे प्रयोगेऽनुष्ठानावसरे यज्ञस्य शकटे याज्ञे यज्ञसम्बन्धिनि शकटे वा प्रगच्छति प्रचलिते रथेऽस्मभ्यं हे आपः ! श्रुष्टीवरीः सुखवत्यः सन्तानसुखवत्य आपः—देव्यः "देव्यो ह्यापः" ( शत० १ । १ । ३ । ७ ) यद्वा कामाः "आपो वै सर्वे कामाः" ( शत० १० । ५ । ४ । १५ ) भूतन भवत, अत एव प्रचलति गृहस्थ-शकटे गृहस्थरथे—ऊधः—विष्यध्वं गोरूध इव रेतोरजःस्थानं स्नावयत ॥

निरुक्तयः—शकटं शकृत्—ऋषभपुरीषं तेन शकृता—इतं सङ्गतं लिप्तं भवति । शनकैः—तकति—गच्छति शकटः, शब्देन तकति शकटः पृषोदरादित्वाद् रूपसिद्धिः ।

चोष्कूयमाणः ॥ ९५ ॥ चोष्कूयते ॥ ९६ ॥

"चोष्कूयमाण इन्द्र भूरि वामम्" (ऋ० १ । ३३ । ३)

ददिन्द्र बहु वननीयम् ।

"एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्" ( ऋ० ६ । ४७ । १६ )

व्युदस्यत्येधमानानहृद्वेष्ट्यसुन्वतः सुन्वन्तोऽभ्यादधात्युभयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति । चोष्कूयतेश्चर्करीतवृत्तम् ॥

भा०—'चोष्कूयमाणः' 'चोष्कूयते' इत्येतेऽनवगते । 'चोष्कूयमाणः' इत्यस्य 'ददत्' अवगमः । 'चोष्कूयते' इत्यस्य 'व्युदस्यति' अवगमः । धातोरन्यार्थस्य अत्रानवगतत्वम् । यतः "स्कुञ् आप्रवणे" ( क्र्यादि० ) इत्यस्यै वर्तमानत्वात् । 'चोष्कूयमाणः' शानचि यङन्तः प्रयोगः । 'चोष्कूयते' यङन्तो लटि प्रयोगः । एवमनेकार्थो यङन्तः ।

'चोष्कूयमाण' इति समग्रमन्त्रस्तदर्थश्च—

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।

चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्धः ॥

इन्द्रः सर्वसेनः सर्वप्रकाराः सेनाः—यस्य तथाभूतः—इषुधीन् तूणान् निषक्तान् न्यषक्त न्यबध्नात्—निबध्नाति शत्रून् ताडयितुं राष्ट्रियभूभागांश्च रक्षति यथाऽर्यो वैश्यो गाः समजति संरक्षति यस्य यस्मै वष्टि प्रदातुं प्रतीकारेणाऽप्रतीकारेण वा तस्मै ददाति च । अथ प्रत्यक्षोक्त्या—सोऽस्माकमिन्द्र राजन्! त्वं प्रवृद्धः सन् भूरि वामं बहु वननीयं भूभागं चोष्कूयमाणो ददत् प्रयच्छन् भव, पणिर्वैश्यो मा भवास्मद्विषये वैश्य इव प्रतीकारं नेच्छ—उदारभावेन प्रयच्छ । वयं ते प्रजाः पालनीयाः स्मः ॥

'एधमानद्विळुभयस्य राजा चोष्कूयते' इति समग्रमन्त्रस्तदर्थश्च—

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।

एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥

वीरः—इन्द्रो राजाऽयं शृण्वे श्रूयते, व्यत्ययेन प्रथमपुरुषस्य स्थाने—उत्तम-पुरुषः । उग्रमुग्रं बलिनं बलिनं शत्रुं दमायन् दमयितुमिच्छन्, अन्यमन्यं भिन्न-भिन्नमतिनेनीयमानः पुनः पुनर्विशेषेण न्यायव्यवस्थायां नयमानो व्युदस्यति एधमानान्—असुन्वतो यज्ञध्यानमकुर्वाणान् प्रत्यहं द्वेष्टि । अथ सुन्वतो यज्ञ-ध्यानोपासनानि कुर्वतोऽभ्यादधाति स्वाभिमुखं नयति सुखप्रदानाय । स उभयस्य दिव्यस्य पार्थिवस्य धनस्य राजा सूर्य इवोभयस्य प्रजाजनस्य राजा विशः—प्रजाः, अथ मनुष्यान् राजपुरुषान्—एवं चोष्कूयते—व्युदस्यति—कांश्चिद् द्वेष्टि कांश्चित्—अभ्यादधाति—इति पृथक् पृथक् निश्चित्य दण्डयति पुरस्कुरुते च ॥

सुमत् ॥ १७ ॥

सुमत् स्वयमित्यर्थः ।

"उप प्रागात् सुमन्मे धायि मन्म" ( ऋ० १।१६२।७ )

उपप्रतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेनेत्याश्वमेधिको मन्त्रः ॥

भा०—'सुमत्' इत्यनवगतम् । 'स्वयम्' इत्यवगमः । इति त्वनवगतपक्षे, अनेकार्थसम्दर्भत्वात्तस्यावगतार्थेनापि भवितव्यमत्रैव मन्त्रे योऽयं मन्त्रो यास्केनो-दाहृतः । स च 'सु—मत्'—सुमन्तव्यः शोभनः सुमन्ता वा, यद्वा सुमादयति हर्षयति स सुमत्—सुहर्षकरः । प्रथमं पृथक् पृथगर्थको मन्त्रोऽस्माभिः प्रदर्श्यते ।

सुमत्—सुहर्षकरः—

तदिन्मे॑ छन्त्सद्वपु॑षो वपु॑ष्टरं पु॒त्रो यज्जा॑नं पि॒त्रोर॒धीय॑ति ।

जा॒या पतिं॑ वहति व॒ग्नुना॑ सु॒मत्पुं॒स इद्भ॒द्रो व॑ह॒तुः परि॑ष्कृतः ॥

( ऋ० १० । ३२ । ३ )

"वपुः—रूपनाम" ( निघं० ३ । ७ ) वपुषो रूपवतः—वपुष्टरं रूपवत्तरम्, अत्र मतुब्लोपश्छान्दसः । अत्यन्तरूपवन्तं पुत्रं तं खलु मे मह्यमिन्द्रः परमात्मा छन्त्सत् कामयेत—इच्छेत् "छन्त्सत् कान्तिकर्मा" ( निघं० २ । ६ ) यतः पुत्रः पित्रोः—मातापित्रोः—जानं जन्म—अधीयति—अधिगच्छति प्राप्नोति, "आत्मा वै पुत्रनामासि" ( निरु० ३ । ४ ) इत्युक्तं यथा । पुत्रार्थं जाया पत्नी पतिं वग्नुना वाचा "वग्नुः—वाङ्नाम" ( निघं० १ । ११ ) वहति स्वसमीपं प्रापयति, परिष्कृतः शुद्धो भद्रो भजनीयः पुंसः सुमत्, पत्युः सुमत्—सुहर्षकरः कामः शुक्रोऽवश्यं वहतुः—प्रापणीयः प्राप्तो भवेत् । "सुमत् कल्याणम्" (सायणः) ॥

सुमत्—सुमन्तव्यम्—

पिब॑तं॒ सोमं॒ मधु॑मन्तमश्विना ब॒र्हिः सी॑दतं सु॒मत् । ( ऋ० ८ । ८७ । ४ )

मधुमन्तं सोमं पिबतं सुमत् सुमन्तव्यं बर्हिरासनं सीदतम् ।

सुमत्—स्वयम्—

क्षेत्रा॑दपश्यं सनु॒तश्चर॑न्तं सु॒मद्यू॒थं न पु॒रु शोभ॑मानम् । ( ऋ० ५।२।४ )

घने वने यूथमिव शोभमानं क्षेत्रात् क्षेत्रे सनुतः—अन्तर्हितं चरन्तमहं सुमत् स्वयमपश्यम् ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन् 'सुमत्' शब्दोऽनेकार्थकः—

उप॒ प्रागा॑त्सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः ।

अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धु॑म् ॥

मे मन्म—अधायि मम मन्म मनो यमधायि—अध्यायि ध्यायति कर्तरि कर्मप्रयोगो व्यत्ययेन, स सुमत् स्वयमुपप्रैतु राज्यप्राप्तौ स्वयं स्वेच्छया—उपगच्छति राजकुमारोऽतः—उपगतो भवतु वीतपृष्ठो यज्ञोपवीतपृष्ठो दीक्षितो राजकुमारः । यद्वा मम मन्म मनसा—अधायि धृतः—ध्रियते स सुमत्—यः सुष्ठु मतवान् ज्ञातवान् वेदादिशास्त्राणि गुरुकुलेऽधीत्य स स्नातकः—उपप्रैतु—उपगतो भवतु वीतपृष्ठो यज्ञोपवीतपृष्ठो दीक्षितः । यद्वा मम मया मन्म मनसि—अधायि धारितः सङ्कल्पितः सुमत्—सुहर्षकरः पुत्रः—उपप्रागात् उपप्राप्तः—साक्षात् प्राप्तो वीतपृष्ठः—उपवीतो यज्ञोपवीतः पृष्ठे यस्यास्ति । स पुत्रो राजकुमारः स्नातकः

दीक्षायज्ञेन राजसूयेन राज्याभिषेकेण च देवानामाशाः पूरयितुमुपप्रागात्—उपगतः । एनमनु विप्रा विद्वांसः—ऋषयो मदन्ति हर्षन्ति—आनन्दयन्ति—एतमनुमदन्ति—अनुहर्षन्ति हर्षध्वनिना प्रसीदन्ति । देवानां पुष्टे सुबन्धुं चक्रम—वयमृत्विजः सम्बन्धिनो वा—एतं राजकुमारं जातकं नवजातपुत्रं वा देवानां विदुषां पुष्टे पोषणे प्राप्ते सुबन्धुं सर्वेषामुत्तमबन्धुं कुर्याम सम्पादयेम ॥

दिविष्टिषु ॥ ९८ ॥

दिविष्टिषु दिव एषणेषु * ।

"स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु" ( ऋ० ८ । ४ । १९ ) स्थूरः समाश्रितमात्रो महान् भवत्यणुरनुस्थवीयांसमुपसर्गो लुप्तनामकरणो यथा सम्प्रति । कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा । कुरुः कृन्ततेः । क्रूरमित्यप्यस्य भवति । कुलं कुष्णातेर्विकुषितं भवति ।

भा०—'दिविष्टिषु' इत्यनवगतमनेकार्थं च । 'दिव एषणेषु' इत्यवगमो व्युत्पत्तिरूपः । "इष गतौ" ( दिवादि० ) यद्वा "इषु इच्छायाम्" ( तुदादि० ) ततः क्तिन् प्रत्ययः—इष्टिः । दिवः—इष्टिः प्राप्तिर्याभिः क्रियाभिस्ताः—दिविष्टयः—क्रियाः स्तुतयो वा तासु दिविष्टिषु । दिवः—इष्टिः प्राप्तिर्येषु ते दिविष्टयो यज्ञाः । दिवः सूर्यस्येष्टिः प्राप्तिर्येषु ते दिवसाः—दिविष्टयः, दिवि—आकाशे—इष्टिर्गतिर्यैस्ते मार्गाः—दिविष्टयः । यद्वा दिवः—इष्टिरिच्छा येषु यज्ञेषु ते दिविष्टयस्तेषु दिविष्टिषु, इति बहुव्रीहिसमासः 'दिव्' इत्यस्य 'दिव उत्' ( अष्टा० ६ । १ । १३१ ) वकारस्य स्थाने—उकारेण भवितव्यम्, यथा 'द्युकामः ।' 'दिविष्टिषु' न तथा जातः, तस्मादनवगतत्वमत्रेदम् । यास्कोदाहृतेऽस्मिन् मन्त्रे सर्वेऽर्थाः संविशन्ते तस्यानेकार्थप्रदर्शनार्थत्वात् । प्रथमं पृथक् पृथगर्थकाः—मन्त्राः प्रदर्श्यन्ते ।

दिविष्टिषु—दिवसेषु—

उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।

आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥ (ऋ० १।४८।९)

दिवः सूर्यस्य दुहितः—उषः ! त्वं चन्द्रेणाह्लादकरेण भानुना प्रकाशेन आ भाहि—आभासं मृदुप्रकाशं कुरु, अस्मभ्यं बहु सौभगमावहन्ती प्रापयन्ती दिविष्टिषु—दिवः सूर्यस्येष्टिः प्राप्तिर्येषु तेषु दिवसेषु व्युच्छन्ती तमोऽपाकृत्य प्रकटीभवन्ती ।

---

* स्कन्दस्वामिभाष्ये 'दिव एषणीषु' पाठः ।

दिविष्टिषु—मार्गेषु—

अचेति दस्रा व्युनाकमृण्वथो युञ्जते वां रथयुजो ।

दिविष्टिष्वध्वस्मानो दिविष्टिषु । ( ऋ० १ । १३९ । ४ )

हे दस्रा ! अश्विनौ ! अचेति ज्ञायते यत्—युवां नाकमाकाशमृण्वथो गच्छथः, रथयुजः—विमानादियानानां योजयितारः शिल्पिनो रथिनो रथमध्वंसमाना युवां दिविष्टिषु—दिवि—आकाशे—इष्टिर्गतिर्गमनं यैस्तेषु व्योमयानेषु व्योममार्गेषु वा युञ्जते ।

दिविष्टिषु—यज्ञेषु—

स सद्म परिणीयते होता मन्द्रो दिविष्टिषु । ( ऋ० ४ । ९ । ३ )

सोऽग्निः सद्म यज्ञगृहं परिणीयते पुनः स दिविष्टिषु—दिवि—आकाशे गति-र्हव्यानां यैर्भवति तेषु यज्ञेषु ज्वलितः सन् मन्द्रो हर्षयिता होता भवति ।

दिविष्टिषु—क्रियासु—

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।

श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥ ( ऋ० १ । ४५ । ७ )

त्वां वसुवित्तममतिशयेन धनस्य लम्भयितारमृत्विजं श्रुत्कर्णं सप्रथस्तमं प्रख्याततममग्निं विप्रा विद्वांसो दिविष्टिषु दिवः—दिव्यस्य सुखस्य गतिः प्राप्तिर्यासु तासु क्रियासु कलाक्रियासु तासु निदधिरे ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन् 'दिविष्टिषु' अनेकार्थकः शब्दोऽस्ति ।

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।

राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥

त्वेषस्य दीप्यमानस्य तेजस्विनः सुभगस्य सुधनस्य शोभनैश्वर्यस्य कुरुङ्गस्य कुरून्—ऋत्विजः प्रति गतस्य राजसूयार्थम् "कुरवः—ऋत्विजः" (निघं० ३।१८) यद्वा राज्याभिषेकपदार्थं राजकुलं गतस्य राज्ञः "राजसूयेनेष्ट्वा राजेति नामाधत्त" ( गो० पू० ५ । ८ ) "राजा वै राजसूयेन भवति" ( शत० ५ । १ । १ । १२ ) दिविष्टिषु दिवः—दिव्यसुखस्य—इष्टिरिच्छा याभिः पूर्यते ताः प्रजापालनक्रियाः—दिविष्टयस्तासु दिविष्टिषु तत्रत्यासु रातिषु दानविधासु यद्वा—दिवः—अमृतलोकस्य—इष्टिः प्राप्तिर्यैस्ते ज्ञानाध्यात्मयज्ञास्तेषु दिविष्टिषु या रातयो ज्ञानानन्दप्रसादा-त्मिकास्तासु प्राप्तासु वयं तुर्वशेषु मनुष्येषु "तुर्वशाः—मनुष्याः" ( निघं० २।३ )

स्थूरं स्थूलम्, 'रलयोरभेदात्' स्थवीयसां स्थायि महत् पूर्णं शताश्वमसंख्याताश्व-तुल्यं राधो धनममन्महि प्रशंसामः । राजसूययज्ञप्रसङ्गे राज्ञा बहुदानं कर्तव्यं प्रजापालनाय व्रतं च धारणीयम् ।

अथाधिदैविकदृष्ट्या—

त्वेषस्य दीप्तस्य दीपनशीलस्य सर्वेषां दीपयितुश्च—इन्द्रस्य—सूर्यस्य सुभगस्य सम्यग् यज्ञसम्पादकस्य "यज्ञो भगः" ( शत० ६ । ३ । १ । १९ ) कुरुङ्गस्य यज्ञे कुरून्—ऋत्विजः प्रति प्राप्तस्य "कुरवः—ऋत्विजः" ( निघं० ३ । १८ ) "आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमं नो भागधेयं जुषस्व" ( ऋ० खिल० ७ । ५५ । ८ ) "कुरुक्षेत्रं देवानां देवयजनम्" ( शत० १४ । १ । १ । २ ) कुलं स्वकुलं सौरपरिवारं गतस्य प्राप्तस्य राज्ञः खगोलस्य स्वामिनः सूर्यस्य दिविष्टिषु दिवसेषु या रातयो दानप्रवृत्तयः प्रकाशतापप्रेरणास्तासु प्राप्तासु यद्वा दिवः—आकाशस्येष्टिर्गमनं तत्र गमनं यैर्भवति तानि व्योमयानानि विमानानि तेषु या रातयो रश्मिदानशक्तयो याभिर्विमानमाकाशे गच्छति तासु प्राप्तासु वयं तुर्वशेषु मनुष्येषु स्थूरं स्थूलं स्थविष्ठं महत्—शताश्वमसंख्यातरश्मिसमूहं राधो धनं मन्यामहे घोषयामः । सूर्यस्य प्रकाशतापप्रेरणैर्लौककर्माणि साध्यानि तथा रश्मिभिराकाशे विमानानि च चालनीयानि ।

निरुक्तयः—स्थूरः समाश्रितमात्रः—समाः सर्वाः—मात्राः—भक्तयोऽवयव-रूपाः—आश्रिताः—यस्मिन् स पूर्णो महान् स्थूरः स्थूल इत्यर्थप्रदर्शनम् । स्थूल-प्रसङ्गेन 'अणु'शब्दो निरुच्यते स्थवीयांसमनु 'अनु' उपसर्गः पश्चादर्थे पूर्ववर्तिन-मपेक्षते सः—अनु सन् णत्वेन—'अणु' उच्यते । उपसर्गः सन् नामवाचको लुप्त-नामप्रत्ययः । यथा 'सम्प्रति' उपसर्गद्वयं लुप्तनामप्रत्ययं 'साम्प्रतम्' इत्यस्मि-न्नर्थे प्रयुज्यते तथा—अनु पश्चाद्भवः—भवार्थेऽण् तस्य लोपे 'अनु—अणु ।' कुरुः कृन्ततेः कृन्तति छिनत्ति दोषान् शत्रून् वा कुरुः । "कृती छेदने" ( तुदादि० ) ततो लुप्ततकारात् "कृग्रोरुच्च कुः" ( उणा० १ । २४ ) अस्य धातोः क्रूरमपि भवति "कृतेश्छः क्रू च—रक्" ( उणा० २ । २१ ) कुलं कुष्णातेः "कुष निष्कर्षे" ( क्र्यादि० ) ततः डुलच् प्रत्ययः—औणादिकः । स्वस्माद् दूरं निःसृतं भवति ।

वक्तव्यम्—"कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा" इति यास्क-वचने 'बभूव' क्रियां दृष्ट्वा वेदे कस्यचिल्लोके समुत्पन्नस्य राज्ञः कल्पना न कार्या नहि यास्को वेदेष्वितिहासं मन्यते । अपितु निर्वचनात् कुरुङ्गं परिचाय-यति यत्—कुरुगमनात्—राजसूययज्ञे कुरून्—ऋत्विजो यदा प्राप्नोति शासनपदम्-

वाप्य कुलं राजकुलं गतो भवति वा तदा स 'कुरुङ्गः' इति नामतः प्रसिद्धो भवति। 'बभूव' इति क्रिया सामान्यकाले वर्तते तस्या निर्वचनप्रसङ्गत्वात्, यथाऽन्यत्र "ऋषिः कुत्सो भवति कर्ता स्तोमानाम्" ( निरु० ३ । ११ ) "नोधा ऋषिर्भवति नवनं दधाति" ( निरु० ४ । १६ ) "च्यवन ऋषिर्भवति" च्यावयिता स्तोमानाम्" ( निरु० ४ । १९ ) कस्यापि वस्तुनो लक्षणे कालप्रयोगः सामान्यो भवति, यथा "आलस्यं मानसं बुद्धिनाशनं परमं मतम्" ( हितोक्तिः ) 'मतम्' इति प्रयोगो 'मतं मन्यते मंस्यते' इति सामान्यकाले प्रयुक्तः। तथा ऋग्वेदीय-सर्वानुक्रमण्यामस्य सूक्तस्य देवता 'इन्द्रः' अर्थात्—राजा स एव कुरुगमनात् कुल-गमनात् 'कुरुङ्गः' उक्तो मन्त्रे तस्माच्च कश्चनैतिहासिकः। इतिहासपक्षे निर्वचनस्य नैरर्थक्यमस्ति नहि पञ्चमी विभक्त्या हेतुप्रदर्शनं तत्र युज्यते। कश्चनैतिहासिको राजा बाल्यादन्यनामाऽऽसीत् कुरुगमनात् कुलगमनात् स 'कुरुङ्गः' इति नामतः प्रसिद्धो बभूव। इत्यत्र न क्षतिः। न च स वेदमन्त्रेऽभिप्लुतः। 'बभूव' इत्यस्य व्याख्या दुर्गाचार्यभाष्ये स्कन्दस्वामिभाष्ये लभ्यतेऽपि न॥

दूतः ॥ ९९ ॥

दूतो व्याख्यातः।

यं त्वा जनासो अभिसञ्चरन्ति गाव उष्णमिव व्रजं यविष्ठ। दूतो देवानामसि मर्त्यानामन्तर्महाँश्चरसि रोचनेन॥ ( ऋ० १० । ४ । २ )

भा०—'दूतः' इत्यनवगतमनेकार्थं च। दूतो व्याख्यातः ( निरु० अ० ५ पा० १ खं० १ ) जवतेर्वा द्रवतेर्वा वारयतेर्वा 'जवनः, द्रवणः' वारणः' इत्यव-गमः। तस्य यत्रानेकार्थत्वं स मन्त्रः "दूतो देवानामसि मर्त्यानाम्"।

हे यविष्ठ युवतम सर्वदा ह्येकरसेन वर्तमान ! जराह्रासरहित ! परमात्मन् ! जना यं त्वामभितः सम्प्राप्नुवन्ति यथा गावः शीतार्ता उष्णं गोसदनं स्वगृहं सम्प्राप्नुवन्ति। एवं देवानां विदुषां मुमुक्षूणां मर्त्यानां साधारणजनानां च दूतः प्रेरको दुःखस्य निवारकश्चासि, स्वप्रकाशमयरूपेण सर्ववस्तूनां प्रादुर्भावकेन तेजसा सर्वेषामन्तर्महान् भूत्वा चरसि विचरसि व्याप्नोषि॥

जिन्वति ॥ १०० ॥

जिन्वति प्रीतिकर्मा ? ( गतिकर्मा ) *.

* 'प्रीतिकर्मा' अयास्कीय पाठः प्रतिभाति। 'गतिकर्मा' इति स्यात्। प्रीति-कर्मा धातुपाठे 'जिवि प्रीणने" (भ्वादि०) गतिकर्मा निघण्टौ।

"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः"
( ऋ० १ । १६४ । ५१ ) इत्यपि निगमो भवति ॥ २२ ॥

भा०—'जिन्वति' इत्यनवगतम्, स्वरूपतो न, किन्त्वर्थतः, "हिवि दिवि धिवि जिवि प्रीणनार्थाः" ( भ्वादि० ) इत्युक्तत्वात्। जिन्वतिर्गतिकर्मा च निघण्टौ पठितः "जिन्वति गतिकर्मा" ( निघं० २ । १४ ) इत्यवगमपक्षः। यास्कोदाहृते मन्त्रे 'जिन्वति' इति पदमनेकार्थं द्व्यर्थकम्। प्रथमं पृथक् पृथगर्थको मन्त्रः प्रदर्श्यते।

गत्यर्थे—

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम्।
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम्॥
( ऋ० २ । ४० । ३ )

सोमापूषणौ—वायुविद्युतौ—वृषणौ शक्तेः—वर्षकौ देवौ रजसः—अन्तरिक्षस्य लोकस्य लोकाल्लोकान्तरस्य वा सप्तचक्रं सप्तरश्मिं सप्तरश्मियुक्तमविश्वमिन्वं विश्वैः सर्वैर्न मातुं परिमातुं योग्यं विरलेन ज्ञातुं योग्यं विषुवृतं व्यापकपरिक्रमणशीलं विमानं रथं मनसो वेगेनेव युज्यमानं तं जिन्वथो गमयथः "प्रेरयथः" ( सायणः ) "गमयतः—व्यत्ययेन" ( दयानन्दः )

प्रीणनार्थे—

आगन् देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम्।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु॥
( ऋ० ४ । ५३ । ७ )

सविता देवः—आगन्—आगच्छतु—ऋतुभिः क्षयं निवासं वर्धयतु नोऽस्मभ्यं सुप्रजां योग्यसन्ततिम्—इषमन्नं दधातु धारयतु, स क्षपाभिः—रात्रिभिः—अहोभिश्च नोऽस्मान् जिन्वतु प्रीणयतु, अस्मेऽस्मभ्यं प्रजावन्तं रयिं समिन्वतु प्रापयतु॥

अथ यास्कोदाहृतो मन्त्रोऽनेकार्थजिन्वतिशब्दवान् व्याख्यायते—

समानमेतदुदकमुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः॥

समानं समानरूपमेतदुदकं यदुदेति—उपरि गच्छति भूमितः, अहोभिः कैश्चिद् ग्रीष्मकालकैः, अवैति नीचैर्गच्छति—नीचैः प्राप्नोति कैश्चिदहोभिः प्रावृट्कालकैः, एवमुदकस्योपर्यधोगमने कार्ये। पर्जन्या मेघास्तदुदकेन भूमिं जिन्वन्ति प्रीणयन्ति, अग्नयो याश्च भौमा उष्माणस्तदुदकं दिवं जिन्वन्ति दिवं प्रति गमयन्ति॥ इति षष्ठाध्याये चतुर्थः पादः।

## पञ्चमः पादः

अमत्रः ॥ १०१ ॥

अमत्रोऽमात्रो महान् भवत्यभ्यमितो वा।

"महाँ अमत्रो वृजने विरप्शि" ( ऋ० ३ । ३६ । ४ )

इत्यपि निगमो भवति।

भा०—'अमत्रः' इत्यनवगतमनेकार्थं च। 'अमात्रः' यद्वा 'अभ्यमितः' इत्यवगमः। मात्राल्पीभावो न यस्य सोऽमात्रः–सन्–अमत्रः, मात्रा मानं परिमाणं न यस्य सोऽमत्रो महान्, नञ्पूर्वात् "माङ् माने" ( जुहोत्यादि० ) ततः कत्रन् प्रत्ययो धातुबाहुलकात् "सुविदेः कत्रन्" ( उणा० ३ । १०८ ) अपरिमितगुणबलो महान्। अथवा 'अभ्यमितः' आभिमुख्ये सति न हिंसितो न हिंसितव्यः–नञ्पूर्वात् "मीङ् हिंसायाम्" ( दिवादि० ) "मीञ् हिंसायाम्" ( क्र्यादि० ) ततः "अमिनक्षियजिवधिपतिभ्योऽत्रन्" ( उणा० ३ । १०५ ) कर्मणि 'अत्रन्' प्रत्ययो डित्–धातोर्बाहुलकात्, इति त्वनवगतत्वे। अथवा 'अभ्यमितः–अमत्रः–अमत्रवान्' स्यात् लुप्तमतुबर्थकः। अभिगतोऽमितं रोगकरमन्नं सोऽमत्रोऽमत्रवान्। अमत्रम् "अम रोगे" ( चुरादि० ) ततोऽपि "अमिनक्षियजिवधिपतिभ्योऽत्रन्" ( उणा० ३ । १०५ ) वेदे 'अमत्री' इन्द्र उच्यतेऽपि "गम्भीरेण न उरुणाऽमत्रिन्" ( ऋ० ६ । २४ । ९ ) परन्त्ववगतार्थाः–ये सन्ति तेऽपि समाविशन्ति, अत एव यास्केन मन्त्र उदाहृत एषोऽनेकार्थसन्दर्भे। प्रथमं पृथक् पृथगर्थका मन्त्रा उदाह्रियन्ते—

अमत्रं पात्रम्—

आ मध्वो अस्मा असिञ्चन्नमत्रमिन्द्राय पूर्णं स हि सत्यराधाः।

( ऋ० १० । २९ । ७ )

अस्मै–इन्द्राय मध्वः–मधुरस्य सोमस्यौषधिरसस्य पूर्णम्–अमत्रं पात्रम्–आसिञ्चन् समन्तात् सिञ्चन्ति प्रपूरयन्ति–अग्नौ प्रक्षिपन्ति जुह्वति याजकाः, यतः स इन्द्रो हि सत्यराधाः–सत्यानि स्थिराणि पवित्राणि राधांसि धनानि यस्मात् 'प्राप्यन्ते।' यास्केन स्वयमपि 'अमत्र' शब्दः पात्रार्थे प्रदर्शितः "आमत्रेभिः सिञ्चता मद्यमन्धः" ( ऋ० २ । १४ । १ ) "अमत्रम्....अमा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति" ( निरु० ५ । १ )।

अमत्रः सम्भजनीयः *—

किमादमंत्रं सुख्यं सखिभ्यः कुदा नु ते भ्रात्रं प्रब्रवाम ।

श्रिये सुदृशो वपुरस्य सर्गाः स्वर्णं चित्रतममिष आ गोः ॥

( ऋ० ४ । २३ । ६ )

हे इन्द्र परमात्मन् ! सखिभ्योऽस्मभ्यं सखिभूतेभ्यस्ते सख्यं सखित्वं मित्रत्वं किम्—आत्—आश्चर्ये, अहो कथम्—अमत्रं सम्भजनीयं तथा भ्रात्रं भ्रातृत्वं चामत्रं सम्भजनीयं कदा नु कदा पुनः प्रब्रवाम प्रकृष्टं स्तुयाम । मनसि चिन्त्यते—अस्य सुदृशः सुदर्शनस्य वपुः स्वरूपम् "वपुः—रूपनाम" ( निघं० ३ । ७ ) सर्गाः सृष्टयो रचनाः—स्तोतृणामुपासकानां श्रिये समृद्धये—अभ्युदयाय श्रेयसे निःश्रेयसाय च सन्ति स्वः—न सूर्य इव चित्रतममतिशयेन चायनीयं प्रशंसनीयं वर्णम् । उक्तमन्यत्र यथा "वेदाहमेतं पुरुषं महान्तमादित्यवर्णम्" ( यजु० ३१ । १८ ) गोः—गौरहं स्तोता "गौः स्तोतृनाम" ( निघं० ३ । १६ ) आ—इषे समन्ताद् इच्छामि † ।

अमत्रः—अमात्रो महान्—

अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।

स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥

( ऋ० १ । ६१ । ९ )

अस्येन्द्रस्य खलु हि दिवो द्युलोकात् पृथिवीलोकात्—अन्तरिक्षलोकात् परि—उपरि महित्वं महत्त्वं प्रररिचे—प्ररिक्तम्—अतिरिक्तं भवति स ह्येतान्—अतिरिच्य तिष्ठति स इन्द्रः स्वराट् स्वेन तेजसा राजमानो दमे दमनीये शासनीये संसारे विश्वगूर्तः—विश्वस्मिन् संसारे गूर्तः—उद्यतः—उद्यमवान् स्वरिः—शोभन ईश्वरः "ईश्वरोऽप्यरिः" ( निरु० ५ । ७ ) स एवमिन्द्रोऽमत्रः—अमात्रः—मात्रया परिमाणेनामितो महान् सन् रणाय संग्रामाय योद्धुं सर्वत्र रमणाय सर्वान् रमयितुम्—आववक्षे—आवहति—समन्तात् प्रापयति ॥

अमत्रः—अभ्यमितः—

---

* "अम गत्यादिषु—पूर्वोक्तासु गतिशब्दसम्भक्तिषु" (भ्वादि०) सम्भक्तिरत्रेष्यते ततः "अमिनक्षियजिवधिपतिभ्योऽत्रन्" (उणा० ३ । १०५) कर्मणि 'अत्रन्' प्रत्ययः ।

† छकाराभाव आत्मनेपदं च व्यत्ययेन ।

गम्भीरेणं न उरुणामत्रिन् प्रेषो यन्धि सुतपावन् वाजान् ।
स्था ऊ षु ऊर्ध्व ऊती अरिषण्यन्नक्तोर्व्युष्टौ परितक्म्यायाम् ॥
( ऋ० ६ । २४ । ९ )

हे अमत्रिन् वज्रिन् अमत्रमभ्यमितमहिंसनीयमबाध्यमस्त्रं वज्रं यस्यास्ति सोऽमत्री सम्बुद्धौ—अमत्रिन् वज्रिन् सुतपावन् इन्द्र ! त्वं 'गम्भीरेण—उरुणा' अमत्रं लक्ष्यते गम्भीरेण प्रभावकेण विस्तृतेन महताऽमत्रेण वज्रेण सति साम्मुख्येऽबाध्येन—इषः शत्रूणां पदातीः—गच्छन्तीः सेनाः—वाजान् बलानि "वाजो बलनाम" ( निघं० २ । ९ ) प्रयन्धि प्रकृष्टेन शमय "यम उपरमे" ( भ्वादि० ) "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७३ ) इति शपो लुग् लोटि । ऊती—ऊत्यै—अस्माकं रक्षायै—अक्तोः—रात्रेर्व्युष्टौ विवासे प्रभाते परितक्म्यायां रात्रौ सायमरिषण्यन्—अस्मान् न हिंसन्—ऊर्ध्वः शत्रूणामुपरि स्था ऊ षु स्थितो हि भव ॥

अथ यास्कोदाहृतो मन्त्रोऽनेकार्थकामत्रशब्दवान् व्याख्यायते—

महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृष्ण्वोजः ।
नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्वममन्दन् ॥

स इन्द्रो महान्—अमत्रः पात्ररूपः कटाहोऽस्ति । विरप्शी विरप्शवान् "रप व्यक्तायां वाचि" ( भ्वादि० ) तत औणादिकः शः प्रत्ययो विशिष्टा व्यक्तशब्दा मन्त्रात्मका यस्मिन् पात्रभूते सन्ति स विरप्शी—इन्द्रः । एनं हर्यश्वं हरयोऽन्येषां बलानां हर्तारोऽश्वा यं वहन्ति तममन्दन् प्राप्ताः सन्ति । तमिन्द्रं पृथिवी स्थूला न विव्याच पूरयामासापूरयत्—न च सोमासः पूरयामासुः—अपूरयन् । एवम्भूतस्येन्द्रस्य—उग्रं शवः—बलं तथा धृष्णु—धर्षणशीलमोजो वृजने वृजनवति, बलानि यस्मिन् स संग्रामः, अकारो मत्वर्थीयः "वृजनं बलम्" ( निघं० २ । ९ ) पत्यते पतति कर्तरि कर्मप्रत्ययो व्यत्ययेन । इति पात्रपक्षे ॥

स इन्द्रो महान्—अमत्रः सम्भजनीयः "अम सम्भक्तौ" ( भ्वादि० ) ततः—अत्रन् प्रत्ययः । यतः स विरप्शी विशिष्टशब्दानां मन्त्रात्मकानां स्वामी तथा तेषामुपदेष्टाऽस्ति । उक्तं यथाऽन्यत्र "प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युकथ्यम्" ( यजु० ३४ । ५७ ) न केवलं ज्ञानवान्—उपदेष्टा हि तस्यास्येन्द्रस्योग्रं शवो बलं धृष्णु धर्षणशीलमोजश्च वृजने वर्जिते रिक्तेऽन्तरिक्षे—आकाशे विश्वाकाशे "वृजनमन्तरिक्षम्" ( उणा० २ । ८२ ) स्वतो वर्जिते सृष्टे संसारे वा पत्यते प्राप्यते । एनं हर्यश्वं हरयो मनुष्याः "हरयः—मनुष्यनाम" ( निघं० २ । ३ ) अश्वाः—अश्वा इव वहमानाः सन्ति, मनुष्या हि तमिन्द्रं वेदस्योपदेष्टारं वहन्ति मन्यन्ते

प्रचारयन्ति च तस्मात् तथाभूतमिन्द्रमेनं पृथिवी स्थूला प्रथिताऽपि जडा सृष्टिः—न विव्याच—समत्वेन प्राप्तुं शशाक शक्नोति सोमासः सूक्ष्माः—अणवस्तन्मात्रा जडाः—अपि न समत्वेन प्राप्तुं शक्नुवन्ति याः—तममन्दन् प्राप्ताः सन्ति । तस्मात् स चेतनानां जडानां चामत्रः सम्भजनीयः । इति सम्भजनीयपक्षे ॥

स इन्द्रो महान्—अमत्रोऽमात्रोऽपरिमितबलो वृजने संग्रामे योद्धुं विरप्शी विशेषेण शत्रूणामाह्वाताऽस्ति तस्योग्रं तीव्रं शवो बलं धृष्णु धर्षणशीलमोजश्च पत्यते प्राप्यते सर्वैरनुभूयते सर्वे योद्धारोऽनुभवन्ति यदयमिन्द्रोऽमितबलः । एनं हर्यश्वं हरिर्हरणशीलः सर्वत्र वहनशीलोऽश्वो यस्य तमेनं पृथिवी न विव्याच व्यतिरिरेच ततः पृथङ् नाभवत्, न सोमासस्तन्मात्राः सूक्ष्माः—व्यतिरिरिचुः—ततः पृथग् भवितुं शक्नुयुः शक्नुवन्ति तमिन्द्रममन्दन् प्राप्ताः सन्ति । इति—अमात्रपक्षे ॥

स इन्द्रो महान्—अमत्रोऽभ्यमितः—साम्मुख्येऽहिंसितोऽदम्यः, यतः स—विरप्शी विरप्शवान् विरप्शं ध्वन्यस्त्रं (Sound Bomb) प्रक्षिप्य जनान् निःसत्त्वं करोति तस्योग्रं शवो बलं धृष्णु धर्षणशीलमोजश्च वृजने संग्रामे पत्यते पत्येत चेत् तं हर्यश्वं हरी शुष्कार्द्रे धारे विद्युद्धारे यस्याधीने स्तो वैद्युतास्त्रवन्तं पृथिवी न विव्याच तत्प्रहारं नोल्लङ्घयति, न सोमासः सूक्ष्माः पदार्था आकाशस्थाः—उल्लङ्घयन्ति ये—एते—एनं प्राप्नुवन्ति । इति—अभ्यमितपक्षे ॥

ऋचीषमः ॥ १०२ ॥

"स्तवे वज्रयृचीषमः" ( ऋ० १० । २२ । २ )

स्तूयते वज्रयृचा समः ॥

भा०—'ऋचीषमः' इत्यनवगतम् । 'ऋचा समः—ऋचा स्तुत्या समः समीभूतः—यथा स्तुतिः क्रियते तथा तद्रूपस्तदनुरूपफलप्रदः' इत्यवगमः । ऋक्-समः सन् ऋचीषमः—उक्तः, ईकारोपजनश्छान्दसः । इत्यनवगतपक्षेऽर्थः, अनेकार्थसन्दर्भत्वात् काचिदन्याऽपि व्युत्पत्तिरवगतपक्षीया भवति, तद्यथा—"ऋच् स्तुतौ" ततः—'ईषन्' प्रत्ययः—"उणादयो बहुलम्" ( अष्टा० ३ । ३ । १ ) इत्यनेन 'ऋचीषः' प्रयोगो भवति, यथा 'ऋजीषः' प्रयोगः । "अर्जेर्ऋज च—ईषन्" ( उणा० ४ । २८ ) धातोर्बहुलात्—ऋचोऽपि भवति । ऋचीषं स्तोतारं माति मान्यं करोति—उत्कृष्टं करोतीति 'ऋचीष' उपपदे 'मा माने' ( अदादि० ) धातोः 'ड:' प्रत्ययः "अन्येष्वपि दृश्यते" वा० ( अष्टा० ३ । २ । १०१ ) ऋचीषमः—स्तोतृणामुत्कर्षयिता । तथा 'ऋचो मन्त्रान् गमयति प्रापयतीति—

ऋचीषमः' "ऋच् स्तुतौ" ततः "इगुपधात् कित्-इन्" ( उणा० ४ । १२० ) ऋचिः-ऋक्-यया सर्वे पदार्थाः स्तूयन्ते वर्ण्यन्ते । तामृचिमीषयति गमयति प्रापयति दर्शयति वा स 'ऋचीषमः ।' 'ऋचि' उपपदे "ईष गतिहिंसादर्शनेषु" ( भ्वादि० ) ततः 'अमच्' प्रत्ययः 'ऋचीषमः' एवमत्रानेकार्थप्रसङ्गे "ऋचीषमः' शब्दस्य त्रयोऽर्थाः । प्रथमं पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्तेऽस्माभिः ।

ऋचीषमः-ऋचां गमयिता दर्शयिता—

शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम ।

अवा नः पार्ये धने ॥ ( ऋ० ८ । ९२ । ९ )

हे ऋचीषम ! ऋचीनामृचामीषयितो गमयितो दर्शयितरिन्द्र परमात्मदेव ! "ईष गतिहिंसादर्शनेषु-अस्मादमप्रत्ययः" ( सायणः ) नोऽस्मान् रायो ज्ञान-धनानि पुरु बहु शिक्ष त्वं विद्वान्-असि तथा पार्ये पारं गन्तुं योग्ये धने-महाधने संग्रामे "महाधने संग्रामनाम" ( निघं० २ । १७ ) 'महा' इति पूर्वपदलोप-श्छान्दसः । "सूर्यामासा-सूर्याचन्द्रमसौ" इति यथा । नोऽस्मान्, आ-अव समन्ताद् रक्ष ।

ऋचीषमः-ऋचीषाणां स्तोतॄणां मातोत्कर्षयिता—

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।

ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ( ऋ० १।६१।१ )

अस्मै तवसे बलवते तुराय कार्यसिद्धेः शीघ्रकारिणे माहिनाय गुणैर्महतेऽध्रि-गवेऽधृतगमनायाऽप्रतिहतगतिकाय-ऋचीषमाय-ऋचीषाणां स्तोतॄणां मात्रे-उत्कर्षयित्रे "ऋचीषाय ऋचीषानतिमान्यान् करोति तस्मै" ( दयानन्दः ) इन्द्राय प्रयो न-अन्नमिव-ओहं वहनीयं प्रापणीयं स्तोमं स्तुतिवचनं तथा राततमानि दातव्यतमानि-अतिशयेन दातव्यानि ब्रह्माणि ब्राह्मणानि 'तद्धितलोपः' मनो-भावात् 'मनो ब्रह्म" ( गो० पू० २ । १० ) प्रहरामि-उपहरामि समर्पयामि ।

ऋचीषमः-ऋचा समः—

पुरोमात्रमृचीषममिन्द्रमुग्रं सुराधसम् । ईशानं चिद्वसूनाम् ॥

( ऋ० ८ । ६८ । ६ )

सुराधसं शोभनधनं वसूनां धनानामीशानं स्वामिनमिन्द्रं परोऽमात्रं परो-ऽत्यन्तममात्रं मात्रारहितं परिमाणरहितमपरिमितशक्तिमन्तमुग्रं सन्तं चित् ऋचीषमम्-ऋचा स्तुत्या समं यादृशी स्तुतिस्तत्समं तदनुरूपं तदनुरूपफलस्य प्रदातारं हुवे स्तुवे ॥

अथ यास्कप्रदर्शितो मन्त्रो व्याख्यायते यत्रानेकार्थ ऋचीषमः शब्दः—

इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः ।
मित्रो न यो जनेष्वा यशश्चक्रे असाम्या ॥

जनेषु मित्रः—न, जनेषु मित्रं स्नेही जन इव यो यशोऽथवाऽन्नं यद्वा धनम् "यशोऽन्नम्" ( निघं० २ । ७ ) "यशो धनम्" ( निघं० २ । १० ) आचक्रे समन्तात् करोति, अपि च 'असामि—आ' तद्यशोऽन्नं धनं वाऽसामि—असुसमाप्तं च "असामि—असुसमाप्तम्" ( निरु० ६ । २४ ) आचक्रे समन्तात् करोति । अयं पश्चात् प्रयुक्तः—आकारश्चार्थे, यथा "देवेभ्यश्च पितृभ्य आ" ( निरु० १।४) न केनापि सुगमतया समाप्तुं शक्यते चिरस्थायि—इत्यर्थः । स इह संसारे जनेषु वा श्रुतः प्रख्यातः—वज्री शासनवज्रवान्—इन्द्रः—ऋचीषमः—ऋचीनामृचां मन्त्राणां गमयिता दर्शयिता,अत एवयशो ददाति स्तोतृभ्य ऋषिभ्यः यद्वा ऋचीषां स्तोतॄणां माता—उत्कर्षयिता,अत एवान्नं ददाति । अथवा—ऋचा समः—स्तुत्या समः स्तुतेरनुरूपो भूतस्तदनुरूपस्य फलस्य प्रदाता, अत एव धनं ददाति । इत्थभूतः स इन्द्रोऽद्य प्रतिदिनं स्तवेऽस्माभिः स्तूयते ॥

अनर्शरातिम् ॥ १०३ ॥

अनर्शरातिमनश्लीलदानमश्लीलं पापकमश्रिमद्विषमम् ।
"अनर्शरातिं वसुदामुपस्तुहि" ( ऋ० ८ । ९९ । ४ )
इत्यपि निगमो भवति ॥

भा०—'अनर्शरातिम्' इत्यनवगतम् । 'अनश्लीलदानम्' इत्यवगमः । 'अपापदानम्' इत्यभिधेयम् । अर्शो रोगो गुदरोगोऽश्लीलस्तस्मादश्लीलकारि, अश्लीलं पापम्, अश्लीलम्—अश्रिमत्—मतुबर्थप्रदर्शनम्, अश्रिरं री मतुबर्थीयस्तस्य लत्वम् । तीक्ष्णकोणवत्—अणिमत्—शल्यं तद्वद् दुःखदायकं पापम्—इकारस्य दीर्घत्वं च । "रा दाने" ( अदादि० ) धातोः क्तिनि प्रत्यये 'रातिः' अर्श—अर्शो रातिर्दानं सोऽर्शरातिः सकारलोपे 'अर्शरातिः'—अश्लीलदानः पापदानः, न—अर्शरातिः—अनर्शरातिः—पवित्रस्य धनादिकस्य दाता । समस्ते वैदिकवाङ्मये सकृत् प्रयुक्तः शब्द एष केवलमनवगत एव । तस्योदाहरणं यो मन्त्रः स समग्रमन्त्रस्तदर्थश्च,—

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥

हे मानव ! त्वम्—अनर्शरातिं पवित्रदानं यस्य तथाभूतं पवित्रदानस्य कर्तारं यद् दानं पापात्—न प्राप्यते तथा च यद् दानं मानवं पवित्रयति तथाभूतस्य दानस्याध्यात्मलाभस्य ज्ञानस्य वा कर्तारं पुनश्च वसुदां वसूनि बहुविधानि यो ददाति तं विविधवसूनां दातारं परमात्मानमुपस्तुहि—प्रशंस—उपास्व तस्येन्द्रस्य रातयो दानानि भद्राः—भद्राणि कल्याणकराणि सन्ति । स इन्द्रः परमात्मा दानाय मनः—चोदयन् प्रेरयन्—अस्य विधतः—अस्योपासनां विदधतः । व्यत्ययेन श्लुस्थाने लुक् छान्दसः शतृप्रत्यये । उपासनां कुर्वतो जनस्य काममभिलाषमिच्छां न रोषति—हिनस्ति । "रुष हिंसायाम्" ( भ्वादि० ) ।

अनर्वा ॥ १०४ ॥

अनर्वाऽप्रत्यृतोऽन्यस्मिन् ।

"अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः" ( ऋ० १ । १९० । १ ) अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा । * बृहस्पतिं वर्धय नव्यमर्कैरर्चनीयैः स्तोमैः ।

भा०—'अनर्वा' इत्यनवगतम् । 'अप्रत्यृतोऽन्यस्मिन्—अन्यस्मिन्नप्रतिगतः' इत्यवगमः । अन्यस्य बले ज्ञाने वाऽनाश्रितः 'स्वाश्रयी'—अभिधेयः । कथमेषोऽनवगतो यावता 'अर्वा' प्रसिद्धोऽश्वः, न—अर्वा—अनर्वा—अनश्वः । भवतु स प्रसिद्धः 'अर्वा' औणादिको वनिप्प्रत्ययान्तः । अत्रानेकार्थसन्दर्भे तस्यान्यप्रकारेणापि भवितव्यं तस्मात्—उणादिसूत्रेषु यद्वा—अष्टाध्यायीसूत्रेषु साक्षान्न साधितस्तथाभूतप्रत्ययान्तेन भवितव्यम् । अतः "अर्व हिंसायाम्" ( भ्वादि० ) ततः "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" ( उणा० १ । १५६ ) बाहुलकात् कनिन् प्रत्ययः । अर्वा हिंसकः—अनर्वा—न हिंसको यस्य सोऽनर्वा संग्रामायाऽन्यस्मिन्नप्रत्यृतः—अनाश्रितः—बले स्वाश्रयी । तथा—अष्टाध्यायीसूत्रेषु साक्षादविहितः प्रत्ययः । "ऋ गतिप्रापणयोः" ( भ्वादि० ) ततः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति वनिप् प्रत्ययः । अर्वन्—अर्वा ज्ञानी ज्ञानाचार्यः—वेदाचार्यः, न ज्ञानी ज्ञानाचार्यो यस्य यस्मादन्यो वा सोऽनर्वा पूर्णज्ञानी योऽन्यस्मिन् ज्ञानिन्यप्रतिगतः सः—'अनर्वा ।' इति त्वनवगतपक्षे, अवगतपक्षे—अर्वा—अश्वः "स्नामादिपद्यर्त्तिपृशकिभ्यो वनिप्" ( उणा० ४ । ११३ ) इति—अर्वन्—अर्वा—अश्वः—तथा 'अर्वः' शब्दो निन्दितार्थस्तत्प्रतिद्वन्द्वी प्रशस्तार्थः स तु

* इतोऽग्रे मूलपाठो दुर्गाचार्यभाष्ये स्कन्दभाष्ये च नोपलभ्यते ।

वन्प्रत्ययान्तः, प्रशस्तः–अपापोऽपि गृह्यते । एवं सामान्येनानुवादः कृतो यास्केन 'अनर्वाणम्–अनर्वम्' अविहितोऽर्थः । न–अर्वा यस्मिन् सोऽनर्वाऽनश्वः । अवगत-पक्षीयोऽर्थोऽपि सम्भाव्यतेऽस्यानेकार्थप्रसङ्गत्वात् स खलु 'अनर्वा–अनश्वः', अनर्वा–अपापः प्रशस्तः, अनर्वाऽहिंसनीयो बले स्वाश्रितः, अनर्वाऽन्यूनज्ञानी नान्यस्मिन्नाश्रितो ज्ञानाय ज्ञाने स्वाश्रितः । एवं चत्वारोऽर्थाः सन्ति 'अनर्वा' इति शब्दस्य, ते चत्वारोऽप्यर्थाः–यास्कोदाहृते मन्त्रे सम्भाव्यन्तेऽत एव यास्केन निश्चित्य मन्त्र उदाहृतः । प्रथमं पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्तेऽस्माभिः ।

अनर्वा–अनश्वः—

युध्मो अनर्वा खजकृत्समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः ॥

( ऋ० ७ । २० । ३ )

इन्द्रो युध्मो योद्धा–अनर्वा–अनश्वः पशुरूपाश्वरहितः "अनर्वा–अभिगन्तृ-रहितः" ( सायणः ) "अविद्यमाना अश्वा यस्य सः" ( दयानन्दः ) खजकृत् यः खजं संग्रामं करोति सः "खज इति संग्रामनाम" ( निघं० १ । १७ ) समद्वा संग्रामं वनति सम्भजति–संग्रामसेवी शूरः सत्राषाट् समूहं सहते यः स बहुषोढा जनुषा जन्मना–ईम् खलु–अषाढोऽन्येनासह्यः–अपोढव्यः ॥

अनर्वा–अकुत्सितोऽनिन्दनीयोऽपापो वा *—

सुप्रेतुः सूयवसो न पन्था दुर्नियन्तुः परिप्रीतो न मित्रः ।
अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवन्तो अस्थुः ॥

( ऋ० १ । १९० । ६ )

हे बृहस्पते ! त्वं सुप्रेतुः सुष्ठुगन्तुर्मनुष्यस्य सुयवसः शोभनान्नवान् पन्था न मार्ग इव भव, दुर्नियन्तुः–दुःखेन नियमितुः–राज्ञोऽपि यः कठिनत्वेन राज्यं चालयति तस्यापि त्वं मित्रमिव परिप्रीतः सर्वतः प्रसन्नोऽसि, ये–अनर्वाणः–अपापाः–नराः "अनर्वाणः–अपापाः" ( सायणः ) "अनर्वाणः–अविद्यमानमर्वं धर्मादन्यत्र गमनं येषां ते" ( दयानन्दः ) नोऽस्मानभिचक्षते–उपदिशति तेऽपि वृता ज्ञाने नियमेन वर्तमानाः–अपोर्णुवन्तः–अपगताविद्यावरणवन्तः पूर्णज्ञान-प्रकाशवन्तोऽस्थुस्तिष्ठन्तु तव रक्षणे ।

अनर्वा–अप्रत्यृतोऽन्यस्मिन् बलाय स्वयं महाबली संग्रामे न कश्चन हिंसको यस्य बले स स्वाश्रयी—

---

* ऋधातोरविशिष्टार्थाभिधानात् 'अनर्वः' अकुत्सितोऽपि गृह्यते "अवद्याव-माधमर्वरेफाः कुत्सिते" (उणा० ५ । ५४)

त्वेष शर्धो न मारुतं तुविष्वण्यनर्वाणं पूषणं सं यथा शता ।

( ऋ० ६ । ४८ । १५ )

त्वेषं दीप्तं वैद्युतं शर्धः—न बलमिव "शर्धो बलम्" ( निघं० २ । ९ ) मारुतं मरुतां सैनिकानां समूहं समूहरूपं बलम्, मरुतो विद्युन्मन्तः "आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टि०" ( ऋ० १ । ८८ । १ ) तुविष्वणि बहुस्वनं बहुघोषम्—अनर्वाणं न—अर्वा हिंसकः शत्रुर्यस्य "भ्रातृव्यो वा अर्वा" ( तै० सं० ६ । ३ । ८ । ४ ) अप्रत्यृतोऽन्यस्मिन् बलाय पूर्णबलवान् स्वाश्रयी यस्तम् "अप्रत्यृतं शत्रुभिरनभिगतम्" ( सायणः ) पूषणं पोषकं स्तौमि प्रशंसामि ।

अनर्वा—अप्रत्यृतोऽन्यस्मिन् ज्ञानाय स्वयं पूर्णज्ञानी वेदाचार्यो न ज्ञानी तस्मादन्यः, ज्ञाने स्वाश्रयी—

तमा नो अर्कममृताय जुष्टमिमे धासुरमृतासः पुराजाः ।
शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥

( ऋ० ७ । ९७ । ५ )

पुराजाः—आरम्भसृष्टौ जाताः—अमृताः—साधारणमर्त्येभ्यो भिन्नाः—जीवन्मुक्ता देवाः—वेदस्य प्रकाशका अग्निप्रभृतयः परमर्षयस्तं जुष्टं बृहस्पतिना परमात्मना सेवितमर्कं मन्त्रं मन्त्रसमूहं वेदज्ञानम् "अर्को मन्त्रो भवति" ( निरु० ५ । ४ ) "प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्" ( यजु० ३४।५७ ) अमृताय—अमरणत्वाय नोऽस्मभ्यमाधासुः—आददुरित्यर्थः । शुचिक्रन्दं शुचिः पवित्रः क्रन्दः शब्दात्मको मन्त्रः—उपदेशो यस्य तं वेदस्योपदेष्टारं पस्त्यानां पस्त्यं गृहं तद्वतां गृहिणां यजतं यजनीयमुपासनीयं बृहस्पतिं वेदवाचो ज्ञानस्य स्वामिनम्—अनर्वाणं ज्ञानायान्यस्मिन्नप्रत्यृतं ज्ञाने स्वाश्रितं नान्योऽर्वा ज्ञानी तस्मात् तथाभूतं सर्वज्ञं परमात्मानं हुवेम स्तुयाम ।

अथ यास्कोदाहृतो मन्त्रो यस्मिन् 'अनर्वा' शब्दोऽनेकार्थकः स मन्त्रो व्याख्यायते—

अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः ॥

अनर्वाणं न—अर्वा—अश्वो यस्य तमश्वरहितमश्वमनपेक्षमाणं बृहस्पतिं यतः स स्वयं वृषभः, अश्वस्य कार्यं स स्वयं करोति तदपेक्षया चाधिकवहनसमर्थो वृषभरूपः सर्वं जगद्भारं वहति, तं वृषभं तथाऽनर्वाणमनिन्द्यं प्रशस्तं यतो मन्द्रजिह्वं मन्द्रजिह्वः—मन्द्रा हर्षयित्री—आनन्दयित्री जिह्वा वाक्—वाणी वेदवाणी यस्य

"जिह्वा वाङ्नाम" ( निघं० १ । ११ ) तं मन्त्रजिह्वमनर्वाणमनिन्दनीयं प्रशस्तं बृहस्पतिं मन्त्रवाचः स्वामिनम्, तं बृहस्पतिम्—अनर्वाणम्—अर्वा हिंसको यस्य न कश्चन न स बलायान्यस्मिन् प्रत्यृतः—आश्रितः, स्वयं तस्य वृषभरूपत्वात्—वृषभो महाबलवान् सोऽत उक्तं वृषभं न सोऽन्येन हिंसनीयः स तु—अञ्जवर्षणो वृषभो भयप्रदः, अतो वृषभो गोवृषभोऽपि न हिंसनीयो गोवंशवृद्धिकरो हि सः। बृहस्पतिम्—अनर्वाणम्, अर्वा ज्ञानी तस्मादन्यो न, ज्ञाने नान्यस्मिन् प्रत्यृतः—आश्रितः स्वाश्रयी ज्ञाने तस्य बृहस्पतित्वात्—बृहस्पतिर्ब्रह्मणस्पतिः समग्रस्य ज्ञानस्य पतिः स्वामी, न तदधिको ज्ञानी कश्चित् तस्य सर्वज्ञत्वात्। एवं गुणविशिष्टं तं नव्यं स्तोतव्यं परमात्मानम् "णु स्तुतौ" ( अदादि० ) अर्कैः—वर्धय। हे मानव ! त्वं तम्—अर्कैस्तदुपदिष्टैर्मन्त्रैः "अर्को मन्त्रो भवति" (निरु० ५।४) तान् मन्त्रानधीत्याध्याप्य च वर्धय तं बृहस्पतिं परमात्मानं वर्धय संसारे वर्धय तं प्रचारय स्वात्मनि च तं वर्धय साक्षात्कुरु। यस्य गाथान्यः—गाथा वाचो वेदवाचो नयति प्रापयतीति गाथानीः—यथा सेनानीः "गाथा वाङ्नाम" ( निघं० १ । ११ ) 'गाथा' उपपदे "णीञ् प्रापणे" ( भ्वादि० ) धातोः क्विप् प्रत्ययः। सुरुचः—सुरोचते प्रकाशते सुरुक् तस्य सुरुचः—शोभनप्रकाशमानस्य नवमानस्य वाचः प्रापयमाणस्य वाचो मन्त्रान् देवाः—सृष्टेरारम्भकालीयाः—ऋषयः। तथा मर्ताः साम्प्रतिका मनुष्याश्चाश्रृण्वन्ति समन्तात् श्रृण्वन्ति तदन्वाचरन्ति ॥

असामि ॥ १०५ ॥

असामि सामिप्रतिषिद्धम्। सामि स्यतेः।

"असाम्योजो बिभृथा सुदानवः" (ऋ० १ । ३९ । १०)

असुसमाप्तं बलं बिभृत कल्याणदानाः ॥ २३ ॥

भा०—'असामि' इत्यमवगतमनेकार्थं च। 'सामिप्रतिषिद्धम्' 'सामि' इत्यस्य प्रतिषेधः—'असामि' इत्यवगमः। सामि खलु स्यतेः "षो अन्तकर्मणि" ( दिवादि० ) ततः "नियो मिः" ( उणा० ४ । ४३ ) धातोर्बाहुलकात् 'मिः' प्रत्ययः। यस्यान्तो न जातः, यो न समाप्तः, असामि—अनन्तम्। इति त्वनवगतप्रसङ्गे, परन्तु 'सामि' अव्ययम्। "सामि अर्द्धे" ( अव्ययार्थवाचम् ) असामि—अनर्द्धः पूर्णः। एवम्—असामि—अनन्तं पूर्णं च।

प्रथमं पृथक् पृथगर्थको मन्त्रो दीयते—

असामि—पूर्णम्—

उत यो मानुषेष्वा यशश्चक्रे असाम्या। अस्माकमुदरेष्वा ॥

( ऋ० १ । २५ । १५ )

यो वरुणोऽपि मानुषेषु मनुष्येषु मनुष्याणां निमित्तम्, निमित्तसप्तमी। यशोऽन्नम् "यशोऽन्ननाम" ( निघं० २ । ७ ) असामि पूर्णम्—आचक्रे समन्तात् करोति, "असामि सम्पूर्णम्" ( सायणः ) अस्माकमुदरेषु—उदरपूर्तिनिमित्तं च पूर्णमन्नं करोति। उदरपूर्तयेऽन्नप्रसङ्गेऽसामि पूर्णार्थकं नात्यन्तार्थं न ह्यत्यन्तं पूर्यते उदरे।

असामि—अनन्तमत्यन्तम्—

एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय।

( ऋ० ६ । ३८ । ५ )

हे इन्द्र! त्वमेव सहसे शत्रूणामभिभवाय जज्ञानं प्रादुर्भवन्तम्—असामि—अत्यन्तं 'बहुलम्' ( सायणः ) वावृधानं वर्धमानं त्वां राधसे धनाय श्रुताय यशसे च परिचरेम। अत्रासामि न पूर्णार्थं न हीन्द्रस्य वृद्धिमर्यादा तस्यानन्तशक्तिमत्त्वात्। तस्मादत्र—असामि—अत्यन्तार्थम्।

अथ यास्कोदाहृतो मन्त्रो यत्र—असामिशब्दोऽनेकार्थकः स व्याख्यायते—

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः।

ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥

हे सुदानवः शोभनं दानुं दानं येषां ते शोभनदानस्य ज्ञानस्य दातारो मरुतः! ऋत्विजो विद्वांसो वेदविदः! "मरुतः—ऋत्विजः" ( निघं० ३ । १८ ) यूयम्—असामि पूर्णं यद्वाऽसुमासमत्यन्तमोजोऽध्यात्मबलं बिभृथ धारयथेति वयं जानीमः। तथा हे धूतयः स्वतेजसा प्रतिपक्षिणः कम्पयितारो मरुतो विद्वांसो वेदविदः। असामि पूर्णं यद्वाऽसुसमासमत्यन्तं शवो बलं शरीरबलं बिभृथ धारयथेत्यपि वयं जानीमः। अतो यूयं मरुतो वेदविदः! परिमन्यवे परितः पूर्णो मन्युर्यस्मिन् तस्मै ऋषिद्विषे वेदविदीश्वराणां द्वेष्टरि—इषुं न बाणमिव द्विषं द्विष्टिं घृणामप्रसन्नतां सृजत तस्मै कृपा न विधेया। अत्र बलप्रसङ्गेऽसामि पूर्णार्थं चात्यन्तार्थं च सम्भवति शत्रुमभिभवितुं पूर्णं बलं स्यात् स्वपार्श्वे स्थापनाय बलस्य न मर्यादाऽतस्तदत्यन्तं स्यात्—यद्वाऽस्मिन्नेव मन्त्रेऽध्यात्मबलमोजोऽत्यन्तं स्यादतः शरीरबलं शवो बाह्यबलं पूर्णं भवेत्।

गल्दया ॥ १०६ ॥

"मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा।

भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्॥

( ऋ० ८ । १ । २० )

मा चुक्रुधं त्वां सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिमिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यत इति * ।
गल्दा धमनयो भवन्ति गलनमासु धीयते ।
"आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्"
( आपस्तम्ब श्रौत सू० ८ । ७ । १०, मानव श्रौ० १ । ७ । २ । १८ ) नानाविभक्ती त्वेते भवत आगलना धमनीनामित्यर्थः ॥ २४ ॥

भा०—'गल्दया' इत्यनवगतमनेकार्थं च । 'गालनेन' इत्यवगमः । 'स्रावणेन' अभिधेयम् । यद्वा 'आगलना' इत्यवगमः । 'धमनी' अभिधेया । "गल स्रवणे" ( चुरादि० ) ततः 'दन्' औणादिको भावे बाहुलकात् सोमपक्षे । धमनीपक्षे तु "गल अदने" ( भ्वादि० ) ततः कर्मणि क्विप् 'गल्' गलनीयोऽदनीयो रसः स धीयतेऽस्यां गल्दा, धकारस्य दकारभावश्छान्दसः ।
मन्त्रार्थः—

हे इन्द्र ! ऐश्वर्यवन् ! यदा याचन् याचमानोऽहं त्वां भूर्णिं भर्तारम् "भृञ् भरणे" ( भ्वादि० ) "भृञ् धारणपोषणयोः" ( जुहो० ) ततः 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णयः' ( उणा० ४ । ५२ ) इति निप्रत्ययान्तो निपात्यते । भूर्णिं भर्त्सयितारं सिंहमिव न चुक्रुधं न क्रोधयामि यतोऽहं सवनेषु यज्ञेषु सोमस्य गल्दया गालनेन स्रावणेनेव गिरा स्तुत्या स्तुतेः प्रसारणेन प्रसादयामीति यावत् । याचनापि कर्तव्या स्तुतिरपि विधेया । स्तुतिमुपासनामन्तरेण याचना क्रोधस्य कारणमनिवार्यम् । कदाचित् क्रोधभयस्याशङ्कया न याचना कर्तव्येत्यपि न युक्तं यतः क ईशानं न याचिषत् कं ईदृशः स्याद् भरणीयो य ईशानं स्वामिनं भर्तारं न याचेत 'याचिषत्' इति लिङर्थे लेट्प्रयोगः ।

गल्दा धमनीत्यत्र यास्को वचनमुदाहरति । यस्मिन्नुदाहृते मन्त्रेऽनेकार्थत्वं युज्यतेऽनेकार्थप्रसङ्गे प्रस्तावितशब्दस्यानेकार्थत्वं दर्शयितुमन्यवचनमुदाहरतीति विज्ञेयम् । अत्र मन्त्रे गल्दाशब्दस्यानेकार्थासम्भवादन्यद्वचनमुदाहरति—

आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम् ।
रसेन मे रसं पृण वाजिनो मे यज्ञं वहानि ॥
( आपस्तम्ब श्रौत० ८ । ७ । १०, मानव श्रौ० १ । ७ । २ । १८ )

---

* क्वचित् 'याचिष्यति' इति पाठः ।

हे इन्द्र ! इन्दवः सोमाः सोमरसाः 'बहुवचने तन्नवाः—उच्यन्ते, यथा 'सूर्याः सूर्यभवा रश्मयः' त्वामाविशन्तु त्वयि समाविशन्तु कस्मिन्नङ्गे ? अत्रोच्यते 'आ गल्दा धमनीनाम्' धमनीनां मध्ये या गल्दाः—धमन्य आगलनाः—ताः—आविशन्तु यासु गलनमन्नरसो धीयते ध्रियते। भोजनरसाधानभूता गल्दा धमन्यः॥

नानाविभक्ती तु—एते पदे । 'सोमस्य गल्दया'—'गालनेन' यस्यानुवादः । 'आगल्दा धमनीनाम्' 'धमनयः' यस्य वाच्यमासीत्—या आगल्दा । पूर्वत्र 'मा त्वा सोमस्य गल्दया' अत्र 'आ त्वा विशन्त्विन्दव आगल्दाः' नानाविभक्तित्वात् 'गल्दया गालनेन भावप्रधानोऽर्थः 'गल्दाः' धमनयो वस्तुप्रधानोऽर्थः । नात्र दोषः, गल्दा गालनं धमनी चेत्युभयार्थभाक् 'गल्दा' शब्दः । अनेकार्थप्रसङ्गादर्थद्वयं प्रदर्शितम् ।

जल्हवः ॥ १०७ ॥
"न पापासो मनामहे नारायसो न जल्हवः ।"
( ऋ० ८ । ६१ । ११ ) न पापा मन्यामहे नाधना न ज्वलनेन हीनाः । अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्मेत्यृषिरवोचत् ॥ २५ ॥

भा०—'जल्हवः' इत्यनवगतम् । 'ज्वलनहीनाः' इत्यवगमः । अल्पाक्षरसाम्यात् । 'आहिताग्नयोऽग्निहोत्रिणः' इत्यभिधेयम् । "ज्वल दीप्तौ" ( भ्वादि० ) ततः क्विप् ज्वल् ज्वलं जहाति—त्यजति 'ज्वल्' उपपदे "ओहाक् त्यागे" (जुहो०) ततः कुः प्रत्ययः, प्रत्ययसन्नियोगेन वकारलोपः । 'मृगय्वादयश्च" ( उणा० १ । ३७ ) इत्यनेन बाहुलकात्—जल्हवः । एकस्मिन्नेव मन्त्रे सकृत्प्रयुक्तत्वादेकार्थ एव । समग्रमन्त्रस्तदर्थश्च—

न पापासो मनामहे नारायसो न जल्हवः ।
यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥

ऋषिः प्रागाथो भर्गः—प्रगता प्रकृष्टा गाथा वाक् प्रगाथा प्रादिसमासः "प्रादयो गताद्यर्थे प्रथमया" वा० ( अष्टा० २ । २ । १८ ) "गाथा वाङ्नाम" ( निघं० १ । ११ ) सा च प्रगाथा वेदवाक् तां योऽधीते वेद वा स प्रागाथः "तदधीते तद्वेद" ( अष्टा० ४ । २ । ५८ ) वेदस्य वेत्ता स च भर्गः—चरितब्रह्मचर्यत्वात्—ब्रह्मचर्यतेजसा भर्गस्तेजस्वी । तद्वेदनं मन्त्रे यद् वयं न पापाः सन्तस्त्वां मन्यामहे किन्तु पुण्यात्मानः सन्तस्त्वां मन्यामहे स्तुमः, वयं तु वेदविदस्तेजस्विनश्चरितब्रह्मचर्यत्वात्—अधीतो वेदः, चरितं ब्रह्मचर्यं तपश्च, दानं च क्रियते

विद्याया धनस्य च तस्मात्र पापाः पापिनो वयम् । वेदस्याभिप्रायं लक्षयित्वा यास्केनोक्तं यथा "अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्म' इति ऋषिर्ध्यात्मद्रष्टा कथयति । पुनश्च न—अरायासः—न धनहीनाः सन्तस्त्वां मन्यामहे स्तुमः, पापाचरणात् प्राप्तधनाः खलु धनहीनाः—न तद्धनस्यात्मने फलं किञ्चित् किन्तु सदाचारात् प्राप्तालपधना अपि महाधनास्तस्माद् वयमधनाः—न ह्यधनवन्तः सन्तो मन्यामहे स्तुमः, न जल्हवः—नानाहिताग्नयः सन्तो मन्यामहे त्वां स्तुमः, ब्रह्मचर्याश्रमेऽपि तदुपरान्तं स्नातकोत्तरकालेऽपि वयमग्निहोत्रिणो विशेषतः प्राणाग्निं ज्वलयन्त आध्यात्मिकाः सन्तस्त्वां स्तुमः । यद्—इत्—नु यतो हीत्थं निष्पापत्वादिगुणापन्नाः सन्तः—इन्द्रस्य स्तवनेन वयं वृषणं सुखस्य वर्षकमिन्द्रं सुते सम्पन्नेऽध्यात्मयज्ञे सचा स्वात्मना सह भूतं सखायं कृणवामहै कुर्मः ॥

बकुरः ॥ १०८ ॥

बकुरो भास्करो भयङ्करो भासमानो द्रवतीति वा ।

"यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभिदस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥"
( ऋ० १ । ११७ । २१ )

यवमिव वृकेणाश्विनौ निवपन्तौ । वृको लाङ्गलं भवति विकर्तनात् । लाङ्गलं लङ्गतेर्लाङ्गूलवद्वा । लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वा । अन्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ । दस्युं बकुरेण ज्योतिषा वोदकेन वार्य ईश्वरपुत्रः ॥

भा०—'बकुरः' इत्यनवगतमनेकार्थं च । 'भास्करः, भयङ्करः, भासमानः सन् द्रवणः' इत्यवगमः । 'ज्योतिः' यद्वा 'उदकम्' इत्यभिधेयम् । 'बकुरः' इति 'ब—कुरः' 'भास्' 'भयम्' इत्यस्य 'ब' भावः, यतो हि भातीति भः 'भा दीप्तौ' ततः 'डः' प्रत्ययः, "अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३ । २ । १०१ ) बिभेत्यस्मादिति 'भः' 'भी भये' 'डः' प्रत्ययः । 'भास्—भः, 'भास्' वा 'भयम्' उपपदे कृधातोः—डुरन् प्रत्ययः, एवमेव भासमानो द्रवति—इति वाक्यार्थे 'भ' प्रारम्भिक उपात्तः 'भ' इत्युपपदेऽपि तथैव कृधातोः—'डुरन्' प्रत्यय औणादिकः शब्दसिद्धिः "मद्गुरादयश्च" ( उणा० १ । ४१ ) निपातनात्—पृषोदरादिवत् ।

मन्त्रार्थः—

हे अश्विनौ सुखस्य व्यापयितारौ विशेषेण प्रापयितारौ युवां बकुरेण लाङ्गलेन

हलेन क्षेत्रं कर्षयित्वा तत्र यवमिव वापयन्तौ निवापयन्तौ पुनस्तत इषमन्नं दोहयन्तौ गोदुग्धमिव पृथिव्या अन्नं दोहयन्तौ युवां दस्रौ दर्शनीयौ विद्युत्सूर्यौ वा दस्युम् "दस्यत्यस्मिन् रसाः–अन्नानि–उपदासयति कर्माणि वा" ( निरु० ७ । २२ ) यस्तमनावृष्टिकालं दुष्कालं दुर्भिक्षं बकुरेण ज्योतिषा यद्वा–उदकेनाभिधमन्तौ युवां सूर्य ! त्वं ज्योतिषा रश्मिसमूहेन समुद्रतो वाष्परूपेण जलमुत्थाप्य मेघं सम्पादयसि पृथिव्यां वर्षितुम् । विद्युत् ! त्वं मेघं हत्वा तदुदकेन भूमेः शुष्कत्वं दुर्भिक्षं हरसि । युवां धमन्तौ मेघं नाशयन्तावार्याय–अयं ईश्वरस्तत्पुत्राय मनुष्याय–उरुज्योतिः–महज्ज्योतिर्जीवनं प्राणं चक्रथुः कुरुथः । "प्राणो वै ज्योतिः" ( शत० ८ । ३ । २ । १४ ) ।

निरुक्तयः—वृकः–विकर्तनात्–वृकोलाङ्गलो हलो विकृन्तति विभभागरूपे कृतन्ति । "कृती छेदने" ( तुदादि० ) विकृत्–'वि–कृत्' उपसर्गधात्वोः स्वरव्यतिहारः 'वृकित्' पुनः 'डः' प्रत्ययः "अन्येभ्योऽपि दृश्यते" । ( अष्टा० ३।२। १०१) वृकः–लाङ्गलः, लाङ्गलं लङ्गतेः "लगि गत्यर्थः" ( भ्वादि० ) ततः "लङ्गेर्वृद्धिश्च–कलः" ( उणा० १।१०८ ) कलप्रत्ययः, लाङ्गूलमिव पुच्छमिव भवति हलस्य पश्चाद्भागो लोहमयाणिमान् । प्रसक्तानुप्रसक्तं लाङ्गूलं निर्वक्ति लाङ्गूलं लगधातोः, लगिधातोः, लबिधातोर्वा "खर्जिपिञ्जादिभ्य ऊरोलचौ" ( उणा० ४ । ९० ) इति पिञ्जादिभ्य ऊलच् प्रत्ययो धातोर्वृद्धिश्च । लाङ्गूलं पृष्ठे शरीरस्य पश्चाद् गच्छति लाङ्गूलं शरीरस्य पश्चाद्भागे लग्नं पुच्छं लाङ्गूलमुच्यते, शरीरस्य पश्चाद्भागो यो लम्बते स भागः पुच्छं लाङ्गूलम् ।

बेकनाटान् ।। १०९ ।।

बेकनाटाः खलु कुसीदिनो भवन्ति द्विगुणकारिणो वा द्विगुणादायिनो * वा द्विगुणं कामयन्त इति वा ।

"इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि" ( ऋ० ८ । ६६ । १० )

इन्द्रो यः सर्वान् बेकनाटानहर्दृशः सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति, वाऽभिभवति कर्मणा पणींश्च वणिजः ।। २६ ।।

भा०—'बेकनाटान्' इत्यनवगतम् । 'द्विगुणकारिणः–यद्वा–द्विगुणादायिनः–

* 'द्विगुणदायिनः' इति पाठो लिपिप्रमादात् तस्याप्रासङ्गिकत्वात् । 'द्विगुणादायिनः' इति स्यात् ।

यद्वा द्विगुणं कामयमानाः' इत्यर्थप्रदर्शनरूपोऽवगमः 'कुसीदिनः' उत्तमर्णाः—वृद्धिजीविनः—ऋणं दत्त्वा तदुपरि धनं कामयमानाः—अभिधेयाः । 'द्वि' शब्दस्य 'ब्' भावो भवति द्वौ दशौ विंशतिः—द्वौ—इत्यस्य 'बिम्' हिन्दीभाषायां च "बारह, बाईस, बत्तीस" गुजरातीभाषायां च 'एक बे त्रण' 'ब्' इति द्वौ स्यातां मह्यम्—एकस्य—इति 'ब्—एकः' बेकः—'बेक' उपपदे नटधातोः—अण् बेकनाटाः—बेकं द्वावेकस्य स्थाने प्राप्य नटन्ति नृत्यन्ति—आनन्दन्ति ते, यद्वा बेकेन—अटन्ति गच्छन्ति सुखमधिगच्छन्ति ते बेकनाटाः—तृतीयाया अलुकि सति, यद्वा 'बेक' उपपदे नी धातोः 'डाटन्' प्रत्यय औणादिको बाहुलकात्—बेकनाटः, ते बेकनाटाः—द्विगुणकारिणो द्विगुणादायिनो द्विगुणं कामयन्ते द्विगुणगामिनो वा कुसीदिनः ।

समग्रमन्त्रस्तदर्थश्च—

कद्रू॒ म॒हीरधृ॑ष्टा अस्य॒ तवि॑षीः॒ कदु॑ वृत्र॒घ्नो अस्तृ॑तम् ।

इन्द्रो॒ विश्वा॑न् बे॒कना॑टाँ अह॒र्दृश॑ उ॒त क्रत्वा॑ प॒णीँर॒भि ॥

अस्य इन्द्रस्य शक्तिमतो राज्ञो मही महत्योऽधृष्टाः—अन्यैरपरास्तास्तविषीस्तविष्यो बलरूपाः सेनास्ताभिः कत्—उ कस्मिन्नपि काले तथास्येन्द्रस्य वृत्रघ्नः—वृत्रं शत्रुं हन्ति यस्तस्येन्द्रस्य—अस्तृतमन्यैरनाशितं वज्रम् 'इत्याकांक्षा' "स्तृणाति वधकर्मा" ( निघं० २ । १९ ) तेन 'कत्—उ' कस्मिन्नपि काले स इन्द्रो राजा विश्वान् सर्वान् बेकनाटान् मूलधनतो द्विगुणकारिणो यद्वा द्विगुणं कामयमानान् कुसीदिनः पणीन् वणिजो जनान्—उतावश्यं क्रत्वा कर्मणा कर्महेतुना मूलतो द्विगुणग्रहणं दुष्कर्म तेन दुष्कर्महेतुना—अभि—अभिभविष्यति दण्डयिष्यति । तानहर्दृशः, तेऽहः सूर्यं पश्यन्ति "अहः स यदादित्य उदेति" (तै० १।५।१०।७) न हि सूर्ये वर्तमानं परमात्मनं पश्यन्ति "योऽसावादित्ये पुरुषः सोऽसावहम्—ओ३म् खं ब्रह्म" ( यजु० ४ । १७ ) न तं मन्यते ततो न बिभ्यति, यद्वा ये—इमान्यहानि—ऐहलौकिकानि—अहानि दिनानि पश्यन्ति न पराणि परजन्मसम्बद्धानि पश्यन्ति पापकृत्यया किमस्माकमग्रे जन्मनि भविष्यति ॥

अभिधेतन ॥ ११० ॥

"जी॒वान्नो॑ अ॒भि धे॑त॒नादि॑त्यासः॒ पु॒रा ह॒थात् ।

कद्ध॑ स्थ हवनश्रुतः ॥" ( ऋ० ८ । ६७ । ५ )

जीवतो नोऽभिधावतादित्यासः पुरा हननात् क नु स्थ ह्वानश्रुत इति । मत्स्यानां जलमापन्नानामेतदार्षं वेदयन्ते ।

मत्स्या मधौ—उदके स्यन्दन्ते माद्यन्तेऽन्योऽन्यं भक्षणा-
येति वा। जालं जलचरं भवति जलेभवं वा जलेशयं वा॥

भा०—'अभिधेतन' इत्यनवगतं पक्षेणानेकार्थं च। 'अभिधावत' इत्यवगमः "धावु गतिशुद्ध्योः" (भ्वादि०) इत्यस्मात्—लोटि मध्यमपुरुषस्य बहुवचने 'त' इत्यस्य स्थाने "तप्तनप्तनथनाश्च" (अष्टा० ७।१।४५) इत्यनेन 'तनप्' आदेशस्तथा 'धाव' इत्यस्य च 'धे' भावश्छान्दसः। इति त्वनवगतपक्षे, अवगतपक्षे 'अभिधेतन' इति "धि धारणे" (तुदादि०) इत्यस्य रूपम्। अभिधारयत—अभिरक्षतेत्यर्थः। "मत्स्यानां जालमापन्नानामेतदृषं वेदयन्ते" इति विवरणमनवगतपक्षे दर्शितं यास्केन 'वेदयन्ते' क्रियाबहुवचनम् 'एके' इति पदमपेक्ष्यते, एके वेदयन्ते। अस्य सूक्तस्य—ऋषिः "मैत्रावरुणिर्मान्यः, यद्वा मत्स्या जालनद्धाः।" इत्यतः 'मत्स्या जालनद्धा' इति विकल्पोऽनवगतपक्षे लक्षितः, अवगतपक्षे तु "मैत्रावरुणिर्मान्यः।"

अनवगतपक्षे मन्त्रार्थः—

हे आदित्याः—क्षत्रियाः! क्षतात्—त्राणेऽधिकृता राजपुरुषाः "त्यान्नु क्षत्रियाँ अव आदित्यान् याचिषामहे" इत्यस्य सूक्तस्य प्रथममन्त्रे खलूक्तत्वादत्र—आदित्याः—क्षत्रियाः, हवनश्रुतः—ह्वानस्य श्रोतारः क्व नु स्थ, यत्र स्थ ततो वधात् पुरा हननात् पूर्वमस्मान् जालनद्धान् जालमापन्नान् मत्स्यान्—अभिधावत—इति याचामहे।

राष्ट्रे मानवेतराणां प्राणिनां रक्षाविभागेनापि भवितव्यम्, मत्स्यानामपि रक्षा कार्या यतो मत्स्या जलं शोधयन्ति। "जालमापन्ना मत्स्या ऋषयः" इति कथनं केवलं भावनात्मकं न च कर्तृपक्षे बहवो मत्स्या मन्त्राणां कर्तारो भवितुमर्हन्ति, नैव द्रष्टृपक्षे द्रष्टारो भवितुमर्हन्ति। बहूनां जनानां मत्स्या बहुवचने नामेति न युक्तम्। वस्तुतः—भावना ऋषयः, यथास्थिति यथानुभूति तथा ऋषयो भवन्ति। मत्स्या ऋषयः—इतीत्थं विज्ञेयं भावनायां यत् "देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरच्छादयन्....तानु तत मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि ते नु विस्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन्। ओम् स्वरः, तत्प्रविश्य अमृता जाताः" (छान्दो० १।१।४) संसारसागरे मननशीला आत्मानं मत्स्यान् मन्यन्ते ते मृत्योर्जाले बद्धा मत्स्या इव वेदयन्ते स्वात्मानम् 'ओम्' इत्यक्षरम्, 'अ—उ—म्' इति जपन्ति, एते त्रयो वर्णाः क्षत्रियाः क्षतात् त्रातारः 'मित्रः—वरुणः—अर्यमा'

च सन्ति, मित्रोऽग्निः–'अ ।' वरुणः–वायुः–'उ ।' अर्यमा–आदित्यः–'म्' शरण्याः सन्ति । इत्थं भवतु खल्वनवगतपक्षे ॥

अवगतपक्षे तु 'अभिधेतन'–अभिधारयत–अभिपोषयत । तत्रा ऋषिः–"मैत्रावरुणिर्मान्यः' अत्राध्यात्मिकाधिभौतिकदृष्टी स्तः । प्रथममाध्यात्मिकीं दृष्टिं लक्षयित्वा व्याख्या क्रियते तत्र–मित्रावरुणौ प्राणोदानौ–अन्त:प्राणस्य गमनागमनप्रक्रमौ "प्राणोदानौ वै मित्रावरुणौ" ( शत० १ । ८ । ३ । १२ ) तत्सम्बन्धी मान्यः–मन्यते बुध्यते जानाति यः, अन्यैरपि यो मान्यः "मन ज्ञाने" ( दिवादि० ) स मानवशिशुः । तौ मित्रावरुणौ क्षत्रियौ "मित्रः क्षत्रम्" ( शत० ११ । ४ । ३ । ११ ) "क्षत्रं वै वरुणः" ( शत० २ । ५ । २ । ६ ) शिशोस्त्रातारौ प्राणेदानौ स्तः । पुनश्च 'अर्यमा' मुख्यप्राणः–प्राणोदानयोः स्वामी "अर्यमा–आदित्यः" (निरुक्त० ११।२३) स प्राणोऽप्युच्यते सूर्यः "प्राणः प्रजानामुदयत्येष सूर्यः" ( प्रश्नो० १ । ८ ) तस्मात्–मुख्यप्राणोऽर्यमा । एवं प्राणोदानौ मुख्यप्राणश्च क्षत्रियाः शिशोः क्षतात् त्रातारः । ते त्रयोऽत्रादित्याः । ते प्रथममन्त्रे याचिताः "त्यान्नु क्षत्रियाँ अव आदित्यान् याचिषामहे । सुमृळीकाँ अभिष्टये ॥" ( १ ) आदित्यान् क्षत्रियान् सुमृळीकान् सुसुखयितॄन्–अवो रक्षणम्–अभिष्टयेऽभीष्टभोगाय याचामहे । ते–आदित्या द्वितीये मन्त्रे विप्रियन्ते "मित्रो नो अत्यंहतिं वरुणः पर्षदर्यमा । आदित्यासो यथा विदुः ॥" ( २ ) ते मित्रावरुणौ प्राणोदानौ मुख्यप्राणश्च त्रयः–आदित्याः–अंहतिं जीवनक्षयकरं रोगं दूरं गमयन्तु । "तेषां हि चित्रमुक्थ्यं वरूथमस्ति दाशुषे । आदित्यानामरङ्कृते ॥" ( ३ ) तेषामादित्यानां मित्रावरुणार्यम्णां प्राणोदानमुख्यप्राणानां हि–उक्थ्यं प्रशंसनीयं चित्रमद्भुतं वरूथं गृहमिदं शरीरम् "वरूथं गृहनाम" (निघं० ३ । ४ ) अरङ्कृते–दाशुषे शोभनं कर्म कुर्वते परमात्मानं प्रति स्वात्मसमर्पणं कृतवते । तथा "महि वो महतामवो वरुण मित्रार्यमन् । अवांस्या वृणीमहे ॥" ( ४ ) हे प्राण ! अपान ! मुख्यप्राण ! युष्माकं महद् रक्षणं प्रत्येकमहोदयस्य सर्वेषां बहूनि रक्षणानि–आवृणीमहे–समन्ताद् याचामहे, इति प्रकारे मन्त्रार्थः—

जीवान्नो अभिधेतनादित्यासः पुरा हथात् ।
कद्ध स्थ हवनश्रुतः ॥

हे आदित्याः–प्राणोदानमुख्यप्राणाः–श्वासोच्छ्वासमुख्यप्राणा यूयं हथात्–हननशीलान्मरणात्–जराधर्मात् पूर्वं जरया स्वाभाविकमृत्योः पूर्वं नोऽस्मान् जीवान् मनुष्यान्–अभिधेत–अभिधारयत–पोषयत । उक्तं ह्यग्रे विंशे मन्त्रे "मा

त्रो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः । पुरा नु जरसो वधीत् ॥" ( २० )
हे आदित्याः—श्वसोच्छ्वासमुख्यप्राणाः—अस्मान् विवस्वतः—वैवस्वतस्य कालस्य यमस्य मृत्योः कृत्रिमा—अस्वाभाविकी हेतिः—घातसाधनं जरसः पुरा जरावस्थातः पूर्वं मा वधीत्—न हन्यात् । तथा यूयं वर्तध्वम् । मानवेनास्वाभाविकात्—मृत्युतः सदा रक्षा कार्या ॥

आधिभौतिकदृष्टौ—व्यावहारिकदृष्टौ तु मित्रः सेनावर्गः, वरुणः—राजसभासद्वर्गः, ताभ्यां सम्बद्धः प्रजाजनो मान्यः, यो मन्यते राष्ट्रे सुखेन वसितुमधिकारमात्मनः । अर्यमा सेनासभासद्वर्गयोः स्वामी राजा । एते क्षत्रियाः प्रजाजनानां क्षतात् त्रातारः । प्रजाजनः प्रार्थयते—"स्यान्नु क्षत्रियाँ अव आदित्यान् याचिषामहे । सुमृळीकाँ अभिष्टये ॥" ( १ ) हे मित्र ! सेनावर्ग ! वरुण ! राजसभासद्वर्ग ! अर्यमन् ! राजन् ! तान् युष्मान् क्षत्रियान् क्षतात् त्रातॄन् सुमृळीकान् सुखस्य दातॄन्—अवो रक्षणं याचामहेऽभिष्टयेऽभीष्टपूर्तये ।

तत्र मन्त्रार्थः—

हे सेनावर्ग ! राजसभासद्वर्ग ! राजन् ! च यूयमादित्याः—आदित्यवद् राष्ट्रनायकाः ! आह्वानस्य प्रार्थनायाः श्रोतारः क्व स्थ कुत्रचिदपि स्थ हथात् पुरा मृत्योः प्राग् यावद् वयं जीवामस्तावत् पर्यन्तं राष्ट्रे नोऽस्मान् जीवान् प्रजाजनानभिधेतन—आभिधारयत पोषयतेति याचामहे । कथमित्युच्यते "यद्वः श्रान्ताय सुन्वते वरूथमस्ति यच्छर्दिः । तेना नो अधिवोचत ॥" ( ६ ) श्रान्ताय कर्माणि कुर्वते श्रान्तत्वं गताय सुन्वते यज्ञेऽध्यात्मयज्ञे च जनहिताय सोमौषधिरसं वितरितवते स्वहितायोपासनरसं सम्पादितवते वो युष्माकं युष्माभिर्दातव्यं दत्तं वा वरूथं वारणं शरणं नगरं तत्र छर्दिः—गृहं यदस्ति तेन दत्तेन नोऽस्मान्—अधिवोचत सुरक्षाधिकारं स्वीकुरुत पूर्णरक्षावचनमस्मभ्यं दत्त । पुनः "शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयम् । पुरा नूनं बुभुज्महे ॥" ( १६ ) हे सुदानवः शोभनदानवन्तः—आदित्याः—आ समन्ताद् दातारः—वो युष्माकमूतिभिः—रक्षाभिः शश्वत् सदा निरन्तर वयं पुरा—मृत्योः प्राक्, नूनं निश्चिन्तं बुभुज्महे भोगान् भुञ्जीमहि । यावज्जीवनं प्रजाजनानां रक्षणं सेनावर्गराजसभासद्वर्गराजभिः कार्यम् ॥

निरुक्तयः—मत्स्याः—मधौ—उदके "मधु—उदकम्" ( निघं० १ । १२ ) स्यन्दते "मधु स्यन्द" डप्रत्यये मधुशब्दस्य मद्भावः—मत्स्याः । अन्योऽन्यं भक्षणाय माद्यन्ते हृष्यन्ति । 'मद् स्य प्रत्ययः' "ऋत····मदि····हशिभ्यः"····

स्य.....'' (उणा० ४ । २) आलं जलचरं जले चरम्—जले भवं जले शयं वा, जल-शब्दात्—अण् प्रत्ययः, जालम् । 'चरति, भवे, शेते' इत्येतेष्वर्थेषु तद्धितोऽण् प्रत्ययः॥

अंहुरः ॥ १११ ॥

अंहुरोंऽहस्वानंहूरणमित्यप्यस्य भवति । "कृण्वन्नं हूरणा-दुरु" ( ऋ० १ । १०५ । १७ ) इत्यपि निगमो भवति । "सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्" ( ऋ० १० । ५ । ६ ) सप्तैव मर्यादाः कवयश्च-क्रुस्तासामेकामप्यभिगच्छन्नंहस्वान् भवति, स्तेयं तल्पारो-हणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यमिति ॥ २७ ॥

भा०—'अंहुरः' इत्यनवगतम् । 'अंहस्वान्' इत्यभिधेयवचनम् । 'अंहूरणम्' इत्यपि–अस्य–अंहुरस्य नाम समानार्थमस्ति–इत्यपि 'अंहस्वान् ।' आङ्पूर्वात् "हन् हिंसागत्योः" ( अदादि० ) इत्यस्मात् कुः प्रत्ययः "मृगय्वादयश्च" ( उणा० १ । ३७ ) उपसर्गस्य ह्रस्वत्वं नकारस्य पूर्वप्रवर्तनं च निपातनादेव । अंहुः पापम्, उक्तं हि यथा पूर्वम् "अंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् विपरीतात्" ( निरु० ४ । २५ ) एवम् 'अंहुः' शब्दात् 'रः' मत्वर्थीयः 'अंहुरः' एव 'अंहू-रणः' 'नः' तद्धितः प्रत्ययः स्वार्थे, उकारस्य दीर्घत्वं च छान्दसम् । यद्वा 'उरच्' इतिवत् 'ऊरणच्' प्रत्ययः स्वतन्त्र एव "बहुलं छन्दसि" ( अष्टा० ५ । २ । १२२ ) 'अंहूरणः' इत्यस्यापि निगमो भवति 'अंहुरः' इत्यस्यार्थे । पूर्वं यथा 'च्यवनम्' इत्यस्य 'च्यवानम्' इत्यपि, 'रास्पिन' इत्यस्य 'रास्पी' इत्यपि । तथैवात्रापि विज्ञेयम् 'अंहूरणः' इत्यस्य पूर्वं निगमं दर्शयत्याचार्यः पश्चात् 'अंहुरः' इत्यस्य दर्शयिष्यति ।

'अंहूरणः' इत्यस्य समग्रमन्त्रस्तदर्थश्च—

त्रितः कूपेऽवहितो देवान् हवत ऊतये ।

तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥

त्रितः—इन्द्रो जीवात्मा त्रिस्थानः स्थूलसूक्ष्मकारणशरीरेषु वर्तमानः "त्रितस्त्रि-स्थानः" ( निरु० ९ । २४ ) अथर्ववेदे च "अदब्धासुर्भ्राजमानो हेव त्रितो धर्ता दाधार त्रीणि । धास्युर्योनिं प्रथम आ विवेशा यो वाचमनुदितां चिकेत ॥ ( अथर्व० ५ । १ । १,२ ) कूपे स्थूलदेहे देहाभ्यन्तरे गर्भे * । अवहितः-

* त्रितस्य कूपपतनमित्यालङ्कारिकं महाभारते प्रदर्शितं तत्रोक्तम्—"यस्तत्र कूपो नृपते स तु देहः शरीरिणाम्" (महाभारते स्त्री० प० ६।७)

अवहितः—अवस्थितः—ऊतये रक्षणाय देवान् हवते प्रार्थयते *। हे देवाः! अहं महादुःखकूपेऽस्मि मे मम वृत्तं हे रोदसी द्यावापृथिव्यौ—मातापितरौ युवां वित्तं जानीतम्। तदार्तवचनं बृहस्पतिः सर्वज्ञोऽन्तर्यामी परमात्मा श्रुतवान्, अन्ये जडदेवाः श्रोतुं न समर्थाः, स च परमात्मा तमंहूरणात्—आघातकादन्धकूपात्—उरु कर्मकरणे बहुसमर्थं कृण्वन् कुर्वन् शुश्रावेति सम्बन्धः। दुःखमयगर्भकूपात्—मातापितरौ न मोचयितुं शक्तौ न च जीवात्मा स्वयं बहिरागन्तुं समर्थः परन्तु परमात्मैव मोचयिता बहिर्निस्सारयिता, स एव देहमयात् संसारकूपात्—मोचयिष्यतीति निश्चित्य स उपास्यः।

'अंहुरः' इत्यस्य विषये समग्रमन्त्रस्तदर्थश्च—

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ॥

कवयो मेधाविनो विद्वांसः "कविः—मेधाविनाम" (निघं० ३।१५) सप्त मर्यादाः—जीवनयात्राया अनुल्लङ्घनीया व्यवस्थाः—ततक्षुः—तक्षन्ति—तक्षन्तु "छन्दसि लुङ्लङ्लिटः" (अष्टा० ३।४।६) इति सामान्यकाले लिट्। पुनस्तासामेकामपि—अभिगात्—अभिक्राम्येत्—उल्लङ्घयेत् स 'अंहुरः'—अंहस्वान्—पापवान् पापी भवति। 'सप्त मर्यादाः कवयस्तक्षन्तु' इति वेदाज्ञया कविभिर्विद्वद्भिस्ता मर्यादास्तक्षितास्ताः परिगणिता यास्केन 'स्तेयम्, गुरुतल्पारोहणं गुरुपत्नीसम्भोगः, ब्रह्महत्या, भ्रूणहत्या—गर्भपातनम्, सुरापानम्, दुष्कृतस्य कर्मणः—पापकर्मणः पुनः पुनराचरणम्, पातकेऽनृतोद्यम्—पापे कृतेऽनृतभाषणं न मया पापं कृतम्' इति सप्त मर्यादाः। अथ मर्यादानामनभिगमने जनः—आयोः—ज्योतिषो हि यः स्तम्भस्तस्मिन् "आयोर्ज्योतिर्वः" (निरु० १०।४१) उपमस्योपमन्तुं योग्यस्य परमात्मनोऽन्तिकतमस्य नीडे—शरणे मोक्षपदे पथां विसर्गे यस्मिन् यात्रायाः पन्थानो विसृज्यन्ते त्यज्यन्ते यात्रायाः पथां वा लक्ष्ये प्राप्तव्यस्थाने धरुणेषु प्रतिष्ठासु—आनन्दैश्वर्यप्रतिष्ठासु तस्थौ तिष्ठति "प्रतिष्ठा वै धरुणम्" (शत० ७।४।२।५)।

बत: ॥ ११२ ॥
बत इति निपातः खेदानुकम्पयोः।
"बतो बतासि यम नैव ते मनो हृदयञ्चाविदाम।

* निरुक्ते गर्भस्थस्य पश्चात्तापो दर्शितः—"अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः। सांख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम् (निरु० १४।६)

अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ॥" ( ऋ० १० । १० । १३ )
बतो बलादतीतो भवति । दुर्बलो बतासि यम नैव ते मनो हृदयं च विजानीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षम् । लिबुजा व्रततिर्भवति लीयते विभजन्तीति । व्रततिर्वरणाच्च संयनाच्च ततनाच्च ।

भा०—'बतः' इत्यनवगतमनेकार्थं च निपातः 'खेदानुकम्पयोः' इत्यर्थवचनं निपातप्रसङ्गे । 'बलादतीतः—दुर्बलः' इत्यवगमो विशेषणं पदं नामप्रसङ्गे । 'बलात्—अतीतः' सति समासे द्वयोः पदयोर्यथाक्रममाद्यन्तौ सस्वरौ बकारतकारौ शिष्येते छान्दसत्वात् । अत्र 'बत' इति शब्दः, त्रिष्वर्थेषु वर्तते । बतः—बलादतीतो दुर्बलः, अनुकम्पनीयः खेदप्राप्तश्च । अनवगतपक्षे बलादतीतो दुर्बलः, तद्भिन्नपक्षे प्रसिद्धपक्षे खेदानुकम्पयोः प्रसिद्धः 'खेदः, अनुकम्पा' इति प्रसिद्धावर्थौ । ऋग्वेदेऽथर्ववेदे च बतशब्दवान् मन्त्र एष एव एकः प्रयुक्तः, शाखासंहितास्वपि न क्वचिद् बतशब्द उपलभ्यते, ब्राह्मणग्रन्थेषु तूपलभ्यते खेदानुकम्पादुर्बलेष्वर्थेषु । प्रथमं तत उदाहरणानि प्रदर्श्यन्ते ।

खेदार्थे बत—

"मनोर्ह वा ऋषभ आस तस्मिन्नसुरघ्नी सपत्नघ्नी वाक् प्रविष्टाऽऽस तस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानि यन्ति ते हासुराः समूदिरे पापं बत नोऽयमृषभः सचते" ( शत० १।१।४।१४ )

अत्र बतशब्दः स्पष्टं हि खेदे वर्तते । ऋषभस्यास्य श्वासात्—शब्दाच्च हिंस्यमानाः स्मः, खेदः—अयमृषभोऽस्मान् सचते समवैति ।

अनुकम्पायां बत—

"स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यु व्याख्यास्यामि त्वा" ( शत० १४।५।४।४ )

प्रिया बत—अरे मैत्रेयि !—अनुकम्पनीये—'अनुकम्पा' ।

बलादतीतो दुर्बलो बत—

"सा होवाच अवीर इव बत मेऽजनः" ( शत० ११।५।१।३ )

अवीर इव बत ! बलादतीत दुर्बल ! त्वं मम जातः । 'बत' अत्र आमन्त्रिते सम्बोधने ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यत्र 'बत' शब्दोऽनेकार्थकः—

हे बत ! यम हे दुर्बल ! यम ! सत्यं त्वं बतो बलादतीतो विगतबलोऽसि । अत्र 'बत' सम्बोधने यम ! सम्बोधनस्य विशेषणम् "आमन्त्रितस्य च" ( अष्टा० ८ । १ । १९ ) 'बत' सर्वमनुदात्तम् । इति त्वनवगतपक्षे, प्रसिद्धपक्षे खेदार्थोऽनुकम्पार्थश्च । इत्थं च हे यम ! ते मनो हृदयं च नैवाविदाम नालभे "विद् लाभे" ( तुदादि० ) बत खेदोऽस्ति मयि यद्वा हे यम ! ते मनो हृदयं च नैवाविदाम त्वं बतो बलादतीतो दुर्बलोऽसि नाहं तवोपयुक्ता नारी, बत—अच्छ त्वामन्या किल परिष्वजाते—परिष्वजेत परिष्वक्ष्यते या तव योग्या भवेत्—इति कथने 'बत' अनुकम्पायां लक्ष्यते । सा चान्या स्त्री कक्ष्या—कक्षगता रज्जुरिव त्वां युक्तं यथा कक्षगता रज्जुरश्वं परिष्वजते यद्वा लिबुजा व्रततिर्लता—इव वृक्षं त्वां युक्तं यथा लता वृक्षं परिष्वजते तथा परिष्वक्ष्यते—आलिङ्गयिष्यति । इति समस्तार्थः । यमोऽत्र पतिः यमी पत्नी । खागौलिकदृष्टौ यमो दिवसः, यमी रात्रिः । भूगोलस्यैकस्मिन् पार्श्वे दिवसोऽन्यस्मिन् पार्श्वे रात्रिः, मध्ये पृथिवी-गोलो वर्तते तयोः समागमो न भवितुं शक्यः । आलङ्कारिकदृष्ट्या रात्रिराकांक्षति दिवसस्यालिङ्गनं परन्तु दैविकनियमात् तयोः समागमो न भवति तस्माद् रात्रि-र्विलापं कुर्वती निराशा सती मन्त्रेऽभिनयं करोति तेन नियोगस्य शिक्षा प्राप्यते । अस्य विशिष्टं विवरणं पश्यन्तु मया रचिते 'यमयमी सूक्तम्' इति पुस्तके यद्वा 'यम-पितृपरिचय' इति पुस्तकेऽथर्ववेदीयाष्टादशकाण्डगतप्रथमानुवाकस्य व्याख्याने ।

निरुक्तयः—लिबुजा व्रततिः, लिबुजा—लीयते विभजन्ती लीयते श्लिष्यति वृक्षम् "लीङ् श्लेषणे०" ( दिवादि० ) पुनः श्लिष्यन्ती सती तं वृक्षं विशेषेण भजन्ती ततः पोषं गृह्णाना तिष्ठति । व्रततिः—वरणात्—"वृ आच्छादने" तस्य 'व्र' संयनात् सम् इण् धातोः, तस्य 'अ' ततनात् तनधातोः—तकारः पुनः क्तिन् प्रत्ययः ।

वाताप्यम् ॥ ११३ ॥

वाताप्यमुदकं भवति वात एतदाप्याययति ।

"पुनानो वाताप्यं विश्वश्चन्द्रम्" ( ऋ० ९ । ९३ । ५ )

इत्यपि निगमो भवति ॥

भा०—'वाताप्यम्' इत्यनवगतमनेकार्थं च । 'वातः—आप्यायनोऽस्येति यद्वा वातेन—आप्याय्यम्' इत्यवगमः । 'उदकम्' अभिधेयम् । वातेन—आप्यायते यत् 'वातेन' इति कर्तृपदे तृतीयान्ते—उपपदे—आङ्पूर्वात् "प्यायी वृद्धौ"

( भ्वादि० ) "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इति डः प्रत्ययः कर्मणि छान्दसः । वाताप्यम्–पुरोवातेनाप्यायनीयं भवति मेघोदकम् । इति त्वनवगतपक्षे मेघोदकं वाताप्यम् । अवगतपक्षे वातापिः–इन्द्रः, "इन्द्र उ वै वातापिः स वातमाप्त्वा शरीराण्यर्हन् प्रतिप्रैति" ( कौ० २७ । ४ ) स च देवतात्मकः, सशरीरो जीवो जीवितदेहो वा । तस्मै वातापये हितं वाताप्यम् । देवात्मकाय–इन्द्राय वातापये हितो वाताप्यः सोमः, जीवाय जीवितदेहाय वातापये हितमन्नं वाताप्यम् । एवं 'वाताप्य' शब्दस्य त्रयोऽर्था जाताः–मेघोदकम्, सोमः, अन्नम् । वातापिर्जीवो जीवितदेहो वाऽत्र मन्त्रः—

यदुपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥

( ऋ० १ । १८७ । ८ )

अपाम्–अप्सम्बन्धीनामद्भ्य उत्पन्नानाम्–ओषधीनां यत् परिंशं परितोऽशं सारं कालपक्वमन्नं वयमारिशामहे–आ समन्तात् प्राप्नुमः–आस्वादयामो भक्षयामः, तेन हे वातापे–वातस्यापयितः प्रापयितः–जीव ! जीवितदेह ! त्वं पीव प्रवृद्ध एव भव ।

प्रथमं पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्ते—

वाताप्यम्–अन्नम्—

यस्य त्यन्महित्वं वाताप्यमयं जनः ।

विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनाम् ॥ ( ऋ० १० । २६ । २ )

अयं विप्रः सर्वप्राणिषु मेधावी जनो जन्यमानो मनुष्यो यस्य पूष्णः पोषयितुः परमात्मनो महित्वं महित्वेन महत्या कृपया त्यत् तद् वाताप्यमन्नं धीतिभिः–अङ्गुलिभिः "धीतयः–अङ्गुलयः ( निघं० २ । ५ ) आवंसत्–समन्तात् सम्भजते भुङ्क्ते च तं परमात्मानं सुष्टुतीनां शोभनस्तुतिभिः स्मरेत् ।

वाताप्यः–सोमः—

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम् ।

हरिं यत्ते मन्दिनं दुक्षन् वृधे गोरभसमद्रिभिर्वाताप्यम् ( ऋ० १।१२१।८ )

हे इन्द्र ! महो महतो दिवो हर्षकरस्य सोमस्य "दिवु क्रीडाविजिगीषाव्यवहारद्युतिमोदमदस्वप्नकान्तिगतिषु" ( दिवादि० ) तव हरी अष्टा भोक्तारौ–इह कर्मणि–आदः–त्वमादय भोजय पुनः–द्युम्नसहं योऽस्माकं द्युम्नं धनमन्नं यशश्च प्रसह्य प्राप्नोति तमुत्समुच्छृङ्खलम् "उत्स उत्सरणात्" (निरु० १०।१०) योधानो युद्ध्यमानोऽभिभव, तथा तव वृधे वर्धनाय यं मन्दिनं हर्षकरं हरिं वाताप्यं सोमं

सोमरसं गोरभर्सं गोदुग्धमिव—अद्रिभिः पाषाणैः—दुक्षन् धुक्षन् दुहन्ति निःसार-यन्ति धकारस्य दकारश्छान्दसः ।

वाताप्यम्—मेघोदकम्—

कुदा वसो स्तोत्रं हर्यत आव श्मुशा रुधद्वाः । दीर्घं सुतं वाताप्याय ॥
( ऋ० १० । १०५ । १ )

हे वसो वासयितः ! इन्द्र ! स्तोत्रं प्रशंसां हर्यते हर्यतं काममयमानं त्वां पृच्छामि—इति शेषः । त्वत्सम्बद्धा मध्यस्थाना श्मशा नदी या—अवारुधत्—अवरुद्धाऽस्ति यतो वृष्टेरभावोऽस्ति सोदकं न विमुञ्चति कदा तां त्वं वाः—वारयिष्यसि प्रवाहयिष्यसि यतो दीर्घं दीर्घकालपर्यन्तं दीर्घकालात् सुतं सञ्चितं वाताप्याय—वाताप्यमुदकं प्रवहेत् प्रवर्षेत् । वाताप्याय द्वितीयार्थे चतुर्थी ।

अथ यास्कोदाहृतो मन्त्रो यस्मिन् वाताप्यशब्दोऽनेकार्थः स व्याख्यायते—

नू नो रयिमुप मास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम् ।

प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ॥

हे इन्दो सोम ! उत्पादकदेव ! त्वं पुनानः—उपासनया स्तुत्याऽस्मान् पवित्र-यन् नोऽस्मभ्यं विश्वचन्द्रं सर्वाह्लादकरं नृवन्तं नरोजना अधिक्रियन्ते यस्मिन् नृणां हितं यस्मिन् तथाभूतं रयिं धनं यत् खलु वाताप्यं मेघोदकं सोमरसमर्थं वा—इत्येतद् धनमुपनिर्मिमीष्व सम्पादय, वन्दितुः स्तोतुः स्तुतिं कुर्वतो जनस्य—आयुः प्रतारि त्वया प्रवर्धितं भवतु धियावसुः—कर्मणा वसुधनं यः कामयते न ह्यकर्मणा स कर्मपरायणो धनकामो जनः प्रातः—मक्षु—प्रातः—अन्यलोकसमा-गमात् पूर्वं तव समीपमुपासनया स्तुत्या जगम्यात् गच्छेत् ॥

चाकन् ॥ ११४ ॥

"वने न वायो न्यधायि चाकन्" (ऋ० १० । २९ । १)

वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा ।

वेति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्या-तमभविष्यदसुसमाप्तश्चार्थः ॥

भा०—'चाकन्' इत्यनवगतम् । 'चायन्' यद्वा 'कामयमानः' इत्यवगमः । 'चाकन्' इति चकारमभिलक्ष्य "चायृ पूजानिशामनयोः" ( भ्वादि० ) निशा-मनं दर्शनम् "शम आलोचने" ( चुरादि० ) "शमो दर्शने" मित्संज्ञा न, निशामयति । चायृ ततः शतृप्रत्ययः, 'चायन्' यकारस्य स्थाने ककारः । चाकन् निशामयन् निरीक्षमाणः । यद्वा 'चाकन्' इति ककारमाश्रित्य "कमु कान्तौ"

( भ्वादि० ) ततो यङ्लुगन्तात् शतृप्रत्ययो नुगभावश्छान्दसः, अन्ते मकारस्थे नकारोऽपि छान्दसः। इति त्वनवगतपक्षः, अवगतपक्षोऽपि "कनी दीप्तिकान्तिगतिषु" ( भ्वादि० ) ततोऽपि यङ्लुगन्तप्रयोगः। एवं चतुरर्थकः 'चाकन्' इति शब्दः। अत्रोदाहृते मन्त्रे चत्वारोऽर्थाः सङ्गच्छन्ते, अन्यत्र मन्त्रेष्वेकैकार्थसाङ्गत्यम्। प्रथममेकार्थको मन्त्रः प्रदर्श्यते ॥

दीप्त्यर्थे चाकन्—

वह॒ कुत्स॑मिन्द्र॒ यस्मि॑ञ्चा॒कन्त्स्यू॑म॒न्यू ऋ॒ज्रा वात॒स्याश्वा॑ ।
प्र सूर॑श्च॒क्रं बृ॑हताद॒भीके॒ऽभि स्पृधो॑ यासिष॒द् वज्र॑बाहुः ॥
( ऋ० १ । १७४ । ५ )

हे इन्द्र ! विद्युद्रूपदेव ! कुत्सं वज्रं "कुत्सो वज्रः" ( निघं० २ । २० ) "यासि कुत्से॑न स॒रथ॑मव॒स्युस्तो॒दो वात॑स्य॒ हर्यो॒रीशा॑नः" (ऋ० ४ । १६ । ११) कुत्सो वज्रो यः प्रज्वाल्य प्रकाशयते। तं कुत्सं वज्रं वह यस्मिन् वज्रे स्यूमन्यू स्यूमं रश्मिं नयतस्तौ स्यूमो रश्मिः "अविसिविसिशुषिभ्यः कित्—मन् सम्प्रसारणं च" ( उणादि० १ । १४४ ) 'स्यूम' उपपदे नीधातोः कुः प्रत्ययः स्यूमन्युः—द्विवचने स्यूमन्यू रश्मिनां नेतारौ वातस्येव ऋज्रौ—ऋजुगामिनौ—अनायासेन गन्तारौ—अश्वौ हरी इत्याख्यौ शुष्कार्द्रधारारूपौ चाकन् दीपयसि "कनी दीप्तिकान्तिगतिषु—इत्यस्माल्लङो मध्यमैकवचने रूपम् बहुलं छन्दसि—इति शपः श्लुरडभावश्च संयोगान्तस्य सकारस्य लोपः" ( दयानन्दः ) सूरः सूर्यो वज्रबाहुर्भूत्वा चक्रं विमानयानस्य चक्रमभीके समीपदेशात् प्रबृहतात् प्रकृष्टेनोद्यच्छति—ऊर्ध्वं करोषि "बृहू उद्यमने" ( तुदादि० )। स्पृधः स्पर्द्धमानान् शत्रूनभियासिषत्—अभिगन्तुमिच्छति यः इन्द्रः ॥

गत्यर्थे चाकन्—

इ॒मा ब्रह्मे॑न्द्र॒ तुभ्यं॑ शंसि॒ दा नृभ्यो॑ नृ॒णां शू॑र॒ शवः॑ ।
तेभि॑र्भव॒ सक्र॑तु॒र्येषु॑ चा॒कन्नु॒त त्रा॑यस्व गृण॒त उ॒त स्तीन् ॥
( ऋ० १० । १४८ । ४ )

हे इन्द्र नृणां शूर ! इमानि ब्रह्माणि स्तुतिवचनानि तुभ्यं शंस्यन्ते। त्वं नृभ्यः शवो बलं देहि तैः सह सक्रतुः समानयज्ञो भव येषु स्तोतृषु त्वं चाकन् गच्छसि, "कनी॰ दीप्तिकान्तिगतिषु—( भ्वादि० ) अस्माद् यङ्लुगन्ताच्छान्दसं लङि सिपि रूपमेतत्" ( सायणः ) उत—अपि गृणत स्तुवतः स्तोतॄन् त्रायस्व, उत—अपि स्तीन् तेषां संघान् सयजमानान् पारिवारिकजनान् त्रायस्व ॥

दर्शनार्थे चाकन् चायृधात्वन्तः—

सुष्वाणास इन्द्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजम् ।

आ नो भर सुवितं यस्य चाकन्त्मना तना सनुयाम त्वोताः ॥

( ऋ० १० । १४८ । १ )

हे तुविनृम्ण ! बहुधन ! मघवन् ! वयं सुष्वाणाः सोममभिषुतवन्तस्त्वां ससवांसः सम्भक्तवन्तश्च स्तुमः, नोऽस्माकं मध्ये यस्य स्तोतुः सुवितं सुष्ठु-इतं कर्मफलं चाकन्-अपश्यः-पश्यसि "सुविताय कर्मणे" ( निरु० ११ । १५ ) "सुविता कल्पयावहै-सुप्रसूतानि कर्माणि कल्पयावहै" ( निरु० १२ । २८ ) सुप्रसूतानि फलाभिमुखानि । अत्र चाकन् चायृ धातोरनवगतप्रसङ्गकः प्रयोगो दर्शनार्थो निशामनार्थः । तस्य कर्मफलमाभर प्रापय । वयं त्वोताः-त्वया रक्षिताः-त्मना-आत्मना स्वयमेव तनानि धनानि "तनाधननाम" ( निघं० २ । १० ) सनुयाम सम्भजेमहि ।

कामनार्थे चाकन् कमधातोः प्रयोगोऽवगतः—

उक्थेष्विन्नु शूर येषु चाकन्त्स्तोमेष्विन्द्र रुद्रियेषु च ।

तुभ्येदेता यासु मन्दसानः प्र वायवे सिस्रते न शुभ्राः ॥ (ऋ० २।११।३)

हे शूर ! इन्द्र ! येषु-उक्थेषु-वक्तुं योग्येषु प्रशस्तेषु रुद्रियेषु प्राणानां हितकरेषु स्तोमेषु स्तुतिसमूहेषु चापि त्वं चाकन् कामयसे "कमतेर्यङ्लुकि" ( सायणः ) यासु-उपासनासु मन्दसानो हृष्यन् भवसि ता एताः शुभ्राः सत्यः तुभ्यं-इद्-वायवे तुभ्यं गमनशीलायैव सिस्रते न-सरन्तीव सन्ति ।

अथ यास्कोदाहृतो मन्त्रो यस्मिन् चाकन्शब्दोऽनेकार्थः स व्याख्यायते—

वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।

यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥

वने वृक्षाणां समूहो वनं तत्र वृक्षाणां मध्ये न्यधायि निहितो वायो न विः पक्षी तस्य शिशुः पक्षिवत्सो भरणकर्तारौ स्वमातापितरौ पक्षिणौ चाकन् पश्यन् यद्वा कामयमानः किं वा तत्र गच्छन्-तत्र परिभ्राम्यन् यद्वा शैशवसौन्दर्येण दीप्यमानः-इव शुचिः पवित्रः स्तोमः स्तुतिसमूहो मन्त्रगणोऽग्निप्रभृतिषु परमर्षिषु-अजीगः प्राप्तः, हे भुरणौ भरणकर्तारौ-अध्यापकाध्येतारौ वां युवाभ्यां युवयोरर्थे प्राप्तः "भृ भरणे" ( क्र्यादि० ) ततः "कृपृवृजिमन्दिनिधाञः क्युः" ( उणा० २ । ८२ ) इति धातुबाहुलकात् क्युः प्रत्ययः प्रत्ययस्य कित्त्वाद् गुणाभावः "उदोष्ठ्यपूर्वस्य" ( अष्टा० ७ । २ । १०२ ) इति ऋकारस्य स्थाने

'उ-रपरः-उर्' प्रत्ययस्य 'यु' स्थाने 'अन' भुरणः । स स्तोमो मन्त्रगणः कीदृश इत्युच्यते । यस्य मन्त्रगणस्य क्षपावान् रात्रिमान् प्रलयवान् प्रलयस्वामी प्रलयेऽपि वर्तमानस्तस्याधिष्ठाता प्रलयानन्तरं होता-दाता, आदाता च, दाता-उपदेष्टा पुरुदिनेषु बहुदिनेषु यावत् पुरूणि बहूनि दिनानि स्युराप्रलयं प्रायच्छत् तम् । तथा-आदाता च पुरुदिनेषु बहुदिनेषु प्रलयान्तं प्रतिदिनं स्तुतिरूपे दीयमानस्य-आदाता स्वीकर्ता-इन्द्रः-परमात्मा, स च स्तोमेन स्तुतः सन् नृणां नृतमो नेतृतमो नर्यो नराणां हितकरः पुरुदिनेषु-अत्र संसारे पुनर्मोक्षे च बहुदिनेषु हितकरः पुनः स यस्तं परमात्मानं न स्तौति तस्मै क्षपावान् रात्रिमान् कल्पानन्तरं रात्रिं प्रलयं करोति, तदा तु स्तोतॄणां शरण्योऽस्तोतॄणां न शरण्यः, तांस्तु रात्रावेव प्रलये हि स्थापयिष्यति ॥

अत्र आस्कः 'वायः' इति विषये कथयति 'वा' इति 'यः' इति च शाकल्यः पदकारः पदपाठं पृथक् पृथक् करोतीति न सम्यक्, यतः 'न्यधायि' इत्याख्यातं पदमुदात्तं भवेत्, "यद्वृत्तान्नित्यम्" ( अष्टा० ८ । १ । ६६ ) यद्वृत्तात्-सर्वविभक्त्यन्तात् 'यत्' इति शब्दादुत्तरमाख्यातं नानुदात्तमर्थादुदात्तं नित्यं भवति पृथक् पदद्वयात् 'यः' इति यद्वृत्तादुत्तरं न्यधायि पदमुदात्तं भवेत् परन्तु पदमेतदाख्यातमनुदात्तमस्ति । पुनश्चार्थोऽप्यसुसमासोऽस्पष्टः स्यात् पदद्वयपक्षे तेन 'वायः' एकं पदम् ॥

रथर्यति ॥ ११५ ॥

रथर्यतीति सिद्धस्तत्प्रेप्सुः, रथं कामयत इति वा * ।

"एष देवो रथर्यति" ( ऋ० ९ । ३ । ५ ) इत्यपि निगमो भवति ॥ २८ ॥

भा०—'रथर्यति' इत्यनवगतं पदमनेकार्थं च । 'रथं कामयते' इत्यवगमः । यतः सिद्धः-तत्प्रेप्सुः सिद्धः प्रसिद्धो हि लक्षणशास्त्रे तत्प्रेप्सुः 'तत्' इति शब्देन कर्म कारकं लक्ष्यते तद्यथा "तदधीते तद्वेद" ( अष्टा० ४ । २ । ५८ ) "तदर्हति" ( अष्टा० ५ । १ । ६२ ) तं प्रेप्सति-इच्छति-इति तत्प्रेप्सुः क्यच्प्रत्ययः "सुप आत्मनः क्यच्-कर्मण इच्छायाम्" ( अष्टा० ३ । १ । ८ ) स च क्यच् प्रत्ययः प्रसिद्धो हि, अतः 'रथर्यति' इति 'रथं कामयते' इति स्पष्टं करोति यास्को निरुक्तकारः 'रथर्यति रथं कामयते' इति त्वनवगतपक्षेऽर्थ एकः । तद्भिन्नः

* स्कन्दस्वामिभाष्यस्य मूलपाठे 'वा' शब्दो नास्ति । वावर्जितः पाठो न युक्तोऽनवगतद्वैविध्यात् ।

'रथर्यति–गच्छति' इति यतः "रथर्यति गतिकर्मा" (निघं० २ । १४) सोऽप्यत्र लक्ष्यतेऽनेकार्थसन्दर्भत्वात् । 'रथं कामयत इति वा' कथनेन वैकल्पिकमनवगतत्वं द्वितीयमपि लक्ष्यते गतिकर्मणि । लोके न हि रथर्यति, किन्तु निघण्टौ पठितः "रथर्यति गतिकर्मा" ( निघं० २ । १४ ) तेन रथर्यति–गच्छति, यद्वा तत्प्रेप्सुः क्यच्प्रत्ययः । रथं कामयते–इति रथीयति–इति प्रयोगेण भवितव्यम् "क्यचि च" ( अष्टा० ७ । ४ । ३३ ) इत्यनेन क्यचि परेऽवर्णान्ताङ्गस्य 'अ' इत्यस्य स्थाने 'ई' इत्यादेशेन भवितव्यं किन्तु–अकारस्यान्ते रेफोपजनः पुनरङ्गप्रत्यययो-र्व्यवधानात् 'ई' न भवत्यनवगत्त्वे । इत्येकमनवगतत्वम् । द्वितीयमिदं यत् तन्निघण्टुपठितं गतिकर्म । एवं रथर्यति शब्दो द्वावर्थावभिदधाति । रथर्यति–गच्छति यद्वा रथं कामयते । 'रथर्यति' नामपदमिति कस्यापि कल्पना भ्रान्ता । प्रथमं पृथक् पृथगर्थको मन्त्रः प्रदर्श्यते । सम्पूर्णेऽपि वैदिकवाङ्मये त्रयो मन्त्राः सन्ति यत्र रथर्यति शब्दोऽस्ति, एकस्मिन् गत्यर्थे, एकस्मिंश्च 'रथं कामयते' इत्यर्थे, यास्कोदाहृते मन्त्रे द्वावर्थौ लक्ष्येते ।

रथर्यति–गच्छति—

ता बाहुता न दंसना रथर्यतः साकं सूर्यस्य रश्मिभिः ॥

( ऋ० ८ । १०१ । २ )

मित्रावरुणौ सूर्यस्य प्रेरणाकर्षणधर्मौ * सूर्यस्य रश्मिभिः साकं–सह रथर्यतः संसारे गच्छतः–तौ बाहुभूतौ सूर्यस्य बाहू इव स्तः "बाहू वै मित्रावरुणौ" ( शत० ५ । ४ । १ । १५ ) दंसना–दंसनौ कर्मसाधकौ स्तः ।

रथर्यति–रथं कामयते—

न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरै रथर्यसि ।

( ऋ० १० । ३७ । ३ )

सूर्यो देवता–हे सूर्य ! प्रदिवः पुरातनकालादेव "प्रदिवः पुराणनाम" ( निघ० ३ । २७ ) अदेवोऽन्धकारस्ते तव पार्श्वे न निवसति न तिष्ठति यदा त्वं पतरैर्गमनशीलैः–एतशेभिः–अश्वैः "एतशः–अश्वनाम" ( निघं० १ । १४ ) रथर्यसि रथं कामयसे योक्तुमारोढुं वा ।

---

* "दक्षस्य वादिते जन्मनि व्रते राजाना मित्रा वरुणा विवाससि । अतूर्त-पन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ।।" (ऋ० १० । ६४ । ५–निरु० ११ । २३) दक्षस्य सूर्यस्य जन्मनि–एव मित्रावरुणौ तेन सूर्येण सह सङ्गतौ स्तः ।

अथ यास्कोदाहृतो मन्त्रो यस्मिन्ननेकार्थको रथर्यतिशब्दः स व्याख्यायते—

एष देवो रथर्यति पवमानो दशस्यति ।
आविष्कृणोति वग्वनुम् ॥

एष सोमो देवो दिव्यगुणः पवमानः क्षरमाणो रसरूपेण निःसरन् रथर्यति पातॄन् पानस्य कर्तॄन् प्रति गच्छति पातॄणां शरीरेषु गच्छति स्वप्रभावेण सर्वत्र प्रसरति, यद्वा सोमो दिव्यगुणः पवमानः क्षरमाणो निःसरन् रथर्यति रथं यानं कामयते, अपूयमानोऽपिष्टः सोमस्तु हस्ताभ्यामुत्थाप्य क्वापि नेतुं शक्यः परन्तु पवमानः क्षरमाणो रसरूपेण निःसरन् सोमस्तु रथमपेक्षते रसस्य रथस्तु पात्रं भवति स तदा न हस्ताभ्यां निगृहीत इव नेतुं शक्यः परन्तु पात्रे स्थितः सन् यत्र तत्र गन्तुं नेतुं वा शक्यः, तस्मात् स रथर्यति रथं कामयते । रथः कस्यापि यथायोग्यं भवति, तस्माद् रसस्य रथस्तु पात्रं भवति, उक्तं हि यास्केन "रथः···· स्थिरतेर्वा, रममाणोऽस्मिन् तिष्ठति, रसतेर्वा" ( निरु० ९ । ११ ) रसस्तिष्ठत्यस्मिन्निति रथः । स पातृभिः पीतः सन् दशस्यति पातृभ्यः सुखं ददाति "दाण् दाने" ( भ्वादि० ) विकरणव्यत्ययेन शपः श्यन् सिप् बहुलत्वात्—धातोराकारस्य ह्रस्वत्वं यद्वा "दशस् दाने" वैदिको धातुः कण्ड्वादिगणीयः । वग्वनुं वाचं वाक्शक्तिं ज्ञानमयीं वाचं बुद्धिं च "वग्नुः—वाङ्नाम" ( निघं० १ । ११ ) मध्ये वकारोपजनः, यद्वा वच्धातोः "वचेर्गश्च नुः" ( उणा० ३ । ३३ ) प्रत्ययसन्नियोगेन धातोर्वुक् चागमश्छान्दसः । वग्वनुं वाचं ज्ञानं बुद्धिं चाविष्कृणोति ।

आधिभौतिकदृष्ट्या—एष सोमः सोम्यस्वभावो ब्रह्मचारी मन्त्रैर्मन्त्राणामध्ययनेन पवमानः पवित्रीभूतो द्रवीभूतोऽध्यात्मसौक्ष्म्यमाप्तो देवो विद्वान्—अधीतमन्त्रः स्नातको भूत्वा रथर्यति गुरुकुलात् पितृकुलं गच्छति यद्वा रथर्यति रथं कामयते गुरुकुले ब्रह्मचर्यकाले रथारोहणं निषिद्धमासीत्, समाप्तविद्यः स्नातकस्तु रथारोहणेऽधिकृतः स दशस्यति मातापितरौ सुखं ददाति पुनर्वग्वनुमधीतां वेदवाचं नागरिकजनेषु शिष्येषु स्वान्ततः—आविष्कृणोति बहिः प्रकाशयति प्रचारयति ।

असक्राम् ॥ ११६ ॥
"धेनुं नु इषं पिन्वतमसक्राम्" ( ऋ० ६ । ६३ । ८ )
असङ्क्रमणीम्

भा०—'असक्राम्' इत्यनवगतम् । 'असंक्रमणीम्' इत्यवगमः । विशेषणपदं विशेष्योऽभिधेयः । 'सम्' उपसर्गात् क्रमधातोः 'डः' प्रत्ययः "अन्येभ्योऽपि दृश्यते" वा० "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) पुनः स्त्रियां

टाप्—सक्रा, न सक्रा असक्रा, द्वितीयायाम्—असक्राम् । समो मकारस्य लोपस्तथा कर्मणि डः प्रत्ययश्चोभौ छान्दसौ, इत्यनवगतपक्षे, असक्राम्—असंक्रमणीम्—असंक्रमणी यथा धमनी रजनी—अनिप्रत्ययान्तः पुनः कृदिकारात्—ङीष् । समानशब्दोपपदे क्रमधातोः "जनसनखनक्रमगमो विट्" ( अष्टा० ३ । २ । ६७ ) इति विट्प्रत्ययः पुनः "विड्वनोरनुनासिकस्यात्" ( अष्टा० ६ । ४ । ४१ ) इत्यतः—'म्' इत्यस्य—आकारे कृते समानस्य 'स' भावः "समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु" ( अष्टा० ६।३।८२ ) समानेषु क्रामति—इति सक्रा न सक्रा—असक्रा तामसक्राम् ।

समग्रमन्त्रस्तदर्थश्च—

पु॒रु हि वां॑ पुरुभुजा दे॒ष्णं धे॒नुं न॒ इषं॑ पिन्वत॒मस॑क्राम् ।
स्तुत॑श्च वां माध्वी सुष्टु॒तिश्च॒ रसा॑श्च॒ ये वा॒मनु॑ रा॒तिमग्म॑न् ॥

हे पुरुभुजौ बहुपालकौ—अश्विनौ—प्रजासु व्यापनशीलगुणवन्तौ सभासेनाध्यक्षौ वां युवयोर्नोऽस्मभ्यं प्रजाजनेभ्यः पुरुदेष्णं महद्दानं धेनुं वाचं विद्यां तथा—इषमन्नव्यवस्थाम्—असक्रामसंक्रमणीमविचलां यद्वा—असमगतिकां समानत्वादनतिक्रमिताम्—अतुलामनुपमां युवां पिन्वतं सिञ्चतं सेवयतम् "पिवि सेचने सेवने च" ( भ्वादि० ) अथ च वां युवयोः स्तुतः—युवयोः सम्बद्धाः स्तोतारः—परमात्मन उपासका ऋषयस्ते "क्विप् च" ( अष्टा० ३।२।७६ ) स्तुधातोः क्विप् प्रत्ययः । ते तथा तेषां माध्वी सुष्टुतिः—मधुमयी शोभना स्तुतिः, स्तुतिफलभूता रसा आनन्दाश्च वां युवयोः—रातिं पूर्वोक्तदानमनुग्मन् तद्दानमनुप्राप्नुवन्तु ॥

इति षष्ठाध्याये पञ्चमः पादः ।

—— •

## षष्ठः पादः

**आधवः ॥ ११७ ॥**

**आधव आधवनात् । "म॒ती॒नां च॒ साध॑नं॒ विप्रा॑णां चा॒ध॒वम्" ( ऋ० १०।२६।४ ) इत्यपि निगमो भवति ॥**

भा०—'आधवः' इत्यनवगतम् । 'आधवनात्' इत्यवगमो धातुनिर्देशपूर्वकः । "धू विधूनने" ( तुदादि० ) "धूञ् कम्पने" ( भ्वा०, स्वा०, क्र्या०, चुरा० ) "धवति गतिकर्मा" ( निघं० २ । १४ ) "ऋदोरप्" ( अष्टा० ३ । ३ । ५७ ) । स्वरव्यत्ययेनान्तोदात्तः । अधिकरणे पक्षे कर्तरि च कारकेऽपि व्यत्ययेन, एवं स्वरकारकयोर्भिन्नत्वमत्रानवगतत्वम् । वेदेषु द्वावेव मन्त्रौ यत्र—

आधवशब्दः । यास्कोदाहृते मन्त्रेऽनेकार्थकोऽन्यत्रैकार्थकः । प्रथममेकार्थकस्य 'आधवः' इत्यस्य मन्त्रः प्रदर्श्यते—

यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥

( ऋ० १ । १४१ । ३ )

अग्निर्देवता—यत् खलु प्रदिवः प्रदीपयितुं योग्यस्य घृतस्य मध्वो मधुनो मधुगुणस्य—आधवे समन्ताद् विधूयते—उत्तेज्यते—उज्ज्वाल्यतेऽग्निर्यस्मिन् तस्मिन् स्थाने यज्ञे यद्वा यन्त्रे या गुहा तस्यां सन्तमग्निं मातरिश्वा—वायुर्मथायति—मथ्नाति—सम्यग् ज्वालयति ।

आध्यात्मिकदृष्टौ—यत् खलु प्रदिवः प्रदीपयितुं योग्यस्य स्तवनस्य स्तुतिप्रार्थनोपासनावचनस्य मधुमयस्य—आधवे समन्ताद् विधूयते—उद्बोध्यतेऽग्निः परमात्माग्निर्यस्मिन् तस्मिन् हृदये या गुहाऽङ्गुष्ठमात्रा तस्यां सन्तं तं परमात्माग्निं मातरिश्वा जीवात्मा मथायति मथ्नाति योगाभ्यासेन सम्यग् ज्वालयति ॥

अथ यास्कोदाहृतो मन्त्रो यस्मिन्ननेकार्थकः 'आधवः' इति शब्दः स व्याख्यायते—

मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवम् ॥

हे पूषन् पोषयितर्देव ! परमात्मन् ! अस्माकमस्मादृशानां मतीनां तवास्तित्वं मन्यमानानां मेधाविनां साधनं साधयितारम् "मतयो मेधाविनाम" ( निघं० ३ । १५ ) तथाऽस्मादृशानां विप्राणां तव स्तुतिभिस्त्वां विशेषेण प्रीणयितॄणां मेधाविनां च—आधवं समन्तादग्रे गमयितारम् "धवति गतिकर्मा" ( निघं० २ । १४ ) यद्वा समन्ताद् विधूनयितारं शोधयितारं पापकर्मतः कम्पयितारं त्वां मंसीमहि—अर्चामः स्तुवीमहि "मन्यते अर्चतिकर्मा" ( निघं० ३ । १४ ) ।

अनवब्रवः ॥ ११८ ॥
अनवब्रवोऽनवक्षिप्तवचनः ।
"विजेषकृदिन्द्र इवानवब्रवः" ( ऋ० १० । ८४ । ५ )
इत्यपि निगमो भवति ॥ २९ ॥

भा०—'अनवब्रवः' इत्यनवगतम् । 'अनवक्षिप्तवचनः' इत्यवगमः । 'अव' उपसर्गपूर्वात् "ब्रूञ् व्यक्तायां वाचि" ( अदादि० ) धातोः "ऋदोरप्" ( अष्टा० ३ । ३ । ५७ ) इति 'अप्' प्रत्ययो भावे, "ब्रुवो वचिः" ( अष्टा० २ । ४ । ५३ ) ब्रूस्थाने 'वच्' इत्यादेशेन भवितव्यं परन्त्वत्र "छन्दस्युभयथा" ( अष्टा०

१ । ४ । ११७ ) अप्प्रत्ययस्यापि सार्वधातुकत्वे 'वच्' इत्यादेशो न भवति । 'अव' उपसर्गोऽत्र कुत्सनेऽर्थे वर्तते कुत्सनमत्राऽशक्तिः, असत्यं बाधनं गृह्यते । 'अवब्रवः' अव—अवक्षिप्तं ब्रवो वचनम्—इति प्रादिसमासः, अवब्रवः, न—अवब्रवो यस्य सः—अनवब्रवः—इति बहुव्रीहिसमासे "नञ्सुभ्याम्" ( अष्टा० ६ । २ । १७१ ) अन्तोदात्तः । अनेकार्थसन्दर्भत्वात् तदपेक्षयावगतार्थोऽपि लक्ष्यतेऽत्र 'अ-नवब्रवः'—शाश्वतिक उपदेशः—स च वेदः—यः सर्वैर्मन्तव्यत्वात्—मन्युः ।

समग्रमन्त्रस्तदर्थश्च—

> विजेषकृदिन्द्र इवानवब्रवोऽस्माकं मन्यो अधिपा भवेह ।
> प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥

हे मन्यो ! निजशक्तिविद्यागुणानाश्रित्यान्यान् जनान् यथावदाचरणं यथा-वन्मार्गं वा मानयितुं स्वीकारयितुं समर्थ ! ममान्तरिकोत्साह ! "यजिमनि-शुन्धिदसिजनिभ्यो युच्" ( उणा० ३ । २० ) मनधातोर्युच् । ममान्तरिको-त्साह ! त्वं विजेषकृत्—विजयस्य कर्ताऽसि—इन्द्र इव विद्युदिव यतस्त्वं विद्युच्छक्ति-मानसि, अत्र—इन्द्रशब्देन विद्युदेवोच्यते यथाऽतः पूर्वम् "अग्निरिव मन्यो त्वि-षितः" ( २ ) तथा त्वमनवब्रवः—अनवक्षिप्तवचनः—अननुचितवचनः—नितान्तो-चितवचनः—अतिरस्करणीयवचनो वाऽसि, मन्यो ! आन्तरिकोत्साह ! त्वमस्माक-मधिपा—अस्माकमधीने सन्—इह प्रसङ्गे रक्षको भव । हे सहुरे सर्वमपि बाधकं सोढुं समर्थ ! "जसिसहोरुरिन्" ( उणा० २ । ७४ ) सहधातोः 'उरिन्' प्रत्ययः । मन्यो ! ते तव प्रियं नाम नमनस्थानं यस्मिन् त्वं नमसि नम्रीभवसि गृणीमसि गृणीमः प्रशंसामः, तथा यतो यस्मात् स्थानात् त्वमाबभूथ—आब-भूविथ आविरभवः—आविर्भवसि तमुत्समुत्स्यन्दनस्थानं विद्म जानीमः । "उत्स उत्स्यन्दनाद्वा" ( निरु० १० । ९ ) मन्यो ! तवोत्स्यन्दनस्य स्थानं तव नमन-स्थानस्य प्रशंसनं स्तवनं चास्माकं कर्तव्यमस्ति । किं तदित्युच्यते । परमात्मा तव नमनस्थानमुत्समुत्स्यन्दनस्थानं च यस्य त्वं तद्रूपोऽसि स उच्यतेऽन्यत्र—"मन्युरसि मन्युं मयि धेहि" ( यजु० १९ । ९ ) ॥

'अनवब्रवः' अ—नवब्रवः शाश्वतिकोपदेशः—वेदः—मन्युर्मन्तव्य इति कल्प-यित्वा व्याख्या—

हे मन्यो ! सर्वैर्मन्तव्य वेद ! त्वमिन्द्र इव जगदीश्वर इव विजेषकृत् सर्वज्ञानानां विजेता यद्वा मानवेभ्यो विजयं कारयिता प्रापयिता—अनवब्रवः शाश्वतिकोपदेशः सर्गसर्गान्तरेषु प्रवर्तमानो वर्तमानसर्गेऽपि न नवोपदेशः सर्गा-

रम्भे प्रकाशीभूतस्त्वमस्माकमधिपा मन्यो ! त्वमन्तस्यप्रभावं पातयित्वेह जगति रक्षको भव । हे सद्गुरे सर्वविधमज्ञानं सोढुं दूरीकर्तुं समर्थ ! प्रियं नाम नमन-स्थानं प्रलये यस्मिन् नम्रीभविष्यसि तं परमात्मानं वयं गृणीमसि स्तुमः, यस्मात् त्वमाविर्भूतस्तमुत्समुत्स्यन्दनस्थानं परमात्मानं विद्म जानीमः "प्र नूनं ब्रह्मण-स्पतिर्मन्त्रं वदत्युक्थ्यम्" ( ऋ० १ । ४० । ५ ) वेदः सर्वैर्मन्तव्यः शाश्वतिको नित्यश्च तस्याविर्भाव ईश्वराद् भवति वेदः—ईश्वरीयज्ञानं प्रलये सति तस्य मानवो-पदेशवत् क्षयो न भवति किन्तु परमात्मन्येवावस्थीयते स मानवस्य रक्षकः ॥

सदान्वे ॥ ११९ ॥

शिरिम्बिठः ॥ १२० ॥

"अरा॑यि॒ काणे॒ विक॑टे गि॒रिं ग॑च्छ सदान्वे।
शि॒रिम्बि॑ठस्य॒ सत्त्व॑भि॒स्तेभि॑ष्ट्वा चातयामसि ॥"
( ऋ० १० । १५५ । १ )

अदायिनि काणे विकटे । काणोऽविक्रान्तदर्शन * इत्यौ-पमन्यवः । कणतेर्वा स्यादणूभावकर्मणः । कणतिः शब्दा-णूभावे भाष्यतेऽनुकणतीति । मात्राणूभावात् कणो दर्शनाणूभावात् काणः । विकटो विक्रान्तगतिरित्यौप-मन्यवः । कुटतेर्वा स्याद् विपरीतस्य विकुटितो भवति । गिरिं गच्छ सदानोनुवे शब्दकारिके । शिरिम्बिठस्य सत्त्वभिः । शिरिम्बिठो मेघः । शीर्यते बिठे । बिठमन्त-रिक्षम् । बिठं बीरिठेन व्याख्यातम् । तस्य सत्त्वैरुदकैरिति स्यात् तैष्ट्वा चातयामः । अपि वा शिरिम्बिठो भारद्वाजः । कालकर्णोपेतोऽलक्ष्मीर्निर्णाशयाञ्चकार † तस्य सत्त्वैः कर्मभिरिति स्यात् तैष्ट्वा चातयामः । चातयतिर्नाशने ॥

भा०—'सदान्वे' इति च 'शिरिम्बिठः' इति च द्वे पदेऽनवगते, एकस्मिन्नेव मन्त्रे तयोर्विद्यमानत्वात् सहैव पठ्येते । 'सदान्वे' इत्यस्य 'सदा नो नुवे' इत्यव-गमः । 'सदा शब्दकारिके' इत्यर्थप्रदर्शनम् । 'शिरिम्बिठः' इत्यस्य 'शीर्यते बिठे—शीर्णे बिठे यस्य' इत्यवगमः 'मेघः' अभिधेयः । 'शिरिम्बिठस्य' इति पदं समस्ते वैदिकवाङ्मये सकृत्प्रयुक्तोऽस्मिन्नेव मन्त्रे नान्यत्र । 'सदान्वे' इति 'सदान्वा'

* 'काणे विक्रान्तदर्शनः' इति पाठः क्वचित् ।

† 'अलक्ष्मीं निर्णाशयाञ्चकार' इति पाठः क्वचित् ।

इत्यस्य सम्बोधनम्। 'सदान्वाः' इति शब्दो बहुवचनेऽन्यत्र बहुधा प्रयुक्तः। अथर्ववेदेऽष्टकृत्वः प्रयुक्तः। तस्मादत्र यास्कोदाहृते मन्त्रे 'सदान्वे' इति पदे वैशिष्ट्यमस्ति तदनवगतं चानेकार्थं च। अत्रोदाहृतमन्त्रेऽनवगतप्रसङ्गकोऽर्थो यास्कोक्तः, तथाऽवगतार्थोऽपि लक्ष्यते। 'सदान्वाः' अवगतप्रसङ्गे, सह दान्वेन सदान्वः स्त्रियां सदान्वा सम्बोधने सदान्वे। "दान खण्डने" (भ्वादि०) ततो वन्-औणादिकः। दान्वः सदान्वः, सदान्वा। अनवगतपक्षे 'सदा' शब्दोपपदे "णु स्तुतौ" (अदादि०) 'शब्दे' अर्थे मत्वा ततोऽचि यङ्लुगन्तस्य नोनुवः-इत्यस्य न्वभावः, यद्वा-अभ्यासाभावो धातोरुवङभावश्च। सदाशब्दकारिके सदान्वे। प्रथमं पृथक् पृथग्लक्ष्यको मन्त्रः प्रदर्श्यते।

सदान्वाः-सहिंसकाङ्गाः कृमयः—

शङ्खेनामीवाममतिं शङ्खेनोत सदान्वाः।
शङ्खो नो विश्वभेषजः कृशनः पात्वंहसः॥ (अथर्व० ४।१०।३)

शङ्खेन शङ्खस्य वटीचूर्णादियोगेन-अमीवां रोगस्य कारकं कृमिम् "यस्ते गर्भममीवा दुर्णामा योनिमाशये-अमीवा-अभ्यमनवान् रोगप्रदो दुर्णामा क्रिमिर्भवति।" (निरु० ६।१२) अमतिं तत्कृतं रोगम् "अम रोगे" (चुरादि०) ततः "अमेरतिः" (उणा० ४।५९) उतापि शङ्खेन सदान्वाः-दान्वेन हिंसनसाधनेन नखदन्तपुच्छादिना सह वर्तमाना या अन्याः काश्चित् कृमिव्यक्तयस्ताः 'हत्वा वि षहामहे' पूर्वमन्त्रतोऽनुकृष्यते। तथा शङ्खो नोऽस्मभ्यं विश्वभेषजः सर्वौषधं कृशनश्चूर्णीभूतः-चूर्णरूपेणोपयुक्तः, यद्वा तेषां रोगकृमीणां चूर्णयिता "कृश तनूकरणे" (दिवादि०) अंहसः-आघातकात् कृमेः-रोगाद्वा पातु रक्षतु॥

सदान्वाः-सदा नोनुवाः सदाऽन्यथाशब्दकारिणो जनाः पशवः पक्षिणो वा-

भूतपतिर्निरजत्विन्द्रश्चेतः सदान्वाः।
गृहस्य बुध्न आसीनास्ता इन्द्रो वज्रेणाधि तिष्ठतु॥ (अथर्व० २।१४।४)

इन्द्रो यश्च भूतानां-प्राणिप्रजानां पालकः स सदान्वाः सदानोनुवाः शब्दकारिणीः सदा भृशं शब्दकारिणीर्यद्वा सदा गर्ह्यशब्दकारिणीर्व्यक्तीः प्राणिजातीर्वा, ताः-इतो नगरान् राष्ट्राद्वा निरजतु निक्षिपतु पृथक् करोतु, अथ तासु या गृहस्य बुध्ने मूले-आसीनाः सन्ति ता इन्द्रो राजा वज्रेण दण्डेनाधितिष्ठतु स्ववशीकरोतु दण्डयतु प्रहरतु॥

अथ यास्कोदाहृतो मन्त्रो यस्मिन् 'सदान्वे'ऽनेकार्थकः स व्याख्यायते—

अरायि काणे विकटे गिरिं गच्छ सदान्वे।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि॥

देवता—अलक्ष्मीः—दुर्भिक्षरूपा दरिद्रता। हे अरायि ! अदायिनि ! दुर्भिक्षरूपे ! दरिद्रते ! त्वं कस्मैचिद् विदुषेऽपि भिक्षां न ददासि हे—अदात्रि ! कृपणे ! काणे ! 'अविक्रान्तदर्शने !' इत्यर्थप्रदर्शनं यास्केन कृतम् 'वि' अत्र विशिष्टार्थे। अनुदारदर्शने ! एकस्मिन् पार्श्वे दर्शिके ! सम्पन्नानेव पश्यसि तानेव भोजयसि नासपन्नान् पश्यसि यतः काणा त्वमेकनेत्रिणी, यद्वा काणमल्पं दर्शनं यस्यास्तथा त्वं हे काणे! विकटे विक्रान्तगतिके विस्तृतगतिके! अस्थिरगतिके ! अशान्ते! "कटी गतौ" (भ्वादि०) अचि रूपम्, कुटिले वा सदान्वे सदानोनुवे! निरन्तरं हाहाकार-शब्दकारिणि ! यद्वा दान्वं खण्डनं हिंसनं "दान खण्डने" (भ्वादि०) दान्वेन हिंसनेन सह वर्तमाने! सदान्वे परस्परं हिंसनप्रवृत्तिके हिंसनप्रवृत्तिमति ! दुष्कालजनितदरिद्रतायामन्योऽन्यं हिंसन्ति जनाः खण्डयन्ति ह्यन्योऽन्यस्यान्न-सम्पत्तिम्, त्वं गिरिं गच्छ नगरं त्यज जनेषु न तिष्ठ, गिरिगमनमालङ्कारिकमेव, यद्वा गिरिं मेघं गच्छ तमेव मारय ताडय नीचैः पातय—अस्मान् मनुष्यान् न मारय किन्तु वयं तु शिरिम्बिठस्यान्तरिक्षे शीर्णशीलस्य मेघस्य तैः सत्त्वैरुदकैस्त्वां घातयामो नाशयामः। अथवा यो राजा शिरिम्बिठो भारद्वाजो भवति बिठस्य शत्रुगणस्य 'बिठं बीरिठेन व्याख्यातमित्युक्तम्' "बीरिठे गणे" ( निरु० ५।२७ ) शिरिर्हिंसकः स शिरिम्बिठः शिरेर्मुम् छान्दसः। शत्रुगणस्य नाशकश्च प्रजायाः पालकश्च भारद्वाजः—प्रजाभ्योऽकस्माद् दुष्कालशङ्कया पूर्वतो वाजमन्नं बिभर्ति—स्थिरान्नगारे भरद्वाज एव भारद्वाजः। स कालकर्णोपितः कालस्यावसरस्य सुकालस्य कर्णः कृन्तनो विक्षेपको वा "कर्णः कृन्ततेः" ( निरु० १। ९ ) दुष्कालस्तेनोपेतो युक्तो राजाऽलक्ष्मीर्दुष्कालप्रवृत्तीर्बहुविधां दरिद्रतां निर्णाशयाञ्चकार निर्णाशयति तथाभूतस्य सत्त्वैः कर्मभिरन्नदानयज्ञैश्च नाशयामः। अत्र 'निर्णा-शयाञ्चकार' इति सामान्यकाले प्रयोगः— यथा पूर्वमस्माभिः 'कुत्सो राजा बभूव' इति प्रसङ्गे स्पष्टीकृतम् "ऋषिः कुत्सो भवति कर्ता स्तोमानाम्" इत्यादि वर्तमानकाले प्रयोगात् तद्वदत्रापि मन्तव्यम्। अथवा—अस्य सूक्तस्य ऋषिः 'भारद्वाजः शिरिम्बिठः' गुणवाचकं नाम न मनुष्यविशेषः, यथा ह्यनन्तरं पूर्वम् "जीवाञ्जो अभिधेतनादित्यासः पुरा हथात्" इति मन्त्रस्य सूक्तस्य वा—ऋषिः "मत्स्याः" यस्य विषये निरुक्तकारेण यास्केनोक्तम् "मत्स्यानां जालमापन्नाना-मेतदार्षं वेदयन्ते" ( निरु० ६। २७ ) न हि मत्स्या जलचरा अन्तर्वो मन्त्राणां द्रष्टारो भवितुं शक्नुवन्ति भावनात्मकतया हि तत्र योजना भवितुं शक्या, तथैवात्रापि भारद्वाजः शिरिम्बिठः कश्चन मनुष्यविशेषो न मन्त्रे वर्णितोऽस्ति, भावनात्मकतया हि स ग्रहीतुं युक्तः, स चेत्थं यत् "मनो वै भरद्वाज ऋषिरन्नं

वाजो यो वै मनो बिभर्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः" (शत० ८ । १ । १ । ९ ) तदुन्नव: सङ्कल्पो भारद्वाज ऋषिः, स च शिरिम्बिठो दुष्कालादिसङ्कटगणस्य हिंसकः संसारेऽनेकवारं तथाभूता:—अलक्ष्मीर्द रिद्रता:—निर्णाशयाञ्चकार तस्य सत्त्वैः कर्मभिर्यज्ञादिभिस्तथेदानीमपि चातयामो नाशयामः ॥

निरुक्तयः—"रा दाने" ( अदादि० ) ततः "वसि····वारिभ्य इञ्" ( उणा० ४ । १२५ ) इति धातोर्बाहुलकात् 'इञ्' प्रत्ययः । "आतो युक् चिण्कृतोः" ( अष्टा० ७ । ३ । ३३ ) रायिः, कृदिकारादक्तिन:—ङीष् स्त्रियां रायी, न रायी—अरायी सम्बोधने 'अरायि'। काण:—'अविक्रान्तदर्शनः' इत्यर्थप्रदर्शनम् । "कण निमीलने" ( चुरादि० ) ततः 'अच्' प्रत्ययः कर्तरि णिजन्ताद् वृद्धिः काणोऽल्पदृष्टिकः—इति निमीलितैकनेत्रः । औपमन्यवस्य पक्षो यद्वा 'कण—अणूभावे' अणुत्वे—अणुशब्दस्य 'भावे' परतः "च्वौ च" ( अष्टा० ७ । ४ । २६ ) 'अणूभावे' । ततोऽणुत्वव्यापारवतः कणधातोः स्यात् काणः, कुतोऽणुत्वार्थकः कणधातुः, उच्यते 'कण' शब्दाणुत्वार्थे भाष्यते 'अनुकणति' शब्दस्यानन्तरमल्पीभूतं शब्दसन्तानमनुकणनम्—कंसपात्रमनुकणति मृदङ्गोऽनुकणति "कण शब्दे" ( भ्वादि० ) यथा शब्दस्याणुत्वं भवति तथा ततः 'अणुत्वम्' सामान्यभावेन मात्राणुत्वात् कणः—अत्यल्पभाग उच्यते कणमात्रमवशिष्टम्, कणशः कुरु । तथैव दर्शने कणधातुर्दर्शनाणुत्वात् काणः, कणति—अल्पं पश्यति एकनेत्रत्वात् । पूर्ववत् 'अच्' कर्तरि धातोःस्वार्थे णिच्, काणः। विकट:—विक्रान्तगतिः—इति—औपमन्यवो मन्यते 'विक्रान्तगतिः' इत्यर्थप्रदर्शनम् । विक्रान्ता सर्वत्र व्याप्ता गतिर्यस्य स विकटः । 'वि' उपसर्गात्—"कटी गतौ" ( भ्वादि ) ततः कर्तरि पचादिलक्षणः 'अच्' प्रत्ययः 'विकटः' अथवा "कुट कौटिल्ये" ( तुदादि० ) यतो विकट:—विकुटितो विशिष्टकुटितो भवति दुर्भिक्षे दुष्काले कौटिल्यमाचरन्ति जनाः । विकटो विपरीतस्यासरलस्य नाम सारल्यरहितो विकटो भवति । 'कुट' इत्युपधाभूतस्य—उकारस्य स्थाने 'अकारः' । 'शिरिम्बिठः' शिरि:—बिठेऽन्तरिक्षे स शिरिम्बिठ:—मेघः। 'शिरि' इत्यस्य पूर्वपदस्य मुम् छान्दसः । शिरिः शीर्णशील:—हिंस्यः "शॄ हिंसायाम्" ( क्र्यादि० ) ततः "कॄगॄपकुटिभिदिछिदिभ्यश्च—इः कित्" ( उणा० ४ । १४३ ) बिठमन्तरिक्षं बीरिठेन व्याख्यातं विज्ञेयम्, विः पक्षी वयः पक्षिण ईरते गच्छन्ति यस्मिन्—अधिकरणे कारके ठन् प्रत्यय औणादिको डिद्धर्मा, डित्त्वाद् 'ईर्' समस्तधातोर्लोपे 'बिठम्' ॥

पराशरः ॥ १२१ ॥

पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे ।

"पराशरः शतयातुर्वसिष्ठः" ( ऋ० ७ । १८ । २१ )
इत्यपि निगमो भवति । इन्द्रोऽपि पराशर उच्यते ।
परा शातयिता यातूनाम् ।
"इन्द्रो यातूनामभवत् पराशरः" ( ऋ० ७।१०४।२१ )
इत्यपि निगमो भवति ॥

भा०—'पराशरः' इत्यनवगतमनेकार्थं च । 'पराशीर्णस्य कुले जातः' यद्वा 'पराशातयिता' इत्यवगमः । परापूर्वकात् 'शीर्ण' इति शब्दाद् युवापत्ये प्रत्ययस्य लुप् 'शीर्ण' इत्यस्य 'शर' भावः, इति पराशरः । अनवगतपक्षे पराशीर्णस्य युवापत्यं पराशरः । अनेकार्थसन्दर्भत्वादवगतपक्षीयोऽर्थोऽप्यपेक्ष्यते पूर्वमन्त्रेऽवगतस्यासम्भवात्—द्वितीयं मन्त्रमवगतार्थायोदाहरति यास्कः "इन्द्रो यातूनामभवत् पराशरः" इत्यत्र परापूर्वकात् "शॄ हिंसायाम्" ( क्र्यादि० ) पचादिलक्षणः कर्तरि 'अच्' प्रत्ययः । पराशरः, तथाकृत्वा स्वरोऽप्यन्तोदात्तः—प्रत्ययस्य चित्त्वात् । स पराशर इन्द्रः पराशातयिता—अत्यन्तहिंसिता । 'पराशातयिता' इत्यर्थप्रदर्शनम्, न तु धातुप्रदर्शनं यत् "शद्लृ शातने" अर्थालाभात्, 'शॄ'धातुरपि हिंसने 'शद्लृ' अपि हिंसने शातनं नाशनं हिंसनं पुनरर्थलाभाभावादेकार्थत्वादनवगतत्वस्य न सम्भवः ॥

अनवगतपक्षे पराशरः पराशीर्णस्य युवापत्यं तदर्थमन्त्रः—

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥

वक्तव्यम्—मन्त्रे 'गृहात्' शब्देन गृहसम्बद्धाः—गृहवासिनो वर्ण्यन्ते । तत्र गृहे त्रयो वसन्ति ते वसुः, वसीयान्, वसिष्ठः । वसुः कुमारः, वसीयान् युवा गृहस्थः, वसिष्ठः—निवृत्तगृहस्थभोगो जीर्णकायः । ते यथाक्रमं पुत्रः ( पितामहस्य पौत्रः ) पिता, पितामहः । पितामहस्तु पौत्रात् पुत्राच्च पूर्वं गृहे वसति तस्मात् स वसिष्ठः । अत्र मन्त्रे 'पराशरः, शतयातुः, वसिष्ठः' इति त्रयो वैदिकभाषायां यथाक्रमं पौत्रः, पुत्रः, पिता यद्वा पुत्रः, पिता, पितामहः सन्ति । पराशरः पौत्रो वसिष्ठस्य जीर्णस्य पितामहस्य । यथा यास्केनोक्तम् "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे" गृहे वसिष्ठस्य वस्तृतमस्य स्थविरस्य पितामहस्य पराशीर्णस्य—अतिजीर्णस्य यो जज्ञे जातः स पराशरस्तत्पौत्रः । अत्र पराशरः पौत्रः पराशीर्णस्य, युवापत्यत्वात् । शीर्णस्य शरभावोऽनवगतत्वात्—

छान्दसः ॥ अवगतपक्षे तु 'परा' उपसर्गपूर्वात् "शॄ हिंसायाम्" ( क्र्यादि० ) ततः 'अच्' प्रत्ययः कर्तरि । पराशरः पराशातयिता—इन्द्रः ॥

"प्र ये गृहाद्....." इति मन्त्रस्यार्थः—

पराशरः शिशुः—वसिष्ठस्य स्थविरस्य पितामहस्य पौत्रः, शतयातुः—तस्य पिता शुषो गृहस्थः स्थविरस्य पुत्रः, वसिष्ठः—तस्यापि पिता पराशरस्य पितामहः,—ये—एते त्रयः । हे इन्द्र ! परमात्मन् ! त्वाया त्वया सहाय्येन तव कृपया गृहाद् गृहं प्राप्य 'ल्यप्लोपे पञ्चम्युपसंख्यानम्' अममदुः—हर्षं सुखं सेवन्ते । भोजस्य भोजकस्य पालकस्य रक्षकस्य ते तव सख्यं न मृषन्त न प्रमाद्यन्ति न नाशयन्तीत्यर्थः । अध—अनन्तरमतो वा सूरिभ्यः सूरीणां स्तोतॄणामेषां सुदिनानि व्युच्छान् व्युच्छन्ति व्यतियन्ति । "सूरिः स्तोतृनाम" ( निघं० ३ । १६ ) इति त्वनवगतपक्षे—उदाहरणम् ।

अथावगतपक्षे—पराशरः—पराहिंसिता—

इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या॒विवासताम् ।

अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥

इन्द्रो राजा हविर्मथीनां यज्ञविध्वंसकानामभ्याविवासतामभ्याक्राम्यतां यातूनां वधकानां हिंसकजनानां दुष्टानाम् "यातयति वधकर्मा" ( निघं० २ । १९ ) पराशरः पराशातयितात्यन्तनाशयिता हिंसिता भवेत्, शक्रः—शक्त इन्द्रो राजा—इत्—उ—अवश्यमेव परशुः कुठारो यथा वनं वृक्षं वृक्षं छिनत्ति—अथवा पात्रा—इव—पात्राणि यथा कश्चन मुद्गरादिभिर्भिनत्ति तद्वत् प्राप्तान् रक्षसो राक्षसान् दुष्टान् दस्यून् भिन्दन् भिनत्तु ॥

क्रिविर्दती ॥ १२२ ॥

क्रिविर्दती विकर्तनदन्ती ।

"यत्रा वो दिद्युद्रदति क्रिविर्दती" ( ऋ० १ । १६६ । ६ ) इत्यपि निगमो भवति ॥ ३० ॥

भा०—'क्रिविर्दती' इत्यनवगतमनेकार्थं च । 'विकर्तनदन्ती' इत्यवगमः । "कृती छेदने" ( तुदादि०—रुधादि ) ततः क्विन्प्रत्यये "कृविघृष्विछविस्थविकिकीदिवः" ( उणा० ४ । ५६ ) इत्यनेन निपात्यते बाहुलकात् यथायोग्यकारकेषु । 'कृत्' इत्यस्य क्रिभावः । क्रिवयो विकर्तनाश्छेदका दन्ता यस्याः—यद्वा क्रिविर्विकर्तनं हिंसनमेव दन्ता यस्याः सा क्रिविर्दती रेफोपजनः । विकर्तनात् "कृती छेदने" धातोः क्रिविः—इत्यनवगते पक्षे, अवगतपक्षे "कॄ विक्षेपे" ( तुदादि० )

क्रिविः क्रिन्प्रत्यये सति । प्रत्ययस्य कित्वाद् गुणाभावे-ऋकारस्य रिङ् निपातनात् । क्रिविः-विक्षेपकः विक्षेपकदन्तवती क्रिविर्दती । सा यन्त्रस्य प्रेरिका विद्युच्छक्तियुक्तकला क्षेत्रखण्डस्य प्रेरिका हलफाला, मेघस्य प्रेरिका वातभ्राजिका ॥

समग्रमन्त्रः—

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।

यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥

वक्तव्यम्—अत्र 'मरुतः' शब्देन विद्वांसो वैज्ञानिकाः कलाविज्ञा गृह्यन्ते "मरुतः-ऋत्विङ्नाम" ( निघं० ३ । १८ ) कृषिविद्याविज्ञा वैश्याः "विशो वै मरुतः" ( शत० ३ । ९ । १ । १७ ) सैनिकजनाः "असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना । तां विध्यत....." ( अथर्व० ३ । २ । ६ ) वृष्टिवाताः पुरोवाताः पवनाश्चापि गृह्यन्ते । सर्वेषां पार्श्वे दिद्युत्-तेजस्विनी तीक्ष्णा वा क्रिविर्दती ॥

मन्त्रार्थः—

हे मरुतो विद्वांसो यन्त्रकलाविज्ञाः ! यद्वा कृषीवला वैश्याः ! अथवा सैनिकाः ! अथवा पवनाः ! यूयमुग्रास्तीव्रगुणकर्मस्वभावाः ! अरिष्टग्रामाः-अरिष्टाः-अहिंसिताः सुरक्षिता ग्रामा मनुष्यादिप्राणिसंघा यैस्ते यूयं नोऽस्माकं सुचेतुना शोभनज्ञानेन सावधानकरेण धर्मेण सुप्रेरणया वा । "चिती संज्ञाने" ( भ्वादि० ) "चित संचेतने" ( चुरादि० ) सुमतिं सुवाञ्छां पिपर्तन पूरयत । यत्र वो युष्माकं दिद्युत्-ज्ञानप्रकाशशीला यद्वा खण्डनशीला-अथवा प्रतिद्वन्द्विनामभिमुखं गमनशीला "दिद्युद् द्यतेर्वा द्युतेर्वा द्योततेर्वा" ( निरु० १० । ७ ) ज्ञानवज्रं-ज्ञानशक्तिः, शस्त्रवज्रं-शस्त्रशक्तिः "दिद्युत्-वज्रनाम" ( निघं० २ । २०) क्रिविर्दती हिंसकदन्तवती हिंसनदन्तवती विक्षेपणदन्तवती रदति विलिखति "रद विलेखने" ( भ्वादि० ) । हे मरुतो विद्वांसो ज्ञानप्रकाशनशीलाः-अज्ञानस्य हिंसका दन्ता यस्याः सा विद्या याऽन्तःकरणं रदति शोधयति, हे मरुतः सैनिकाः ! शत्रूनभिगन्तुं समर्था वज्रशक्तिः शत्रुभ्यो हिंसकदन्तवती या शत्रून् रदति मर्दयति, हे मरुतः शिल्पिनः ! अग्रगमनशीला प्रक्षेपणदन्तवती दन्तैर्वर्तमाने यन्त्रे चक्राणि चालयति तथाभूता कार्यजातं रदति विलिखति साधयति, हे मरुतो वैश्याः कृषिकराः ! दिद्युत् खण्डनशीला हलफाला हिंसकाणिरूपदन्तवती हिंसकोऽणिरूपो दन्तो यस्याः सा क्षेत्रं रदति विलिखति कर्षति, हे मरुतो वायवः ! दिद्युत्-दीप्ता विद्युत्-मेघहिंसनदन्तवती मेघं रदति विलिखति शिथि-

लीकृत्य पातयति । सा बर्हणा सुधिता—इव पश्वः—रिणाति—यथा सुधिता सुधारिता सुनियता "धि धारणे" ( तुदादि० ) बर्हणा परिवृढा परिवृद्धा लम्बमाना स्थूला च कशा पशुप्रेरणी सदण्डरज्जुः "बर्हणा परिवृढा" ( निरु० ६ । १८ ) पश्वोऽश्वादीन् रिणाति गमयति चालयति प्रेरयति "रिणाति गतिकर्मा" ( निघं० २ । १४ ) यथा कशा पशून् चालयति प्रेरयति तथा मरुतां विदुषां ज्ञानज्योतिर्मयी वाक्—अज्ञानान्धकारानग्रे गमयति, मरुतां यन्त्र-कलाविदां शिल्पिनां, विद्युद्युक्ता मुख्या कला दन्तमयी चक्रिका कलायन्त्रं चाल-यति, मरुतां कृषिकर्मकारिणां वैश्यानां खण्डनी विक्षेपणसमर्थैकाणिदन्ती फाला क्षेत्रखण्डान्—अग्रे क्षिपति, मरुतां सैनिकानां विद्युदस्त्रशक्तिः—ऋष्टिः "आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः" ( ऋ० १ । ८८ । १ ) शत्रून् धावयति, मरुतां वायूनां पुरोवातानां वा—अभिगन्त्री शक्तिर्विक्षेपणदन्त-वती मेघान् विक्षिपति नीचैः प्रेरयति ॥

करूळती ॥ १२३ ॥

करूळती कृत्तदती, अपि देवं कश्चित् कृत्तदन्तं दृष्ट्वै-वमवक्ष्यत्—

"वामं वामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूळती ॥"
( ऋ० ४ । ३० । २४ )

वामं वननीयं भवति । आदुरिरादरणात् । तत्कः करू-ळती ? भगः पुरस्तात्तस्यान्वादेश इत्येकम् । पूषेत्यपरं सोऽदन्तकः । "अदन्तकः पूषा" ( शत० १ । ७ । ४ । ७—गो० उ० १ । २ ) इति च ब्राह्मणम् ॥

भा०—'करूळती' इत्यनवगतम् । 'कृत्तदती' इत्यवगमः । 'भगः' यद्वा 'पूषा' अभिधेयः, तत्राभिधेये सन्देहो विशेषणपदत्वात् । अत्र सन्दिग्धत्वात्—अनवगतत्वाच्च पाठः । कृत्तदती स्त्रीलिङ्गाभासे देवता विशेष्यते कृत्तदती देवता, यद्वा कृत्तो दन्तो यस्येति मतुबर्थे—इनिप्रत्यये दन्तस्य दतः—आदेश इति ज्ञाप-नायानुकरणशब्दः करूळती 'ळती—डती—दती' इत्येवं दकरस्थाने डकारप्रदर्शनाय प्रकृतिवदनुकरणं भवति । 'कृत्तदन्त' शब्दस्य 'करूळती'भावः । यद्वा "कृती छेदने" धातोर्भूते काले डरूः प्रत्यय औणादिको बाहुलकात् । तेन करूः कृत्तः—दन्तो यस्येति दकारस्य डकारश्चादेशः, करूळती । यास्कः कथयति 'करूळती'

इति विशेषणं तत्कस्य विशेषणमिति विचारं प्रस्तौति, 'करूळती' इति भगः स्यात्, यतो भगस्तस्मात् पूर्वमनन्तरं पठितस्तस्याग्वादेशस्तस्य भगस्य पुनः कथनं विशेषणरूपेण स्यात् तस्यानन्तरत्वादित्येकं मतम् । 'करूळती' पूषा स्यादित्यपरं मतं यतः पूषा खल्वदन्तकः "अदन्तकः पूषा" इति ब्राह्मणे कथितम् । यास्केन स्वीयं मतं दर्शितं किन्तु 'एकम्' 'अपरम्' इत्युक्त्वा । केवलं कश्चिद् देवं भगं पूषणं वा कृत्तदन्तं दृष्ट्वा हि तदेतदुक्तं स्यात्—भगं वा पूषणं वा । भवतु—अनन्तरो भगो यद्वा पूषा तथादृष्ट्यानेकार्थकमनवगतं च पदम् ।

मन्त्रार्थः—

हे आतुरे ! शत्रूणां विदारक ! इन्द्र राजन् ! आङ्पूर्वात् "दृविदारणे" ( क्र्यादि० ) "अच इः" ( उणा० ४ । १३९ ) आतुरिः—मध्यस्थस्य—अकारस्य—उकारश्छान्दसः । अर्यमा देवो न्यायाधीशो विद्वान् न्यायमन्त्री सम्यक् निरीक्ष्य न्यायं कृत्वा वामं वामं प्रशस्यं प्रशस्यमत्यन्तं प्रशस्यं न्याययशस्ते तुभ्यं ददातु प्रयच्छतु, पूषा पोषकः पुष्टेःकर्ता खाद्याध्यक्षः खाद्यमन्त्री वामं प्रशस्यं खाद्यं तुभ्यं तव राज्यान्नागाराय वा ददातु । भगो देवः—भगो धनं तद्वान् भगः—अकारो मत्वर्थीयश्छान्दसः, विद्वान् भगाध्यक्षोऽर्थमन्त्री करूळती कृत्तदन्तः—कृत्तदन्त इव स्यात् सोऽर्थं न चर्वेत्—राष्ट्रकोशस्यार्थचर्वणेन राष्ट्रं विनश्यति । तथाभूतः संयतोऽर्थमन्त्री नियोजनीयो यतः स राष्ट्रकोशतः प्रजाजनानां चार्थं न भक्षयेत् किन्तु वामं प्रशस्यमर्थं धनं प्रजातः शुल्कादिनाऽऽनीय ददातु । यद्वा करूळती पूषा कृत्तदन्तकः—अखादकः पोषकः पुष्टेः कर्ता खाद्यमन्त्री यो न खादति राष्ट्रस्य प्रजाजनानां वा खाद्यं वस्तु भक्षयितुं न वाञ्छति तथा कृत्तदन्तः संयमी खाद्ये त्ववश्यं तथाभूतः संयमी भवत्युपयुक्तः, यदि राष्ट्रस्य खाद्यं कश्चन भक्षयेत् तर्हि प्रजाजना मरिष्यन्ति, परराष्ट्रेण युध्यमानः खाद्यमन्तरेण राजा न चिरं योद्धुं समर्थो भवति पराजयमधिगच्छति । स तथाभूतः खाद्याध्यक्षो वामं प्रशस्यं खाद्यं पवित्रं खाद्यं तुभ्यं ददातु—दास्यति प्रजाजनान् न पीडयिष्यति तेभ्यः खाद्यग्रहणे तथा खाद्यागारेऽवरोधनं न तथा करिष्यति यथा प्रजाजना म्रियेरन् ॥

उक्तार्थस्तु—अनवगतदृष्ट्या । तदपेक्षयाऽवगतदृष्ट्याऽपि "करूळती' शब्दो लक्ष्योऽनेकार्थसन्दर्भत्वात् स चेत्थम् । "कृञ् हिंसायाम्" ( स्वादि० ) ततः "उणादयो बहुलम्" ( अष्टा० ३ । ३ । १ ) 'उः' प्रत्ययो बाहुलकात् ( उणा० १ । ७ ) करुः, करून् हिंसकान् स्वप्रजाजनानां हिंसकान् स्वराष्ट्रस्य हिंसकान् दुष्टान् शत्रून्—उठति—उपहन्ति करूठता सेना "करूणाम्—उठता" "उठ उपघाते" ( भ्वादि० ) ततः 'अतच्' प्रत्ययः "भृमृ....हर्यिभ्योऽतच्" (उणा० ३।११०)

उठतः स्त्रियाम्–उठता, करूणां हिंसकानां दुष्टानां शत्रूणामुठता हिंसिका सेना करूठता सेना सा यस्यास्ति स करूठती मतुबर्थक इनिः प्रत्ययः। ठकारस्य ळकारश्छान्दसः। स च करूळतीः–इन्द्रः, इन्द्रो हि मन्त्रस्य देवता, तदा मन्त्रार्थो निम्नो भवति।

मन्त्रार्थः—

हे आदुरे देवानां विदुषामादरणीयानामादरयितः श्रेष्ठप्रजाजन! "दृङ् आदरे" (तुदादि०) ते तुभ्यम्–अर्यमा देवो विद्वान्–अतिथिर्ब्राह्मणः संन्यासी "मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी॥" (ऋ० १०।११७।६) इत्यत्र 'अतिथि-ब्राह्मणः संन्यासी' स वामं वामं प्रशस्यं प्रशस्यतरं ज्ञानामृतं ददातु–ददाति, पूषा पोषकोऽन्नादिना पोषयिताऽन्नादीनुत्पाद्य यः पोषयति स कृषेः कर्ता "पूषा भागदुघोऽशनं पाणिभ्यामुपनिधाता" (शत० १।१।२।१७) वामं प्रशस्य-मन्नं ददातु–ददाति, भगो यो भजते सेवते त्वां स भृत्यो भरणीयोऽनुचरः "भगो भजतेः" (निरु० ३।१६) वामं प्रशस्यं सेवाचरणं ददातु–ददाति, देवः करूळती करूणां हिंसकानां शत्रूणामुठता हिंसिका सेना यस्य स इन्द्रो राजाऽऽदरणीयो दिव्यगुणो वामं प्रशस्यं पालनं रक्षणं ददाति॥

दनः॥ १२४॥

"दनो विश इन्द्र मृध्रवाचः" (ऋ० १।१७४।२)

दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु॥

'दनः' इत्यनवगतम्। 'दानमनसः' इत्यवगमः। 'दानमनस्' इत्यस्य 'दनस्' भावः, 'दान' इत्यस्य 'द' आदिमो भागः–तथा 'मनस्' इत्यस्य 'नस्' अन्तिमो भागो गृहीत्वा 'दनस्'–दनः, छान्दसः प्रयोगोऽनवगतः। 'दनः' पदं नावगतमेकमन्त्रकं च तस्मादेकार्थम्॥

समग्रमन्त्रस्तदर्थश्च—

दनो विश इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त्।

ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः॥

हे इन्द्र! परमात्मन्! त्वं विशो नोऽस्मान् मनुष्यान् दनो दानमनसः—यज्ञद्वारा हविर्दानमनस्काः–मृध्रवाचः–मृदुवाचः सारल्येन यज्ञे मन्त्रोच्चार-कान् कुरु। यत्–यतस्त्वं विद्युद्द्वारा सप्त सृप्ताः–आकाशे प्रसृताः–पुरः—उदकपूर्णा मेघपुरो मेघनगर्यः शारदीः–सांवत्सरिकीः 'शरद्' सामान्येन संवत्सर-

बाधकः "जीवेम शरदः शतम्" इतिवत्, प्रतिसंवत्सरभवाः सञ्चितास्ता मेघनगरीः–शर्म–सुखमस्मभ्यं यथा स्यात् तथा सुखेन वृत् त्वं वृणीहि, पुरुष-व्यत्ययेन प्रथमः पुरुषः। पुनः–अनवद्याः शुद्धा अर्णा अरणा गमनशीला अपो नीचैः–ऋणोः–ऋणुहि प्रेरय, हे परमात्मन्! पुरुकुत्साय बृहयर्थं बहुस्तुतिं कुर्वते यूने स्तुत्या त्वां योक्तुकामाय यूने–इव कर्मसमर्थाय जनगणाय वृत्रं मेघं रन्धीः–रन्धय संसाधय प्रपातय। "देहि मे ददामि ते" दानमनाः स्यात् सु फलभाग् भवेत् ॥

शरारुः ॥ १२५ ॥
"अवीरामिव मामयं शरारुरभिमन्यते" (ऋ० १०।८६।९)
अबलामिव मामयं बालोऽभिमन्यते।
संशिशयिषुः * ( संशिशरिषुः ? † ) ॥

भा०—'शरारुः' इत्यनवगतम्। 'संशिशयिषुः' इत्यवगमः। 'संशिशरिषुः' इत्यपि पठ्यतेऽवगमोऽनवगतं मत्वा, स च "शृवन्द्योरारुः" (अष्टा० ३।२।१७३) इति लक्षणशास्त्रेणावगत एव, लक्षणशास्त्रे तच्छीलार्थः प्रत्ययः प्रयोगश्च शरारुः–हिंसनशीलः। अत्र सन्नन्तावगमप्रदर्शनात्–प्रत्ययः प्रयोगश्च–इच्छार्थे यतः—हिंसितुमिच्छुः। न ह्यत्रार्थे लक्ष्यभेदः। हिंसा तूभयत्रापि, हिंसायाः शीलं रक्षेत्–यद्वा हिंसाया इच्छां रक्षेत्। हिंसकस्तूभयत्रापि शीलमपि मनोवृत्तिः। तस्मात् 'संशिशयिषुः' इत्यवगमो नैरुक्तः, अनवगतत्वात्, नहि 'शरारुः' इत्यस्मिन् प्रत्यक्षं शीङ् धातुरवगम्यते। अतो वयं संशिशयिषुः–इत्यवगमं युक्तं नैरुक्तं मन्यामहे। अवगतपक्षे 'शरारुः' एव शृधातोः–आरुप्रत्ययस्ताच्छीलिकः। तस्मात् 'शरारुः' इति पदमनेकार्थमनवगतपक्षे 'संशिशयिषुः' संशयितुमिच्छुः। अवगतपक्षे हिंसनशीलः। प्रयोगश्चैष एकस्मिन्नेवास्मिन् मन्त्रे प्रयुक्तः समस्ते वैदिकवाङ्मये, अतोऽत्रोभयार्थत्वेन योजनीयस्तथैवास्माभिर्व्याख्याते ॥
समग्रमन्त्रस्तदर्थश्च—

अवीरामिव मामयं शरारुरभिमन्यते।

उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥

अयं वृषाकपिः सूर्यः "रश्मिभिरभिप्रकम्पयन्नेति सः" ( निरु० १२। २७-अस्मिन्नेव सूक्ते ) स सूर्यः शरारुः संशिशयिषुर्भोगाय बालः कुमारो युवा मम

* 'संशिशयिषुः' इति पाठान्तरं यथा स्कन्देनोक्तम्, तच्च समीचीनम्।
† 'संशिशरिषुः' इति मुद्रितपुस्तकेषु दुर्गभाष्ये च।

ताराभिः सह संशयितुमिच्छुः "प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत्" ( अत्रैव सूक्ते पञ्चममन्त्रे ) यद्वाऽयं हिंसनशीलो वालो बलेऽन्यस्य बले-आश्रितो मामबलामिवाभिमन्यते, परन्तु-अहमिन्द्रस्य-उत्तरध्रुवस्य पत्नी व्योमकक्षा रेवतीप्रभृतिनक्षत्राणामाश्रयभूता मरुत्सखा मरुतां सम्बन्धिनी वीरिणी वीरवती खल्वस्मि, मम पतिरिन्द्रः-उत्तरध्रुवो विश्वस्माद् जगत उत्तरदिशि स्थितोऽस्ति । अयं मन्त्रो ज्योतिर्विद्याविषयकः, अस्य विशिष्टविवरणं मया रचिते "वैदिक-ज्योतिष्-शास्त्र' इति पुस्तके द्रष्टव्यम् ॥

इदंयुः ॥ १२६ ॥

इदंयुरिदं कामयमानः । अथापि तद्वदर्थे भाष्यते ।

वसूयुरिन्द्रो वसुमानित्यत्रार्थः । "अश्वयुर्गव्यू रथयुर्वसूयुः ( ऋ० १ । ५१ । १४ ) इत्यपि निगमो भवति ॥ ३१ ॥

भा०—'इदंयुः' इत्यनवगतमनेकार्थं च । 'इदंयुः' न हि यथास्वं स्वरूपपदम् । न चेत्थं रूपं पदं वेदेषूपलभ्यते । किन्तु-इदं सर्वनाम, इदं शब्देन वस्तु विशेष्यते वस्तुवाचकनाम्नोऽग्रे 'युः' कामयमानेऽर्थे भवति "सुप आत्मनः क्यच्" ( अष्टा० ३ । १ । ८ ) "क्याच्छन्दसि-उः" ( अष्टा० ३ । २ । १७० ) आत्मन इच्छायां क्यच् "छन्दसि परेच्छायामित्यपि वक्तव्यम्" वा० ( अष्टा० ३।१।८ ) यथा देवं कामयमानः- देवयुः, सुम्नं कामयमानः सुम्नयुः, अध्वरं कामयमानः-अध्वर्युः "अध्वर्युः- अध्वरं कामयते" ( निरु० १ । ८ ) वसूनि कामयमानाः-वसूयवः "नराधियो वसूयवो········" ( ऋ० ९ । ११२ । ३ वसूयवो वसुकामाः" निरु० ६ । ५ ) वस्तुवाचकात्-नामपदात्-युः प्रत्ययः । युप्रत्ययान्तं पदमनवगतम् । इदं कामयमानो वस्तु कामयमानः-अवगमः । पुनश्च तद्वदर्थे वस्तुवदर्थे मत्वर्थे "तदस्यास्त्यस्मिन्निति मतुप्" (अष्टा० ५ । २ । ९४) अपि भाष्यते व्यवह्रियते तस्माद् मत्वर्थकोऽपि 'युः' शब्दः, अतः 'मत्वर्थस्तद्वान् विशिष्टवस्तुमान्-इदंयुः' । यथा वसूयुः- इन्द्रः, इत्ययमर्थोऽत्र । एवं 'युः' इत्ययमनेकार्थकः-इच्छार्थको मत्वर्थकश्च । यास्केन "अश्वयुः········" इति मन्त्र उदाहृतस्तत्र 'युः' उभयोरर्थयोर्वर्ततेऽनेकार्थसन्दर्भदर्शनात् । प्रथमं पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्तेऽस्माभिः ।

इच्छार्थे कामनार्थे वा-'युः' । इच्छार्थ-अश्वयुः—

त्वामिद् यवयुर्मम कामो गव्युर्हिरण्ययुः । त्वामश्वयुरेषते ॥

( ऋ० ८ । ७८ । ९ )

हे इन्द्र ! मम कामः कामयते येन स कामोऽहमात्मा यवयुर्यवमन्नमिच्छन् गव्युर्गा इच्छन् हिरण्ययुर्हिरण्यमिच्छन्—अश्वयुरश्वमिच्छन् त्वामेव—आ—ईषते—ऐषते गैति प्राप्नोति ॥

त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनाम् । ( ऋ० ८ । ५३ । ८ )

हे हरिवः—हरिमन् ! इन्द्र ! अहमश्वयुरश्वं कामयमानो गव्युर्गाः कामयमानो मथीनां योद्धृणामग्रे पूर्वं तं त्वां समभे सम्यक् प्राप्नोमि ॥

परेच्छायां च छन्दसि—

आ दिवस्पृष्ठमश्वयुर्गव्ययुः सोम रोहसि । वीरयुः शवसस्पते ॥

( ऋ० ९ । ३६ । ६ )

अश्वयुः स्तोतृणामश्वमिच्छन् ( सायणः ) ।

मत्वर्थे अश्वयुः—

अस्माकं धृष्णुया रथो द्युमाँ इन्द्रानपच्युतः । गव्युरश्वयुरीयते ॥

( ऋ० ४ । ३१ । १४ )

हे इन्द्र ! धृष्णुया शत्रूणां धर्षकः, छन्दसि 'या' आदेशः सुविभक्तेः, दीप्तिमान्—अनपच्युतोऽविचलितोऽस्माकं रथो गव्युर्गोमान्—अश्वयुरश्ववान्—ईयते गच्छति ॥

इच्छार्थे गव्युः—

"त्वामिध····गव्युर्हि····" ( ऋ० ८ । ७८ । ९ ) उक्तः 'अश्वयुः' मन्त्रे ॥

परेच्छायां गव्युः—

एष गव्युरचिक्रदत्पवमानो हिरण्ययुः । इन्दुः सत्राजिदस्तृतः ॥

( ऋ० ९ । २७ । ४ )

एष सोमोऽस्मभ्यं गाः कामयमानो हिरण्यं कामयमानोऽहिंसितः संग्रामस्य विजेता शत्रूनाह्वयति ॥

मत्वर्थे गव्युः—

( ऋ० ४ । ३१ । १४ ) 'गव्युः—अश्वयुः' इत्यनेन सह ।

इच्छार्थे रथयुः—

उशतीर्द्वारो महिना महद्भिर्देवं रथं रथयुर्धारयध्वम् ।

( ऋ० १० । ७० । ५ )

गृहस्थसुखस्य द्वारः—उशतीः—गृहस्थधर्मं कामयमाना रथयुः—रथं कामयमानाः—महद्भिर्देवैः सह देवं दिव्यं रथं रमणसाधनं धारयध्वम् ॥

मतुबर्थे रथयुः—

स्वाध्यो वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।

( ऋ० ७ । २ । ५ )

शोभनविस्तृतकर्माणो देवयन्तो देवभावं प्राप्नुवन्तः—रथयुः—रथवन्तः सन्तः—देवताता—देवतातौ यज्ञे "देवताता यज्ञनाम" ( निघं० ३ । १७ ) दुरो गार्हस्थ्यसुखस्य द्वारभूताः स्त्रियो विशिश्रयुः—विशेषेण—आश्रयेयुः ।

इच्छायाम्—वसूयुः—

वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षम् ॥

( ऋ० ५ । २९ । १५ )

सुकृतानि कर्माणि भद्राणि वस्त्राणि तन्तुवायो वयति वसूनि धनानि कामयमानः, यद्वा तक्षकः स्वपाः सुकर्मा कर्मकुशलो धीरो धैर्यवान् सन् रथं न—रथमिवातक्षम्—तष्टवान् ॥

मतुबर्थे वसूयुः—

इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।

नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥

( ऋ० १ । १८६ । ११ )

हे यजत्राः—यष्टव्या देवाः ! वो युष्माकं सेयं दीधितिर्दीप्तिः—अपिप्राणी—पूर्णप्राणदायिनी सदनी सदनरूपा निवासप्रदा भूयाः । या च देवेषु विद्वत्सु नियतते निरन्तरं यत्नं करोति । वसूयुर्वसुमती पृथिवी ततः—इषमन्नं, जीवनं च विद्याम प्राप्नुयाम ॥

अथ यास्कोदाहृतो मन्त्रो यस्मिन् 'युः' इत्यनेकार्थकः स व्याख्यायते—

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः ।

अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ॥

इन्द्रो राजा सुध्यः—शोभनज्ञानकर्मवतो जनान्—अश्रायि—श्रयेत—आश्रयेत्—समन्तात् सेवेत निरेके—निरिक्ते—अन्नादीनां वस्तूनां नितान्तरिक्ते काले दुष्काले तान् शोभनज्ञानकर्मिणो रक्षेत् तेषां रक्षां कुर्यात्, तथा पज्रेषु प्राज्यन्तेऽन्नवस्त्रकलावस्तूनि यैस्तेषु कृषिव्यापारकलाशिल्पसदनेषु "पज्रहोषिणौ—प्रार्जितहोपिणौ" ( निरु० ५ । २२ ) स्तोमः—राज्ञः प्रशंसनप्रवर्धनघोषो यद्वा राज्यस्य प्रशंसनप्रवर्धनविभागो दुर्यो न यूपः—द्वारि स्तम्भः—इव—आश्रयस्य दाता भवति तथाऽऽश्रयं दद्यात् । अथ च तदानीं राजा स्वार्थाय परार्थाय च "छन्दसि परेच्छायां

चोपसंख्यानं कर्तव्यम्" अश्वयुरश्वान् कामयमानो गव्युर्गाः कामयमानो रथयुः—रथान् कामयमानो वसूयुः—वसूनि धनानि कामयमानः सन्—इदेव रायः—ऐश्वर्याणि—अश्वगवाश्वादीनि क्षयति प्राप्नोति "क्षि निवासगत्योः" ( अदादि० ) प्राप्तिरर्थोऽत्र विकरणव्यत्ययेन शप् । तथा प्रजाजनेभ्यश्चाश्वाश्वगोरथवसूनां प्रयन्ता प्रदाता भविष्यति । इति 'युः' स्वेच्छापरच्छायाम् । इति त्ववगतपक्षः सिद्ध एव "सुप आत्मनः क्यच्" परेच्छायां च छन्दसि पुनः 'क्याच्छन्दसि—उः ।' मतुबर्थस्तु लक्षणशास्त्रेणानवगतः स नैरुक्तपक्षः सोऽपि खल्वर्थोऽत्रास्त्यनेकार्थसन्दर्भत्वात् सोऽपि दर्श्यते ।

मतुबर्थे 'युः'—इन्द्रो राजा निरेके निरिच्यन्ते प्राणैर्योद्धारो यस्मिन् सः—तस्मिन् संग्रामे सुध्यः सुकर्मिणः स्वयोद्धृन्—अश्रायि आश्रयेत् तेभ्य आश्रयं दद्यात् पज्रेषु प्रार्जितस्थानेषु प्रार्जितस्थानानां शिखिराणां मध्ये स्तोमो दुर्यो न प्रतिधिभूतः "स्तोमा आसन् प्रतिधयः" ( ऋ० १० । ८५ । ८ ) अचलबलभूतद्वारिस्तम्भ इव—अश्वयुरश्ववान्—अश्वैर्युक्तो गव्युर्गोमान् गोभिर्युक्तः—रथयुः—रथवान् रथैर्युक्तः—वसूयुः—वसुमान् वसुभिर्धनधान्यैर्युक्तः सन् तिष्ठेत्, एवं कृत्वा इह स राजा रायो धनानि स्वराष्ट्रे क्षयति निवासयति "क्षि निवासे" ( निवासगत्योः ) अन्तर्गतो णिजर्थः । प्रयन्ता प्रजाजनेभ्यश्च धनानां प्रदाता भवति ॥

कीकटेषु ॥ १२७ ॥

"किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒ह्रे न त॑पन्ति घ॒र्मम् । आ नो॑ भर॒ प्रम॑गन्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन् रन्धया नः ॥" ( ऋ० ३ । ५३ । १४ )

किं ते कुर्वन्ति कीकटेषु गावः । कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः, किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी । माङ्गदो मामागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः । प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः, पण्डको वा, पण्डकः पण्डगः प्रार्दको वा, प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति तस्तम्भे । नैचाशाखं नीचाशाखो नीचैःशाखः । शाखाः शक्नोतेः, आणिररणात् । तन्नो मघवन् रन्धयेति रध्यतिर्वशगमने ॥ ३२ ॥

भा०—'कीकटेषु' इत्यनवगतम्। 'किङ्कृताः' यद्वा 'किं क्रियाभिः प्रेप्सा तथाभूताः' इत्यवगमः। 'किम्-कृताः' 'किम्' आक्षेपे किं कृतं कर्म जीवनमात्रं येषु ते कीकटाः, न तत्र धर्मदानादिकं कर्तुं शक्यते। कीकटा देशोऽनार्यनिवासः। 'किं कृत' शब्दस्य 'कीकट' छान्दसः पृषोदरादित्वाद् वा। यद्वा किं क्रियाभिः-धार्मिकीभिः क्रियाभिः-इति प्रेप्सा भावना येषां ते किङ्कृताः-अनार्यजनाः-नास्तिकाः। इति त्वनवगतपक्षे तदपेक्षयाऽवगतपक्षेणाप्यर्थो लक्ष्योऽनेकार्थ-सन्दर्भत्वात्। स चेत्थम्-कीकटाः-मेघाः "कटे वर्षावरणयोः" (भ्वादि०) ततो भावे घञ् प्रत्ययः, 'मितां ह्रस्वः' इति वृद्धेरभावो घटः कटः, कटो वर्षणम्। मेघा आवरकाः सन्ति परन्तु न वर्षन्ति तदाऽऽक्षिप्यन्ते ते किं कथं कटो वर्षणं येषां ते कीकटाः। यतो जनाः प्रतीक्षन्ते हि यन्मेघा वर्षन्तु, न वर्षणात् ते कीकटा उच्यन्ते। 'किम्' शब्दस्य 'कट' शब्दोत्तरपदे कीभावः "इदङ्किमोरश्की" (अष्टा० ६।३।८८) उदाहरणं कीदृशः। "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति परिभाषावचनात्-विहिता अपि विकल्प्यन्तेऽविहिता अपि विकल्पेन भवन्ति, तथाकृत्वा यास्केनापि मतम् 'किंकृताः कीकटाः। अन्यत्रापि वेदे 'किम्' शब्दस्य 'की' आदेशो लभ्यते यथा "यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः" (ऋ० ८।६६।३) इन्द्र' कीजः-किम्-जः कथं जातः, "कीज इत्यद्भुतमाह किमस्य कथं जातः" (सायणः) अत्र-इन्द्रविषये 'कीजः' शब्दः-आश्चर्ये, प्रस्तुतमन्त्रे मेघविषये 'कीकटाः' आक्षेपे वर्तते। यास्कस्य निर्वचनं त्वनवगतपक्षे 'कटाः कृताः'। अवगतपक्षे 'कटाः' यथास्वमेव। इन्द्रस्तु सदा प्रशंसनीयः, अतस्तद्विषये किम्शब्दः-आश्चर्ये, मेघविषये-आक्षेपे, यतो मेघाः कदाचिद् वर्षन्ति कदाचिन्न वर्षन्ति यदा न वर्षन्ति तदा 'कीकटाः' उच्यन्ते। मन्त्रार्थः प्रदर्श्यते।

अवगतपक्षे कीकटाः-मेघाः—

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः॥

हे मघवन्! ऐश्वर्यवन्-इन्द्र, सूर्य! ते तव गावो रश्मयः किरणाः "गावो रश्मयः" (निघ० २।५) कीकटेषु-आवरकेषु कथंवर्षणीयेषु चिन्तनीयेषु-आवृत्ता गुप्ताः सन्तः किं कुर्वन्ति यतस्ते-आशिरं सर्वैराश्रयणीयं मेघोदकरूपं दुग्धं न दुहन्ति न च घर्मं दिनं तपन्ति प्रकाशयन्ति मेघेषु गुप्तत्वात् कथं दिनं प्रकाशयेयुः। "घर्मः-इत्यहर्नाम" (निघ० १।९) प्रमगन्दस्य प्रमणि-अन्त-

रिक्षे गन्दस्य गर्जनशीलस्य मेघसंघस्य "अन्तरिक्षलोको वै प्रमा" ( शत० ८ । ३ । ३ । ५ ) प्रमीयते प्रकृष्टं निर्मीयते यस्मिन् मेघः—प्रमा—अन्तरिक्षं तस्मिन् गर्जनशीलस्य "प्रमाङ्—कनिन्" ( उणा० १ । १५६ ) धातोर्बाहुलकात् । प्रमा, "गदी देवशब्दे" ( चुरादि० ) नुम् छान्दसः । अन्तरिक्षे वर्तमानस्य गदनशीलस्य गर्जनशीलस्य मेघसंघस्य वेदः—धनमुदकरूपम् "वेदो धनम्" ( निघ० २ । १० ) नोऽस्मभ्यमाभर समन्तात् पूरय । अतस्त्वं मेघसङ्घं नैचाशाखं नीचाः शाखाः—अवयवा यस्य तथाभूतो नीचाशाखो नीचाशाख एव नैचीशाखः स्वार्थेऽण् तं नैचाशाखं वृष्टिरूपे निम्नं रन्धय साधय । मनुष्यैर्मेघो निर्मातव्यो यज्ञाविभिः—वृष्टिस्तु भविष्यति हि निराशा न कार्या ॥

अनवगतपक्षे कीकटा अनार्यनिवासो धर्मकर्मविहीनो देशस्तन्निवासिनश्च—

हेमघवन् ! ऐश्वर्यवन्—इन्द्र ! परमात्मन् ! कीकटेषु किङ्कृतेषु देशेषु किङ्कृतं कर्म तेषु भवितुं शक्येत न किमपि वैदिकं कर्म कर्तुमयोग्यत्वात्—अनार्यनिवासो हि स म्लेच्छदेशः । उक्तं हि "कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥" ( मनु० २ । २३ ) म्लेच्छदेशेषु । यद्वा कीकटाः किं क्रियाभिरिति प्रेप्सा—इच्छा—भावना येषां जनानां ते कीकटाः—वैदिकीभिर्दानाग्निहोत्राद्याभिः क्रियाभिः किं भविष्यति न किमपि भविष्यति—इति प्रेप्सा भावना येषां ते नास्तिका जनास्तेषु "अनार्यदेशनिवासिषु म्लेच्छेषु" ( दयानन्दः ) ते तव त्वया दत्ताः—गावः किं तुभ्यं कुर्वन्ति ? न—आशिरं दुह्रे, दुहन्ति दुग्धमेव दुहन्ति, यतो दोग्धार एव पिबन्ति, यद् दुग्धं सोम्यं सोमरस-मिश्रितं विद्वत्सम्मेलने विदुषः पाययन्ति दोग्धारस्तदाशिरं भवति तथाविधदेशे तेन सत्कारो विदुषां न क्रियते तथा न घर्मं तपन्ति घर्मो यज्ञो भवति "घर्मः—यज्ञनाम" ( निघं० ३ । १७ ) परन्तु यास्केन नूतनोऽर्थः कृतः 'घर्मं हर्म्यम्' हर्म्यं गृहं भवति "हर्म्यं गृहनाम" ( निघं० ३ । ४ ) गावो गृहमपि न तपन्ति यतोऽपक्वं दुग्धमेव पिबन्ति—उष्णीकृत्य गृहे न स्थपयन्ति—अकस्मादागतायातिथये दातुम् । दोग्धारो घृतमपि न निःसारयन्ति घृतेनाग्निहोत्रं कृत्वा गृहं तापयेयुः । नातिथिसत्कारो न च होमस्तत्र गवां दुग्धेन घृतेन क्रियते । तुभ्यं तव नाम्ना न दुग्धप्रयोगो न घृतप्रयोगस्तत्रानार्यदेशे क्रियते पुनः परमात्मन् ! तत्र किमर्थं गावो दत्ताः ? प्रमगन्दस्य—अन्यस्मै धनमृणं दत्वा तदुपरि प्रवृद्धं धनमादाय यो जीवति स कुसीदी वार्धुषिको जनोऽदाताऽहोता च स मगन्दः पुनस्तस्य पुत्रोऽत्यन्त-कुसीदी भोगसंग्रही न धर्मसंग्रही, यद्वा प्रमगन्दः प्रमदकः—प्रमन्दः, गकार उपजनो मध्ये छान्दसः । "मदि" मदार्थे ( भ्वादि० ) भोगे संसारे प्रमत्तः—

अयमेव लोकोऽस्ति न पर इति प्रेप्सुः, संसारे भोगे लिप्सुः, पण्डको नपुंसकः—वासनापरायणः कर्मणि खल्वसमर्थः । तस्य तादृशस्य देशस्य जनस्य वा वेदो धनं गोधनं नोऽस्मभ्यमाभराहर प्रदेहि, अतः—तं नैचाशाखं नीचा शाखाः—अङ्गानि यस्य स नीचाशाखः स्वार्थेऽण् नैचाशाखं निम्नसर्वाङ्गं कृत्वा रन्धय वशं गमय "रन्ध्यतिर्वशगमने" वैदिको धातुर्विधानसामर्थ्यात् ॥

निरुक्तयः—पण्डकः—पापगः—पापं गुसाङ्गमन्येषां प्राप्नोति क्लीवत्, प्रार्दको वा—आण्डौ—अण्डकोशौ प्रपीडयति, आण्डौ—रथस्य—आणी—इव क्रीडयति स्तभ्नाति लिङ्गेन्द्रियमुत्तेजयति ॥

वक्तव्यम्—केचिदत्र "कीकटा नाम देशः" इति निरुक्तकारस्य वचनं दृष्ट्वा वेदे 'कीकटाः' इति देशस्य नाम—आगतं तेन ते कल्पनां कुर्वन्ति यद् वेदे देशानामितिहासोऽस्ति । नैषा कल्पना युक्ता, यतो हि निरुक्तकारोऽत्र मन्त्रे कमपि सामयिकं देशं न मन्यते, स तु 'अनार्यनिवासः' इति कथयति, अनार्यनिवासः कीकटाः—इति मन्यते । 'किंकृताः' इति निर्वचनेन स्पष्टयत्यपि । द्वितीयनिर्वचने 'किं क्रियाभिरिति प्रेप्सा' मनुष्याः कीकटा मताः, यथा मेदिनीकोषे "कीकटाः कृपणाः" ( मेदिनी ) अस्मिन् निर्वचने तत्कल्पनागन्धोऽपि नावतिष्ठते । पुनश्च यास्कस्यार्थस्त्वनवगतपक्षीयः, अवगतपक्षे 'कीकटाः—मेघाः' सन्ति । तदा कल्पनाया अवकाश एव न, तस्मात् तथाकथितदेशस्येतिहासो न कल्पनीयः ।

बुन्दः ॥ १२८ ॥

बुन्द इषुर्भवति । बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा ।

"तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥"
( ऋ० ८ । ७७ । ११ )

तुविक्षं बहुक्षेपं * महाविक्षेपं वा । ते सुकृतं सूमयं सुसुखं धनुः साधयिता । ते बुन्दो हिरण्मय † उभौ ते बाहू रण्यौ रमणीयौ संग्राम्यौ वा ऋदूपे अर्दनपातिनौ गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा । मर्मण्यर्दनवेधिनौ गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ वा ।

* 'बहुविक्षं' क्वचित् ।
† 'हिरण्मयः' क्वचित् ।

"निराविध्यद् गिरिभ्य आधारयत् पक्कमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥" ( ऋ० ८ । ७७ । ६ )
निरविध्यद् गिरिभ्य आधारयत् पक्कमोदनमुदकवन्तं मेघम् । इन्द्रो बुन्दं स्वाततम् ॥ ३३ ॥

भा०—'बुन्दः' इत्यनवगतमनेकार्थं च । 'इषुः' अभिधेयः । 'भिन्दः' वा 'भयदः' यद्वा 'भासमानो द्रवति यः' अवगमप्रकाराः । अवगतपक्षे "बुन्दिर् निशामने" (भ्वादि०) निशामनं श्रवणं दर्शनं च भवति, निशामनं श्रवणं तु बहु प्रयुज्यते हि "शम आलोचने" (चुरादि०) आलोचनं दर्शनम् "शमो दर्शने" ( भ्वादि० ) दर्शनार्थस्य शमधातोर्मित्संज्ञा न भवति, तदा निशामनं निशामयति । ततो घञ् प्रत्ययः करणे कर्मणि भावे च । बुन्दः श्रवणसाधनं दर्शनीयो दर्शनं च । यास्केन द्वौ मन्त्रावुदाहृतौ द्वयोरपि मन्त्रयोः प्रत्येकस्मिन् मन्त्रे 'बुन्द' अनेकार्थकः । यत्र पृथक् पृथगर्थको मन्त्रो भवति स स्पष्टं कथयति यदस्मिन् मन्त्रेऽस्य शब्दस्यायमर्थोऽस्मिन्नयम् । अत्र स किमपि नोक्तवान् तस्मादत्रान्योदाहृतमन्त्रवद् गतिर्विज्ञेया, अन्यत्र स्थलेषु–अनेकार्थान्–एकस्मिन् मन्त्रे दृष्टवान् परन्तु सोऽत्र द्वयोर्मन्त्रयोरपि प्रत्येकस्मिन् मन्त्रे 'बुन्दः' इति शब्दमनेकार्थं दृष्टवान्, अतो द्वौ मन्त्रावुदाहृतवान् । बुन्दशब्दवन्तस्त्रयो हि मन्त्राः सन्ति सर्वस्मिन् वैदिकसाहित्ये । द्वौ त्वत्र निरुक्ते यास्केनोदाहृतौ, एकोऽन्योऽस्ति यत्र 'बुन्दः' इषुवाचक एव पूर्वं स मन्त्रः प्रदर्श्यते ।

बुन्दः–इषुः–एव—

आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् ।
क उग्राः के ह शृण्विरे ॥ ( ऋ० ८ । ४५ । ४ )

वृत्रहा वृत्रस्य हन्ता–इन्द्रो जात एव बुन्दमिषुमाददे गृहीतवान् मातरं च व्यपृच्छत् पृष्टवान् के–उग्राः–उद्गीर्णबलाः सन्ति के ह शृण्वन्ते प्रखरबलाः । तस्य माता च प्रत्युक्तवती "प्रति त्वा शवसी वदद् गिरावप्सो न योधिषत् । यस्ते शत्रुत्वमाचके ॥" (५) एवमत्र बुन्दः–इषुः–एवास्ति ।

अथ यास्कोदाहृतौ मन्त्रौ यथोदाहृतं क्रमशो व्याख्यायेते ययोः 'बुन्दः' अनेकार्थकः—

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥

आध्यात्मिकदृष्ट्या–हे इन्द्र परमात्मन् । तव धनुः सारङ्गवाचस्य चापः–य

सारङ्गवाद्यस्य तन्त्रीघर्षति स तुविक्षः, तुवि—क्षा यस्य स बहुभूमिकः—बहु-विस्तृतः, "क्षा पृथिवीनाम" ( निघं० १ । १ ) सुकृतं सुकृतः—सम्यक्कृतः सुमयं शोभनसुखः सुसुखप्रदः "मयः सुखनाम" ( निघं० ३ । ६ ) अथ तस्य चापस्य बुन्दः—येन बुन्दन्ति निशामयन्ति शृण्वन्ति जना स सारङ्गवाद्यः सार-ङ्गीनामतः प्रसिद्धः साधुः प्रशंसनीयः—हिरण्ययो दिव्योऽस्ति न लौकिको लौकिक-जनकृतो लोकश्रुतो वा स सारङ्गवाद्यो बुन्दो वेदो यो जनैर्निशामयितुं योग्यः। धनुश्चापश्च संसारो महाभूमिको महाविस्तृत आकारेण संसारस्य धनुषश्चापस्या-कारतः सीमा नास्ति बुन्दस्य सारङ्गवाद्यस्य वेदस्य ज्ञानतोऽन्तो नास्ति—अनन्ता वै वेदाः। वेदस्य सारङ्गवाद्यस्योपरि संसारस्य चापस्य घर्षणं भवति, अतः संसारेण सहैव प्रारम्भे वेदः प्रकाशितः। पुनश्च हे परमात्मन्! सारङ्गवाद्यस्य चापं संसारं सारङ्गवाद्यं वेदं च ग्रहीतुं ते तव—उभौ बाहू प्रकाशनधारणधर्मौ रण्यौ रमणीयौ सुसंस्कृतौ सुसिद्धौ प्रसिद्धौ शाश्वतिकौ—ऋतुपे—"अर्द गतौ" ( भ्वादि० ) संसार-वेदयोर्गतेः प्रगतेः पातारौ रक्षितारौ स्तः—यथा—अर्जधातोः—ऋजुः कुप्रत्ययान्तः सम्प्रसारणस्य हेतुः, एवं—'अर्द' धातोः कुः प्रत्ययः सम्प्रसारणस्य हेतुः। 'ऋतुः' तस्य पातारौ। चिदपि च न रक्षकौ हि किन्तु 'ऋतुवृधा' तस्या गतेः प्रगते-र्वर्धकौ च स्तः॥

आधिदैविकदृष्ट्या—हे इन्द्र! विद्युत्! ते तव धनुः—अन्तरिक्षं स्थानं यत्र त्वं प्रचरसि "धन्वं धनुश्च" पर्यायौ धन्वमन्तरिक्षं नाम धनुरपि—अन्तरिक्षम्, वेदेऽन्यत्रागतं चान्तरिक्षार्थे 'धनुः' शब्दः "धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः।" ( ऋ० १० । ४ । ३ ) "धनोः—अन्तरिक्षात् प्रवता प्रवणेन मार्गेण यासि यज्ञं प्रत्यागच्छसि त्वमग्ने देवान् गन्तुमिच्छसि" ( सायणः ) तत् तव स्थानमन्तरिक्षं तुविक्षं बहुभूमिकं बहुविस्तृतं सुकृतं सम्यक्कृतं सुमयं जनेभ्यः सुसुखकरम्, अथ तव बुन्दो दर्शो दर्शनं 'बुन्दिर् निशामने—दर्शने' साधुः सुन्दरं हिरण्मयः सौवर्णं दिव्यमस्ति यदा त्वं विद्योतसे तदा तव दर्शनं बहुसुन्दरं प्रति-भाति, अत एव तवापरं नाम 'अप्सरा' नृत्यन्त्याः—इव रूपं ते। अथ ते बाहू मित्रावरुणनामकौ द्वौ तरङ्गौ "बाहू वै मित्रावरुणौ" (शत० ५ । ४ । १ । १५) रण्यौ रमणीयौ सुसंस्कृतौ सुकार्यसाधकौ, ऋतुपे प्रगतिरक्षकौ—ऋतुवृधा प्रगति-वर्धकौ च स्तः॥

अनवगतपक्षे—

हे इन्द्र! राजन् ते तव धनुरस्त्रं तुविक्षं बहुविक्षेपं बहूनां बाणानां विक्षेपकं यद्वा महाविक्षेपं बृहद्विक्षेपणशक्तिमत्—दूरं दूरतरं दूरतमं च बाणक्षेपणे समर्थं

सुकृतं सम्यक्कृतं सफलं सूमयं सुसुखं शोभनसुखकरमस्ति–शत्रुं हत्वा भयमपवार्य शान्तेःस्थापकमस्ति, अथ च बुन्दः–इषुः–बाणः साधुः साधयिता विजयस्य साधको हिरण्ययः–तीक्ष्णत्वाद् द्युतिमान् । ते तव–उभौ बाहू भुजौ रण्यौ रमणीयौ सांग्राम्यौ संग्रामकरणे समर्थौ वा तथा–ऋदूपे–अर्दनपातिनौ हिंसकपातिनौ हिंसकानां नाशयितारौ "अर्द हिंसायाम्" (चुरादि०) 'ऋतु' उपपदे पतधातोः 'डः' प्रत्ययः "अन्येष्वपि दृश्यते–अन्येभ्योऽपि दृश्यते" (अष्टा० ३।२।१०१) यद्वा गमनपातिनौ गच्छतां प्लायमानानामपि पातयितारौ शब्दपातिनौ 'अर्द'धातोरत्र शब्दोऽप्यर्थो यतः–धातुपाठे तु याचने चेति वर्तते । यो युद्धं याचते–आगच्छ युध्यस्वेति शब्देनैव सद्यः पातयितारौ दूरपातिनौ, 'अर्द गतौ' इति दूरं गतस्यापि पातयितारौ वो भुजौ, ऋदूवृधौ ऋदुः–मर्मार्थे गृहीतः, वृधधातुश्च वेधनार्थेऽत्र मतः । मर्मवेधिनौ * गमनवेधिनौ गमनं कुर्वतोऽपि वेद्धारौ शब्दवेधिनौ–आगच्छ युध्यस्वेति शब्दं कुर्वतो वेद्धारौ दूरं गतस्यापि वेद्धारौ । अत्रत्यपाठविषये दुर्गाचार्यो लिखति "भाष्यमत्र न सम्यगिव लक्ष्यते" ( दुर्गाचार्यः ) ॥

द्वितीयो मन्त्रो यास्कोदाहृतो व्याख्यायते—

निराविध्यद् गिरिभ्य आधारयत् पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥

अवगतपक्षे—

इन्द्रः सूर्यो यदा बुन्दं दर्शनीयं रश्मिसमूहं 'बुन्दिर् निशामने दर्शने' स्वाततं–सु–सम्यक्–आततं प्रसारितं करोति–इति शेषः । तदा तमोऽन्धकारं निराविध्यत्–निर्विध्यति ताडयति–अपहन्ति–अपगमयति, गिरिभ्यो मेघेभ्यश्च निचित्य पक्वमोदनं जलपूर्णं मेघम्–"ओदनो मेघः" ( निघं० १ । १० ) आधारयति–आध्वंसयति प्रखरतापेन, जलं द्रावयति "धृङ् अवध्वंसने" ( भ्वादि० ) सूर्यरश्मिप्रकाशस्य कार्यद्वयमन्धकारनाशनं मेघपातनं च ॥

अनवगतपक्षे—

इन्द्रो यदा स्वाततं ज्यामाकृष्य सम्यक् तानितं बुन्दमिषुं बाणमस्त्रं गिरिभ्यो मेघेभ्यो मेघान् प्रति–आधारयत् समन्ताद् धारयति तदा पक्वमोदनं पक्वमुदकदानं मेघं निराविध्यत्–निराविध्यति छिन्नभिन्नं करोति ॥

---

* मध्ये 'अर्दन' शब्दो लिपिप्रमादात् ।

निरुक्तय:—'भिन्दः' स्कन्दस्वामिभाष्ये—एष शब्दोऽन्यथा साधितः 'भिदिर् विदारणे' धातुं मत्वा स सन्देहं गतः, कथमेष प्रयोगः स्यात् "पचाद्यचि भेद इति स्यात्, इगुपधलक्षणः कः—भिद इति वा। एवं तर्हि भिदेरपि पाघ्रादि-विहितः शः शिष्टप्रयोगात् तत्र साधनशब्दो द्रष्टव्यः, अथवा—औणादिकव्युत्पत्त्या भिन्दः।" (स्कन्दभाष्यम्) एषा सर्वा कल्पनाऽन्यथैवास्ति यावता "भिदि अवयवे—चूर्णीकरणे" (भ्वादि०) पाणिनीयधातुपाठे धातुर्विद्यते, स एष भिदि—'भिन्द्' धातुः स्कन्दस्वामिनो दृष्टिपथं नागतः। 'भिदि' धातुतः 'भिन्दुः' कर्तरि 'उः' प्रत्ययः—इन्द्र उच्यते, कर्तृप्रत्ययान्तः। 'भिन्दः' करणार्थे घञ्प्रत्ययान्तः। 'भिन्दुः' इन्द्र उक्तः "पुरां भिन्दुर्युवा कविरमितौजा अजायत। इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः॥" (ऋ० १।११।४) यद्वा भिन्दुः—इन्द्रः, तदस्यास्वामिबुः—भिन्दः। इति युक्तोऽवगमपक्षः। लोकेऽपि 'भिदि' धातोः प्रयोगा उपलभ्यन्ते यथा 'भिन्दपालः, भिन्दिपालः' भिन्देन प्रहारकसाधनं क्षिप्त्वा क्षेत्रमुद्यानं यः पालयति स भिन्दपालो भिन्दिपालो वा प्रसिद्धः। भिन्दः—बुन्दः, 'भि' इत्यस्य 'बु'भावश्छान्दसः, भयदः—बुन्दः, 'भय' इत्यस्य 'बुन्' भावः। यद्वा 'भासमानो द्रवति' इति बुन्दः, भासते—इति भाः स द्रवति भास् शब्दस्य बुन् भावः, द्रु धातोः डः कर्तरि बुन्दः। 'रण्या—रण्यौ' रमधातोर्डण्यन्—औणादिकः प्रत्ययः। 'रण्या—रण्यौ।' यद्वा रणः संग्रामस्तमर्हतः "तदर्हति—छन्दसि च यत्" (अष्टा७ ५।१।६२—६६) संग्रामयोग्यौ रण्यौ "ऋदूवृधौ—मर्म-वेधिनौ' 'ऋदुः—मृदुः' "ऋदूदरो मृदूदरः" (निरु० ६।४) मृदु—अङ्गं च मर्म भवति तस्मात्—मर्मवेधिनौ वृधु वेधने वैदिको धातुर्मतो यास्केन॥

वृन्दम्॥ १२९॥
वृन्दं बुन्देन व्याख्यातम्॥
वृन्दारकश्च॥ ३४॥

भा०—'वृन्दम्' इत्यनवगतमनेकार्थं च, तथैव 'वृन्दारकः' इत्यनवगतमनेकार्थं च। 'वृन्द' शब्दादेव 'आरक' प्रत्ययः स्वार्थे ताद्धितः। 'वृन्दम्' इत्यपि बुन्देन समानं व्याख्यातं विज्ञेयम्। 'भिन्दं वा भयदं वा भासमानं द्रवतीति वा' अवगमप्रकाराः। अभिधेयं प्रसिद्धं यथायोग्यम्। 'भिन्' इत्यस्य 'वृन्' भावः, यद्वा 'भय' इत्यस्य 'वृन्' भावः, यद्वा 'भास्' इत्यस्य 'वृन्' 'द्र' इत्यस्य 'द' भावः। वृन्दं यदवयवीकरोति चूर्णीकरोति यद् भयदं भवति भासमानं प्रगति-मत्—वृन्दं भवति। अवगतार्थमपि भवति यस्मिन् यस्मिन्नर्थे लोके प्रसिद्धं धातुजं वा लोकप्रसिद्धं वा। "अब्दादयश्च" (उणा० ४।९८) दप्रत्ययान्ता दन्-

प्रत्ययान्ताश्च निपात्यन्ते, तत्र "वृ संवरणे" (भ्वादि०) "वृञ् वरणे" (स्वादि०) "वृञ् आवरणे" ( चुरादि० ) संवरणसाधनं वरणीयं श्रेष्ठं मान्यम्–आवरणं च कर्तुं वक्तुं शक्यते । प्रवृद्धा संख्या यथा "वृन्दः खर्वो निखर्वश्च" (सूर्यसिद्धान्ते) शतकोटिः संख्या, गणः, राशिः, बहु, प्रधानम् । वृन्दारकोऽप्येष्वर्थेषु प्रयुज्यते । "वृन्दारकनागकुञ्जरैः पूज्यमानम्" ( अष्टा० २ । १ । २१ ) गोवृन्दारको गवां श्रेष्ठः । वृन्दं वृन्दारको वा शब्दश्चतुःषु वेदेषु शाखासंहितासु नोपलभ्यते तस्मान्न यास्केन मन्त्रो नोदाहृतः, ब्राह्मणग्रन्थेषूपनिषत्सु चोपलभ्यते । शतपथब्राह्मणे हि वृन्दारकः शब्द एवोपलभ्यते "यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्यैवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यतीति" ( शत० १४ । ६ । ११ । १) वृन्दारकोऽत्र पापस्य भिन्दकः–पापमवयवीकर्ता भयदः पापिभ्यः, उपनिषद्भिरध्यात्मोपासनाभिर्भासमानो द्रवणशीलो महान् श्रेष्ठो जीवन्मुक्तोऽनेकार्थकः कर्ता गम्यते * ॥

किः ॥ १३० ॥

"अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः । अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥" ( ऋ० १० । ५५ । ३ )

अयं यो होता कर्ता स यमस्य कमप्यन्नमभिवहति यत् समश्नुवन्ति † देवाः । अहरहर्जायते मासे मासे ‡ऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहम् ॥

भा०—'किः' इत्यनवगतम् । 'कर्ता' इत्यवगमः । विशेषणं, पदमग्नेः तस्मात् 'अग्निः' अभिधेयो विशेष्यः । "कृञ् करणे" (तनादि०) ततः "अच इः" ( उणा० ४ । १३९ ) स च प्रत्ययो डिच्छान्दसः 'किः' कर्ता । वैदिकवाङ्मये सकृत्प्रयुक्तत्वादेकस्यैव विशेषणपदत्वात् केवलमनवगतार्थम् ।

मन्त्रार्थः—

अयं यो होता–अग्निहोत्रे प्रयुक्तोऽग्निरस्ति "अग्निर्वै होताऽधिदैवम्" ( शत०

---

* 'वृन्दम्, वृन्दारकः' इत्यनयोर्निगमः कस्याश्चिच्छाखासंहितायां यास्कतः पूर्वं स्यादित्यनुमातुं शक्यते या च शाखा यास्ककाले विलुप्ता भवेत् ।

† 'समश्नन्ति' पाठः क्वचित् ।

‡ 'मासि मासि' क्वचित् ।

१२।१।१४) स यमस्य यजमानस्य हविषां कि: कर्ता संस्कर्ता यद्वा वायोः कि: कर्ता संस्कर्ता शोधयिता "अयं वै यमो योऽयं वायुः पवते" (शत० १४।२।२।११) स च कमन्नमपि वहति वृष्टिकारणत्वात् "अन्नं वै कम्" (ऐ० ६।२१) यदन्नं सर्वे देवा विद्वांसः श्रेष्ठजनाः प्राप्नुवन्ति । अथ यदन्नं भौतिकदेवाश्च तस्मिन्नन्ने दिव्यत्वमाधातुं प्राप्नुवन्ति । सोऽग्निरहरहः प्रतिदिनं हवनाज्जायते, मासे मासे यद्वाऽर्द्धमासेऽर्द्धमासे पाक्षिकयज्ञाज्जायतेऽथानन्तरं देवा हव्यवाहमग्निं दधिरे निदधिरे निधारयन्ति नियतं निरन्तरं धारयन्ति ज्वालयन्ति ॥

उल्बम् ॥ १३१ ॥

उल्बमूर्णोतेर्वृणोतेर्वा । "मह॒त्तदु॒ल्बं स्थवि॑रं॒ तदा॑सीत्" (ऋ० १०।५१।१) इत्यपि निगमो भवति ॥ ३५ ॥

भा०—'उल्बम्' इत्यनवगतमनेकार्थं च । "ऊर्णुञ् आच्छादने" (अदादि०) यद्वा "वृञ् आवरणे" (चुरादि) ततः 'वन्' प्रत्ययः "उल्वादयश्च" (उणा० ४।९५) निपात्यते । आच्छादकम्, आवरणं चावगमः । अस्याभिधेयं यास्केन न दर्शितं तस्माद् यथा-योग्यमनेकार्थाभिधायि पदमिदमिति । पदमिदमनेकमन्त्रेषु विद्यतेऽनेकेष्वर्थेषु । उदाहृतेऽत्र मन्त्रेऽनेकार्थं पदम् । अनवगतपक्षे त्वाच्छादकमावरणं वा, अवगतपक्षे "उच समवाये" (दिवादि०) ततः 'वन्' प्रत्ययः "उल्वादयश्च" (उणा० ४।९५) गर्भेण सह नित्यसम्बद्धः स्तर उल्बम् । प्रथमं पृथक् पृथगर्थका मन्त्राः प्रदर्श्यन्ते । उल्बम्—गर्भस्थस्य स्तरः—

"क्ष॒त्रस्योल्व॑मसि क्ष॒त्रस्य॑ ज॒राय्व॑सि क्ष॒त्रस्य॒ योनि॑रसि क्ष॒त्रस्य॒ नाभि॑-रसि" (यजु० १०।८)

उल्वं जरायुतो भिन्नं वस्तु स्तरो द्रवमुदकम् । "उल्वं गर्भाधारमुदकम्" (उव्वटमहीधरौ)

"रेतो॒ मूत्रं॒ विज॑हाति॒ योनिं॑ प्रवि॒शदि॑न्द्रि॒यम् । गर्भो॑ ज॒रायु॒णावृ॑त उल्वं॑ जहाति॒ जन्म॑ना ।" (यजु० १९।७६)

जातः शिशुर्जरायुणाऽऽवृतः पूर्वमुल्वं त्यजति पश्चाज्जरायुं त्यजति । इत्यस्मादपि जरायुतो भिन्नमुल्वं तज्जरायोरन्तरे वर्तमानमुदकं स्तरो भवेद् ।

"आपो॑ व॒त्सं ज॒नय॑न्ती॒र्गर्भ॑म॒ग्रे सम्रैर॑यन् ।
तस्यो॒त जाय॑मान॒स्योल्ब॑ आसीद्धि॒रण्ययः॒ ॥" (अथर्व० ४।२।८)

आपो वत्सं विद्युद्रूपमग्निं जनयन्त्यः पूर्वं गर्भं सम्प्राप्नुवन् । पुनस्तस्य जायमानस्य हिरण्ययो दिव्य उल्वः स्तरोऽत्र वैद्युततरङ्गसमूह आसीत् ।

आवरणार्थे–उल्वम्—

"जरायु कृष्णाजिनमुल्वं दीक्षितवासः, नाभिर्मेखला गर्भो दीक्षितः" (मैत्रायणी सं० ३ । ६ । ७ )

दीक्षितो जनो गर्भस्तस्य मेखला नाभिनालिका तदुपरि वास उल्वम्–कृष्णाजिनं जरायु । अत्र वस्त्रमिव–उल्वं कल्पितम् ।

"गर्भो वा एष यद्दीक्षित उल्वं वासः प्रोर्णुते तस्मात्–गर्भाः प्रावृता जायन्ते" ( तै० सं० ६ । १ । २ )

अत्रापि वासो वस्त्रमिव–उल्वं भवतीत्युक्तं 'प्रोर्णुते' आच्छादनात् ।

एवं जरायोरन्तरे–उदकं यद्वा वस्त्रमिवावरणं यद्वाऽऽधिदैविकदृष्ट्या वैद्युततरङ्गस्तरः ।

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन्नुल्वं शब्दोऽनेकार्थकः—

म॒हत्तदु॒ल्वं॑ स्थवि॑रं॒ तदा॑सी॒द्येना॒विष्टि॑तः प्रवि॒वेशि॑था॒पः ।
विश्वा॑ अपश्यद् बहु॒धा ते॑ अग्ने॒ जात॑वेदस्त॒न्वो॑ दे॒व एकः॑ ॥

हे अग्ने जातवेदः ! जाते जाते विद्यमान ! एवं सर्वस्मिन् जातमात्रे वस्तुनि विद्यमानस्य तवोल्वं जराय्वन्तर्गतं जलं स्तरो यद्वा तव गर्भभूतस्य वस्त्रमिवावरणमाच्छादकं यद्वा तव वैद्युततरङ्गस्तरमण्डलं महत् तथा स्थविरं पुरातनमासीत्–येनोल्वेनावेष्टितः सन् "वेष्ट वेष्टने" ( भ्वादि० ) तस्य ह्रस्वादेशश्छान्दसः । पुनरपि त्वमपोऽप्सु प्रविष्टो गुप्तो यथा त्वमप्सरा जाता परन्तु तव विश्वास्तन्वोऽङ्गभागाः–एको देवो यमो * नियन्ता राजा यजमानः स च मनुर्मननशीलः † "क्षत्रं वै यमः" ( शत० ७ । १ । १ । ४ ) बहुधा बहुप्रकारैर्ज्ञानविज्ञानपरीक्षणैरपश्यत्–दृष्टवान् । मित्रावरुणयोः–मनीषिशिल्पिनोः सहायतया ‡ ॥

---

* को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।
क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देवयानीः ॥ २ ॥
ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।
तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरोचमानम् ॥ ३ ॥

अत्र 'को मा ददर्श' इत्यस्य प्रश्नस्योत्तरम् 'तं त्वा यमो अचिकेत्' इति यमोऽपश्यत् ।

† 'एहि मनुर्देवयुर्यज्ञकामो....." ॥ ५ ॥

‡ "द्वितीयमन्त्रे "क्वाह मित्रावरुणा...." ॥ २ ॥

मित्रावरुणयोः—मनीषिशिल्पिनोः सहायतया—अग्नेर्विज्ञानमुपयोगं च कुर्यात्—योऽग्निः स्वतनुभिः 'दशान्तरुष्यात्' दशसु—अन्तरुष्यम्—अन्तर्वासस्थानं यस्य तस्मात्—दशान्तरुष्यात् तानि दश स्थानानि सन्ति पृथिव्यन्तरिक्षद्युनामकास्त्रयो लोकाः, अग्निविद्युत्सूर्यास्त्रयो देवाः, आपः—ओषधयो वनस्पतयः प्राणिशरीरमिति दश स्थानानि सन्ति दशसु स्थानेषु वर्तमानस्याग्नेर्ज्ञानं विज्ञानं शिल्पकार्येषूपयोगं यज्ञेष्वनुष्ठानं मननशीलो राजा कुर्यात् ।

ऋबीसम् ॥ १३२ ॥

ऋबीसमपगतभासमपहृतभासमन्तर्हितभासं गतभासं वा । "हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥" ( ऋ० १ । ११६ । ८ ) हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम् । गणो गणनाद् गुणश्च । यद् वृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ स्तौति स्तौति ॥ ३६ ॥

भा०—'ऋबीसम्' इत्यनवगतमनेकार्थं च । 'अपगतभासम्' यद्वा 'अपहृतभासम्' अथवा 'अन्तर्हितभासम्' यद्वा 'गतभासम्' इत्यवगमाः । 'ऋबीसे पृथिव्याम्—ओषधिवनस्पतिष्वप्सु' इति वचनात् 'पृथिवी, ओषधिवनस्पतयः, आपः' इत्यभिधेयाः । 'अपगत—अपहृत—अन्तर्हित—गत' इत्येतेषां पूर्वपदानाम् 'ऋ' भावः । 'भास' इत्युत्तरपदस्य 'बीस'भावः । इति त्वनवगतपक्षे तदपेक्षया—अवगतपक्षे 'ऋ' अव्ययं गर्हायाम् ( अव्ययार्थशास्त्रम् ), तदुपपदे "वी कान्तौ" ( अदादि० ) ततः सन् प्रत्ययः "अमेः सन्" ( उणा० ५।२१ ) धातुबाहुलकात् सन् कित्—च बाहुलकादेव । गर्हितकान्तिमान् मन्दकान्तिमान् चन्द्रमाः—ऋबीसः ।

प्रथमं पृथक् पृथगर्थको मन्त्रः प्रदर्श्यते ।

ऋबीसो वनस्पतिः—

युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना ।
युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये ॥

( ऋ० १० । ३९ । ९ )

हे अश्विनौ "अश्विनौ रसेनान्यो ज्योतिषान्यः" ( निरु० २२ । १ ) वृषणौ

वृष्टेः कर्तारौ "अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते" ( निरु० २ । १६ ) युवं युवां मम्रृवांसं वृष्टेरभावात्–म्रियमाणमासन्नमरणकं मरणोन्मुखं गुहाहितं गुहस्थाने स्थितं रेभं शब्दकारिणं भेकं मण्डूकं "रेभृ शब्दे" ( भ्वादि० ) अन्यत्र वेदे प्रदिष्टम् "संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्य-जिन्वितां प्र मण्डूका अवादिषुः ॥" (ऋ० ७ । १०३ । १) उदैरयतं वृष्टिकरणेन मृत्युतः–उत्प्रेरयतमुन्नृतवन्तौ युवामुतापि तप्तं वृष्टेरभावादुष्णीभूतं शुष्कप्राय-मृबीसमोषधिं वनस्पतिमोमन्वन्तं रक्षणवन्तं चक्रथुः–कृतवन्तौ–अत्रये भक्ष-यित्रे मनुष्यादिप्राणिने सप्तवध्रये सृप्तवध्रये सप्ता सृप्ता प्राप्ता तनूबन्धनी येन तस्मै जीवात्मने ॥

ऋबीसम्–आपः–

अत्रिर्यद् वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।
श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शन्तमेन ॥

( ऋ० ५ । ७८ । ४ )

यदा–अत्रिरत्ता भोक्ता जीवः–ऋबीसमपो गर्भरसम् "वेत्थ यदा पञ्चम्या-माहुतावापः पुरुषवचसो भवन्ति" ( छान्दो० ५ । ३ । ३ ) अवरोहन् गर्भेऽव-तरणं कुर्वन् वां युवामश्विनौ–प्राणापानौ–इन्द्रिययुगलभूतौ "नासिके अश्विनौ" ( शत० १२ । ९ । १ । १४ ) "श्रोत्रे अश्विनौ" (शत० १२ । ९ । १ । १३) "तयौ ह वा इमौ पुरुषाविवाक्ष्योः–एतावेवाश्विनौ" (शत० १२ । ९ । १ । १२) अजोहवीत्–आहूतवान् नाधमाना याचमाना–इव योषा–स्त्रीव युवां श्येनस्य भासपक्षिण इव प्रत्यग्रेण सुखकरेण जवसा वेगेन–आगच्छतम्–आगतौ ॥

ऋबीसः–चन्द्रमाः–

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥

( ऋ० १ । ११७ । ३ )

हे नरौ विश्वस्य जगतो नेतारौ लोकानां गमयितारौ–अश्विनौ–आग्नेय-सौम्यधर्मिणौ ! युवामृबीसादपगतभासाच्चन्द्रात् तच्छायारूपाद्–अंहसः पापरूपा-दन्धकारकारकात्–स्वर्भानोः सूर्यग्रहणकारकात्–पाञ्चजन्यं पञ्चजनेभ्यो हितं पञ्च-जनानां हितकरमत्रिमग्निम् "अत्रिमग्निम्" ( निरु० ६ । ३६ ) ऋषिं सर्वेषां दर्शकं सूर्यम् "ऋषिर्दर्शनात्" (निरु० २।११) मुञ्चथः–मोचयथः, गणेन रश्मि-गणेन सह । अशिवस्याकल्याणकरस्य दस्योश्चन्द्रछायारूपस्य स्वर्भानोः–राहोः–

माया:—अन्धकारपाशान् * मिनन्तौ हिंसन्तौ वृषणौ सुखस्य वर्षकौ—अनुपूर्वं यथापूर्वं पूर्ववत् प्रकाशवन्तं चोदयन्तौ भवथः ॥

अथ यास्कोदाहृतो मन्त्रो व्याख्यायते यस्मिन्—ऋबीसशब्दोऽनेकार्थकः—

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥

हे अश्विनौ—ज्योतीरसरूपौ—आग्नेयसौम्यधर्मिणौ जगतः प्राणापानौ जीवनवृष्टेः कर्तारौ मेघस्य वर्षयितारौ ! देवौ ! "अश्विनौ रसेनान्यो ज्योतिषाऽन्यः" (निरु० १२ । १) युवां हिमेनोदकेन प्रावृषेण्येन जलवर्षणेन ग्रीष्मान्तेऽग्निं ग्रीष्मप्रभवं ग्रैष्ममग्निं घ्रंसमहः—ग्रैष्मं तापम् "घ्रंसमहर्नाम" (निघं० १ । ९) अवारयेथां वारयथः पितुमतीमूर्जम्—अन्नवन्तं रसम् "पितुः—अन्ननाम" (निघं० २ । ७) "ऊर्ग्वै रसः" (शत० ५।१।२।८) अस्मै—अग्नये भोक्त्रे जीवाय हविषां भोक्त्रेऽग्नये—आकर्षणेन रसानां भोक्त्रे सूर्याय—अधत्तं धारयथः । ऋबीसे पृथिव्यां यद्वा—ओषधिवनस्पतिषु किंवाप्सु—अथवा चन्द्रे—चन्द्रछायायां वर्तमानम्—अत्रिमत्तारमग्निमवनीतमन्तर्गतं पार्थिवमग्निं वानस्पत्यमग्निं तज्जीवनरसकरमाप्यमग्निं गार्भमग्निं जीवं खगोलीयं सूर्यमग्निं चोन्निन्यथुरुन्नयथः । पार्थिवोऽग्निः पृथिव्यन्तस्त उत्थित ओषधिवनस्पतीनुद्भावयिष्यति, वानस्पत्योऽग्निरुत्थितो वनस्पतेः शाखापत्रपुष्पाण्युद्भावयिष्यति, गार्भोऽग्निर्जीवोऽङ्गान्युद्भावयिष्यति, सूर्योऽग्निः समस्तान् लोकानुद्भावयिष्यति, सर्वगणमिथं वा सर्वगणयुक्तं स्वस्ति कल्याणं यथा स्यात् तथा युवां वृष्टिं कुरुथो मेघं वर्षयथः, यद्वृष्टे—ओषधयः प्राणिनश्च पृथिव्याम्—उद्भवन्ति—उत्तिष्ठन्ति तदश्विनोः—रूपं कार्यं तेनैतावश्विनौ मन्त्रः स्तौति प्रशंसति, स्तौति स्तौति—द्विरुक्तिर्निरुक्तस्य पूर्वार्द्धसमाप्त्यर्था । अश्विनोरधिकारः पृथिवीलोकस्योपरि वनस्पतिप्राणिनामुत्पत्तये वृष्टिकरणाय द्युलोकस्योपर्यपि लोकानां भ्रमणायेत्यप्यागतम् ॥

इति षष्ठः पादः, षष्ठोऽध्यायश्च
पूर्वार्द्धः पूर्वषट्कः समाप्तः ।
स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

---

* "यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः" ॥ ५ ॥
सूर्यग्रहणे जाते लोका नक्षत्राणि—अदीधयुः—दीप्ता भवन्ति ।
"स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् ॥"
(ऋ० ५ । ४० । ५, ६)

अथोत्तरषट्कम्

# दैवतं काण्डम्

## सप्तमोऽध्यायः

तत्र

### प्रथमः पादः

---

अथातो दैवतम् ।

भा०—दैवतादैवतभेदाभ्यां काण्डे द्वे स्तोऽस्मिञ्छास्त्रे । तत्र नैघण्टुकनैगमानां शब्दानामदैवतम् । यत्रानेके शब्दा एकार्थका आसन् तन्नैघण्टुकं प्रकरणं सर्वेभ्यः पूर्वमुक्तं पुनर्यत्रैकः शब्दोऽनेकार्थ आसीत्तन्नैगममैकपदिकमासीत् तदप्युक्तम् । तत्रोभयत्रापि यानि नामान्यासन् तानि गौणानि नामानि ह्यासन् । न प्रधानानि देवतात्मकानि । अथेदानीमत आरभ्य दैवतं प्रकरणं काण्डं वा प्रस्तूयते—प्रस्तुतं क्रियते ।

किं तद् दैवतमित्युच्यते—

तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतमित्याचक्षते ॥

भा०—तद् यानि—यानि खलु नामानि नामपदानि प्राधान्यस्तुतीनां प्राधान्येन स्तुतिर्गुणवर्णनं स्वरूपवर्णनं यासां देवतानां ताः प्राधान्यस्तुतयो देवतास्तासां तथाभूतानां देवतानां यानि नामानि नामजातं तद् दैवतमिति संज्ञातः—आचक्षते पूर्वाचार्याः । तेषां नाम्नां समुदितानां दैवतम्—इति संज्ञा ॥

अथ—

सैषा देवतोपपरीक्षा । यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति ॥

भा०—सैषा देवतायाः—उपपरीक्षा—उपयुक्ता परीक्षा खल्वित्थम्—यत्कामः—ऋषिः—ईश्वरः—सर्वद्रष्टा यत्कामो यं कामयमान इममर्थमुपदिशेयमिति स यत्कामो यस्यां देवतायामार्थपत्यमर्थस्य स्वामित्वमुपदेष्टुमिच्छन् सन् स्तुतिं प्रयुङ्क्ते तदर्थगुणकीर्तनं प्रयुक्तवानस्ति स मन्त्रस्तद्दैवतो भवति । यद्वा यत्कामो

यदर्थकामो यदभीष्टकाम ऋषिर्मन्त्रद्रष्टा भावुको भावनात्मको यस्यां देवतायामग्न्यादिकायामर्थपतित्वं मन्त्रार्थस्य स्वामित्वमिच्छन् तथा स्वकीयार्थपतित्वं स्वकीयार्थस्याभीष्टस्य पतित्वं रक्षकत्वमिच्छन् प्रयुङ्क्ते तद्दैवतः—तद्देवताकस्तद्देवतावान् स मन्त्रो भवति, देवताधीनो हि मन्त्रार्थः ॥

> तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य ॥ १ ॥

भा०—ताः—ऋचः—ते मन्त्रा भिन्नभिन्नदेवताकास्त्रिविधा भवन्ति—परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिकाश्च । तत्र नाम्नः सर्वाभिर्विभक्तिभिः सुप्रभृतिप्रत्ययान्ताभिः प्रथमादिसप्तमीपर्यन्ताभिस्तथाऽऽख्यातस्य—आख्यातपदस्य क्रियापदस्य प्रथमपुरुषकैः प्रत्ययैस्तिबादिभिर्युज्यन्ते ताः परोक्षकृता ऋचो वा ते मन्त्राः परोक्षकृताः सन्ति ।

ताः—ऋचस्तान् मन्त्रान् वा यास्को यथाक्रममुदाहरति—

"इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्याः" (ऋ० १०।८९।१०)
"इन्द्र॒मिद् गा॒थिनो॑ बृ॒हत्" (ऋ० १।७।१)
"इन्द्रे॑णै॒ते तृत्स॑वो वेवि॑षाणाः" (ऋ० ७।१८।१५)
"इन्द्रा॑य॒ साम॑ गायत" (ऋ० ८।९८।१)
"नेन्द्रा॑दृ॒ते प॑वते॒ धाम॒ किञ्च॒न" (ऋ० ९।६९।६)
"इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चम्" (ऋ० १।३२।१)
"इन्द्रे॒ कामा॑ अयंसत" * इति ॥

भा०—'इन्द्रो दिव' इत्यादीनि प्रथमां नामविभक्तिमारभ्य सप्तमीविभक्तिर्यावत् क्रमेणोदाहरणानि यास्केन दत्तानि । यद्यपि प्रतीकमात्रेण कार्यं सिध्यति नह्येषां समग्राणां मन्त्राणां व्याख्याऽपेक्ष्यते तथापि पाठकानां तया विना सन्तोषो न भविष्यति—इति हेतोर्यास्कबाह्यं व्याख्याकरणमाचर्यते ।

प्रथमा विभक्तिः—

> इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्या इन्द्रो॑ अ॒पामिन्द्र॒ इत् पर्व॑तानाम् ।
> इन्द्रो॑ वृ॒धामिन्द्र॒ इन्मेधि॑राणा॒मिन्द्रः॒ क्षेमे॒ योगे॒ हव्य॒ इन्द्रः॑ ॥

---

* अज्ञातस्थानं वचनमिदम् ।

इन्द्रः परमात्मा द्युलोकस्य–ईशे–ईष्टे, व्यत्ययेन प्रथमस्य स्थाने–उत्तमः। "अधीगर्थदयेशां कर्मणि" ( अष्टा० २ । ३ । ५२ ) इति षष्ठी । इन्द्रः परमात्मा पृथिव्याः–ईशे–ईष्टे–इति सम्बन्धः, पृथिवीलोकस्यापीष्टे स्वामित्वं करोति, अपामन्तरिक्षलोकस्य च स्वामित्वं करोति, लोकसाहचर्यादत्रापोऽन्तरिक्षम् "आपोऽन्तरिक्षनाम" ( निघं० १ । ३ ) इन्द्र एष परमात्मा हि पर्वतानां मेघानामिष्टे "पर्वतो मेघनाम" ( निघं० १ । १० ) इन्द्रो वृधामतिप्रवृद्धानां सूक्ष्मभूतानां तन्मात्राख्यानामिष्टे–इन्द्रो मेधिराणां मेधाविनां मेधावतां प्रज्ञानवतामीष्टे, इन्द्रः क्षेमे रक्षणे तथेन्द्रो योगे प्राप्तौ चाभीष्टो हव्यः स्वीकरणीयः स्तोतव्यश्च ॥

द्वितीया विभक्तिः—

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥

हे गाथिनो गानस्य कर्तारो गायकाः! यूयमिन्द्रं परमात्मानमेव बृहन्तं महान्तं गायत, योग्यक्रियाया आकाङ्क्षा, हे अर्किणो मन्त्रवन्तो वेदविदः ! यूयमर्कैर्मन्त्रैर्मन्त्रजपैरिन्द्रं परमात्मानमर्चत, हे मध्यस्था जनाः सामान्यवाणीमन्तः ! यूयं वाणीः–सामान्यवाणीभिरिन्द्रं परमात्मानमनूषत स्तुवीध्वम् ॥

तृतीया विभक्तिः—

इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥

'इन्द्रेण' इति तृतीयायुक्तो मन्त्रो व्याख्यातः पूर्वं षष्ठाध्यायस्य प्रथमपादे षष्ठे खण्डे 'प्रकलवित्' पञ्चविंशपदप्रसङ्गे । तत्रैव द्रष्टव्योऽर्थः ।

चतुर्थी विभक्तिः—

इन्द्राय साम गायत विप्राय बृहते बृहत् । धर्मकृते विपश्चिते पनस्यवे ॥

हे मानवाः ! बृहते महते विप्राय विविधप्रकारेण कामानां पूरयित्रे धर्मस्य विधात्रे सर्वद्रष्ट्रे स्तुतिमिच्छुकाय–इन्द्राय परमात्मने बृहत्–उत्कृष्टं साम सामगायनं गायत ॥

पञ्चमी विभक्तिः—

सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किञ्चन ॥

तथा सूर्यस्य रश्मयः किरणा अन्धकारस्य द्रावयितारस्तत्स्वरूपाच्च्यावयितारस्तथा प्रसुपः प्रसुप्तस्यालसस्य मत्सराः–हर्षयितारः साकमीरते सहैव गतिं कुर्वन्ति । तथा–इन्द्रस्य परमात्मनः–आशवः सर्वत्र व्याप्ताः सर्गाः सर्जकगुणा

जगत्सर्जनशक्तयः—ततं तन्तुमव्यक्तं जगदुपादानं प्रकृत्याख्यं परिभवन्ति तत्स्वरूपतः परिद्रावयन्ति सुप्तं जीववर्गं च जागृतिं नयन्ति, यतः किञ्चन धाम जडं पृथिव्यादिकं चेतनं जीवशरीरं चेन्द्रात् परमेश्वरादृते न पवते न गतिं करोति ॥

षष्ठी विभक्तिः—

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।

अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम् ॥

यो वज्री वज्रवान्—इन्द्रो विद्युद्देवस्तस्य वीर्याणि पराक्रमान् नु क्षिप्रं प्रवोचं प्रब्रवीमि यानि पराक्रमान् प्रथमान् शाश्वतिकान् स करोति । अहिं मेघमहन् हन्ति, पुनरपो जलानि ततर्द तर्दति ताडयति नीचैः प्रापयति पश्चात् पर्वतानां वक्षणाः—नदीः "वक्षणा नदीनाम" ( निघ० १ । १३ ) अभिनत्—स्थानतोऽग्रे प्रवाहयति ॥

सप्तमी विभक्तिः—

इन्द्रे कामा अयंसत दिव्यासः पार्थिवा उत । स्यमू षु गृणता नरः * ॥ दिव्याः—दिवि भवाः—मोक्षधाम्नि प्राप्याः सङ्कल्पिताः कामाः, पार्थिवाः—लौकिकाः कामाश्च—इन्द्रे परमात्मनि—अयंसत—नियन्त्रिताः सन्ति । हे नरो जनाः ! स्यं तमेव परमात्मानं गृणत स्तुवीध्वम् ॥

---

* एतद्वचनं सम्प्रति प्रसिद्धग्रन्थेषु नोपलभ्यते यास्कस्य समये पुरातनग्रन्थः कश्चिद् भवेद् यस्य वचनमिदं तेनोदाहृतम् । इन्द्रशब्दः सप्तम्यां बहुत्र वेदेषूपलभ्यते परन्तु कुत्रचिन्नैघण्टुकरूपेण न देवतात्मकतया, कुत्रचिद् देवतारूपेणाप्यन्येन नैघण्टुकेन सह, केवलोऽपि सन्दिग्धविभक्तिकोऽस्पष्टविभक्तिको वा, अदृश्यमानो यतः 'एकारः' दृश्यमानेऽपि तेन सहान्यबाह्यसम्पर्को भवेत् । सन्त्यल्पा मन्त्रा येषु शुद्धस्तवनमिन्द्रस्य सप्तम्यां लक्ष्यते तद्यथा "रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥" (ऋ० १ । ३० । १३) "यज्ञेन गातुमप्तुरो विविद्रिरे धियो हिन्वाना उशिजो मनीषिणः । अभिस्वरा निषदा गा अवस्यव इन्द्रे हिन्वाना द्रविणान्याशत ॥" (ऋ० २ । २१ । ५) "न तं जिनन्ति बहवो दभ्रा उर्वस्मा अदितिः शर्म यंसत् । प्रियः सुकृत् प्रिय इन्द्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी ॥" (ऋ० ४ । २५ । ५) "वृषा मद इन्द्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी । अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥" (ऋ० ६ । २४ । १) "नू चित्स भ्रेषते जनो न रेषन्मनो यो अस्य घोरमाविवासात् । यज्ञैर्य इन्द्रे दधते दुवांसि क्षयत् स राय ऋतपा

अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ।
"त्वमिन्द्र बलादधि" ( ऋ० १० । १५३ । २ )
"वि न इन्द्र मृधो जहि" ( ऋ० १०।१५२।४ ) इति ॥

भा०—अथ प्रत्यक्षकृता मन्त्राः—आख्यातस्य मध्यमपुरुषयोगा मध्यमपुरुषे प्रयोगवन्तस्तथा 'त्वम्' इत्येतेन सर्वनाम्ना सहिता भवन्ति । तद्यथा—

त्वमिन्द्र बलादधि सहसो जात ओजसः ।
त्वं वृषन् वृषेदसि ॥

हे इन्द्र ! त्वं बलात्—बाह्यबलात् सहसो मानसिकबलात् तथा-ओजसः—आत्मिकबलाधधि—उपरि जातः प्रसिद्धोऽसि "अधि—उपरिभावैश्वर्ययोः ( निरु० १ । १ । ३ ) हे वृषन्—वर्षितः ! त्वं वृषा—इदवश्यं सुखवृष्टेः कर्ताऽसि । इत्यत्र त्वं शब्देन प्रत्यक्षकृतत्वं मन्त्रस्य दर्शितं स्तुतिरत्र केवलम् ।

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ अभिदासत्यधरं गमया तमः ॥

हे इन्द्र ! त्वं नोऽस्माकं मृधो मृधं संग्रामं कुर्वन्ति ये तान् शत्रून् विजहि विनाशय, तथा पृतन्यतः—अस्माभिः सह संग्राममिच्छतो जनान् नीचैः पराजयं यच्छ प्रापय, योऽस्मानभ्युपक्षयति तमधरं तमोऽन्धकारं गमय प्रापय । इत्यत्र जहि, यच्छ, गमय, मध्यमपुरुषकाख्यातेन मन्त्रस्य प्रत्यक्षकृतत्वं दर्शितम् । इति मन्त्रद्वयेन द्विप्रकारेण मन्त्राणां प्रत्यक्षकृतत्वमुदाहरणमात्रं दर्शितं प्रत्यक्षकृताः सन्ति बहवो मन्त्रा वेदे ।

इदं तु देवताविषयकं मन्त्राणां प्रत्यक्षकृतत्वमासीत् । स्तोतृविषयकमपि मन्त्राणां प्रत्यक्षकृतत्वमस्ति तदपि यास्कः प्रदर्शयति—

अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि ।
"मा चिदन्यद्वि शंसत ।" ( ऋ० ८ । १ । १ )
"कण्वा अभि प्रगायत ।" ( ऋ० १ । ३७ । १ )

---

ऋतेजाः ॥" (ऋ० ७ । २० । ६) "इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते । इन्द्रे कामं जरितारो वसूयवो रथे न पादमादधुः ॥" (ऋ० ७ । ३२ । २) उपर्युक्तमन्त्रेषु खल्वपि पूर्णशुद्धमिन्द्रस्य स्तवनं सप्तम्यां विभक्तौ तथा न विद्यते यथा यस्कोदाहृते मन्त्रे, तस्मादत्यन्तशुद्धस्य केवलस्य स्तवनस्य सप्तम्यां विभक्तौ मन्त्रेऽस्मिन् विद्यमानत्वादेष मन्त्र उदाहृतो यास्केन ।

"उप प्रेत कुशिकाश्चेतयध्वम्।" (ऋ० ३।५३।११) इति॥

भा०—अथ च प्रत्यक्षकृता युष्मच्छब्दप्रयुक्ता मध्यमपुरुषाख्यातकाश्च स्तोतारो भवन्ति तदा स्तोतव्यानि देवतानामानि परोक्षकृतानि भवन्ति। तद्यथा—

मा चिदन्यद्वि शंसत सखायो मा रिषण्यत।

इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥

हे सखायः! यूयं वृषणं सुखस्य वर्षितारमिन्द्रं परमात्मानं स्तोत स्तुवीध्वं सुते—ऐश्वर्यं प्राप्ते सचा सह परस्परमेकमनसः सन्तस्तस्मै—उक्था वर्णनीयानि गुणकर्माणि च मुहुः पुनः पुनः प्रशंसत। अन्यत्—तद्भिन्नं परमात्मनो भिन्नं वस्तु मा चित्—न कदाचित्—विशंसत विशिष्टं मत्वा शंसत प्रशंसत यतो यूयं मा रिषण्यत न कदाचिद्—हिंसिता भवत।

क्रीळं वः शर्धो मारुतमनर्वाणं रथे शुभम्।

कण्वा अभि प्र गायत॥

हे कण्वाः! मेधाविनो मरुतः सैनिकाः! "असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना। तां विध्यत तमसापव्रतेन यथैषामन्यो अन्यं न जानात्॥" (अथर्व० ३।२।६) वो युष्माकं मारुतं सैन्यं शर्धो बलम् "शर्धोबलम्" (निघं० २।९) क्रीडं क्रीडनरूपं स्वाभाविकमनायासिकं तथाऽनर्वाणम्—अशत्रु शत्रुरहितम् "भ्रातृव्यो वा अर्वा" (तै० सं० ६।३।८।४) रथेशुभम्—विद्युद्रथे शोभमानं देदीप्यमानमस्ति "आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात" (ऋ० १।८८।१) तद् बलं सैन्यं सेनावर्गं च प्रगायत प्रकृष्टं प्रशंसत।

उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः।

राजा वृत्रं जङ्घनत् प्रागपागुदगथा यजाते वर आ पृथिव्याः॥

हे कुशिकाः! कुशाः—आपः "आपो हि कुशाः" (शत० १।३।१।३) ताः—आपः कुशा येषामधीने ते कुशिकाः "अत इनिठनौ" (अष्टा० ५।२।११५) रश्मयः सूर्यरश्मयः, तथा "कुशिकः क्रंशतेः स्यात् प्रकाशयतिकर्मणः" (निरु० २।२५) प्रकाशका रश्मयोऽपामाकर्षकाः! राजा—इन्द्रो विद्युद्रूपो राजा प्राक् पूर्वदिक्कः, अपाक् पश्चिमदिक्कः, उदक्—उत्तरदिक्कः—वृत्रं मेघं जङ्घनत्—अत्यन्तं हतवान्, अथानन्तरं यूयम्—उपप्रेत सूर्यं प्राप्नुत यूयं वृत्रे मेघे गुप्ता आसन्—इदानीं हते मेघे सूर्यं प्रति गच्छत सुदासः कल्याणदानस्य कर्तुः सूर्यरथस्याश्वं चेतयध्वम्, तथा तं संसारे राये—अन्नायैश्वर्याय तत्सिद्ध्यर्थं प्रमुञ्चत,

यतः सूर्यस्य सञ्चारः सर्वत्र स्यात्—वृष्टेरनन्तरं सञ्चरति—सञ्चरणं कुर्वति सूर्ये यजमानः कृषकः पृथिव्याः—वरे—उर्वरे श्रेष्ठे भागे—आयजेत समन्तात् विधिना कृषियज्ञं कुर्याद् बीजं क्षिपेत् ॥

अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना । यथैतदिन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीयमिति ॥ २ ॥

भा०—अथ—आध्यात्मिक्य ऋचः—आध्यात्म्योत्तमपुरुषप्रयोगा यासु भवेयुस्तथा 'अहम्' इत्यस्मद्विषयकेण सर्वनाम्ना सम्बद्धा ऋचो भवन्ति । तद्यथा वैकुण्ठ इन्द्रो यस्य ऋषिः, "कुठि प्रतिघाते" (भ्वादि०) विकुण्ठमप्रतिहतं पदं मोक्षधाम तस्य स्वामी तत्र बाहुल्येन स्थितो वा परमात्मा "त्रिपादस्यामृतं दिवि" (१०।९०।३) उक्तत्वात् । तस्य सूक्तद्वयम् (ऋ० १०। ४८, ४९) यत्र 'अहम्' इति नाम्ना स्तवनं वर्णनम् । एकं लवसूक्तं यस्य 'लव इन्द्रः' ऋषिः । लवोऽणुः—इन्द्रो जीवात्मा तस्य सूक्तम् (ऋ० १०। ११९) पुनश्च 'वागाम्भृणी' वाक्—आम्भृणी यस्य—ऋषिः, "अम्भृणः—महन्नाम" (निघं० ३।३) अम्भृणो महान् परमात्मा "तस्येदम्" (अष्टा० ४। ३। १२०) इति—आम्भृणी सा च वाक्—वेदवाक्—ज्ञानरूपा शक्तिर्वा तस्य परमात्मनः—तत्सम्बन्धि सूक्तम् (ऋ० १०। १२५)। यास्केन विस्तारभयात् सूक्तानां मन्त्रा नोदाहृताः पाठकेभ्यस्तत्परिचयार्थमेकैकं मन्त्रं तेभ्यः सूक्तेभ्योऽत्र ददामि ।

वैकुण्ठस्येन्द्रस्य मन्त्रः प्रथमः—

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥

अहं परमेश्वरो वसुनो नितान्तं वसन्ति मुक्तात्मानो यस्मिन् तस्य मोक्षधाम्न ऐश्वर्यभूतस्य पूर्व्यः सनातनः स्वामी खल्वस्मि मोक्षधामापि सनातनमुत्पत्तिनाशरहितमनपायोपजनं तथाहमपि तथैव सनातन उत्पत्तिनाशरहितोऽनपायोपजनोऽस्मि । अहं धनानि विविधानि लौकिकानि शश्वतो बहोर्गणस्य जीवगणस्य तृप्तये धनानि लौकिकानि संजयामि—सम्—इति—उपसर्गयोगात् संजयामि संस्थापयामि स्वाधीने संस्थापयामि । अतो जन्तवो जीवाः पितरं न—पितरमिव मां हवन्ते—आह्वयन्ति, अहं खलु दाशुषे दत्तवते यथापात्रं यथाधिकारि भोजनं मोक्षानन्दं यद्वा लोकसुखं भोजनं भोगं विभजामि विभज्य प्रयच्छामि ॥

कवस्येन्द्रस्य मन्त्रः प्रथमः—

इति वा इति मे मनो गामश्वं सनुयामिति ।
कुवित् सोमस्यापामिति ॥

इति वै—इति, एवं निश्चितमेवं मम मनोऽस्ति यत्—अहं गां गोधनं तथाऽश्वमश्वधनमधिकारिभ्यो दद्यां पुनस्त्यक्तधनः सोमस्य परमात्मन आनन्दरसं कुवित्—भूरि—बहुपानं कुर्याम् ।

वागाम्भृणीयसूक्तस्य मन्त्रः प्रथमः—

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥

अहं वागाम्भृणी पारमेश्वरी ज्ञानात्मिका शक्तिः—वसुभिः पृथिवीस्थानकैर्गणदेवैः प्राणिनां वासनिमित्तभूतैः—रसात्मकैः सह तथा रुद्रैरन्तरिक्षस्थैर्गणदेवैर्जलस्य द्रावकैर्वायुरूपैः सह, आदित्यैर्द्युस्थानकैर्गणदेवैः प्रकाशात्मकैः सह चरामि विचरामि, उतापि विश्वदेवैः पृथिव्यन्तरिक्षद्युस्थानेषु सर्वेषु स्थानेषु विचरणशीलैर्गणदेवैः—रसवायुप्रकाशानां सञ्चारकैः—विश्वप्राणैः सह "प्राणा वै विश्वेदेवाः" ( शत० १४ । २ । २ । ३७ ) तथाहमुभाविन्द्राग्नी पृथिवीस्थौ अग्निवायू युगलं धारयामि, मित्रावरुणौ—अन्तरिक्षस्थौ विद्युच्छक्तिरूपौ 'शुष्कार्द्रे धारे' इत्याख्यौ युगलं धारयामि, अश्विनौ द्युस्थानकौ रसेनान्यो ज्योतिषाऽन्य इति द्युलोकस्थगोलानां गतिहेतुभूतौ धारयामि ॥

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिकाः ।

भा०—परोक्षकृता यथोक्तलक्षणाः प्रथमपुरुषविषयकाः, प्रत्यक्षकृता मध्यमपुरुषविषयकाश्च मन्त्रा बहुसंख्यकाः सन्ति किन्तु—आध्यात्मिका उत्तमपुरुषविषयकाः—अल्पाः सन्ति ।

तत्र मन्त्रेषु—

अथापि स्तुतिरेव भवति नाशीर्वादः ।
"इन्द्रस्य नु वीर्याणि प्रवोचम्" ( ऋ० १ । ३२ । १ )
यथैतस्मिन् सूक्ते ।

भा०—अथ खलु स्तुतिरेव देवस्य भवति, आशीर्वादः—आकाङ्क्षाकथनं न भवति "आङः शासु इच्छायाम्" ( अदादि० ) तस्य क्विपि रूपम् 'आशिस्—आशीः' उपधाया इत् "आङः शासु इच्छायां क्विप्प्रत्यये तस्य—इत्वं भवतीति"

इति वार्तिकसूत्रेण । मन्त्रो व्याख्यातः पूर्वमनन्तरमस्मिन्नेवाध्याये ( ७ । २ ) 'इन्द्रस्य नु०' एतस्मिन् सूक्ते स्तुतिरेव ।

अथाप्याशीरेव न स्तुतिः "सुचक्षा अहमक्षीभ्यां सुवर्चा मुखेन सुश्रुत् कर्णाभ्यां भूयासम्" ( मानव गृह्य० १ । ९।२५) इति । तदेतद् बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु ॥

भा०—अथ क्वचिन्मन्त्रे—आशीः—आकाङ्क्षा—कामना हि भवति, न तु स्तुतिः । तद्यथा "सुचक्षा....." अहं नेत्राभ्यां सुद्रष्टा, मुखेन सुवर्चाः सुकान्तो वर्चस्वी, कर्णाभ्यां सुश्रुत् सुश्रोता भूयासम् । तदेतद्—आशीर्वृत्तमाकाङ्क्षाविषयो यजुर्वेदे बहुविद्यते, यजुर्वेदादन्यत्र तु याज्ञेषु यज्ञविषयकेषु मन्त्रेषु च । यजुर्वेदे यथा "तेजोऽसि तेजो मयि धेहि....." ( यजु० १९ । ९ ) "यज्जाग्रतो दूरमुदैति दैवं.....तन्मे मनः शिवसङ्कल्पमस्तु" ( यजु० ३४ । १ ) "विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥" ( यजु० ३० । ३ ) "अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम्" ( ऋ० १ । १२ । १ ) "ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥" ( अथर्व० १ । १ । १ ) यास्केन वेदमन्त्रः कुतो नोदाहृतः, कथं सूत्रग्रन्थस्य वचनं दत्तमाशीर्वादे—आकाङ्क्षावचने, केवला खल्वाकाङ्क्षाऽत्र सूत्रग्रन्थस्य वचनेऽस्ति वेदे तु सापेक्षा—आकाङ्क्षा परमात्मानमपेक्ष्य वर्तते तस्मान्नोदाहृतः ।

अथापि शपथाभिशापौ ।
"अद्या मुरीय यदि यातुधानो अस्मि"(ऋ० ७।१०४।१५)
"अधा स वीरैर्दशभिर्वियूया" (ऋ० ७।१०४।१५)

भा०—अथ च शपथः, अभिशापश्च मन्त्रेषूपलभ्यते । स्वयमकृतेऽपराधे परेणाक्षिप्तस्य सतस्तं परं विश्वासयितुं स्वानिष्टं प्रति भावप्रदर्शनं शपथः । अन्येनान्यथाकृते तद्दण्डप्रदर्शनमभिशापः । द्वावप्यभिप्रायावेकस्मिन्नेव मन्त्रे स्तस्तस्मादत्रैकत्र व्याख्यायेते ।

स मन्त्रः—

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वियूया यो मा मोघं यातुधानेत्याह ॥

यदि त्वहं यातुधानो वधस्य धारको परस्मै वधस्य धारयिता भवेयम् "यातयति वधकर्मा" ( निघं० २ । १९ ) अन्यस्य हिंसको भवेयं यदि वा पुरुषस्य

कस्यापि मनुष्यस्यायुर्जीवनं ततप ततवान् पीडितवान् स्याम् "तप सन्तापे" (भ्वादि०) तदाहमद्य साम्प्रतं मुरीय मृत्युदण्डमपि प्राप्तुमुद्यतोऽस्मि । अथ पुनर्योऽन्यथा यातुधानो मनुष्यस्य वधकः—इति मां कथयति स राज्यव्यवस्थया दशभिः—वीरैः पुत्रैः सह सपरिवार इति यावत्—जीवनाद् विघूयाः—वियुक्तो भवेत् दश पुत्रा हि गृहस्थेनोत्पाद्याः "दशास्यां पुत्रानाधेहि" (ऋ० १०।८५।४५)।

अथापि कस्यचिद्भावस्याचिख्यासा ।

"न मृत्युरासीदमृतं न तर्हि" (ऋ० १०।१२९।२)

"तम आसीत् तमसा गूळ्हमग्रे" (ऋ० १०।१२९।३)

भा०—अथ च कस्यचिद् वस्तुन आख्यातुमिच्छा विद्यते क्वचिन्मन्त्रे, तद्यथा—प्रथमः समग्रमन्त्रस्तदर्थश्च—

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः ।

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥

सृष्टेः पूर्वं मृत्युर्मारकशक्तिर्नासीत् पुनर्मृत्योरभावेऽमृतमपि नासीत् सर्वेषां जीवानां मुक्तत्वमपि नासीत्—यद्येवं तदा सृष्टेरनुत्पादः स्यात्, रात्रेः—दिवसस्य प्रकेतः प्रज्ञानं पूर्वरूपं चिह्नमपि नासीत्, तत् खल्वेकं वातेन विना जीवद् वस्तु स्वधारणया स्वाधारशक्त्या जीवन धारयद् ब्रह्मासीत् तस्माद्भिन्नं किञ्चिन्नासीद् व्यक्तं वस्तु ॥

द्वितीयः समग्रमन्त्रस्तदर्थश्च—

तम आसीत् तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।

तुच्छ्येनाभ्वपिहितं यदासीत् तपसस्तन्महिना जायतैकम् ॥

अग्रे सृष्टेः प्राक् तमसा गूढमावृतं तमोरूपमासीत्, इदं सर्वमज्ञेयं जलमिवैकसममासीत् तुच्छ्येन रूपेण यदपिहितं गुप्तमनाविर्भूतम् 'आभु' इति नामकं समन्तादभवत्—वर्तमानं प्रसृतमव्यक्तं प्रकृतिनामकमुपादानकारणमासीत् 'आभु'—"इयं विसृष्टिर्यत आबभूव" (ऋ० १०।१२९।७) इति वचनात् तत् परमात्मनस्तपसो ज्ञानमयात् तपसो महत्तत्त्वात्मना वस्त्वेकमजायत ॥

अथापि परिदेवना कस्माच्चिद् भावात् ।

"सुदेवो अद्य प्रपतेदनावृत्" (ऋ० १०।९५।१४)

"न वि जानामि यदिवेदमस्मि" (ऋ० १।१६४।३७)

भा०—अथ च कस्माद्विनिमित्तात् परिदेवना, आकाङ्क्षितस्य वस्तुनोऽप्राप्तावुपालम्भपूर्वको विलापः परिदेवना ।

प्रथमः समग्रमन्त्रः—

सु॒दे॒वो अ॒द्य प्र॒पते॒दना॑वृत् परा॒वतं॑ पर॒मां गन्त॒वा उ॑ ।

अधा॑ शयीत॒ निर्ऋ॑तेरु॒पस्थे॒ऽधै॑नं॒ वृका॑ रभ॒सासो॑ अ॒द्युः ॥

वक्तव्यम्—उर्वशीपुरूरवसोः संवादोऽत्र सूक्ते । पुरु बहु रौति शब्दयतीति पुरूरवाः स च गर्जनशीलो मेघः सोऽस्मिन् प्रस्तुते मन्त्रे सुदेवः—वरुणः "सु॒दे॒वो अ॑सि वरुण॒ यस्य॑ ते स॒प्त सिन्ध॑वः" ( ऋ० ८ । ६९ । १२ ) "आपो यत्र वृत्वाऽतिष्ठन् तद्वरणोऽभवत् तं वा एतं वरणं सन्तं वरुण इत्याचक्षते" ( गो० पू० १ । ७ ) एवं स वरुणः सुदेवः—पुरूरवाः—मेघः, उर्वशी विद्युत् । अस्मिन्नेव सूक्ते "अ॒न्त॒रि॒क्ष॒प्रां रज॑सो वि॒मानी॒मुप॑ शिक्षाम्युर्वशीं॒ वसि॑ष्ठः ।" ( १७ ) अहं वसिष्ठ आच्छादित उदकसंघातो मेघः पुरूरवास्त्वामन्तरिक्षप्रामन्तरिक्षस्य पूरयित्रीं रजस उदकस्य निर्मात्रीमुर्वशीं विद्युतमुपशिक्षामि निवेदयामि । एवं मेघस्य गर्जनशीलस्य विद्युतश्चालङ्कारिकः संवादः । विद्युद् दूरं गता भवति स पुरूरवा मेघो विलापं करोति । परोक्षवृत्त्या प्रथमपुरुषत्वेनात्मानं प्रदर्श्य 'सुदेवो अद्य' इति ।

मन्त्रार्थः—

हे उर्वशि ! विद्युत् ! पुरूरवाः सुदेवो वरुणो मेघस्तव पतिरद्यानावृत्—अनावृतः केनापि न निरुद्धः परमां परावतं निम्नादपि निम्नप्रदेशं गन्तवै—उ गन्तुं हि प्रपतेत् सम्भावनायमहो दुःखं पुनश्च निर्ऋतेः पृथिव्याः—उपस्थे उत्सथाने स्थले शयीत प्रसृतो भवेत्, तदैव रभसाः—महान्तः "रभसः—महन्नाम" (निघं० ३।३) वृकाः । वृको हलो भवति क्षेत्रकर्षणाय "यवं वृकेणाश्विना वपन्त—वृको लाङ्गलं हलः—भवति" ( निरु० ६ । २६ ) वृका हला येषु क्षेत्रेषु भूभागेषु सन्ति ते क्षेत्ररूपा भूभागाः वृकाः "अर्श आदिभ्योऽच्" ( अष्टा० ५ । २ । १२७ ) इति मत्वर्थीयोऽकारश्छान्दसः । ते वृकाः कर्षिताः क्षेत्ररूपा भूमिभागा तं मेघमनुभक्षयेयुः ॥

द्वितीयो मन्त्रः—

न वि जा॑नामि॒ यदि॑वे॒दमस्मि॑ नि॒ण्यः संन॑द्धो॒ मन॑सा चरामि ।

यदा॒ माग॑न् प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः ॥

यद्—इव—इदं यत्प्रत्यक्षमिदं वस्तु खल्वहमस्मीति नात्मानं विजानामि—

इति खेदः, बाह्यं वस्तु त्वहं जानामि नात्मानं जानामि, कुतो न जानामि मनसा सबद्धो मनसा समावृतो मनोवृत्तिभिः सम्मूढो निण्योऽन्तर्हितश्च चरामि–इत्यपि दुःखम् । यदाप्रभृति ऋतस्योपादानस्याऽव्यक्तस्य प्रथमजा–प्रथमजानि महत्तत्वाहङ्कारमनइन्द्रियाणि मामागन् प्राप्तान्यभवन्, आदनन्तरमिदियदेव जानामि वाचो भागमश्नुवे प्राप्तोऽस्मि, वदामीति–अस्मि–अहमिति ॥

अथापि निन्दाप्रशंसे ।

"केवलाघो भवति केवलादी" ( ऋ० १०।११७।६ )

"भोजस्येदं पुष्करिणीव वेश्म" ( ऋ० १०।१७।१० )

इत्येवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ॥

भा०—अथापि निन्दा च प्रशंसा चोपलभ्यते मन्त्रेषु ।

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।

नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥

अप्रचेताः–अप्रकृष्टबुद्धिर्जनो ऽव्यर्थमन्नं विन्दते प्राप्नोति सत्यं खलु ब्रवीमि वध एव केवलं भवति तस्य यः स्वेनान्नेनार्यमणमीश्वरोपासकं पूजनीयविद्वांसं * न पुष्यति पालयति न च सखायं समानख्यानं मित्रं सम्बन्धिनं च पुष्यति, स केवलादी स्वयमेव भोक्ता केवलो नितान्तः पापी खलु भवति । इति निन्दा ॥

भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या३शुम्भमाना ।

भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥

भोजाय–अन्येषां भोजयित्रे दात्रे पालयित्रे च जनाय–आशुं शीघ्रगामिनमश्वं सम्मृजन्ति समलङ्कृत्य समर्पयन्ति जनाः, भोजाय भोजयित्रे दात्रे पालयित्रे जनाय शुम्भमाना शोभायमाना कन्या विवाहार्थमास्ते समुद्यता भवति न तु कृपणायापालयित्रे । भोजस्य भोजयितुर्दातुः पालकस्य जनस्य–इदं वेश्म गृहं पुष्करिणीव पद्मवती सरसी–इव परिष्कृतमलङ्कृतं सुभूषितं देवमाना–इव देवमानम्–इव–आकारश्छान्दसः । देवा यस्मिन् मान्यन्ते पूज्यन्ते "मान पूजायाम्" ( भ्वादि ) यद्वा देवा विद्वांसो यन्मन्यन्ते प्रशंसन्ति तथाभूतं चित्रमद्भुतं भवति । इति प्रशंसा ॥

---

* अयं सप्तहोतृणां होता" (तै० २ । ३ । ५ । ६) 'अर्यं स्वामिनमीश्वरं मिमीते मन्यते जानाति' इत्यर्थे कनिन्प्रत्ययान्तो निपात्यते 'श्वन्....अर्यमन्.... मघवन्निति" (उणादि० १ । १५९)

अक्षसूक्ते ( ऋ० १० । ३४ ) द्यूतस्य निन्दा, कृषेः प्रशंसा च विद्यते । यास्केनोदाहरणाय मन्त्रो न धृतः किन्तु सूक्तमेव तद्दृष्टावुदाहरणं तथापि मन्त्र-द्वयमस्माभिरुदाह्रियते ।

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः ।

पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥ ४ ॥

वाजी बलवान्–अक्षः–द्यूतपाशो वेदने द्यूतरूपे धौर्त्यकर्मणि "वेद धौर्त्ये" ( चुरादि० ) यस्य–यं कितवं द्यूतव्यसनिनमगृधत्–गर्धितवान्–आकाङ्क्षितवान्–आकर्षितवान् तस्यास्य कितवस्य द्यूतव्यसनिनो जायां पत्नीमन्ये जनाः परिमृशन्ति दुर्भावनया स्पृशन्ति, तथाऽस्य कितवस्य द्यूतव्यसनिनः पिता माता भ्रातरः कथयन्ति यद् वयमेनं द्यूतव्यसनिनं न जानीमो नायमस्माकं जनः, एतं बद्धं नयत हे राजपुरुषाः ! दण्डं दातुम् । इति द्यूतनिन्दा ॥

अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः ।

तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥

हे कितव ! त्वमक्षैर्द्यूतपाशैर्न क्रीड किन्तु कृषिमेव कृषस्व कुरु पुनः स्वात्मानं धन्यं कृतार्थं बहु मन्यमानो वित्ते धने कृषितो धनं प्राप्यते तत्प्राप्ते धने रमस्व क्रीड, तत्र, कृषिकर्मणि गावो भवन्ति तत्र जाया भवति सविता–उत्पादकोऽर्यः स्वामी सर्वस्वामीश्वरस्तदिदं मे मह्यं विचष्टे व्याख्यातवान् नात्र मम कथने सन्देहः कार्यः किन्तु सर्वस्वामिन आदेशं हि वदाम्यहं तस्मात् त्वं विश्वसिहि । इति कृषिप्रशंसा ॥

एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ॥ ३ ॥

भा०—इत्थं विविधानभिप्रायान् लक्ष्यीकृत्य खल्वृषीणां मन्त्रदर्शनानि भवन्ति । ऋषयः खलु मन्त्राणां कर्तारो न सन्ति किन्तु मन्त्राभिप्रायाणां द्रष्टारोऽनुभवितारः सन्ति ।

तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा ।

भा०—तत् खलु येषु मन्त्रेषु देवता नादिष्टा तेऽनादिष्टदेवताका मन्त्राः, तेषु देवताया उपपरीक्षा–उपरिष्टाद्युक्तिमनुसृत्य या परीक्षा सोपपरीक्षाऽधिक्रियतेऽतः । अनवगतसंस्काराणां निर्वचनप्रकाराणामिवैषा देवतोपपरीक्षा, अत्र प्रस्तूयते । सा चेत्थम्—

यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति

भा०—यां देवतामभिलक्ष्य यज्ञो वा यज्ञाङ्गं वानुष्ठीयते क्रियते तत्र यज्ञे यज्ञाङ्गे वा येऽनादिष्टदेवताः—अदृष्टदेवताकाः—मन्त्राः पठ्यन्ते तेषामनादिष्टदेवतानां मन्त्राणां तदा देवता सा हि मन्तव्या। सोमयागे पठिताः—अनादिष्टदेवताकाः—मन्त्रा अपि सोमदेवताकाः, अग्निष्टोमयागेऽनादिष्टदेवताकाः—मन्त्राः—अग्निदेवताका विज्ञेयाः।

अथान्यत्र यज्ञात् प्राजापत्या इति याज्ञिकाः।

भा०—यज्ञादन्यत्र तेऽनादिष्टदेवताका मन्त्राः प्रजापतिदेवताका मन्तव्याः, प्रजापतिरनिरुक्तः, प्रजापतिश्च परमात्मा। इति याज्ञिका मन्यन्ते।

किन्तु—

नाराशंसा इति नैरुक्ताः।

भा०—अनादिष्टदेवताका मन्त्राः—नाराशंसाः—नराशंसदेवताकाः सन्तीति नैरुक्ता मन्यन्ते। नराणां नरेभ्यो वाऽऽशंसाः—व्यवहारशंसनानि याभिस्ता नराशंसा देवतास्ता येषु मन्त्रेषु ते नाराशंसाः—मन्त्राः। यद्वा याभिर्नराः—आशस्यन्ते ताः—नराशंसास्तद्देवत्या नाराशंसा मन्त्राः। "येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः" ( निरु० ९।९ ) अथवा नराणां प्राणिनां शंसाः शंशसनीयास्ते नराशंसा मनुष्याः। "मनुष्या वै नराशंसः" ( तै० २।७।५।२ )। तद्विषयकास्तद्व्यवहारविषयका मन्त्रा नाराशंसाः॥

अपि वा सा कामदेवता स्यात्।

भा०—अपि सम्भावनायाम्, यद्वा सा यज्ञादन्यत्र देवता—अनादिष्टा कामदेवता कामतः—इच्छातः कल्पनीया इच्छारूपा वा देवता मन्तव्या—अभीष्टफलसाधनत्वात्।

प्रायोदेवता वा। अस्ति ह्याचारो बहुलं लोके देवदेवत्यमतिथिदेवत्यं पितृदेवत्यम्।

भा०—प्रायोदेवता वा—प्रायः सामान्यं कुत्रापि योगार्हमभीष्टं तद्विषयिका देवता प्रायोदेवता। यथा लोके बहुलं बहुधा व्यवहारोऽस्ति, सिद्धं भोज्यमेकं वस्तु पायसं तदेव देवदेवत्यम्—अग्नये देवाय होतव्यत्वाद् देवदेवत्यम्, तदेवातिथये समर्प्यमाणत्वादतिथिदेवत्यम्, तदेव पितृभ्यो वंश्येभ्यो भोजनार्थं दीयमानत्वात् पितृदेवत्यम्, तदेकं वस्तु पायसमनेकेषूपयुज्यमानत्वादनेकदेवत्यं यथावसरं नानादेवत्यं यद्वा यथेष्टदेवत्यं जातं तथा यज्ञादन्यत्राधीयमाना अनादिष्टदेवताका मन्त्राः अस्यपि प्रायोदेवता यथावसरदेवताकाः।

याज्ञदैवतो मन्त्र इति ।

भा०—इतिशब्दोऽलमर्थेऽवसाने समाप्तौ । वेदे मन्त्रो याज्ञदैवतः—याज्ञो विषयो दैवतो विषयश्च यस्मिन् स याज्ञदैवतः । याज्ञो यज्ञसम्बन्धी यज्ञः कर्मकाण्डं तत्सम्बन्धी याज्ञः, देवताः खल्वग्न्यादयस्तत्सम्बन्धी दैवतः । मन्त्रः खलु यज्ञं प्रतिपादयति देवतां वा वर्णयति । मन्त्रस्य द्विविधत्वात् स यज्ञदेवताको यद्वा देवदेवताको मन्त्र इति निश्चयः, एवं मन्त्राणां देवताविषये पक्षद्वयम् । अनादिष्टदेवताकानां मन्त्राणां द्वयी गतिः । यज्ञे यज्ञाङ्गे प्रयुक्तानां यज्ञयज्ञाङ्गदेवतात्वम्, तद्भिन्नप्रसङ्गेऽध्ययने प्रजापतिदेवतात्वं याज्ञिकमते । नाराशंसाः, कामदेवताः, प्रायोदेवतास्ते खलु नैरुक्तपक्षे । "याज्ञदैवतो मन्त्रः" इति वचनं सर्वैर्भाष्यकारैरन्यथा व्याख्यातमुत्तरत्राक्षेपसमाधानाभ्यां सह साङ्गत्ये व्याख्यातव्यमासीत् ।

अपि ह्यदेवता देवतावत् स्तूयन्ते यथाऽश्वप्रभृतीन्योषधिपर्यन्तानि ।

भा०—अपि खलु—अदेवताः पदार्थाः—अनित्या देवतावत्—अग्निवायुसूर्यप्रभृतिदेवतावत् स्तूयन्ते देवताः सूर्यादयस्तु नित्याः सन्ति तस्मात् ते तु दिव्यगुणवत्त्वाद् देवता अतो नित्याः पदार्था देवता भवितुमर्हन्ति नानित्याः—न चाश्वादिषु यत्कामस्यर्षेरार्थपत्यम् । यथा च "अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः । तेषामश्वः प्रथमागामी भवति ।" ( निरु० अ० ९ । खं० १–२८ शब्दाः १–२२ ) ते च 'अश्वः, शकुनिः, मण्डूकाः—इति जीवाः । अक्षाः, ग्रावाणः, रथः, ओषधयः' इति यावत् । इत्याक्षेपस्तु दैवतो देवदेवताको मन्त्रः—इति पक्षे ।

अथाप्यष्टौ द्वन्द्वानि ।

भा०—अन्यच्च "अथातोऽष्टौ द्वन्द्वानि" इति प्रकृत्य "उलूखलमुसले, हविर्धाने, आर्त्नी—इत्यादीनि द्वन्द्वान्यष्टौ" (निरु० अ० ९।२९–३६ शब्दाः) इत्युपपठ्यानि वस्तूनि देवतावत् स्तूयन्ते, यज्ञो देवता यज्ञस्य विधायकानां मन्त्राणां पुनः 'उलूखलमुसले' आदीनि हविषः कुट्टनादिसाधनानि न यज्ञाख्यानि । न चैतेषु यत्कामस्यर्षेरार्थपत्यम् । पुनः कथं देवतावत् स्तूयन्ते, इत्याक्षेपो याज्ञो यज्ञदेवताको मन्त्रः—इति पक्षे ।

समाधानवचनानि—

स न मन्येतागन्तूनिवार्थान् देवतानां प्रत्यक्षदृश्यमेवद् भवति ।

भा०—स आक्षेपस्य कर्ता देवतानां खल्वेतानश्वरथादीन् मनुष्यादीनामागन्तून् मनुष्यादिभिः सहागमनयोग्याननित्यानुपकरणपदार्थानिव न मन्येत, यतो मनुष्यास्त्वनित्यास्तेषामश्वरथादय आगन्तवः प्राप्तव्या उपकरणपदार्थाः— अपि खल्वनित्याः सन्ति । न तथा देवतानामेतेऽश्वरथादय आगन्तवः कुतश्चित् प्राप्तव्याः किन्तु देवताः सन्ति नित्यास्तासामश्वरथादयोऽपि नित्याः सन्ति । अनित्यत्वदृष्ट्या त्वेषोऽदेवतात्वस्याक्षेपस्य परिहारः । पुनस्तेऽश्वरथादयोऽपि कथं स्तोतव्या इत्यत्र 'प्रत्यक्षदृश्यमेतद् भवति' एतत् तु प्रत्यक्षदृश्यं प्रत्यक्षं द्रष्टव्यं सर्वैर्लोके यत्-अनित्यानां मनुष्याणामनित्या अश्वरथादयोऽपि तैर्मनुष्यैः स्तुतैः सह तेऽश्वरथादयोऽपि स्तूयन्ते, तथैवात्रापि नित्यानां देवतानां नित्या अश्वरथादयस्ताभिर्नित्याभिर्देवताभिः स्तुताभिः सह स्तूयन्ते ।

अन्या समाधानप्रक्रिया, पुनश्च—

माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते ।
एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ।

भा०—देवतायाः खलु माहाभाग्यात्-महाभागत्वात्-महाभाग्यवत्त्वाद्देवतैरेक आत्मा बहुधा स्तूयते या हि तस्याश्वस्य रथस्यान्योपकरणस्य स्तुतिः सा तस्या देवतायाः स्तुतिर्विज्ञेया, अस्य राज्ञोऽश्वः संग्रामे स्थिरः प्रहारक इति स्तुतिरश्वस्य न मन्तव्या राज्ञ एव स्तुतिः । अस्य राज्ञो रथः सेनारथोऽग्राणांप्रवर्तकः-इति रथस्य स्तुतिर्न मन्तव्या, राज्ञः स्तुतिरेव । यस्य राज्ञः पार्श्वे नाश्वो न रथो न सेना न स स्तुतिभाक् । अध्यात्मप्रकरणे परमेश्वर एको बहुभिर्नामभिः स्तोतव्यो वेदे—उक्तो हि "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥" ( ऋ० १ । १६४ । ४६ ) अन्ये देवा अश्वरथादयः-उपकरणदेवाः-एकस्य आत्मन आत्मभूतस्य मुख्यदेवस्य प्रत्यङ्गानि प्रतिगतानि सम्बद्धान्यङ्गानि भवन्ति, अनिवार्यतया सहयोगीनि भवन्ति, तस्मान्नितान्तमुचितं यत् प्रत्यङ्गानामश्वरथादीनां स्तुतिस्तेषामङ्गिन आत्मभूतस्य देवस्य हि स्तुतिरिति गतम् ॥

अन्यत् किमपि वैशिष्ट्यमुच्यते—

अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः ।

भा०—सत्त्वानां पदार्थानां प्रकृतिभूमभिः स्वभावबहुत्वेन-ऋषयः स्तुवन्तीति कथयन्ति के चनाचार्याः । कदाचिदन्यं स्वभावं पश्यन्ति कदाचिदन्यं पश्यन्ति यं यं यदा पश्यन्ति तदा तथाभूतं स्तुवन्ति, तेषां मते भिन्नभिन्ननामभिः

स्तकर्म खलु तस्यैवैकस्य वस्तुनोऽस्ति न हि वस्तुनो भिन्नत्वं भवति । य एक एव जनो बहुस्वभावो बहुस्वशक्तिकोऽनेकार्थाणां विधायकोऽध्यापनादध्यापनकालेऽध्यापको यजनकार्यकरणाद् यजनकाले याजक ऋत्विक् पुरोहितो वा, कलारचनात्-रचनकाले कलाकारः शिल्पी वोच्यते ।

अन्यदपि—

प्रकृतिसार्वनाम्याच्च * ।

भा०—प्रकृतेः सर्वनामविषयकयोग्यत्वात् । सर्वैर्नामभिः स्तोतव्यः सः, प्रकृतयः काश्चनान्तरिक्यः काश्चन बाह्याः, आन्तरिकीः प्रकृतीरभिलक्ष्य—आन्तरिकनामभिः स्तूयते देवः, बाह्याः प्रकृतीरभिलक्ष्य बाह्यनामभिः स्तूयते । अश्नुते व्याप्नोतीति कृत्वा सोऽश्वः, संसारवहनधर्मवत्त्वाद् वह्निः, मुक्तानां रमणस्थानत्वाद् रथः—इत्यादि ।

अथ च देवाः—

इतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः ।

भा०—परस्परमपेक्ष्येतरेतरजन्मवन्तः परस्परमन्योऽन्यप्रकृतिभूताः देवा भवन्ति तत्र कस्य चिद् देवस्यादेवत्वं नैव कल्पयितुं शक्यते । यथा "अदितेर्दक्षो अजायत दक्षाद्वदितिः परि" ( ऋ० १० । ७२ । ४ ) मन्त्रैको देवो देवताऽन्योऽदेवतेति वक्तुं शक्यते तथैव सति ह्यश्ववति भवत्यश्वः सत्यश्वे भवत्यश्ववान्, यदि—अश्ववान् पदार्थो देवता तदाऽश्वोऽपि देवता न त्वदेवता ।

कर्मजन्मानः । आत्मजन्मानः ।

भा०—एवं ते भिन्नभिन्ननामका देवाः कर्मजन्मानः कर्मवशात् ते भिन्नभिन्ननामभिः प्रसिद्धाः—सरणात् स एव सूर्यो भवति—अदितेर्जातत्वाद् भवति स आदित्यः । स च—इन्द्रः—ऐश्वर्ययोगात्, दिवाकरो दिवाकरणात् । यद्वा ते देवाः—आत्मजन्मानः, य एषां देवानामात्मा—आत्मभूतो महादेवो महाभाग्यवान् परमात्मा तस्माज्जायमानत्वात् ते सूर्यो वायुः—इति प्रभृतयो देवाः, महादेवाः, न चेमे मनुष्यकृताः, ये मनुष्यकृतास्तेऽदेवाः स्युर्न वा स्युर्मनुष्या अदेवाः—एते तु देवा एव ।

इत्थम्—

'आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य ॥ ४ ॥

---

* 'प्रकृतिसार्वनाम्न्याच्च' इति क्वचित् ।

भा०—यथा ते सूर्यादयो देवा आत्मजन्मानः परमात्मजन्मानस्तथैषां सूर्यादीनां रथो वाऽश्वो न मानवीयो रथो वाश्वो मन्तव्यः किन्तु सूर्यादिवद् रथोऽप्यात्मा स्वस्वरूपात्मको भवत्यश्वोऽपि स्वस्वरूपात्मक आयुधमपि स्वस्वरूपात्मकमिषवोऽपि स्वस्वरूपात्मिका भवन्ति न हि तत्स्वरूपाद् भिन्ना अश्वरथादयो मनुष्यादीनामश्वरथादीनामिव, यत् किञ्च सूर्यादिदेवानामुपकरणं सर्वं तत्त देवस्य सूर्यादिकस्यात्मा स्वरूपमस्ति न ततो भिन्नं तस्माद् स आक्षेपः 'अदेवता देवतावत् स्तूयन्ते' स न युक्तः, न ह्यदेवता एतेऽश्वरथादयः किन्तु तेषां सूर्यादीनां देवानां तत्स्वरूपाः सन्ति। 'देवस्य' इति द्विर्वचनं क्वचिदुपलभ्यते तत् स्याद् दैवतोपपरीक्षासमाप्त्यर्थम्।

इति सप्तमाध्याये प्रथमः पादः।

---

## द्वितीयः पादः

---

तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः।

भा०—देवतास्तिस्र एवेति नैरुक्ता मन्यन्ते। तत्र—अग्निः पृथिवीस्थानः, वायुर्यद्वा—इन्द्रोऽन्तरिक्षस्थानः, सूर्यो द्युस्थानः। पृथिवीस्थानोऽग्निरिति नाम्ना खल्वेकः, द्युस्थानः सूर्यः—इत्यपि नामत एकः, परन्तु—अन्तरिक्षस्थानो वायुः—इन्द्रो वेति नामविकल्पत्वम्, एकं वस्तु यद्वा वस्तुद्वैतमपि स्यात्। तत्सुद्वैते तिस्रः—इति कथनविरोधो जायते। वस्तुतस्त्रिषु लोकेषु त्रीणि ज्योतींषि सन्ति—अग्निविद्युत्सूर्याः, इन्द्रो विद्युत् "यदशनिरिन्द्रः" ( कौ० ६। ९ ) विद्युन्मेघेषु विद्योतते यदा स इन्द्रो भवति मेघा अन्तरिक्षे वर्तन्ते तेषां पातयिता विद्युदेव इन्द्रः, इन्द्रो वृत्रं मेघं हन्ति—इति बहुषु मन्त्रेषु वर्ण्यते। निरन्तरव्यापारवान् वायुरन्तरिक्षे चलति। स एष एक एव देवो द्विपार्श्वकः, पृथिवीस्पृग् वायुः, द्युस्पृग् द्युम्मुखः—इन्द्रः। "यो वै वायुः स इन्द्रो य इन्द्रः स वायुः" ( शत० ४। १। ३। १९ ) स्पर्शधर्मवत्त्वेनाधोगामी वायुः—दर्शनधर्मवत्त्वेनोर्ध्वगामी इन्द्रः॥

तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति। अपि वा कर्मपृथक्त्वाद् यथा 'होताध्वर्युर्ब्रह्मोद्गाता'इत्यप्येकस्य सतः।

भा०—तासां देवतानां तिसृणामपि महागुणवत्त्वादेकैकस्या देवताया अपि

बहूनि नामधेयानि भवन्ति । अपि वा कर्मपृथक्त्वाद् व्यवहारपृथक्त्वाद् यथैकस्य याजकस्य सतः–विद्यमानस्य 'होता, अध्वर्युः, ब्रह्मा, उद्गाता' इति नाम कर्मानुरूपं भवति ।

अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति तथाभिधानानि ।

भा०—यद्वा पृथगेव देवताः स्युः पृथगेव तासां स्तुतयः सन्ति । यथा "अग्निमीळे...यज्ञस्य देवम्...." (ऋ० १ । १ । १) "प्र नूनं जातवेदसम्" (ऋ० १० । १८८ । १) "वैश्वानराय पृथुपाजसे" (ऋ० ३ । ३ । १) तथाकृत्वाभिधानानि कथनानि वर्णनानि तासां सन्ति, यदेतन्नामकाय देवायेदमित्थं च कर्तव्यम् । तस्मादेकैव देवतेति न ।

यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः । तत्र स्थानैकत्वं सम्भोगैकत्वं चोपेक्षितव्यम् ।

भा०—यथा-उ यथा ह्येतदुक्तं कर्मपृथक्त्वादेकस्यानेकनामानि स्युरिति परन्तु बहवोऽपि विभागं कृत्वा भिन्नभिन्नानि कार्याणि कुर्वन्ति हि । तत्र स्थानमेकं सम्भोगश्चैक इति लक्षयितव्यम् । भवतु स्थानमेकं यद्वा सम्भोग एकः परन्तु स्थातारः सम्भोक्तारस्तु भिन्नभिन्ना अनेके सन्ति । एवमेकत्वानेकत्वव्यवहारो भवति ।

यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं च सम्भोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च सम्भोगोऽग्निना चेतरस्य लोकस्य । तत्रैतन्नरराष्ट्रमिव ॥ ५ ॥

भा०—यथा पृथिव्यां मनुष्याः पशवो देवाः सन्ति तेषां भिन्नभिन्नानां स्थानमेकं सम्भोगः पार्थिवः–ओषधिवनस्पतिरूप एको दृश्यते । तेनैकरूपाः सम्भोक्तारः पृथक् पृथक् चापि व्यक्तितः–यथा पृथिव्याः पर्जन्येन मेघेन वाय्वादित्याभ्यां सह च सम्भोगः–ओषधिवनस्पतीनां निर्मातारः सर्वे, पर्जन्यः पृथिव्यां जलं वर्षति वायुर्जीवनं प्रेरयति सूर्यः प्रकाशं प्रसारयति तथा चान्यस्य लोकस्यान्तरिक्षस्याग्निना सह सम्भोगः सम्बन्धो ह्येतेषां प्रेरणं भवति, भवतु सम्भोग एकस्तेन तेन सम्भोक्तारः समानाः परन्तु सम्भोगे प्रवृत्तास्तु भिन्नभिन्नाः सन्ति । तत्र कार्थे देवतानां नरराष्ट्रमिवास्ति, राष्ट्रे स्थानं सम्भोगस्तु समानः परन्तु ते नरास्तु भिन्नभिन्नाः सन्ति ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा निषादाश्च भिन्नभिन्नाः किन्तु प्रजानामतस्तु सर्वे–एकरूपाः सन्ति, तथा देवता भिन्ना अभिन्नाश्चेति ॥

अथाकारचिन्तनं देवतानाम् ।

भा०—अथेदानीं देवतानां स्वरूपं चिन्त्यते विचार्यते ।

तत्र स्वरूपचिन्तने—

पुरुषविधाः स्युरित्येकम् ।

भा०—देवता अग्नीन्द्रादित्यादयः पुरुषविधा मनुष्यसदृशाश्चेतनाः खलु सन्तीत्येकं मतम् ।

यतः—

चेतनावद्धि स्तुतयो भवन्ति । तथाभिधानानि ।

भा०—ये सन्ति चेतनावन्तः श्रवणादौ समर्था मनुष्यादयस्तद्वत् खलु हि स्तुतयः–सम्बोधनादिपदैर्देवताः स्तूयन्ते यथा–"यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः ॥" ( ऋ० १ । १ । ६ ) "त्वमिन्द्र बलादधि सहसो जात ओजसः" ( ऋ० १० । १५३ । २ ) "वायवा याहि दर्शतेमे सोमा अरङ्कृताः । तेषां पाहि श्रुधी हवम् ॥" ( ऋ० १ । २ । १ ) "अथा वयमादित्य व्रते तवानागसो अदितये स्याम" ( ऋ० १ । २४ । १५ ) । तथाभिधानानि–अभिलक्ष्य परस्परं सम्मुखीकृत्य कथनानि भाषणानि संवादाः–भवन्ति । यथा "किं नं इन्द्र जिघांससि भ्रातरो मरुतस्तव । तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥" ( ऋ० १ । १७० । २ ) "यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि । श्वा न्वस्य जम्भिषदपि कर्णे वराहयु०" (ऋ० १० । ८६।४) "बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।" (ऋ० १०।१०।१३) ।

अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते ।

"ऋष्वा त इन्द्र स्थविरस्य बाहू" (ऋ० ६।४७।८)

"यत्सङ्गृभ्णा मघवन् काशिरित्ते" (ऋ०३।३०।५)

भा०—अथ च पुरुषविधेषु चेतनजातीयेषु प्राणिषु भवानि पौरुषविधिकान्यङ्गानि तैः पुरुषसदृशाङ्गैः संस्तूयन्ते । यथा—

उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।

ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ॥

हे इन्द्र ! त्वं विद्वान् जानन् सन् ! नोऽस्मान्–उरुं बह्वाकारवन्तं महान्तं लोकमनुनेषि–आनुकूल्येन नेषि प्रापयसि यत्र स्वः सुखं ज्योतिः प्रकाशोऽभयं स्वस्ति सु–अस्तित्वममरत्वं चास्ति, तव स्थविरस्य सत्तया पुरातनस्य बाहू भुजौ–

ऋष्वौ महान्तौ "ऋष्वो महन्नाम" ( निघं० ३ । ३ ) शरणौ शरण्यावाश्रयणीयौ बृहन्तौ—उद्यमशीलौ च स्तः ।

'यत्सङ्गृभ्णा मघवन् काशिरित्ते' काशिर्मुष्टिः, मुष्टिमान्—इन्द्र इति मुष्टि-रङ्गम् । मन्त्रस्तु व्याख्यातः ( निरु० अ० ६ पा० १ खं० १ ) ॥

अथापि पौरुषविधिकैर्द्रव्यसंयोगैः ।
"आ द्वाभ्यां हरिभ्यामिन्द्र याहि" (ऋ० २।१८।४)
"कल्याणीर्जाया सुरणं गृहे ते" (ऋ० ३।५३।६)

भा०—अथ च पुरुषप्रकारकैर्वस्तुसम्बन्धैः संस्तूयन्ते । यथा—

आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।
अष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥

हे सुमख शोभनयज्ञवन्—इन्द्र ! त्वमस्माभिराहूयमानः सोमपेयं सोमः पेयो यस्मिन् तत्स्थानं यज्ञं यतः सोमः सुतस्तं द्वाभ्यां हरिभ्यामश्वाभ्यामायाहि, चतुर्भिः, षड्भिः, अष्टाभिः, दशभिः । त्वमस्माभिः सह मृधः संग्रामान् न कुरु ।

अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥

हे इन्द्र ! त्वं सोममपाः सोमं पीतवान्, अतस्त्वं यज्ञस्थानादस्तं गृहं प्रगच्छ तव गृहे कल्याणी पत्नी सुरणं सुरमणसाधनं पर्यङ्कादिकं यत्र गृहे बृहतो महतो रथस्य निधानं निवेशस्थानं वाजिनोऽश्वस्य विमोचनं रथाद् विमुच्यन्तेऽश्वा विमुक्ता यत्र विश्राम्यन्ति तत्० स्थानं दक्षिणावत् तेभ्योऽश्वेभ्यो यवसादिकं तेन युक्तमस्ति ॥

अथापि पौरुषविधिकैः कर्मभिः ।
"अद्धीन्द्र पिब च प्रस्थितस्य" (ऋ० १० । ११६ । ७)
"आश्रुत्कर्ण श्रुधी हवम्" (ऋ० १ । १० । ९) ॥ ६ ॥

भा०—अथ च पुरुषविधसबद्धैः कर्मभिः संस्तूयन्ते देवताः । यथा—

इदं हविर्मघवन् तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन् तुभ्यं पक्वोऽद्धीन्द्र पिब च प्रस्थितस्य ॥

हे मघवन् सम्राट्—धनवन्—इन्द्र ! तुभ्यमिदं हविर्हव्यमदनीयं वस्तु रातं दत्तं रक्षितमस्ति त्वमहृणानोऽक्रुध्यन् प्रतिगृभाय—प्रतिगृहाण, अथ च

भगवन् ! तुभ्यं सुतः—ओषधिरसो निःसारितोऽयं विशिष्टः पाकश्च पक्वः कृतस्तं प्रस्थितस्य प्रस्थितमुपस्थितं पाकं पक्वं भक्षय रसं च पिब ।

आश्रुत्कर्ण श्रुधी हवं नू चिद् दधिष्व मे गिरः ।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥

हे आश्रुत्कर्ण—आश्रुतौ कर्णौ यस्य समन्ताच्छ्रवणशक्तिसम्पन्न ! इन्द्र ! त्वं मे मम हवं ह्वानं नु चित् क्षिप्रमवश्यं शृणु तथा गिरः स्तुतीश्च धारय । मम युजो योक्तुः सख्युरपि—इमं स्तोमं प्रशंसनीयमुपहारमन्तरं स्वाभ्यन्तरं कुरु धारय ।

एवमत्र पुरुषाणामङ्गद्रव्यकर्माणीव देवतानामङ्गद्रव्यकर्माणीति प्रदर्शनेन देवताः पुरुषविधाः पुरुषसदृशाश्चेतनाः सन्तीत्येकं मतं प्रदर्शितम् ।

अपुरुषविधाः । स्युरित्यपरम् । अपि तु यद् दृश्यतेऽपुरुषविधं तद्यथाऽग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति ।

भा—देवताः सन्त्यपुरुषविधा न पुरुषसदृशाः, अपि तु दूरगमनस्य नावश्यकताऽदृश्यदेवतानां पुरुषविधत्वं कल्प्येत यदि दृष्टदेवतानां पुरुषविधत्वं प्रत्यक्षं दृश्येत न च दृश्यते यद् दृश्यतेऽपुरुषविधं प्रत्यक्षदेवतावृन्दम् । तद्यथा—अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमाः । एता देवताः प्रत्यक्षं दृश्यन्तेऽपुरुषविधाः, न ह्यासां हस्तादीन्यङ्गानि सन्ति नासामश्वरथादयो दृश्यन्ते न च पुरुषविधकर्माण्याचरन्ति । तस्माद् देवता न पुरुषविधाः । देवता न पुरुषविधाः, तासां दृश्यमानस्वरूपमवलम्ब्यापुरुषविधा देवता इति पक्षस्य स्थापनम् । अथाग्रे पुरुषविधत्वस्य युक्तयो निराक्रियन्ते ।

यथो एतच्चेतनावद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि ।

भा—अथ खलु देवतानां चेतनावत् स्तुतयो भवन्ति तेन देवताश्चेतनावत्यः पुरुषविधाः सन्तीति यदुक्तं तत्र—अचेतनानि वस्तून्यपि चेतनावत् स्तूयन्ते, यथा 'अक्षः' इत्यारभ्य 'ओषधिः' पर्यन्तानि ( निरु० अ० ९ । ख० ७–२७ । शब्दाः ४–२२ ) "वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः" ( निरु० अ० ९ । ख० १२ । शब्दः ७ ) इति रथस्तुतिः ॥

यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद् भवति । "अभिक्रन्दन्ति हरितेभिरासभिः" ( ऋ० १० । ९४ । २ ) इति ग्रावस्तुतिः ।

भा—यथा ह्येतदुक्तं पौरुषविधिकैरङ्गैः संस्तूयन्ते, इत्येव तु न, अचेतनेष्वपि तथा स्तुतयः सन्ति, यथा ग्रावस्तुतौ—

एते वदन्ति शतवत्सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः ।

विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत ॥

एते ग्रावाणः शिलाखण्डाः सोमपेषणपाषाणाः सोमं पिबन्तः शतजना इव सहस्रजना इव हरितैर्मुखैः सोमस्य हरितवर्णत्वात् तस्य हरितवर्णसोमरसांशास्तेषु संलग्यन्ते तेन तेषां पेषणमुखानि हरितानि जायन्ते तैर्हरितैरासभिरास्यैर्मुखैरभिक्रन्दन्ति सोमस्य पातृनाह्वयन्ति—इव दृश्यन्ते । ग्रावाणस्तस्मिन् सोमपेषणकार्ये विष्ट्वी विष्ट्वा प्रविश्य "स्नात्व्यादयश्च" (अष्टा० ७ । १ । ४९) स्नात्वी, पीत्वी, विष्ट्वी । सुकृतः कार्यस्य सुष्ठुकर्तारः सुकृत्यया सुक्रियया हेतोरपि पूर्वे सोमस्य हविषोऽद्यमदनीयमाशताश्नन्ति भक्षयन्ति । अत्र जडानामचेतनानां ग्रावणां मुखानि प्रतिपादितानि ॥

यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव ।

"सुखं रथं युयुजे सिन्धुरश्विनम्" (ऋ० १० । ७५ । ९)

इति नदीस्तुतिः ।

भा०—यथा चैतदुक्तं पौरुषविधिकैर्द्रव्यसंयोगैः स्तूयन्ते—इत्येतदपि तादृशमेव —यदचेतनेषु खल्वपि तथा द्रव्यसंयोगैः स्तुतयो दृश्यते । यथा—

सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।

महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥

सिन्धुर्नदीविशेषो नदः सुखं सुखप्रदमश्विनमश्ववन्तं रथं युनक्ति तेन रथेन वाजमन्नं सनिषत् प्रयच्छति—आजौ—अन्नप्रदानस्पर्द्धायाम् । अस्यादब्धस्यादम्यस्यानवरोधनीयस्य स्वाधारयशस्विनो विरप्शिनो महतो महान् महिमा पनस्यते स्तूयते । रथादिद्रव्यैर्नदीस्तुतिः ॥

यथो एतत्पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव ।

"होतुश्चित्पूर्वे हविरद्यमाशत" ( ऋ १० । ९४ । २ )

इति ग्रावस्तुतिरेव ।

भा०—यथा चैतदुक्तं पौरुषविधिकैः कर्मभिः—इत्येतदप्यचेतनेषु कर्मभिः स्तुतयः सन्ति । व्याख्यातो मन्त्रोऽङ्गसंयोगेऽस्मिन्नेव खण्डे, अत्र ग्रावभिरद्यम्—अदनीयस्याशनं भक्षणं वर्ण्यते । इति हविरशनेन ग्रावस्तुतिः ॥

अपि वोभयविधाः स्युः ।

भा०—यद्वा देवताः–उभयविधाः–उभयप्रकाराः पुरुषविधाश्चापुरुषविधाश्च । अङ्गद्रव्यसंयोगकर्माणि खलूभयत्र घटमानानि सन्ति न तैर्निश्चितो भवति कश्चिदेकः पक्षः ॥

अपि वा पुरुषविधानामेव * सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्य । एष चाख्यानसमयः ॥ ७ ॥

भा०—अथवा पुरुषविधा देवाः सन्ति येऽङ्गद्रव्यसंयोगकर्मभिर्नित्यसम्बद्धाः साधिताः । ये चान्ये ग्रावप्रभृतयस्तेऽङ्गद्रव्यसंयोगकर्मभिर्न नित्यसम्बद्धाः स्वतन्त्राः सन्ति किन्तु सतां पुरुषविधानामेवान्ये येऽपुरुषविधाः पुरुषविधा प्रतीयन्ते ते कर्मात्मानः क्रियमाणरूपा अनुष्ठीयमानरूपाः कर्मकारकाः सन्ति, कर्तारस्तु पुरुषविधा ये खलूच्यन्ते ते हि सन्ति तेषामधीने ह्येषां तथाभूतालङ्कारिकी पुरुषविधताऽस्ति हि तेषां स्तुतिश्च । तस्मात्ते तेषामधीने पुरुषविधास्तेऽपि यथा यज्ञो यजमानस्याधीने वर्तमानः स्तुत्यो भवति । यजमानः पुरुषस्तदधीने यज्ञस्य पुरुषविधत्वं कल्पयितुं युज्यते । पुनश्च निरुक्तस्य प्रारम्भे ह्याचार्येण यास्केनोक्तमासीद् यत् "मनुष्यवद्देवताभिधानम्" मनुष्या अधिक्रियन्ते यस्मिन् तथाभूतं देवतावर्णनं देवतागुणवर्णनं देवतानामङ्गद्रव्यसंयोगकर्मवर्णनमस्ति, तत्र देवतावर्णने–इन्द्राग्निशब्दैः–राजादयो मनुष्याः पुरुषा अपि लक्ष्यन्ते, तस्मात्–इन्द्रादिभिर्देवैः पुरुषविधैर्भवितव्यमेव । अतो देवाः पुरुषविधाः सन्ति । एष चान्तिमः–आख्यानसमयः, न हि प्रत्याख्यानसमयः, प्रत्याख्यानं निराकरणं खण्डनम्, आख्यानं मण्डनमनिराकरणीयम् । तस्याख्यानस्य मण्डनस्य समयः सिद्धान्तः । यद्वा–आख्यानं मण्डनमेव समयः–आख्यानसमयः–मण्डनसिद्धान्तः, समयः समयनं सङ्गमनं साङ्गत्यं सामञ्जस्यम् । आख्यानं व्याख्यानं वा प्रश्नस्योत्तरे प्रयुज्यते, यथा 'अनन्त्यस्यापि प्रश्नाख्यानयोः" ( अष्टा० ८ । २ । १०५ ) "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम्...." ( वेदान्त० १ । ४ । १८ ) ॥

इति सप्तमाध्याये द्वितीयः पादः ।

---

* 'वा अपुरुषविधानामेव' इति क्वचित् ।

## तृतीयः पादः

तिस्र एव देवता इत्युक्तं पुरस्तात्। तासां भक्तिसाहचर्यं व्याख्यास्यामः।

भा—तिस्रो हि देवताः सन्तीत्युक्तं पूर्वम् (निरु० अ० ७ पा० २ ख० ५) तासां देवतानां भक्तिसाहचर्यम्, अत्र 'भक्तिः' शब्दो न स्त्रीलिङ्गः क्तिन्प्रत्ययान्तः, अपि तु सामान्यलिङ्गः क्तिच्प्रत्ययान्तः कर्तरि, भजते यः स भक्तिः, भक्तिश्च साहचर्यं सहयोगित्वं च भक्तिसाहचर्यं * व्याख्यास्यामः।

अथैतान्यग्निभक्तीन्ययं लोकः प्रातः सवनं वसन्तो गायत्री त्रिवृत् स्तोमो रथन्तरं साम ये च देवगणाः समाम्नाताः प्रथमे स्थानेऽग्नायी पृथिवीळेति स्त्रियः।

भा०—अथेदानीमेतानि–'अयं लोक'''प्रभृतीनि खल्वग्निभक्तीनि–अग्नेर्भक्तीनि भजमानानि–'अग्निं' भजन्ते यानि तानि सन्ति 'लोकः सवनं वसन्तः प्रभृतीनां नपुंसकानपुंसकानां नपुंसकत्वमेकशेषत्वात्। तानि खल्वग्निभक्तीनि–लोकेष्वयं लोकः–पृथिवीलोकः, सवनेषु प्रातः सवनं प्रातर्वेला, ऋतुषु वसन्तः, छन्दःसु गायत्री, स्तोमेषु त्रिवृत्, सामसु रथन्तरम्, दैवगणेषु प्रथमस्थानीया देवगणाः–ग्रावाणः प्रभृतयः, स्त्रीषु देवतासु–अग्नायी, पृथिवी, इळा। यत्रैते स्युस्तत्र–अग्निर्देवताऽनुमेयः सेव्यश्च॥

अथास्य कर्म वहनं च हविषामावहनं च देवतानां यच्च किञ्चिद् दार्ष्टिविषयिकमग्निधर्मैव तत्॥

भा—अथ खल्वस्याग्नेः कर्म हविषां वहनं वायुप्रभृतिदेवतानामावहनमानयनं यत् किञ्चिद् दृष्टिविषयसम्बद्धं भिन्नभिन्नरूपदर्शनम्, इत्यग्निकर्म। इत्यग्नेर्भक्तयः।

अथ साहचर्यं कैः सह स्तुतौ हविषि चेत्युच्यते—

अथास्य संस्तविका देवाः–इन्द्रः सोमो वरुणः पर्जन्य ऋतवः।

• भा—अस्याग्नेः संस्तविकाः–संस्तवे संस्तुतौ सम्बद्धाः सहचरा देवाः सन्ति–'इन्द्रः, सोमः, वरुण, पर्जन्यः, ऋतवः' पञ्च। तद्यथा—

---

* एकवद्भावः "अध्ययनतोऽविप्रकृष्टाख्यानाम्" (अष्टा० २।४।५)

"अग्न इन्द्रश्च दाशुषो दुरोणे··· उपयातम् ।" (ऋ० ३।२५।४)

"अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।" (ऋ० १।९३।१)

"त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।" (ऋ० ४।१।४)

"अग्नीपर्जन्यावर्वतं धियं मे अस्मिन् हवे सुहवा सुष्टुतिं नः ।" (ऋ० ६।५२।१६)

"अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ।" (ऋ० १।१५।४)

इति स्तुतौ साहचर्यमिन्द्रादीनाम् ।

अथ हविषि साहचर्यं प्रदर्शयत्याचार्यः—

आग्नावैष्णवं च हविः, न त्वृक् संस्तविकी दशतयीषु विद्यते ॥ ८ ॥

भा—अग्नेर्विष्णोश्च सम्मिलितं हविर्विद्यते, यथा—"अग्नाविष्णू सजोषसा-वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥" (मै० सं० ४ । १० । १) परन्तु संस्तविकी स्तुतिविषयिका का चिदृग् दशतयीषु—दशावयवा मण्डलानि दशतया मन्त्राः स्त्रियां दशतय्यः सप्तम्यां ऋक्षु तच्छाखासु च न विद्यते ।

तत्रैतां * विभक्तस्तुतिमृचमुदाहरन्ति—

"पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परिददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥" ( ऋ० १० । १७ । ३ )

पूषा त्वेतः प्रच्यावयतु विद्वाननष्टपशुर्भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायितादित्यः स त्वैतेभ्यः परिददत् पितृभ्य इति सांशयिकस्तृतीयः पादः । पूषा पुरस्तात्त-स्यान्वादेश इत्येकमग्निरुपरिष्टात् तस्य प्रकीर्तनेत्यपरम् । "अग्निर्देवेभ्यः सुविदत्रियेभ्यः" सुविदत्रं धनं भवति विन्द-तेर्वैकोपसर्गाद् ददातेर्वा द्व्युपसर्गात् ॥ ९ ॥

भा०—अग्नेः पूषणश्च विभक्तां पृथक् स्तुतिं तूदाहरन्ति मन्त्रेणैतेनाचार्याः "पूषा त्वेत····" हे मृत ! अनष्टपशुरनष्टदर्शनरश्मिमान् सदा प्रकाशवान् सर्वेषां भूतानां गोपायिता रक्षकः—आदित्यः सूर्यः प्र विद्वान् त्वां लक्षयन् त्वामितो

---

* 'तत्रैतां विभक्ति०' इति पाठो दुर्गभाष्ये मूले च, स न युक्तः ।

लोकाच्च्यावयतु—पृथक् करोति, पुनस्त्वामेतेभ्यः पितृभ्यः परिददत् परिददाति । अग्निश्च पूषा च पृथक् पृथक् स्तुतिभाजाविति प्रदर्शयितुं मन्त्र उदाहृतः । पूषा तु मृतमितश्च्यावयति, इति पूष्णः कार्यम् । चतुर्थे पादेऽग्नेः कार्यं सुविदत्रियेभ्यः परिदानं मृतात्मनः । इति पृथक् पृथक् । तृतीयः पादः सन्दिग्धः, यास्कः कथयति, तत्र पितृभ्यः परिदानं पूष्णः कार्यं भवेत् पूर्वोक्तस्य पूष्णोऽन्वादेशः पश्चात् कथनं भवेदित्येकं मतम् । प्रकीर्तना चर्चा स्यात् सोऽग्निरुपरिष्टात् तदग्रे—उक्तः । अग्नेः कार्यमित्यपरं मतम् । किमत्र युक्तमिति यास्केन न निर्णीतम् । यदि पूषाऽऽदित्यः, यथा यास्केनोक्तस्तदा पितृभ्यः परिदानं तथा सुविदत्रियेभ्यः परिदानं कार्यद्वयमग्नेः परमात्मन एव । परमात्मा यथाकर्म पुनर्जन्मार्थं पितृभ्यः—जन्मनो दातृभ्यः संस्कारेभ्यः समर्पयति, मुमुक्षुं जीवन्मुक्तं सुविदत्रियेभ्यो मोक्षैश्वर्यवद्भ्यो मुक्तेभ्यो मुक्तयोग्यानन्देभ्यः प्रेरयति । यदि पूषा शब्देन पृथिवी गृह्यते "पूषा पृथवी नाम" ( निघं १ । १ ) तदा—अनष्टपशुर्न तस्य पशवो ये पश्यन्ति प्रजाः पुत्रादयस्ते न नष्टा भवन्ति पृथिव्यां पुनः पुनरुत्पद्यन्ते तदा पितृभ्यः पुनर्जन्मार्थं परिददाति । अग्निः—सूर्यः सुविदत्रेभ्यो मुक्तेभ्यः समर्पयति, उक्तं हि "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" ( मुण्ड० १ । २ । ११ ) 'सुविदत्रम्' 'सु' उपसर्गाद्विद्लृधातोः, यद्वा 'सु—वि' उपसर्गद्वयात्—दाधातोः कत्रन्प्रत्ययः ( उणा० ३ । १०८ )

अथैतानीन्द्रभक्तीन्यन्तरिक्षलोको माध्यन्दिनं सवनं ग्रीष्मस्त्रिष्टुप् पञ्चदश स्तोमो बृहत् साम ये च देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियः ।

भा—अथेदानीमिन्द्रस्य भक्तीनि भजमानानि वस्तूनि दर्श्यन्ते—लोकेषु—अन्तरिक्षलोकः, यज्ञसवनेषु माध्यन्दिनं सवनम्, ऋतुषु ग्रीष्मः, छन्दःसु त्रिष्टुप्, स्तोमेषु पञ्चदश स्तोमः, सामगानेषु बृहत् साम, ये मध्यमे स्थाने देवगणाः—'मरुतः, रुद्राः, ऋभवः' इति प्रभृतयः, याश्च स्त्रियस्तत्र पठिताः—अदितिः, सरमाद्याः ॥

अथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत् ॥

भा०—अथास्येन्द्रस्य कर्म—अवश्यायस्य संसारणम्, मेघवधः, या काचिद् बलक्रिया तत्सर्वमिन्द्रस्य कृत्यम् ।

अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिर्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः ॥

भा०—अथास्येन्द्रस्य संस्तविकाः संस्तवे सहचराः सन्ति–'अग्निः, सोमः, वरुणः, पूषा, बृहस्पतिः, पर्वतः, कुत्सः, वायुः–इति नव । तद्यथा—

"इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।" (ऋ० ३।१२।९)

"यानीन्द्राग्नी चक्रथुर्वीर्याणि ।" (ऋ० १।१०८।५)

"इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु····द्वेषो धत्तम् ।"

(ऋ० ७।१०४।२)

"इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।"

(ऋ० ७।८२।१)

"इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥"

(ऋ० ६।५७।१)

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते ॥"

(ऋ० ४।४९।१)

"अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ।"

(ऋ० २।२४।१२)

"इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।"

(ऋ० ३।५३।१)

"इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।"

(ऋ० ५।३१।९)

"इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।"

(ऋ० ७।९९।५)

"इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।" (ऋ० १।२।४)

अथापि मित्रो वरुणेन संस्तूयते । पूष्णा रुद्रेण च सोमः ।
अग्निना च पूषा । वातेन च पर्जन्यः ॥ १० ॥

भा०—अथान्यच्च प्रकृताभ्यस्तिसृभ्यो देवताभ्योऽन्या देवताऽपि मिश्रया देवतया सह संस्तवभागिनी भवतीति तत्प्रसङ्गादुच्यते, यथा मित्रो वरुणेन, सोमः पूष्णा रुद्रेण च, पूषाऽग्निना, पर्जन्यो वातेन । उदाहरणानि—

"आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।" (ऋ० ३।६२।१६)

"सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।"

(ऋ० २।४०।१)

"सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।"

(ऋ० ६।७४।३)

"पूषा त्वेतश्च्यावयतु····स त्वैतेभ्यः परिददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः" (ऋ० १०।१७।३) इति पूष्णोऽग्नेः सन्दिग्धस्तुतिः । शुद्धैका स्तुतिर्न लभ्यते ।

"वातापर्जन्या महिषस्य तन्यतोः" (ऋ० १०।६६।१०)

अथैतान्यादित्यभक्तीनि—असौ लोकस्तृतीयसवनं वर्षा जगती सप्तदश स्तोमो वैरूपं साम ये च देवगणा समाम्नाता उत्तमे स्थाने याश्च स्त्रियः ॥

भा०—अथेदानीमादित्यभक्तीनि वस्तूनि यानि तमादित्यं भजन्ते तान्युच्यन्ते, तानि च—लोकेषु द्यौर्लोकः, यज्ञसवनेषु तृतीयसवनम्, ऋतुषु वर्षाः, छन्दःसु जगती, स्तोमेषु सप्तदशः, सामगानेषु वैरूपम्, देवगणेषु ये चोत्तमे स्थाने देवगणाः पठिताः—आदित्याः सप्तर्षयः—इत्येवंविधाः स्त्रीषु चोत्तमस्थानकाः स्त्रियः—उषाः, सूर्याः, वृषाकपायी—इत्याद्याः ॥

अथास्य कर्म रसादानं रश्मिभिश्च रसधारणं* यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत् ॥

भा०—अथास्यादित्यस्य कर्म पृथिवीतो रसग्रहणं जलाशयानां जलस्य—ओषधिवनस्पतीनां च रसस्य ग्रहणं रश्मिभिस्तद्धारणं चाकाशे, यत्किञ्चित् प्रवह्लितं प्रभुत्वमीशितृत्वं नियन्तृत्वं कर्म तदादित्यस्यैव, "बहुप्राधान्ये" (भ्वादि०) उक्तं हि वेदे तस्य नियन्तृत्वम् "सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत्" ( ऋ० १० । १४९ । १ ) ॥

चन्द्रमसा वायुना संवत्सरेणेति संस्तवः ।

भा०—चन्द्रमसा वायुना संवत्सरेण च सह संस्तुतिरस्योपलभ्यते । यथा—

"पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥"

( ऋ० १० । ८५ । १८ ) सोमार्कौ देवते ।

"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥"

( यजु० ३४ । ५५ )

---

* 'रसाधारणम्' क्वचित् ।

जागृतो—अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यौ" ( निरु० १२।३७ )

> सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
> त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥"
> ( ऋ० १ । १६४ । २ )

"एकोऽश्वो वहति सप्तनामाऽऽदित्यः, त्रिनाभिचक्रं त्र्यृतुः संवत्सरः"
( निरु० ४ । २७ ) ।

त्रित्वसंख्यातोऽतिरिक्तानां भक्तिशेषत्वमुच्यते—

> एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषमनुकल्पयीत । शरदनुष्टुबेकविंशस्तोमो वैराजं सामेति पृथिव्यायतनानि । हेमन्तः पङ्क्तिस्त्रिणवस्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि । शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशस्तोमो रैवतं सामेति द्युभक्तीनि ॥ ११ ॥

भा०—एतेषु स्थानमाश्रित्योक्तेषु क्रमेषु त्रिकादतिरिक्तस्य—ऋतुच्छन्दःस्तोमसाम्नां भक्तिशेषमनुक्रमेण कल्पयेत् । तद्यथा—'शरदृतुः, अनुष्टुप् छन्दः, एकविंशस्तोमः, वैराजं साम' इति पृथिवीस्थानानि । 'हेमन्त ऋतुः, पंक्तिश्छन्दः, त्रिणवस्तोमः, शाक्वरं साम' इति त्वन्तरिक्षस्थानानि । 'शिशिर ऋतुः, अतिच्छन्दाश्छन्दः, त्रयस्त्रिंशस्तोमः, रैवतं साम' इति दिवं भजन्ते—आश्रयन्ति यानि तानि द्युस्थानानि ।

मन्त्राणां देवताप्रसङ्गं विविच्याधुना मन्त्राणां तत्सम्बद्धानां च स्वरूपं नैर्वचनिकमुच्यते—

> मन्त्रा मननात् । छन्दांसि छादनात् । 'स्तोमः स्तवनात् *, यजुर्यजतेः साम सम्मितमृचास्यतेर्वर्चा सममेन इति नैदानाः ॥

भा०—मन्त्राः—मननादुच्यन्ते ते मननीया विचारणीया भवन्ति । 'मननात्' मन्त्राः, सद्यो नावगम्यन्ते किन्तु मननं करणीयं भवति सार्थं सधातुनिर्देशं सहेतुकं प्रदर्शनं मननम् "मन ज्ञाने" (दिवा०) "मन अवबोधने" (तनादि०) ततः "सर्वधातुभ्यष्ट्रन्" ( उणा० ४ । १५९ ) । 'छन्दांसि' छादनात्—छादनमाच्छादनमावृतीकरणम् "देवा वै मृत्योर्बिभ्यतस्त्रयीं प्राविशंस्ते छन्दोभिरच्छाद-

* विश्वेश्वरानन्दवैदिकशोधसंस्थाने होशियारपुरस्थे १७५ इति संख्याकायां हस्तप्रतिकायां (१६४६शके प्रतिलिपौ) पाठो विद्यते ।

यन् यदेभिरच्छादयँस्तच्छन्दसां छन्दस्त्वम्" ( छान्दोग्यो० १ । १ । ४ । २ ) मन्त्रगतपदानि च छादयन्ति रक्षन्ति, एवं छादनात्—इति तु हेतुप्रदर्शनं सार्थं सधातुनिर्देशं च । "छदि संवरणे" ( चुरादि० ) इति धातोः—असुन्—छन्दस् । "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) 'स्तोमः स्तवनात्' 'स्तूयते येन स स्तोमः स्तुतिसाधनं मन्त्रक्रमः । 'यजुर्यजतेः' इति धातुनिर्देशः, 'यजनात्' नोक्तं वक्तव्यमासीत्—यथा मन्त्रा मननात्, छन्दांसि छादनात्, स्तोमः स्तवनात् तथैव यजुर्यजनात्—इति । 'यज्ञो यजनात्' इति तु शोभनः परन्तु यजुर्यजतेः सम्यक्, यजुरत्र यजनमन्त्रसमूहस्य संज्ञा ग्रन्थरूपा, तस्माद् यजधातोर्निर्देशः, लक्ष्यं तु यजनात् । "यज देवपूजासङ्गतिकरणदानेषु" ( भ्वादि० ) ततः "अर्त्तिपृवपियजि····भ्यो नित्—उसिः" ( उणा० २ । ११८ ) उसिः प्रत्ययः । यजुस्—यजुः । 'साम सम्मितम्—ऋचा' ऋचा—ऋङ्मन्त्रेण सह सम्मितं सम्यङ्मितं तुल्यतां गतं साम । 'सम्' इत्यस्य 'स' गृहीतः, तत्पूर्वकात् 'मा माने' धातोः कनिन् 'स—मन्' 'ऋचा' इत्यस्य 'आ' गृहीत्वा—उपसर्गधात्वोर्मध्ये क्षिप्तः, 'स—आ—मन्' इति सामन्—साम । यद्वा—अस्यतेः स्यतेः—साम मन्त्रः—ऋचि—अस्यते क्षिप्यते तदा सामगानं भवति "ऋच्यध्यूढं साम गीयते" ( छान्दो० १ । ६ । २ ) अथवा स्यतेः "षो अन्तकर्मणि" ( दिवादि० ) अन्तकर्म—कर्मणामन्तः—उपासना ब्रह्मसङ्गतिः—साम, ततो मनिन् प्रत्ययः सामन् । "सातिभ्यां मनिन्मनिणौ" ( उणा० ४ । १५३ ) अथवा—ऋचा समं मेने साम, स्तुत्या समं मेने यत् समे भवं साम—इति मेने साम्ना—उपासनया । "तेजोऽसि तेजो मयि धेहि" ( यजु० १९ । ९ ) इति नैदानाः—हेतुवादिनः पारिभाषिकशब्दानां लक्षणानुविधायिनः—आचार्याः—मन्यन्ते निदानं लक्षणं फलमाश्रित्य पारिभाषिकशब्दानां व्यवस्थापका नैदानाः ।

छन्दोविभागाः—उच्यन्ते—

गायत्री गायतेः स्तुतिकर्मणः । त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम् ।

भा०—गायत्री छन्दः 'गायतेः स्तुतिकर्मणः' "गायति अर्चतिकर्मा" (निघं० ३।१४) ततः "अमिनक्षियजिवधिपतिभ्योऽत्रन्" (उणा० ३।१०५) धातोर्बाहुलकात्—अत्रन् प्रत्ययः, स च ङिद्धर्मवान् । गायत्री स्त्रियाम् । 'त्रिगमना वा विपरीता' त्रिगमना त्रिभिः पादैर्गमनं प्रापणं यस्याः सा त्रिगमना, त्रिगाया गायो गमनं त्रिगाया विपरीता गायत्रि—गायत्री, अथ गायतो मुखादुदपतत्—

वेदज्ञानं गायत उपदिशतः परमेश्वरस्य मुखात् सर्वप्रथमम् "अग्निमीळे पुरोहितम्०' इति–उदगच्छत्–तस्माद् गायत्री–इत्यालङ्कारिकं कथनमिति ब्राह्मणम् ।

उष्णिगुत्स्नाता भवति। स्निह्यतेर्वा स्यात् कान्तिकर्मणः। उष्णीषिणी वेत्यौपमिकम् *। उष्णीषं स्नायतेः।

भा०—उष्णिक्–गायत्री, उत्स्नाता चतुर्भिरक्षरैरुद्वेष्टिता भवति "ष्णै वेष्टने" ( भ्वादि० ) "उष्णिग्गायत्र्यौ जागतश्च" ( पिङ्गल० ४ । १८ ) "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ( अष्टा० ३ । २ । ५९ ) इति निपात्यते । 'उद्–ष्णै–क्विन्'–उष्णिज्–उष्णिक् । यद्वा स्निहधातोः कान्तिकर्मणः "ष्णिह प्रीतौ–कान्तौ" ( दिवादि० ) प्रियं ह्येतच्छन्दः, 'उद्–ष्णिह् क्विन्' उपसर्गान्तलोपः ( अष्टा० ३ । २ । ५९ ) निपातनम् । यद्वा–उष्णिक्–उष्णीषिणी शिरोवेष्टनवती गायत्री–उष्णिक्–इत्युपमायाम् । गायत्रीतश्चत्वार्यक्षराणि शिरोवेष्टनवत् तिष्ठन्ति–इत्यतः । उष्णीषं स्नायतेः "ष्णै वेष्टने" ( भ्वादि० ) णिजन्तात्–ईषन् प्रत्यय औणादिकः । "कृतॄभ्यामीषन्" ( उणा० ४ । २६ ) इति धातोर्बाहुलकादीषन् प्रत्ययः स च कित् ॥

ककुप् ककुभिनी भवति। ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा।

भा०—ककुप्–ककुभिनी † तस्या मध्यमपादः ककुभ्–इव भवति द्वादशाक्षरीयः, पार्श्वयोः पादयोरष्टावष्टौ । यथा वृषभस्योन्नतस्कन्धभागः 'ककुभ्' इत्युच्यते तद्वत् भवति । "कीकसाः ककुभः····उभयत्र पर्शवो बद्धाः कीकसासु च जत्रुषु च" ( शत० ८ । ६ । २ । १६ ) उत्थितानि स्कन्धास्थीनि कीकसाः । 'ककुप्–कुब्ज' इत्येतौ शब्दौ कुजधातोः कौटिल्यार्थस्य, उब्ज न्यग्भावार्थस्य स्तः, पृषोदरादित्वात्–शब्दसिद्धिः । कुज एकस्मिन् पक्षे श्लुवत् ककुज् जकारस्य भकारः ककुभ् , द्वितीयपक्षे बकारोपजनो मध्ये कुब्जः, उब्जधातोः, सर्वस्य स्थाने ककुभ् भावः, द्वितीये पक्षे ककारोपजन आदौ । कुब्जः, ककुभ् पक्षे क्विप् प्रत्ययः, कुब्जः–घञ्प्रत्ययः ।

---

* 'उष्णीषणी वेत्यौपमिकम्' इति क्वचित् ।

† 'ककुभिमी' इत्यपपाठः स्कन्दस्वामिभाष्ये, तन्न सम्यक्, यतो हि 'ककुभ' इत्यकारान्तं मत्वा यास्केन 'इनिप्रत्ययान्तः' प्रयुक्तः, अस्ति च–अकारान्तोऽपि 'ककुभ' शब्दोऽस्मिन्नेवार्थे, यथा "ककुभं रथं वृषभस्य रोचते बृहदिति ।" (शत० ११ । ५ । ६ । १०) ।

अनुष्टुबनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ।

भा०—अनुष्टुभ्–अनुष्टोभनात् पश्चात् स्तोभनात् स्तवनात्, यत् त्रिपदां चतुर्विंशत्यक्षरां सतीं गायत्रीमेवाष्टाक्षरयुक्तेन चतुर्थेन पादेनानुष्टोभति–अन्वर्चति–अनुष्टौति–अनुभूषयतीत्यर्थः "स्तोभति–अर्चतिकर्मा" ( निघं० ३ । १ ) तथार्थे प्रयोगश्च वेदे "स्तोमासस्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः" ( ऋ० ५।८४।२ ) 'अभिष्टुवन्ति' ( सायणः ) "इन्द्राय मद्मने सुतं परिष्टोभन्तु नो गिरः" ( ऋ० ८ । ९२ । १९ ) "परितः स्तुवन्तः स्तोभति स्तुतिकर्मा" ( सायणः ) 'अनुष्टुभ्' इति 'अनु' उपसर्गपूर्वात् स्तुभधातोः क्विप्प्रत्यये प्रयोगः ।

बृहती परिबर्हणात् । पंक्तिः पञ्चपदा ।

भा०—बृहती छन्दः परिबर्हणात्–परिवर्धनात् "बृह वृद्धौ" ( भ्वादि० ) ततः 'अतिः' प्रत्ययः, अतिप्रत्ययान्तो निपात्यते "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" ( उणा० २ । ८५ ) बृहत् ततो ङीष् प्रत्ययो गौरादित्वात् "षिद्गौरादिभ्य" ( अष्टा० ४ । १ । ४१ ) न तु ङीप् । प्रतिपादमेकाक्षरपरिवर्धनात् षट्त्रिंशदक्षरा बृहती । पङ्क्तिः पञ्चपदा–अष्टाक्षरयुक्तैः पञ्चभिः पादैः पंक्तिर्भवति । पञ्च पादाः परिमाणमस्याः सा पंक्तिः "पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्" ( अष्टा० ५ । १ । ५८ ) इति निपात्यते 'पञ्च' शब्दात् तिप्रत्यये टिलोपः–पक्तिः । अथवा "पचि विस्तारे" ( चुरादि० ) ततः "स्त्रियां क्तिन्" ( अष्टा० ३ । ३ । ९४ ) चतुर्भ्यः पादेभ्योऽग्रे गता विस्तृता पञ्चभिः पादैः पंक्तिश्छन्दःसंज्ञा ।

त्रिष्टुप् स्तोभत्युत्तरपदा । का तु त्रिता स्यात् । तीर्णतमं छन्दः । त्रिवृद् वज्रस्तस्य स्तोभतीति वा * । यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते ॥ १२ ॥

भा०—स्तोभतिः—स्तुभधातोः प्रयोगः–स्तुप् "स्तोभति–अर्चतिकर्मा" ( निघं० २ । १ ) क्विप् प्रत्ययान्तः । तदुत्तरपदं यस्याः सा स्तोभत्युत्तरपदा त्रिष्टुभ् त्रिष्टुप् । का हि त्रिता स्यात्–त्रित्वं गता का यस्याः–'त्रि' तीर्णतमं छन्दः–यच्छन्दस्तीर्णं तममग्रे गतं प्रवृद्धं भवति "तॄ प्लवनसन्तरणयोः" (भ्वादि०) ततः 'ड्रिः' प्रत्ययः "तरतेर्ड्रिः" (उणा० ५ । ६६) चतुश्चत्वारिंशदक्षरवत्तया तीर्णतमा त्रिता, त्रिं तीर्णतमं स्तोभति–अक्षरपरिमाणं स्तौति वर्णयति–

* 'स्तोभनी, स्तोभवतीति' क्वचित् ।

इति त्रिष्टुभ्—त्रिष्टुप्। यद्वा 'त्रि' शब्देन 'त्रिवृत्' वज्रो लक्ष्यते यतो हि वज्रस्य त्रयः कोणास्तीक्ष्णा भवन्ति प्रहारायेति लोहमयस्य शस्त्रस्य वैद्युतास्त्रस्य च व्यावरणत्वात् स त्रिवृत् तं स्तोभति स्तौति वर्णयति—इति त्रिष्टुप्, यत् त्रिः—त्रिषु वर्तते स त्रिवृत् त्रिष्टुभस्त्रिष्टुप्त्वमस्तीति ब्राह्मणे खलूक्तम्।

जगती गततमं छन्दः। जलचरगतिर्वा जल्गल्यमानोऽसृजदिति च ब्राह्मणम्।

भा०—जगती गततमं छन्दः—अग्रे गततमं न ततोऽपि किमपि छन्दः, अष्टचत्वारिंशदक्षरप्रमितं छन्दो जगतीछन्दः। "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (उणा० २। ८५) स्त्रियां जगती, शतृवत्त्वान्ङीप्। यद्वा जलचरगतिः—जलं यथा चरति गच्छति तद्वत् तरङ्गगतिः—तरङ्गैः प्रस्तारैः प्रवहति—इव गच्छति। अथवा जल्गल्यमानः—"गल स्रवणे" (चुरादि०) यङि प्रयोग आर्षः। पुनः पुनः स्राव्यमाणः—छन्दांसि प्रजापतिरसृजत्—विशालभावेनाविरभावयत्—इति ब्राह्मणवादः।

विराड् विराजनाद्वा, विराधनाद्वा, विप्रापणाद्वा विराजनात् सम्पूर्णाक्षरा, विराधनादूनाक्षरा, विप्रापणादधिकाक्षरा॥

भा—विराट् सर्वान्ते विराडुच्यते तन्नाम्नः सौम्यत्वात् प्रतिपादे दशाक्षराणि भवन्ति दशसंख्यायाश्च प्राधान्यात्। विराट् खलु विराजनात् 'वि' उपसर्गात्—"राजृ दीप्तौ" ततः क्विप् विराज्—विराट्। यद्वा विराधनात् 'वि' पूर्वात् "राध संसिद्धौ" ततोऽपि क्विप्—विराध् धकारस्य जकारः, अथवा विप्रापणात् 'वि, प्र' पूर्वात् "आप्लृ व्याप्तौ" ततोऽपि क्विप्—विप्राप् 'प्राप्' इत्यस्य 'राज्' भावः। कथमेवं यावता प्रत्यक्षवृत्त्या विराट् विराजनात्—इति सिध्यति, पुनः—विराधनात् ततोऽप्यधिकपरोक्षवृत्त्या विप्रापणात् सिद्धिः क्रियते। उच्यते—विराजनाद् विराड्—इति तु सम्पूर्णाक्षरा यदा भवेत्—चत्वारिंशदक्षरा, विराजते हि तदा। विराधनादुच्यते यदा न्यूनाक्षरा विगता न्यूनीभूता राधनात्। अथ विप्रापणात्—विशिष्टाक्षरत्वादधिकाक्षरत्वात्।

पिपीलिकामध्येत्यौपमिकम्। पिपीलिका पेलतेर्गतिकर्मणः।

भा०—पिपीलिकामध्या भवत्युष्णिक् पिपीलिका यथा मध्येऽल्पाकारा तथा मध्येऽल्पाक्षरा पिपीलिका—उपमया भवति। यथा ककुभ्—मध्या भवति मध्यतोऽधिकाक्षरा। पिपीलिका पेलतेः "पेलृ गतौ" (भ्वादि) ततः 'इकन्' औणादिकः श्लुवत् कार्यम्, एकारस्य—ईदादेशश्च। स्त्रियां पिपीलिका। सा गच्छति हि नित्यम्।

इतीमा देवता अनुक्रान्ताः । सूक्तभाजो हविर्भाजः । ऋग्भाजश्च भूयिष्ठाः ।

भा०इति—इत्थमुक्तप्रकारेण मुख्यदेवता भक्तिदेवताश्चानुक्रान्ता वर्णितास्ताः खलु काश्चित् सूक्ताभाजो याः सूक्तं सूक्ते सूक्तानि वा—एकानेकसूक्तानि भजन्ते ताः सूक्तभाजः, काश्चिन्न सूक्तभाजः किन्तु हविर्भाजो हविरेव भजन्ते न सूक्तार्थं लक्ष्यं तत्र, काश्चन चोभयभाजः सूक्तभाजश्च हविर्भाजश्च । वक्ष्यते यास्केन दशमाध्याये वायुमारभ्य 'इन्दुः' इति पर्यन्तम् "इतीमानि सप्तविंशतिदेवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि । तेषामेतान्यहविर्भाञ्जि वेनोऽसुनीतिः, ऋत इन्दुः ।" ( निरु० अ० १०, पा० ४, खं० ४३ ) 'वेनः' असुनीतिः, ऋतः, इन्दुः' एतानि देवतानामानि सूक्तभाञ्जि, उक्तेषु देवतानामसु, अन्यान्युभयविधानि । ऋग्भाजश्चापि या एकमृचमर्द्धमृचमृक्पादमात्रमेव वा या भजन्ते न सूक्तं ता ऋग्भाजो भूयिष्ठा अतिशयेन बह्व्यः सन्ति, 'भूयिष्ठाः' शब्देनानुक्ता अपि देवता गृह्यन्ते परमेष्ठिग्रहनक्षत्रसर्पतद्विषनाशनधनाक्षदानप्रशंसालाङ्गलाद्याः । एकर्चा देवता यथा आप्रीसूक्ते ( ऋ० १० । ११० ) ( निरु० अ० ८ । पा० २-३ । खं० ४–२२ ) इध्माद्याः ।

"यत्रा॑ च॒क्रुर॒मृता॑ गा॒तुम॑स्मै श्ये॒नो न दीय॒न्नन्वे॑ति पाथः॑ ।
प्रति॑ वां॒ सूर॒ उदि॑ते विधेम॒ नमो॑भिर्मित्रावरुणो॒त ह॒व्यैः ॥"

( ऋ० ७ । ६३ । ५ )

इत्यस्य पूर्वार्द्धर्चस्य देवता सूर्यः, उत्तरार्द्धर्चस्य देवता मित्रावरुणौ । उक्तं च "ऋचः सौर्यो हि गीयन्त उद्वेतीत्यर्धपञ्चमाः" ( शौनकः ) 'उद्वेति सुभगो' इति सूक्तस्य ( ऋ० ७ । ६३ ) ऋचः सूर्यदेवताकाः—तासु—'अर्धपञ्चमाः' पञ्चम्यास्त्वर्धभागः सूर्यदेवताकः । पादभागिनी देवता यथा—

"नवो॑ नवो भवति॒ जाय॑मा॒नोऽह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्र॑म् ।
भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन् प्र च॒न्द्रमा॑स्तिरते दी॒र्घमायुः॑ ॥"

( ऋ० १० । ८५ । १९ )

इति चन्द्रमोदेवत्यो मन्त्रः परन्तु "अह्नां केतुरुषसामेत्यग्रम्" इति द्वितीयपादस्य—आदित्यो देवता "आदित्यदैवतो द्वितीयः पाद इत्येके" ( निरु० अ० ११ ख० ६ ) अन्यच्च—

"हृयाम्यग्निं प्रथमं स्वस्तये हृयामि मित्रावरुणाविहावसे ।
हृयामि रात्रीं जगतो निवेशनीं हृयामि देवं सवितारमूतये ॥"

( ऋ० १ । ३५ । १ )

प्रथमस्य पादस्याग्निर्देवता द्वितीयस्य मित्रावरुणौ तृतीयस्य रात्रिश्चतुर्थस्य सविता ॥

काश्चिन्निपातभाजः ।

भा०—काश्चिद् देवताः-निपातभाजः सन्ति । या निपातं स्वरूपं भजन्ते, निपातः-अकेवलो देवोऽन्यैर्देवैः सह प्रवृत्तः, तथा परतन्त्रः, परतन्त्रोऽपि द्विविधः-गौणः सहचरः, औपमिकश्च । भेदद्वयेऽपि त्रयो भेदा निपातदेवतानाम् । अकेवला सा देवता यस्या देवतायाः स्वतन्त्रा काचिदृङ् न स्यात् सैवैकाकिनी देवता न स्यात् किन्त्वन्याभिर्देवताभिः सह प्रयुक्ता भवेत्, तद्यथा—

"सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि ।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥"

( ऋ० १० । १६७ । ३ )

अस्मिन् मन्त्रे सोमप्रभृतयः सोममारभ्य धातारं यावत् सन्ति ता ईदृश्यो देवताः खलु यासां केवलानामृचः सन्ति यत्र ताः केवला देवताः सन्ति, किन्तु 'विधाता' देवता केवलत्वेन न क्वचिदृचि प्रयुक्ता परन्त्वस्यामृचि सोमाद्याभिर्देवताभिः सार्द्धं देवत्वभाक् तस्मात् 'विधाता' देवता निपातदेवता न हि स्वातन्त्र्येण देवतात्वं भजते । उक्तमत्र यास्केन "विधात्रा व्याख्यातः, तस्यैष निपातो भवति बहुदेवतायामृचि "सोमस्य राज्ञो····विधातः कलशाँ अभक्षयम्" ( निरु० अ० ११ पा० १ ख० १२ ) द्वितीयप्रकारे गौणः सहचरः, औपमिकश्च । तत्र गौणः सहचर—

"यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥"

( ऋ० १ । १०८ । १० )

अत्र पृथिव्यां स्थितौ-इन्द्राग्नी स्तूयेते तस्यामिन्द्राग्नी स्तूयमानौ स्तस्ताभ्यां सह पृथिवी खल्वपि स्तुता भवति स्तुत्यस्य स्थानमपि स्तुत्यं स्यादिति न्यायेन पृथिवी निपातभाग् देवता । उक्तं हि यास्केन "पृथिवी व्याख्याता तस्य एष निपातो भवत्यैन्द्राग्न्यामृचि यदिन्द्राग्नी परमस्यां पृथिव्याम्" ( निरु० अ० १२, पा० ३, खं० ३२ ) औपमिकी निपातदेवता "अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।" ( ऋ० १ । २७ । १ ) अग्निर्देवता-उपमीयतेऽश्वेव 'अश्वं

न' अश्व औपमिकी निपातदेवता, उक्तं हि यास्केन "तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्–अश्वं न त्वा वारवन्तम्" ( निरु० अ० १, पा० ६, खं० २० ) वारवत्त्वं वन्दनहेतुर्मतः। अन्यत्र 'अश्वः' देवताऽस्ति हि "तेषामश्वः प्रथमागामी···तस्यैषा भवति–अश्वो वोढा सुखं रथम्" ( निरु० ९ । ३ ) ॥

अथोताभिधानैः संयुज्य हविश्चोदयति–इन्द्राय वृत्रघ्न इन्द्राय वृत्रतुर इन्द्रायांहोमुच इति। तान्यप्येके समामनन्ति। भूयांसि तु समाम्नाद् यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत् समामने ॥

भा०—अथापि याज्ञिको ग्रन्थोऽभिधानैर्देवतानां विशेषणनामभिः संयुज्य देवतायै हविर्विदधाति हविष्प्रदानमादिशति यथा "एकादशकपालं निर्वपेद् इन्द्राय वृत्रघ्ने····इन्द्राय वृत्रतुरे–इन्द्राय वज्रिणे" ( मै० सं० २ । २ । ११ ) "इन्द्रायांहोमुचे–एकादशकपालं निर्वपेत्····इन्द्राय त्रात्रे–एकादशकपालं निर्वपेत्" ( मै० सं० २ । २ । १० ) तानि 'वृत्रहा, वृत्रतुरः, अंहोमुक्' इन्द्रस्य विशेषणनामानि खल्वप्येके–आचार्या देवतानामसु समामनन्ति पठन्ति समाम्नात् तर्हि भूयांसि बहूनि न केवलं त्रीणि हि किन्तु केवलस्येन्द्रस्य त्राता, वज्री, अभिमातिषाट्–इत्यादीनि भविष्यन्ति पुनरन्यासां देवतानामपि तथैव भूयोभूयांसि स्युः। एकैकदेवताया वेदेषु बहूनि विशेषणनामानि सन्ति। तद्यथा—

"इन्द्रो मदाय गच्छति। वृत्रहा सोमपीतये" ( ऋ० १ । १६ । ८ )

"त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम्" (ऋ० ४।४२।८)

"भरेष्विन्द्रं सुहवं हवामहेऽहोमुचं सुकृतं दैव्यं जनम्" (ऋ० १०।६३।९)

"त्वया वयं मघवन्निन्द्र····त्वं त्राता····" (ऋ० १।१७८।५)

"त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम्" (ऋ० ६।४७।११)

"इन्द्रो वज्री हिरण्ययः" (ऋ० १।७।२)

"सहस्रवाजमभिमातिषाहं····इन्द्रं नमस्या जरितुः पनन्त"

(ऋ० १०।१०४।७)

तस्माद् यास्कः कथयति यत्तु देवतायाः संविज्ञानभूतं प्रसिद्धं नाम स्यात् प्राधान्यस्तुति–प्राधान्येन स्तुतिर्यस्य तथाभूतं प्रसिद्धं देवतानाम समामनेऽहं समाम्नातवान् ॥

अथोत कर्मभिर्ऋषिर्देवताः स्तौति 'वृत्रहा पुरन्दरः' इति। तान्यप्येके समामनन्ति। भूयांसि तु समाम्नानात्।

व्यञ्जनमात्रं तु तस्याभिधानस्य भवति। यथा—ब्राह्मणाय बुभुक्षितायौदनं देहि, स्नातायानुलेपनम्, पिपासते पानीयमिति ॥ १३ ॥

भा०—अथापि—ऋषिर्वेदो मन्त्रो वा कर्मभिः क्रियाभिर्देवताः स्तौति वृत्रहा पुरन्दर "स वृ॒त्र॒हेन्द्र॑ः कृ॒ष्णयो॑नीः पुर॒न्द॒रो दास॑री॒रैर॑यद् वि" (ऋ० २।२०।७) तथा "इन्द्रो॒...पु॒र॒न्द॒रो वृ॑त्र॒हा धृ॒ष्णुषे॑णः" (ऋ० ३।५४।१५) तानि खल्वप्येके—आचार्याः पठन्ति देवतानामसु, परन्तु पूर्ववत् तेषां समाम्नात् स्युर्भूयांसि तथाविधानि कर्मनामानि। वस्तुतस्तु पुरन्दरः प्रभृति नाम व्यञ्जनमात्रं व्यक्तित्वप्रदर्शनमात्रमेव तस्य देवतानाम्नः, यथा बुभुक्षिताय ब्राह्मणाय—ओदनं देहि 'बुभुक्षिताय' इति व्यञ्जनं व्यक्तिप्रदर्शनं कथम्भूताय ब्राह्मणाय यो बुभुक्षितः। यथा वा स्नाताय—अनुलेपनं ब्राह्मणस्य पूजाचिह्नं भूषाचिह्नं वा, पिपासते पानीयं जलं देहि, पिपासते यः पिपासुस्तस्मै—इत्यादि लक्षणप्रदर्शनमेव न तु मुख्यं प्रसिद्धं नाम ॥

इति सप्तमाध्याये तृतीयः पादः।

## चतुर्थः पादः

अथातोऽनुक्रमिष्यामः।

भा०—अथ सामान्येन देवतानां लक्षणं भक्तिप्रसङ्गं मुख्यगौणभावं चोक्त्वेदानीमतो निघण्टुक्रमेण प्रत्येकं देवतानाम खल्वत्रानुरूपं व्याख्यास्यामः। तत्र—

अग्निः ॥ १ ॥

अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात्। अग्रणीर्भवति। अग्रं यज्ञेषु प्रणीयते। अङ्गं नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायते—इति शाकपूणिः। इतादक्ताद् दग्धाद्वा नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः ॥ १४ ॥

अत्र वक्तव्यम्—

भा०—नैघण्टुककाण्डे 'गौः, ग्मा, ज्मा' इत्यादीनि निश्चितार्थकान्येकार्थान्यनेकपदान्यभासन्। नैगमकाण्डे 'जहा' प्रभृतीनि—अनवगतानि सन्दिग्धार्थान्यनेका-

र्थानि च पदान्यासन् । अत्र दैवतकाण्डे—अग्निप्रभृतीनि सन्ति पदानि देवतात्मकानि तद्वाच्याः—देवतास्तदभिरवबोध्याः । यस्या यस्या देवताया यो यो मन्त्रः स तद्देवताविषये परिभाषा विज्ञेया । ता देवताः स्थानत्रयवर्तिन्य काश्चन पृथिवी-स्थानाः, काश्चिदन्तरिक्षस्थानाः, काश्चन द्युस्थानाः सन्ति । नैघण्टुकानि नैगमानि नामानि त्वेकार्थानि यद्वाऽनेकार्थानि प्रसिद्धार्थान्यासन् । परन्तु देवतानामानि तत्तन्मन्त्रैः परिभाषात्मकैः प्रसिद्धरूपाणि भवन्ति, यास्को देवतानां परिचयाय तादृशीमृचमुदाहरति यस्यामृचि देवतायाः परिचयो भवेत् तथा च यत्र सा देवताऽनेकार्थे प्रयुक्ता सन्दिह्येत—अन्यथा तद्देवतानामृचस्तु बह्व्यः सन्ति । एवं निश्चित्य हि दैवतकाण्डमवगन्तुं शक्यं यास्कोदाहृता ऋचश्चापि साङ्गत्यमर्हन्ति । भवतु । यास्कः प्रथममग्निं देवतामुपादत्ते तस्याग्नेः पृथिवीस्थाने प्राधान्यात् । अपि त्वत्रेदमप्यवधेयं परमदेवतार्थाभिधाने प्रदर्शितैकदेशरूपस्य स्थानस्य प्रतिबन्धेन न भवितव्यं तस्य सर्वव्यापित्वात् तस्मिन् प्रदर्शिते स्थानेऽप्यस्ति हि । यथा च पूर्वस्मिन् नैगमकाण्डेऽनवगतत्वे प्रदर्शितोऽर्थोऽवगतदृष्ट्या भिन्नोऽप्यर्थः सिद्धः प्रतिपादितश्च । एवं स्थानप्रतिबन्ध एकदेशिन्याः—देवतायाः । या सर्वदेशिनी परमा देवता न तदर्थः स प्रतिबन्धः सा चापि तस्यामृचि गृह्यते तस्याः सर्व-देशित्वात् । अग्निः परमा देवता परमात्मा संसारे मोक्षे च जीवात्मनां प्रेरयिता प्रतिपादितो हि वेदे—

"अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥"

( ऋ० १ । २४ । २ )

मह्यै-अदितये महत्यै-अखण्डसुखसम्पत्तये मुक्तये, पितरं मातरं च पश्येयं संसारे ।

स च 'अग्निः' कस्मात् । यतः सः—अग्रणीर्भवति "सत्सूद्विष....नीराजा-मुपसर्गेऽपि क्विप्" ( अष्टा० ३ । २ । ६१ ) इति णीञ् धातोः 'अग्र' उपपदे क्विप् प्रत्ययः कर्तरि । अग्रे नयति सः । "अग्ने नय सुपथा" ( यजु० ४०।१६) इत्युक्तत्वात् । परमा देवता परमात्मा—उपासकमग्रं नयति तथा कश्चिद् विद्वान् नेताऽपि । भौतिकोऽग्निरपि भौतिकदेवान् वायुप्रभृतीन्—अग्रेऽग्रे नयति । "अग्नि-र्देवानामभवत् पुरोगाः" ( ऋ० १० । ११० । ११ ) "अग्निर्वै देवानां मुखम्" ( तै० ६ । १ । ६ ) "अग्निर्वै देवानां गोपाः" ( ऐ० १ । २८ ) 'अग्रं यज्ञेषु प्रणीयते' यज्ञेषु क्रियमाणेषु—अग्रं प्रणीयते—आधीयते 'अग्न्याधानरीत्या' प्रेर्यते प्रज्वाल्यते । पूर्ववत् क्विप् कर्मणि । 'अङ्गं नयति सन्नममानः' पूर्ववत् क्विप्

कर्तरि । सन्नममानो वस्तुनोऽभ्यन्तरे सन्निविशमानोऽङ्गं नयति—अङ्गीकरोति स्वभासं स्वतापं च तस्मै प्रयच्छति, अत्र कर्तरि क्विप्। अङ्गशब्दस्य 'अग्' भावः । 'अक्नोपनो भवति स्थौलाष्ठीविनं क्नोपयति न स्नेहयति' स्थूलाष्ठीवस्य पुत्रः स्थौलाष्ठीविर्मन्यते—अ-ग्निः—अक्नोपनः, 'क्नूयी उन्दने'' ( भ्वादि० ) न स्नेहयति नार्द्रयति—'अक्नूय्—इ' डित् ( डि ) । बाहुलकात् ककारस्य गकारः—अग्निः । शाकपूणिर्मन्यते त्रिभ्य आख्यातेभ्यो धातुभ्यः—इतात्, अक्तात् यद्वा दग्धात्, नीतात् खलु भवति 'अग्निः' शब्दः । एतेः—इण् धातोरकारमादत्ते 'अ' । अनक्तेः—अञ्ज धातोर्जकारस्य गकारं यद्वा दह्धातोर्हकारस्य—धग्—इत्यस्य गकारं गृहीत्वा नीः परो नयतेः । इः प्रत्ययो डित्, अग्निः । अग्निर्गतिशीलश्चलः स्वयं व्यक्तोऽन्यस्य व्यञ्जकः, दहनशीलः, नेताऽन्यस्य नायकश्चास्ति ।

तस्यैषा भवति ।

"अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ॥" ( ऋ० १ । १ । १ )

अग्निमीळेऽग्निं याचामि * । ईळिरध्येषणाकर्मा पूजाकर्मा वा । पुरोहितो व्याख्यातो यज्ञश्च, देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा, यो देवः सा देवता, होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभः, रत्नधातमं रमणीयानां धनानां दातृतमम् ॥ १५ ॥

भा०—"ईड स्तुतौ" ( अदादि० ) तस्य 'ईडे' इति प्रयोगः, यास्केनार्थः कृतः 'याचामि' कुत एषोऽर्थःकृतः, उक्तं तेन यत् 'ईडिः' ईडधातुः—अध्येषणाकर्मा पूजाकर्मा च । अध्येषणा—अधीच्छा प्रेरणा च, याच्ञा—याचनम्, पूजा स्तुतिः । पृथिवीस्थाने निबन्धनाय याचामीत्युक्तम् । सर्वस्थाने वर्तमानं देवं तु 'ईडे' पूजयामि प्रयोगः 'स्तौमि' इत्यस्य पर्यायः । पुरोहितो व्याख्यातः "पुरोहितः पुर एनं दधति" ( निरु० अ० २ । पा० ४ । खं० १२ ) "यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति" ( निरु० अ० ३ । पा० ४ । खं० १९ ) देवो दाता दीपयिता द्योतयिता द्युस्थानको वा । होता—ह्वाता यद्वा—आदाता । रत्नधातमः—रमणीयधनानां दातृतमः । "यज्ञो वै श्रेष्ठतमं कर्म" यज्ञोकहितं कर्म देवमभिलक्ष्य क्रियते तदत्र यज्ञ उच्यते । अग्निहोत्रम्—अग्निविज्ञानम्, पृथिवीस्थानकमग्निमाश्रित्य । परमाग्निविज्ञानमर्थात् परमात्मविज्ञानं च यज्ञः परमात्माग्नि-

* "याचृ याच्ञायाम्" (भ्वादि०) उभयपदी तस्मात् परस्मैपदम् ।

माश्रित्याध्यात्मयज्ञः। "ब्रह्म ह्यग्निः" ( शत० १ । ४ । २ । ११ ) "विश्व-कर्मायमग्निः" ( शत० ९ । २ । २ । २ ) "प्रजापतिरग्निः" ( शत० ६ । २ । १ । २३ ) । अस्तु ।

पृथिवीस्थानाग्निपरो मन्त्रार्थः—

यज्ञस्य—यजनकर्मार्थं यज्ञस्य खल्वग्निमीळेऽधीच्छामि प्रेरयामि वा "स्तुवे याचेऽधीच्छामि प्रेरयामि वा" ( दयानन्दः ) यतो ह्यग्निर्यज्ञस्याग्रणीरग्रं यज्ञे नीयते यजनीयमङ्गं नयति ज्वालयति न हि तेन विना यज्ञः सम्पद्यते । पुरोहितं यः पुर एनमग्निं दधाति स्वगृहेऽग्न्याधानक्रियया वा तं पुरोहितं जनं चाधीच्छामि प्रेरयामि, वा न हि पुरोहितेन विना यज्ञो भवति । देवं वरदमधीच्छामि प्रेरयामि वा यस्मै देवायेन्द्राय वायवे—इत्येवमादये यज्ञः । ऋत्विजमृतुयाजिनं ब्रह्माणमध्वर्युप्रभृतिकमृत्विजमधीच्छामि प्रेरयामि वा,ऋत्विजमन्तरेण यज्ञो न सम्पद्यते । होतारं देवानां विदुषां ह्वातारं निमन्त्रयितारं सत्कर्तारं यजमानमधीच्छामि प्रेरयामि वा, यज्ञे यजमानेनापि भवितव्यमेव यजमानमन्तरेण कुतो यज्ञः स्यात् । रत्नधातमं रमणीयानां धनानां घृतादिहव्यपदार्थानामतिशयेन धारयितारं * विविधयज्ञसाधनानामाधानं शोभायमानं यज्ञस्थलं चाधीच्छामि प्रेरयामि वा, अहं मधुच्छन्दाः—सर्वहितार्थमन्नरसादिकं कामयमानो द्रष्टा ॥

यज्ञे खलु तस्य षडभिनायका भवन्ति—अग्निः, पुरोहितः, देवः, ( यस्मै यज्ञः क्रियते—आहुतिर्वा दीयते ), ऋत्विक्, यजमानः, यज्ञस्थलं सर्वसामग्रीसम्पन्नमित्येतेऽपेक्ष्यन्ते, तद्येषां वैदिकं विधानं किमिति 'अग्निमीळे०' मन्त्र एव हि विधानम् । शिल्पविज्ञानेऽपि षडभिनायका भवन्ति पृथक् पृथग्यन्त्रावयवानां रचयिता लौहकारः, संयोक्ता, चालकः, स्वामी, संयोजनस्थानम्, अग्निशक्तिः । ते पुरोहितः, देवः, ऋत्विक्, होता—यजमानः, रत्नधातमः, अग्निः—इति वक्तुं शक्यन्ते । भवन्त्येते यज्ञेऽपेक्ष्याः परन्तु सूक्तभाग् देवता त्वग्निरेव । तदेतत्स्पष्टीकरणाय यास्केन 'तस्यैषाऽपरा भवति' इत्युक्त्वा "अग्निः पूर्वेभिर्ऋषिभिरीड्यो····" इत्येषा—ऋगुदाहृता । अग्निरत्र मन्त्रे परमात्मा परमा देवताऽप्यध्यात्मपक्षे सर्वस्थानिनीष्टा यदर्थमीडिः पूजाकर्मा । तथारूपे मन्त्रार्थः क्रियते । स चेत्थम्—

---

* "रत्नधातमं रमणीयानां धनानां दातृतमम्" इति निरुक्तपाठे 'दातृतमम्' इति वचनं लिपेःकर्तुः प्रमादकृतम् । "रत्नधातमम्—रमणीयानि पृथिव्यादीनि सुवर्णादीनि च रत्नानि दधाति धापयतीति रत्नधा अतिशयेन रत्नधातमस्तम्" (दयानन्दः)

यज्ञस्य समष्टिसृष्टिरूपस्य महिम्नः "यज्ञो वै महिमा" ( शत० ६ । ३ । १ । १८ ) "एतावानस्य महिमा" ( ऋ० १० । ९० । ३ ) यज्ञो वै भुवनज्येष्ठम्" ( कौ० २५ । १२ ) पुरोहितं पूर्वतो वर्तमानं पूर्वत एनं धातारं देवं प्रकाशकं प्रेरकं भोगापवर्गयोः सुखयोर्दातारमृत्विजमृतावृतौ यथावसरं जडजङ्गमानां स्रष्टारं होतारं जुहोति परिणमयति यस्तं यजमानं रत्नधातमं रमणीयानां पदार्थानां फलादीनां सुवर्णादीनां चन्द्रसूर्यादीनामतिशयेन स्वस्मिन् धारयितारमग्निं परमग्निं सर्वव्यापिनं ज्ञानप्रकाशस्वरूपं परमात्मानमीडे स्तौमि पूजयामि मन्ये ॥

सृष्टियज्ञस्य षड्विधोऽभिमायकः स्वयं परमात्मा स एव यजमानः, स एव पुरोहितः, स एव देवः, स एव ऋत्विक्, स एव रत्नधातमो यज्ञप्रदेशः, स एवाग्निरस्ति स एव स्तुत्यः पूजनीय उपासनीयः ॥

'अग्निमीळे' इति सूक्ते देवताग्निरेव पुरोहितादयस्तु निपातनामानि । सूक्तभाग् देवता त्वग्निरेवास्ति । तस्मात्—

तस्यैषाऽपरा भवति ।

"अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त ।

स दे॒वाँ एह व॑क्षति ॥" ( ऋ० १ । १ । २ )

अग्निर्यः पूर्वैर्ऋषिभिरीड्यो वन्दितव्योऽस्माभिश्च नवतरैः स देवानिहावहत्विति ॥ १६ ॥

भा०—तस्याग्नेर्देवतायाः खल्वन्यो मन्त्रोऽस्ति यत्र तस्य देवत्वं स्पष्टम्—

अग्निर्योऽयं यज्ञे होमयज्ञे विज्ञानयज्ञे शिल्पकार्ये खलूपयुक्तः स पूर्वैः पुरातनैः—ऋषिभिर्मन्त्रार्थद्रष्टृभिरधीतविद्यैर्विद्वद्भिर्भूतनैर्नवतरैः साम्प्रतिकैरस्माभिरध्येतृभिरपीडितव्यो वन्दितव्यः स्तुत्यः "वदि अभिवादनस्तुत्योः" ( भ्वादि० ) वैदिकशब्दानुवादः—ईड स्तुतौ स च पूर्ववत् पूजाकर्माऽध्येषणाकर्मा च । अध्येषणीयोऽभिवाञ्छनीयः प्रेरणीयश्च । स इह यजनकर्मणि देवान्—अन्यान् वायुप्रभृतीन् दिव्यभोगांश्च—आवहतु समन्तात् प्रापयतु ॥

अग्निः परमा देवता परमात्मा तत्पक्षे मन्त्रार्थः—

योऽयं ज्ञानप्रकाशस्वरूपः परमात्मा स पूर्वैः पुरातनैः—ऋषिभिर्मन्त्रद्रष्टृभिरधीतविद्यैर्विद्वद्भिस्तथा नूतनैरध्येतृभिरपीड्यः स्तोतव्य उपासनीयः, यतः स इह समष्टिरूपे यज्ञे देवान् वायुसूर्यादीन् देवान्—आवहति समन्ताद् धारयति तत्तत्कार्ये नियोजयति, तथान्तरात्मनि दिव्यान् गुणान् प्रापयति ॥

विचारः—यास्केन–अग्निर्देवतायाः परिचयार्थम् 'अग्निमीळे पुरोहितम्' इति मन्त्रः कुतो दत्तः कथं न यत्र मन्त्रेऽनायासेन स्पष्टोऽग्निर्देवता प्रतीयते, यथा "स॒मिधा॒ग्निं दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् । आस्मि॑न् ह॒व्या जु॑होतन ॥" ( यजु० ३ । १ ) उच्यते–अत्र तु स्पष्ट एवाग्निर्देवता तत्प्रदर्शने व्यर्थः प्रयासः, यत्र खलु सन्देहः स्यात् तथा चानेकार्थकश्च मन्त्रो भवेत् स एव स्पष्टीकरणीय इति लक्ष्यं यास्कस्य । यथा–अदेवतापदप्रकरणेऽनवगतसंस्काराण्यनेकार्थानि पदानि प्रदर्शितवान् तथैवात्र दैवते तथाविधान् मन्त्रानुदाहरति यत्र देवतायाः सन्देहः स्याद् यद्वा तस्या अनेकार्थता परिभाषा वा भवेत् । 'अग्निमीळे' मन्त्रे द्वितीतान्तान्यनेकानि कर्मपदानि सन्ति 'ईळे' क्रियायाः 'अग्निम्' 'पुरोहितम्' आदीनि । तस्मादुदाहृतस्तेन । तत्र–अग्निर्देवता, न पुरोहितादीनि नामानि सूक्तेऽत्रेति पोषयितुं द्वितीयं मन्त्रमुदाहरति 'तस्यैषाऽपरा भवति' इत्युक्त्वा "अग्निः पूर्वेभिः०" ( २ ) । अनेकार्थता चाप्यत्र सूक्तेऽग्निशब्दस्य । यज्ञाग्निः, विज्ञानशिल्पविषयकोऽग्निरपि, परमा देवता परमात्माऽग्निरस्ति । उक्तं च यास्केन 'ईळे' पदस्योपरि "ईळिरध्येषणाकर्मा पूजाकर्मा वा ।" सूक्तस्यान्तिमे मन्त्रे तु परमात्माऽग्निरेव सङ्गच्छते "स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व । सच॑स्वा नः स्व॒स्तये॑ ॥" ( ९ ) परन्तु सूक्तभाक् त्वग्निरेव, अग्निशब्दस्यानेकार्थतां समर्थयन् यास्कः सन्दर्भमारभते—

स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते ततो नु मध्यमः ।

"अ॒भिप्र॑वन्त॒ सम॑नेव॒ योषाः॑ कल्या॒ण्यः॑ स्मय॑मानासो अ॒ग्निम् । घृ॒तस्य॒ धाराः॑ स॒मिधो॑ नसन्त॒ ता जु॑षा॒णो ह॑र्यति जा॒तवे॑दाः ॥" ( ऋ० ४ । ५८ । ८ )

अभिनमन्त समनस इव योषाः । समनं समननाद्वा, सम्माननाद्वा । कल्याण्यः स्मयमानासो अग्निमित्यौपमिक घृतस्य धारा उदकस्य धाराः समिधो नसन्त । नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणो हर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा विहर्यतीति * ॥

भा०—स कश्चिद् वैज्ञानिको ज्योतिर्विद्याविदाध्यात्मिको विद्वान् न मन्येत 'अयं पृथिवीस्थानोऽग्निः' यः पृथिव्यां स एवाग्निरुच्यते यथा च प्रतिज्ञातम्

* 'अभिहर्यति' पाठान्तरम् ।

"अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः" इति, अपि तु—उत्तरे ज्योतिषी विद्युत्सूर्यौ ( अपि ) अग्नी उच्येते । इत्याक्षेपः पृथिवीस्थान एवाग्निर्भवतीति प्रतिज्ञाते पक्षे । भवन्ति त्रीणि ज्योतींषि देवतानामभाञ्जि, उक्तं हि यास्केन "तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः ।" एवम्—'अग्निः, इन्द्रः—विद्युत्, सूर्यः' इति त्रीणि ज्योतींषि देवताः । वेदेऽपि त्रीणि ज्योतींषि भवन्तीत्युक्तम् "त्रीणि ज्योतींषि सचते स षोडशी" ( यजु० ८ । ३६ ) ( सूर्यविद्युदग्न्याख्यानि—इयानन्दः—उव्वटमहीधरावपि ) पुनः कुतोऽग्निः पृथिवीस्थान एव यावता—उत्तरेऽन्तरिक्षद्युस्थानके ज्योतिषी विद्युत्सूर्यावप्यग्नी उच्येते, पूर्वपक्षे प्रमाणानि दीयन्ते तत्र प्रथमं मध्यमोऽग्निः "आभिप्रवन्त समनेव····" इति मन्त्रः ।

मन्त्रार्थः—

कल्याण्यः कल्याणरूपाः कल्याणकारिण्यः स्मयमाना ईषद्धसन्त्य ईषद्धसनमुखाः समना—इव योषाः समनसः—इव समानमनस्काः, यद्वा समननाः सम्—अननाः सम्यक्—अननं प्राणनं यासां ताः सम्यग्जीवनाः समाचारजीवनाः, अथवा सम्यगादरभाववत्यः स्त्रिय इवाग्निमभिप्रवन्ताभिनमन्त—आभिमुख्येन नम्रीभवन्ति । कास्ता उच्यन्ते घृतस्य—उदकस्य "घृतमुदकनाम" ( निघं० १ । १२ ) मेघोदकस्य धाराः समिधः सत्यः—नसन्त तं प्राप्नुवन्ति, जातवेदाः—जातो हि वेद्यते ज्ञायते नाजातो विद्युद्रूपोऽग्निस्ताः—मेघोदकधाराः प्रीयमाणो हर्यति—विवाञ्छति—अभिकामयते ।

निरुक्त्यः—'अभिप्रवन्त' अभिपूर्वकः "प्रुङ् गतौ" (भ्वादि०) धातुः—अत्र नमनार्थे निम्नार्थे वर्तते "दक्षिप्रवणा भूमिर्दक्षिणत आपो वहन्ति" ( गोप० पू० ३ । १ ) लङि प्रथमपुरुषस्य बहुवचनम्, अडभावः "बहुलं छन्दस्यमाङ्—योगेऽपि" (अष्टा० ६ । ४ । ७५ ) 'समनेव' समना—इव, समानस्य स आदेशः, मनस्शब्देन समासो बहुव्रीहिसमासे समानं मनो यासां ताः, समनस् डा, असः स्थाने "सुपां सुलुक्पूर्वसवर्णाच्छेयाडा····" ( अष्टा० ७ । १ । ३९ ) सम्—अन प्राणने सम्यक् प्राणवत्यः । डा पूर्ववत् । 'नसन्त' इति नसधातुर्गतौ "नसते गतिकर्मा" ( निघं० २ । १४ ) गतेस्त्रयोऽर्थाः—ज्ञानं, गमनं, प्राप्तिश्च, प्राप्त्यर्थेऽत्र, यद्वा गमनार्थे यास्कस्य विधानसामर्थ्यात् । वेदे नसि नसधातुर्बहुधा नमनार्थे प्रयुज्यते "नि ते नंसै पीप्यानेव योषा" ( ऋ० ३ । ३३ । १०—निनमाम, निरु० अ० २ । पा० ७ । खं० २७ ) "कुविन्नंसन्ते मरुतः पुनर्नः" ( ऋ० ७ । ५८ । ५ ) नमन्ताम्—इति सायणः । "हर्य गतिकान्त्योः"

( भ्वादि० ) अत्र कान्त्यर्थो गृह्यते तथा "हर्यति कान्तिकर्मा" (निघं० २ । ६) एवमत्र 'अग्निः–विद्युत् ।' अथ 'अग्निः–आदित्यः' उच्यते—

"समुद्रादूर्मिर्मधुमाँ उदारत्" ( ऋ० ४ । ५८ । १ ) इत्यादित्यमुक्तं मन्यन्ते । "समुद्राद्ध्येषोऽद्भ्य उदेति" ( कौ० २५ । १ ) इति च ब्राह्मणम् ॥

'समुद्रादूर्मि०' इति मन्त्रे–आदित्यमुक्तं मन्यतेऽग्निम् । मन्त्रश्च—

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥

समुद्रादन्तरिक्षात् "समुद्रोऽन्तरिक्षनाम" ( निघ० १ । ३ ) ऊर्मिस्तस्यान्तरिक्षस्याच्छादकः प्रकाशेनान्तरिक्षान्धकारस्य नाशकः–आदित्यः "ऊर्मिरूर्णोतेः" ( निरु० ५ । २३ ) मधुमान् मधु रसोऽस्यास्तीति मधुमान् "रसो वा एष ओषधिवनस्पतिषु यन्मधु" ( ऐ० ८ । २० ) ओषधिवनस्पतिषु वर्तमानो रसो मधु यस्यास्ति स तेषां मधु रसमाकर्षति तस्मात् स मधुमान् सूर्यः–उदारत्–उदैत्–उदेति, यः खलु–अंशुना चन्द्रमसा सह युक्तोऽमृतत्वमोषधिवनस्पतिषु खल्वमृतत्वं विशिष्टगुणरसभावं समानट् सम्प्रापयत् सम्प्रापयति सम्प्रेरयति सम्प्रवेशयति–अंशुः सोमश्चन्द्रमाः "अंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः" ( ऋ० १ । १३७ । ३ ) "तं [ चन्द्रम् ] पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति–यथा देवा अंशुमाप्याययन्ति" ( तै० सं० २।४।१४।१–निरु० ५ । ११ ) घृतस्य उदकस्य नाम नम्रीभूतं रसरूपं मधु गुह्यं गुप्तमोषधि–वनस्पतिषु यदस्ति तन्मधु चन्द्रमसि सोमे च तेनांशुना सोमेन सहेत्युक्तं यथा देवानां रश्मीनां जिह्वा जिह्वया टाविभक्तेर्लुक् छान्दसः, पिबति स, कः पिबति योऽमृतस्य नाभिः–उदकस्य नाभिर्नहनं बन्धनमाश्रयः । "अमृतमुदकनाम" ( निघं० १ । १२ ) "यमक्षितिमक्षितयः पिबन्ति" ( तै० सं० २।४।१४।१–निरु० ५ । ११ ) इति । एवं मन्त्रे वर्णनात् तथा समुद्रात्–ह्येष आदित्योऽद्भ्योऽन्तरिक्षादुदेति । तस्मात् 'अग्निः' पृथिवीस्थान एवेति पक्षो व्याकुलितो जातः, अन्तरिक्षे मध्यमे स्थाने विद्युदर्थकः, उत्तमे द्युस्थाने चादित्यार्थकः । पुनश्च–अग्निशब्देन विद्युदादित्यावेव गृह्येतेऽपितु—

अथापि ब्राह्मणं भवति "अग्निः सर्वा देवता" ( ऐ० ६ । ३, मै० सं० १ । ४ । १३ ) इति ॥ १७ ॥

भा०—इत्थं सर्वा देवता अग्निशब्देन गृह्यन्ते ।

तस्योत्तरा भूयसे निर्वचनाय—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥" ( ऋ० १ । १६४ । ४६ )

इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति। इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा॥

भा०—'अग्निः' इत्यनेन सर्वा देवता गृह्यन्तेऽधिकनिर्वचनाय निम्ना-ऋक् 'इन्द्रं मित्रम्०' अस्ति।

मन्त्रार्थः—

इममेवाग्निं महान्तमात्मानमेकरूपं न केवलं पृथिवीस्थानमेव मेधाविनो बहुधा बहुष्वर्थेषु वदन्ति, इन्द्रं मित्रं वरुणम्—अग्निं दिविजं सूर्यं गरुत्मन्तं गरणवन्तं रसहरणवन्तं सुपर्णं गुरुमात्मानं महान्तमात्मानं यमं मातरिश्वानं वदन्ति विप्राः।

एवमग्निः शब्दो विद्युति सूर्येऽन्यासु देवतासु मित्रादिषु परमदेवतायां महात्मनि परमात्मनि च प्रयुक्तत्वात् 'अग्निः पृथिवीस्थानः' इति यश्चोक्तः पक्षो न युक्तः।

यास्कस्य समाधानम्—

यस्तु सूक्तं भजते यस्मै हविर्निरूप्यतेऽयमेव सोऽग्निः। निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते॥१८॥

भा०—भवन्तु खल्वग्निशब्दस्यानेकेऽर्था यद्वाऽग्निशब्देन विद्युत्, आदित्यः, अन्यो मित्रादिर्गृह्येत परन्तु पृथिवीस्थानकेऽग्नौ साक्षाद् अग्निशब्दः प्रयुज्यते। अग्निमानय, अग्निं प्रज्वालय, अग्निना पच्यते, अग्नेर्ज्वाला, अग्नौ हूयते—पार्थिवोऽग्निः स्वतो लक्ष्यते। अत्र 'अग्निः' इति शब्दस्य 'अग्निः' इत्येषोऽर्थो न कल्पनीयः, साक्षादर्थवत्त्वात् प्रसिद्धार्थत्वाद्वा। 'अग्निः' इत्यस्य विद्युदादयः साक्षादर्थाः प्रसिद्धार्था न सन्ति। पृथिवीस्थानेऽग्निः कः? योऽग्निरुच्यते, अन्तरिक्षस्थानेऽग्निः कः? विद्युत्। दिवि कः? सूर्यः। स्वनामतो विचलितः। अन्यच्च यथा पृथिवीस्थानोऽग्निः, वह्निः, पावक आदि पर्यायशब्दैरुच्यते न तथा वह्निः पावक आदिनामभिरपि विद्युत् सूर्यो वक्तुं शक्यते। तस्माद् यस्तु 'अग्निः' सूक्तं भजते, यस्य सूक्तस्याग्निर्देवता स्यात् तदाग्नेयं सूक्तं तत्र-अग्निशब्दस्य भवेदर्थो विद्युद्वा-आदित्यो

वा, तत्सूक्तं वैद्युतं वाऽऽदित्यदेवत्यं वा न वक्तुं शक्यते केवलं विद्युदाद्यर्थभागेव भवति तत्राग्निशब्दः । सूक्तमाग्नेयं हि भवति । अग्निः शब्दः स्वनाम्नि प्रसिद्धः पृथिवीस्थानो निरवद्योऽबाध्यः । यस्मिन् कस्मिन्नपि सूक्ते 'अग्निः' शब्दः स्वार्थे पार्थिवे ज्योतिषि वा परार्थे मध्यस्थानीयविद्युति द्युस्थानीयादित्ये वा स्यात् तत्सूक्तमाग्नेयमेवेति निश्चयः । एवमेव यस्मै हविर्निरूप्यते—आहुतिः सङ्कल्प्यते तत्रायमेव पार्थिवोऽग्निरभीष्यते । तत्र सूक्तेऽग्निशब्दस्यार्थो भवेत् विद्युद् यद्वाऽऽदित्यो न स हविर्भाक्, अयं पृथिवीस्थानोऽग्निरेव हविर्भागस्ति । एते उत्तरे ज्योतिषी 'विद्युदादित्यौ' तु निपाते गौणे हि स्तः । अयं पृथिवीस्थानोऽग्निरेव—'अग्निनामतो मुख्योऽभिधेयः । विद्युद् यद्वाऽऽदित्यो न सूक्तभाक्, न च हविर्भाक् केवलं नामधेयेन भजेतेऽग्निशब्देन सूक्ते—उच्येते—नामभागिनावेव विद्युत्सूर्यौ । तस्मात् 'अग्निः पृथिवीस्थानः' इति पक्षो यथार्थोऽस्ति नाक्षेप्यः । परमा देवता परमात्माऽपि—अग्निप्रभृतिनामभिर्गृह्यते सर्वेष्वपि स्थानेषु पृथिव्यन्तरिक्षद्युस्थानेषु तस्य सर्वत्र विद्यमानत्वात् परमदेवतात्वात् 'महाभाग्यादेक एव—आत्मा बहुधा स्तूयते' इत्यस्माभिः प्रतिपादितत्वात्—इति स्थितो नैरुक्तपक्षः, 'अग्निमीळे०' मन्त्रेऽपि दर्शितः 'ईडिः' अध्येषणाकर्मा पूजाकर्मा वा तत्र 'अग्निः पूर्वेभिरीड्यः' स्तुत्य इत्यत्र परमात्मा सोऽपि सूक्तभाग् यद्वा हविर्भाङ् न भवति, पूजाभाक् त्ववश्यं परमा देवता परमात्मैव सर्वत्र विज्ञेय इति नैरुक्तपक्षः । 'इन्द्रं मित्रं वरुणमग्निमाहुः' इति मन्त्रे 'अग्निः' शब्दो द्विः पठितः, तत्र पूर्वस्तु—इन्द्रवरुणादिवन्नाम, उत्तरार्द्धे 'एकं सद्विप्रा बहुधा वदन्त्यग्निम्'—अग्निं बहुधा वदन्ति, एकं महाभाग्यवन्तमग्निं परमात्मानमिन्द्रादिनामतो वदन्ति । इति मन्त्रः परमदेवतापरः—इत्यपि नैरुक्तपक्षस्तथैव व्याख्यातोऽस्माभिः पूर्वपक्षमिषेण महान्तमात्मानमिति शब्देन ॥

इति सप्तमाध्याये चतुर्थः पादः ।

---

## पञ्चमः पादः

---

जातवेदाः ॥ २ ॥

जातवेदाः कस्मात् । जातानि वेद । जातानि वैनं विदुः । जाते जाते विद्यत इति वा । जातवित्तो वा जातधनः । जातविद्यो वा जातप्रज्ञानः । "यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वम्" ( मै० सं० १ । ८ । २ )

इति ब्राह्मणम् "तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्ति" ( मै० सं० १ । ८ । २ ) इति च ॥ १९ ॥

भा०—'जातवेदाः' कथमित्युच्यते—जातानि—उत्पन्नानि वस्तूनि वेद जानाति यः स जातवेदाः परमात्मा परमा देवता । यद्वा जातानि—उत्पन्नानि भूतानि प्राणिन एनं विदुः, तस्य प्रकाशस्वरूपत्वात् स जातवेदाः । अथवा जाते जाते—उत्पन्नमात्रे विद्यते वर्तते यः स जातवेदाः । आसु तिसृषु व्युत्पत्तिषु जातशब्दोपपदाद् विद ज्ञाने द्वयोः, अन्तिमायां विद सत्तायां धातोः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) कर्तरि कर्मणि—असुन् प्रत्ययः । पुनर्वा जातवेदाः—जातवित्तो जातधनः "वेदो धननाम" ( निघं० २ । १० ) जातं प्राप्तं रक्षितं पूर्वतो वेदो वित्तं धनं येन यद्वा जातं प्राप्तं वेदो वित्तं धनं यस्माद् भवति स जातवेदाः । अथवा जातो वेदो विद्या यस्य यस्माद्वा स जातप्रज्ञानः—उभयत्र बहुव्रीहिसमासः । यद्वा जातः प्रकटीभूतः सन् पशून् पश्यतो दर्शनशीलान् मनुष्यादीन्—अविन्दत प्राप्नोत् प्राप्तवान्—इति जातवेदसो जातवेदस्त्वमिति ब्राह्मणं वदति, यतः सर्वेषु खल्वृतुषु पशवो दर्शनशक्तिमन्तो मनुष्या अग्निमभिसर्पन्ति—अभिगच्छन्ति—उपयोगार्थं यतः सोऽनायासेन प्राप्यते । अस्यां व्युत्पत्तौ जातशब्दोपपदात् "विदॢ लाभे" ( तुदादि० ) 'जातवेदाः' शब्दोऽग्नेः पर्यायः परन्त्वत्र स्वतन्त्रो देवतावाचकस्तस्य तद्गुणान्वयादग्न्येऽप्यर्थास्तस्य सन्ति तस्मात् स स्वतन्त्रः स्थापितः ॥

तस्यैषा भवति—

"जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ ( ऋ० १ । ९९ । १ )

जातवेदस इति जातवेदस्यं [ यां ? ] वैव जातवेदसेऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मो [ निस्मो ? ] निश्चयेन दहति भस्मीकरोति सोमो ददादित्यर्थः स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं [ सिन्धुं नावा ? * ] नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति † ?

---

नामा० * कोष्ठान्तर्गतः पाठोऽधिकः ।

सूक्तयाधि० † इत्येष मन्त्रो व्याख्यानं च विश्वेश्वरानन्दवैदिकशोधसंस्थानपुस्तकालये

वक्तव्यम्—

भा०—'जातवेदसे सुनवाम·····' इति मन्त्रस्तद्भाष्यं च दुर्गाचार्येण न व्याख्यातं मुद्रितं तु वर्तते तन्नरुक्तपुस्तके, स्कन्दमहेश्वरभाष्ये तु पाठ एव न दृष्टः। मुद्रितस्य दुर्गाचार्यभाष्यस्य टिप्पण्यामिदं सूचितमस्ति यत् "प्राचीनलिखितपुस्तके तूपलभ्यते"। अस्माकं सम्मतौ 'जातवेदाः' देवताविचारप्रसङ्गेऽस्य पाठेनावश्यं भवितव्यं यतो ह्यस्य वैकल्पिकी देवता जातवेदाः, एकर्चं सूक्तं 'जातवेदस्यं वा—एवं' अत्रोक्तमेव मन्त्रभाष्ये। सर्वानुक्रमणिकायां च जातवेदा अग्निः, शुद्धोऽग्निर्वा देवता। मन्त्रे 'जातवेदसे' तथा 'अग्निः' द्वौ शब्दौ पठ्येते तेनोभे देवते विकल्पितुं शक्येते, यास्कः प्रथमं विकल्पितदेवताकामृचमुदाहरति पश्चाद्विकल्पितां प्रयच्छति 'तस्यैषाऽपरा भवति' इत्युक्त्वा 'प्र नूनं जातवेदसम्०'। यास्कस्य—एष समाचारः पूर्वस्मिन्—अग्निदेवताके विषयेऽपि खलु गतः, 'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्०' इति मन्त्रो दत्तोऽनेकनामकः पश्चात् 'तस्यैषाऽपरा भवति'—'अग्निः पूर्वेभिः'। तथैवात्रापि विज्ञेयं पूर्वं द्विनामको मन्त्रो दत्तः—'जातवेतसे, अग्निः' पश्चात् 'जातवेदसम्' इत्येकनामक एव। 'अग्निमीळे पुरोहितम्०' इति मन्त्रेऽग्निर्देवता पुरोहितादयो निपाताः सन्तीति स मन्यते तथैवात्र 'जातवेदाः' इति देवतां मुख्यां मन्यते—अग्निं निपातं परिशिष्टे व्याख्यानेन स्पष्टं भवति हि। यत्र निपातोऽपि न तादृशीं स्वपरां दर्शयति। देवतासु सन्देहस्थलमपि दर्शयितव्यं यास्कस्य लक्ष्यं सर्वत्रोपलभ्यते हि। स्वामिदयानन्देन परिशिष्टप्रकरणस्य वेदभाष्ये यास्कीयः पाठो दत्तो यतस्तत्र परिशिष्टेऽतिस्तुतय आध्यात्मिक्यः सन्ति पाठभेदेन, तस्मात् परिशिष्टप्रकरणाद् यास्कव्याख्यानं गृहीतवान्। परिशिष्टे 'आच्छाय' दयानन्दभाष्ये 'आस्थाय' परिशिष्टे 'तानि' दयानन्दभाष्ये 'दुरितानि' इति भेदः। अस्तु।

मन्त्रार्थः—

जातवेदसे जातानां वेत्त्रे सर्वज्ञाय जातेषु विद्यमानाय सर्वव्यापकाय यः खल्वग्निरग्रणीरस्माकं परमात्मा "अग्ने नय सुपथा" (यजु० ४०। १६) इत्युक्तत्वात्, तस्मै—अर्चनीयाय सोममुपासनारसं हावभावं स्तवनं सुनवाम समर्पयेम। यद्वा योऽग्निर्देवः पृथिवीस्थान एव तस्मै जातवेदसे यं जातं प्रज्वलितं सर्वे विदन्ति जानन्ति यस्माद् वित्तं धनं च प्राप्यते तस्मै—अर्चाय सेवनीयाय सोममौषधं होम्यं सम्पादयेम जुहुयाम, योऽरातीयतो यज्ञार्थं प्रकाशमानं सोमं

१७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपौ) नास्ति। मलवरस्थप्राच्यविद्यामन्दिरस्य हस्तप्रतिकायामपि नास्ति मन्त्र एषः।

प्रति शत्रुत्वमाचरतो जनस्य वेदो धनं निश्चयेन दहति भस्मीकरोति, सम्पादितः सोमः सुखं ददाति । स जातवेदा अग्निर्वा सर्वज्ञोऽग्रणीः परमात्मा यद्वाऽग्निर्जातः प्रज्वलन् विश्वानि दुर्गमनीयानि पारयति यथा नावा जलदुर्गां महाकूलां नौवाहस्तारयति तथा दुरितानि तारयति ॥

तस्यैषाऽपरा भवति—

"प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् ।
इदं नो बर्हिरासदे ॥" ( ऋ० १० । ११८ । १ )

प्रहिणुत जातवेदसं कर्मभिः समश्नुवानमपि वोपमार्थे स्यादश्वमिव जातवेदसमितीदं नो बर्हिरासीदत्विति । तदेतदेकमेव जातवेदस्यं गायत्रं तृचं दशतयीषु विद्यते, यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते ॥

भा०—जातवेदसं जातं यं सर्वे जानन्ति प्रकाशेन तापेन च तं यस्माच्च जातं प्राप्तं भवति वित्तं धनं कस्मिंश्चिद् यन्त्रे याने वा प्रयुज्यमानात् तं जातवेदसं प्रगतिशीलमश्वं ( Potentional & Kinetic Energy ) कर्मभिरश्नुवानं व्यापनधर्मिणं यद्वाश्वमिव यन्त्रं यानमग्रेऽग्रे वहन्तं वाजिनम् "वाजोऽन्ननाम" ( निघं० २ । ७ ) इध्मेन मधुना द्रवपदार्थेन ज्वलनयोग्येन युक्तं कुर्वन्तो हे वैज्ञानिकाः ! यूयं नूनं प्रहिणुत प्रवर्धयत प्रेरयत च "हि गतौ वृद्धौ च" (स्वादि०) ततः, तस्य तप्प्रत्ययः "तप्तनप्तनथनाश्च" ( अष्टा० ७ । १ । ४५ ) नोऽस्मान्—इदं बर्हिः—भूमस्थानं विस्तृतस्थानं स्थलजलगगनरूपम् "भूमा वै बर्हिः" (शत० १ । ५ । ४ । ४ ) आसदे—आसदनाय—आसादयितुं प्रापयितुम् । आङ्पूर्वात् षद्धातोर्गत्यर्थाद् भावे क्विप् छान्दसः ।

तदेतदेकमेव जातवेदोदेवताकं तृचमृक्त्रयमितं सूक्तं गायत्रीछन्दस्कं दशमण्डलविभागेषु—ऋग्वेदे विद्यते नान्यत्र, जातवेदसानां सूक्तानां स्थाने यागं कर्तुं यत्किञ्चिदाग्नेयं गायत्रं सूक्तजातं तद्युज्यते विनियुज्यते ॥

स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते ततो नु मध्यमः ।
"अभिप्रवन्त समनेव योषाः" ( ऋ० ४ । ५८ । ८ )
इति तत्पुरस्ताद् व्याख्यातम् । अथासावादित्य "उदु त्यं जातवेदसम्०" इति तदुपरिष्टाद् ( निरु० अ० १२ ख० १५ ) व्याख्यास्यामः ॥

भा०—स आध्यात्मिको वैज्ञानिको वा न मन्येत यदयमेव पृथिवीस्थानोऽग्निर्जातवेदा उच्यते, अपि तूत्तरे ज्योतिषी विद्युदादित्यावपि जातवेदसी उच्येते, ततो नु मध्यमः "अभिप्रवन्त समनेव···जुषाणो हर्यति जातवेदाः ॥" इति तद्विषये पूर्वं व्याख्यातमग्निशब्दमाश्रित्य समाहितं यथा तत्र समाधानं तथात्र ज्ञातव्यम् । अथादित्यविषये 'आदित्यो जातवेदाः' इत्यस्य विषये "उदुत्यं जातवेदसम्०" इति मन्त्रोऽग्रे ( निरु० १२ । १५ ) व्याख्यास्यते । भवतु तस्मिन् मन्त्रे जातवेदा आदित्यः ।

परन्तु—

यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ २० ॥

भा०—विद्युदादित्यौ जातवेदसी भवेतां यद्वाऽन्योऽर्थः परमा देवता परमात्मा सर्वस्थानीयो भवेत्, तथापि यस्तु जातवेदाः सूक्तं भजते सूक्तभाग् भवति यद्वा यस्मै जातवेदसे हविः सङ्कल्प्यते समर्प्यते हविर्भाग्भवति स त्वयमेव पृथिवीस्थानोऽग्निर्जातवेदा भवति, उत्तरे ज्योतिषी 'विद्युदादित्यौ' तु निपाते तदा गौणे एव भवतः । भवतां केवलमर्थभाजौ तौ विद्युदादित्यावध्येतुर्मनसि । सूक्तं जातवेदस्यम्, मन्त्रो जातवेदस्यः, हविरपि जातवेदस्यं हि भवति ॥

इति सप्तमाध्याये पञ्चमः पादः

---

## षष्ठः पादः

---

वैश्वानरः ॥ ३ ॥

वैश्वानरः कस्मात् । विश्वान् नरान् नयति । विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः ॥ २१ ॥

तस्यैषा भवति—

"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ॥" ( ऋ० १ । ९८ । १ )

इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः सयतते सूयण

राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वय वैश्वानरस्य कल्याण्यां मतौ स्यामेति ॥

भा०—वैश्वानरः कस्मादिति कथं व्युत्पन्न इति व्युत्पत्तौ प्रश्नः, न तु तत्स्वरूपे, स्वरूपविषये तु वक्ष्यत्यग्रे 'तत्को वैश्वानरः' उच्यते—विश्वान् नरान् जनान् नयनशीलांश्च नयति, नयति—इत्यर्थे "तद्वहतिरथयुगप्रासङ्गम्०" ( अष्टा० ५ । १ । ४९ ) तद्—नयति—इत्यर्थे छान्दसोऽण् प्रत्ययः—वैश्वानरः । यद्वा विश्वे नरा जना नयनशीलाश्च—एनं नयन्ति—इति कर्मणि 'अण्' प्रत्ययः, विश्वैर्नरैर्नीयते नीतो यः "तेन निर्वृत्तम्" ( अष्टा० ५ । १ । ७८ ) नीतेऽर्थे छान्दसोऽण् प्रत्ययः—वैश्वानरः । "नरे संज्ञायाम्" ( अष्टा० ६ । ३ । १२७ ) यद्वा "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३५ ) इति दीर्घः । अपि वा विश्वानरः—एव स्यात् [ विद्युत्, सूर्यः ] न नयनेऽर्थेऽण्प्रत्ययान्तः । तस्यापत्यं वैश्वानरः, अस्य विषये वक्ष्यति खल्वग्रेऽस्मिन्नेव पादे ( खं० २३ ) आचार्यः कथं पुनर्विश्वानरो यस्य वैश्वानरोऽयम् ? उच्यते—प्रत्यृतः सर्वाणि भूतानि तस्माद् विश्वानरः, विश्वानि सर्वाणि भूतानि प्रत्यृतः प्रतिप्राप्तोऽन्तर्व्याप्त्या, इत्येकः, बाह्याभ्यन्तरव्याप्त्या चापरः । 'विश्वान्' उपपदे "ऋ गतिप्रापणयोः" ( भ्वादि० ) प्राप्त्यर्थोऽत्र गृह्यते । ततः 'अच्' कर्तरि, 'विश्वान्—अरः'—विश्वानरः । शसोऽलुक् छान्दसः । अथवा प्रत्यृतः—न 'ऋ' धातुनिर्देशः किन्त्वर्थप्रदर्शनम् । प्रत्यृतः प्रतिप्राप्तः, स्वाधीने—आनीतवान् विश्वानि भूतानि विश्वोपपदे—आङ्पूर्वकात्—नृ नये धातोः 'अच्' कर्तरि । विश्वानि भूतानि—आनीतवान्—आकर्षितवान् । तस्य वैश्वानरस्य 'वैश्वानरस्य सुमतौ' एष मन्त्रो भवति ।

मन्त्रार्थः—

वैश्वानरो देवः ( Latent Heat of fusion & Vaporisation ) इतो लोकात् पृथिवीलोकात् पृथिवीस्थपदार्थेभ्य ओषधिवनस्पतिखनिजेभ्यः प्रसिद्धिं गत इदं सर्वं पार्थिवं वस्तुजातं विचष्टेऽभिविपश्यति—अभिविदर्शयति प्रकाशयति सर्वेषु वस्तुषु रूपं प्रयच्छति, एवं प्रकाशमानो दीप्यमानः सन् सूर्येण सह संयतते सङ्गच्छते सङ्गतिं करोति—ऊर्ध्वं गच्छति सूर्येण सह सङ्गन्तुम् "यतते गतिकर्मा" ( निघं० २ । १४ ) तथा स सर्वेषां भुवनानां भूतानां राजा—राजेवावश्यमभिश्रीरभिश्रयणीयोऽभ्याश्रयितव्यस्तस्येदृशस्य वैश्वानरस्य वयं सुमतौ कल्याण्यां मतौ सुमननक्रियायां वा स्याम ॥

तत्को वैश्वानरः ? मध्यम इत्याचार्याः ॥ २२ ॥

वर्षकर्मणा ह्येनं स्तौति—

"प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृत्र॒हणं॒ सच॑न्ते। वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त् काष्ठा॒ अव॒ शम्ब॑रं भेत् ॥" ( ऋ० १ । ५९ । ६ )

प्रब्रवीमि तन्महित्वं माहाभाग्यं वृषभस्य वर्षितुरपां य पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः। दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन् रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम् ॥

भा०—तत्पुनः कोऽस्ति वैश्वानरः ? अत्र विषये—आचार्यो निरुक्तसम्प्रदायस्य पूर्वे नैरुक्ताः-विद्वांसो मन्यन्ते यद् वैश्वानरो मध्यमो देवो विद्युद्देवः। यतो वर्षकर्मणा मेघवर्षणकर्मणा हि खल्वेतं मध्यमं विद्युद्देवं मन्त्रः स्तौति प्रशंसति—'प्र नू महित्वम्…… ।'

मन्त्रार्थः—

वृषभस्य–अपां वर्षितुर्महित्वं माहाभाग्यं महद्गुणवत्त्वं प्रब्रवीमि यं खलु वृत्रहणं मेघस्य हन्तारं पूरवः पूरयितव्याः पालनीया मनुष्या वर्षकामाः "पूरवो मनुष्यनाम" ( निघं० २ । ३ ) सचन्ते सेवन्ते। स एष वैश्वानरोऽग्निर्दस्युमना-वृष्टिकालं दुष्कालं जघन्वान् हतवान्। दस्युः "दसु उपक्षये" ( दिवादि० ) यतो दस्यन्ति क्षयं प्राप्नुवन्ति ह्यस्मिन्ननावृष्टिकाले रसा ओषधिवनस्पतीनां प्राणिनां च जीवनरसाः शोषमायान्ति तस्मात् स दस्युः। अथ च कर्माणि चोपदासयति लोपयति वर्षणानभिमुखस्य मेघस्यान्धकारप्रायत्वात् तस्यावर्षणाच्च कर्माणि लुप्यन्ते हि। स वैश्वानरोऽग्निर्मध्यमो विद्युद्देवः शम्बरं मेघम् "शम्बरं मेघनाम" ( निघं० १ । १० ) तमवभेत्–अवेत्यधोभावेऽधोरूपं कृत्वाऽभिनत् भिनत्ति, काष्ठाः–अपोऽधूनोत्–व्यचालयत्–विचालयति पातयति स्रावयति। "आपो हि काष्ठा उच्यन्ते" ( निरु० २ । १६ )।

एवमनेन वैश्वानरो मध्यमोऽग्निर्विद्युद्देवः ॥

अथासावादित्य इति पूर्वे याज्ञिकाः।

एषां लोकानां रोहेण सवनानां रोह आम्नातो रोहात् प्रत्यवरोहश्चिकीर्षितस्तामनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते सोऽपि न स्तोत्रियमाद्रियेता-

ग्नेयो हि भवति । तत आगच्छति मध्यस्थाना देवता रुद्रं
च मरुतश्च ततोऽग्निमिहस्थानमत्र वै स्तोत्रियं शंसति ॥

भा०—अथेति पक्षोत्थापने, असौ द्युस्थानः—आदित्यो वैश्वानरोऽस्तीति पूर्वे याज्ञिका मन्यन्ते । यतः—एषां लोकानां पृथिव्यन्तरिक्षद्युलोकानां रोहेण—उपरि-गमनक्रमेण यज्ञसवनानां रोह उपरिगमनक्रमः पठितः, पुनारोहाद् रोहणादुपरि-गमनक्रमात् प्रत्यवरोहः प्रत्यवगमनक्रमोऽवतरणक्रमोऽधोगमनक्रमः कर्तुमभीष्टः । पृथिवीस्थानं प्रातःसवनम्, अन्तरिक्षस्थानं माध्यन्दिनं सवनम्, द्युस्थानं तृतीयं सवनम् । तत्र द्युस्थानसमकक्षे तृतीयसवने प्रत्यवरोहणाय होता तां लोकसवन-योरनुकृतिं सदृशतां प्रतिपद्यते—आचरति—अनुतिष्ठति यत्—अग्निमारुते शस्त्रे वैश्वा-नरीयेण सूक्तेन "वैश्वानराय पृथुपाजसे" (ऋ० ३।३।१) तेनैतद् गतं भवति यद् द्युस्थान आदित्यो देवो वैश्वानरः । पुनश्च तदा स न स्तोत्रियमाद्रियेत "यज्ञायज्ञा वो अग्नये" (ऋ० ६ । ४८ । १) यतः स आग्नेयो भवति, आरोहणक्रमे हि स प्रथमं पठ्यते, अग्निः पृथिवीस्थानः प्रातःसवनं च तस्य पृथिवी-स्थानप्रातःसवनयोरनुकृतिस्त्वग्निदेवतायाम् । पुनः प्रत्यवरोहणे—प्रत्यागच्छति माध्यन्दिने सवनेऽन्तरिक्षस्थानसमकक्षे मध्यस्थाना देवताः—रुद्रं मरुतश्च शंसति, ततः प्रातःसवनेऽवरोहन्—अग्निमिहस्थानमत्रैव पृथिवीलोकसमे प्रातःसवने स्तोत्र-माग्नेयम् "यज्ञायज्ञा वो अग्नये" इति शंसति । आदित्यो वैश्वानर इति वेदभिन्नः साक्ष्यरूपः प्रथमो हेतुः प्रदिष्टः ॥

द्वितीयो हेतुः—

अथापि वैश्वानरीयो द्वादशकपालो भवति ।
एतस्य हि द्वादशविधं कर्म ॥

भा०—अथ च वैश्वानरीयः पुरोडाशो द्वादशकपालो भवति "वैश्वानरं द्वादशकपालं निर्वपति" (शत० ५ । २ । ५ । १३) एतस्यादित्यस्य हि द्वादश-विधं कर्म द्वादशमासप्रविभागकरणम् । तस्माद् वैश्वानर आदित्यः ।

तृतीयो हेतुः—

अथापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इति ॥

भा०—अथ च ब्राह्मणं भवति "स यः स वैश्वानरः—असौ स आदित्यः" (शत० ९ । ३ । १ । २५)

चतुर्थो हेतुः—

अथापि निवित् सौर्यवैश्वानरी भवत्या यो द्यां भात्या-
पृथिवीमित्येष हि द्यावापृथिव्यावाभासयति ॥

भा०—अथ च निवित्–शस्यमन्त्राणां मध्ये निवेदनरूपाणां मन्त्राणां समाख्या । "निविद्भिर्न्यवेदयन् तन्निविदां निवित्त्वम्" (तै० २ । २ । ८ । ५) सा च सूर्यं वैश्वानरमभिलक्ष्य वर्तते "आ यो द्यां भात्यापृथिवीम्" ( शा० श्रौ० ८ । २२ । १ ) अस्यां सौर्यवैश्वानर्यां निविदि द्यां चाभाति पृथिवीं चाभाति–इति कथने–आदित्य एव तादृशो यो द्यावापृथिव्यावाभासयति ।

पञ्चमो हेतुः—

अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति "दिवि पृष्टो अरोचत (यजु० ३३ । ९२) इत्येष हि दिवि पृष्टो अरोचतेति ॥

भा०—अथ च छान्दोमिकं सूक्तं सूर्यं वैश्वानरमभिलक्ष्य भवति । "तद्यच्छन्दोभिर्मितास्तस्माच्छन्दोमाः" ( कौ० २६ । ७ ) गायत्रीप्रभृतिछन्दोभिः प्रमिता गानयोग्यास्ते छन्दोमा मन्त्रास्तेषां छान्दोमिकं सूक्तं तद्यथा—

दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् ।
क्ष्मया वृधान ओजसा चनो हितो ज्योतिषा बाधते तमः ॥

बृहन् महान् वैश्वानरोऽग्निर्द्युलोके पृष्टः स्पृष्टः संसक्तः सकारलोपश्छान्दसः । यद्वा द्युलोकः पृष्टः सिक्तो रश्मिभिः पूरितो येन सः "पृषु सेचने" ( भ्वादि० ) अरोचत दीप्यते "रोचते ज्वलतिकर्मा" ( निघं० १।१६ ) स आदित्य एव दिवि दीप्यमानो वर्तते । स च–ओजसा वर्धमान क्ष्मया पृथिव्या सह संसृष्टश्चनो हितः–अन्नौषधिं प्रति हितकरो भवति । तथा स्वज्योतिषाऽन्धकारं बाधते निवारयति ।

षष्ठो हेतुः—

अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ।

भा०—अथ च हविष्पान्तीयम् 'हविष्पान्तम्' इति पदमारम्भे यस्य तत् खलु हविष्पान्तीयं सूक्तं तच्च ( ऋ० १० । ८८ ) सूक्तं सूर्यं वैश्वानरमभिलक्ष्य भवति । तद्यथा–"हविष्पान्तमजरं स्वर्विदि दिवि स्पृश्याहुतम्" प्रथमं मन्त्रं पठित्वाऽग्रे द्वादशे मन्त्रे वैश्वानरं शब्दं पठति—

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥
( ऋ० १० । ८८ । १२ )

विश्वस्मै सर्वस्मै भुवनाय भूतजाताय देवा वैश्वानरमग्निमह्नां दिवसानां केतुं

प्रज्ञानं प्रकाशकं कुर्वन्ति । यश्च—अपोऽन्तरिक्षं प्रति विभातीः—भासमाना उषसः—आततान विस्तारितवान्, अर्चिषा ज्योतिषा च तमोऽन्धकारमूर्णोति—आच्छादयति ।

एवमेभिर्विवेचनप्रकारैर्वैश्वानरोऽग्निरादित्य एवेति ॥

वैश्वानरशब्दस्य विद्युदादित्यवाचित्वे पूर्वपक्षत्वेन प्रदर्शितानां हेतूनां परिहारः क्रियते—

अयमेवाग्निर्वैश्वानर इति शाकपूणिः । विश्वानरावेते उत्तरे ज्योतिषी वैश्वानरोऽयं यत्ताभ्यां जायते ॥

भा०—अयं पृथिवीस्थानोऽग्निरेव वैश्वानरः, नह्युत्तरे ज्योतिषी विद्युदादित्यौ वैश्वानरनामभागिनौ, शाकपूणिर्नैरुक्ताचार्यो मन्यते । यतो हि ते उत्तरे ज्योतिषी विद्युदादित्यौ विश्वानरौ, ताभ्यामयं पृथिवीस्थानोऽग्निर्जायते तस्मात् पृथिवीस्थानोऽग्निरेव वैश्वानरः । मध्यमोत्तमौ—इन्द्रादित्यौ विश्वानरौ स्तोऽत्रास्माभिर्वेदमन्त्रा उदाह्रियन्ते—

"प्र वो मुहे मन्दसानायान्धसोऽर्चां विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥"
(ऋ० १० । ५० । १)

"इति कमन्यं मध्यमादेवमवक्ष्यत्" ( निरु० ११ । १० ) इत्यत्र विश्वानरो मध्यम इन्द्रो विद्युद्देवः ।

"उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।"
(ऋ० ७ । ७६ । १)

अत्र स्पष्टं हि विश्वानरः सविता सूर्यो देवो विश्वजन्यममृतं ज्योतिरुदश्रेत्—उच्छ्रयति—उगदच्छति—उदेति ।

"विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ( ऋ० ८ । ६८ । ४—विश्वानरस्यादित्यस्य" ( निरु० १२ । २२ )

कथं न्वयमेताभ्यां जायत इति यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवत्युदकेन्धन शरीरोपशमन उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः ॥

भा०—कथं पुनरेताभ्यां विद्युत्सूर्याभ्यां पार्थिवोऽग्निर्जायते—इति प्रदर्श्यते यत्र यस्मिन् काले यदा वैद्युतो वैद्युद्रूपोऽग्निर्वैद्युतो धर्मो वा शरणं स्वाश्रयं मेघमभिहन्ति ताडयति प्रादुर्भवति दीप्यते यावदनुपात्तोऽगृहीतः पार्थिवेन पदार्थेन भवति तावत्पर्यन्तं मध्यमधर्मवान्—अन्तरिक्षस्थानको भवति विद्युदाख्या, तदा—उदकेन्धनः—उदकं मेघोदकमस्येन्धनं भवति शरीरोपशमनः, शरीरं मूर्त्तिमद् वस्तु पार्थिवं वस्तु काष्ठादिकं शमनं शान्तकरणसाधनमस्येति तथा भवति, काष्ठादिना स्पृष्टः शाम्यति, उपादीयमानः—काष्ठादिना खलूपादीयमानो गृह्यमाणोऽयं पार्थिवोऽग्निः सम्पद्यते तद्विपरीतधर्मवान् शरीरदीप्तिः काष्ठादिदीपनसाधनवान्—उदकशमनः—उदकं शमनं शमनकारि यस्य तथाभूतो भवति । इति विद्युत उत्पद्यते पार्थिवोऽग्निः ॥

अथादित्यादुदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत् प्रदीप्यते सोऽयमेव सम्पद्यते ॥

भा०—अथ आदित्यात्—उदीचि—उत्तरायणे काले प्रथमसमावृत्ते प्रथमसम्प्राप्ते—आदित्ये कंसं धातुं मणिं स्फाटिकं सूर्यकान्तं वा परिमृज्य निर्मलीकृत्य प्रसाद्य तस्यादित्यस्य प्रतिस्वरे प्रतिबिम्बे प्रतिप्रकाशे शुष्कगोमयं धारयति—असंस्पर्शयन् कंसं मणिं न स्पर्शयन् तस्य नीचैरतिसमीपं स्थापयति तदा गोमयं प्रदीप्यते ज्वलति ज्वलितं भवति सोऽयं पार्थिवोऽग्निः सम्पद्यते । इत्यादित्यादग्नेरुत्पत्तिः ॥

अथाप्याह "वैश्वा॒न॒रो य॑तते॒ सूर्ये॑ण" इति । न च पुनरात्मनात्मा संयततेऽन्येनैवान्यः संयतत इत इममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत् ।

भा०—अथ च यदाह पूर्वपक्षत्वेन "वैश्वा॒न॒रस्य॑ सुम॒तौ स्या॑म....वैश्वा॒न॒रो य॑तते॒ सूर्ये॑ण" इति मन्त्रे वैश्वानरः सूर्योऽस्ति । तन्न सम्यक्, न सूर्यो वैश्वानरः, न पुनरात्मा स्वात्मना संयतते सङ्गच्छते सङ्गतिं लभते, अन्यो ह्यन्येन सङ्गच्छते । इतो लोकात् पृथिवीलोकात् काष्ठादिभिरिमं पार्थिवमग्निमादधाति—प्रज्वालयति स ज्वलन्—उपरि गच्छति, अमुतो द्युलोकादमुष्य सूर्यस्य रश्मयः प्रादुर्भवन्ति, इतो लोकात्—अस्य पृथिवीस्थानस्याग्नेरर्चिषो ज्वालास्तरङ्गा वा, एवं तयोर्द्वयोर्भासोर्भासमानयोरग्निसूर्ययोः संसङ्गं दृष्ट्वा खल्वेवम्—ऋषिर्मन्त्रोऽवक्ष्यत्—प्रकथयति ॥

अथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि सौर्याणि वा पौष्णानि वा वैष्णवानि वा वैश्वदेव्यानि वा तेषु वैश्वानरीयाः प्रवादा अभविष्यन्नादित्यकर्मणा चैनमस्तोष्यन्नित्युदेषीत्यस्तमेषीति विपर्येषीति ॥

भा०—अथ च यानि खल्वौत्तमिकानि-द्युस्थानदेवताकानि सूक्तानि यथा भागानि भगदेवत्यानि सवितृदेवताकानि पौष्णानि पूषदेवत्यानि विष्णुदेवतावन्ति विश्वदेवसम्बन्धीनि वा सूक्तानि तेषु सूक्तेषु वैश्वानरीया वैश्वानरवाचका वैश्वानरशब्दप्रयोगा अभविष्यन् वैश्वानरशब्दप्रयोगैर्भवितव्यमासीत्, यस्य वैश्वानरस्य भगादयो विशेषणानि कल्प्येरन्। अन्यच्चादित्यकर्मणा चैनं सौक्तं देवमस्तोष्यन् मन्त्रा यस्त्वमुदेषि, अस्तमेषि, विपर्येषि-पुरस्तात् पश्चिममेषि ॥

अपितु—

आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति।
अग्निकर्मणा चैनं स्तौतीति वहसीति पचसीति दहसीति ॥

भा—वैश्वानरीयाः प्रवादा वैश्वानरशब्दप्रयोगा आग्नेयेषु सूक्तेषु हि भवन्ति, तत्राग्निकर्मणा च स्तौति मन्त्रः—'वहसि, पचसि, दहसि'।

वर्षकर्मणा वैश्वानरोऽग्निर्मध्यमो विद्युद्रूप इत्यस्य समाधानम्—

यथो एतद्वर्षकर्मणा ह्येनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते।
"समानमेतदुदकमुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥"
(ऋ० १। १६४। ५१)

इति सा निगदव्याख्याता ॥ २३ ॥

भा—वर्षकर्मणा ह्येनं मध्यमं विद्युद्देवं वैश्वानरेणाग्निना स्तौति, इति स्वस्मिन् पृथिवीस्थानकेऽग्नावपि सम्भवति। उक्तं हि मन्त्रे—एतदुदकं समानमस्ति कैश्चिद् दिवसैरुपरि गच्छति कैश्चिच्च नीचैरागच्छति। पर्जन्या मेघा मध्यमेन विद्युद्देवेन संयुक्ता जलं भूमिं प्रति जिन्वन्ति, पृथिवीस्थाना अग्नयो जलं दिवं प्रति जिन्वन्ति। मन्त्र एष व्याख्यातः पूर्वम् (निरु० अ० ६। शब्द० १००। ख० २३) ॥

इति सप्तमाध्याये षष्ठः पादः * ॥

---

* मूलपुस्तकेषु स्कन्दमहेश्वरभाष्ये च 'समानमेतद्' इति मन्त्रान्तः षष्ठः पादः। पं० चन्द्रमणिभाष्ये मन्त्रोऽयं सप्तमपादे क्षिप्तः ॥

## सप्तमः पादः

---

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आ ववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते ॥ ( ऋ० १ । १६४ । ४७ )

कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयस्ते यदाऽमुतोऽर्वाञ्चः पर्यावर्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते । घृतमित्युदकनाम जिघर्तेः सिञ्चतिकर्मणः ॥

भा०—हरयो हरणाः पृथिवीतो रसजलानां हर्तारः सुपर्णा आदित्यरश्मयः "सुपर्णा रश्मयः" ( निघ० १ । ५ ) अपो वसानाः—उदकं वस्त्रमिव वसानाः परिदधानाः स्वोपर्याच्छादयन्तो दिवं द्युलोकम्प्रति द्योतनवन्तमादित्यम्प्रति खलूदयनकाले—उत्तरायणकाले ग्रीष्मे प्रवृत्ते—उत्पतन्ति—उद्गच्छन्ति पृथिवीतः—ऊर्ध्वं गच्छन्ति । पुनः कृष्णं निरयणं कृष्णरूपं प्रायेण रात्रेरन्धकाराधिक्यात् कृष्णं रूपं निरयणं दक्षिणायनमादित्यस्य रात्रिम्, अत्यन्तसंयोगे द्वितीया । आगते दक्षिणायने काले ग्रीष्मान्ते ते रश्मयो यदाऽमुतो द्युलोकादादित्यादर्वाञ्चोऽर्वाङ्मुखाः सन्त आववृत्रन् पर्यावर्तन्ते पुनः प्रत्यागच्छन्ति तदा—ऋतस्योदकस्य स्थानात् "ऋतमुदकनाम" ( निघं० १ । १२ ) अथ तदा घृतेनोदकेन "घृतमुदकनाम" ( निघं० १ । १२ ) तेनोदकेन पृथिवी व्युद्यते क्लिद्यते सिच्यते "उन्दी क्लेदने" ( रुधादि० ) ॥

अत्रैतदुक्तं भवति यत् पृथिव्यां प्रसृता रश्मय उष्णाः किरणाः पृथिवीस्था अग्नयोऽग्निरूपा इतः पृथिवीलोकादेव जलं गृहीत्वोपरि गच्छन्ति ते हि पुनरावर्तमानाः सन्तो वृष्टिं कुर्वन्ति । परम्परातो भवतु सूर्योऽपि वृष्टिकर्मणि हेतुः ।

अथ च—

अथापि ब्राह्मणं भवत्यग्निर्वा इतो वृष्टिं समीरयति * धामच्छद् दिवि † भूत्वा वर्षति मरुतः सृष्टां वृष्टिं

* साम्प्रतिके काठके 'उदीरयति' पाठः, यास्ककाले 'समीरयति' भवेत् ।

† 'धामच्छद् दिवा' क्वचित् पाठः ।

नयन्ति । यदा खलु वासावादित्योऽग्निं * रश्मिभिः पर्यावर्ततेऽथ वर्षतीति ॥

भा०—अथ चास्मिन् विषये ब्राह्मणमस्ति "अग्निर्वा इतो वृष्टिं समीरयति" (काठक सं० ११ । १०) तथा "तपोजा इति—अग्नेर्वै धूमो धूमादभ्रमभ्राद् वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति" (शत० ५ । ३ । ५ । १७) अस्मात् पृथिवीलोकाद् वृष्टिं प्रेरयति दिवि—आकाशे—उदकधान्नश्छदो मेघो दिवि भूत्वा यद्वा—उदकधान्नश्छादकमिव भूत्वा वृष्टिजलं वर्षति । मरुतश्च सृष्टां सम्पन्नां वृष्टिं नयन्ति नीचैरानयन्ति । अग्निर्वर्षति यदा वृष्टिजलं वर्षति । अग्निर्धूमच्छदिव भूत्वा तिष्ठति तमग्निं यदाऽसावादित्यो न्यङ् नीचै रश्मिभिः पुनः पृथिव्यां पर्यावर्तयति यद्वा वृष्टिजलं पर्यावर्तयति तदा मेघो वर्षति ॥

यथो एतद्रोहात् प्रत्यवरोहश्चिकीर्षित इत्याम्नायवचनादेतद् भवति ॥

भा०—(१) यथा खल्वेतदुक्तं यद् रोहात् प्रत्यवरोहः कर्तुमिष्टः, स वैश्वानरीयेण सूक्तेन, तत्र यद् वैश्वानरीयं सूक्तं गेयं भवति तत्खलु—आम्नायवचनाद् विधिवचनाद् भवति न तदनुकृतिमनुरूपतां लक्ष्यीकृत्य भवति यथा छान्दोग्ये "लोकेषु पञ्चविधं सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु । अथावृत्तेषु द्यौर्हिङ्कार...." (छान्दो २ । २ । १) द्यौर्निधनं पुनः पृथिवीनिधनमिति गानविधानादेव ।

यथो एतद् वैश्वानरीयो द्वादशकपालो भवत्यनिर्वचनं कपालानि भवन्त्यस्ति हि सौर्य एक कपालः पञ्चकपालश्च ॥

भा०—(२) यथा चैतदुक्तं यद् वैश्वानरीयो द्वादशकपालो द्वादशमासाः सूर्यस्य, कपालानि त्वनिर्वचनं न हेतुवचनं यतः सौर्य एककपालः पञ्चकपालश्चाप्युक्तः ।

यथो एतद् ब्राह्मणं भवतीति—बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति—पृथिवी वैश्वानरः संवत्सरो वैश्वानरो ब्राह्मणो वैश्वानर इति ॥

भा०—(३) यथा चैतदुक्तम् 'ब्राह्मणे वैश्वानर आदित्य उक्तः' इति, ब्राह्मणानि तु बहुभक्तिवादीनि बहुषु बहुविधां वा गौणप्रवृत्तिं वदन्ति—न ह्येकत्र निश्चित-

* 'अग्निम्' इत्यस्य स्थाने 'न्यङ्—अर्वाङ्' पाठः (काठक सं०)

प्रवृत्तिमन्ति तद्यथा "इयं पृथिवी वै वैश्वानरः" ( शत० १३ । ३ । ८ । ३ ) "संवत्सरो वैश्वानरः" ( शत० ५ । २ । ५ । १५ ) "एष वा अग्निर्वैश्वानरो यद्ब्राह्मणः" ( तै० ३।७।३।२ ) "क्षत्रं वै वैश्वानरः" ( शत० ६।६।१।७ ) ।

यथो एतन्निवित् सौर्यवैश्वानरी भवतीत्यस्यव सा भवति "यो विड्भ्यो मानुषीभ्यो दीदेत्" ( शा० श्रौ० सू० ८ । २२ । १, कौ० ब्रा० ५ । ८ ) इत्येष हि विड्भ्यो मानुषीभ्यो दीप्यते ॥

भा०—( ४ ) यथा चैतदुक्तं यत् खलु निवित् सौर्यवैश्वानरी सूर्यं वैश्वानरं मत्वा भवति–इत्यपि न, यतः सा निविदस्य पृथिवीस्थानस्याग्नेर्हि भवति तत्र स्पष्टं या खलु मानुषीभ्यः प्रजाभ्यो दीप्यते ।

यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैवैतद्भवति जमदग्निभिराहुत इति । जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो भवति ॥ २४ ॥

भा०—( ५ ) यथा चैतदुक्तं छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीति । अस्य पृथिवीस्थानस्याग्नेरेवैतद्भवति यतो जमदग्निभिराहुतः "वृषा पावक दीदिहि । अग्ने वैश्वानर द्युमत् जमदग्निभिराहुतः ।" ( आश्व० श्रौ० ८ । ९ ) जमदग्नयः प्रजमिताग्नयः प्रजमिता हविष्प्रदानेन भोजिता अग्नयो येषां ते नित्यं येऽग्नये हविर्भुजे हवींषि प्रयच्छन्ति तैर्नित्याग्निहोतृभिः "जमु अदने" ( भ्वादि० ) ततः 'अतिः' प्रत्ययो बाहुलकादौणादिको यद्वा शतृप्रत्ययो भूते । यद्वा प्रज्वलिताग्नयः "जमत्–ज्वलतो नाम" ( निघं० १ । १७ ) । तैराहुतः । इति स्पष्टं जातं यदग्नेरेव छान्दोमिकं सूक्तं कर्म वा ॥

यथो एतद्धविष्पान्तीय सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद् भवति—

"ह॒वि॒ष्पान्त॑म॒जरं॑ स्व॒र्विदि॑ दि॒वि॒स्पृश्याहु॑तं॒ जुष्ट॑म॒ग्नौ ।
तस्य॒ भर्म॑णे॒ भुव॑नाय दे॒वा धर्म॑णे॒ कं स्व॒धया॑ पप्रथन्त ॥"
( ऋ० १० । ८८ । १ )

हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्य इममग्निमन्नेनापप्रथन्तेति ॥ २५ ॥

भा०—( ६ ) यथा चैतत् खलु हविष्पान्तीयं सूक्तं सौर्यवैश्वानरमुक्तं तद्-प्यस्य पृथिवीस्थानस्याग्नेरेव भवति । तद्यथा "हविष्पान्तम्....।"

मन्त्रार्थः—

हविष्पान्तं हविर्यत्पानीयम् "पा पाने" ( भ्वादि० ) ततः "जृविशिभ्यां झच्" ( उणा० ३ । १२६ ) धातोर्बाहुलकात् 'झच्' प्रत्ययः कर्मणि "झोऽन्तः" ( अष्टा० ७ । १ । ३ ) अजरं संसारे गतिशीलं प्रसरणशीलं स्वर्विदि सूर्यविदि यः स्वः सूर्यं विन्दते प्राप्नोति "विद्लृ लाभे" ( तुदादि० ) क्विपि रूपम् । अग्नेरूर्ध्वज्वलनधर्मित्वात् "स्वरादित्यो भवति" ( निरु० २ । १४ ) तस्मिन् तथा दिविस्पृशि दिवमाकाशं स्पृशति हविषा तस्मिन्नग्नावाहुतम् । तस्याग्नेर्भर्मणे भरणाय "भृञ् भरणे" ( भ्वादि० ) ततः "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४५ ) भावे मनिन् प्रत्ययः । भुवनाय भवनाय च "भू सत्तायाम्" ( भ्वादि० ) ततः 'भूसूधूभ्रस्जिभ्यश्छन्दसि—क्युन् भावे" ( उणा० २ । ८१ ) गुणनिषेधे—उवङादेवः । भावनाय भावयितुं भावं प्रापयितुं भावाय स्वधारणाय—एवैतेभ्यः सर्वेभ्यः कर्मभ्यः स्वधयाऽन्नेन "स्वधाऽन्ननाम" (निघं० २।७) इमं पार्थिवमग्निमपप्रथन्त प्रवर्धयन्ति ॥

अथाप्याह—

"अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् । आ दूतो अग्निमभरद् विवस्वतो वैश्वानरं मातरिश्वा परावतः ॥" ( ऋ० ६ । ८ । ४ )

अपामुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वागृह्णत माध्यमिका देवगणा विश इव राजानमुपतस्थुर्ऋग्मियमृग्मन्तमिति वार्चनीयमिति वा पूजनीयमिति वाहरद्य दूतो देवानां विवस्वत आदित्याद्विवस्वान् विवासनवान् प्रेरितवतः परागताद्वापि वास्याग्नेर्वैश्वानरस्य मातरिश्वानमाहर्तारमाह । मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वा ॥ २६ ॥

भा०—अथापि मन्त्र आह यत् "अपामुपस्थे...."

मन्त्रार्थः—

अपामुपस्थे—उपस्थाने यस्मिन्नापः सूक्ष्मीभूता ऽयासा उपतिष्ठन्ते तस्मिन्-अन्तरिक्षलोके महिषा महति, यद्वा महिषा महान्तो माध्यमिका देवगणा मरुतो

स्त्रा इत्येवमाम्नाय आसीना वर्तमाना विश इव राजानं यथा प्रजाजनाः खलु राजानमगृभ्णत गृह्णन्ति प्राप्नुवन्ति तथा–ऋग्मियमृग्मन्तं स्तुतिमन्तं यद्वा अर्चनीयं वा पूजनीयं वा वैश्वानरमुपेत्य तिष्ठन्ति, दूतो मातरिश्वा–मातरिश्वा यो मातरि–अन्तरिक्षे श्वसिति गच्छति, आश्वनिति–आशु–अनिति क्षिप्रमनिति गच्छति "अनिति गतिकर्मा" ( निघं० २ । १४ ) स वायुर्विवस्वतो विवासनवतोऽन्धकारनाशनशक्तिमतः परावतः प्रेरितवतः प्रेरयतो विवस्वत आदित्याद् यद्वा परागताद् दूरगतादादित्यादाभरत्–आहृतवान् आहरति ।

निरुक्तयः—'ऋग्मियम् इति' 'ऋच्' शब्दान्मत्वर्थीयः "वाचो ग्मिनिः" ( अष्टा० ५ । २ । १२४ "बहुलं छन्दसि" ( अष्टा० ५ । २ । १२२ ) ऋचोऽपि ग्मिनिः–ऋग्मिन्–ऋग्मी, पुनः 'अमि' सुपि 'ऋग्मिन्–अम्' सर्वनामस्थानेऽपि पदसंज्ञा छान्दसी, पदत्वान्नकारलोपः, इयङादेशश्चापि छान्दसः–ऋग्मियम् । अथवा मियः कृत्यप्रत्ययश्छान्दसः, तदा–ऋग्मियं स्तुत्यमर्चनीयं पूजनीयं वा "ऋच स्तुतौ" ( तुदादि० ) "महिषः–महन्नाम" ( निघं० ३ । ९ ) इत्येतत्–अन्तरिक्षे माध्यमिकानां देवगणानां च विशेषणत्वेन यास्को व्याख्यातवान्, महति–अन्तरिक्षे, तदा ङिस्थाने जसूप्रत्ययो मतस्तेन सुपां सुपो भवन्तीत्याश्रित्य, महान्तो माध्यमिका देवगणाः–यथापठितं बहुवचने, उभयथापि सकारान्तं जसन्तं वा 'महिषाः' इति पदं न कस्मिश्चित् पक्षे–आकारान्तं पदम्, आकारान्ते सति सन्धिना भवितव्यं सन्धेरभावान्नूनं सकारान्तं पदं महिषाः–इति । 'परावतः' प्रेरितवतः, अर्थप्रदर्शनम् 'परा' उपसर्गस्य स्थाने 'प्र' इति प्रयोगः । समानार्थौ हि 'प्र, परा' उपसर्गौ, उक्तं हि "आ इत्यर्वागर्थे प्र परा–इत्येतस्य प्रातिलोम्यम्" ( निरु० अ० १ । पा० १ । ख० ३ ) परापूर्वकात् "वी गत्याविषु" ( अदादि० ) 'अतिः' औणादिको भूते बाहुलकाद् डित्–च । परावत् प्रेरितवान् पञ्चम्यां परावतः । द्वितीयपक्षे "परावतः–दूरनाम" ( निघं० ३।२६ ) तदा 'परा' उपसर्गाद् गतार्थे वतिः प्रत्ययः "उपसर्गाच्छन्दसि धात्वर्थे–वतिः" ( अष्टा० ५ । १ । ११७ ) परागतः–परावत् ततः परावतः । 'मातरिश्वा' माताऽन्तरिक्षं मेघा अत्र निर्मीयन्ते यस्मात् तस्मिन् मातरि–अन्तरिक्षे श्वसिति–श्वासं गृह्णातीव चलति यद्वा प्राहयति स मातरिश्वा, मातरि शब्दोपपदे श्वसधातोः कनिन् प्रत्ययो निपात्यते डित्, यद्वा मातरिशब्दोपपदे–आशु शीघ्रार्थे "अन प्राणने" ( अदादि० ) ततोऽपि कनिन् प्रत्ययः–मातरिश्वा ।

अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति ।

"मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रात-

रुद्यन्। मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन्॥" (ऋ० १० । ८८ । ६)

मूर्धा मूर्त्तमस्मिन् धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् स एव प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसम्पादिनामपो यत्कर्म चरति प्रजानन् सर्वाणि स्थानान्यनुसञ्चरते * त्वरमाणः ॥ २७ ॥

भा०—अथ पुनरेनमग्निमेताभ्यामृग्भ्यां वक्ष्यमाणाभ्यामनन्तरं निर्देश्यमानाभ्यां सर्वाणि स्थानानि पृथिव्यन्तरिक्षद्यु स्थानानि प्रति 'अभि' प्रतेरर्थे, आपादम्—आसेव्यमानं स्तौति प्रशंसति वर्णयति, 'आपादम्' इति णमुलप्रत्ययान्तः प्रयोगः "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" (अष्टा० ३ । ४ । ५६ ) "मूर्धा भुवो····" इति ।

मन्त्रार्थः—

अग्निर्वैश्वानरो नक्तं रात्रौ भुवः सर्वेषां भूतानां मूर्धा 'मूर्त' इत्युपपदात् "धा धारणे" ततः कनिन् ( उणा० १ । ५९ ) निपात्यते 'मूर्त' इत्यस्य तकारलोपः । मूर्तं शरीरं तदाधारत्वान्मूर्धनः, मूर्धा शिरः शिरोवद्धार्यो भवति यतो मूर्धानमन्तरा म्रियन्ते भूतानि तस्मान्मूर्धा सोऽग्निः । ततः पश्चाद् दिने प्रातः—उद्यन् सूर्यो जायते सूर्यनामतः प्रसिद्धो भवति स एवाग्निः । पुनश्च प्रजानन् प्रज्वलन् सन् "ज्ञोऽविदर्थस्य करणे" ( अष्टा० २ । ४ । ५१ ) अपः कर्म "अपः कर्मनाम" ( निघं० १ । १२ ) तूर्णिः क्षिप्रं चरति सर्वाणि स्थानान्यनुसञ्चरति यतस्तस्मादाश्चर्येणैषां यज्ञियानां यज्ञसम्पादिनां यैर्यज्ञः सम्पन्नो भवति तथाभूतानां देवानामग्न्यादीनां मायां प्रज्ञां ज्ञानप्रक्रियामेतां मन्यन्ते मननं कुर्वन्ति—अग्निविद्याया अध्येतारः ॥

तस्योत्तरा भूयसे निर्वचनाय—

"स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम्। तमू अकृण्वंस्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः॥" ( ऋ० १० । ८८ । १० )

स्तोमेन हि य दिवि देवा अग्निमजनयञ्छक्तिभिः कर्म-

* 'सञ्चरति' क्वचित् पाठः ।

भिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः ॥

भा०—तस्याग्नेर्विषये भूयसे निर्वचनायाग्निमा खल्वृगस्ति पूर्वस्यां द्वयोः स्थानयोरेवाग्नेर्वर्तमानत्वमासीदस्यां तस्य स्थानत्रयवर्तित्वं विद्यते "स्तोमेन....." इति ।

मन्त्रार्थः—

आरम्भसृष्टौ सर्वप्रथमं प्रकटीभूता देवाः समस्तायाः सृष्टेः प्राणास्तन्मात्रात्मका भूतसूक्ष्माः "प्राणा देवाः" ( शत० ६ । ३ । १ । १५ ) "इन्द्रे सुवानासु इन्दवः" ( ऋ० ८ । ३ । ६ ) दिवि द्योतनात्मके स्वर्णमये ब्रह्माण्डे स्तोमेन प्रतिधिना परस्परसंघर्षेण "स्तोमा आसन् प्रतिधयः" ( ऋ० १० । ८५ । ८ ) "स्तोमो वै तरः" ( ता० ११।४।५ ) तरो बलं संघर्षबलम् "तरः–बलनाम" ( निघं० २ । ९ ) अग्निमजीजनन्–अजनयन् पुनस्तं शक्तिभिः कर्मभिः "शक्तिः कर्मनाम" ( निघं० २ । १ ) रोदसिप्रामकृण्वन्–द्यावापृथिव्योः पूरयितारमकुर्वन् त्रेधा भुवे त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवि च, इति शाकपूणिः कथयति । शाकपूणेर्नाम स्वमतेऽन्यस्य वचनप्रदर्शनं स्वमतपोषणाय । स चाग्निः सर्वविधा ओषधीः पचति ॥

यदस्य दिवि तृतीयं तदादित्य इति हि ब्राह्मणम् ।
तदग्नीकृत्य स्तौति ॥ २८ ॥

भा०—अस्याग्नेर्यद् दिवि तृतीयं रूपं कृतवन्तस्तत्खल्वादित्योऽस्ति । तदग्नीकृत्याग्निं मत्वा वर्णयति ।

अथैनमेतयादित्यीकृत्य स्तौति—

"यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन् भुवनानि विश्वा ॥" ( ऋ० १० । ८८ । ११ )

यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमादितेयमदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च । मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा, थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा, समाश्रितावन्योऽन्यं नयतो वनुतो वा । मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योऽन्यं वनुत इति वा ॥ २९ ॥

भा०—अथ पुनरेनमग्निमादित्यं मत्वा स्तौति वर्णयति "यदेदेनमदधु....."

मन्त्रार्थः—

यदा यज्ञियाः सृष्टियज्ञसम्पादिनो दिवि हिरण्यमये ब्रह्माण्डे सर्वे देवाः—ते पूर्वोक्तास्तन्मात्रात्मकाः प्राणाः—आदितेयम्—अदितिरत्र पृथिवीष्यते "अदितिः पृथिवीनाम" ( निघं० १ । १ ) आदितेयं पार्थिवमग्निं प्रसिद्धमग्निं सूर्यं कृत्वा सूर्यरूपे परिणम्य पिण्डं कृत्वा हिरण्यमये ब्रह्माण्डेऽदधुर्धारितवन्तः स्थापितवन्तः, यदा पुनः स्थापनकरणाद् द्वौ चरिष्णू सहचारिणौ मिथुनौ द्वावादित्यश्चोषाश्चाभूतां प्रादुरभूताम् । अनन्तरं हि द्वौ सर्वाणि भूतान्यपश्यन् ।

निरुक्तयः—मिथुनशब्दः "मिञ् प्रक्षेपणे" ( स्वादि० ) अत्र श्रयणेऽर्थे यास्कस्य विधानसामर्थ्यात् । ततः 'थुः' प्रत्ययः "ट्वितोऽथुच्" ( अष्टा० ३ । ३ । ८९ ) इति छान्दसोऽविहितोऽपि विकल्पेन सर्वं भवति । मिथू—आश्रयिणौ परस्परं पुनश्च मिथूपपदात् "णीञ् प्रापणे" ( भ्वादि० ) ततः 'डः' प्रत्ययः "अन्येष्वपि दृश्यते—अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३ । २ । १०१ ) परस्परमाश्रयिणौ—आश्रितौ—प्रापयितारौ परस्परं सुखं प्रापयितारौ मिथुनौ । अथवा मि पूर्ववदर्थे धातोः 'थः' प्रत्ययः "हनिकुषिनीरमिकाशिभ्य क्थन्" ( उणा० २ । २ ) धातुबाहुलकात् क्थन् प्रत्ययः—मिथः—मिथौ परस्परमाश्रितौ पुनः "वन सम्भक्तौ" ( भ्वादि० ) कः प्रत्ययस्तत्र सम्प्रसारणं छान्दसं परस्परमाश्रितौ पुनश्च वनुते च परस्परं सम्भजमानौ च । मनुष्यमिथुनावप्येतस्मादेव प्रकाराद् विज्ञेयः, अथवाऽन्योऽन्यं मेथन्तौ "मिथृ मेधाहिंसनयोः" ( भ्वादि० ) "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३ । १ । १३५ ) मिथौ परस्परं विलोडयन्तौ पुनः—वनधातोश्च पूर्ववत् । वनुतश्च परस्परं सम्भजेते च ॥

अथैनमेतयाग्नीकृत्य स्तौति—

"यत्रा वदे॑ते॒ अव॑रः पर॑श्च यज्ञ॒न्यो॑ः कत॒रो नौ॒ वि वे॑द ।
आशे॑कु॒रित्स॑ध॒माद॑ं सखा॑यो॒ नक्ष॑न्त य॒ज्ञं क इ॒दं वि वो॑चत् ॥" ( ऋ० १० । ८८ । १७ )

यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यतीति ॥ ३० ॥

भा०—अथैतमग्निं सवत्राग्निरूपेण वर्तमानं मत्वा वर्णयति ।

मन्त्रार्थः—

यत्र यस्मिन् काले यज्ञम्योर्यज्ञस्य नेत्रोर्मध्येऽवरोऽयमग्निः पार्थिवः परो मध्यमश्च दैव्यौ होतारौ न तु मनुष्यहोतारौ परस्परं विवदेते, प्रसङ्गादात्मनेपदत्वाच्च वदेते प्रयोगो विप्रलापे वर्तते, किं विवदेते, उच्यते—यज्ञौ—आवयोः कतरो विवेद यज्ञे—यज्ञविषये भूयो वेद—अधिकं वेद, इति ये सखायः समानख्याना ऋत्विजस्ते खल्वाशक्नुवन्ति—अत्र समर्थाः सन्ति । तेषां तत्सहमादं तत्सहमादनं सम्मिलितहर्षस्थानं यज्ञं नक्षन्त समश्नुवानानां सम्यग् "नक्षति व्याप्तिकर्मा" ( निघं० २ । १८ ) परन्तु तेषां को नोऽस्मान् विविच्य वक्ष्यति कथयिष्यति—इत्याकाङ्क्षा प्रदर्शिता ॥

तस्योत्तरा भूयसे निर्वचनाय—

"यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो॑ वसते मातरिश्वः ।
तावद् दधात्युप यज्ञमायन् ब्राह्मणो होतुरवरो निषीदन् ॥" ( ऋ० १० । ८८ । १९ )

यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वाऽस्युपमानस्य सम्प्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् ॥

भा०—तस्य पृथिवीस्थानस्याग्नेरग्रिमैषा खल्वृगधिकनिर्वचनाय, यतः पूर्वस्यां तु मध्यमो वायुरपि यज्ञविधानेऽनेन सह प्रदर्शितः, परन्त्वस्यां केवलः पार्थिवोऽग्निरेव प्रदर्शितः ।

मन्त्रार्थः—

हे मातरिश्वन् ! मातरि श्वसिति यस्तत्सम्बुद्धौ मातरिश्वन् वायो ! जीवात्मन् !, उषसः प्रतीकं प्रत्यक्तमस्मदभिमुखं व्यक्तत्वं यद्वा प्रतिदर्शनं पुनर्दर्शनं भवति यावन्मात्रं यावत्कालं न सम्प्रति तदैव, 'न' उपमार्थीयोऽत्र सम्प्रत्यर्थे वर्तते यथा 'इहेव निधेहि' इह सम्प्रति निधेहि । यद्वा सुपर्ण्यः सुपतनाः—रात्रयो वसते—उषसं छादयन्ति यावत्प्रकाशयेयुरित्यर्थः । तावत् तस्मिन् काले होतुस्तस्याग्नेर्होतुर्ज्योतिर्वर्णस्यावरो होता ब्राह्मणो मानवो होता वेद्यां निषीदन्—उपविशन् यज्ञमायन्—आगच्छन्—यज्ञमुपदधाति ।

एवमत्र यज्ञे विषीदता ब्राह्मणेन मानवेन होत्राऽऽहुतयोऽस्मिन् पार्थिवेऽग्नौ क्षिप्यन्ते हूयन्ते—इति स्पष्टवर्णनमस्ति वैश्वानरीये सूक्तेऽत्र, तस्माद् वैश्वानर-शब्देन पार्थिवोऽग्निरेव गृह्यते। यज्ञविधेरनन्तरं यज्ञधूमो मध्यमे स्थाने गच्छति तत्र गमने मध्यमदेवाय ता आहुतयो दत्ता इति न कल्पयितुं युज्यते तस्माद्यज्ञ-सम्बन्धः प्रत्यक्षं पार्थिवाग्निना साकमेव। तत्र यज्ञे को देवो मुख्यः को वा गौण इति नावसरोऽग्निरेवेष्टदेवो यज्ञे॥

होतृजपस्त्वनग्निर्वैश्वानरीयो भवति, देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणेतीममेवाग्निं सवितारमाह सर्वस्य प्रसवितारं मध्यमं वोत्तमं वा पितरम्॥

भा०—होतृजपस्तु भवत्यनग्निः स च वैश्वानरीयो भवति "देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण" (ऐ० ब्रा० २।५।५) हे सवितर्देव! त्वामग्निं वृणते होतारः पित्रा वैश्वानरेण सह होत्राय। अत्रेममग्निं पार्थिवं सवितारमाह सर्वस्य प्रसवितारम्, मध्यममुत्तमं वा पितरमत्राह। इति-पूर्वपक्षत्वेनोक्तम्।

उत्तरम्—

यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्नि-र्वैश्वानरः। निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते भजेते॥ ३१॥

भा०—भवतु होतृजपे पार्थिवाद् भिन्नो वैश्वानरः, परन्तु यस्तु सूक्तं भजते सूक्तभाक् तथा यस्मै हविः समर्प्यते हविर्भाक् स्वयमेव पृथिवीस्थानकोऽग्निर्वैश्वा-नरो नाम्यः। यद्यपि पूर्वमनेकमन्त्रेषु साधितं यद् विश्वानरो मध्यमो विद्युदेव उत्तमो वादित्यः—ताभ्यामुत्पन्नो वैश्वानरोऽयं पार्थिवोऽग्निः। अत्र होतृजपे न भवतु वैश्वानरोऽग्निः परन्तु सूक्तभाक्, हविर्भाक् तु पृथिवीस्थानोऽग्निरेवेति सिद्धान्तः। उत्तरे ज्योतिषी निपाते गौणे—एव स्तः, नामधेयेनैव व्यवह्रियेते नामभागिन्यौ हि ते मध्यमोत्तमे देवते। द्विरुक्तिरध्यायसमाप्त्यर्था॥

इति सप्तमाध्याये सप्तमः पादः।

सप्तमोऽध्यायश्च समाप्तः।

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

---

# अथाष्टमोऽध्यायः

## तत्र

## प्रथमः पादः

---

द्रविणोदाः ॥ १ ॥

द्रविणोदाः कस्मात्? धनं द्रविणमुच्यते यदेनदभिद्रवन्ति, बलं वा द्रविणं यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः। तस्यैषा भवति—

"द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे।
यज्ञेषु देवमीळते॥" (ऋ० १।१५।७)

द्रविणोदा यस्तम्। द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्तस्मात् पिबत्विति वा यज्ञेषु देवमीळते। याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा ॥ १ ॥

भा०—'द्रविणोदाः' इति पृथिवीस्थानदेवताया नामपदम्। कस्मात्—कथमित्युच्यते—द्रविणं धनं भवति "द्रविणं धननाम" (निघं० २।१०) यत एनत् प्राप्तुमभिद्रवन्ति—अभिगच्छन्ति जनाः। तथा च द्रविणं बलं भवति "द्रविणं बलनाम" (निघं० २।९) यतोऽनेनाभिद्रवन्ति जनाः कार्यं साधयितुम्। उभयत्रार्थयोः "द्रु गतौ" (भ्वादि०) "द्रुदक्षिभ्यामिनन्" (उणा० २।५१) कर्मणि करणे च यथाक्रमम्। इनन् प्रत्ययः। द्रविणमेव द्रविणस् सकारोपजनश्छान्दसः। तस्य दाता द्रविणोदाः। स च द्विधा साध्यः 'द्रविणस्' उपपदे दा धातोः "सर्वधातुभ्योऽसुन्" (उणा० ४।१८९) 'द्रविणोदाः' सकारान्तः—इत्येकः प्रकारः। 'द्रविणस्' उपपदे दा धातोः "आतो मनिन्क्वनिब्वनिपश्च" (अष्टा० ३।२।७४) चकाराद् 'विच्' प्रत्ययः—इत्याकारान्तः। उभयथा प्रयोगा उपलभ्यते तद्यथा—"अयमेवाग्निर्द्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसः (साः?) मवादा भवन्ति।" (निरु० अ० ८। खं० २) इति सकारान्तः। "देवा अग्निं धारयन् द्रविणोदाम्।" (निरु० अ० ८। खं० २) इत्याकारान्तः। तस्माद् दा धातोः क्विप्प्रत्ययान्तसाधनं

सायणस्य दासृधातोः क्विप्प्रत्ययान्तसाधनं पण्डितचन्द्रमणेश्चाशुद्धम् । तस्य 'द्रविणोदाः' पदस्य "द्रविणोदा द्रविणसो....." इत्यृगस्ति ।

मन्त्रार्थः—

यो द्रविणोदाः ( Atomic Energy ) द्रविणस्य धनस्य बलस्य वा दाताऽस्ति तम्, "सुपां सुलुक्....." इति–'अम्' स्थाने सुः । ग्रावहस्ताः–ग्रावाणः पाषाणविशेषाः–हस्तेषु येषां ते द्रविणसः–द्रविणं धनं बलं वा सीदन्ति प्राप्तुमिच्छन्तीति तच्छीलाः, यद्वा ये द्रविणं धनं बलं वा सम्भजन्तीति तच्छीलास्ते–ऋत्विजः शिल्पिनो वैज्ञानिकाश्चाध्वरेऽहिंसनीये होमयज्ञे तथा यज्ञेषु–अन्येषु श्रेष्ठकर्मसु शिल्पविज्ञानादिप्रसङ्गेषु देवं पूर्वोक्तं 'द्रविणोदाः' इत्याख्यमीडते याचन्ति, इच्छन्ति, स्तुवन्ति, वर्धयन्ति, पूजयन्ति वा । यद्वा द्रविणोदाः–देवः स द्रविणसः–बलं धनं वा यद् द्रविणस्–द्रविणं द्रवीभूतं रसभूतं धनं बलं वा तस्माद् यावरुद्धवयमंशं पिबतु योग्यक्रियाया अध्याहारः । यं खलु विद्वांसः–ईडते, याचन्ते, इच्छन्ति, स्तुवन्ति–इति पूर्ववत् ॥

निरुक्तिः—'द्रविणसः' द्रविणशब्दोपपदात् सद्धातोर्गत्यर्थात्, यद्वा "षण सम्भक्तौ" ( भ्वादि० ) इत्यस्मात् "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१–अन्येभ्योऽपि ) इति डः प्रत्ययः 'द्रविणसः' प्रथमाबहुवचनम् । 'यद्वा द्रविणस्' इत्यस्य पञ्चम्यां रूपम् । ॥

तत्को द्रविणोदा इन्द्र इति क्रौष्टुकिः । स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिः "ओजसो जातमुत मन्य एनम्" ( ऋ० १० । ७३ । १० ) इति चाह ॥

भा०—अथ खलु विचार्यते कोऽयं द्रविणोदा धनबलयोर्दातेति । इन्द्रो द्रविणोदा इति क्रौष्टुकिर्नैरुक्तो मन्यते, यतः स धनस्य बलस्यातिशयेन दाता, संसारे सर्वा हि बलकृतिः–बलक्रिया तस्येन्द्रस्यास्ति ।

समग्रमन्त्रस्तदर्थश्च—

अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।
मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥

अश्वात् "कालोऽश्वो वहति सप्तरश्मिः" ( अथर्व० १९ । ५३ । १ ) कालचक्रात्, यद्वा "असौ वा आदित्योऽश्वः" (तै० ३ । ९ । २३ । २) आदित्यात्–इयाय–उदियाय–उद्भवति, इन्द्रो विद्युद्देवो यतो वदन्ति, उतैनमिन्द्रं विद्युद्देवमोजसो वेगात् संवेगादुदकसंवेगतस्तद्वारासंघर्षादुत्पन्नं मन्ये । मन्योः–वधकाला-

वियायोदियाय–उद्गच्छति "मन्युर्मन्यतेर्दीप्तिकर्मणो वा मन्यन्त्यस्मादिषवः" ( निरु० १० । २९ ) इर्म्येषु युद्धेषु यत्रान्योऽन्यस्य प्राणान् हरति तेषु युद्धेषु तदा स्थितो भवति, युद्धेषु प्रहारकाणां परस्परं प्रपाताद्विद्युदुत्पद्यते । त्रिषु प्रकारेषु यतः प्रजज्ञे प्रजात इन्द्रो विद्युद्देवः, अस्य–इमं वेद स विद्वान्, इति शेषः ॥

अन्यो हेतुरत्रैव—

अथाप्यग्निं द्राविणोदसमाहैष पुनरेतस्माज्जायते ।

"यो अश्मनोरन्तरग्निं जजान" ( ऋ० २ । १२ । ३ )

इत्यपि निगमो भवती ॥

भा०—अथ च–अग्निं द्राविणोदसं मन्त्रः कथयति स चाग्निरिन्द्राद् विद्युतो जायते ।

समग्रमन्त्रस्तदर्थश्च—

यो हत्वाहिमरिणात् सप्तसिन्धून् यो गा उदाजदपधा बलस्य ।

यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥

य इन्द्रोऽहिं मेघं हत्वा सप्तसिन्धून् सृप्तान् प्रसरणशीलान् सिन्धून् स्यन्दमाना जलधाराः–अरिणात्–गमयति प्रेरयति नीचैः । बलस्य मेघस्य–अपधा तिरस्कर्ता भूत्वा गाः सूर्यरश्मीन्–उदाजत्–उदगमयत्–उदधरत्–उद्धरति यश्चाश्मनोः पाषाणखण्डयोरन्तरे वर्तमानमग्निं तयोः संघर्षेण जनितवान् जनयति समत्सु संग्रामेषु यः सम्यक् प्राणेभ्यो जनान् संवृक् संवर्जयति हे जनाः! स इन्द्रः ।

अत्र–इन्द्रादग्निर्जातः, तस्माद् द्रविणोदा इन्द्रः ।

अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति । तेषां पुनः पात्रस्येन्द्रपानमिति भवति ॥

भा०—अथ च–ऋतवो यैर्मन्त्रैरिज्यन्ते तेषु द्राविणोदसाः–द्रविणोदस्–शब्दयुक्ताः प्रवादाः कथनप्रसङ्गा भवन्ति । तेषां पात्रस्य–इन्द्रपानं भवति । ऐतरेयब्राह्मणे "इन्द्र इत् सोमपा एकः, इन्द्र पिब तुभ्यं सुतः" इति प्रकृत्य– "ऋतुयाजान् यजन्ति···तदाहुर्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्यम् ।" ( ऐ० ब्रा० २२ । ४ ) ऋतुयाजमन्त्रेषु येषु 'द्रविणोदाः' शब्दः प्रयुज्यन्ते ते मिलाश्चत्वारः सन्ति—

मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।

तस्मा एतं भरत तद्वशो ददिर्होत्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥

यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।
अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥
मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन् वीळयस्वा वनस्पते ।
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥
अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥

( ऋ० २ । ३७ । १-४ )

एष्वृतुयाजेषु मन्त्रेषु 'द्रविणोदाः' शब्देन युक्ताः प्रवादाः सन्ति 'ऋतुभिः पिब सोममिति' होत्रपोत्रनेष्ट्रामृक्तानि चत्वारीन्द्रपात्राणि, तेन द्रविणोदाः—इन्द्र इति प्रतिभाति ॥

अथाप्येनं सोमपानेन स्तौति ।

भा०—अथ चैनं द्रविणोदसं सोमपानेन स्तौति वर्णयति मन्त्रः, सोमपानं खल्विन्द्रस्य सर्वत्र विधीयते । 'मन्दस्व' इत्यादिः प्रत्येकमन्त्रः पूर्वोक्तस्तत्र "सोमं द्रविणोदः पिब ऋतुभिः" ॥

अथाप्याह "द्रविणोदाः पिबतु द्राविणोदसः" ।
( ऋ० २ । ३७ । ४ ) इति ॥

भा०—पुनश्च 'द्रविणोदाः पिबतु' इति पृथक् 'द्राविणोदसः' तदुद्भवो द्रविणोदसो जातश्च भिन्नः, स चाग्निः, तस्मादग्नेर्भिन्नोऽग्नेरुत्पत्तिकारणं द्रविणोदाः—इन्द्रो विद्युद्देव एव विद्युतोऽग्निर्जायतेऽपि । तस्माद् द्रविणोदाः—इन्द्र इति कौष्टुकेः पक्षः पूर्वपक्षत्वेनोद्धृतः ।

उत्तरपक्षः—

अयमेवाग्निर्द्रविणोदा इति शाकपूणिः । आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति । "देवा अग्निं धारयन् द्रविणोदाम् ।" ( ऋ० १ । ९६ । १ ) इत्यपि निगमो भवति ॥

भा०—अयं पृथिवीस्थानोऽग्निरेव द्रविणोदाः—इति शाकपूणिर्नैरुक्तो मन्यते, आचार्यस्य नामग्रहणं तत्सत्कारार्थं नैरुक्तपक्षस्य स्थापनम्, यदाग्नेयेषु सूक्तेषु हि 'द्रविणोदाः' इति नामतः कथनप्रसङ्गा भवन्ति, अग्निर्द्रविणोदाः—इति चोक्तमस्ति मन्त्रे ।

समग्रमन्त्रस्तदर्थश्च—

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा।
आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदाम्॥

स प्रत्नथा प्रत्न इव पुरातन इव नूतनोऽपि सन् सहसा निजबलेन प्रसिद्धः सन् सद्योऽविलम्बेन विश्वानि सर्वाणि काव्यानि कवेः क्रान्तानि कर्माणि दिव्यानि कर्माणि यानि मानवैर्न कर्तुं शक्यन्ते तानि कर्माणि यन्त्रप्रयुक्तानि यद्वयन्त्र-प्रयुक्तानि च बडधत्त-आभिमुख्येन साक्षाद् धारयति। "वट्-आभिमुख्ये" (अव्ययार्थशास्त्रम्) तस्मान्न केवलं पृथिव्यामेवास्य काव्यानि बलकर्माणि, स तु पुरातनः-पृथिव्यां नूतनोऽपि पुरातन इव। अपितु तं द्रविणोदां पृथिव्यां बलस्य धनस्य दातारमग्निं खल्वापः, मित्रं मित्रः सूर्यो धिषणा वाक् च माध्यमिका देवाः साधन् स्वस्वरूपं साधयन् धारयन्ति। यद्वा विभक्तिव्यत्ययेन-आपोऽपो जलानि वृष्टिजलानि मित्रं प्राणं जीवनं धिषणा वाचं विद्यां च साधन् साधयन् साधनाय देवा विद्वांसो द्रविणोदां धनस्य दातारमग्निं (Atomic Energy) धारयन्ति-अधीयते॥

पूर्वपक्षस्य हेतवो निराक्रियन्ते—

यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं विद्यते॥

भा०—इन्द्रस्य द्रविणोदस्त्वे बलधनयोर्दातृतमत्वमकारणं खलु यतः सर्वासु देवतासु ह्यनयोर्योगो भवति तदेतत्सामान्यं भवति। 'देवो दानाद्वा' इत्युक्तं हि दातृत्वं सामान्यधर्मः, मनुष्याश्च देवताभ्यो बलधने प्राप्तुं वाञ्छन्ति तस्मात् तैर्मन्यन्ते देवाः स्तूयन्ते च। "अग्निना रयिमश्नवत् पोषमेव दिवे दिवे। यशसं वीरवत्तमम्॥" (ऋ० १।१।३) "बलमसि बलं मयि धेहि" (यजु० १९।९)

यथो एतद् 'ओजसो जातमुत मन्य एनम्' इति चाहे-त्ययमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेन-माह सहसस्पुत्रं सहसः सूनुं सहसो यहुम्॥

• यथा चोक्तम् "ओजसो जातमुत मन्य एनम्" (ऋ० १०।७३।१०) इति, अयमग्निरपि त्वोजसा बलेन मथ्यमानोऽरणीभ्यां जायते अत एवाग्निं सहसः पुत्रं सहसः सूनुं सहसो यहुं मन्त्रः कथयति।

तद्यथा—

"द्रुवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥"
(ऋ० २ । ७ । ६)

द्रुः काष्ठमन्नं यस्य स द्रुवन्नः काष्ठभोजनः सर्पिः–घृतमासुतिरासवः पानं यस्य सोऽग्निः पुरातनो वरेण्यो होता–अद्भुतः सहसो बलस्य पुत्रः ।

"त्वं ह यद् यविष्ठ्य सहसः सूनवाहुतः । ऋतावा यज्ञियो भुवः ॥"
(ऋ० ८ । ७५ । ३)

हे यविष्ठ्य युवतम ! अग्ने ! यस्त्वं सहसो बलस्य सूनो ! आहुतः सत्यवान् यज्ञियो भवसि ।

"अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥" (ऋ० १ । ७९ । ४)

हे सहसो यहो ! बलस्य पुत्र ! अग्ने ! त्वं गवादिधनयुक्तस्यान्नस्येशानोऽसि । जातवेदोऽग्ने ! अस्मभ्यं महि मच्छ्रवोऽन्नं धेहि ॥

यथो एतदग्निं द्राविणोदसमाहेत्यृत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति ।
"ऋषीणां पुत्रो अधिराज एषः" (मै० सं० १ । २ । ७)
इत्यपि निगमो भवति ॥

भा०—यथा चोक्तमेतमग्निं द्राविणोदसं मन्त्रः कथयति । ऋत्विजोऽत्र द्रविणोदसः–उच्यन्ते ते हविषां दातारो हविर्भिरग्निमुत्पादयन्ति तस्मादग्निर्द्राविणोदसः । अथ ऋषीणां पुत्रोऽग्निरुक्तोऽपि मन्त्रेऽन्यत्र ।

समग्रमन्त्रस्तदर्थश्च—

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो * अधिराज एषः ।

तस्मै विधेम हविषा घृतेन मा देवानां यूयुयाम भागधेयम् ॥

अग्नौ–आहवनीयेऽग्नौ प्रविष्टः खल्वन्योऽग्निर्दक्षिणाग्निर्मन्त्रैः प्रज्वलितश्चरति निरन्तरं प्रवर्धते स खल्वृषीणां मन्त्रज्ञानामृत्विजां विदुषां पुत्रस्तैः सम्पादितत्वात् । एषोऽग्निरधिराजोऽधिराजमानो भवति यज्ञे विदुषां पुत्रस्तैः सम्पादितत्वात् ।

---

* चिह्नात् पूर्वभागो यजुर्वेदे । तदग्रे तु "अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥" (यजु० ५ । ४) "अभिशस्तिपा उ । नमस्कारेण नमसा ते जुहोमि मा देवानां मिथुया कर्मभागम् ॥" (अथर्व० ४ । ३९ । ६) यास्कस्यानुकूल्यं मैत्रायणीपाठेऽस्तीति प्रतीयते ॥

एषोऽग्निरधिराजोऽधिराजमानो भवति यज्ञे विदुषां मध्ये च तस्मै सत्यमयये मन्त्रसिद्धायाग्नये हविषा घृतेन च विधेम यज्ञमनुतिष्ठेम । वयं देवानां भागधेयं मा न कदापि यूयुयाम लोलुपाम ॥

यथो एतत् तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं तद्भवति । यथा वायव्यनीति सर्वेषां सोमपात्राणाम् ॥

भा०—यथा चैतदुक्तमृतुयाजेषु मन्त्रेषु यत्र 'द्रविणोदाः' प्रवादाः सन्ति तत्र–इन्द्रपानं नाम पात्रस्य नामविधौ प्रसिद्धीकृतम् । तत्खलु भक्तिमात्रं गौणमेव प्रशंसार्थं पानस्य पानपात्रस्य वा, यथा च सर्वेषां सोमपात्राणां वायव्यानि पात्राणि–इति प्रसिद्धीकृतानि नामानि । वेदे वायोरपि सोमपानमुच्यते "वायवा याहि दर्शतेमे सोमा अरङ्कृताः । तेषां पाहि...." ( ऋ० १ । २ । १ ) ॥

यथो एतत् सोमपानेनैनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते "सोमं पिब मन्दसानो गणश्रिभिः" ( ऋ० ५।६०।८ ) इत्यपि निगमो भवति ॥

भा०—यथा चैतदुक्तं यत् सोमपानेनैनं 'द्रविणोदसम्' स्तौति, इन्द्रः सोमं पिबति तस्माद् 'द्रविणोदाः–इन्द्रः' इति, सोमपानं त्वस्मिन् पार्थिवेऽग्नावप्युपपद्यते–सम्भवति । उक्तं हि मन्त्रे "सोमं पिब मन्दसानो...." ।

समग्रमन्त्रस्तदर्थश्च—

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥

अग्ने वैश्वानर ! त्वं शुभयद्भिः शोभयितृभिः–ऋक्वभिः स्तोतव्यैः प्रशंसनीयैर्गणश्रिभिर्गणमाश्रयद्भिः सम्मिलितैः पावकैः शोधयितृभिर्विश्वमिन्वेभिः–विश्वं व्याप्नुवद्भिः–आयुभिरयनैर्गमनशीलैर्मरुद्भिः–रश्मिभिरर्चिभिर्ज्वालाख्यैः "मरुतो रश्मयः" ( ता० १४ । १२ । ९ ) प्रदिवा केतुना सदातनेन प्रज्ञानेन प्रज्ञापनेन प्रेरणेन च सजूः सहयुक्तो मन्दसानो हर्षं विकासमाप्नुवन् तदर्थं सोमं पिब ॥

यथो एतद् 'द्रविणोदाः पिबतु द्राविणोदसः' ( ऋ० २ । ३७ । ४ ) इत्यस्यैव तद् भवति ॥

भा०—यथा चैतदुक्तं यद् ऋतुयाजमन्त्रे "द्रविणोदाः पिबतु द्राविणोदसः" द्रविणोदाः–इन्द्रः, द्राविणोदसः–इन्द्रादुत्पन्न इन्द्रस्य पुत्रोऽग्निश्च पिबतु–इत्यत्र द्रविणोदाः–इन्द्रः । इत्यत्रापि द्रविणोदाः–अग्निरेव । न हि द्रविणोदसो

भिन्नो द्राविणोदसः, द्रविणोदसः—ऋत्विजस्तेभ्यो जातो द्राविणोदसोऽग्निः । द्रविणोदाः—अग्निः, द्रविणोदोभ्यः—ऋत्विग्भ्यो जातः सन् द्राविणोदसः ।

समग्रमन्त्रस्तदर्थश्च—

अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।

तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥

द्राविणोदसः—ऋत्विजो द्रविणोदसो हविषां दातारस्तैः सम्पादितो जनित उत्पादितो द्रविणोदाः—अग्निः—धनस्य बलस्य सुखस्य दाता होत्रात् पात्रात्—होमीयपात्रात् "हुयामाश्रुभसिभ्यस्त्रन्" ( उणा० ४ । १६८ ) पूञ् धातोरपि त्रन् धातोर्बाहुलकात्—पोत्रम् । प्रयः स्वकीयं हविरन्नं हितमस्माकं हितकरमपात् पिबेत् । उतापि पोत्रात् पवित्रौषधपूर्णात् पिबेत्—नेष्ट्रात्—नयनयोग्यात् 'नेष नयने' वैदिकधातोः—त्रन् "स नो नेषन्नेषतमैः" ( ऋ० १ । १४१ । १२ ) मधुरमयाज्जुषेत सेवेत तुरीयं यत् पात्रममृक्तममृतं पुष्टिकरममर्त्यं रोगहरं तदपि पिबतु ।

पुनश्च—अग्निर्द्रविणोदा इत्यत्र तत ऋतुयाजादपि मन्त्रं प्रमाणयत्यसन्दिग्धार्थाय यास्कः—

"मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन् वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥" ( ऋ० २ । ३७ । ३ )

मेद्यन्तु ते वह्नयो वेढारो यैर्यास्यरिष्यन् दृढीभवायूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्याद्धिष्ण्यो धिषण्यो धिषणाभवः—धिषणा वाग् धिषेर्दधात्यर्थे । धीसादिनीति वा धीसानिनीति वा । वनस्पत इत्येनमाहैष हि वनानां पाता वा पालयिता वा । वनं वनोतेः । पिबर्तुभिः कालैः ॥ ३ ॥

भा०—हे वनस्पते—वानस्पत्य । वनस्पतिज ! अग्ने ! ताद्धितेन कृत्स्नवत् प्रयोगः "गोभिः सन्नद्धो असि" चर्मणा श्लेष्मणा वा, "गोभिः श्रीणीत मत्सरम्"—( निरु० २ । ५ ) 'वनस्पते वीड्वङ्गो....' रथविशेषणम् ( निरु० ९ । १२ ) द्रविणोदो विविधधनबलानां दातः ! ते तव वह्नयो वोढारो रश्मयो ज्वालाः—मेद्यन्तु घृतादिभिः स्निह्यन्तु याभिर्ज्वालाभिस्त्वमरिषण्यन्—अहिंसन्नस्मानपि तु रक्षन्नस्मान् यासि प्राप्नोषि तैर्वीळयस्व दृढीभव हव्यं सम्यग् वह । हे धृष्णो ! हे रोगाणां दुःखानां धर्षयितो नाशयितः ! नेष्ट्राद् दुःखनाशकहव्याधान-

कुण्डाद् धिष्ण्यात्—मन्त्रैः सङ्कल्पितात् त्वं सोममृतुभिः कालैर्यथाकालं पिब पीत्वा च तम्—आयूय समन्तात्प्रसार्य—आगूर्योद्यस्य चास्माकमिष्टं साध्नुहीति शेषः ।

निरुक्तयः—नेष्टा प्रधान ऋत्विक् तत्सम्बन्धि इत्थं स्थानं नेष्ट्रीयं तस्मात्—नेष्ट्रीयात्, नेष्ट्रीयं स्थानं च धिष्ण्यमप्युच्यते, धिष्ण्यः—धिषण्यः—धिषणायां भवः, धिषणा वाक् "धिषणा वाक्" ( निघं० १।११ ) धिषेर्धारणार्थात् क्युः प्रत्ययः "धृषेर्धिष च संज्ञायाम्—क्युः" ( उणा० २ । ८३ ) बाहुलकात् । अथवा धीसादिनी यद्वा धीसानिनी धिषणा । 'धी' उपपदात् 'सद गतौ' धातोः, यद्वा 'सन सम्भक्तौ' धातोस्तच्छीलार्थे ड्युः प्रत्ययः—औणादिकः पूर्वपदस्य ह्रस्वत्वं च छान्दसं धिषणा ॥

इति—अष्टमाध्यायस्य प्रथमः पादः ।

---

## द्वितीयः पादः

---

अथात आप्रियः । आप्रियः कस्मादाप्नोतेः प्रीणातेर्वा । आप्रीभिराप्रीणातीति च ब्राह्मणम् ॥ ४ ॥

भा०—अथेदानीमतः क्रमेण—आप्रियोऽनन्तरं वक्ष्यमाणाः—'इध्मः' इत्येवमाद्या देवताः—व्याख्यास्यन्ते । 'आप्रियः' इति कस्मात् किंव्युत्पत्तिकाः? उच्यते—"आप्लृ व्याप्तौ" ( स्वादि० ) ततः "अदिशदिभूशुभिभ्यः क्रिन्" ( उणा० ४ । ६५ ) धातोर्बाहुलकात् 'आप्रिः' पुनः "कृदिकारादक्तिनः" वा० ( अष्टा० ४ । १ । ४५ ) इति ङीप्—आप्री, बहुवचने—आप्रियः, इयङादेशश्छान्दसः । "छन्दसि बहुलमुपसंख्यानं कर्तव्यम्" वा० ( अष्टा० ६ । ४ । ७७ ) यद्वा "प्रीञ् तर्पणे" ( क्र्यादि० ) ततः—आङ्पूर्वात् "क्विप् च" (अष्टा० ३ । २ । ७६) आप्री स्त्रियामपि तथैव "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" ( अष्टा० ६ । ४ । ७७ ) आप्रियः—बहुवचने "आप्रीभिरप्रीणाति" ( ऐ० ब्रा० ६ । ४ ) इति च ब्राह्मणं वदति । आप्रीभिर्ऋग्भिर्याज्याभिर्देवताभिश्च—आप्रीणाति तर्पयति यजमानो लोकं जनान् वा । एवम्—आप्रियः करणसाधनः प्रत्ययः, ता आप्रियः—इध्माद्या देवताः सन्ति हि लोकपदार्थाः ॥

इध्मः ॥ २ ॥

तासामिध्मः प्रथमागामी भवति । इध्मः समिन्धनात् । तस्यैषा भवति—

"समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजासि

जातवेदः । आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥" ( ऋ० १० । ११० । १ )

समिद्धो अद्य मनुष्यस्य मनुष्यस्य गृहे देवो देवान् यजसि जातवेद आ च वह मित्रमहश्चिकित्वांश्चेतनावांस्त्वं दूतः कविरसि प्रचेताः प्रवृद्धचेताः ॥

भा०—तासामाप्रीणां देवातानां मध्ये 'इध्मः' क्रमे प्रथमागामी । स इध्मः प्रथमं व्याख्येयः । इध्मः समिन्धनात् सम्यगिन्धनात्, अर्थप्रदर्शने धातुनिर्देशनमपि । "इन्धी दीप्तौ" ( भ्वादि० ) ततः "इषियुधीन्धिदसिश्याधूसूभ्यो मक्" ( उणा० १ । १४५ ) मक् प्रत्ययः कर्मणि करणे वा । तस्य "समिद्धो अद्य...." मन्त्रः ।

मन्त्रार्थः—

हे जातवेदः ! जात एव वेद्यमानो जातानि च वेदयति ज्ञापयति स्वप्रकाशेन प्रकाशयति जातानि भवन्ति वेदांसि धनानि यस्मात् तथाभूत ! अग्ने ! त्वमद्य सम्प्रति मनुषः–मनुष्यस्य मनुष्यस्य गृहे प्रत्येकमनुष्यस्य गृहे समिद्धः सन्दीप्तः (Thermal Heat) देवः दिव्यगुणः सन् यज्ञे प्रयुक्तो दिव्यगुणः सन् देवान् वायुप्रभृतीन् यजसि तानपि दिव्यगुणान् कुर्वन् तेभ्यो हव्यं प्रेरयसि । त्वं कविः कान्तदर्शी दूरगतं वस्तु दर्शयसि प्रचेताः प्रवृद्धचेताः–प्रवृद्धानि चेतांसि मानवानां येन भवन्ति तथाभूतस्त्वमसि दूतश्चासि, तस्मात् त्वं चिकित्वान् चेतनावान् सावधानो जन इव सन् मित्रमहः–यज्ञकर्तृभिर्मित्रैर्महनीयः प्रशंसनीयः संस्वमावह हव्यं समन्ताद् वहनं कुरु ।

यज्ञेध्म इति कात्थक्यः । अग्निरिति शाकपूणिः ॥

भा०—'इध्मः' इति यज्ञस्येन्धनं काष्ठं कात्थक्यो मन्यते, अग्निरिध्म इति शाकपूणिर्मन्यते ।

यास्कः शाकपूणिमतं सिद्धान्ततः स्वीकरोति, अत्राप्यन्ते–उक्तम् "आग्नेया इति तु स्थितिः" ( निरु० ८ । २२ ) ।

अत्र मन्त्रे 'इध्मः' इति शब्दः साक्षान्न विद्यते किन्तु 'आप्रीदेवतागणे' इध्मः–देवता कल्पितः 'समिद्धः' शब्दं दृष्ट्वा स च–इध्मः समिद्धः–इत्यग्निवाचकत्वेन युज्यते न तु काष्ठवाचकत्वेन काष्ठं समिद्धमिति न वक्तुं शक्यते किन्तु 'अग्निः समिद्धो ज्वलितः' इत्युच्यते । यत्र साक्षाद् 'इध्मः' शब्दः प्रयुज्यते तत्र काष्ठमर्थः, तस्य प्रयोगोऽन्यदेवताके मन्त्रे वर्तते सर्वत्र वेदे "भरामेध्मं कृण-

वामा कृणोमि ते…अग्ने…" ( ऋ० १ । ९१ । ४ ) अग्निदेवताके तथा "इन्धे-नोऽग्न इन्धमानो घृतेन जुहोमि" ( ऋ० ३ । १८ । ३ ) ॥

तनूनपात् ॥ ३ ॥

तनूनपादाज्यमिति कात्थक्यः । नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति । गौरत्र तनूरुच्यते । तता अस्यां भोगाः, तस्याः पयो जायते पयस आज्यं जायते । अग्निरिति शाकपूणिः । आपोऽत्र तन्व उच्यन्ते । तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्ते । ओष-धिवनस्पतिभ्य एष जायते ॥ ५ ॥

भा०—'तनूनपात्' इति देवतापदम् । आज्यं घृतं भवतीति कात्थक्यो मन्यते । यतः 'नपात्' नप्ता, अनन्तरायाः प्रजाया नाम, अनन्तरा प्रजा तु पुत्रः, पुत्रस्य यः पुत्रः सोऽनन्तरा प्रजा पौत्र इति यावत् । कात्थक्यमते 'तनूः—गौः' यतोऽस्यां गवि भोगाः—तताः सन्ति तस्माद् गौस्तनूः, तस्याः पयो दुग्धं जायते पुत्ररूपं तस्माद् दुग्धादाज्यं घृतं जायते, तस्मादाज्यं घृतं पौत्रमन-न्तरमपत्यम्, तन्वाः—गोः । तस्मात् तनूनपात्—आज्यमिति कात्थक्यः । 'अग्निः' तनूनपात्—इति शाकपूणिर्मन्यते । यतः 'आपः—तन्वः' तताः प्रसृताः—अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्ते तत्पुत्रभूताः, ताभ्यः—ओषधिवनस्पतिभ्य एषोऽ-ग्निर्जायते तासां तनूनामपां पौत्ररूपः, तस्मात् 'अग्निः' तनूनपात् ॥

तस्यैषा भवति—

"तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥" ( ऋ० १० । ११० । २ )

तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान् मधुना समञ्जन् स्वदय कल्याणजिह्व मननानि च नो धीभिर्यज्ञं च समर्धय देवान् नो यज्ञं गमय ॥ ६ ॥

भा०—हे सुजिह्व तनूनपात् ! हे शोभनज्वाल ! अग्ने ! "काली कराली च…लेलायमाना इति सप्त जिह्वाः" ( मुण्ड० १ । २ । ४ )—( Internal combustion of fuel derivatives like ghee, petroleum and coal gas, etc.) त्वमृतस्य यज्ञस्य यानान् यातुं योग्यान् पथो मार्गान् येषु मार्गेषु यज्ञः प्रवर्तते तान्—आहुतिक्रमान् सर्वत्रोर्ध्वं च प्रसृतान् मधुना मधुरगुणेन

संयोजयन् सन् स्वदय स्वयमास्वदस्वास्माकं आस्वादय, धीभिः कर्मभिर्मन्मानि मननानि मनःप्रभृतीन्यन्तःकरणानि, उतापि यज्ञं समर्धय तथा नोऽस्माकमध्वरं यज्ञं देवत्रा कृणु देवेषु गमय ॥

नराशंसः ॥ ४ ॥

नराशंसो यज्ञ इति कात्थक्यः । नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिः । नरैः प्रशस्यो भवति । तस्यैषा भवति—

"नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या ॥" ( ऋ० ७ । २ । २ )

नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि देवा हवींषि सोमं चेतराणि चेति वा तान्त्राणि चावापिकानि चेति वा ॥ ७ ॥

भा०—'नराशंसः' इति देवतापदम् । नराशंसो यज्ञ इति कात्थक्यो मन्यते । यतो नरा अस्मिन्—आसीनाः सन्तः शंसन्ति देवताः, नरोपपदात् "शंसु स्तुतौ" ततोऽधिकरणे घञ् । 'अग्निः' शाकपूणिः । नरैः प्रशस्यः प्रकृष्टेन शंसनीयः स्तोतव्यो नराणां शंसः शंसनीय इत्यर्थः, कर्मणि घञ् । तस्यैषा—ऋग् भवति "नराशंसस्य····।"

मन्त्रार्थः—

ये सुक्रतवः सुकर्माणः कल्याणकर्माणः शुचयः पवित्राः धियं धारयितारोऽस्मदर्थं कर्मणो धारयितारो देवाः—उभयानि हवींषि सोमौषधिरसं तद्भिन्नानि पायसादीनि च हव्यानि यद्वा तन्त्राणि प्रधानयज्ञप्रयुक्तानि, आवापं गतानि मध्ये परिगतानि गौणभूतयज्ञप्रयुक्तानि च स्वदयन्ति, तेषां मध्ये यजनीयस्य नराशंसस्याग्नेः ( Chemical Energy and the result of chemical affinity in terms of valency ). महिमानं यज्ञैरुपगत्य स्तवनं कुर्मः ।

निरुक्त्यः—'उपस्तोषाम' उपपूर्वकात् स्तु धातोर्लेटि रूपं तत्र सिप् शप् च । 'यजतस्य' यजधातोः "भृमृदृशियजि···भ्योऽतच्" ( उणा० ३ । ११० ) इति 'अतच्' कर्मणि ॥

इळः ॥ ५ ।

इळ ईट्टे : स्तुतिकर्मणः, इन्धतेर्वा । तस्यैषा भवति—

"आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजी॰
यान् ॥" ( ऋ० १० । ११० । ३ )

आहूयमान ईडितव्यो वन्दितव्यश्चायाह्यग्ने वसुभिः सह जोषणस्त्वं देवानामसि यह्व होता । यह्व इति महतो नाम॰ धेयं यातश्च हूतश्च भवति । स एनान् यक्षीषितो यजीयान् । इषितः प्रेषित इति वाधीष्ट इति वा, यजीयान् यष्टृतरः ॥८॥

भा०—'इडः' इति देवतापदम् । "ईड स्तुतौ" ( अदादि० ) इत्यस्मात्, यद्वा "इन्धी दीप्तौ" ( रुधादि० ) इत्यस्मात् कर्मणि घञ् प्रत्ययः । ईडेर्ह्रस्व॰ त्वमथ-इन्धेर्नकारलोपो धकारस्य डकारश्चेति सर्वं छान्दसम् ।

मन्त्रार्थः—

हे-आजुह्वान ! आहूयमान ! ऋत्विग्भिरामन्त्र्यमाण हविर्भिर्वा होत्रे नियुज्य॰ मान ! अग्ने ( Electromagnetic Field ) त्वमीडितव्यो दीपनीयो वन्दित॰ व्यः स्तोतव्यश्चासि त्वं वसुभिर्वासयितृभिर्ज्वलनधर्मैः सह सेवमान आगच्छ प्रज्वलितो भव । हे यह्व महन् ! त्वं देवानां होताऽसि, अत एवेषितोऽस्माभिः प्रेरितोऽधीष्टोऽनुज्ञातो वाऽतिशयेन यष्टा सन्-एनान् देवान् यक्षि यज ।

निरुक्त्यः—"यह्वः-महन्नाम" ( निघं० ३ । ३ ) यातश्च हूतश्च । 'या' धातोः 'ड:' प्रत्ययः कर्तरि भूते "अन्येष्वपि दृश्यते-अन्येभ्योऽपि दृश्यते" वा० ( अष्टा० ३ । २ । १०१ ) 'ह्वेञ्'-ह्वा ततोऽपि 'ड:' कर्मणि भूते । यातः प्राप्तश्च भवति, आहूतश्च भवति, यः सर्वत्र प्राप्तो भवति यश्च सर्वत्र-आहूतो भवति स महान् हि भवति ।

अत्रापि मन्त्रे 'इळः' इति शब्दः प्रत्यक्षं नास्ति किन्तु 'ईड्यः' शब्देन कल्पितो देवतात्वेन 'आप्रीदेवतासु ।' अग्निरत्र लक्ष्यः स च स्तुत्य इन्धितव्यश्च दीपयितव्यश्च-अन्यत्र मन्त्रेषु 'इळः' शब्दः 'इला' इत्यस्य वैभक्तिकप्रयोगः, षष्ठ्याद्यासु विभक्तिषु स च पृथिवीवाग्गवाद्यर्थकः । अतोऽत्र कल्पनीयो देवता-वाचको यः स्यात् 'ईड्यः ।' अतः स 'इडः' अग्निरस्ति ॥

बर्हिः ॥ ९ ॥

बर्हिः परिबर्हणात् । तस्यैषा भवति—

"प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते

अग्ने अह्नाम् । व्युप्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥" ( ऋ० १० । ११० । ४ )

प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यते अग्रे अह्नां बर्हिः पूर्वाह्णे तद्विप्रथते वितरं विकीर्णतरमिति वा विस्तीर्णतरमिति वा वरीयो वरतरमुरुतरं वा देवेभ्यश्चादितये च स्योनम् । स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत् सेवितव्यं भवतीति वा ॥ ९ ॥

भा०—'बर्हिः' इत्याप्रीदेवतान्तर्गतं देवतापदम् । 'बर्हिः' परिबर्हणात्—इति-अर्थप्रदर्शनं सधातुनिर्देशम् । "बर्ह प्राधान्ये" ( चुरादि० ) अथवा "बृह वृद्धौ" ( भ्वादि० ) यद्वा "बृहू उद्यमने" ( तुदादि० ) ततः 'इसिः' प्रत्ययः ( उणा० २ । ११० ) तत्रान्तर्गतः परेरर्थोऽपि । परितः प्रधानं वस्तु, परितः सर्वतो वृद्धिनिमित्तं सर्वतो विस्तीर्यमाणं वस्तु वा, परित उद्धृतं वस्तु । तत् किमपि यास्केन न सूचितम् । तेन बर्हिरत्र—अग्निः, दर्भश्चेति सम्भाव्यते । प्रज्वलनायाग्निः, आस्तरणाय दर्भः । तस्य "प्राचीनं बर्हिः....." इति मन्त्रः ।

मन्त्रार्थः—

पृथिव्याः—वेद्याः "पृथिवी वेदिः" (ऐ० ५ । ८) प्राचीनं प्राक्स्थानं बर्हिः—ज्योतिरग्निः Echo ( Resonant energy of use in Rector etc. ) अस्या वेद्या वस्तोर्वासाय प्रवर्तनाय प्रदिशा विधिनाऽह्नां दिवसानामग्रे पूर्वाह्णे प्रातरेवाग्निहोत्राय प्रवृज्यते पृथक् क्रियते निःसार्यते घर्षणेन तज्ज्योतिर्वितरं विकीर्णतरं विस्तीर्णतरं वा वरीयः श्रेष्ठतरं महत्तरं वा देवेभ्यो हव्यं वोढुमथादितये पृथिव्यै पार्थिवीस्थाय च स्योनं सुखं हि विप्रथते प्रवर्धते ।

पृथिव्याः—वेद्याः प्राचीनं प्राग्वर्ति बर्हिर्दर्भास्तरणं वेद्या वस्तोर्वासायाच्छादनाय विधिना पूर्वाह्णे प्रातरेवाग्निहोत्राय प्रवृज्यते पृथक् क्रियते मूलतः प्रत्यग्रं छिद्यते छिन्नं च प्रसार्यते तद्वितरं विकीर्णतरं विस्तीर्णतरं वा वरीयः श्रेष्ठतरं बहुतरं देवभ्यो विद्वद्भ्यः सयजमानेभ्योऽदितये यजमानपत्न्यै च स्योनं सुखं यथा स्यात् तथा विप्रथते विशेषेण प्रसृतं भवति ।

निरुक्तयः—वितरम् 'वि' उपसर्गो विकीर्णे विस्तीर्णे वार्थे । "सम्-इत्येकीभावे वि-इत्यस्य प्रातिलोम्यम्" ( निरु० १ । १ । ३ ) सङ्कीर्णे प्रातिलोम्ये विकीर्णं विस्तीर्णं वा भवति "वि विशेषार्थे प्रक्षेपणे च" ( अव्ययार्थनिबन्धनम् ) विस्तीर्णं विशेषे, विकीर्णं प्रक्षेपे । अतिशयार्थे तरप् प्रत्ययः ।

वरीयः—वरतरम्, उरुशब्दात्—ईयसुन् प्रत्ययः "प्रियस्थिरस्फिरोरु"......"वां प्रस्थस्फवर्......" ( अष्टा० ६ । ४ । १५७ ) 'वर्' आदेशः 'उरु'—स्थाने "स्योनं सुखनाम" ( निघं० ३ । ६ ) "षो अन्तकर्मणि" (दिवादि०) ततो नः प्रत्ययो धातोर्बाहुलकात् "सिवेष्टेयूं च" ( उणा० ३ । ९ ) टेयू पुनर्गुणे कृते स्योनम्, दुःखस्यान्तं करोति सुखम्, यद्वा "षेवृ सेव सेवने" ( भ्वादि० ) ततो नः प्रत्ययः पूर्ववत् तस्यापि टेयूं स्योनं यत् सेवितव्यं भवति सुखं सेवितव्यम् ॥

द्वारः ॥ ७ ॥

द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा । तासामेषा भवति—

"व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥" ( ऋ० १० । ११० । ५ )

व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणाः वरतममङ्गमूरू देव्यो द्वारो बृहत्या महत्यो विश्वमिन्वा विश्वसाभिरेति यज्ञे । गृहद्वार इति कात्थक्यः । अग्निरिति शाकपूणिः ॥ १० ॥

भा०—'द्वारः' जवतेः "जवति गतिकर्मा" ( निघं० २ । १४ ) जकारस्य दकारः—आवक्—आगमः क्विप् प्रत्यये । द्वार्—द्वाः, बहुवचने स्त्रीलिङ्गे द्वारः । यद्वा "द्रु गतौ" ( भ्वादि० ) रेफस्य लोपः सर्वं पूर्ववत् । अथवा वारणार्थाद् वृञ्धातोर्णिजन्तात्, धातोरादेर्दकारोपजनः प्रत्ययः क्विप् । द्वारो मानवानां सुखागमनाय दुःखवारणाय च भवन्ति । तासाम् "व्यचस्वतीरुर्विया......" इति मन्त्रः ।

मन्त्रार्थः—

देवीर्दिव्या द्वारोऽग्निरग्निज्वाला यज्ञाग्निज्वालाश्चतुर्दिग्वर्तिन्यः (Electrons in atomic orbits) यद्वा गृहद्वारः पतिभ्यो मैथुनधर्मे शुशोभिषमाणा जाया इव व्यचस्वत्यो वञ्चनवत्यो विशिष्टसुखगमनवत्य उर्विया—उरुत्वेन बहुभावमया यद्वा वरतमेन वरणीयतमेन जङ्घाङ्गेनेव विश्रयन्तां विशेषेणाश्रयन्ताम् । प्रत्यक्षवृत्त्योच्यते—ता यूयं बृहत्यः—उदारा विशाला वा देवेभ्यो हविर्वोढुमागन्तुं वा विश्वम्—इन्वाः—विश्वेषां निर्वाहिकाः सर्वेषां गमनयोग्या वा सुगतिका भवत । द्वारो गृहद्वारः कात्थक्यः, अग्निरिति शाकपूणिर्मन्यते ।

निरुक्तयः—'व्यचस्वत्यः' विपूर्वकात् "अञ्चु गतौ" ततः "मिथुनेऽसिः" ( उणा० ४ । २२३ ) बाहुलकात् किच, व्यचस् तद्वत्यः । 'विश्वमिन्वाः'

विश्वमिन्वन्ति व्याप्नुवन्ति निर्वहन्तीति "कर्मण्यण्" ( अष्टा० ३ । २ । १ ) "तत्पुरुषे कृति बहुलम्" ( अष्टा० ६ । ३ । १४ ) द्वितीयाया अप्यलुक् छान्दसः ।

उषासानक्ता ॥ ८ ॥

उषासानक्तोषाश्च नक्ता च, उषा व्याख्याता । नक्ता रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा ।

तयोरेषा भवति—

"आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नियोनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥" ( ऋ० १० । ११० । ६ )

सेष्मीयमाणे इति वा सुष्वापयन्त्याविति वा सीदतामिति वा न्यासीदतामिति वा । यज्ञिये उपक्रान्ते दिव्ये योषणे बृहत्यौ महत्यौ सुरुक्मे सुरोचने अधिदधाने शुक्रपेशसं श्रियम्, शुक्रं शोचतेर्ज्वलतिकर्मणः । पेश इति रूपनाम, पिंशतेर्विपिशितं भवति ॥ ११ ॥

भा०—'उषासानक्ता' उषाश्च नक्ता च देवताद्वन्द्वे समासे "उषासोषसः" ( अष्टा० ६ । ३ । ३१ ) इत्यनेन 'उषस्' शब्दस्य 'उषासा' आदेश उत्तरपदे । उषाः-व्याख्याता "उच्छतीति सत्याः, रात्रेरपरः कालः" ( निरु० २ । १८ ) 'नक्ता' इति रात्रिः "नक्ता रात्रिनाम" ( निघं० १ । ७ ) भूतानि खल्ववश्यायेन जलांशुप्रवाहेणानक्ति स्निग्धानि-आर्द्राणि करोति । "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रुधादि० ) ततः कर्तरि क्तः प्रत्ययः । अकारनकारयोर्विपर्ययश्छान्दसः । पुनरनुपधात्वाल्लोपाभावो नकारस्य । अथवा नक्ता-अव्यक्तवर्णा । नक्ता न-अक्ता, अक्ता-व्यक्ता, न-अक्ता पररूपं छान्दसम् । तयोः "आसुष्वयन्ती…" इति मन्त्रः ।

मन्त्रार्थः—

आसुष्वयन्ती सेष्मीयमाणे पुनः पुनरीषद्धसन्त्यौ यद्वा सुष्वापयन्त्यौ पुनः पुनः स्वापयन्त्यौ यजते यज्ञिये उपाके उपक्रान्ते परस्परमुपगते परस्परं सापेक्षे दिव्ये योषणे मिश्रणस्वभावे बृहत्यौ महत्यौ सुरुक्मे सुरोचने मधुररोचने प्रियप्रकाशवत्यौ शुक्रपिशं शुभ्रवर्णां स्वलङ्कृतां श्रियं शोभामधिदधानेऽधिधारयन्त्यौ–उषासानक्ते-प्रातः सायन्तन्यौ-अग्निदेवते (Ions and charges in electrolytes

or electrostatic and dynamic machines proceeding in a current to electrodes and Terminals as Positives and negative charges.) यद्वा—उषोरजन्यौ प्रातःसायंवेले योनौ यज्ञगृहे यज्ञकुण्डे—आसीदतां समन्तात् प्रकाशिते भवेताम्, योनौ पृथिव्यां निषीदतां निरन्तरं क्रमेण सीदताम् ।

निरुक्तय:—'सुष्वयन्ती' सेष्मीयमाणे यद्वा सुष्वापयन्त्यौ । 'ष्वन्' ईषद्धसने धातुर्यास्केन मतः, तस्मात् 'सेष्मीयमाणे' अर्थः कृतः, यङ्लुगन्ताण्णिच्छतृप्रत्यये, अभ्यासस्य गुणाभावः । अथवा "ष्वप शये" ( अदादि० ) पकारलोपश्छान्दसः । पूर्ववद् यङ्लुगन्ताण्णिच्छतृप्रत्यये—सुष्वापयन्त्यौ । 'आ, नि, सदताम्' उपसर्गद्वयेन प्रयोगद्वयम्, प्रथमस्तु 'आ' इत्याश्रित्य 'आसीदताम्' द्वितीयः 'नि' इत्याश्रित्य 'निषीदताम्' इत्येतेन प्रयोगेण भवितव्यम् । परन्तु यास्केन द्वितीये प्रयोगेऽर्थकरणाय मध्ये 'आ' अपि कल्पितः, निषीदतां न्यासीदतामित्यर्थः । 'सुरुक्मे' सुरोचने सुपूर्वकाद् "रुचदीप्तावभिप्रीतौ च" (भ्वादि०) ततः "युजिरुचितिजां कुश्च—मक्" ( उणा० १ । १४६ ) 'शुक्रपेशसम्' शुक्रं पेशो रूपं यस्य तां शुक्रपेशसं श्रियम् । शुक्रम् "शोचति ज्वलतिकर्मा" ( निघं० १ । १६ ) ततो रक्प्रत्यय औणादिकः । "पेशो रूपनाम" ( निघं० ३ । ७ ) पेशः "पिश अवयवे" ( तुदादि० ) ततः 'असुन्' "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) पेश एव पिशं छान्दसं कप्रत्ययान्तं ।

दैव्याहोतारा ॥ ९ ॥

दैव्याहोतारा दैव्यौ होतारावयं चाग्निरसौ च मध्यमः । तयोरेषा भवति—

"दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥" ( ऋ० १० । ११० । ७ )

दैव्यौ होतारौ प्रथमौ सुवाचौ निर्मिमानौ यज्ञं मनुष्यस्य मनुष्यस्य यजनाय प्रचोदयमानौ यज्ञेषु कर्तारौ पूर्वस्यां दिशि यष्टव्यमिति प्रदिशन्तौ ॥ १२ ॥

भा०—'दैव्या' इति दैव्यौ पृथक् पदम्, 'होतारौ पृथक् पदम् । उभयत्र प्रथमाद्विवचनविभक्तेराकारादेशश्छान्दसः । तौ—अयं पार्थिवोऽग्निः, मध्यमश्च वायुर्देवः । तयोः "दैव्या होतारा....." इति मन्त्रः ।

मन्त्रार्थः—

दैव्यौ देवानामिमौ देवेषु भवौ वा "देवायजजौ" होतारौ प्रथमौ स्तः पदार्थानां होतारौ मनुष्यसृष्टेः पूर्वमग्नीवायू तौ च प्रत्येकमनुष्यस्य यज्ञं शरीर यज्ञं निर्मिमाणौ सन्तौ यज्ञेषु—अवरेषु यज्ञेषु यजध्यै यष्टुमृत्विग्यजमानान् प्रेरयितारौ कारू कर्तारौ कार्ये—उपयुक्तौ पूर्वस्यां दिशि ज्योतिराहवनीयं यष्टव्यमिति च प्रदिशन्तौ तिष्ठतः ।

विशेषः—'यजध्यै' यजधातोस्तुमर्थे 'अध्यैन्' प्रत्ययः "तुमर्थे सेसेन···· अध्यैन्····" ( अष्टा० ३ । ४ । ९ ) ॥

तिस्रो देवी ॥ १० ॥

तिस्रो देवीस्तिस्रो देव्यः । तासामेषा भवति—

"आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥" ( ऋ० १० । ११० । ८ )

ऐतु नो यज्ञं भारती क्षिप्रम् । भरत आदित्यस्तस्य भाः—इळा च मनुष्यवदिह चेतयमाना तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्माण आसीदन्तु ॥ १३ ॥

भा०—'तिस्रो देवीः' तिस्रो देव्यस्तिस्र आग्नेयशक्तयो यद्वा तिस्रोऽग्निरूपा देवताः । तासाम् "आ नो यज्ञं····" इति मन्त्रः ।

मन्त्रार्थः—

भारती भरत आदित्यः "स हैष सूर्यो भर्तः" ( शत० ४ । ६ । ७ । २१ ) तस्यादित्यस्य भाः—दीप्तिः—भारती सा नोऽस्माकं यज्ञं क्षिप्रमागच्छतु । मनुष्वत्—मनुष्यवद्—मनुष्यवती मनुष्यप्रयुक्ता या नित्यं भवति सा पार्थिवी देवी—इळा—अग्निरूपा देवतेह यज्ञगृहे चेतयन्ती यज्ञं प्रेरयन्ती साधयन्ती तथा सरस्वती संरणधर्मवती मध्यस्थाना विद्युद्रूपा देवी चैवं तिस्रो देव्यः—सुकर्माणः सुकार्यस्य साधिकाः—इदं सुखं सुखप्रदं बर्हिः परिवृद्धिकरं यज्ञसदनं यज्ञगृहं स्नानमन्दिरं कलाभवनं बहुकार्यसदनं च प्राप्नुवन्तु । "भूमा वै बर्हिः" (शत० १।५।४।४) ॥

त्वष्टा ॥ ११ ॥

त्वष्टा तूर्णमश्नुत इति नैरुक्ताः । त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात् करोतिकर्मणः ।

तस्यैषा भवति—

"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि

विश्वा । तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥" ( ऋ० १० । ११० । ९ )

य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोद् भूतानि च सर्वाणि तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यज विद्वान् ।

भा०—'त्वष्टा' तूर्णं क्षिप्रमश्नुते व्याप्नोतीति नैरुक्ता मन्यन्ते । 'तूर्णं' इत्युपपदात् "अशूङ् व्याप्तौ" ( स्वादि० ) ततः 'तृन्' प्रत्ययो निपात्यते "नप्तृनेष्टृत्वष्टृ....." ( उणा० २ । ९६ ) तूर्णस्य 'तू' शिष्टः—अश् तृन् त्वष्टृ—त्वष्टा । अथ च "त्विष दीप्तौ" ( भ्वादि० ) धातोः—यद्वा "त्वक्षू तनूकरणे" ( भ्वादि० ) ततः करणार्थः सामान्यो गृहीतस्तत्र करणे, धातोः पूर्ववत् तृन् प्रत्ययो निपातने सम्भावनीयः । त्विषेरुपधाया अकारादेशः, त्वक्षतेरनिट्त्वं च निपातने । शीघ्रव्यापी, दीपनशीलः, कार्यकरणशीलः । तस्यैषः "य इमे द्यावा-पृथिवी....." मन्त्रः ।

मन्त्रार्थः—

य इमे जनित्री जनयित्र्यौ द्यावापृथिव्यौ—आकाशभूमी विश्वानि सर्वाणि भूतानि च रूपैः स्वस्वरूपैर्भिन्नभिन्नरूपैरपिंशत् पृथक् पृथगकरोत् । 'पिंश अवयवे' अत्र सामर्थ्यात् करोत्यर्थे । हे होतः ! त्वं जानन्नद्य यजीयानतिशयेन यष्टा सन्—अस्माभिः प्रेरितस्तं त्वष्टारं देवं यज ॥

स कस्त्वष्टा ? अत्र विवेच्यते—

माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातः । अग्नि-रिति शाकपूणिः ॥ १४ ॥

तस्यैषापरा भवति—

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥" ( ऋ० १ । ९५ । ५ )

आविरावेदनात् तत्स्यो वर्धते चारुरासु । चारु चरतेः, जिह्मं जिहीतेः, ऊर्ध्वं उच्छ्रितो भवति । स्वयशा आत्म-यशाः, उपस्थ उपस्थाने । उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते । द्यावापृथिव्याविति वा; ।

अहोरात्रे इति वा । अरणी इति वा । प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते ॥ १५ ॥

भा०—'त्वष्टा माध्यमिको देवो वायुरस्तीति कथयन्ति केचन नैरुक्ताः। यतो मध्यमस्थानेऽपि स पठितस्तेन तस्य ग्रहणं न विरुद्ध्यते । परन्तु शाकपूणि-नैरुक्तो मन्यते—अग्निरस्ति त्वष्टाऽत्र प्रसङ्गे । तस्य स्पष्टीकरणायाऽन्योऽयं मन्त्रः "आविष्ट्यो वर्धते····" इति ।

मन्त्रार्थः—

आसु मातृषु मातृभूतासु—आहुतिषु दीयमानासु प्रज्वलितासु, यज्ञे प्रक्षिप्ता आहुतयो ह्यग्नेर्मातरः * । आविष्ट्य आविर्भूतः प्रकाशितः प्रसिद्धश्चारुगमनशीलः सन्—अग्निर्वर्धते सम्यक् प्रवर्धते "आविसश्छन्दसि" त्यप् प्रत्ययः (अष्टा० ४ । २ । १०४ वा०) जिह्मानां कुटिलानां यज्ञकुण्डे तिर्यक्पतितानामाहुतीनां स्वयशाः—आत्मयशाः प्रकाशरूपत्वात् स्वयं स्वयशो जनयति तस्मात् स्वयशाः स्वाधारयशाः स उपस्थे—उपस्थाने पृथिवीतः—उपरिस्थाने—ऊर्ध्वः सन् वर्तते सोऽग्निस्त्वष्टा । तस्मात् त्वष्टुरग्नेर्जायमानात्उभे बिभ्यतुः, के उभे अरणी काष्ठे द्वे दह्यमाने शाकपूणिमते—अरणी बिभ्यतुर्भयं कुर्वाते। यत्—आवां दग्धे करिष्यतीत्या-लङ्कारिकमुक्तं पुनस्ते अरणी प्रतीची प्रत्यक्ते प्रतिगते तं प्रति प्राप्ते सत्यौ सिंहं सहनं सहते—इति सहनः सर्वं सोढुं शक्तो यस्तमग्निं प्रत्यासेवेते स्वात्मानं समर्प-यत एव पूजयत इव हि । अहोरात्रे द्यावापृथिव्यौ वा शाकपूणिमते—अरणी यद्यत्र तद्रूपेण न युज्येते किन्तु 'अहोरात्रे तु तत्साहचर्येणाहश्चररात्रिचरौ प्राणिवर्गौ द्यावापृथिव्यौ तात्स्थ्येनाकाशभूमिस्थौ जीवगणौ योजयितुं पार्यते । अन्येषां मते तु तद्रूपेण योजयितुं शक्येते । यास्कोऽत्र तटस्थः प्रतिभाति । त्वष्टा त्रिषु स्थानेषु पठितोऽस्ति, अत्र तु पृथिवीस्थाने मध्यमदेवगणे चोत्तमदेवगणे च । तेन 'उभ' शब्देन 'अहोरात्रे' मध्यमपक्षवतां मते, 'द्यावापृथिव्यौ' उत्तमपक्षवतामिति योजना भवेत् । मध्यमपक्षवतां त्वष्टा देवो वायुर्वेन्द्रो वा, उत्तमपक्षवतां त्वष्टा देव आदित्यस्तत्रेन्द्रस्य विद्युद्देवस्य स्तनयित्नुशब्दात् कर्कात् ताडनात् वायोश्च भञ्जनात्—झञ्झावातप्रहारात् खल्वहोरात्रे बिभ्यत इवास्तभ्यस्तत्स्थितिके भवतः, एवमादित्यस्य प्रखरतापाद् द्यावापृथिव्यावाकाशभूमी बिभ्यत इवेति यास्कस्य लक्ष्यं प्रतिभातीत्यधिकव्याख्याने विस्तारभयमतः शिष्टं विशिष्टं वा विद्वद्भिः स्वयमूह्यम् ।

---

* मातृशब्दः पूर्वमन्त्रे प्रयुक्तः "वत्सो मातृर्जनयन्त स्वधाभिः (ऋ० १ । ९५ । ४)

निरुक्तय:—'आविः' आविरावेदनात्, इत्यर्थप्रदर्शनं समन्ताद्वेदनं सत्ता-प्रदर्शनं स्वात्मप्रकाशनं यथा "आविः-अव्ययं प्रकाशे प्राकट्ये च" ( अव्ययार्थ-निबन्धनम् ) धातुपरिग्रहेऽपि 'आ-विद सत्तायाम्' ( दिवादि० ) आविद्यते—आविः, आङ्पूर्वाद् विद् धातोः "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः" ( उणा० २ । १०९ ) इति धातोर्बाहुलकात्-इसिः प्रत्ययो डिच्च, आविस्-आविः । 'चारुः' "चर गतिभक्षणयोः" ( भ्वादि० ) ततः 'ञुण्' प्रत्ययः ( उणा० १ । ३ ) । 'जिह्म' जिहीतेः "ओहाङ् गतौ" ( जुहो० ) ततः "जहातेः सन्व-दकारलोपश्च-मन्" ( उणा १ । १४१ ) धातोर्बाहुलकात् । ऊर्ध्वं उच्छ्रितः—इत्यर्थप्रदर्शनं न तु व्युत्पत्तिः, यथा स्वयशाः-आत्मयशाः । उत्पूर्वकाद् धा धातोः क्वन् प्रत्ययः-औणादिकः । 'उत्' इत्यस्य 'ऊर्' ध्वः-ऊर्ध्वः ॥

इति-अष्टमाध्याये द्वितीयः पादः

---

## तृतीयः पादः

---

वनस्पतिः ॥ १२ ॥

वनस्पतिर्व्याख्यातः ॥ १६ ॥ तस्यैषा भवति—

"उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥" ( ऋ० १० । ११० । १० )

उपावसृजात्मनात्मानं समञ्जन् देवानामन्नमृतावृतौ हवींषि । काले काले वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च ॥ १७ ॥

भा०—'वनस्पतिः' व्याख्यातः "वनस्पतिः-वनानां पाता पालयिता वा" ( निरु० ८ । ३ ) तस्यैषा-ऋक् "उपावसृज त्मन्या....।"

वक्तव्यम्—'उपावसृज' इति मध्यमपुरुषयोगात् त्वं वनस्पते-इति सम्बो-धनं युज्यते तस्य प्रथमं पठितत्वात् तस्मात्-हे वनस्पते आत्मना-उपावसृज, किमुपावसृजेति तत्तु देवानां पाथो हवींषि, परन्तु तृतीयाविभक्तेः करणभूतायाः-स्तथा समञ्जन्-इत्यस्याः क्रियायाः केनापि कर्मणा भवितव्यं तत्कर्म यास्केन युक्तमध्याहृतम्-आत्मानमिति ।

मन्त्रार्थः—

हे वनस्पते ! त्वमात्मनात्मानं समञ्जन् सम्यग्व्यक्तीकुर्वन् प्रकाशयन् देवानां पाथोऽन्नम् "अन्नमपि पाथ उच्यते" ( निरु० ६ । ७ ) किं तदुच्यते हवींषि हव्यानि वस्तूनि—ऋतुथा—ऋतावृतौ काले काले खलूपावसृज—उपरि प्रेरय—इत्थं वनस्पतिः, शमिता, देवोऽग्निः—इत्येते त्रयस्तद्धविष्यं हव्यमन्नं मधुना घृतेन च युक्तं स्वदयन्तु ।

को वनस्पतिरित्यग्रे विचारयिष्यते, तथापि 'वनस्पतिः, शमिता, देवोऽग्निः' क्रमशो लोकत्रयवर्तिनो देवा लक्ष्यन्ते वनस्पतिः पृथिवीस्थानो वनानां काष्ठानां पाता पालयिता वा पृथिवीस्थानोऽग्निः, शमिता मध्यस्थानो वायुर्वैन्द्रो वा शमयिता मेघानां रोगाणां च, देवोऽग्निः—देवी द्युस्थानो भवतीति चोक्तत्वात्—आदित्यो लक्ष्यते । लोकत्रयवर्तिनोऽग्नयः कर्मकाण्डे—आहवनीयगार्हपत्यदक्षिणा अग्नयो मन्तुं युज्यन्ते ॥

तत्को वनस्पतिः ? यूप इति कात्थक्यः । अग्निरिति शाकपूणिः । तस्यैषा भवति—

"अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन । यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥" ( ऋ० ३ । ८ । १ )

अञ्जन्ति त्वामध्वरे देवान् कामयमाना वनस्पते मधुना दैव्येन च घृतेन यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि यद्वा ते कृतः क्षयो मातुरस्या उपस्थे उपस्थाने ॥ १८ ॥

भा०—हे वनस्पते ! काष्ठैः प्रसिद्ध्यमान पार्थिवाग्ने ! देवान् कामयमाना ऋत्विग्यजमानास्त्वामध्वरे यज्ञे दिव्येन मधुना घृतेन त्वां व्यक्तं कुर्वन्ति दीपयन्ति "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ( रुधादि० ) एवं यदूर्ध्वः प्रज्वलनेनोर्ध्वं स्थास्यसि—इह यज्ञप्रसङ्गे शिल्पविधाने च नोऽस्मभ्यं द्रविणानि धत्ताद् दास्यसि, अस्या मातुर्वेद्याः—उपस्थाने जनयिष्यां कलायामुपस्थाने मूलस्थाने तव कृतः क्षयो निवासः स्थिरो भवतु ।

अस्मिन् मन्त्रे कात्थक्यस्य पक्षोऽपि प्रतिभासते यास्कदृष्टौ, यास्काय कात्थक्यमतं न रोचतेऽथातः शाकपूणिपक्षमेव प्रबलयति ऋग्द्वयेन—

अग्निरिति शाकपूणिः * । तस्यैषापरा भवति—

---

* एकस्यां हस्तप्रतिकायामेषः पाठो नास्ति, सर्वत्र यद्वा बहुषु तु विद्यते ।

"दे॒वेभ्यो॑ वनस्पते ह॒वींषि॒ हिर॑ण्यपर्ण प्र॒दिव॑स्ते॒ अर्थ॑म्।
प्र॒द॒क्षि॒णिद्र॑श॒नया॑ नि॒यूय॑ ऋ॒तस्य॑ वक्षि प॒थिभी॒रजि॑ष्ठैः॥" ( मै० सं० ४ । १३ । ७ )

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण ऋतपर्णापि वोपमार्थे स्याद्धिरण्यवर्णपर्णेति प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमो यज्ञस्य वह पथिभीरजिष्ठैर्ऋजुतमैरजस्वलतमैः प्रपिष्टतमैः † इति वा ॥ १९ ॥

भा०—हे वनस्पते ! वनानां काष्ठानामन्तः स्थितः सन् तेषां पालक पार्थिवाग्ने ! यज्ञाग्ने ! हिरण्यपर्ण ! ऋतपर्ण ! ऋतौ यज्ञौ नित्यनैमित्तकौ पर्णौ यस्य तथाभूत ! यद्वा हिरण्यवर्णानि-इव ज्वालापर्णानि यस्य तथाभूत ! त्वं देवेभ्यो हवींषि हव्यानि-ऋतस्य यज्ञस्य रजिष्ठैः-ऋजुतमैः सरलतमैर्यद्वा रजस्वलतमैरस्यन्तलोकसम्पादकैः "लोका रजांस्युच्यन्ते" ( निरु० ४ । १९ ) अथवा प्रपिष्टतमैः पारदर्शकैः शुभ्ररूपवत्तमैर्वा प्रपिष्टं सुसूक्ष्मं तच्च पारदर्शकं भवति । तस्मादेव "पिष्टं रूपनाम" ( निघं० ३ । ७ ) पारदर्शकैरतितेजस्विभिर्मार्गैः-वक्षि वह, इत्थङ्करणं तव प्रदिवः पुराणोऽर्थः कार्यक्रमोऽस्ति "प्रदिवः पुराणनाम" (निघं० ३ । ३७) त्वां 'प्रदक्षिणिद् रशनया नियूय' प्रकृष्टां दक्षिणां यज्ञदक्षिणां धेनुरूपां करोति निर्दिशति-इति प्रदक्षिणित् "तत्करोति तदाचष्टे" इत्यनेन णिच्, णिचि टेर्लोपः। णिजन्ताच्च क्विप् कर्तरि । प्रदक्षिणित्-रशना-अङ्गुलिस्तया तृतीयाविभक्तेर्लुक् "रशना अङ्गुलिनाम" ( निघं० २ । ५ ) प्रकृष्टदक्षिणासूचिकया-अङ्गुल्या नियूय नियोज्य-ऋत्विजो वयं यं त्वां तव कार्यक्रमं प्रब्रूमः ।

निरुक्तयः—'रजिष्ठैः' ऋजुशब्दात्-इष्टन् प्रत्ययः, ऋकारस्य रेफश्छान्दसः । यद्वा 'रजः' शब्दात्-मतुबर्थप्रत्ययस्य लोपश्छान्दसः, रजः-रजस्वलास्तैरतिशयितैः-रजस्वलतमैः, अथवा 'रजिष्ठैः-प्रपिष्टतमैः' प्रपिष्टतमैरित्यर्थप्रदर्शनं न व्युत्पत्तिः । रजः कणो भवति प्रपिष्ट इवातिसूक्ष्मः, अत्र मार्गविशेषणत्वात् पारदर्शकत्वमतिसूक्ष्मत्वं सुतेजस्वित्वं लक्ष्यते । तेजस्वितमैः शुभ्ररूपवत्तमैर्मार्गैः ॥

तस्यैषापरा भवति—

"वन॑स्पते रश॒नया॑ नि॒यूय॑ पि॒ष्टत॑मया व॒युना॑नि

† 'रजिष्ठैर्ऋजुतमै रजस्वलतमैस्तपिष्ठतमैः' इत्यपि पाठः क्वचित् ।

विद्वान्। वहा देवत्रा दिधिषो हवींषि प्र च दातारम-मृतेषु वोचः ॥" ( मै० सं० ४ । १३ । ७ )

वनस्पते रशनया नियूय सुरूपतमया वयुनानि विद्वान् प्रज्ञानानि प्रजानन् वह देवान् यज्ञे दातुर्हवींषि प्रब्रूहि च दातारममृतेषु देवेषु ॥ २० ॥

भा०—हे वनस्पते ! यज्ञाग्ने ! पिष्टतमया सुरूपतमया हिरण्मय्या स्वर्ण-रूपया प्रकृष्टदक्षिणया-ऋत्विजो नियोज्य प्रज्ञानानि प्रजानन् प्रज्ञापयन् बोधयन् देवत्रा देवान् प्रति दिधिषो दातुर्हवींषि यज्ञे वह प्रापय, अथ च यजमानस्य देवेषु-अमृतेषूच्चविद्वत्सु जीवन्मुक्तेषु दातारं प्रवोचः प्रब्रूहि प्रसिद्धं कुरु ।

निरुक्तः—'दिधिषो' षष्ठीविभक्ते रेफलोपश्छान्दसः । 'दिधिषुः' निपात्यते ( उणा० १ । ९३ ) दाधातोरुकारस्य धकारो निपात्यते ॥

इमौ द्वौ मन्त्रौ वनस्पतिविषयकौ यस्मिन् प्रकरणे पठितौ तत्र यूपशब्दो न विद्यते किन्तु-अग्निशब्दस्तूपलभ्यते तद्यथा-"पुरूण्यग्ने पुरुधा त्वा मा वसूनि राजन् वसुता ते अश्याम् । ....आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् ॥ मन्त्रः ५९ ॥ पुनः "देवेभ्यो वनस्पते...." तथा "वनस्पते रशनया...." ॥ ६३-६५ ॥ इति मन्त्रौ स्तः । तस्मादत्र वनस्पतिरग्निः ॥

स्वाहाकृतयः ॥ १३ ॥ इति त्रयोदश पदानि ।

स्वाहाकृतयः स्वाहेत्येतत् सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा ।

तासामेषा भवति—

"सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥" ( ऋ० १० । ११० । ११ )

सद्यो जायमानो निरमिमीत यज्ञमग्निर्देवानामभवत् पुरो-गाम्यस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं हविर-दन्तु देवाः * ।

भा०—'स्वाहाकृतयः' यज्ञे मन्त्रान्ते स्वाहाकरणक्रियाः स्वाहाकाराः । 'स्वाहा' इत्यस्मिन् पदे 'सु—आह' इति यस्यां क्रियायां सा स्वाहा । अथवा

---

* 'इति यजन्ति' पाठोऽधिकः क्वचित् ।

स्वा वाक् स्वा निजा वाणी यज्ञकर्मणि मन्त्रान्ते 'आह-अब्रवीति' तस्मात् सा स्वाहा-इत्युच्यते । यद्वा स्वं प्राह स्वमात्मानं यजमानं प्रदर्शयन् प्राह-प्रब्रवीति यया उक्त्या सा स्वाहा । सु-आहुतं सु-आत्तं गृहीतं हविर्जुहोति यया-उक्त्या सा स्वाहा । स्वाहाशब्दः स्त्रीलिङ्गः ( शब्दरत्नावली ) "स्वाहा देवहविर्दाने प्रशस्ता सर्वकर्मसु" ( शब्दकल्पद्रुमः ) तासां स्वाहाकृतीनां मन्त्रः "सद्यो जातः...." ।

मन्त्रार्थः—

अग्निर्देवो जातो जायमानः सद्यस्तत्काल एव यज्ञं निर्मितवान् सम्पादितवान् सम्पादयति देवानां वायुप्रभृतीनां पुरोगामी-अग्रगामी-अभवत् । ऋतस्य होतुरस्याग्नेः अग्निर्यज्ञस्य होता "तस्य [ यज्ञस्य ] अग्निर्होताऽऽसीत्" ( गो० पू० १ । १३ ) तस्याग्नेर्वाचि प्रदिशि-आस्ये प्रदेशे ज्वलिते स्वाहाकृतं (Oxygen and Oxidation) सम्यक्-हुतं हविर्देवा वायुप्रभृतयोऽदन्तु ॥

इतीमा आप्रीदेवता अनुक्रान्ताः । अथ किन्देवताः प्रयाजानुयाजाः । आग्नेया इत्येके ॥ २१ ॥

"प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्तभागम् । घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः । तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥" ( ऋ० १० । ५१ । ८-९ )

आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणम् ॥

भा०—इध्माद्या वनस्पत्यन्ता इमा आप्रीदेवता एकादश व्याख्याता विचारिताश्च । स्वाहाकृतयस्तूक्ता एव न तासां विचारप्रसङ्गः । नियत्याऽऽहुतक्रियाप्रदर्शिकाः स्वाहाकृतयः, न हि तत्र विवादो यथान्यत्र 'वनस्पतिर्यूप इति कात्थक्यः, अग्निरिति शाकपूणिः' इतिवत् । अथेदानीं विचार्यन्ते प्रयाजानुयाजाः किन्देवताकाः सन्ति, प्रजाया अनुयाजाश्च विशिष्टमन्त्राः सन्ति तेऽपि मन्त्रा आप्रीषु मन्त्रेषु गण्यन्ते, उक्तं यथा "प्रजापतिः प्रजास्सृष्ट्वा....एता आप्रीरपश्यत्....पूर्वार्द्धे यज्ञस्य क्रियन्ते मुखत एव....प्रयाजान् यजति" ( काठक० सं० २६ । ९ । २५ ) यदा तेऽपि मन्त्रा आप्रीमन्त्रेषु गण्यन्ते पुनस्तेषां देवताविचारस्य कः प्रसङ्गः ? आप्रीदेवतास्तु विचारिता हि-इध्माद्या वन-

स्त्यन्ताः। तत्र तु विचारणाऽऽसीत् प्रत्येकमन्त्रस्य पृथक् पृथग्देवतापरा, परन्त्वत्र विचारणा खलु तन्मन्त्रसमूहस्य का देवता यतस्तत्रापि सामूहिकदेवताविषयेऽपि सन्ति विप्रतिपत्तयः। आप्रीमन्त्रेभ्यश्च पृथक् संज्ञया घोषिताश्च प्रयाजानुयाजास्तस्माद् विचारप्रसङ्गो युक्त एव। के प्रयाजाः—पूर्ववचने स्पष्टीकृतमिदं यज्ञस्य पूर्वार्द्धे मुखतः क्रियन्ते सामान्यतस्तु यावद् यज्ञस्तावदपि क्रियन्ते—उच्चार्यन्ते ते प्रयाजा मन्त्राः, तथा "देवाः प्रयाजान् दृदृशुस्तैर्ऋतून्त्संवत्सरं प्रायजन्...तस्मात् प्रयाजाः" ( शत० १ । ५ । ३ । १ ) ऋतुयाजाः संवत्सरयाजाः प्रयाजाः। अनुयाजाः—अनुयाजमन्त्राः पश्चात् प्रयुक्ताः "सर्वास्विष्टासु देवतासु पश्चेवानुयजति [ यैः ] तस्मादनुयाजाः" ( शत० १ । ९ । २ । ८ ) "छन्दांसि अनुयाजाः" (शत० १ । ३ । २ । ९) तेषां छन्दस्त्वाद् गौणाः सन्ति। उपयजोऽपि भवन्ति मिश्रिता मन्त्राः "यद् यजन्तमुपयजति [ यैः ] तस्मादुपयजो* नाम" ( शत० ३ । ८ । ४ । १० ) "एकादश प्रयाजा एकादशानुयाजा एकादशोपयज एतावतीर्देवताः...त्रयस्त्रिंशद् वै देवताः सोमपास्त्रयस्त्रिंशदसोमपाः। अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, वषट्कारश्च प्रजापतिश्च ते सोमपाः, प्रयाजा अनुयाजा उपयजस्तेऽसोमपाः" ( काठक सं० २६ । ९ ) "ते प्रयाजा वा आज्यहविषो भवन्ति" ( शत० १ । ५ । ३ । ४ ) आज्यं घृतं च हविश्च हव्यं पिबन्ति ते। "प्रयाजानुयाजा वै देवा आज्यपाः" ( शत० १ । ४ । २ । १७ )। ते प्रयाजा अनुयाजा मन्त्राः सामूहिकरूपेण —आग्नेयाः—अग्निदेवत्याः सन्तीत्येके नैरुक्ता मन्यन्ते। तत्र वेदस्य प्रमाणं दत्तं मन्त्रद्वयम् "प्रयाजान् मे अनुयाजांश्च" तथा "तव प्रयाजा अनुयाजाश्च"। दर्शपौर्णमासयागाङ्गेषु प्रयाजानुयाजा भवन्ति "समिधो यजति, तनूनपातं यजति" प्रभृतयः प्रयाजानुयाजमन्त्राः।

मन्त्रार्थः—

हे देवाः—ऋत्विजो विद्वांसः ! प्रयाजान् चानुयाजान् केवलान् मन्निमित्तानेव कृत्वा तैः सह हविष ऊर्जस्वन्तं तेजस्विनं भागमपां भागं घृतम्—अप्शब्देनात्र पयो दुग्धं लक्ष्यते, दुग्धस्य भागं घृतम्, ओषधीनां भागं पुरुषं पुरु बहु सम्भजनीयं फलबीजं तत्सम्पन्नं पाकविशेषं पुरोडाशादिकं मह्यं दत्त यथाग्नेर्ममायुश्चिरं स्थिरं ज्वलनं स्यात्।

हे अग्ने ! तव प्रयाजा अनुयाजाश्च हविष ऊर्जस्वतो भागाः केवलास्त्वन्निमित्तास्तव सन्तु। अयं यज्ञस्तवास्तु चतस्रः प्रदिशस्तुभ्यं नमन्ताम्।

---

* "विजुपे छन्दसि" (अष्टा० ३ । २ । ७३)

तथैव ब्राह्मणं च "आग्नेयाः प्रयाजानुयाजाः" ( शांखा० ब्रा० १ । २ ) अथ विभिन्नमतानि प्रदर्श्यन्ते यतोऽत्र निर्णयः कृतः—

छन्दोदेवता इत्यपरम्। छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजा इति च ब्राह्मणम्।
ऋतुदेवता इत्यपरम्। ऋतवो वै प्रयाजा ऋतवोऽनुयाजा इति च ब्राह्मणम्।
पशुदेवता इत्यपरम्। पशवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणम्।
प्राणदेवता इत्यपरम्। प्राणा वै प्रयाजाः प्राणा वा अनुयाजा इति च ब्राह्मणम्।
आत्मदेवता इत्यपरम्। आत्मा वै प्रयाजा आत्मा वा अनुयाजा इति च ब्राह्मणम्।
आग्नेया इति तु स्थितिः। भक्तिमात्रमितरत्॥

भा०—उक्तब्राह्मणवचनानि कानिचिद् वर्तमानब्राह्मणेषूपलभ्यन्ते कानिचिन्न, तानि कुत्र चिदलब्धब्राह्मणेषु विद्येरन्। यत्र यानि ह्युपलभ्यन्ते तानि दर्शयामः—

"छन्दांसि ह्यनुयाजाः" (शत० १।३।२।९)

"ऋतवो वै प्रयाजानुयाजाः" (कौ० १।४)

"प्राणा वै प्रयाजानुयाजाः" (शत० १४।२।२।५१)

"पशवो वै प्रयाजाः" (कौ० ३।४)

एवम् 'अग्निः, छन्दांसि, ऋतवः, पशवः, प्राणाः, आत्मा' देवताः प्रयाजानुयाजानां पठिताः सन्ति ब्राह्मणेषु, परन्तु प्रयाजानुयाजाः सन्ति खल्वाग्नेयाः—अग्निदेवताकाः—इति स्थितिः—वस्तुस्थितिः—वास्तविकता। इतरत् कथनं तु भक्तिमात्रं गौणमस्ति। श्रुतिवचनं मुख्यं श्रुतौ त्वाग्नेया उक्ताः प्रदर्शितं खलु श्रुतिवचनद्वयम्। एकेन ब्राह्मणेनानुमोदितं च॥

किमर्थं पुनरिदमुच्यते। यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट् करिष्यन्निति ह विज्ञायते॥

भा०—किमर्थं तर्हीदं निर्णयवचनमुच्यते। एतदर्थं यद् यस्यै देवतायै हविर्गृहीतं भवेत् तां देवतां मनसा वषट् करिष्यन् चिन्तयेद् यदिदं सुष्ठु हविष्प्रदानमिति। वषट् सुष्ठु हविष्प्रदानेऽर्थे॥

* तान्येतान्येकादशाप्रीसूक्तानि ।

तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमिति नाराशंसवन्ति मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्त्यतोऽन्यानि तनूनपात्वन्ति ॥ २२ ॥

भा०—तानि तथाभूतानि खल्वेतानि सन्त्याप्रीसूक्तानि । तेषां वासिष्ठं वसिष्ठेन दृष्टम् "जुषस्व नः समिधमग्ने" ( ऋ० ७ । २ ) आत्रेयम्—अत्रिणा दृष्टम् "सुसमिद्धाय शोचिषे....." ( ऋ० ५ । ५ ) वाध्र्यश्वं वध्र्यश्वेन दृष्टम् "इमां मे अग्ने समिधं....." ( ऋ० १० । ७० ) गार्त्समदं गृत्समदेन दृष्टम "समिद्धो अग्निर्निहितः....." ( ऋ० २ । ३ ) इत्येतानि चत्वारि सूक्तानि सामूहिकरूपेण नाराशंसदेवत्यानि । मैधातिथं मेधातिथिना दृष्टम् सुसमिद्धो न आवह ...." ( ऋ० १ । १३ ) दैर्घतमसं दीर्घतमसा दृष्टम् "समिद्धो अग्न आ वह....." ( ऋ० १ । १४२ ) तथा प्रैषिकं सूक्तं यत्र प्रेष्यते प्रेर्यते 'होतर्यज' अन्तिमवचनेन तथाभूतं प्रैषसूक्तम् "होता यक्षदग्निं समिधा ...." ( मै० सं० ४ । १३ । २ ) एतानि त्रीणि खलूभयवन्ति नाराशंसदेवत्यानि तनूनपाद्देवत्यानि च, सतम्योऽन्यानि चत्वारि सूक्तानि—अगस्त्येन दृष्टम्—"समिद्धो अद्य राजसि....." ( ऋ० १ । १८८ ) विश्वामित्रेण दृष्टम् "समित्समित्सुमना बोध्यस्मे....." ( ऋ० ३ । ४ ) काश्यपेन दृष्टम् "समिद्धो विश्वतस्पतिः....." ( ऋ० ९ । ५ ) जमदग्निना दृष्टम् "समिद्धो अद्य मनुषो दुरोणे....." ( ऋ० १० । ११० ) इत्येतानि चत्वारि सूक्तानि सामूहिकरूपेण तनूनपाद्देवत्यानि सन्ति । ऋग्वेदस्य दशसूक्तानि प्रैषसूक्तं च मैत्रायण्याः संहितायाः—आप्रीसूक्तान्यविकलत्वाद् गृहीतानि । सन्त्यन्यत्राप्याप्रीमन्त्राः, तद्यथा यजुर्वेदे अ० २० मं० ३६–४६, ५५–६६, अ० २१ मं० १२–२२, अ० २७ मं० ११–२२, अ० २८ मं० १–११, २४–३४, अ० २९ मं० १–११, २५–३६ । अथर्व० का० ५ सू० १२, २७ । मैत्रायण्याः संहितायाः प्रैषसूक्तमन्त्रा अत्र परिचयाय दीयन्ते—

होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धं नाभा पृथिव्याः ।
संगथे वामस्य वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज ॥ १ ॥

---

* दुर्गभाष्ये स्कन्दभाष्ये च 'इतीमान्येतानि' इति पाठो न सम्यक् । होशियारपुरस्थे वि० वै० शोधसंस्थानपुस्तकालये १७५ इति संख्याकायां हस्तप्रतिकायां (१६४६ शके प्रतिलिपितायाम्) वैदिकयन्त्रालयमुद्रिते निरुक्ते च 'तान्येतानि' इति पाठः ।

होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम् ।
मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥२॥

होता यक्षन्नराशꣳसं नृशस्तं नॄꣳप्रणेत्रं गोभिर्वपावान्त्स्याद्वीरैः ।
शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज ॥ ३ ॥

होता यक्षदग्निमिड ईडितो देवो देवं आ च वक्षद् दूतो हव्यवाड्—
मूरा उपेमꣳ यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज ॥ ४ ॥

होता यक्षद् बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथताꣳ स्वासस्थं देवेभ्य एमेनदद्य वसवो रुद्रा आदित्याः स्वदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥ ५ ॥

होता यक्षद् दुर ऋष्वाः कवष्यो कोशधावनीरुदातामिर्जिहताꣳ विपक्षोभिः श्रयन्ताꣳ सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ॥ ६ ॥

होता यक्षदुषासानक्ता बृहती सुपेशसा नॄꣳपतिभ्यो योनिं कृण्वाने सꣳस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदताꣳ वीतामाज्यस्य होतर्यज ॥७॥

होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा स्विष्टमद्यान्यः । करदिषा स्वभिगूर्तमन्य ऊर्जा सतवसेमꣳ यज्ञं दिवि देवेषु धत्ताꣳवीतामाज्यस्य होतर्यज ॥ ८ ॥

होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येमपस्तन्वताम् ।
देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज ॥ ९ ॥

होतायक्षत् त्वष्टारमचिष्टुमपाकꣳ रेतोधाꣳ विश्रवसꣳ यशोधाम् ।
पुरुरूपमकामकर्शनꣳ सुपोषः पोषैः स्यात् सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज ॥ १० ॥

होता यक्षद् वनस्पतिमपावस्त्रक्षद्धियो जोष्टारꣳ शशमन्नरः ।
स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज ॥११॥

( मैत्रायणी सं० ४ । १३ । २, काठक सं० १५ । १३ )

वक्तव्यम्—पूर्वोक्तेषु दशसु खल्वाप्रीसूक्तेषु यास्केन ( ऋ० १० । ११० ) इति० सूक्तमेवोदाहरणाय कथं गृहीतं किमत्र कारणम् ? उच्यते—अस्मिन् सूक्तेऽनेकार्थानि सन्देहजनकानि वा कानिचित् पदान्यासन् तस्मात् सूक्तमिदं गृहीतम् । अन्यत्र सूक्तेषु न तथा सन्दिग्धानि पदानि ।

वनस्पतिमन्त्रानत्रोदाहरणायोपस्थापयामः—

अवं सृजा वनस्पते देवं देवेभ्यो हविः ।
प्र दातुरस्तु चेतनम् ॥ ( ऋ० १ । १३ । ११ )

अवसृजन्नुप त्मना देवान् यक्षि वनस्पते ।
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः ॥ ( ऋ० १ । १४२ । ११ )

उप त्मन्या वनस्पते पाथो देवेभ्यः सृज ।
अग्निर्हव्यानि सिष्वदत् ॥ ( ऋ० १ । १८८ । १० )

वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः ।
त्रिधा समक्तं नयतु प्रजानन् देवेभ्यो दैव्यः शमितोप हव्यम् ॥
( ऋ० २ । ३ । १० )

वनस्पतेऽवसृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥
( ऋ० ३ । ४ । १०, ७ । २ । १० )

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि ।
तत्र हव्यानि गामय ॥ ( ऋ० ५ । ५ । १० )

वनस्पतिं पवमान मध्वा समङ्ग्धि धारया ।
सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥ ( ऋ० ९ । ५ । १० )

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥
( ऋ० १० । ७० । १० )

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥
( ऋ० १० । ११० । १० )

अन्तिमं मन्त्रं विहाय सर्वेषु मन्त्रेषु क्रिया खल्वेकवचनिका, अन्तिमे ( ऋ० १० । ११० । १० ) मन्त्रे तु 'स्वदन्तु' तथा कर्तारश्च त्रयः 'वनस्पतिः, शमिता, देवो अग्निः' तस्मादत्राग्नेर्भिन्नो वनस्पतिः स्यात् स च यूपो भवेदिति मतं कात्थक्यस्य । शाकपूणेर्मते वनस्पतिरग्निरिस्ति । स च पार्थिवोऽग्निः, शमिता

वैद्युतोऽग्निः, देवोऽग्निस्तु सूर्यस्तस्य द्युस्थानत्वात् । यथा वेदान्तदर्शने "अत एव न देवता भूतं च" ( वेदान्त० १ । २ । २७ ) भूतशब्देन पञ्चभूतानि तत्र वैश्वानरोऽध्यात्मप्रसङ्गे परमात्माऽस्ति, स न भूतं पार्थिवोऽग्निर्न च देवता सूर्यः । यद्वा कर्मकाण्डे वनस्पतिर्गार्हपत्योऽग्निः, शमिता-आहवनीयोऽग्निः, देवोऽग्निर्दक्षिणाग्निः ॥

आप्रीसूक्तानि विहायान्यत्र सूक्तेषु यथायोग्यवस्तुवाचकाः सन्ति हि यथा वनस्पतिः शब्दः-ओषधिवाचकः—

त्वं च सोम नो वशो जीवातुं न मरामहे ।

प्रियस्तोत्रो वनस्पतिः ( ऋ० १ । ९१ । ६ )

मा काकम्बीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः । (ऋ० ६।४८।१७)

उत स्म ते वनस्पते वातो वि वात्यग्रमित् ।

अथो इन्द्राय पातवे सुनु सोममुलूखल ॥ ( ऋ० १ । २८ । ६ )

अथ बहुवचने—

तन्नो रायः पर्वतास्तन्न आपस्तद्रातिषाच ओषधीरुत द्यौः ।

वनस्पतिभिः पृथिवी सजोषा उभे रोदसी परिपासतो नः ॥

( ऋ० ७ । ३४ । २३ )

इति तृतीयः पादः ।

समाप्तश्चाष्टमोऽध्यायः ॥

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

---

## नवमोऽध्यायः

### तत्र

### प्रथमः पाद

अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः ।

भा०—अथेदानीं पृथिवी-आयतनमाश्रयो येषां तानि पृथिव्यायतनानि पृथिवीस्थानवर्तीनि सत्त्वानि सत्तात्मकानि वस्तूनि स्तुतिं स्तवनं वर्णनं लभन्ते तान्यत आरभ्य व्याख्यास्यामः ।

अश्वः ॥ १ ॥

तेषामश्वः प्रथमागामी भवति । अश्वो व्याख्यातः ॥ १ ॥

तस्यैषा [ आंशिकी ] ऋग्भवति—

"अश्वो वोढा * सुखं रथं हसनामुपमन्त्रिणः ।
शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥" ( ऋ० ९ । ११२ । ४ )

---

* 'अश्वो वोढा' इति मन्त्रे 'अश्वः' देवतात्वेन सन्दिह्यते तस्माद् यास्केन मन्त्रो दत्तः । सूक्तस्य देवता तु 'पवमानः सोमः' 'इन्दो परि स्रव' परन्तु मन्त्रेऽस्मिन्नांशिकी देवता भवत्यश्वः । यथा सर्वमपि 'नवमं मण्डलं पावमानदेवताकं परन्तु तस्य पञ्चमं सूक्तं खल्वाप्रीदेवत्यं प्रतिमन्त्रम् 'पवमान' शब्दे विद्यमानेऽपि । तथैवात्रांशिकरूपेण भवतु प्रथमपादस्याश्वो देवता न तु समग्रस्य मन्त्रस्य । सूक्तभाग् देवता तु पवमानः सोमः । अत्र यास्कभाष्यं लिपिप्रमादाद् यद्वा पत्रध्वंसादन्यथा जातं भवेत् । दुर्गाचार्येण स्कन्दस्वामिना च खण्डकण्डिकायां संख्यातोऽपि न व्याख्यात एष प्रसङ्गः, भाष्यस्य त्रुटितत्वाद् यद्वा प्रसङ्गस्याश्लीलत्वात् । प्रक्षिप्त एष प्रसङ्ग इत्यपि वक्तुं शक्यतेऽस्माकं नास्ति क्षतिः । परन्तु यास्कस्य शैली हीदृशी पूर्वमल्पविषयकं सन्दिग्धं प्रसङ्गं दर्शयति । "अग्निमीळे पुरोहितम्०" इति पूर्वम् "अग्निः पूर्वेभिः" स्पष्टं पश्चात् । एष आचारः प्रायो वर्तते । वयमग्रे स्थाने स्थाने दर्शयिष्यामः ।

अश्वो वोढा, सुखं वोढा रथं वोढा । सुखमिति कल्याणनाम कल्याणं पुण्यं सुहितं भवति सुहितं गमयतीति वा [ गम्यतीति वा ? ] 'हसनां हसनं हसनः' हासयिता [ हसैता ? ] वा पाता वा पालयिता वा शेपमिच्छत इति [ शेपमृच्छतीति ? ] वारि वारयति 'मण्डूको विख्यातः' [ मा नो व्याख्यातः ? ] ॥ २ ॥

भा०—अश्वो निघण्टुक्रमेण प्रथमं प्राप्तः, उपयोगक्रमेणापि यात्रार्थं भारवहनायापेक्ष्यते प्रथमम् । स व्याख्यातः पुरस्तात् "अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा" ( निरु० २ । २७ ) तस्यैषा—ऋग् भवति "अश्वो····" मन्त्रार्थः—

'अश्वो वोढा' इति कथं वोढा ? उच्यते—सुखं वोढा—सुखं वहति पृष्ठे जनम्, सुखेन वहति जनं सुखं जनस्य वहति । पुनश्च वोढा यतो रथं यानं वहति तस्मादश्वो वोढा, अत एव स देवता पृथिवीस्थानीयेषूपयुक्तः पदार्थः । सुखं कल्याणं भवति, कल्याणं पुनः पुण्यं सुहितं भवति, कल्याणं पुण्यं च सुहितं च । कल्याणं पुण्यं यथा "चित्तनामोभयतो वाहिनी नदी वहति पापाय वहति कल्याणाय च" ( योग० १ । १४ व्यासः ) कल्याणं सुहितं प्रसिद्धम् 'अस्ति कच्चित् कल्याणं ते' । यद्वा कल्याणं सुहितं गमयति सुहितकरं कल्याणं भवति । कम्—सुखं सुहितं यापयति कल्याणम् 'म्' इत्यस्य 'ल्' रलयोः समानधर्मत्वात्—नकारस्य णकारः । उपमन्त्रिणो निजमन्त्रिणो जनाः—हसनां हसनं हासयितारं पातारं पालयितारं वा राजानमिच्छन्ति । "अमि पूर्वम्" इत्यत्र "वा छन्दसि" ( अष्टा० ६ । १ । १०६ ) इत्यनुवर्तनात् सवर्णदीर्घत्वम्—हसनाम् । रोमण्वन्तौ रोमवन्तौ भेदौ युवत्या विवृतौ योनिपार्श्वौ यौवने तथा जायमानत्वात्—शेपः शेपमिच्छतः, 'शेपस्, शेपः' अकारान्तोऽपि भवति । अनुवादेऽकारान्तः प्रयोज्यतेऽर्थस्य स्पष्टीकरणाय, मण्डूको वाः—इत्—जलमेवेच्छति । तथा—इन्द्रः—उपासक आत्मा पवमानं सोममिच्छति तस्मात्—इन्दो पवमान सोम ! इन्द्रायोपासकाय मह्यं परिस्रवानन्दप्रवाहेण प्रवह ॥

तस्यैषा [ समग्रा ] ऋग्भवति—

"मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिन्द्र॑ ऋभु॒क्षा म॒रुत॒ः परि॑ ख्यन् । यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्ते॑ः प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥" ( ऋ० १ । १६२ । १ )

यद् वाजिनो देवजातस्य सप्तेः सरणस्य प्रवक्ष्यामो यज्ञे विदथे वीर्याणि मा नस्त्वं मित्रश्च वरुणश्चार्यमा चायुश्च वायुरयन इन्द्रश्चोरुक्षयण ऋभूणां राजेति वा मरुतश्च परिख्यन् ॥

भा०—तस्याश्वस्य समग्रैषा स्तुतिर्भवति "मा नो मित्रो...." इति ।

वक्तव्यम्—

य एष मन्त्रो यास्केनोदाहृतस्तत्र–अश्वशब्दो न वर्तते, यत्र प्रत्यक्षमश्वशब्दो विद्यते तथाभूतो मन्त्रः कथन्नोदाहृतः, सन्ति बहवो मन्त्रा यत्र खल्वश्वः साक्षादुपलभ्यते । उच्यते—यत्र विद्यमाने सन्देहः स्याद् यत्र वाऽनेकार्थत्वं भवेद् देवतात्वेनादेवतात्वेन च मन्त्रार्थयोजना स्यादथवा यत्र देवतायाः साक्षाद् यद्वा परोक्षं स्वरूपवर्णनं भवेत् स एव मन्त्रो दैवतप्रकरणे–उदाहर्तव्य इति लक्ष्यं यास्कस्य । सन्ति हि वैदिकवाङ्मयेऽश्वादयः शब्दाः क्वचिद् देवताः क्वचिच्चादेवताः । नह्येतद्यद् दैवतकाण्डे पठितानि देवतानामान्यपि तानि नादेवतानामानि, किन्तु भवन्ति तान्यदेवतानामान्यपि, सूचितं हि यास्केनानेकत्र यथा "दधिक्रा–तस्याश्ववद् देवतावच्च निगमा भवन्ति" ( निरु० २ । २७ ) यथा ह्यश्वविषये–"यदि नो गां हंसि यद्यश्वं यदि पूरुषम्" ( अथर्व० १ । १६ । ४ ) "यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् । रिपुः स्तेनः स्तेयकृद् दभ्रमेतु नि ष हीयतां तन्वा च ॥" ( ऋ० ७ । १०४ । १० ) "मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।" ( ऋ० १ । ११४ । ८ ) अनेकत्र चोपमायां देवतामुपमिमीते, यथा "अश्वो न क्रन्दञ्जनिभिः समिध्यते वैश्वानरः" ( ऋ० ३ । २६ । ३ ) एवम् ( ऋ० ३ । २७ । १४, २९ । ६, ४ । २ । ८, ६ । ३ । ४, ४५, २६, ७ । ३ । २ ) इत्येषु खल्वग्निं देवतामुपमिमीते । "अश्वो न निक्तो नदीषु" ( ऋ० ८ । २ । २ ) इतीन्द्रम् "अश्वो न चक्रदो वृषा" ( ऋ० ९ । ६४ । ३ ) इति सोममुपमिमीते । एषां तूदाहरणे नास्त्यवकाशः । परन्तु ये देवताभिः सह सम्बद्धास्तेऽपि नोदाह्रियन्तेऽदेवतात्वात् तेषां यथा "यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति" ( ऋ० १ । ११६ । ६ ) "वह कुत्समिन्द्र यस्मिन्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा" ( ऋ० १ । १७४ । ५ ) इति द्विवचने–अश्वा–अश्वौ । "अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय" ( ऋ० ६ । ७५ । १३ ) द्वितीयाबहुवचने । 'सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥" ( ऋ०

१ । १६ । ९ ) यत्र स्वरूपवर्णनमश्वदेवतायाः स मन्त्रः कथन्नोदाह्रियते यथा "तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूंरनपव्ययन्तः ॥" ( ऋ० ६ । ७५ । ७ ) अत्र देवता—अश्वाः । यत्र देवतायाः स्वरूपवर्णनं साक्षाच्चासाक्षाच्चोभयविधं भवति तत्र खल्वसाक्षाद् देवताया उदाहरणं दीयते तद्दाक्ष्याय ॥

अत्र खलु सन्देहोऽस्ति, सन्ति हि कानिचित् पदानि मन्त्रे सूक्ते च यैः पशुरश्वः सन्दिह्यते, तद्यथा मन्त्रे तु 'वाजिनः सप्तेः' इत्युभे पदे पशोरश्वस्य नामनी स्तः "वाजी—अश्वनाम" ( निघं० १ । १४ ) "सप्तिः—अश्वनाम" ( निघं० १ । १४ ) सूक्ते च "मुखतो नयन्ति" ( २ ) "एष छागः पुरो अश्वेन वाजिना"—छागसाहचर्यम् ( ३ ) "चषालं ये अश्वयूपाय तक्षति" ( ६ ) "या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य प्रभृतमास्ये तृणं...." ( ८ ) यच्च पुपौ यच्च घासिं जघास" ( १४ ) इत्येतैः पदैः साधारणः पशुरश्वः सन्दिह्यते, तस्माद् यास्कः सन्दिग्धत्वादेतं मन्त्रं सूक्तं वोदाहरति । यदत्र मन्त्रे सूक्ते चाश्वो देवताऽस्तीतीत्थं सर्वत्र देवतासु स्वयं विवेचनीयं न सर्वत्रास्माभिर्विवेचना करिष्यते विस्तारभयात् ।

मन्त्रार्थः—

यद् वयं देवजातस्य देवैर्जातस्य देवैः सञ्जातस्य देवानां शक्तिं प्राप्तस्य सप्तेः सरणस्य क्षिप्रमत्यन्तं गमनशीलस्य वाजिनोऽश्वस्य कृत्रिमस्य कलारूपस्याश्वस्य । कलाश्वो भवति, उक्तमेतदन्यत्र वेदेऽपि "ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वा । ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रम् ॥" ( ऋ० ४ । ३३ । १० ) अन्यच्च "तक्षन् रथं सुवृतं विद्मनापसस्तक्षन् हरी इन्द्रवाहा वृषण्वसू । तक्षन् पितृभ्यामृभवो युवद्वयस्तक्षन् वत्साय मातरं सचाभुवम् ॥" ( ऋ० १ । १११ । १ ) उभयत्र मन्त्रयोः 'अश्वौ—हरी' 'ऋभवः—तक्षन्' इत्युक्तम्, ऋभवश्च शिल्पिनो रथकारा भवन्ति, उक्तं हि वेदे "यदि कर्तं पतित्वा संशश्रे यदि वाश्मा प्रहृतो जघान । ऋभू रथस्येवाङ्गानि सन्दधत् परुषा परुः ॥" ( अथर्व० ४ । १२ । ७ ) एतादृशस्य देवानां शक्तिं प्राप्तस्य यन्त्ररूपस्य कृत्रिमस्याश्वस्य विदथे वेदने घोषणे चेतने—आहवे संग्रामयज्ञे "विदथे सुवीराः—वेदने सुवीराः" ( निरु० १ । ७ ) "विद चेतनाख्याननिवासेषु" ( चुरादि० ) संग्रामे वीर्याणि प्रवक्ष्यामः । तर्हि ते देवा येषां शक्तिं प्राप्तस्य कृत्रिमस्य प्रशंसां कुर्मस्ते मित्रोऽग्निः, "एष अग्निः—भवति मित्रः" (शत० २ । ३ । २ । १२ ) वरुणः सूक्ष्मा आपो वाष्परूपाः "आपः—यच्च वृत्वाऽतिष्ठं-

स्तद् वरणोऽभवत् तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण" ( गो० पू० १ । ७ ) अर्यमा सूर्यः "अर्यमाऽऽदित्यः" ( निरु० ११ । २३ ) ऋभुक्षा- इन्द्रः-उरुक्षयणः-बहुनिवासो विस्तृते स्थानेऽन्तरिक्षे यो निवसति यद्वा-ऋभूणां राजा विद्युद्देवो य ऋभून् क्षियति-ईष्टे "क्षियति ऐश्वर्यकर्मा" ( निघं० २ । २१ ) ऋभवोऽन्तरिक्षस्थायमानि चलत्तरङ्गाः "ऋभव इन्द्रस्य प्रियं धाम" ( तां० १४ । २ । ५ ) मरुतो वातप्रवाहाः । एते देवा नोऽस्मान् मा परिख्यन् न निन्देयुः, यदस्मान् विहायास्मत्पुत्रं प्रशंसन्त्येते, अस्मान्न प्रशंसन्ति, अस्मत्तः शक्तिं प्राप्तं यन्त्रमश्वं प्रशंसन्ति । एषां देवानां शक्तिमादाय कृत्रिमोऽश्वोऽश्वयन्त्रं सम्पत्तुं शक्यते । पशुरश्वोऽपि ग्रहीतुं युज्यते स च मित्रादीनां देवानां गुणैर्युक्तो भवतीति स संग्रामे-उपयोज्यः प्रशंसनीयश्च ।

निरुक्तयः—सप्तिः सरणः-इत्यर्थप्रदर्शनम्, "सृप गतौ" ततः "वसेस्तिः" ( उणा० ४ । १८० ) धातोर्बाहुलकात् तिः प्रत्ययः, रेफस्य लोपः सप्तिः । विदथः "रुविदिभ्यां ङित्" अथः प्रत्ययः ( उणा० ३ । ११५ ) 'आयुः- वायुः' वकारलोपश्छान्दसः । अर्थप्रदर्शनं वा, इण् गतौ, वा गतौ धातुसमानार्थ- त्वात् । 'ऋभुक्षाः' 'उरु' उपपदात् "क्षि निवासे" ( तुदादि० ) ततो डिनिः प्रत्ययो बाहुलकादौणादिकः । उरुशब्दस्य 'ऋभु' भावश्छान्दसः । यद्वा 'ऋभु' उपपदात् "क्षि ऐश्वर्ये" ततः पूर्ववत्-डिनिः प्रत्ययः । ऋभुक्षिन्-ऋभुक्षाः । "पथिमथ्यृभुक्षामात्" ( अष्टा० ७ । १ । ७५ ) ॥

शकुनिः ॥ २ ॥

शकुनिः शक्नोत्युन्नेतुमात्मानं, शक्नोति नदितुमिति वा, शक्नोति तकितुमिति वा, सर्वतः शङ्करोऽस्त्विति वा, शक्नोतेर्वा ॥ ३ ॥

भा०—पृथिवीस्थानदेवतासु द्वितीयं वस्तु शकुनिः । पृथिव्यां प्रथमं गमन- शीलमाशुगामिनमश्वं पश्यति पश्चादनायासादाकाशगामिनं शकुनिं पश्यति । शकुनिः-यः खल्वात्मानमुन्नेतुं पृथिवीतलादुपरि नेतुमुड्डयनाय शक्नोति स शकुनिः पक्षयुक्तत्वात्-उड्डयनशक्तिमत्त्वात् । शक्नोतीति शक् क्विपि, 'शक्' उपपदे- उदुपसर्गपूर्वात् "णीञ् प्रापणे" ( भ्वादि० ) ततः "सर्वधातुभ्य इन्" इः ( उणा० ४ । ११८ ) डिच्च बाहुलकात्-शकुनिः, उदो दकारलोपश्छान्दसः । यद्वा शक्नोति वदितुम्, शक्नोतीति शक् पूर्ववत् 'शक्' उपपदे "णद अव्यक्ते शब्दे" ( भ्वादि० ) ततः पूर्ववत् 'इन् डिच्च' मध्ये-उकारोपजनः शकुनिः ।

शक्नोति तकितुं गन्तुं भूमावाकाशे च "तकति गतिकर्मा" ( निघं० २ । १४ ) शक्नोतीति शक् पूर्ववत्, शक् उपपदे तक धातोः 'नि' प्रत्ययो डित्, उकारस्तकारस्य शकुनिः पृषोदरादित्वात् । अथवा सर्वतः शङ्करः कल्याणकरो भाषणेन शोधनेन रक्षणेन च शकुनिः 'शम्' उपपदात् कृधातोर्निः प्रत्यय औणादिको बाहुलकात् । उपपदस्य मकारलोपः कृधातोः—ऋकारस्य भवत्युकारापत्तिः—शकुनिः। यद्वा शक्नोतेः केवलात् "शक" धातोरेव शकुनिः "शकेरुनोन्तोन्त्युनयः" ( उणा० ३ । ४९ ) शक्—उनिः प्रत्ययः शकुनिः । शक्नोति हि जीवितुं भूमौ गृहे वृक्षेऽन्नैः फलैरन्यैर्वा स शकुनिः पक्षी ॥

तस्यैषा भवति—

"कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥" ( ऋ० २ । ४२ । १ )

न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचमीरयितेव नावं सुमङ्गलश्च शकुले भव कल्याणमङ्गलः । मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वा । अङ्गलमङ्गवत् । मज्जयति पापकमिति नैरुक्ताः । मां * गच्छत्विति वा मा च त्वा का चिदभिभूतिः सर्वतो विदत् ॥

वक्तव्यम्—

भा०—'शकुनिः, शकुन्तिः, शकुनः, शकुन्तः' इत्येते पक्षिवाचकाः शब्दा यद्वा समानार्थकाः । "शकेरुनोन्तोन्त्युनयः" ( उणा० ३ । ४९ ) अत्र देवतात्मके तु द्वे नामनी 'शकुनिः शकुन्तिः' इत्येतावेत्र स्तः । 'शकुन्तिका' स्त्रीलिङ्गे तथा 'शकुनः'. पुंलिङ्गे पक्षिवाचकौ हि स्तः, तद्यथा "इयत्तिका शकुन्तिका सका जघास ते विषम् । सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥" ( ऋ० १ । १९१ । ११ ) इति सर्पविषनाशने शकुन्तिकायाः श्वेतकृष्णमिश्रितवर्णयुक्तायाश्चटकाया उपयोगः । "जरतीभिरोषधीभिः पर्णेभिः शकुनानाम् ।" ( ऋ० ९ । ११२ । २ ) अत्र पक्षिणां पक्षैः किमपि व्यजनं भूषकं वस्तु निर्मातव्यं लक्ष्यमस्ति । अनेकत्रोपमायां च । देवतात्मके शकुनिशब्दे वैशिष्ट्येन भवितव्यम्, तत्र देवत्वं देवधर्मवत्त्वं प्रदर्शनीयं भवेत् ।

* 'मा गच्छत्विति' पाठो होशियारपुरस्थे वि० वै० शोधसंस्थानपुस्तकालये १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्)

तच्चेत्थं यथा देवताविभावे प्रदर्शितम्—देवता कपिञ्जलरूपीन्द्रः—कपिञ्जल इवेन्द्रः। इन्द्रोऽत्र विद्युद्देवः। "यदशनिरिन्द्रः" (कौ० ६।९) "विद्युद्वा अशनिः" (शत० ६।१।३।१४) स च यन्त्रप्रयुक्तः शकुनिवद् भाषमाणः स्यात्, इन्द्रो जीवात्मा च "इन्द्रियमिन्द्रलिङ्गम्...." (अष्टा० ५।२।९३) स चोत्कृष्टवक्ता स्यात्। अधुना मन्त्रार्थः प्रस्तूयते।

मन्त्रार्थः—

स खलु मनसि लक्षितः शकुनिः पक्षी जनुषं जन्म स्वात्मानं प्रब्रुवाणः प्रकथनहेतवे कनिक्रदत्—भृशं क्रन्दति शब्दयति यदहममुकनामा पक्षी यथाह्यस्य शब्दस्तथा नाम, तस्मात् तादृशीं वाचमियर्ति—ईरयति प्रेरयति—अग्रसरीं करोति नावमिवारिता—अरिता—ईरयिता चालयिता नावं नौकां यथाऽग्रसरीं करोति तथा। तस्मात्—हे शकुने देव शकुनिरिव—इन्द्र! यन्त्रप्रयुक्त विद्युद्देव! यद्वा शिक्षित विद्वन्! तथैव भवात्मानं प्रदर्शय सुमङ्गलः सन् प्रतिदिनमस्मद्गृहे सम्यक् कल्याणकरं वचनं श्रावय, सर्वत्र च परिभ्रम्य सुकल्याणकरमुपदेशं पापनाशकरं प्रयच्छ विद्वन्! त्वां का चिदभिभा—अभिभूतिः—आक्रान्तिः—विपत्त्या सर्वत्र कुत्रापि सञ्जाता मा विदत्—न प्राप्नुयात्। तथा सर्वहितकरं वचनं श्रावय—उपदेशं कुरु॥

इन्द्रस्वापाये केवले पक्षिमतेऽपि खल्वर्थो लक्ष्यो यास्कस्य, शकुनौ खल्वपि देवत्वं सम्पादनीयम्, सन्ति के चन पक्षिणो ये शिक्षणेन योग्या जायन्ते, बहुविधानुपयोगान् प्रयच्छन्ति शुकसारिकाचकोरादयस्ते पालनीयाः शिक्षणीयाः।

निरुक्तयः—'कनिक्रदत्' क्रन्दधातोर्यङ्लुगन्तो लुङि प्रयोगो निपात्यते वेदे। तत्र च्लेरङ्, अभ्यासस्य चुत्वाभावो निक् चागमो निपातनात्। 'जनुषम्' जन-धातोः 'उसिः' प्रत्यय औणादिकः "जनेरुसिः" (उणा० २।११६) जनुस्—द्वितीयायां जनुषम्। 'मङ्गलम्' 'मम' उपपदाद् गॄधातोः "गृणाति—अर्चतिकर्मा" (निघं० ३।१४) 'अच्' प्रत्ययः, 'मम गरः' उपपदस्य—अकारलोपः, उत्तर-स्य रेफस्य लत्वमिति मङ्गलम्, ममार्चनीयं मङ्गलम्। यद्वा "गॄ निगरणे" (तुदादि०) ततः 'मम' उपपदात्—अच्। ममानर्थान् निगिरति—मङ्गलम्। अथवा 'अङ्गलम्' अङ्गवत्—अङ्गशब्दाद् रो मत्वर्थीयस्तस्य लत्वम्। अङ्गलम्—ममा-ङ्गानि यस्मिन् सन्ति सुखमनुभवन्ति—मङ्गलम्। यद्वा 'अस्मिन् मङ्गले पुण्ये पापकं मज्जयति' तस्मात् तत्—मङ्गलम् "मस्जो शुद्धौ" (तुदादि०) ततः 'अलच्' प्रत्ययः 'मस्ज्' इत्यस्य 'मङ्' भावः "मङ्गेरलच्" (उणा० ५।७०) यद्वा 'मां गच्छतु' 'माम्' उपपदात् गम्धातोः 'अलच्' प्रत्ययः, पूर्वपदस्य ह्रस्वत्वम्

'मम् गम्' अलच् डिच स:—मङ्गलम्, मां गच्छतु प्राप्नोतु तत्सुखं मङ्गलम् । इति निर्वचनद्वयं केचन वैरुक्ताः कुर्वन्ति । 'अभिभा' अभिपूर्वकाद् भू धातोः 'ड:' प्रत्ययः । अभिभा स्त्रियाम् । 'विश्व्या' विश्वे भवा "भवेश्छन्दसि" ( अष्टा० ४ । ४ । ११० ) यत् प्रत्ययः ॥

अपरमुदाहरणं विशिष्टशकुनेः कपिञ्जलनाम्नः—

गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे ॥ ४ ॥

तदभिवादिन्येषर्ग्भवति—

"भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।
भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥"

( ऋ० खिल सू० २ । ४३ । १, कौशिक सू० ४६ । ५४ )

इति सा निगदव्याख्याता ।

गृत्समदो गृत्समदनः । गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः ॥

भा०—गृत्समदं यो गृत्सो मेधावी च मदो मदनो हर्षालुश्चेति गुणद्वयं प्राप्तो जनस्तं कमप्यर्थं साधयितुमभ्युत्थितं गमनायोत्थितं कपिञ्जलः "कमनीयं शब्दं पिञ्जयतीति" ( निरु० ३ । १८ ) कपिञ्जलः कमनीयमाचरणीयं शब्दं पिञ्जयति भाषते । "पिजि भाषार्थः" ( चुरादि० ) स यन्त्रात्मकः कपिञ्जलो दीर्घश्रवाः—दूरभाषः "इन्द्रो वाजस्य दीर्घश्रवसस्पतिः" ( ऋ० १०।२३।३ ) यद्वा विद्वानागतः कुतश्चिद् दिक्कः समाचारं श्रावयति यद् वृत्तम् "भद्रं वद....." इति मन्त्रे । मन्त्रः स्वयं व्याख्यातो वर्तते स्पष्टत्वात्, तथापि—अस्माभिर्व्याख्यायते । मन्त्रार्थः—

गृत्समदः कथयति हे कपिञ्जल ध्वनियन्त्र ! त्वं दक्षिणतः शुभसमाचारं श्रावय, उत्तरतः पूर्वतः पश्चिमतश्च श्रावय । यद्वा विद्वन् ! दक्षिणादिभिन्नभिन्न-दिग्देशानामाचारमुपदिश कथं तत्राचरन्ति जनाः कथं चास्माभिस्तत्र गतैराचरितव्यं यद्वा तान् प्रति किमस्माकं कर्तव्यमित्युपदिश । पक्षिणमभिलक्ष्य वक्तुं युज्यते मम चित्तं प्रसादाय सर्वदिक्तो भद्रं मधुरं प्रियं वद यतः प्रसन्नमनाः सन् जनः सम्यक् कार्यं कर्तुं पारयेत् ।

मण्डूकाः ॥ ३ ॥

मण्डूका मज्जूका मज्जनात्, मदतेर्वा मोदयतिकर्मणः, मन्दतेर्वा तृप्तिकर्मणः, मण्डयतेरिति वैयाकरणाः, मण्ड एषामोक इति वा । मण्डो मदेर्वा मुदेर्वा ॥ ५ ॥

तेषामेषा भवति—

"संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः॥"
(ऋ० ७।१०३।१)

संवत्सरं शिश्याना ब्राह्मणा व्रतचारिणोऽब्रुवाणाः *।
अपि वोपमार्थे स्याद् ब्राह्मणा इव व्रतचारिण इति।
वाचं पर्जन्यप्रीतां प्रावादिषुर्मण्डूकाः।

भा०—मण्डूका मज्जूका विज्ञेयाः, कुतः? मज्जनात्। जले मज्जन्ति हि, मस्जधातोः "शलिमण्डिभ्यामूकण्" (उणा० ४।४२) इति धातुबाहुलकात् 'ऊकण्' प्रत्ययः, जकारस्य डकारश्छान्दसः। "मस्जिनशोर्झलि"—अन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम्, वा० (अष्टा० ७।१।६०) अन्त्यात् पूर्वो नुम्, पुनः ष्टुत्वम्—मण्डूकाः—छन्दसि। जले मज्जन्ति हि यथेच्छम्। यद्वा "मद हर्षे" (दिवादि०) ततः पूर्ववत् 'ऊकण्' प्रत्ययः, मदधातोर्मण्डभावश्छान्दसः। ते हृष्टा मोदितास्तिष्ठन्ति, यद्वा 'मदि मन्द' तृप्त्यर्थे विधानसामर्थ्यात् ततोऽपि 'ऊकण्' प्रत्ययो नकारदकारयोर्मूर्धन्यत्वं छान्दसम्। यतो नित्यतृप्तास्तिष्ठन्ति जलाभावेऽपि चिरम्। अथवा "मडि भूषायाम्" (भ्वादि०) ततः "शलिमडिभ्यामूकण्" (उणा० ४।४२) इति वैयाकरणाः साधयन्ति ह्युणादिग्रन्थे, विविधाभिः—रेखाभिर्मण्डिता भूषिता भवन्ति। यद्वा मण्डे—उदके—ओकः—रक्षास्थानं भाषणस्थानं वा येषां ते मण्डूकाः, ओकारस्य—ऊकारश्छान्दसः। 'मण्डः' 'मदी तृप्तौ' धातोर्यद्वा 'मुद हर्षे' धातोरौणादिकः 'डण्डः' प्रत्ययः—मण्डः, तृप्तिसाधनं हर्षसाधनमुदकं हि भवति। मण्डः पक्वौदनेभ्यो निःसृतमुदकं भवति सामान्यादत्र—उदकमर्थो यथा दधिमण्डः दध्नः—उदकम्। "दधिमण्डः—दधिजलम्" (वैद्यकशब्दसिन्धुः) अदेवतात्मकोऽपि 'मण्डूकाः' इति शब्दः उपलभ्यतेऽन्यत्र वेदे तद्यथा—"अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव।" (ऋ० १०।१६६।५) देवतात्मकाः 'मण्डूकाः' यस्मिन् मन्त्रे "संवत्सरं शशयाना····" स व्याख्यायते।

---

* होशियारपुरस्थे वि० वै० शोधसंस्थानपुस्तकालये १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) 'अब्रुवाणाः' पाठः। अन्यत्र क्वचिद् ब्रुवाणाः।

मन्त्रार्थः—

व्रतचारिणः शान्त्याऽध्येतारो वेदज्ञानमर्जयन्तोऽब्रुवाणा मननं कुर्वन्तः संवत्सरं शशयानाः सुप्ता मण्डूका वेदज्ञाने निमग्ना मुदितास्तृप्ता ब्राह्मणाः खलु वृष्टे पर्जन्ये मेघे तेन पर्जन्येन जिन्वितां प्रीतां प्राप्तबलां वाचं वेदवाचं प्रावादिषुः प्रवदन्ति शिष्येभ्य उपदिशन्ति । उक्तं च "श्रवणेन स्वाध्यायानुपाकरोत्याचार्योऽन्तेवासिनां योगमिच्छन्" ( वाराह गृह्य सू० ३ ) वेदप्रवचनं खलु ब्राह्मणस्य कर्तव्यं तच्चेदं वेदेऽपि प्रदर्श्यते निर्दिश्यते वा "प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्" ( यजु० ३४ । ५७ ) ।

अथवा ब्राह्मणा इवेत्युपमालङ्कारेण—

ब्राह्मणा इव व्रतचारिणोऽब्रुवाणा मण्डूका भेकाः संवत्सरं शशयानाः शिश्यानाः सुप्ता निश्चेष्टा गुप्ताः सन्तः प्राप्ते पर्जन्ये मेघे तेन पर्जन्येन जिन्वितां प्रीतां प्राप्तबलां वाचं स्ववाचं प्रावादिषुः प्रवदन्ति ॥

वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूका अन्वमोदन्त । स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव ॥ ६ ॥

तदभिवादिन्येषर्ग्भवति—

"उप प्रवद मण्डूकि वर्षमा वद तादुरि ।
मध्ये ह्रदस्य प्लवस्य विगृह्य चतुरः पदः ॥"
( ऋ० खिल सू० ७ । १०३ । १, अथर्व० ४ । १५ । १४ )

इति सा निगदव्याख्याता ॥

अस्य मन्त्रस्याथर्ववेदेऽथर्वा—ऋषिः, देवता पर्जन्यः "समुत्पतन्तु—इति षोडशर्चमथर्वा, मरुत्पर्जन्यदेवत्यम्" ( अथर्ववेदीयबृहत्सर्वानुक्रमणी ) परन्तु खिलसूक्तेषु—ऋषिर्वसिष्ठः, देवता पर्जन्यो मुख्या गौणदेवता मण्डूकाः । "प्राणो वै वसिष्ठ ऋषिः" ( शत० ८ । १ । १ । ६ ) प्राणोऽमृतप्राणः—यः स्वस्यान्येषां जीवनमिच्छति वासयत्यात्मानं वसुः, वासयत्यात्मानं स्वसम्बन्धिनं च वसीयान्, वासयत्यात्मानं सम्बन्धिनञ्चान्यं च स वसिष्ठः । स सर्वेषां जीवनमिच्छुर्वृष्टिकामः पर्जन्यं मेघं स्तुतवान्—वैदिकविधिना सम्पादितवान् सम्पन्ने मेघे मण्डूका अनुमोदन्त इव लक्षितास्तेन स पुनस्तानपि स्तुतवान् प्रशंसितवान् । उप प्र वद मण्डूकि····" इति स्वाभाविकी भावनाऽन्तरात्मनोऽमृतस्य प्राणस्य । शब्दार्थास्तु पाठतः स्पष्टाः सन्ति । अदेवतापक्षेऽथर्ववेदस्य, खिलसूक्तस्य देवतापक्षे । जातिमपेक्ष्य स्त्रीलिङ्गः स्यात् । तदेवोदरं परिमाणमस्य शरीरस्येति परिमाणार्थेऽण्

तातुरः स्त्रियां तातुरी पृषोदरादित्वात् सिद्धिः, सम्बोधने तातुरि ! उदरसमानशरीरवर्ति ! मण्डूकि ! मण्डूकजाते ! अन्योऽन्यस्य समीपं गत्वा प्रकृष्टं वद वृष्टिमावद वृष्टिर्भविष्यति जाता चेति घोषय जलाशयस्य मध्ये चतुरः पदः पृथक् पृथक् कृत्वा प्रसार्य प्लवस्व । खिलसूक्तस्य देवतापक्षे—हे तातुरि ! तत् तावद्—उद्—अरम्—उद्गमनमुद्यमो यस्य यावदन्तःकरणं मनोबलं वा यस्याः सा चितिः शक्तिः—पूर्ववत् 'अण्' तद्धितस्तातुरी सम्बोधने तातुरि ! हे चितिशक्ते ! आत्मदेवते ! "तवः परिष्वजीयसी देवता सा मम प्रिया । इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ॥" ( अथर्व० १० । ८ । २५–२६ ) आत्मन् ! त्वं ज्ञानामृतवर्षमुपगत्य वद—आवद समन्ताज्जप्यं प्रणवम्, चतुरः पद "अयमात्मा चतुष्पात्" 'अ, उ, म्, ०' ( माण्डूक्यो० २ ) विगृह्य विश्लिष्य विवेच्य निदिध्यास्य—आनन्दह्रदस्य परमात्मनो मध्ये प्लवस्व तर ॥

अक्षाः ॥ ४ ॥

अक्षा अश्नुवत एनानिति वाभ्यश्नुवत एभिरिति वा ॥७॥

तेषामेषा भवति—

"प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः । सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥" ( ऋ० १० । ३४ । १ )

प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति । प्रवातेजाः प्रवणेजाः । इरिणे वर्तमानाः । इरिणं निर्ऋणम् । ऋणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा । सोमस्येव मौजवतस्य भक्षः । मौजवतो मूजवति जातः । मूजवान् पर्वतो मुञ्जवान् । मुञ्जो विमुच्यत इषीकया । इषीकेषतेर्गतिकर्मणः । इयमपीतरेषीकैतस्मादेव । विभीदको विभेदनात् । जागृविर्जागरणात् । मह्यमचच्छदत्, प्रशंसत्येनान् प्रथमया, निन्दत्युत्तराभिः, ऋषेरक्षपरिद्यूनस्यैतदार्षं वेदयन्ते ॥

भा०—'अक्षाः' देवतापदम् । "अशूङ् व्याप्तौ" ( अदादि० ) ततः "अशेर्देवने सः" ( उणा० ३ । ६५ ) इति सः प्रत्ययः कर्माणि करणे वा—अक्षाः । अश्नुवते व्याप्नुवन्ति—अक्षयन्ति—एनान् देवनेन द्यूतक्रीडनेन, यद्वा—अश्नुवते व्याप्नुवन्ति—एभिः कितवान् देवने द्यूतक्रीडने । तदर्थः "प्रावेपा मा बृहतो...." इति मन्त्रः ।

मन्त्रे नास्ति 'अक्षाः' इति शब्दः 'विभीदकः' अस्ति, विभीदकं देवतां न मन्येत कश्चनेति प्रदर्शयितुं देवतां सूचयति यदत्र 'अक्षाः' देवता ।

मन्त्रार्थः—

बृहतो महतो विभीदकस्य फलानि—अक्षाः प्रावेपा वृक्षे लग्नाः प्रवेपिनः प्रकम्पशीलाः प्रवातेजाः—निम्नस्थाने पर्वतस्योपत्यके जातः—इरिणे निर्जले निरोषधिके प्रदेशे अक्ले वर्वृताना वर्तमानाः मां मादयन्ति हर्षयन्ति । सत्यं खलु मौजवतस्य मुञ्जवति पर्वते जातस्य सोमस्य भक्ष इव भक्षणं पानमिव विभीदकस्तत्फलमक्षो भक्षणे स्वादुः देवने क्रीडने च स्वादुर्जागृतिमदः, यथा सोमो जागृतिं प्रयच्छति तत्पानस्य कर्त्रे तथाऽक्षोऽपि जागृतिं प्रयच्छति कितवाय तत्र देवने मनस संलग्नत्वात् खलु निद्रा प्लायते । स एषोऽक्षो मह्यं मामचच्छदत्—अच्छादयत्—छादयति—प्रभावयति । इत्यनेन मन्त्रेणाक्षाणां देवने प्रयुक्तानां प्रशंसा द्यूतप्रशंसा—अन्यैर्मन्त्रैरुत्तरैर्निन्दा—

"अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् । (२) द्वेष्टि श्वश्रूरप जाया रुणद्धि । (३) अन्ये जायां परिमृशन्त्यस्य····पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् (४) ।

इत्येवं निन्दां कृत्वाऽन्ते—"अक्षैर्मा दीव्यः कृषिमित्कृषस्व" (१३) चेत्थमक्षैर्द्यूतक्रीडिनो जनस्यानुभूतिरूपमृषित्वं वेदयन्ते—आचार्या मन्यन्ते ।

निरुक्तयः—'प्रावेपाः' प्र—आङ्' इत्युपसर्गद्वयपूर्वात् "वेपृ कम्पने" (भ्वादि०) धातोः 'अच्' प्रत्ययः कर्तरि बहुवचने प्रावेपाः । 'इरिणम्' निर्ऋणम् 'निर्' उपसर्गपूर्वात् 'ऋण' धातोः कः प्रत्ययः । उपसर्गस्य नकारलोपश्छान्दसः 'ऋ' इत्यस्य 'रि' भावः । 'निर्' इत्यस्य नकारलोपो वेदेऽन्यत्रापि यथा "इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः" (ऋ० १० । ९७ । ९) माताऽपि रोगस्य निष्कृतिरतो यूयमोषधयोऽपि निष्कृतयो रोगस्य । अन्यच्च "क्षमा रपो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः" (ऋ० ८ । २० । २६) इष्कर्त निष्कुरुत । इरिणं निर्ऋणं तच्च निर्ऋणम्—अपार्णम्—अपगतजलं भवति, ऋणधातोः 'अच्' प्रत्यये रूपम्—अर्णः "अर्णः—उदकम्" (निघं० १ । १२) एवं जलरहितं स्थानमपार्णं यदिरिणम्, अथवा 'निर्—उपसर्गपूर्वाद् रमधातोः "इदृक्षिभ्यामिनन्" (उणा० २ । ५१) इनन् डिन् बाहुलकात् । 'निर्' इत्यस्य 'इ'—रिणम्—इरिणम् । मौजवतः सोमः, मूजवति पर्वते जातः—मौजवतः, मूजवान् मुञ्जवान् 'मुञ्ज' शब्दस्य 'मूज' भावश्छान्दसः । मुञ्जो विमुच्यते—इषीकया,

इषीका, भाषायाम्—इकारलोपेन 'षीका—सींक' इषीकया गृहीतया अन्यैर्यो भागोऽवशिष्यते स मुञ्जः—इषीकाया आवरणं मूलादुपरिभागश्च । 'मुच्लृ' धातोः कप्रत्ययेऽपादाने बाहुलकात्, तस्य मुञ्जभावः । "प्रवृहेन्मुञ्जादिवेषीकां धैर्येण" ( कठो० ६ । १७ ) इषीका "ईष गतौ" अस्मात्—ईकन् प्रत्ययः 'ईषेः किद्ध्रस्वश्च" ( उणा० ४ । २१ ) इतरा या खल्विषीका हलेषीका हलदण्डोऽपि "ईष गतौ" धातोरेव । 'विभीदकः' विभेदनात्, विभीदकफलं कोष्ठविभेदनात् कोष्ठं विभिनत्ति कोष्ठगतानि वस्तूनि छिन्नभिन्नानि करोति पृथक् पृथक् करोति विरेचयति कोष्ठं रिक्तं करोति । तदक्षो देवने द्यूते प्रयुक्तः कुलं विभिनत्ति स्वस्मात् कुलगतान् जनान् पृथक् करोति द्यूतकारिणं च विरिक्तं करोति धनात् । विपूर्वात् "भिदिर् विदारणे" ( रुधादि० ) ततो ण्वुल् गुणस्थाने दीर्घश्छान्दसः । 'जागृविः' जागृधातोः "जशस्तजागृभ्यः क्विन्" ( उणा० ४ । ५४ ) ॥
६ ६ ६

ग्रावाणः ॥ ५ ॥

ग्रावाणो हन्तेर्वा, गृणातेर्वा, गृह्णातेर्वा ॥ ८ ॥

तेषामेषा भवति—

"प्रेते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः । यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥" ( ऋ० १० । ९४ । १ )

प्रवदन्त्येते प्रवदाम वयं ग्रावभ्यो वाचं वदत वदद्भ्यो यदद्रयः पर्वता आदरणीयाः * सह सोममाशवः क्षिप्रकारिणः, श्लोकः शृणोतेः, घोषो घुष्यतेः, सोमिनो यूयं स्थेति वा सोमिनो गृहेष्विति वा ॥

भा०—'ग्रावाणः' इति देवतापदम् । "हन् हिंसागत्योः" ( अदादि० ) ततः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति क्वनिप् प्रत्ययः । धातोर्ग्र—आदेशः "पृषोदरादीनि यथोपदिष्टम्" ( अष्टा० ६ । ३ । १०९ ) ग्रावाणः—बहुवचने, यद्वा "गॄ शब्दे" ( क्र्यादि० ) तथा "गृणाति अर्चतिकर्मा" ( निघं० ३ । १४ ) पूर्ववत् क्वनिप्, आट् आगमः प्रत्ययस्य । अथवा ग्रह-धातोः क्वनिप् प्रत्ययः, ग्राभावश्च धातोः । ग्रावाणो बहुवचने ।

वक्तव्यम्—

वेदे ग्रावाणोऽनेकार्थका भवन्ति, ते केचन हन्तारो हननसाधनानि ते सोम-

---

* 'अदरणीयाः' क्वचित् पाठः ।

पेषणाय पाषाणाः शत्रोः हन्तृणि खल्वकाणि च केचन शब्दयितारः स्तोतारो विद्वांसो वा केचन ग्राहका ग्राह्या वा, ग्रहनक्षत्रज्ञानसाधनानि मेघाश्च । निर्दिष्ट-निर्वचनबलात् । तेषु यथा—

ग्रहनक्षत्रग्रहणज्ञानसाधनाः स्फटिकमणिपाषाणा ग्रावाणो दूरवीक्षणे प्रयोज्याः—

"ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान्नमसोपशिक्षन् ।

अत्रिः सूर्यस्य दिवि चक्षुराधात् स्वर्भानोरप माया अघुक्षत् ॥

( ऋ० ५ । ४० । ८ )

ग्राह्या ग्रावणो मेघाः—

वृष्णो यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।

( ऋ० ५ । ३१ । ५ )

हन्तारो ग्रावाणोऽस्त्रप्रयुक्ताः—

ग्रावाणो घ्नन्तु रक्षस उपब्दैः । ( ऋ० ७ । १०४ । १७ )

सोमपेषणपाषाणा ग्रावाणाः—

तमिन्द्र मदमा गहि बर्हिःष्ठां ग्रावभिः सुतम् । ( ऋ० ३ । ४२ । २ )

विद्वांसो ग्रावाणः—

आ वां ग्रावाणो अश्विना धीभिर्विप्रा अचुच्यवुः । ( ऋ० ८ । ४२ । ४ )

"विद्वांसो हि ग्रावाणः" ( शत० ३ । ९ । ३ । ४ )

देवताप्रसङ्गे "प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुत ॥" ( ऋ० १० । १७५ ) इति सूक्तं ग्रावदेवत्यम् । इदं सूक्तं यास्केन न गृहीतमुदाहरणाय यतोऽत्र न सन्देहः स्पष्टं हि ग्रावाणोऽत्र देवतात्वेन स्तूयन्ते नह्यत्रान्यानि सन्देहजनकानि विशेषणानि । यास्कोदाहृते सूक्ते मन्त्रे चानेकानि विशेषणानि तस्माद् यास्क उदाहरति स्पष्टीकर्तुमिति । मन्त्रश्च "प्रेते वदन्तु...." अनेकार्थोऽत्र ग्रावशब्दा, अनेकार्थत्वादुदाहृतो यास्केन ।

मन्त्रार्थः—

एते ग्रावाणो वैदिका विद्वांसः "विद्वांसो हि ग्रावाणः" ( शत० ३।९।३।४ ) प्र वदन्तु—अस्मानुपदिशन्तु—अस्मभ्यं वेदस्य प्रवचनं कुर्वन्तु तेभ्यो वाचं वेदवाचं वदद्भ्य उपदिशद्भ्योऽध्यापयद्भ्यो वयं प्रवदाम प्रकृष्टं पठेम हे मम सहयोगिनो जनाः सखायः ! यूयमपि वदत पठत शिक्षां गृह्णीत । अग्रे प्रत्यक्षकृतमुच्यते—हे विद्वांसः ! आदरणीयाः पर्वताः—पर्ववन्तः पर्वणि पर्वणि—आगत्य पर्वतसदृशा

वा स्थिरविद्यामतयः ! साकं सहयोगमाचरन्तोऽन्येन सह विचारविनिमयं कुर्वन्तः—आशवः क्षिप्रकारिणः क्षिप्रं सोमं ज्ञानसारं निःसारयन्तः—इन्द्राय राज्ञे श्लोकं श्रवणीयं घोषं घोषणीयं श्रावणीयं प्रवचनं भरथ प्रभरथ प्रधारयत—उपदिशत, यूयं सोमिनो ज्ञानसारवन्तः स्थ यद्वा सोमिनो ज्ञानरसस्याधिकारिणो राज्ञो गृहेषु प्रवचनं कुरुत । इति विद्वत्पक्षे ।

एते ग्रावाणो मेघाः "ग्रावा मेघनाम" ( निघं० १ । १० ) प्रवदन्तु जल-वृष्टिकरणाय प्रगर्जन्तु तेभ्यो वाचं स्तनयित्नुवाचं वदद्भ्यो वयं प्रवदामो धन्यं वदामः, "निकामे निकामे नः पर्जन्यो वर्षतु" ( यजु० २२ । २२ ) हे बान्धवाः ! सखायः ! यूयमपि धन्यं वदत । हे अद्रयः—आदरणीयाः समन्ताद् दरणीयाः—विदारणीयाः—निपातनीयाः पर्वताः—मेघाः "पर्वतो मेघनाम" ( निघं० १।१०) परस्परं सहयोगं भजन्तो घनत्वमापन्नाः क्षिप्रम्—इन्द्राय विद्युद्देवाय श्लोकं प्रशंसनीयम् "पत्यौ मे श्लोक उत्तमः" ( ऋ० १० । १५९ । ३ ) घोषं नादं भरथ धारयत कुरुत, यूयं सोमिनः सोमवन्तः सोम्यजलवन्तः स्थ, यद्वा तस्य सोमिनः सोम्यजलाधिकारिणो गृहे राज्येऽन्तरिक्षे स्थ, अतस्तदानुकूल्यमाचरत । इति मेघपक्षे ।

एते ग्रावाणः सोमाभिषवसाधनभूताः पाषाणाः ! प्रवदन्तु सोमं पिंषन्तः शब्दयन्तु तेभ्य शब्दं कुर्वद्भ्यो वयं प्रवदामो हर्षं वदामः सोमपानं प्राप्स्यतीत्याशया, सखायः—ऋत्विजश्च यूयमपि वदत हर्षनादं कुरुत । हे अद्रयः—आदरणीयाः सोमस्य समन्ताद् दरदरीकरणे समर्थाः ! "कृत्यल्युटो बहुलम्" ( अष्टा० ३ । ३ । ११३ ) कर्तरि कृत्यप्रत्ययः । पर्वताः पर्वतखण्डाः, विकृतौ प्रकृति-शब्दः—तद्धितप्रत्ययस्य लुक् । सहयोगं भजन्तः क्षिप्रं श्लोकं प्रशंसनीयं पिष्टं जातमिति—इन्द्राय यजमानाय भरथ धारयत । "इन्द्रो वै यजमानः" ( शत० २ । १ । २ । ११ ) यूयं सोमिनः सोमवन्तः स्थ सोमं पिष्ट्वा पानाय दत्ते-त्यर्थः, यद्वा सोमिनः सोमस्वामिनो गृहे स्थ तदानुकूल्यं भजत । इति सोमपेषणपाषाणपक्षे ।

विकल्प—'अद्रिः' आङ्पूर्वात् "दृङ् आदरे" ( तुदादि० ) धातोः—तथा "दृ विदारणे" ( क्र्यादि० ) धातोः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) "इगुपधात् कित्" ( उणा० ४ । १२० ) इगन्तादपि कित्—इन् बाहुलकात्—उपसर्गस्य ह्रस्वत्वे सति—अद्रिः । यद्वा 'क्रिः' प्रत्यय औणादिकः । श्लोकः शृणोतेः "श्रु श्रवणे" ( भ्वादि० ) 'कन्' प्रत्ययो बाहुलकादौणादिकः । रेफस्य लत्वं छान्दसम् । 'घोषः' "घुषिर् विशब्दने" ( चुरादि० ) ततो घञ्—घोषः ॥

नाराशंसः ॥ ६ ॥

येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः ॥ ९ ॥

तस्यैषा भवति—

"अमंदान्त्स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य। यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥" ( ऋ० १ । १२६ । १ )

अमन्दान् स्तोमानबालिशाननल्पान् वा । बालो बलवर्ती* भर्तव्यो भवत्यम्बास्मा अलं भवतीति वाम्बास्मै बलं भवतीति वा बलो वा प्रतिषेधव्यवहितः प्रभरे मनीषया मनस ईषया स्तुत्या प्रज्ञया वा । सिन्धावधि निवसतो भावयव्यस्य राज्ञो यो मे सहस्रं निरमिमीत सवानतूर्तो राजा तूर्ण इति वाऽत्वरमाण इति वा प्रशंसामिच्छमानः ॥ १० ॥

भा०—'नाराशंसः' इति देवतापदम् । येन खलु नराः प्रशस्यन्ते स नाराशंसो मन्त्रः । मन्त्रशब्दोऽत्र "अग्निमीळे पुरोहितम्०" पाठात्मको न वर्तते किन्तु मन्त्रो मननप्रसङ्गो विचारप्रसङ्गः, येन नराः प्रशस्यन्ते स विचारप्रसङ्गो नाराशंसो देवता । अत्र कथं तद्धितप्रवृत्तिः 'नारा' इत्युभयत्र वृद्धिश्च । नराणां शंसः प्रशंसा—इति नराशंसः षष्ठीसमासः—भावप्रधानं पदम् । "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३७ ) पुनः "तस्येदम्" ( अष्टा० ४ । ३ । १२० ) इति 'अण्' प्रत्ययः । नराशंसस्य नराणां शंसनस्य प्रशंसनस्यायमिति नाराशंसः—मन्त्रो विचारप्रसङ्गः । येन मन्त्रेण विचारप्रङ्गेन नराः प्रशस्यन्ते स नाराशंसो मन्त्रो विचारप्रसङ्गो देवता । नरा नेतारो राजानः कथं प्रशस्या भवन्ति—इति विचारप्रसङ्गः । एवं विचारात्मकत्वं देवतात्वं न शब्दात्मकत्वम् । तस्य मन्त्रः "अमन्दान्त्स्तोमान्....।"

मन्त्रार्थः—

सिन्धौ—अधि "सिन्धुर्नदीनाम" ( निघं० १ । १३ ) जात्यामेकवचनम्, नदीरधिकृत्य । "अधिरीश्वरे" ( अष्टा० १ । ४ । ९६ ) इति कर्मप्रवचनीयसंज्ञा तत्र सप्तमी च "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" ( अष्टा० २ ।

---

* 'बलमर्ती' इति पाठः क्वचित् प्रामादिकः ।

१ । ९ ) राष्ट्रे नदीनां महती खल्वपेक्षा वर्तते नदीनामुपर्यधिकारः स्थापनीयः, नदीभीराष्ट्रसीमा सुरक्षितो भवति राष्ट्रे च कृष्यादिकार्याणि विधीयन्ते, तस्मान्नदीरधिकृत्य क्षियतो राष्ट्रे निवसतः "क्षि निवासे" ( तुदादि० ) तथा-ईशानस्य राष्ट्रस्य स्वामित्वं कुर्वाणस्य "क्षियति-ऐश्वर्यकर्मा" ( निघं० २ । २१ ) भाव्यस्य-भावं सत्तां राजसत्तामर्हति तां स्थिरां रक्षितुं पालयितुं योऽर्हति "छन्दसि च-यत्" ( अष्टा० ५ । १ । ६७ ) स भाव्यः "यतोऽनावः" (अष्टा० ६ । १ । २१३ ) अन्तोदात्तत्वम् । भाव्यस्य-भाव्याय राज्ञे "चतुर्थ्यर्थे बहुलं छन्दसि" ( अष्टा० २।४।६२ ) षष्ठी । अमन्दान् प्रबलान् बहून् स्तोमान् प्रशंसात्मकशब्दान् मनीषा मनस ईषया मनोभावनया सद्बुद्ध्या वा प्रभरे धारयामि समर्पयामि, यो यतः स मह्यं सहस्रं सवान् बहून् यज्ञान् श्रेष्ठकर्मस्थानानि विद्यालयान् सुखाश्रमसंस्थानानि-अमिमीत निर्मापितवान्, ईदृशः सोऽसूर्तोऽत्वरमाणो गाम्भीर्येण कार्यं विदधानः श्रवः प्रशंसामिच्छन् प्रशंसाभाग् राजा भवेदित्याशीर्वाचा राष्ट्रे कक्षगतेन कस्मिंश्चिन्नदीपार्श्वे वसता वेदाचार्येण । इत्याधिभौतिकार्थः ।

अथाध्यात्मिकार्थः—

संसारसिन्धुमधिकृत्य, संसारो नदीति रूपकमन्यत्र वेदे "अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रतरता सखायः ।" ( ऋ० १० । ५३ । ८ ) क्षियतः क्षियते निवसते स्थिताय तदुपरि स्वामित्वं च विदधते भाव्यस्य भाव्याय भावं सत्तां शासनसत्तां स्थापयितुमर्हाय परमात्मनेऽमन्दान् प्रबलान् बहून् स्तोमान् स्तुतिसमूहान् प्रभरे समर्पयामि, स मह्यं शरीरकक्षे-एकदेशे स्थिताय जीवात्मने बहूनि सुखानि श्रेष्ठसुखस्थानानि श्रेष्ठसाधनानि च निर्मितवान्, स विश्वस्य राजा महान् गम्भीरोऽत्वमत्तः श्रवः प्रशंसां स्तुतिमिच्छन् भवेत्-अस्माकं स्तुतितो विमुखो न भवेदित्याशा ।

निरुक्तम्:—अमन्दान्-अबालिशान्-अलघून् यद्वा-अनल्पान्-इत्यर्थप्रदर्शनम् । मन्दोऽल्पो मन्दं गच्छत्यल्पं गच्छति । बालो बलवर्ती-अन्यस्य बलेन वर्तते "ओजः सहोम्भसा वर्तते" ( अष्टा० ४ । ४ । २७ ) इति वर्ततेऽर्थे "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इत्यनेन प्रकृतिप्रत्यययोश्छन्दसि शैथिल्यात् 'बलेन वर्तते' बलशब्दात् 'अण्' प्रत्ययः । बालः सुगमतया कार्यं कर्तुं न शक्नोति बलेनार्थाद् बलं कृत्वा बलमाधाय यद्वा बलपातनेन बलस्य भयात् कार्यं करोति । अथवा भर्तव्यः-इति भारः कर्मणि घञन्तः सन् बालः, भकारस्य बकारो रेफस्य लत्वम् । ज्येष्ठैर्भर्णीयत्वात् पोषणीयत्वात् । [यद्वा 'अम्बा-अलम्-अस्मै' इति-

अम्बालः 'अम्' भागस्य लोपः, माता पालनेऽलं समर्था भवति शिशोः—न तथाऽन्यः। यद्वा—अम्बा बलं भवति, पूर्वोत्तरपदयोरन्तभागौ 'बा'—'ल' शिष्येतेऽन्ययोर्लोपेन—बालः, माता शिशोर्बलं भवति, केन चित् पीडितः सन् मातरमुपसर्पति बालः। अथवा बालः—अबलः—भवति प्रतिषेधेन प्रतिषेधवाचिना 'अ' पूर्वतो मध्ये पतितेन—इत्यनेन व्यवहितो बलः—'ब—अ—लः' बालः, बलहीनत्वात् स बालः—इति सर्वं पृषोदरादित्वात् सिध्यति। 'भावयव्यस्य राज्ञः' राजाशब्दस्तु मन्त्रे पठित एव तस्य षष्ठी राज्ञः। 'भावयव्यः' एव भाव्यः, यो हि भावान् विविधान् पदार्थानिच्छति भावयुर्भूत्वा भावं सत्तां प्रशासनमर्हति—इति भावयव्यो भाव्यो भवति। न हि शासनं साधनैर्विना भवति, पूर्वमिच्छत्यर्थे क्यच्—भावयुः, पश्चात् स्वार्थे छन्दसि यत्। "ओर्गुणः" ( अष्टा० ६। ४। १४६ ) गुणे कृते—ओकारस्य "वान्तो यि प्रत्यये" ( अष्टा० ६। १। ७९ ) वान्तः 'अव्' यकारे संहितः॥

इति नवमाध्यायस्य प्रथमः पादः।

---

## द्वितीयः पादः

---

यज्ञसंयोगाद् राजा स्तुतिं लभेत। राजसंयोगाद् युद्धोपकरणानि। तेषां रथः प्रथमागामी भवति।

रथः॥

रथो रंहतेर्गतिकर्मणः। स्थिरतेर्वा स्याद् विपरीतस्य। रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा रसतेर्वा॥ ११॥

तस्यषा भवति—

"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि॥" ( ऋ० ६। ४७। २६ )

वनस्पते दृढाङ्गो हि भवास्मत्सखा प्रतरणः सुवीरः कल्याणवीरो गोभिः सन्नद्धो असि वीळयस्वेति संस्तम्भस्वास्थाता ते जयतु जेतव्यानि॥

भा०—यज्ञसंयोगाद् यज्ञसम्बन्धाद् यज्ञस्यानुष्ठानात् "यज देवपूजासङ्गतिकरणदानेषु" ( भ्वादि० ) ततः "यजयाचयतविच्छप्रच्छरक्षो नङ्" ( अष्टा०

३ । ३ । ९० ) विद्वांसो हि देवाः, विदुषां पूजनात् सत्करणात्तद्विद्याप्रचार-करणात् तैः सह सङ्गतिकरणात् तेभ्योऽन्नवस्त्रसाधनानां प्रदानात् तथा "यज्ञो वै श्रेष्ठतमं कर्म" ( शत० १ । ७ । १ । ५ ) अन्यश्रेष्ठकर्माचरणात् सदाचाराभ्या-येन प्रजापालनाद् राष्ट्रे सर्वेषामुपयुक्तानां वस्तूनामुत्पादनाद् वर्धनात् सर्वहित-कर्मणां कृषिप्रभृतीनां प्रवर्धनाच्च राजा स्तुतिं प्रशंसां लभेतेति वेदशास्त्रविधान-मिति, लभते स्तुतिं प्रशंसां देवतात्वं नरः सन्नपि नाराशंसस्य पात्रं भवति । पुनाराजसंयोगाद् राजसम्बन्धाद् युद्धोपकरणानि युद्धस्योपकरणानि युद्धे—उप-योगार्थसाधनानि स्तुतिं लभन्ते—इत्थमदेवतासु खल्वपि देवतात्वं सङ्क्रामति । तानि युद्धोपकरणानि रथादीनि वस्तूनि वक्ष्यमाणानि सन्ति तेषु रथः प्रथमा-गामी भवति—अन्येषामाधारत्वात् । तस्मात् प्रथमं रथो व्याख्यायते—रथशब्दः "रहि गतौ" ( भ्वादि० ) ततो क्थन् प्रत्ययो बाहुलकात्, रंहति गच्छति रथः । यद्वा 'स्थिरतेः' तिष्ठतीति स्थिरः, आत्मानं स्थिरं करोतीति क्विप् करो-त्यर्थे 'स्थिर' नामधातुस्ततो विपरीतात् 'रथिस्' इत्यतो डः प्रत्ययः "अन्येष्वपि दृश्यते" (अष्टा० ३ । २ । १०१) अन्येभ्योऽपीति वचनाद् रथः । अथवा 'रम-माणोऽस्मिंस्तिष्ठतीति' रमधातोः स्था धातोश्च रथः । रमत इति 'रः' रमधातोर्डः, तिष्ठतीति स्थः—तथैव डः प्रत्ययः, रश्च स एव स्थश्च रथः, सकारलोपः । यद्वा "रप शब्दे" ( भ्वादि० ) "रस शब्दे" ( भ्वादि० ) धातोः—क्थन् प्रत्ययः । रथशब्दो वेदेऽसंख्यातस्थानेषु खल्वागच्छत्यदेवतात्वेनान्यदेवताप्रसङ्गे । तद्यथा—

"तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् ।" ( ऋ० १ । २० । ३ ) इति भूमौ गमनप्रसङ्गे योग्यस्य रथस्य निर्माणम्, ऋभु देवता ।

"समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥" ( ऋ० १ । ३० । १८ ) इति जलगमनयोग्यो रथोऽश्विनोर्देवतयोः प्रसङ्गः ।

"न्यघ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥" ( ऋ० १ । ३० । १९ ) इत्याकाशगमनयोग्यो रथोऽश्विनोर्देवतयोः प्रसङ्गे ।

"स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ॥" ( ऋ० १ । ३८ । १२ ) इति भूमौ चलनयोग्या रथा मरुतां देवतानां प्रसङ्गे ।

"न हि वामस्ति दूरके यत्रा रथेन गच्छथः ।" ( ऋ० १ । २२ । ४ ) इत्यश्विनोर्देवतयोः प्रसङ्गे रथशब्दः ।

"यद् युञ्जते मरुतो रुक्मवक्षसोऽश्वान् रथेषु ।" ( ऋ० २ । ३४ । ८ ) इति मरुतां देवतानां प्रसङ्गे भूमिगमनयोग्यो रथः ।

"रथेष्ठायाध्वर्यवः सोममिन्द्राय सोतन ।" ( ऋ० ८ । ४ । १३ ) इति-इन्द्रदेवताप्रसङ्गे रथशब्दः ।

एषूक्तेषु मन्त्रेषु रथवर्णनं त्वस्ति परन्तु-इन्द्राश्विमरुदृभुदेवतानां प्रसङ्गे, पुनश्च रथः किं वस्तु किं तस्य स्वरूपमिति न गम्यते न हि तत्र रथस्य परिभाषा । तस्य तथाविधो मन्त्रो यत्र रथस्य स्वरूपं परिभाषा वा स्यात् स उदाह्रियते यास्केन, तस्य रथस्य "वनस्पते वीड्वङ्गो....." इति मन्त्रः ।

मन्त्रार्थः—

वनस्पते ! नवस्पतिविकार ! वनस्पतिनिर्मित ! काष्ठमय ! रथ ! "ताद्धितेन कृत्स्नवन्निगमा भवन्ति" ( निरु० २ । ५ ) त्वं वीड्वङ्गो दृढाङ्गो हि भव, त्वमस्माकं सखा युद्धे समानख्यानो जयाय समर्थस्तथा प्रतरणो युद्धे सर्वत्र प्रभावप्रवारपारगामी सुवीरः कल्याणवीरो जयशीलवीरवान् त्वयि स्थिता वीरा भद्रा जयं प्रापयिष्यन्तीति तथाभूतोऽसि, तथा त्वं गोभिर्गोचर्मभिर्गोश्लेष्मभिश्च सन्नद्धः संवेष्टितः समावृतः संश्लिष्टपर्वा वाऽसि, अतो वीडयस्व संस्तम्भस्व-अविचलितो भूत्वा पराक्रमस्व तवास्थाताऽधिष्ठाता जेत्वानि जेतव्यानि शत्रुबलानि जयतु ।

वक्तव्यम्—अस्मिन् मन्त्रे साक्षाद् रथशब्दो नास्ति पुनः कथमुपात्तो रथोदाहरणे तदग्रे यो मन्त्रः प्रत्यक्षं रथशब्दवान् स कुतो नोदाहृतः । उच्यते-तदुदाहरणे न विशिष्टं फलं तत्र तु रथो देवतेति प्रत्यक्षमेव, अत्र मन्त्रे न प्रत्यक्षं रथशब्दस्तस्मादाचार्यो ज्ञापयति यदत्र मन्त्रे रथो देवता, अज्ञेयस्य ज्ञापनं भवत्युचितम् । पुनश्चात्र रथस्य परिभाषाऽपि स्पष्टं विद्यते । उत्तरे मन्त्रे रथशब्दोऽस्ति हि-अतो रथो देवतेति यास्केन सूचितं वनस्पतिविकारश्च रथो भवति हि ॥

दुन्दुभिः ॥ ८ ॥

दुन्दुभिरिति शब्दानुकरणम् । द्रुमो भिन्न इति वा, दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः । तस्यैषा भवति—

"उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून् ॥" ( ऋ० ६ । ४७ । २९ )

उपश्वासय पृथिवीं च दिवं च बहुधा ते घोषं मन्यतां विष्ठितं स्थावरं जङ्गमं च यत् स दुन्दुभे सहजोषण इन्द्रेण च देवैश्च दूराद् दूरतरमपसेध शत्रून् ॥

भा०—'दुन्दुभिः' इति युद्धोपकरणरूपं देवतापदम्, तच्च शब्दानुकरणं भवेत् 'दुम्–दु–भि' 'दुम्–दु' इति भणतीति दुन्दुभिः। 'दुम्–दु' पूर्वकात् "भण शब्दे" (भ्वादि०) धातोर्बाहुलकाद् डिः प्रत्यय औणादिकः–दुन्दुभिः। यद्वा 'द्रुमः–भिन्नः', 'द्रुम' इत्यस्य रेफाकारयोर्लोपः 'भिद्' इत्यस्य विपर्ययः, 'दुभि' द्रुमश्चासो भिद् च–दुन्दुभिः। 'भिद्' इति क्विप्प्रत्ययान्तो भूते यो भिन्नः। 'दुन्दुभि' उकारश्चोपजनः–दुन्दुभिः। दुन्दुभिः–भेरी, भिन्नो द्रुमः–वृक्षभागः, भिन्न इति मध्यतः सावकाशः कृतः। अथवा 'दुन्दुभ्यते' शब्दार्थात् 'दुम्भ शब्दे' नैरुक्तधातोर्यङन्तात् किः प्रत्यय औणादिकः। दुन्दुभ्यते भृशं शब्दं करोतीति दुन्दुभिः, अभ्यासस्य प्रकृतिभावः, उपधालोपश्च। "अनिदितां हल उपधाया क्ङिति" (अष्टा ६।४।२४)।

मन्त्रार्थः—

हे दुन्दुभे! त्वं पृथिवीमधोलोकं द्यामूर्ध्वलोकमपि–उपश्वासय निजघोषेणापूरय यद्वा कम्पय, ते तव घोषं विष्ठितं विशेषेण स्थितमचलं सदा स्थितं स्थावरं जगत्–जङ्गमं च मनुतां मन्यतां स त्वमिन्द्रेण राज्ञा देवैर्युद्धकुशलैर्विद्वद्भिः सह समानत्वं सेवमाना सती दूरादपि दूरतरं शत्रूनपसारय॥

इषुधिः॥ ९॥

इषुधिरिषूणां निधानम्॥ १३॥

तस्यैषा भवति—

"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः॥" (ऋ० ६।७५।५)

बह्वीनां पिता बहुरस्य पुत्र इतीषूनभिप्रेत्य प्रस्मयत इवापाव्रियमाणः शब्दानुकरणं वा, सङ्काः सचतेः सम्पूर्वाद्वा किरतेः। पृष्ठे निनद्धो जयति। प्रसूत इति व्याख्यातम्।

भा०—'इषुधिः' इषूणां निधानम्, इषवो निधीयन्ते यस्मिन् स तूणः। सोऽपि संग्रामे खलूपयुक्तः। तस्य "बह्वीनां पिता····" इति मन्त्रः।

मन्त्रार्थः—

बह्वीनामिषूणां पिता पाता रक्षको बहुः पुत्रगणोऽस्य बहवः पुत्रा इषवोऽस्येत्यर्थः, स च पुत्ररूप इषुर्बाणोऽपाव्रियमाणो बहिर्निष्कर्ष्यमाणः 'चिश्चा' इति शब्दं

कृणोति करोति प्रसभयत इव, यद्वा 'चिश्चा' इति घर्षणशब्दो यथा भवति तदनुकरणं करोति शत्रूणां भयाय, समना संग्राममवगत्याभिभूय "समनं संग्रामनाम" ( निघं० २ । १७ ) इषुधिरपि सङ्काः संग्रामान् सचन्ते परस्परं जना येषु यद्वा सङ्किरन्ति संघृष्यन्ते जनाः परस्परं येषु तान् पृतनाः संग्रामान् सर्वान् "पृतनाः संग्रामनाम" ( निघं० २ । १७ ) पृष्ठे निनद्धो निबद्धो योद्ध्रा प्रसूतः प्रयुक्तो जयति ।

निरुक्तयः—'इषुधिः' 'इषु' उपपदात् 'धा धारणे' धातोः किः प्रत्ययः । इषून् दधाति यस्मिन् "कर्मण्यधिकरणे च" ( अष्टा० ३ । ३ । ९३ ) 'चिश्चा' इति निपातः–ईषद्धसने यद्वा शब्दानुकरणं तत्करोति । 'सङ्काः' "षच समवाये" ( भ्वादि० ) तस्य नुम् घञि–सङ्काः, यद्वा 'सम्' पूर्वकात् 'कॄ विक्षेपे" ( तुदादि० ) ततो डः प्रत्ययः–सङ्काः ॥

हस्तघ्नः ॥ १० ॥

हस्तघ्नो हस्ते हन्यते ॥ १४ ॥

तस्यैषा भवति—

"अहिरिव भोगैः पर्यैति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ॥ ( ऋ० ६ । ७५ । १४ )

अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात् परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् । पुमान् पुरुमना भवति, पुंसतेर्वा ॥

भा०—'हस्तघ्नः' यो हस्ते मणिबन्धे हस्तप्रकोष्ठसन्धौ बद्धो ज्यायाः प्रत्यञ्चायाः–धनुषो रज्ज्वा हन्यते प्रतिहन्यते घातं प्रतिसहते स गोधाचर्मपट्टको-गोचर्मपट्टको वा मणिबन्धत्राणकरः "धनुर्गुणा घातवारणाय प्रकोष्ठबद्धा चर्मकृतपट्टिका" ( शब्दकल्पद्रुमः ) । हस्तोपपदाद् हनधातोः "घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्" इति वार्तिकेन ( अष्टा० ३ । ३ । ५८ ) कः प्रत्ययः ।

मन्त्रार्थः—

हस्तघ्नो हस्तप्रकोष्ठसन्धौ बद्धो गोधाचर्मपट्टको गोचर्मपट्टको वा बाहुं सर्प इव भोगैः स्वकायावयवैः कुटिलैः "भोगः सर्पशरीरम्" (वैद्यकशब्दसिन्धुः) "लक्ष्यते तदनन्तरं रविबिंबभौमपरिवेशमण्डलम् । वैनतेयशमितस्य भोगिनो भोगवेष्टित

इव च्युतो मणिः ॥ ( रघु० ११ । ५९ ) परिवेष्टयति ज्यायाः प्रत्यग्घाया धनूरज्ज्वाः–हेतिं प्रहारं परिबाधमानः परित्रायमाणः स सर्वाणि वयुनानि प्रज्ञानानि–आघातलक्षणानि प्रजानन् पुमानिवान्यं पुमांसं योद्धारं सर्वतः परिपातु–परिरक्षति–इति लडर्थे लोट् ।

निरुक्तयः–पुमान् पुरुमना पुरु बहु मनो यस्य स पुमान् 'पुरु' इत्यस्य पुभावः 'मनस्–मान्' पृषोदरादित्वात् पुमान्, यद्वा पुंसतेः "अभिवर्धने" ततः क्विप् पुंस् पुनः "पुंसोऽसुङ्" ( अष्टा० ७ । १ । ८९ ) पुमान् ॥

अभीशवो व्याख्याताः ॥ १५ ॥

तेषामेषा भवति—

"रथे॒ तिष्ठ॑न्नयति वा॒जिनः॑ पु॒रो यत्र॑यत्र का॒मय॑ते सुषार॒थिः । अ॒भीशू॑नां महि॒मानं॑ पनायत॒ मनः॑ प॒श्चादनु॑ यच्छन्ति र॒श्मयः॑ ॥" ( ऋ० ६ । ७५ । ६ )

रथे तिष्ठन् नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते । सुषारथिः कल्याणसारथिः, अभीशूनां महिमानं पूजयामि * मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः ॥

भा०—'अभीशवः' युद्धोपकरणरूपं देवतापदम् । अभीशवो व्याख्याताः "अभीशवोऽभ्यश्नुवते कर्माणि" ( निरु० ३ । ९ ) अभिपूर्वकात् "अशूङ् व्याप्तौ" ( स्वादि० ) ततः "भृमृशीङ्तॄचरित्सरितनिधनिमिमस्जिभ्य उः" ( उणा० १ । ७ ) इति 'उः' प्रत्ययो धातुबाहुलकात्, धातोरकारस्य–इकारश्च बाहुलकादेव ।

वक्तव्यम्—'अभीशवः' इति पदं बहुवचनं वेदेऽनेकत्रागच्छति परन्त्वन्यदेवताप्रसङ्गे नामधेयत्वेन केवलं न स्वरूपप्रदर्शकत्वेन परिभाष्यते तत्र, तद्यथा—"स्थि॒रा वः॑ सन्तु ने॒मयो॒ रथा॒ अश्वा॑स एषाम् । सुसं॑स्कृता अ॒भीश॑वः ॥" ( ऋ० १ । ३८ । १२ ) इति मरुतां देवतात्वे । "क्व॑ वोऽश्वाः॒ क्वाभीश॑वः कथं॑ शेक क॒था य॑य ।" ( ऋ० ५ । ६१ । २ ) अत्रापि मरुद्देवत्ये प्रसङ्गे । "सु॒षा॒र॒थिरश्वा॑निव॒ यन्म॑नु॒ष्या॒न्नेनी॒यते॒ऽभीशु॑भिर्वा॒जिन॑ इव । हृत्प्रति॑ष्ठं॒ यद॑जि॒रं जवि॑ष्ठं॒ तन्मे॒ मनः॑ शि॒वस॑ङ्कल्पमस्तु ॥" ( यजु० ३४ । ६ ) इति मनसो देवतात्वे । यास्कोदाहृते मन्त्रे 'अभीशवः' स्वतन्त्रदेवतात्वेन वर्ण्यन्ते स्वरूपं किं च तेषामित्यपि परिभाष्यते । मन्त्रश्चैषाम् "रथे तिष्ठन्नयति····।"

* 'पूजयत' इति पाठान्तरम्

मन्त्रार्थः—

सु-सारथिः—कल्याणसारथिः खलु रथे तिष्ठन् पुरः पुरस्तादग्रे सतो विद्यमानान् वाजिनोऽश्वान् नयति यत्र यत्र कामयते । परन्त्वश्वानां नयने कल्याणसारथेः कार्यमपि त्वभीशूनामुपर्यवलम्बितं तस्मादभीशूनां महिमानं महत्त्वं पनायत स्तुवीध्वम्, हे जनाः—रथस्थाः—तथाऽहं स्वयं कल्याणसारथिरपि तान् स्तौमि प्रशंसामि यदेते रश्मयो रज्जुरूपा अभीशवः प्रग्रहा मनःपश्चात् सन्तो मम मनोऽनुकूलं भवन्तोऽनुयच्छन्ति—अश्वाननुनियच्छन्ति—अनुनियन्त्रयन्ति । पनायत पूजयामि पुरुषवचनव्यत्ययेन वा ।

उक्तमन्त्रेऽभीशूनां स्वरूपं वर्णितमस्ति, पूर्वार्द्धे तु सारथेर्वर्णनमुत्तरार्द्धेऽभीशूनाम्, केऽभीशव इति जिज्ञासायां तु प्रसिद्धपर्यायत्वेन विम्रियते ते रश्मयो रज्जवः सन्त्यश्वानाम्, पुनर्येऽश्वान् नियच्छन्ति नियन्त्रयन्ति सारथेर्मनोऽधीने । अश्वानां नियन्त्रणे चालने वाऽश्वसारथ्योर्मध्ये यद्वाऽश्वसारथिमनसोर्मध्ये—उपयुज्यमाना ये स्युस्तेऽभीशवः सन्तीति परिभाषितमत्र ॥

धनुः ॥ १२ ॥

धनुर्धन्वतेर्गतिकर्मणः, वधकर्मणो वा, धन्वन्त्यस्मादिषव ॥ १६ ॥

तस्यैषा भवति—

धन्व॑ना॒ गा धन्व॑ना॒जिं ज॑येम॒ धन्व॑ना ती॒व्राः स॒मदो॑ जयेम। धनुः॒ शत्रो॑रपका॒मं कृ॑णोति॒ धन्व॑ना॒ सर्वाः॑ प्र॒दिशो॑ जयेम ॥'' ( ऋ० ६ । ७५ । २ )

इति सा निगदव्याख्याता । समदः समदो वात्तेः, सम्मदो वा मदतेः ।

भा०—'धनुः' सांग्रामिकमुपकरणरूपं देवतापदम् । धनुः शब्दः "धवि धन्व गत्यर्थः" ( भ्वादि० ) यद्वा 'धन्व' वधार्थात्, वधार्थो यास्कविधानसामर्थ्यात् । ततः "अर्तिपृवपियजितनिधनितपिभ्यो नित्" ( उणा० २ । ११८ ) धातुबाहुलकात् 'उसिः' प्रत्ययः । वकारलोपश्छान्दसः । धन्वन्ति गच्छन्त्यस्मादिषवः—इत्यपादानकारके । यद्वा धन्वन्ति घ्नन्त्यनेन शत्रून् करणकारके ।

मन्त्रार्थः—

धन्वना धनुषा गाः—गवादिपशुधनं भूमिं च धन्वना धनुषा खल्वाजिं

स्पर्द्धया पणबन्धेन प्राप्तव्यं वरणीयं वा वस्तु लक्ष्यीकृत्याजन्ति क्षिपन्ति स्वबलं यस्मिन् तमाजिं जयेम, धन्वना धनुषा तीव्राः प्रबलान् समदः संग्रामान् जयेम "समत्सु संग्रामनाम" ( निघं० २ । १७ ) धनुः शत्रोरपकाममनिष्टं करोति यद्वा शत्रुमपकृत्य परास्य कामं स्वकाममस्माकं करोति पूरयति धन्वना धनुषा सर्वाः प्रदिशो दिक्प्रदिक्स्थान् शत्रून् जयेम ।

निरुक्तिः—'समदः' सम्यक् संगत्य वा परस्परमदन्ति योद्धारोऽन्योऽन्य-मन्योऽन्यस्य वस्तुजातं वा 'सम्' पूर्वात् "अद भक्षणे" ( अदादि० ) ततः क्विप् । यद्वा 'सम्' पूर्वात् "मदी हर्षे" ( दिवादि० ) "मद तृप्तियोगे" ( चुरादि० ) यत्र योद्धुं सम्यग् हृष्यन्ति परस्परं, यद्वाऽन्योऽन्यस्य रक्तपातं कृत्वा सम्यक् तृप्यन्ति समदः संग्रामाः, समो मकारलोपश्छान्दसः ॥

ज्या ॥ १३ ॥

ज्या जयतेर्वा, जिनातेर्वा, प्रजावयतीषूनीति वा ॥ १७ ॥

तस्या एषा भवति—

"वृक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥" ( ऋ० ६ । ७५ । ३ )

वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्ती ॥

भा०—'ज्या' सांग्रामिकं देवतापदम् । "जि जये" ( भ्वादि० ) यद्वा "ज्या वयोहानौ" ( क्र्यादि० ) अथवा "जवति गतिकर्मा" ( निघं० २।१४ ) धातोः "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) यक् प्रत्ययान्तं पदं निपातितं भवति बाहुलकात् । निपातनं यथायोग्यं धातुकल्पनया भवितव्यम्, निपातनादेव प्रत्ययः 'क्यक्' जवतिश्च णिजन्तः स्यात् । जयति यया शत्रून् सा ज्या, जिनाति शत्रोः शरीरं यया सा ज्या, प्रजावयति गमयतीषून् यया सा ज्या—प्रत्यञ्चा । तस्या मन्त्रः "वक्ष्यन्तीवेदा····" इति ।

मन्त्रार्थः—

इयं ज्या प्रत्यञ्चा धनुष्कोट्योः सम्बद्धा वक्ष्यन्ती कथयिष्यन्ती कथयिष्यति—इव किमपि रहस्यमिति हेतोः कर्णमागनीगन्ति—आगच्छति, तथा प्रियं सखाय-

मिषु परिष्वजमाना योषेव परिष्वङ्गमालिङ्गनं कुर्वाणा शिङ्क्ते-शब्दं करोति, धनुषि वितता वितानिता सती संग्रामे पारं नयति योद्धारम् । इति ज्यायाः स्वरूपं दर्शितम् । अन्यत्र मन्त्रेष्वन्यदेवताकेषु नामधेयत्वेन 'ज्या' शब्द आगच्छति ।

निरुक्तयः—'आगनीगन्ति' आङ्पूर्वाद् गमधातोर्लटि श्लुस्तत्र चाभ्यासस्य चुत्वाभावो नीक् चागमो निपात्यते "दाधर्ति····आगनीगन्तीति च" (अष्टा० ७ । ४ । ६५ ) इति सूत्रेण । 'शिङ्क्ते' "शिजि अव्यक्ते शब्दे" ( अदादि० ) ततः प्रथमपुरुषैकवचनस्य तप्रत्यये रूपम् । 'परिषस्वजाना' परिपूर्वकात् "ष्वज परिष्वङ्गे" ( भ्वादि० ) ततः शानच्-प्रत्यये शपः स्थाने श्लुः "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७३ ) इत्यनेन ॥

इषुः ॥ १४ ॥

इषुरीषतेर्गतिकर्मणो वधकर्मणो वा ॥ १८ ॥

तस्यैषा भवति—

"सु॒प॒र्णं व॑स्ते मृ॒गो अ॑स्या॒ दन्तो॒ गोभिः॒ सन्न॑द्धा पतति॒ प्रसू॑ता । यत्रा॒ नरः॒ सं च॒ वि च॒ द्रव॑न्ति॒ तत्रा॒स्मभ्य॒मिष॑वः॒ शर्म॑ यंसन् ॥" ( ऋ० ६ । ७५ । ११ )

सुपर्णं वस्त इति वाजानभिप्रेत्य, मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः सन्नद्धा पतति प्रसूतेति व्याख्यातं यत्र नराः सन्द्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म यच्छन्तु शरणं संग्रामेषु ॥

भा०—'इषुः' सांग्रामिकमुपकरणरूपं देवतापदम् । "इष गतौ" (दिवादि०) तत "ईषेः किच्च उः" ( उणा० १ । १३ ) 'उः' प्रत्ययो धातुबहुलात् किच्च, इष्यति गच्छति प्रसरति संग्रामे शत्रूं प्रति । अथवा वधार्थात् "ईष गतिहिंसादर्शनेषु" ( भ्वादि० ) ततः "ईषेः किच्च-ह्रस्व" ( उणा० १ । १३ ) धातोरीकारस्य प्रत्ययसन्नियोगेन-इकारः, किच्च 'उः' प्रत्ययः-इषुः, हन्ति शत्रून् संग्रामे तस्मात्-इषुः । इषोर्मन्त्रः "सुपर्णं वस्ते····" इति ।

मन्त्रार्थः—

सुपर्णं वाजं वाजान् पक्षान् लौहपक्षान् तीक्ष्णान् वस्ते-आच्छादयति धारयति "विचित्रवाजैर्निशितैः" ( भागवते १० । ५९ । १६ ) अस्या इषोर्दन्तोऽ

अग्रभागोऽणिमान् मृगो मृगमयो शरोः शवरस्य वन्यपशोः, यद्वा मृगयतेः "मृग अन्वेषणे" ( चुरादि० ) एवं यथा कश्चन दशनशीलो दन्तेन दंष्टुं मृगयते प्रतिद्वन्द्विनं शत्रुं तथा–इषुरपि शत्रुं मृगयते–इव दंष्टुम् । गोभिर्गोमयैर्गोविकारैश्च-र्मश्लेष्मतन्त्रीभिः सन्नद्धा संवेष्टिता संश्लिष्टा दार्ढ्याय भवतीति व्याख्यातम् ( निरु० २ । ५ ) यथाऽद्यत्वे 'हाकी' नाम्ना प्रसिद्ध ऊर्ध्ववक्रभागो दण्डः श्लेष्मतन्त्रीभिः संवेष्टितो भवति । इषुः सा प्रसृता धनुष्मता प्रेरिता प्रक्षिप्ता सती संग्रामे–इति शेषः, यत्र संग्रामे नरो नरा योद्धारः सन्द्रवन्ति संघर्षाय सम्मुखमाक्रामन्ति विद्रवन्ति पश्चाद् गच्छन्ति च यथावसरं समीपतो दूरतश्च युद्ध्यन्ते तत्र संग्रामेऽस्मभ्यं शर्म शरणं यच्छन्तु ।

उक्तमन्त्रे–इषोः स्वरूपं परिभाषितमस्ति तस्मात् तद्देवत्यो मन्त्रः । अन्यत्रान्यदेवत्ये खल्विषुशब्दप्रयोगा गौणाः सन्ति, तद्यथा "इषुर्न धन्वन् प्रतिधीयते" ( ऋ० ९ । ६९ । १ ) उपमायां सोमदेवत्ये सूक्ते । "शतब्रध्न इषुस्तव सहस्रपर्ण एक इत् । यमिन्द्र चकृषे युजम् ॥" ( ऋ० ८ । ७७ । ७ ) इन्द्रदेवत्ये सूक्ते–इन्द्रस्तुतौ । तथा "अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।" ( ऋ० १० । १०३ । ११ ) इन्द्रदेवत्ये मन्त्रे नामधेयत्वेन प्रयुक्ता इषवः ॥

अश्वाजनी ॥ १५ ॥

अश्वाजनीं कशेत्याहुः । कशा प्रकाशयति भयमश्वाय । कृष्यतेर्वाणूभावात् । वाक् [ कशा * ] पुनः प्रकाशयत्यर्थान् । खशया । क्रोशतेर्वा ॥ १९ ॥

अश्वकशाया एषा भवति—

"आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥"

( ऋ० ६ । ७५ । १३ )

आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नन्ति ॥

भा०—'अश्वाजनी' देवतापदमुपकरणभूतं सांग्रामिकम् । अश्वान् गमयति क्षिपति प्रेरयति यया साऽश्वाजनी–अश्वानां याऽजनी साऽश्वाजनी षष्ठीसमासः । "अज गतिक्षेपणयोः" ( भ्वादि० ) ततो ल्युट् प्रत्ययः करणे । "अजेर्व्यं-

* अत्र 'कशा' शब्दोऽपेक्ष्यते यद्वा साक्षात्पाठः स्यात् ।

यजपोः" ( अष्टा० २ । ४ । ५७ ) इति 'वी' आदेशो विकल्प्यते 'यु' इति प्रत्यये 'ल्युट्' इत्यनुबन्धलोपे 'यु' तस्मात्-अजनम्, स्त्रियां टिल्लक्षणो ङीप् प्रत्ययः । अश्वाजनी-अश्वप्रेरणी । अश्वाजनीं कशामाहुः, लोके यां कशां कथयन्ति साऽश्वाजनी वेदे । कशा यतोऽश्वाय भयं प्रकाशयति "काशृ दीप्तौ" ( भ्वादि० ) ततोऽन्तर्गतणिजर्थात् पचादिलक्षणोऽच् प्रत्ययः, उपधाह्रस्वत्वं च-कशा । यद्वा "कृष विलेखने" ततः पूर्ववदेव 'अच्' षकारस्य शकारश्छान्दसः, गुणे कृते रेफस्य लोपः । कृष्टा-अपकृष्टाऽणूभूता । यद्वा 'कृश्यते' इति यास्कवचने भवेत् "कृश तनूकरणे" ( दिवादि० ) ततः पूर्ववत् 'अच्' प्रत्ययः, गुणे कृते रेफस्य लोपश्छान्दसः । सूक्ष्मीभूता हि सा कशा । चर्मणो रज्जुर्दण्डे बद्धा कशा भवति । वाक् पुनः कशा भवति "कशा वाङ्नाम" ( निघं० १ । ११ ) सा प्रकाशयति ह्यर्थान् । यद्वा खशया कशा खे-आकाशे सुखावकाशे शेते सा कशा, खपूर्वात्-शीङ्धातोर्डः प्रत्ययः खकारस्य ककारः । अथवा "क्रुश शब्दे" ( भ्वादि० ) ततोऽपि 'अच्' प्रत्ययः रुभागस्य-अकारश्छन्दसः । क्रोशयति शब्दयति हि वाक् । तस्य अश्वकशाया मन्त्रः "आ जङ्घ...." इत्येषः ।

वक्तव्यम्—

'तस्या एषा भवति' इत्येव पर्याप्तमासीत्, यथान्यत्र सर्वत्र पठत्याचार्यः । परन्तु 'अश्वकशायाः' इति कथनेन प्रतीयतेऽन्या कशा या वाक्-माध्यमिका सापि यथाकथञ्चित् 'अश्वाजनी' इत्युच्यते । किन्तु 'अश्वः' पृथिवीस्थानकः पशुर्नास्ति तत्र मध्यमे स्थानेऽन्तरिक्षे तस्य सत्त्वर्थबलात् खलु मध्यस्थानो व्यापनशीलो मेघ उच्यतेऽश्वः । तस्याजनी ताडयित्री माध्यमिका वाक् स्तनयित्नुरूपा विद्युत् । मन्त्रश्च यथा "हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्यश्वाजनीव ।" ( ऋ० ५ । ६२ । ७ ) "अश्वाजनी विद्युत्" ( स्वामी दयानन्दः ) "अश्वा व्यापनशीला मेघाः, तानजति गच्छत्यश्वाजनी विद्युत्" ( सायणः )

तस्या अश्वकशाया मन्त्रस्यार्थः—

एषामश्वानां सानु-सानूनि सरणानि सक्थीनि अङ्कूपोपरिस्थानि सक्थप्राङ्गाणि यानयुक्तानाम्-हे आजङ्घन्ति ! हे समन्तात् प्रहरन्ति ! ताडयमाने ! तथा पृष्ठे जनं वहमानानां जघनानि पश्चाद्भागान् स्फिक्प्रदेशान्-उपजिघ्नते ! किञ्चित् प्रहरन्ति ! ताडयमाने ! अश्वाजनि ! अश्वप्रेरिणि कशे ! प्रचेतसः सावधानानश्वान् समत्सु संग्रामेषु चोदय प्रेरय चालय ।

निरुक्तयः—'आजङ्घन्ति' आङ्पूर्वात्-हनधातोर्यङ्लुगन्तात्-शतृप्रत्यये स्त्रियां सम्बुद्धौ पदम् । 'उपजिघ्नते' उपपूर्वात् हनधातोः, अभ्यासस्य 'जि'

भावः, सम्बुद्धौ पूर्ववत् 'शे' प्रत्ययः शतृप्रत्यये "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) इति शपः श्लुः । अर्थः समान एव । अभ्यासस्य "बहुलं छन्दसि" ( अष्टा० ७ । ४ । ७८ ) इत्यनेन 'इत्' आदेशः "भृञामित्" ( अष्टा० ७ । ४ । ७६ ) इति सूत्रतोऽनुवृत्तः । सम्बुद्धौ ह्रस्वस्य स्थाने गुणश्छान्दसः । सानूनि सरणानि गमनसाधनानि सक्थीनि । "सृ गतौ" ततो ञुण् प्रत्ययः—सानु । सक्थि "षच समवाये" ( भ्वादि० ) ततः "असिसञ्जिभ्यां क्थिन्" ( उणा० ३ । १५४ ) धातोर्बाहुलकात् क्थिन् प्रत्ययः । आसक्तः—आश्रितः कायोऽस्मिन्निति सक्थि । 'जघनम्' "हन्तेः शरीरावयवे द्वे च—अच्" ( उणा० ५ । ३२ ) ॥

उलूखलम् ॥ १६ ॥

उलूखलमुरुकरं वोर्ध्वखं वोर्क्करं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत् उरुकरं वैतत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम् ॥ २० ॥

तस्यैषा भवति—

"यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥"
( ऋ० १ । २८ । ५ )

इति सा निगदव्याख्याता ॥ २२ ॥

भा०—'उलूखलम्' इति यज्ञे गृहे चोपयोज्यं देवतापदम् । उरुकरम्—उरु बहु "उरु बहुनाम" ( निघं० ३ । १ ) एकैकधानां कुट्टयित्वा बहुबहुशः करोति–इति–उरुकरम्, "कृञो हेतुताच्छील्यानुलोम्येषु" (अष्टा० ३ । २ । २०) इत्यनेन टः प्रत्ययो हेतौ । उरुकरं हि—उलूखलम्, उकारस्य दीर्घत्वं रेफद्वयस्यापि लत्वं ककारस्य खकारत्वे सवर्णवर्णव्यापत्त्या । यद्वा 'ऊर्ध्वखम्' उलूखलम्—ऊर्ध्वमुपरि खमाकाशोऽवकाशश्छिद्ररूपो यस्यास्तीति, अन्ते लकारो मत्वर्थीयो रेफस्य स्थाने । 'ऊर्ध्व' इत्यस्य 'उरु' भावः ख—ल 'उलूखलम्' । अथवा 'ऊर्क्—करम्' उलूखलम् "ऊर्क्—अन्ननाम" ( निघं० २ । ७ ) ऊर्जमन्नमदनीयं कुट्टयित्वा करोतीति 'ऊर्क्' इत्यस्य 'उलू' भावः, करं पूर्ववत् खलम्—उलूखलम् । यद्वा "उरु मे करदिति तस्मादुरुकरं ह वै तदुलूखलमित्याचक्षते परोक्षं परोक्षकामा हि देवाः" ( शत० ७ । ५ । १ । २२ ) इति निर्वचनं सर्वेभ्यः पूर्वं कृतमेव । अत्रोदाहृतमन्त्रे—उलूखलस्य स्वरूपं परिभाषितमस्ति तस्मादत्र—उलूखलं देवता । अन्यत्र

मन्त्रे नामधेयमेव न स्वरूपमुक्तम्, यथा "उलूखले मुसले यश्च चर्मणि यो वा शूर्पे तण्डुलः कणः । यं वा वातो मातरिश्वा पवमानो ममाथाग्निष्टद्धोता सुहुतं कृणोतु ॥" ( अथर्व० १० । ९ । २६ ) ॥

अथ 'यच्चिद्धि....' इति यास्कोदाहृतमन्त्रस्यार्थः—

हे उलूखलक ! स्वार्थे कन्, कुट्टनेनाम्नानां बहुशःकर्तः ! संस्कर्तः ! यच्च त्वं गृहे गृहे प्रत्येकस्मिन् गृहे युज्यसे—उपयुज्यसे, इहात्र राज्ञः सोमपानप्रसङ्गे जयतां विजयं प्राप्नुवतां योद्धृणां कृते दुन्दुभिरिव द्युमत्तमं तेजस्विनमोजस्विनं नादं नद शब्दं कुरु । यास्कदृष्टौ मन्त्रः स्वयमर्थे स्पष्टः, अतो निगदव्याख्याता—ऋक्—इत्युक्तम् ।

इति नवमाध्यायस्य द्वितीयः पादः ।

---

## तृतीयः पादः

---

वृषभः ॥ १७ ॥

वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा तद् वर्षकर्मा * वर्षणाद् वृषभः ॥ २२ ॥

तस्यैषा भवति—

"न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥"
( ऋ० १० । १०२ । ५ )

न्यक्रन्दयन्नुपयन्त एनमिति व्याख्यातम् । अमेहयन् वृषभं मध्य आजेराजयनस्याजवनस्येति वा, तेन तं सूभर्वं राजानम् । भर्वतिरत्तिकर्मा यद्वा ( तद्वा ? ) सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय । प्रधन इति संग्रामनाम प्रकीर्णान्यस्मिन् धनानि भवन्ति ॥

भा०—'वृषभः' इति राष्ट्रे—उपयुक्तं देवतापदम् । 'वृषभः' प्रजां वर्षति सिञ्चति स्वबीजशक्त्या "वृषु सेचने" ( भ्वादि० ) ततः "ऋषिवृषिभ्यां कित्—अभच्" ( उणा० ३ । १२३ ) यद्वा—अतिबृहति रेतः—शुक्रं सन्ततिशक्तिरूपं बीजं स्वशरीरादत्यन्तमुद्यमयति बहिरानयति वर्षितुं सिञ्चितुं परशरीरे । "बृहू

* 'वर्षकर्मा' स्कन्दभाष्ये मूलपाठः, दुर्गभाष्ये तु मूलपाठः 'वृषकर्मा ।'

वृषभने" ( तुदादि० ) धातोर्धातुबाहुलकात् 'अभच्' प्रत्ययः, हकारस्य षकारश्छान्दसः। वर्षणमत्राप्यन्तर्हितमस्ति। तत्–तस्मात्–वर्षकर्मा वर्षो वर्षणं कर्म–अस्य स वर्षकर्मा सन् वर्षणाद्धेतोरेव वृषभः। वृषभशब्दो वेदे बहुत्र प्रयुज्यते परन्त्वन्यदेवताप्रसङ्गेन बहुधा तद्विशेषणरूपेण क्वचिन्नामधेयेनैव तन्निदर्शनम् "त्वम॑ग्ने वृष॒भः पु॑ष्टि॒वर्ध॑न उद्य॑तस्रुचे भवसि श्रवाय्यः।" (ऋ० १। ३१। ५) "इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे।" ( ऋ० ३। ४०। १ ) "वृष्णो मदस्य वृषभ त्वमी॑शिष इन्द्र सोम॑स्य वृष॒भस्य॑ तृप्णुहि।" (ऋ० २।१६।६) "उप॒मं त्वा॑ म॒घोनां॒ ज्येष्ठं॑ च वृष॒भाणा॑म्।" ( ऋ० ८।५३।१ ) तस्य वृषभस्य देवतात्वप्रदर्शनाय स्वरूपप्रदर्शनाय च मन्त्रः "न्यक्रन्दयन्नुपयन्त....." इति।

मन्त्रार्थः—

आजेः संग्रामस्य मध्ये "आजिः संग्रामनाम" (निघं० २। १७) एवं वृषभमुपयन्तः प्राप्तवन्तो न्यक्रन्दयन् गर्जनावन्तमकारयन् कुर्वन्ति तथाऽमेहयन् जलसेचनवन्तमप्यकारयन् कुर्वन्ति, तेन वृषभेण सूभर्वं सुभोक्तारं प्रतिद्वन्द्विनं राजानं शत्रुं यद्वा सूभर्वं शतवत्–शतसंख्याकं सहस्रसंख्याकं बहुप्रकारं भोक्तव्यं वस्तुजातं गवां सहस्रं च प्रधने संग्रामे "प्रधनं संग्रामनाम" ( निघं २। १७ ) मुद्गलो मुद्गवान् विशिष्टशक्तिमधन्यवान् राजा जितवान्॥

एतस्य मन्त्रस्य विशिष्टविवरणमग्रेऽनन्तरे वक्ष्यमाणे द्रुघणप्रकरणे द्रष्टव्यं तत्सूक्तस्यायं मन्त्रः।

निरुक्तम:—'सूभर्वः' "भर्वति–अत्तिकर्मा" (निघं० २। ८) ततः सुपूर्वात् 'अच्' कर्तरि कर्मणि च छान्दसः, उपसर्गस्य दीर्घत्वं छान्दसम्। सूभर्वः सुभोक्ता जनो राजा, सूभर्वं सुभोग्यम्। 'प्रधनम्' प्रकीर्णानि धनानि यस्मिन् तद् प्रधनं सङ्ग्रामः॥

द्रुघणः॥ १८॥

द्रुघणो द्रुममयो घनः।

तत्रेतिहासमाचक्षते–मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय॥ २३॥

तदभिवादिन्येषर्ग्भवति—

"इ॒मं तं प॑श्य वृष॒भस्य॒ युञ्जं॒ काष्ठा॑या॒ मध्ये॑ द्रुघ॒णं शया॑नम्। येन॑ जि॒गाय॑ श॒तव॑त्स॒हस्रं॒ गवां॒ मुद्ग॑लः पृत॒नाज्ये॑षु॥" ( ऋ० १०। १०२। ९)

इमं तं पश्य वृषभस्य सहयुजं काष्ठाया मध्ये द्रुघणं शयानं येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु । पृतनाज्यमिति संग्रामनाम पृतनानामजनाद्वा जयनाद्वा । मुद्गलो मुद्गवान्, मुद्गगिलो वा, मदनं गिलतीति वा, मदङ्गिलो वा, मुदङ्गिलो वा । भार्म्यश्वो भृम्यश्वस्य पुत्रः, भृम्यश्वो भृमयोऽस्याश्वा अश्वभरणाद्वा ॥

'द्रुघणः' सांग्रामिकं देवतापदम् । 'द्रुघणः' द्रुममयो घनः "द्रुः—द्रुमो वृक्षः काष्ठम्" ( अमरकोषे २ । ४ । ५ ) तथा मनुस्मृतौ" आददीताथ द्रुमांसमधुसर्पिषाम् * ( मनु० ७ । १३१ ) द्रुः—द्रुमः "द्युद्रुभ्यां मः" ( अष्टा० ५ । २ । १०८ ) द्रुममयो द्रुमविकारो द्रुमप्रायो घनो भारवान् स्थूलः पदार्थः पिण्डभूतः । द्रुघणशब्दो देवतात्मक एक एवात्रैव यास्कोदाहृते मन्त्रे । अदेवतात्मको द्रुघणशब्दोऽथर्ववेदे विद्यते—एतद्भिन्नार्थकः, यथा "वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशुर्वेदिः परशुर्नः स्वस्ति ।" ( अथर्व० ७ । २८ ( २९ ) । १ ) वेददेवत्ये मन्त्रे "वेदः स्वस्तिः—इति वेददेवताकम्" ( अथर्ववेदीयबृहत्सर्वानुक्रमणी ) परन्तु परशुसाहचर्याद् द्रुघणोऽत्र प्रोवृक्षरूपकाष्ठस्य छेदनसाधनं करणं तच्च "करणेऽयोविद्रुषु" ( अष्टा० ३ । ३ । ८२ ) स तु लोहमयो भवति, उक्तं यथा वैशम्पायनोक्तधनुर्वेदमन्त्रे "द्रुघणस्त्वायसाङ्गः स्याद् वक्रग्रीवो बृहच्छिराः" "परशुवल्लौहाङ्गम्" (शब्दकल्पद्रुमः) सोऽत्र काष्ठस्य छेदको यास्कोदाहृतमन्त्रे न गृह्यते किन्त्वत्र तु द्रुममयः काष्ठमयः काष्ठनिर्मितो द्रुघणः । स कोऽस्तीत्यत्र विवेच्यते ।

विवेचनम्—

'तत्रेतिहासमाचक्षते यद् भार्म्यश्वो भृम्यश्वस्य पुत्रो मुद्गल ऋषिर्वृषभं द्रुघणं च रथे युक्त्वा संग्रामेऽवतरणं कृत्वा लक्ष्यं युद्धवस्तुजातं जितवान्' इति न स्वमतं स्थाने स्थाने यास्को घोषयति 'इत्यैतिहासिकाः—इति नैरुक्ताः' । पुनश्च 'आचक्षते' इति प्रथमपुरुषबहुवचने क्रिया 'अन्ये कथयन्ति' । परन्तु तत्रेतिहासिकग्रन्थेषु खल्वपि वेदस्य नामास्ति पुनः प्राक्कालिके वेदे तदर्वाक्कालिकानामितिहासवर्णनं कथं स्यात् तदितिहासं खल्वलङ्कारमात्रमित्येव विज्ञेयमितिहासकथनेऽपि । अत्र त्विदं विवेच्यते वस्तुतो मन्त्रे को द्रुघणः कश्च वृषभो यास्यां

---

* वृक्षस्य मांसं मध्यभागो मधुघृते चेति ।

संग्रामे जयो भवति। यथा अत्र न परशुवल्लोहमयो द्रुघणस्तथैव नात्र पशुरूपो वृषभोस्ति किन्तूभावपि दिव्यौ कलात्मकौ स्तः, कृत्रिमो वृषभो विद्युद्युक्तोऽत्र कथमित्युच्यते—अस्य सूक्तस्य विषये बृहद्देवताग्रन्थे लिखितं यत्—

प्रेतीतिहाससूक्तं तु मन्यते शाकटायनः।
यास्को द्रौघणमैन्द्रं वा वैश्वदेवं तु शौनकः॥
आजावनेन भार्म्यश्व इन्द्रासोमौ तु मुद्गलः।
अजयद् वृषभं युक्त्वा ऐन्द्रञ्च द्रुघणं रथे॥ ( बृहद्देवता )

अत्र—ऐन्द्रं वृषभं युक्त्वेत्युक्तम्। इन्द्रो विद्युत् "यदशनिरिन्द्रः" ( कौ० ६। ९ ) "विद्युद्वा अशनिः" ( शत० ६। १। ३। १४ ) भार्म्यश्वो मुद्गलः 'अग्निः, इन्द्रः—विद्युत्, वायुः' एते त्रयो भृमयो भ्रमणशीलत्वात्, "इमामग्ने शरणिं मीमृषो न····भृमिरस्यृषिकृन्मर्त्यानाम्॥" ( ऋ० १। ३१। १६ ) "एवमत्र भृमिरग्निः" ( दुर्गाचार्यः ) "भृमिश्चिद् घासि तूतुजिरा चित्र चित्रिणीष्वा। चित्रं कृणोष्यूतये॥" ( ऋ० ४। ३२। २ ) इति मन्त्रस्य—इन्द्रो देवता स च 'भृमिः' इत्युक्तम्। उणादिकोषे शब्दकल्पद्रुमे कोषे च वायुविशेषो वातभ्रमो वायुचक्रं भृमिरुक्तः। एते त्रयो भृमयोऽश्वा अश्वस्थानीया यस्य स भृम्यश्वः प्रयोगविशेषस्तस्य पुत्रस्तदुद्भवो भार्म्यश्वो मुद्गलः, संग्रामे शत्रूणां मदगिलो मदं गिरति भक्षयति मर्दयति—इति मदगिलः, शत्रुं मुद्गं लघुभोजनं कुर्वन् गिलति निगिलतीति मुद्गिलः, एनं मदनम्—शत्रुमदनं मुदं हर्षं च गिरति निगलति समापयति स मुद्गलो मुद्गवान् मुद्गाकारवान् पक्षिविशेषः। तद्वान् मुद्गवान् वृषभो विद्युच्छक्तियुक्तो वृषभो वृषभाकारो रथोऽत्र युक्तः। चतुष्पात्—चतुश्चक्रवान् वृषभरूपो रथः। यथा भोजस्य राज्ञोऽश्वो यान्त्रिक आसीद् तद्वदयं वृषभो यान्त्रिकः, एतदर्थम् "इमं तं पश्य वृषभस्य युञ्जम्····" इति मन्त्रस्याग्रिमं मन्त्रं पश्यन्तु पाठकाः—

आरे अघा को न्वित्था ददर्श यं युञ्जन्ति तम्वा स्थापयन्ति।
नास्मै तृणं नोदकमा भरन्त्युत्तरो धुरो वहति प्रदेदिशत्॥ १०॥

अरे! आश्चर्यं क इत्थमीदृशं वृषभपञ्जरं द्रुघणं काष्ठमयं दृष्टवान् यं युञ्जन्ति तमेव तदुपरि हि जनानास्थापयन्ति—आरोहयन्ति, अस्मै न तृणं न ह्युदकमर्पयन्ति, उत्कृष्टस्तरणः प्लवमानः सन् पुनः पुनः प्रेरयन् धुरो वहति चालयति।

इत्यनेन स्पष्टं भवति यान्त्रिको वृषभोऽत्र सूक्ते वर्णितो वृषभाकारः काष्ठमयः। तस्य काष्ठमयः पञ्जर एव द्रुघणः, तदनन्तरं विद्युच्छक्तिरूपो वृषभः स एव यन्त्रप्रणालीकया गर्जनां करोति जलं च मेहति शत्रुसेनामुपरि संग्रामे—इति पञ्चमे

मन्त्रे यथोक्तम् "न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः।" इति वारुणास्त्रमपि वृषभः स कृत्रिमः। अथेदानीं द्रुघणविषयको यास्कोदाहृतमन्त्रस्यार्थः क्रियते।

मन्त्रार्थः—

तमिमं वृषभस्य युजं सहयुजं सहयोगिनं यस्मिन् वृषभो युक्तो भवति तं वृषभपञ्जरं द्रुघणं काष्ठमयं काष्ठाया मध्ये संग्रामभूमेर्मध्ये "आज्यन्तोऽपि काष्ठोच्यते" ( निरु० २ । १५ ) शयानं कृतकार्यं संग्राभूमिं प्रभावयन्तमाच्छादयन्तं वा पश्य। येन मुद्गलो वृषभयन्त्रं पृतनाज्येषु संग्रामे गवां शतसंख्यावद् बलं सहस्रं साहस्रं बलं जितवान्। 'सहस्रम्' इत्यत्र तद्धितप्रत्ययस्य लोपश्छान्दसः। तद्यन्त्रचालको जनोऽपि राजा मुद्गल औपाधिकदृष्ट्या वक्तुं शक्यते स तेन गवां साहस्रं धनं जितवान्—इत्यपि वक्तुं शक्यते ॥

निरुक्तयः—'पृतनाज्यम्' इति "पृतनाज्यं संग्रामनाम" (निघं० २ । १७) पृतनानाम्—अजनात् "पृतनाः—मनुष्याः" ( निघं० २ । ३ ) अत्र सांग्रामिकजनाः सैनिकजना गृह्यन्ते सैनिकजनानामजनीयं गमनीयं पृतनाज्यं संग्रामस्थलम्। "अज गतिक्षेपणयोः" ( भ्वादि० ) ततः "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) अज्यम्, बाहुलकाद् यक् प्रत्ययः कर्मणि। यद्वा पृतनानां जयनात् "जि जये" ( भ्वादि० ) ततोऽपि "अघ्न्यादयश्च" जि यक्, निपातनादिकारलोपः। ज्यं जेतव्यं कर्मणि प्रत्ययः। 'मुद्गलः' अर्थस्तूक्तः। 'मुद्ग' शब्दात् 'लः' मतुबर्थीयः 'रः' इत्यस्य स्थाने। "ऊषसुषिमुष्कमधो रः" (अष्टा० ५ । २ । १०७) छन्दसि च विकल्पितो भविष्यति मुद्गवान्। अग्रे 'मुद्ग' इत्येवमादिषूपपदेषु "गॄ निगरणे" ( तुदादि० ) ततः 'अच्' प्रत्ययः। रेफस्य लत्वं च मुद्गलः 'मदं' इत्येवमादीनां मुद्गभावश्छान्दसः। 'भृम्यश्वः' भ्रमयोऽश्वाः—अग्नीन्द्रवायवोऽश्वा यस्य स भृम्यश्वः, यद्वा—अश्वभरणात्, अश्वान् तानग्न्यादीन् बिभर्ति धारयति—इति भृम्यश्वः। अश्वानां भृमिर्भर्ता धारयिता—इति "राजदन्तादिषु परम्" ( अष्टा० २ । २ । ३१ ) इति परनिपातो विज्ञेयोऽश्वशब्दस्य, भृम्यश्वः ॥

पितुः ॥ १९ ॥

पितुरित्यन्ननाम पातेर्वा, पिबतेर्वा, प्यायतेर्वा ॥ २४ ॥

तस्यैषा भवति—

"पितुं नु स्तोषं महो धर्माणं तविषीम्।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥"

( ऋ० १ । १८७ । १ )

तं पितुं स्तौमि महतो धारयितारं बलस्य। तविषीति बलनाम तवतेर्वा वृद्धिकर्मणः। यस्य त्रित ओजसा बलेन त्रितस्त्रिस्थान इन्द्रो वृत्रं विपर्वाणं व्यर्दयति ॥

भा०—'पितुः' इति देवतापदम्। तत्र–अन्ननाम "पितुः–अन्नम्" (निघं० २। ७) तत्खलु "पा रक्षणे" (अदादि०) इत्यतः "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" (उणा० १। ६९) तुन् प्रत्ययो धातुबाहुलकात्। धातोराकारस्य–इकारश्च बाहुलकादेव पितुः–अन्नं पाति रक्षति हि शरीरं प्राणिनं वा कर्तरि तुन्। तथा "पा पाने" (भ्वादि०) इत्यतोऽपि तथैव तुन् प्रत्ययो धातोराकारस्य–इकारदेशश्च। पीयतेऽसाविति पितुः कर्मणि प्रत्ययः, पा भक्षणे–इति कल्पना न युक्ता यतो हीन्द्रस्यान्नं सोमः स च पीयते खल्विन्द्रेण तस्मात् पितुः पिबतेः पानादिति साधु। साक्षाच्छ्रुतावपि तस्य पानं श्रूयते "पितुं पपिवाञ्चार्वन्ना" (ऋ० १। ६१। ७) "प्यायी वृद्धौ" (भ्वादि०) ततोऽपि तुन् प्रत्ययः, अकिति खल्वपि सम्प्रसारणं छान्दसम् "प्यायः पी" (अष्टा० ६। १। २८) इत्यादेशः। प्यायते वर्धयति शरीरम्।

वक्तव्यम्–एतत्सूक्तं विहायान्यत्र पितुशब्दोऽन्यदेवताके प्रसङ्गे पठितोऽस्ति वेदे, तद्यथा "उत नः पितुमाभर संरराणो अविक्षितम्। मघवन् भूरि ते वसु ॥" (ऋ० ८। ३२। ८) इन्द्रदेवत्ये सूक्ते। "अग्ने·····अविषं नः पितुं कृणु।" (यजु० २। २०) आग्नेयमन्त्रे। "सुपर्णस्त्वा गरुत्मान्विष प्रथममावयत्। नामीमदो नारूरुप उतास्मा अभवः पितुः ॥" (अथर्व० ४। ६। ३) तक्षकदेवत्ये। अथ च "पितुं नु स्तोषं·····" इति यास्कोदाहृतमन्त्रापेक्षयाऽन्ये मन्त्रास्तस्मिन्नेव सूक्ते पितुशब्दोऽन्नार्थं इति स्पष्टं दर्शयन्ति तेषां कश्चित् कथञ्चोदाहृतः, यथा "स्वादो पितो मधो पितो वयं त्वा ववृमहे।" (२) "अन्ना चित्रो पितोऽरं भक्षाय गम्याः" (७) इति। उच्यते–अत्र तु स्पष्टं पितुरन्नं प्रतीयते, न ह्यत्र कथनस्य फलं विशिष्टम्। "पितुं नु स्तोषं·····" इत्यस्पष्टं तथा 'त्रितः–इन्द्रः' इति शब्देन सन्दिह्यते मन्त्रः–इन्द्रदेवत्यः पितुदेवत्यो वा तस्माद् यास्केन निर्णीतः पितुदेवत्यो मन्त्रः।

मन्त्रार्थः—

महो महतस्तविषी बलस्य 'षष्ठ्यर्थे द्वितीया' धर्माणं धारयितारं पितुमन्नदेवं नु–अवश्यं स्तोषं प्रशंसेयं यस्य–ओजसा बलेन यस्य सेवनात् प्राप्तेन बलेन त्रितस्त्रिस्थानः पृथिव्यन्तरिक्षद्युस्थानेषु तैजसधर्मेण वर्तमान इन्द्रो विद्युद्देवो वृत्रं

मेघं विपर्वं विगतपर्वाणं विश्लिष्टावयवं कृत्वाऽर्दयन्नाशयति—इत्याधिदैविके । त्रितस्त्रिस्थान इन्द्र आत्मा जीवात्मा स्थूलसूक्ष्मकारणाख्येषु शरीरेषु त्रिषु स्थानेषु विद्यमानो वृत्रं पाप्मानं क्षुधं रोगं स्वास्थ्यावरणकं विपर्वं विगतपर्वाणं छिन्नरूपं कृत्वा नाशयति—इत्याध्यात्मिके । त्रितः—इन्द्रो राजा त्रितस्त्रिषु स्थानेषु भूजलगगनेषु सैन्यबलान्वितो वृत्रं शत्रुं विपर्वं विगतपर्वाणं छिन्नभिन्नसैन्याङ्गं कृत्वाऽर्दयति नाशयति "अर्द हिंसायाम्" ( चुरादि० ) इत्याधिभौतिके ।

निरुक्तय:—'धर्मा' "धृञ् धारणे" ( भ्वादि० ) ततः "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४५ ) धर्मा धारयिता कर्तरि मनिन् । 'तविषी' "तवेर्णिद्वा टिषच्" ( उणा० १ । ४८ ) तविषी स्त्रियाम् । "तविषी बलनाम" ( निघं० २ । ९ ) ॥

नद्यः ॥ २० ॥

नद्यो व्याख्याताः ॥ २५ ॥

तासामेषा भवति—

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥" ( ऋ० १० । ७५ । ५ )

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोममासेवध्वमसिक्न्या च सह मरुद्वृधे वितस्तया चार्जीकीय आशृणु ( हि ? ) सुषोमया चेति समस्तार्थः ॥

भा०—'नद्यः' इति देवतापदम् । नद्यो व्याख्याताः "नदना इमा भवन्ति" ( निरु० २ । २४ ) ।

हे गङ्गे ! यमुने ! सरस्वति ! शुतुद्रि ! परुष्णि ! असिक्न्या सह मरुद्वृधे ! सुषोमया सह चार्जीकीये ! यूयं सर्वा नद्यो मे—मम स्तोमं स्तवनं गुणप्रशंसनमासचता—सेवध्वम् , अथ मह्यमभीष्टमाशृणुहि—शृणु प्रत्येकम् । इति यास्कप्रदर्शितः समस्तार्थः—संक्षिप्तार्थः ।

विस्तृतार्थो नैवंक्तिकः स आचार्येण प्रदर्श्यते—

अथैकपदनिरुक्तम्—गङ्गा गमनात् । यमुना प्रयुवती गच्छतीति वा, प्रवियुतं गच्छतीति वा, सरस्वती सर इत्युदकनाम सर्तेस्तद्वती । शुतुद्री शुद्राविणी क्षिप्रद्राविण्याशु-तुन्नेव द्रवतीति वा । इरावती परुष्णीत्याहुः पर्ववती

भास्वती कुटिलगामिनी। असिक्न्यशुक्लाऽसिता—सितमिति वर्णनाम तत्प्रतिषेधोऽसितम्। मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति। वितस्ताऽविदग्धा * विवृद्धा महाकूला। आर्जीकीयां विपाडित्याहुः। ऋजीकप्रभवा वर्जुगामिनी वा। विपाड् विपाटनाद्वा, विप्राशनाद्वा, विपापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद्विपाडुच्यते पूर्वमासीदुरुञ्जिरा। सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः। सिन्धुः स्यन्दनात्॥

भा०—अथ—एकपदनिरुक्तम्—एकैकपदस्य निरुक्तं नैर्वचनिकरूपम्—'गङ्गा' गमनाद् गमधातोः "गमू गम्यर्थोः" (उणा० १। १२३) गच्छति हि—न मध्येऽवरुध्यते यावदायतनं समुद्रं न प्राप्नुयात्—गमयति च स्वाश्रितां नदीमपि महदायतनपर्यन्तम्।

'यमुना' प्रयुवती प्रकृष्टं मिश्रयन्ती सती गङ्गया सहायतनं गच्छति यद्वा प्रवियुतं प्रसृतं गच्छति। "यु मिश्रणे अमिश्रणे च" (अदादि०) ततः "अजियमिशीङ्भ्यश्च—उनन्" (उणा० ३। ६१) धातोर्बाहुलकाद् यवुना यमुना वकारस्य मकारः।

'सरस्वती' "सरः—उदकनाम" (निघं० १। १२) सरश्च सृ धातोः "सर्वधातुभ्योऽसुन्" (उणा० ४। १८९) सरस् तद्वती सदा प्रचुरजलवती सरस्वती।

"शुतुद्री' शुद्राविणी—क्षिप्रद्राविणी, यद्वा 'आशुतुन्ना—इव' आशुना तोदनसाधनेन तुन्ना—इव गच्छति 'आ' इत्यस्य लोपः शुतुद्री। प्रथमपक्षे "शु क्षिप्रनाम" (निघं० २। १५) "द्रु गतौ" (भ्वादि०) यङ्लुगन्तात्—ङिट् प्रत्यय औणादिको बाहुलकात्—अभ्यासदकारस्य तकारश्छान्दसः—शुतुद्री। द्वितीयपक्षे—आङ्पूर्वात् "शो तनूकरणे" (दिवादि०) ततो डुः प्रत्यय औणादिको बाहुलकात्, 'आशु' तेन समन्तात् तनूकरणसाधनेन तुन्ना तोदमाघातं प्राप्ता विच्छिन्नीकृता—इव गच्छति 'आङ्' स्वर्थाभिधाने प्रयुक्त आसीत् स लुप्तो वियुक्तो जातो वा 'शु' अवशिष्टः, अग्रे पूर्ववत्।

'इरावती' परुष्णी, इरावतीं परुष्णीं कथयन्ति। परुष्णी परुष्—पर्व परूंषि

---

* 'विदग्धा' इति पाठः क्वचित्, यथा होशियारपुरस्थे वि वै० शोध संस्थानपुस्तकालये १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्)।

पर्वाणि तद्वती पर्ववती । 'न' मत्वर्थीयः पामादित्वं मत्वा "लोमादिपामादिपिच्छादिभ्यः शनेलचः" ( अष्टा० ५।२।१०० ) यथा पामनः । परुष्णः स्त्रियां परुष्णी, छान्दसो ङीष् स्त्रियाम् । अथवा भास्वती, पकारोपजनं मत्वा—अरुष्वती—अरुणवर्णवती भास्वती निर्मलत्वात्, कुटिलगामिनी परुषवती कठोरमार्गवती । लुप्ताकारं मत्वा ।

'असिक्नी' अशुक्ला—इत्यर्थनिर्देशः, कथमिति यत्—असिता, 'सितम्' वर्णनाम—शुक्लवर्णनाम तत्प्रतिषेधोऽसितम् । स्वार्थे क्नम् प्रत्ययश्छान्दसः स्त्रियां ङीप् च "छन्दसि क्नमित्येके" वा० "वर्णादनुदात्तात्तोपधात्तो नः" ( अष्टा० ४ । १ । ३९ ) । असिक्नी कृष्णजला कृष्णाकारा वा ।

मरुद्वृधाः—यतो मरुत एना नदीर्वर्धयन्ति, मरुतो वृधाः—वर्धकाः—यासां ताः—मरुद्वृधाः सर्वा नद्यः । वृधाः—वृधधातोः "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३ । १ । १३५ ) इत्यनेन कर्तरि कः प्रत्ययः ।

'वितस्ता' अविदग्धाऽतिग्रीष्मकालेऽपि दग्धा शुष्का न भवतीत्यर्थः "तसु उपक्षये" (दिवादि०) महाप्रवाहा । यद्वा विवृद्धा महाकूला 'तसु' वृद्धौ मतो यास्केन ।

आर्जीकीयां विपाडित्याहुः—आर्जीकीया विपाट्, ऋजीकप्रभवा । ऋजीकशब्दात्—छण् प्रभवार्थे, ऋजीकं सरलं स्थानं तत्प्रभवा । यद्वा स्वयमेव—ऋजुगामिनी—ऋजुरेवार्जीकी स्वार्थे तद्धितः । आर्जीकीं गतिं यातीति—आर्जीकीया क्विपि । सा च विपाट्, कथं विपाट् ? उच्यते—विपाटनात् तटविपाटनकारणाद् विपाट्, अवरोधकानां विपाटनाद्वा, विप्रापणाद्वा विशेषेण प्राप्तुं योग्यत्वात्, अथवा विपाशनात्—यदस्यां मुमूर्षतो वसिष्ठस्य पाशा व्यपाद्यन्त तस्माद् विपाश्—विपाट्, पूर्वमासीदुरुञ्जिरा ।

'सुषोमा' सिन्धुर्भवति, कथं सा सुषोमा ? उच्यते यदन्या नद्य एनामभिप्रसुवन्ति स्वात्मानं समर्पयन्ति तां प्रेरयन्ति वा । सिन्धुः स्यन्दनात् "स्यन्दू प्रस्रवणे" ( भ्वादि० ) ततः "स्यन्देः सम्प्रसारणं धश्च" ( उणा० १ । ११ ) यणः स्थाने—इक्, दकारस्य धकारश्चादेशः सिन्धुः ।

वक्तव्यम्—

वेदेषु गङ्गादिनदीनाम्नां कथं सम्भवः कथं च तत्र कस्याञ्चिन्नद्यां वसिष्ठस्य पाशा व्यपाद्यन्त यतस्तस्याः 'विपाश्—विपाट्' इति नाम ? अत्रोच्यते—अत्रानेकेषां मतं यदत्र गङ्गाद्याः शरीरे वर्तमाना नाड्यः सन्ति न पृथिवीपृष्ठगा नद्यः । उक्तं हि—

"इडा भगवती गङ्गा पिङ्गला यमुना नदी ।" ( हठयोग० ३ । ११० )

इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदी ।

मध्ये सरस्वती विद्यात् प्रयागादिसमस्तथा ॥ ( शिवस्वरोदये ३७४ )

सितासिते सरिते यत्र सङ्गथे तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वं विसृजन्ति धीरास्ते जना अमृतत्वं भजन्ते ॥

( ऋ० १० । ७५ । ५ इति मन्त्रस्य खिलसूक्ते मन्त्रः )

हठयोगे गङ्गा–इडा, यमुना–पिङ्गला मता । शिवस्वरोदये गङ्गा–इडा, यमुना–पिङ्गला, सरस्वती–इडापिङ्गलयोर्मध्येऽन्या काचिन्नाडी भिन्ननाम्नी यद्वा सरस्वतीनामतो मता स्याद् यद्वा तयोः सङ्गम एव सरस्वती । एवं हठयोगे द्वयोरेव नामकल्पना नान्यासां नामधेयता नाडीषु प्रदर्शिता । शिवस्वरोदये तिसृणां समता मता, खिलसूक्तेऽपि तथैव । 'हठयोगः, शिवस्वरोदयः' इति–पुस्तके तु नवीने स्तः, खिलसूक्ते 'सरिते' इति शब्दः सन्दिग्धः, यतः 'सरित्' शब्दः सर्वत्र नदीवाचकः, निघण्टावपि "सरित्–नदीनाम" ( निघं० १ । १३ ) खिले यस्य मन्त्रस्योपरि मन्त्र एषः, तत्र मन्त्रे प्रथमे द्वे नद्यौ गङ्गायमुने ते खिलेऽपेक्षिते । सितासिते, गङ्गा सिता यमुना खल्वसिता, प्रयागे तयोर्भेद एष स्पष्टं प्रत्यक्षीभवति तत्र गङ्गा श्वेता दृश्यते यमुना कृष्णा । तयोः सङ्गमे स्नानाम्मन्त्रे खैलिके दिवं प्रति गतिरुक्ता । तत्र प्राणत्यागे मोक्षः । इति नदीपक्षे पौराणिकत्वम् । यदि वचनमिदं प्रामाणिकत्वमर्हेत् तदा फलस्य माहात्म्यबलान्नाडीकल्पना योक्तुं शक्यते । नद्यां न तथाविधं माहात्म्यं युक्तम् । नदीशब्दः सरिच्छब्दो वा नाडीवाचको न ह्यायुर्वैदिकग्रन्थे क्वचिदुपलभ्यते । अध्यात्मप्रसङ्गे नद्यो नाड्यो मन्तुं युज्यन्तेऽध्यात्मालङ्कारमाश्रित्य यथा छान्दोग्योपनिषदि "या धमनयस्ता नद्यः" ( छान्दो० ३ । १९ । २ ) तासां कस्याञ्चिदमन्यां नाड्यां वसिष्ठोऽमृतप्राण आत्मा मुमूर्षुर्मरणासन्नोऽध्यात्मयोगेन निमग्नः कृतयोगाभ्यासो विगतपाशः संसारपाशात् कर्मबन्धनाद् विमुक्तो भवति, उक्तं चोपनिषदि "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति" ( छान्दो० ८ । ६ । ६, कठो०. ६ । १६ ) वसिष्ठश्चामृतप्राण आत्मा "प्राणो वै वसिष्ठ ऋषिः" ( शत० ८ । १ । १ । ६ ) तस्मात् सा नाडी संसारपाशविमोचनहेतुत्वाद् भवतु विपाश्–विपाट् । परन्तु पृथिवीपृष्ठगा गङ्गाद्या नद्यो वेदे मन्त्रेषु न सन्तीत्थं नकारो न युक्तस्तासामाधिदैविकक्षेत्रस्य वस्तुत्वात् । निघण्टुक्रमोऽपि साक्ष्यं यतो 'नद्यः' इति कथनानन्तरम् 'आपः' पुनः 'ओषधयः ।' यास्काभिमतिश्च नदीकथने पृथिवीस्थानदेवतानां स्तवनप्रसङ्गात् तथा 'सरस्वती सर इत्युदकनाम सर्तेस्तद्वती' तथा 'सुषोमा सिन्धुर्यदेनामभिप्रसुवन्ति नद्यः । वेदस्य च स्वतः साक्ष्यं गङ्गाद्या नद्यो भवन्ति तद्यथा ( १ ) "सुत्यमिश्वा

महे नदि परुष्ण्यर्व देदिशम् । नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥" ( ऋ० ८ । ७४ । १५ ) अत्र महे नदि ! परुष्णि ! सम्बोधनं पुनश्च सा हि 'आपः' इति नाम्ना सम्बोध्यते । ( २ ) "मधुमत्पर्वता गिरयो मधु । मधु परुष्णी शीपाला शमास्ने अस्तु शं हृदे ॥" ( अथर्व० ६ । १२ । ३ ) इति सर्पविषचिकित्सायां 'नद्यः पर्वता गिरयः परुष्णी' कथने न नाडी किन्तु नदी हि स्पष्टा । ( ३ ) "यत् सिन्धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः । यत् पर्वतेषु भेषजम् ॥" ( ऋ० ८ । २० । २५ ) इति भेषजमोषधिः, ओषधिप्रसङ्गे तथा पर्वतसमुद्राणां साहचर्ये 'सिन्धुः-असिक्नी' न नाड्यौ किन्तु नद्यौ स्तः । स्वामिदयानन्दस्यापि साक्ष्यम् "गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ।" ( ऋ० ३ । ३३ । १-इत्यत्र "विपाट् या विविधं पटति गच्छति विपाटयति वा सा, शुतुद्री शु शीघ्रं तुदति व्यथति सा पयसा जलेन जवेते" [ पदार्थे ] "अश्वे इव विषिते हासमाने गावेव शुभ्रे रिहाणे पयसा विपाट् शुतुद्री प्रजवेते इव भवेताम्" [ अन्वये ] "यथा पर्वतानां मध्ये वर्तमाना नद्योऽश्वा इव धावन्ति गाव इव शब्दायन्ते" [ भावार्थे ] अत्र दयानन्दमते विपाट् शुतुद्री नद्यौ स्तः, इति स्पष्टम् । एवं तर्हि गङ्गादिर्नामभिर्वेदे न भवितव्यं तस्येश्वरज्ञानात्मकत्वात् सृष्टेरारम्भे प्रकाश्यमानत्वात् ? उच्यते-मनुष्यरचितानां वस्तूनां रथादीनि नामानि यथा वेदे सन्ति तथा गङ्गादिनामान्यपि निरवद्यानि-अशङ्कनीयानि, इदं कथं मनुष्यरचितानां वस्तूनां नामानि तु स्युः स्वरचितानामीश्वररचितानां नामानि न स्युरिति मतिर्न युक्ता । ननु गङ्गाद्या नद्यस्तु खल्वार्यावर्ते [ भारते ] सन्ति तेन-आर्यावर्तस्य देशस्येतिहासो भविष्यति वेदः । उच्यते-आर्यावर्ते देशे गङ्गाद्याः प्रवहन्तीति न वाच्यं किन्तु पृथिवीपृष्ठे प्रवहन्तीति वक्तव्यम्, तदा पृथिवीपृष्ठे या या नदी यथा यथा गुणयुक्ता दृष्टा पुरातनैर्वैदिकैर्ऋषिभिस्तत्तद्गुणवशात् तस्यास्तस्यास्तत्तन्नामकरणं कृतं वेदाद् दृष्ट्वा, मनुना खलूक्तं यथा "सर्वेषां स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥" ( मनु० १ । २१ ) यास्केन गुणा दर्शिता हि 'गङ्गा गमनात्' इति यौगिकनामानि न रूढिनामानि । पुनश्च खागोलिकेन भौगोलिकेन चेतिहासेन वेदेऽवश्यं भवितव्यमेव । यथा 'सूर्यः-चन्द्रमाः' इत्येवमादीनां खागोलिकानां पदार्थानां वर्णनं वेदे तथा गङ्गादीनां भौगोलिकानां वस्तूनामपि वर्णनेन भवितव्यम् । अपि तु नदीनां वैदिकनाम्नां क्षेत्रं केवलं पृथिवी हि नास्ति किन्तु पृथिव्यन्तरिक्षद्युलोकाख्योऽपि क्षेत्राणि सन्ति, एतत्सूक्तस्य प्रथममन्त्रे ह्युक्तमस्ति "प्र सप्त सप्त त्रेधा हि चक्रमुः" ( ऋ० १० । ७५ । १ ) पृथिवी-

स्थानपदार्थेषु नद्योऽपि देवतास्वस्य भागिन्यः सन्ति, कस्याश्चिज्जलपाने भेषजं कस्याञ्चित् स्नाने महौषधं तथाऽन्नोत्पादनाय क्षेत्रसेचनाय तु सर्वा नद्य उपकारिण्यः सन्ति ता एताः स्तोतव्याः प्रशंसनीया उपयोज्याः। मरणमिच्छुकस्य वसिष्ठस्य पाशविपाशनविषयिका कथा त्वालङ्कारिकी खल्वस्ति, सा चेत्थम् "आर्जीकीया विपाडिति जाता, पूर्वमासीदुरुञ्जिरा—उरुजलेत्यर्थः" ( दुर्गाचार्यः ) अस्य वसिष्ठपाशविमोचनस्य समग्रं वर्णनं महाभारतस्यादिपर्वणि ( १७५ अध्याये ) अस्ति। तत्र विश्वामित्र ऋषिर्वसिष्ठस्य शतपुत्रान् हत्वा कामदुहं गां गृहीतवान्, वसिष्ठः पुत्रशोकार्तः सन्नात्महत्यां चकमे पुनः पुनरात्महत्यार्थं यत्नं कृतवानपि न स मृतः, अन्तिमात्महत्यायां पाशेषु स आत्मानं बद्ध्वा—उरुञ्जिरायां निविष्टः परन्तु तत्र स विपाशो जातस्तस्मात् सा नदी विपाश्—विपाट् प्रसिद्धा तद्विषयकाः श्लोकाः सन्ति—

वसिष्ठो घातितान् श्रुत्वा विश्वामित्रेण तान् सुतान्।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ ४३ ॥
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः।
न त्वेव कौशिकोच्छेदं मेने मतिमतां वरः ॥ ४४ ॥

स मेरुकूटादात्मानं मुमोच भगवानृषिः।
गिरेस्तस्य शिलायां तु तूलराशाविवापतत् ॥ ४५ ॥
न ममार च पातेन स यदा तेन पाण्डव।
तदाग्निमिद्धं भगवान् संविवेश महावने ॥ ४६ ॥

तं तदा सुसमिद्धोऽपि न ददाह हुताशनः।
दीप्यमानोऽप्यमित्रघ्न ! शीतोऽग्निरभवत् ततः ॥ ४७ ॥
स समुद्रमभिप्रेक्ष्य शोकाविष्टो महामुनिः।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदाम्भसि ॥ ४८ ॥

स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः।
न ममार यदा विप्रः कथञ्चित् संशितव्रतः ॥
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ४९ ॥

ततो दृष्ट्वाऽऽश्रमपदं रहितं तैः सुतैर्मुनिः।
निर्जगाम सुदुःखार्तः पुनरप्याश्रमात्ततः ॥ १ ॥
सोऽपश्यत् सरितं पूर्णां प्रावृट्काले नवाम्भसा।
वृक्षान् बहुविधान् पार्थ हरन्तीं तीरजान् बहून् ॥ २ ॥

अथ चिन्तां समापेदे पुनः कौरवनन्दन ।
अम्भस्यस्या निमज्जेयमिति दुःखसमन्वितः ॥ ३ ॥

ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः ।
तदा जले महानद्या निममज्ज सुदुःखितः ॥ ४ ॥

अथ छित्त्वा नदी पाशांस्तस्यारिबलसूदन ।
स्थलस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ ५ ॥

उत्ततार ततः पाशैर्विमुक्तः स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ ६ ॥

शोकबुद्धिं तदा चक्रे न चैकत्र व्यवातिष्ठत ।
सोऽगच्छत् पर्वतांश्चैव सरितश्च सरांसि च ॥ ७ ॥

दृष्ट्वा स पुनरेवर्षिर्नदीं हैमवतीं तदा ।
चण्डग्राहवतीं भीमां तस्य स्रोतस्यपातयत् ॥ ८ ॥

सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥ ९ ॥

उपर्युक्तश्लोकेषु वर्णनं खल्वालङ्कारिकं यतोऽतः पूर्वं वृत्तमिदं यद् वसिष्ठस्य पार्श्वे कामधुग् गौरासीत् तां वसिष्ठस्य शतपुत्रान् रक्षसो हत्वा विश्वामित्रः कामदुहं गांहृतवान्, ह्रियमाणा गौरब्रवीद् वसिष्ठम्—

कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।
विश्वामित्रो बलैर्घोरैर्भगवन् किमुपेक्षसे ॥ २७ ॥

किन्नु त्यक्तास्मि भगवन् यदेवं त्वं प्रभाषसे ।
अत्यक्ताहं त्वया ब्रह्मन् नेतुं शक्या न वै बलात् ॥ ३० ॥

गवा पशुना नैवं वक्तुं शक्यतेऽमानवत्वात्, न हि मानवीं वाचं वक्तुं सा समर्था । तस्मादलङ्कारः कश्चित् । पुनश्च तद्विषयेऽन्यदिदमपि वृत्तम्—

ग्राम्यारण्यांश्चौषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतनिभं रसायनमनुत्तमम् ॥ १० ॥

भोजनीयानि पेयानि भक्ष्याणि विविधानि च ।
लेह्यान्यमृतकल्पानि चोष्याणि तथार्जुन ॥ ११ ॥

रत्नानि च महार्हाणि वासांसि विविधानि च ।

भक्ष्याणि रत्नानि वासांसि—वस्त्राणि च दुदुहे—प्रयच्छति। न पशुरूपा गौरिति। पुनश्च विश्वामित्रेण सा हृता सती—

असृजत् पह्लवान् पुच्छात् प्रसवाद् द्राविडाञ्छकान्।
योनिदेशाच्च यवनान् शकृतः शबरान् बहून्॥ ३६॥

मूत्रतश्चासृजत् कांश्चिच्छबरांश्चैव पार्श्वतः॥
पौण्ड्रान् किरातान् यवनान् सिंहलान् बर्बरान् खसान्॥ ३७॥

चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान्।
ससर्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि॥ ३८॥

स्पष्टं जातं गौः सैषा पृथिवी खल्वस्ति "गौः पृथिवीनाम" (निघं० १। १) तदा त्वलङ्कार एषः, यदा गौः पृथिवी तदा वसिष्ठः खलूदकसंघातः "यद् वस्तृतमो वसति तेनो वसिष्ठः" (शत० ८। १। १। ६) "वसिष्ठोऽप्याच्छादित उदकसंघातः—वसुमत्तमः" (स्कन्द, निरु० ५। १४) पृथिव्याः परितो वाष्परूपाः सूक्ष्मा जलांशाः—वसिष्ठपुत्राः शतसंख्याका बहवो ये पृथवीं परितोऽरक्षन्। विश्वामित्रस्त्वादित्यः, स सृष्टेरारम्भे वाष्परूपान् जलांशान् विनाश्य पृथिवीं बहिरार्पितवान् तदा पृथिव्या उपरि देशाः प्रकटीभूताः। पुनस्तस्य—उदकसंघातस्य वसिष्ठस्यात्महत्या खल्वालङ्कारिकी—ऋतुप्रवृत्तिं दर्शयति यद्यदा—उदकसंघातस्य पुत्रभूता जलांशा ये पृथिवीं परिवार्य स्थिता आसन् ते विश्वामित्रेण विनष्टीकृता अपवारितास्तदा पृथिव्या उपरि शरदृतुः प्रवृत्तः। पुनः स उदकसंघातोऽवश्यायरूपेण वर्तमानो मेरोरूर्ध्वाकाशात् पर्वतेषु हिमरूपेणात्मानं न्यपातयत् परन्तु तूलराशौ हिमरूपतूलराशौ पतितो जलात्मनो न विनष्टः, इति हेमन्तर्तोः प्रवृत्तिर्जाता। पश्चादादानकाले—उत्तरायणकाले स उदकसंघातो हिममयो वसिष्ठः सूर्यतापरूपेऽग्नौ पतित आत्मनाशाय स द्रवीभूतो जातः, इति शिशिरर्तुः प्रवृत्तः। पश्चात् स पर्वतेभ्यः प्रवहमाणः समुद्रे पतितः परन्तु जलात्मतो न मृतः, इति वसन्तर्तोः प्रवर्तनं जातम्। पुनः समुद्राद् वाष्परूपे बहिःक्षिप्तः, जलरूपतो न विनष्टो ग्रीष्मर्तुः प्रवृत्तः पश्चाद् वाष्परूपेणाकाशं गतः। आर्जीकीयायामृजीकप्रभवायां धूमप्रभवायां बद्ध्वात्मानं प्रवेशितवान् पुनः सा वर्षणोन्मुखीभूतः, वर्षणाज्जलरूपो वसिष्ठस्ततो विपाशो जातस्तस्मात् सा—आर्जीकीया विपाट्—इति जाता, जलरूपं वसिष्ठं व्यपाशयतेति हेतोः, अथ तस्य जलरूपस्य वसिष्ठस्य विपाशनाद् वर्षणाद् वर्षर्तुः प्रावृडृतुर्जातः। इति षड्ऋतुप्रवर्तनविज्ञानमलङ्कारे विद्यते। वृष्टे सति पृथिव्यां तदपेक्षया शुतुद्री जाता शतधा द्रवणात्—शतधा

स्रवन्ती समुद्रं प्रति गच्छन्ती धारा शुतुद्री । तयोरलङ्कारोऽग्रे खल्वागमिष्यति 'विपाट् छुतुद्री' इति प्रसङ्गे ।

आपः ॥ २१ ॥

आप आप्नोतेः ॥ २६ ॥

तासामेषा भवति—

"आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥" ( ऋ० १० । ९ । १ )

आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनाय ॥

भा०—'आपः' इति देवतापदम् । "आप्लृ व्याप्तौ" ( स्वादि० ) ततः "आप्नोतेर्ह्रस्वश्च—क्विप्" ( उणा० २ । ५९ ) 'अप्'—आपः । 'आपः' अप्-शब्दो वेदे बहुधागच्छति क्वित्स्वदेवतारूपेऽन्यदेवताप्रसङ्गे क्वचिद् देवतारूपे परन्त्वपूर्णसूक्ते । यास्कोदाहृते सम्पूर्णे सूक्ते 'आपः' एव देवता । अन्यत्र प्रयुक्तस्य 'आपः' इत्यस्य निदर्शनम्—"यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ॥" ( ऋ० १ । ८ । ७ ) उपमायामिन्द्रदेवत्ये सूक्ते । "न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः । नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥" ( ऋ० १ । २४ । ६ ) इति वरुण-देवताके वरुणापेक्षयाऽपां नैपुण्यप्रदर्शने । "अहन्नहिं पर्वते शिश्रियाण.....स्यन्द-माना अञ्जः समुद्रमव जग्मुरापः ॥" ( ऋ० १ । ३२ । २ ) इतीन्द्रदेवत्ये सूक्ते—इन्द्रस्य महत्त्वप्रदर्शनाय ।

यास्कोदाहृतमन्त्रस्यार्थः—

हे आपः ! आसव्याः पानस्नानयोग्याः ! यूयं निश्चयेन मयोभुवः सुखभुवः सुखस्य शारीरिकमानसिकसुखस्य भावयितृभ्यः स्थ तस्मान्नोऽस्मानूर्जेऽन्नाय स्वय-मन्नं भूत्वा तथा देहे भक्ष्यमाणमन्नं तद्रूपत्वे सम्पादयितुं क्षेत्रेषु चान्नोत्पादनाय दधातन स्थापयत तथा महते रमणीयाय चक्षसे दर्शनाय चास्मान् स्थापयत ।

जलं पानेन स्वयमपि भोजनं भवति भक्षितमन्नं च पाकं प्रापयति क्षेत्रेषु खल्वन्यदन्नमुत्पादयति नेत्रयोश्च सुदृष्टिं सम्पादयति ।

निरुक्तयः—'मयोभुवः' "मयः सुखनाम" ( निघं० ३ । ६ ) 'मयस्' उपपदात् 'भू' धातोः "क्विप् च" ( अष्टा० ३ । २ । ७६ ) मयोभूः—बहुवचने

मयोभुवः । 'दधातन' "धाञ् धारणपोषणयोः" ( जुहोत्यादि० ) ततो मध्यमपुरुषबहुवचने लोटि तस्य स्थाने "तप्तनप्तनथनाश्च" ( अष्टा० ७ । १ । ४५ ) तनप् प्रत्ययश्छान्दसः, पित्त्वादाकारस्यालोपः । 'महे' "मह पूजायाम्" (भ्वादि०) ततः "क्विप् च" ( अष्टा० ३ । २ । ७६ ) मह् चतुर्थ्यां महे । 'रणाय' रमधातोः "राजासाज्ञास्थूणावीणाः" ( उणा० ३ । १५ ) बाहुलकात् 'नक्' प्रत्ययो मकारलोपश्च निपात्यते । 'चक्षसे' "चक्षिङ् व्यक्तायां वाचि अयं दर्शनेऽपि" (अदादि०) ततः "सर्वधातुभ्योऽसुन्" ( उणा० १ । १८९ ) चक्षस् चतुर्थ्यां चक्षसे ॥

ओषधयः ॥ २२ ॥

ओषधय ओषद्धयन्तीति वा । ओषत्येना धयन्तीति वा । दोषं धयन्तीति वा ॥ २७ ॥

तासामेषा भवति—

"या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥"
( ऋ० १० । ९७ । १ )

या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा । मन्ये नु तद् बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा । शतं धामानि सप्त च । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । जन्मान्यत्राभिप्रेतानि । सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा ॥

भा०—'ओषधयः' इति देवतापदम् । ओषत्—दहत् पीडयन्तं रोगं धयन्ति पिबन्ति—ओषधयः । 'ओषत्' पूर्वपदात् "धेट् पाने" ( भ्वादि० ) ततः "कर्मण्यधिकरणे च" ( अष्टा० ३ । ३ । ९३ ) इति विहितः किः प्रत्ययोऽत्र "कृत्यल्युटो बहुलम्—कृतो बहुलमित्यपि" ( अष्टा० ३ । ३ । ११३ ) कर्तरि, तकारलोपश्च—ओषधिः, बहुवचने—ओषधयः । यद्वा 'ओषति—दहति—पीडयति—रोगो'—एना—धयन्ति पिबन्ति रोगिणः, अत्र कर्मणि किः सर्वं पूर्ववत् । अथवा दोषं वातपित्तकफात्मकं दोषं धयन्ति पिबन्ति—अत्रापि कर्तरि किः प्रत्ययः, दोषस्य दकारलोपश्छान्दसः ।

'ओषधयः' पदं वेदे बहुत्रागच्छति, यथा—"मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥" ( ऋ० १ । ९० । ६ ) इति विश्वदेवत्ये सूक्ते । "पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा

विवेश ।" ( ऋ० १ । ९८ । २ ) वैश्वानराग्निदेवत्ये सूक्ते । "स गा अविन्दत्सो अविन्दद्श्वान्त्स ओषधीः सो अपः" ( ऋ० १ । १०३ । ५ ) इति-इन्द्र-देवत्ये सूक्ते ।

मन्त्रार्थः—

याः पूर्वाः श्रेष्ठा ओषधयः पुराकालात्—आरम्भसृष्टितोऽद्ययावत् त्रियुगं त्रीणि युगानि—अत्यन्तसंयोगे द्वितीया, त्रियुगेषु वसन्ते प्रावृषि शरदि देवेभ्यो भौतिकदेवेभ्यो भौतिकदेवानां शक्तिमादाय जाता उत्पन्नास्तासां बभ्रूणां बभ्रुवर्णानां पिङ्गलवर्णानां यद्वा हरणानां रोगहारिणीनां भरणानां पोषयित्रीणां वौषधीनां धामानि जन्मान्युत्पत्तिजातिकर्माणि मनै मन्ये जानामि तानि सप्ताधिकशतमिति यद्वा मनुष्यस्य सप्तोत्तरशतं मर्माणि, मनुष्यस्य यानि जीवनाधारभूतानि येषु रोगाक्रान्तेषु खल्वेता ओषधीश्चिकित्सका दधति प्रयुञ्जते तान्यहं जानामि । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानि च, जन्मानि खल्वत्राभीष्टानि स्युरोषधीनां यद्वा मनुष्यस्य मर्माणि मनुष्यदेहस्य विकासकराणि तज्जीवनस्थितेः स्थापकानि सन्ति तान्योषधीनां प्रयोगस्थानानि । तानि मर्माणि सुश्रुतस्य शारीरस्थाने षष्ठेऽध्याये वर्णितानि ।

निरुक्तम्—'बभ्रुः' "कुर्भश्च" ( उणा० १ । २२ ) इति भृधातोः कुः प्रत्ययो द्वित्वं च, बभ्रु—पिङ्गलः । यद्वा न वर्णवाचकोऽत्र किन्तु 'हृ हरणे' ततः कुः—धातोर्बाहुलकात्, हकारस्य भकारापत्तिश्छान्दसी । यद्वा भृधातोरेव पोषणार्थे कुः पूर्ववत् ॥

रात्रिः ॥ २३ ॥

रात्रिर्व्याख्याता ॥ ३८ ॥

तस्या एषा भवति—

"आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥"
( अथर्व० १९ । ४७ । १ )

आपूपुरस्त्वं रात्रि पार्थिवं रजः स्थानैर्मध्यमस्य दिवः
सदांसि बृहती महती वितिष्ठस आवर्तते त्वेषं तमो रजः ॥

भा०—'रात्रिः' इति देवतापदम् । रात्रिरिति व्याख्याता ( निरु० २ । १९ ) रात्रिशब्दो वेदेऽनेकत्रागच्छति किलान्यदैवत्ये प्रसङ्गे क्वचिद् देवतात्वेनापि परन्तु यथा स्वरूपवर्णनमत्र सूक्ते न तथान्यत्र । तद्यथा—"इदं श्रेष्ठं ज्योतिषां

ज्योतिरागाच्चित्रं प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक् ॥" (ऋ० १ । ११३ । १) उषोदेवत्ये । "तत्सूर्यस्य देवत्वं तन्महित्वं"''यदेदयुक्त हरितः सधस्थाद् रात्री वासस्तनुते सिमस्मै ॥" (ऋ० १ । ११५ । ४) इति सूर्यदेवत्ये सूक्ते । "ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे । ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥" (ऋ० १ । ३५ । १) अत्रानेकदेवत्ये, अग्निमित्रावरुणरात्रीसवितृदेवत्यो मन्त्रः ।

यास्कोदाहृतस्य मन्त्रस्यार्थः—

हे रात्रि ! ङीबन्तस्य सम्बोधनं ङीप् च "रात्रेश्चाजसौ" (अष्टा० ४ । १ । ३१) इत्यनेन छन्दसि । पार्थिवं रजः पृथिवीलोकः, पृथिवीशब्दात् स्वार्थेऽण् छान्दसः, व्यत्ययेनाद्युदात्तः । "लोका रजांस्युच्यन्ते" (निरु० ४ । १९) पितुरन्तरिक्षस्य धामभिः स्थानैः सह—अप्रायि त्वया पूरितः 'प्रा पूरणे' लुङि चिणन्तप्रयोगः कर्मणि । 'पितुः' पञ्चम्यन्तं पितृशब्दस्य, पिता रात्रेरन्तरिक्षं पालनात् । अप्रकाशकत्वादन्तरिक्षस्य, अपितु दिवो द्युलोकस्य सदांसि स्थानान्यपि त्वया पूरितानि, तावत्पर्यन्तं त्वं दरीदृश्यसे, एवं बृहती खल्वाकारेण महती सती त्वं वितिष्ठसे लोकत्रयं व्याप्नोषि, इत्थं तव व्यापित्वात् त्वदीयं तमोऽन्धकार आत्वेषं पृथिवीलोकाद् दीप्यमानद्युलोकपर्यन्तं वर्तते । सूक्तस्यान्तिमो मन्त्रः "त्वयि रात्रि वसामसि स्वपिष्यामसि जागृहि । गोभ्यो नः शर्म यच्छाश्वेभ्यः पुरुषेभ्यः ॥" (९) ॥

अरण्यानी ॥ २४ ॥

अरण्यान्यरण्यस्य पत्नी । 'अरण्यमपार्णं ग्रामादरमणं भवतीति वा ॥ २९ ॥

तस्या एषा भवति—

"अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ॥"
(ऋ० १० । १४६ । १)

अरण्यानीत्येनामामन्त्रयते यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा ॥

भा०—'अरण्यानी' इति देवतापदम् । का सा ? उच्यते—अरण्यस्य पत्नी । अरण्यं पुनः 'अपार्णं ग्रामात्' ग्रामादपगतमित्यर्थः "धापृवस्यज्यतिभ्यो नः" ( उणा० ३ । ६ ) इति—अपपूर्वात् 'ऋ गतौ' धातोर्बाहुलकाद् भूते नः प्रत्ययः—अपार्णः । 'अप' उपसर्गोऽर्थप्रदर्शनायाध्याहृतः, 'अरणम्' एव 'अरण्यम्' प्रत्ययान्तरेण यास्कमतौ । यद्वा—अरमणमेवारण्यम् । ग्रामापेक्षया—अरमणं न रमणयोग्यं भवति । तदा 'अ—रण्यम्'—अरण्यम्, रमधातोः—अन्यः प्रत्ययो डिच्च "राजेरन्यः" (उणा० ३।१००) धातोर्बाहुलकात् । रण्यम्, न रण्यम्—अरण्यम् । तस्याः 'अरण्यानी' इत्यस्य "अरण्यान्यरण्यान्यसौ ..." इत्यृग् भवति ।

वक्तव्यम्—

अत्र 'अरण्यानी—अरण्यस्य पत्नी' इति पत्नीशब्दं दृष्ट्वा किलैकेन विदुषा निरुक्तभाष्यकारेण कल्पना कृता यदस्मिन् सूक्ते वानप्रस्थाश्रमे प्रवेष्टुकामयोः पतिपत्न्योः संवादो वर्तते तत्र प्रथमो मन्त्रः पत्युर्वचनं यस्मिन् स वनं सह गन्तुं पत्नीं प्रतिषेधति । अन्येषु पञ्चसु मन्त्रेषु पत्नी वनस्य शोभां वर्णयन्ती स्वकीय-वनगमनं पुष्णाति । तदत्र वक्तव्यमिदं यदस्य सूक्तस्य—ऋषिस्त्वेक ऐरम्मदो देवमुनिः, न हि द्वावृषी स्तः, वक्ता खल्वेकः पुनः संवादः कथम् ? अपरञ्च यदा शास्त्रेषु पत्न्यै खल्वपि वनगमनस्यानुमतिरस्ति "पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा" ( मनु० ६ । ३ ) पुनः प्रतिषेधकरणस्य नावसरः । अस्यां कल्पनायां महती खल्वापत्तिरेषा यदत्र देवताकाण्डे देवतापदानां वर्णनं करोति स्तुत्यदेवतात्वेन यास्कोऽरण्यानीं ब्रवीति । अरण्यानी—वानप्रस्थस्य पत्नी देवताऽस्ति किम् ? यां यास्कः स्तोतुमयतत, नैतन्नाराशंसं सूक्तम् । वानप्रस्थां स्तुवीत वानप्रस्थं कथन्न ? पुनस्तदपेक्षया संन्यासिनी स्तोतव्यतरा तां कथं नास्तौत् । अपरं च यास्कः कथयति—अरण्यानी देवता स्तोव्या मन्त्रेषु च यद्वा सूक्तेऽरण्यानी वनात्मिका 'स्तूयते, इत्थं च विरोधः खल्वापद्यते—अरण्यानी चेद् वानप्रस्थस्य पत्नी वानप्रस्था । यास्कस्तु कथयति—'अरण्यानी—अरण्यस्य पत्नी' पुनश्च वानप्रस्थः कथयति—हे अरण्यानि ! वानप्रस्थस्य पत्नि ! एवं कथन्नोच्येत हे मम पत्नि ! ? अरण्यानी देवता—अरण्यस्य पत्नी वानप्रस्थस्य पत्नी स्यात् तदग्रे पञ्चसु मन्त्रेषु वनात्मिकाया अरण्यान्याः स्तवनं व्यर्थं स्यात् । अथ चाग्रे "अग्नायी—अग्नेः पत्नी" ( निरु० ९ । ३४ ) अत्र ब्राह्मणस्य पत्नीत्यर्थः कर्तव्यः किम् ? तेनैव भाष्यकारेण 'अग्नायी—अग्नेः पत्नी, इत्यस्य 'अग्नेस्तेजस्विता' इत्यर्थो विहितः । तस्मात्—'अरण्यानी देवताऽरणयस्य पत्नी वानप्रस्यस्य पत्नी न युक्ता । तर्हि—अरण्यानी का या खलु देवता स्यात् तथाऽरण्यस्य पत्नी खल्वपि स्यात् ।

उच्यते—यथा हि यास्केनात्र पृथिवीस्थानदेवतासु 'नद्यः, आपः, रात्रिः' प्रभृतयो जडदेवता मताः स्तुतास्तथैवात्र 'अरण्यानी' खल्वपि स्तुता। सा च "इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्" (अष्टा० ४।१।४९) इति पाणिनिना सूत्रकारेण—अरण्यशब्दात्—ङीष् प्रत्ययः स्त्रियां विहितः, तथा यास्केनापि 'अरण्यानी' स्त्रियां मत्वा व्याख्याता 'अरण्यस्य पत्नी'। व्याकरणे वार्तिककारेण व्यवस्था दत्ता 'अरण्यानी महदरण्यम्'। भवतु महदरण्यमरण्यानां समूहोऽरण्यानी महदरण्यमेव खल्वरण्यस्य पत्नी—इत्यत्र—अरण्यस्य जात्यामेकवचनम्, अरण्यानां पत्नी—अरण्यानी शोभाकारणाद् यद्वा शोभायमानत्वात्, यथा खल्वाङ्गलभाषायामुच्यते "Rose is the queen of flowers" यद्वा Mussoorrie is the queen of hills तथैव—अरण्यानी खल्वरण्यानां पत्नी, अल्पेष्वल्पेष्वरण्येषु यत्र वृक्षास्तरवः पृथक् पृथग् भवन्ति न तेषु तथा शोभा यथा महदरण्येऽरण्यानां पत्न्यामरण्यान्यां शोभाऽस्ति तस्मादत्रारण्यात्मिकाऽरण्यानी देवता या च साऽरण्यानां पत्नी—अरण्यानां सम्मिलिता शोभा स्त्रियामुक्ता देवतारूपेण नाम्ना। अस्तु। अत्र सम्पूर्णं सूक्तमस्माभिर्व्याख्यायते—अस्य—ऋषिः—ऐरम्मदो देवमुनिः। इरयाऽन्नेन हव्येन माद्यति तृप्यतीति कर्तरि "उग्रम्पश्येरम्मदपाणिन्धमाश्च" (अष्टा० ३।२।३७) इति खश्प्रत्ययान्तो निपात्यते। "इरा—अन्ननाम" (निघं० २।७) स च—अग्निः—यज्ञाग्निः। "नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे। इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम्॥" (यजु० ११।७६) "नाभा पृथिव्याः समिधाने अग्नाविति। इरम्मदमितीरया ह्येष मत्तो...." (शत० ६। ६।३।९) इरम्मदं यज्ञाग्निं वेद ज्ञातवाननुष्ठितवान् स ऐरम्मदः "तदधीते तद्वेद" (अष्टा० ४।२।५९) गृह्याग्निमनुष्ठितवान् कृताग्निहोत्रो निवृत्तगृहस्थधर्मकः। स च देवमुनिः—देवं परमात्मानं यो मनुते चिन्तयति स समाप्तगृह्यकर्मा परमात्मनश्चिन्तकोऽरण्यङ्गतो मुमुक्षुः—ऐरम्मदो देवमुनिः "शम इत्यरण्ये मुनयः....शमेन नाकं मुनयोऽन्वविन्दन्" (महानारायणो० २१।२, २२। १) स सूक्तस्य—ऋषिः सोऽरण्यैकदेशे तपस्यन्नरण्यानां शोभाभूतामरण्यानीं प्रशंसितवान्। अरण्यानीशब्दोऽथर्ववेदे प्रयुक्तः "माषाः पिष्टा भागधेयं ते हव्यमरण्यान्या गह्वरं सचस्व।" (अथर्व० १२।२।५३) अग्निदेवत्ये सूक्ते। अस्तु।

अथ—अरण्यानीदेवत्यसूक्तस्य मन्त्रास्तदर्थाश्च प्रदर्श्यन्ते—

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती॥ १॥

अरण्यानि ! इत्येनां 'देवतारूपाम्' आमन्त्रयते 'सम्बोधयति—ऐरम्मदो देवमुनिर्ऋषिः' ( इति यास्कः ) हे अरण्यानि देवते ! अरण्यानां वनानां पत्नि ! अरण्यानां वनानां शोभे राज्ञि ! महदरण्यरूपे ! अरण्यानां समूहभूते देवि ! "यज्ञारण्यानि यज्ञसत्राणि⋯येऽविद्वांस उपयन्ति यथाऽरण्यान्यां मुग्धाँश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षांसि सचन्ते" ( शत० १२ । २ । ३ । ७ ) अत्र 'अरण्यानि' बहुवचनेन सूच्यते 'अरण्यानि' हि 'अरण्यानी' । याऽसौ देवतात्वेनोक्ता त्वम्—अरण्यानि वनानि प्रति, अरण्यानां समूहो महदरण्यमरण्यानां शोभाभूता ह्यरण्यानी तस्मादुक्तं त्वमरण्यानि प्रति प्र—इव पराची—इव तेषां पश्चाद्गामिनीव नश्यसि व्याप्नोषि "नशत्—व्याप्तिकर्मा" ( निघं० २ । १८ ) ग्रामं कथा कथं न पृच्छसि—अर्चसि ( निघं० ३ । १४ ) शोभयसि । एष प्रश्नो यथा हे नगरि ! त्वं कथं गृहाणि प्रति तेषां पश्चाद्गामिनी कथमरण्यं न पृच्छसि—अर्चसि शोभयसि ? यथा नगरी गृहाणां शोभारूपा शोभाकरी तथाऽरण्यानी खल्वरण्यानां शोभा शोभाकरी । स्वस्वस्थाने शोभा भवति नगर्याः शोभा गृहेषु भवति, अरण्यान्याः शोभाऽरण्येषु भवति । पुनरुच्यते मन्त्रद्रष्टा—हे अरण्यानां शोभे शोभाभूते ! अरण्यानि ! त्वामरण्येषु भीर्भीतिर्भयं न विन्दति—इव, अरण्येषु तु भयं भवति—इति लोकदृष्टमुक्तम् । अत्र मन्त्रे 'कथा ग्रामं न पृच्छसि न त्वां भीरिव विन्दती' इति कथनमालङ्कारिकदृष्ट्या स मन्त्रस्य द्रष्टा तामरण्यानीं पुरुषविधां कल्पयित्वा कथयति । अत्र 'अरण्यानी' अरण्यस्था वन्या मनुष्यजातिः कल्पयितुं शक्यते तात्स्थ्योपाधिना मञ्चाः क्रोशन्तीतिवत् परन्तु कल्पनैषा खलु यास्कीयाथानैरुक्ती वा भविष्यति । यास्कस्तु कथयति 'अरण्यानी देवता सा चारण्यानां पत्नी' पुनश्च प्रस्तुता सैव देवता सम्बोध्यते 'अरण्यानि !' इत्येनामामन्त्रयते । एतन्मन्त्रवृत्तं मन्त्रस्य द्रष्टुः स्वकीयम् । पुनश्चैतद्विषयेऽरण्यान्याः स्तुतिः प्रशंसा तस्याः खल्वेव या ह्युत्तरेषु मन्त्रेषु प्रस्तूयते ॥

वृषारवाय वदते यदुपावति चिच्चिकः ।
आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥ २ ॥

अरण्येषु वृषरवाय मनसि सुखस्य वर्षको रवः शब्दो यस्य यद्वा निरन्तरं मेघवर्षणमिव मधुरो रवः शब्दो यस्य स सूक्ष्मजन्तुः सपक्षो झिल्लीनामकः 'झिङ्गुर—झिङ्गा' इति भाषायाम् । स वदति वीणावाद्यमिव वदति तदा चिच्चिकः 'चिच्—चिक्' इति शब्दानुकरणम् । 'चिच्—चिक्' इति करोति, तत्करोत्यर्थे क्विप् । 'चिच्—चिक्' अल्पं विरम्य य खल्वेवं शब्दं करोति सोऽपक्षः सूक्ष्मो जन्तुर्धूंक्षासक्तः स च पूर्वस्य शब्दमनुपोषति विरम्य विरम्य 'चिच्—चिक्'

इति कृत्वा। अथ–आघाटिभिः–इव, आघाटकैः स्वरस्योच्चारकैर्गायकैरिव के चन जन्तवस्तत्र वृक्षेषु धावयन्–अधावयन् स्वरं प्रासारयन् स्वरं प्रसारयन्ति गायन्ति–आङ्पूर्वात् "घट भाषार्थः" (चुरादि०) इत्येवं विविधवादित्रगानैररण्यानी महीयते प्रशस्यते। इत्यृषेर्मनसि विचार आगतः। 'अरण्यानिः' छान्दसं ह्रस्वत्वम्॥

तृतीयो मन्त्रः—

उत गाव इवादन्त्युत वेश्मेव दृश्यते।
उतो अरण्यानिः सायं शकटीरिव सर्जति॥ ३॥

अपि च गाव इव पशवो गवया घासादिकमदन्ति भक्षयन्ति, उतापि क्वचिद् वेश्मेव गृहमिव तरुगुल्मादिकवितानो दृश्यये, अपि च सायंकाले-वायुप्रचलनादरण्यानी शकटीर्यानानि सर्जति–इव, विसृजति–इव, चालयति–इव दृश्यते॥

चतुर्थो मन्त्रः—

गामङ्गैष आ ह्वयति दार्वङ्गैषो अपावधीत्।
वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते॥ ४॥

'अङ्ग' पुनरर्थे यथा 'उत' पूर्वमन्त्रे। पुनश्च दिने–एष गोश्चारको गोपालो वा गां गाः स्वकीया आह्वयति, पुनश्चैष काष्ठाहारो दारु काष्ठमपावधीत्–छिनत्ति, सायं रात्रावरण्यान्यां वसन् जनो जनगणोऽक्रुक्षत् क्रोशति–आह्वयति परमात्मानं स्तौति गायति चेत्थमात्मानं धन्यं मन्यते॥

पञ्चमो मन्त्रः—

न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते॥ ५॥

अरण्यानी न च कमपि हन्ति यदि खल्वन्यो नाक्रामेत्। स्वादु फलं जग्ध्वा भुक्त्वा यथाकामं स्वगृहं निपद्यते जनः॥

षष्ठो मन्त्रः—

आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम्।
प्राहं मृगाणां मातरमरण्यानिमशंसिषम्॥ ६॥

आञ्जनस्य रसाञ्जनगन्धस्येव गन्धोऽस्या इत्याञ्जनगन्धिस्तां सुरभिं सुगन्धोपेतां बहुविधान्नयुक्तामकृषीवलां कृषीवलैः कृषकैरनपेक्षितामन्नस्योत्पा-

चित्रां मृगाणां मातरमरण्यानीमहमैरम्मदो देवमुनिः प्राशंसिषं प्रशंसामि । 'स्तुतवानस्मि' इति सायणः, पुंल्लिङ्गनिर्देशादैरम्मदस्य देवमुनेर्वचनम् ॥

एवमरण्यान्यां वृक्षतरुलतानां स्वाभाविकं सुन्दरं दृश्यं नानाविधकन्दमूल-फलानां भोजनं यथारुचि विहरणं विश्रमणं भिन्नभिन्नजन्तूनां वादित्रवद् वादनं गायकवद् गानं नानाविधानां हरिणादीनां मृगाणां दर्शनं यथेच्छं काष्ठानामानयन-मिति लाभैररण्यानी स्तूयते स्तोतव्या वा सा । तस्माच्छासकवर्गैररण्यानां रक्षा कार्या ॥

श्रद्धा ॥ २९ ॥

श्रद्धा श्रद्धानात् ॥ ३० ॥

तस्या एषा भवति—

"श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥"

( ऋ० १० । १५१ । १ )

श्रद्धयाग्निः साधु समिद्ध्यते श्रद्धया हविः साधु हूयते श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेना-वेदयामः ॥

भा०—'श्रद्धा' इति देवतापदम् । श्रद्धानात्—श्रत् सत्यं तस्य धारणात्, "श्रत् सत्यम्" ( निघं० ३ । १० ) 'श्रत्' उपपदे 'धाञ् धारणपोषणयोः' ततः "आतश्चोपसर्गे" ( अष्टा० ३ । ३ । १०६ ) इति स्त्रियां भावे—अङ् प्रत्ययः पुनष्टाप् । 'श्रत्' इति खलूपसर्गो मतः "श्रच्छब्दस्योपसंख्यानम्" वा० "उप-सर्गाः क्रियायोगे" ( अष्टा० १ । ४ । ५९ ) श्रद्धा सत्यधारणा सत्यमतिः, यथा—"देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ।" ( ऋ० २ । २६ । ३ ) तस्याः श्रद्धायाः स्थानं चोक्तमन्यत्र वेदे "अश्रद्धामनृते-ऽदधाच्छ्रद्धाᳪं सत्ये प्रजापतिः" ( यजु० १९।७७ ) । 'श्रद्धा' शब्दो वेदेऽन्यत्रापि प्रयुज्यतेऽन्यदेवत्ये प्रसङ्गे, तद्यथा "श्रद्धा इत्ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ।" ( ऋ० ७ । ३२ । १४ ) इन्द्रदेवत्ये । "आ पवस्व दिशां पत आर्जीकात् सोम मीढ्वः । ऋतवाकेन सत्येन श्रद्धया तपसा सुत इन्द्रायेन्दो परि स्रव ॥" ( ऋ० ९ । ११३ । २ ) इति पवमानसोमदेवत्यसूक्ते ।

श्रद्धादेवत्यमन्त्रस्यार्थः—

अग्निः श्रद्धया सत्यधारणया यथार्थविधिना साधु समिध्यते यज्ञकुण्डे,

हविश्च श्रद्धया सत्यधारणया सद्भावनया साधु सम्यग् हूयते । भगस्य भाग-धेयस्य भाग्यसम्पादकस्य कर्मणो मूर्धनि प्रधानाङ्गे वचनेन श्रद्धामावेदयामः प्रवृशंसामः । श्रद्धा खलु कार्यसिद्धिं करोति श्रद्धायाः स्तुतिः प्रशंसा, श्रद्धामन्तरेण कार्ये मनो न लगति साऽवश्यं भावनीया । "श्रद्धा जननीव कल्याणी योगिनं पाति" ( योग० १ । २० व्यासः ) ॥

पृथिवी ॥ २६ ॥

पृथिवी व्याख्याता ॥ ३१ ॥

तस्या एषा भवति—

"स्योना पृथिवि भवानृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथः ॥" ( ऋ० १ । २२ । १५ )

सुखा नः पृथिवी भवानृक्षरा निवेशनी । ऋक्षरः कण्टक ऋच्छतेः, कण्टकः कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्याद् गतिकर्मणः–उद्गततमो भवति । यच्छ नः शर्म यच्छ * शरणं सर्वतः पृथु ॥

भा०—'पृथिवी' इति देवतापदम् । पृथिवी व्याख्याता "पृथिवी प्रथनाद् दर्शनेन पृथुः" ( निरु० १ । १३–१४ ) ।

मन्त्रार्थः—

हे पृथिवी ! त्वं स्योना सुखा सुखयित्री "स्योनं सुखनाम" (निघं ३ । ६) अनृक्षराऽकण्टका निवेशनी निवेशयित्री स्वस्मिन् निवासयित्री भव तथा नोऽस्मभ्यं सप्रथः सर्वतः पृथु विस्तृतं शरणं प्रयच्छ ॥

निरुक्तयः—'ऋक्षरः' "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" ( तुदादि० ) इन्द्रियप्रलयः–इन्द्रियनाशः–इन्द्रियपीडनमत्र गृह्यते, ततः "ऋच्छेररः" (उणा० ३ । १३१ ) छकारस्य क्षकारश्छान्दसः । कण्टकः पुनः कन्तपः स कम्–कमपि तापयति पीडयति, 'परन्तपः' इतिवत् खच्प्रत्ययान्तश्छान्दसः, कन्तपः सन् कण्टको वर्णव्यापत्त्या । यद्वा "कृती छेदने" ( रुधादि० ) ततो वुक् प्रत्यय औणादिकः "छन्दस्युभयथा" ( अष्टा० ३ । ४ । ११७ ) सार्वधातुकं मत्वा श्नम्, ऋकारस्य–अकारस्तकारस्य टकारश्च कण्टकः । 'अथवा कण्टतेर्गति-कर्मणः "कण्टति गतिकर्मा" ( निघं० २ । १४ ) "कटी गतौ" ( भ्वादि० )

---

* अनेकेषु हस्तलिखितपुस्तकेषु दुर्गाचार्यभाष्यमूलपाठे च 'यच्छन्तु' पाठः ।

स च रुधादिगणीयो मतो यास्केन पूर्ववत्—वनं वुक च प्रत्यय औणादिकः कण्टकः, स काण्डतः—उद्गततम उत्थिततमो भवति । 'सप्रथः' सर्वतः पृथु 'सर्वतः—उपपदात्' "प्रथ प्रख्याने" ( भ्वादि० ) "सर्वधातुभ्योऽसुन्" ( उणा० १ । १८९ ) 'सर्वतः' इत्यस्य सकारोऽवशिष्टः ॥

अप्वा ॥ २७ ॥

अप्वा व्याख्याता ॥ ३२ ॥

तस्या एषा भवति—

"अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥" ( ऋ० १० । १० । १२ )

अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्ताम् ॥

भा०—'अप्वा' इति देवतापदम् । साऽप्वा व्याख्याता "अप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा" ( निरु० ६ । १२ ) एतादृशी खल्वेषाऽप्वापि स्तोतव्या देवतात्वेन ? शत्रूणां प्रतीकाराय तु स्तोतव्या हि यथा कटुकमौषधं तु भक्षणीयं ज्वरप्रतीकाराय । तथाभूता खल्वोषधिरपि तु देवतात्वेन स्तुता हि पूर्वम् । अदेवतारूपेण भैषज्यदेवत्येऽथर्ववेदे यथा "हरिमाणं ते अङ्गेभ्योऽप्वामन्तरोदरात् । यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ॥" ( अथर्व० ९ । ८ । ९ ) "अमीषां चित्तं····" इति मन्त्रो व्याख्यातः ( निरु० अ० ६ । पा० ३ ख० १२ ) अनेकार्थपदप्रकरणे । सोऽत्रापि पुनरावर्त्यते—

हे अप्वे ! स्वास्थ्यादपक्षेपयितो व्याधे ! यद्वा शान्तितोऽपक्षेपक ! भय ! त्वं परेहि—इतः परागच्छ, अमीषां शत्रूणां चित्तं चित्तानि प्रज्ञानानि ज्ञानसाधनानि मनोबुद्धिचित्ताहङ्काराख्यान्यन्तःकरणानि प्रतिलोभयमाना प्रतिमोहयमाना त्वं तेषामङ्गानि गृहाण स्वप्रभावेण शिथिलानि कुरु तानभिप्रेहि तानभिप्राप्नुहि—अभिप्राप्य चैषां हृदयानि शोकैः सन्तापैर्निर्दह, पुनस्तेऽमित्राः शत्रवोऽन्धेन तमसा सचन्तां संसेव्यन्तां ग्रस्ता भवेयुः ॥

अग्नायी ॥ २८ ॥

अग्नाय्यग्नेः पत्नी ॥ ३३ ॥

तस्या एषा भवति—

"इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये।

अग्नायीं सोमपीतये॥" (ऋ० १।२२।१२)

इति सा निगदव्याख्याता॥ ३४॥

भा०—'अग्नायी' देवतापदम्। सा-अग्नायी खल्वग्नेः पत्नी, अग्निशब्दात् "वृषाकप्यग्निकुसीदानामुदात्तः" (अष्टा० ४।१।३७) इत्यनेन स्त्रियां ङीप् प्रत्यय ऐकारादेशश्च। अग्नायी साऽग्नेः सहचारिणी तेजःशक्तिः। यास्केनोक्तं यद्येषा निगदव्याख्याता देवतानां नामान्यत्रेति दृष्ट्या स्वयं स्पष्टाऽस्त्यृक्। तथापि-अध्ययनदृष्ट्या साऽर्थमपेक्षते, तस्मादर्थः क्रियते।

मन्त्रार्थः—

इह कर्मणि यत् खलु कर्म स्वस्तये सुसम्यगस्तित्वमविनाशित्वं स्थिरत्वं शरीरेन्द्रियाणां यस्मिन् तस्मै सुखाय बाह्यसुखाय "स्वस्तीत्यविनाशिनाम" (निरु० ३।२१) तस्मै स्वस्तये सुखाय क्रियमाणे कर्मणि व्यवहारेऽहमिन्द्राणीं वायोः सहचारिणीं श्वासयोग्यां धारां जीवनप्रदाम् "यो वै वायुः स इन्द्रः" (शत० ४।१।३।१९) तथा वरुणानीं वरुणस्य जलस्य सहचारिणीं मानसिकतापनिवृत्तिकरीं मधुरां बाष्पभूतां रसशक्तिम् "वरुणालयः समुद्रः" "आपो यच्च वृत्वाऽतिष्ठन् वरुण इत्याचक्षते" (गो० पू० १।७) उपह्वये स्वीकुर्वे सेवेय। अथ सोमपीतये सोमस्य शान्तरसस्यात्मिकैश्वर्यस्य च पीतिः पानं प्रापणं यस्मिन् तस्मै परमानन्दायाग्नायीमग्नेस्तेजोरूपां शक्तिमुपह्वये स्वीकुर्वे धारयेयम्। अत्र मन्त्रे-इन्द्राणी वरुणानी स्वस्तये देवते सोमपीतये देवता-अग्नायी। इन्द्राद् वरुणाच्च ङीष् स्त्रियाम् "इन्द्रवरुण····आनुक्" (अष्टा० ४।१।४९) आनुक् च भवति॥

इति नवमाध्याये तृतीयः पादः।

---

## चतुर्थः पादः

---

अथातोऽष्टौ द्वन्द्वानि।

उलूखलमुसले॥ २९॥

उलूखलं व्याख्यातम्। मुसलं मुहुः सरम्॥ ३५॥

तयोरेषा भवति—

"आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ।
हरी इवान्धांसि बप्सता ॥" ( ऋ० १ । २८ । ७ )
आयष्टव्ये अन्नानां सम्भक्ततमे ते ह्युच्चैर्विह्रियेते हरी इवा-
न्नानि भुञ्जाने ॥

भा०—इतः खल्वष्टौ द्वन्द्वानि यज्ञोपयोगीनि युगलभूतानि यज्ञोपकरणानि देवता पदान्युच्यन्ते । 'उलूखलमुसले' इति देवतापदं द्विवचनम्, तत्र—उलूखलं व्याख्यातम् ( निरु० ९ । २० ) मुसलं मुहुः सरम् । 'मुहुः' उपपदात् "सृ गतौ" ( भ्वादि० ) ततः "वृषादिभ्यश्चित्" ( उणा० १ । १०६ ) कलप्रत्ययो विहितोऽत्र बाहुलकात्—कलप्रत्ययः, 'मुहुः' इत्यस्य 'मु' शिष्टश्छान्दसः । मुसलं यन्मुहुः पुनः पुनः सरति गच्छति धान्यादिकं कुट्टयितुमुलूखलं प्रति । तयोर्मन्त्रः "आयजी वाजसातमा····।" यद्यपि मन्त्रे साक्षादुलूखलमुसले न विद्येते तथापि पूर्वमन्त्रेषु 'उलूखलसुतानाम्' ( १–४ ) तथानन्तरयोः पूर्वयोर्मन्त्रयोः 'उलूखलक युज्यसे' ( ५ ) 'सुनु सोममुलूखल' ( ६ ) साक्षादुलूखलशब्दः प्रयुक्तोऽस्ति देवतारूपेण । पुनरत्र प्रस्तुतमन्त्रे 'आयजी वाजसातमा····विजर्भृतः' द्विवचनप्रयोगात् प्रकृतमुलूखलं तत्सहचारि मुसलं चेति, अष्टमे च 'वनस्पती' काष्ठमयौ पदार्थौ—इत्युक्तम् । वस्तुद्वयमर्थादापद्यते ।

मन्त्रार्थः—

आयजी—आयष्टव्ये समन्तात् सङ्गमनीये—उपयोक्तव्ये वाजसातमौ वाजानामन्नानां सम्भक्ततमे सम्भजनीयमुपयुक्तं कुर्वाणे ते उच्चा—उच्चैर्विजर्भृतो विह्रियेते—उच्चैर्ध्वनिना—उत्क्षेपणगत्या वा विशेषेण पुनः पुनर्विहारं व्यवहारं कुरुतः, तौ उभे अन्धांसि—अन्नानि हरी इव—अश्वाविव बप्सतौ भुञ्जाने भक्षयन्तावश्वाविव विद्येते दृश्येते ।

निरुक्तः—'आयजी' "यज देवपूजासङ्गतिकरणदानेषु" ( भ्वादि० ) ततः सङ्गमनार्थे 'इः' प्रत्यय औणादिकः करणे । 'वाजसातमा' वाजसातमौ "वाजः—अन्ननाम" ( निघं० २ । ७ ) वाजशब्दोपपदात् "षण सम्भक्तौ" ( भ्वादि० ) ततः "जनसनखनक्रमगमो विट्" ( अष्टा० ३ । २ । ६७ ) पुनः "विड्वनोरनुनासिकस्यात्" ( अष्टा० ६ । ४ । ४१ ) । 'विजर्भृतः' विपूर्वकात् "हृञ् हरणे" ( भ्वादि० ) ततो यङ्लुकि तसि रूपम् । "रुग्रिकौ च लुकि" ( अष्टा० ७ । ४ । ९१ ) इति रुगागमोऽभ्यासस्य । "हृग्रहोर्भश्छन्दसि" वा० ( अष्टा० ३ । १ । ८४ वा० ) 'बप्सता' बप्सतौ 'भक्षभक्षणे' "भसथः—अत्तिकर्मा" ( निघं० २ । ८ ) तथा "बभस्ति—अत्तिकर्मा" (निरु० ५ । १२) ततो लटः शतृप्रत्ययः,

जुहोत्यादित्वात्–श्लुः "घसिभसोर्हलि च" ( अष्टा० ६ । ४ । १०० ) इत्युपधालोपः । "नाभ्यस्ताच्छतुः" ( अष्टा० ७ । १ । ७८ ) इति नुमभावश्च ॥

हविर्धाने ॥ ३० ॥

हविर्धाने हविषां निधाने ॥ ३६ ॥

तयोरेषा भवति—

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः ।

इहाद्य सोमपीतये ॥" ( ऋ० २ । ४१ । २१ )

आसीदन्तु वामुपस्थमुपस्थानमद्रोग्धव्ये इति वा, यज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय ॥

भा०—वक्तव्यम्—'हविर्धाने' इति पदं देवतावाचकं परन्तु तस्मिन् मन्त्रेऽन्यत्र वा क्वचिदपि वेदमन्त्रे न पठ्यते । ब्राह्मणग्रन्थेषु हविर्धाने द्वे शकटे मन्येते "हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहीत्याहाध्वर्युः····एते देवा अयुज्यत हविर्धाने" ( ऐत० प० १ । २९ ) तत्र सायणः "हविः सोमरूपं धत्तो धारयत इति हविर्धाने द्वे शकटे ।" "अथ यदस्मिन्त्सोमो भवति हविर्वै देवानां सोमस्तस्माद्धविर्धानं नाम" ( शत० ३ । ५ । ३ । २ ) एतदेव मत्वा यास्केन लिखितं यत् 'हविर्धाने हविषां निधाने' हवींषि ययोर्निधीयन्ते नितरां धीयन्ते निष्ठीयन्ते ते हविर्धाने पात्राकारे यत्र तत्र गमनयोग्ये शकटे । शकटयुगलमेकस्मिन् पिष्टः सोमरसोऽपरस्मिन्नपिष्टः सोमः । ऋग्वेदीयसर्वानुक्रमणिकायां १९–२१ त्रयाणां मन्त्राणां द्यावापृथिव्यौ यद्वा हविर्धाने देवते–इति मते "द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥" ( २० ) इति मन्त्रे तयोर्वर्तमानत्वात् तेऽग्रिमे प्रसिद्धदेवताके वा शब्देन कल्पयितुं शक्येते । यद्वा "आ वामुपस्थम्····देवाः सीदन्तु····सोमपीतये" तयोः समीमासादनमिति कथनेन न द्यावापृथिव्यौ सम्भवतः, अतो हविर्धाने वा । अत्र मन्त्रे पूर्वस्मिन्नपि मन्त्रे भवेताम्, यतः केचनाधिदैविकाः कथयन्ति "द्यावापृथिवी वै देवानां हविर्धाने आस्ताम्" ( ऐत० १ । २९ ) देवानां हविर्धाने द्यावापृथ्व्यौ तस्माद् हविर्धाने मन्त्रेऽपि द्यावापृथिव्यौ देवते । याज्ञिकाः कथयन्ति हविर्धाने शकटे हि यज्ञप्रसङ्गे द्यावापृथिव्यौ पूर्वस्मिन् मन्त्रेऽपि हविर्धाने देवते । एवमव्यवस्थितविकल्पे व्यवस्थितकल्पं ब्रवीति यदस्मिन् 'आ वामुपस्थ····' इति मन्त्रे हविर्धाने देवते, पूर्वस्मिन् 'द्यावा नः पृथिवी····' इति मन्त्रे द्यावापृथिव्यौ देवते स्तः, यथाऽग्रेऽनन्तरमेव वक्ष्यति सः ।

मन्त्रार्थः—

अधियज्ञे—हे हविर्धाने सोमस्य निधाने रक्षणस्थाने शकटे ! वा युवयोरुप-स्थानं समीपं पार्श्वस्थानमद्रोहा द्रोहरहिता यज्ञिया यज्ञसम्पादिनः—ऋत्विज इहास्मिन् सोमाभिषवकर्मणि—अद्य सम्प्रति सोमपीतये सोमपानायासीदन्तु—आसीदन्ति । युवां सोमरसं च रक्षितुमुपयुक्ते स्थः

अधिविद्ये—हे सोमस्य ज्ञानामृतस्य निधानभूतावध्यापकोपदेशकौ ! युवां ज्ञानवहनाय शकटे स्थः, युवामद्रोग्धारौ स्थः, युवयोरुपस्थमाश्रये ज्ञानयज्ञसम्पा-दिनो जना ज्ञानरसपानायेह प्रवचनस्थाने सम्प्रति—आसीदन्तु प्राप्नुवन्तु युवां चोपदिशतम् ॥

द्यावापृथिवी ॥ ३१ ॥

द्यावापृथिव्यौ व्याख्याते ॥ ३७ ॥

तयोरेषा भवति—

"द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।
यज्ञं देवेषु यच्छताम् ॥" ( ऋ० २ । ४१ । २० )

द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ॥

भा०—'द्यावापृथिवी' इति देवतायुगलम् । द्यावापृथिव्यौ "द्यौः द्योतनात्" (निरु० २।२०) "प्रथनात् पृथिवी" (निरु० १।१४) इति स्थलयोर्व्याख्याते । द्यावापृथिवीदेवत्या मन्त्रा अन्येऽनेके सन्ति परन्त्वत्र देवताया वैकल्पिकपक्षेण सन्दिग्धत्वात् सन्देहनिवृत्त्यर्थं तथा द्यावापृथिव्योर्गुणप्रदर्शनार्थं मन्त्र एष उपात्तः ।

मन्त्रार्थः—

द्यौः—सूर्यः पृथिवी चेमौ द्वौ—इमं सिध्रं सुखसाधनं होमयज्ञमद्य सम्प्रति दिविस्पृशम्—आकाशस्य स्पर्शकमाकाशव्यापिनं देवेषु समस्तदेवपदार्थेषु नियच्छताम् प्रापयताम् । पृथिवी देवता सूर्यो देवता च यज्ञं सम्पादयतः पृथिव्यां हूयते तत्रोत्तमैर्द्रव्यैः, हुतं यज्ञं सूर्येणाहूयते—आकृष्यते सर्वत्र प्रसारणाय स्वरश्मिबलैः । इत्यधियज्ञे । अथ द्यौः पिता पृथिवी माता "द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।" (ऋ० १।१६४।३३) गार्हस्थ्यं यज्ञं देवेषु देवसन्तानेषु तदुत्पादननिमित्तं दिविस्पृशमुच्चगृहस्थं द्युलोकप्रापकं साधनं संयतं कुरुताम् ।

'सिध्रम्' "षिधु संराद्धौ" ( दिवादि० ) ततः "....सिधिगृधिभ्यो रक्" ( उणा० २ । १३ ) इति रक् प्रत्ययः करणे ॥

विपाट्छुतुद्री ॥ ३२ ॥

विपाट्छुतुद्र्यौ व्याख्याते ॥ ३८ ॥

तयोरेषा भवति—

"प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने। गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥" ( ऋ० ३ । ३३ । १ )

पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा, विषण्णे इति वा, हासमाने हासतिस्पर्द्धायां हर्षमाणे वा, गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते ॥

भा०—'विपाट्छुतुद्री' इति देवते। विपाट्छुतुद्र्यौ व्याख्याते ( निरु० अ० ९ । ख० २६ ) 'विपाट्—विपाटनाद् वा विपाशनाद्वा, शुतुद्री शुद्राविणी।'

वक्तव्यम्—अत्र विपाट् तथा शुतुद्री नदीवाचके देवतापदे पूर्वं कृतव्याख्यानेऽत्र प्रसङ्गान्यत्वाद् विशिष्टाभिप्रायिके स्तः। ग्रन्थकाराणां समाचारो यद् व्याख्यातस्य पुनरावृत्तिर्विशिष्टार्था क्रियते तैः, अत्र यज्ञप्रसङ्गकान्यष्टौ द्वन्द्वान्युच्यन्ते तत्रैतेऽपि यज्ञेन सम्बध्येते द्वन्द्वत्वेन, अन्यच्चातः पूर्वं द्वन्द्वपदं द्यावापृथिव्यौ द्यौश्च पृथिवी च तथैवेमे विपाट् च शुतुद्री च द्वन्द्वम्। यज्ञाद् भवति पर्जन्यो मेघः, स च द्युपृष्ठे सम्पद्यते तदा द्युलोके द्युपृष्ठेऽभ्रधारा, अभ्रधारायाः स्थानं द्युपृष्ठम्, द्युपृष्ठस्था मेघधारा, तस्या विपाटनशीलत्वात् पाशबद्धस्येव जलस्य विपाशयितृशीलत्वात् सा मेघधारा द्युपृष्ठस्था विपाट्, तथा मेघवर्षणात् पृथिवीपृष्ठे पतिता प्रवहमाणा शुद्राविणी यद्वा शतधा द्राविणी जलधारा शुतुद्री—इति मन्तव्यम्। विपाट् पाशमोचनादित्यस्मिन् विषयेऽस्माभिः ( निरु० अ० ९ ख० २६ ) इत्यत्र स्पष्टीकृतमेव पुनस्तत्रैव द्रष्टव्यम्। आकाशे मेघधारा पृथिव्यां पतितो जलधारा देवतारूपेणापेक्ष्येते यज्ञस्याद्द्वन्द्वप्रसङ्गे हि ते निरुक्ते देवतात्वेन।

मन्त्रार्थः—

विपाट्—द्युपृष्ठस्थाऽभ्रधारा तथा पृथिवीपृष्ठगा वेगेन प्रवहमाणा जलधारा द्वे—एते प्रावृषि काले पर्वतानां मेघानां तथा गिरीणामुपस्थानात् "पर्वत मेघनाम" ( निघं० १ । १० ) पक्षे मेघार्थः पर्वतशब्दः। मेघानां वा" ( दुर्गाचार्यः ) उशती—उदकमावनाकं हितं कामयमाने इव—अश्वे इव वडवे इव गमनाय विषिते विमुक्ते 'षिञ् बन्धने' सिता बद्धा षिते बद्धे विषिते बन्धनरहिते विमुक्ते

सत्यौ यद्वा विषण्णे विशेषेण सन्ने समीपस्थे यद्वा विभक्ते वत्से शुके युगादौ हास-माने स्पर्द्धमाने हर्षमाणे वा, अथवा शोभने मातरौ गावा—इव गावाविव वत्सं वासस्थानं वत्समिव वा समुद्रं रिहाणे लेढुमिच्छन्त्यौ—अन्तर्गतसमर्थः पयसा जलेन वेगं प्राप्नुवत्यौ जलेन पूर्णे वेगेन गच्छतः ॥

आर्त्नी ॥ ३३ ॥

आर्त्नी अर्त्तन्यौ वारण्यौ वारिषण्यौ वा ॥ ३९ ॥

तयोरेषा भवति—

"ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृता-मुपस्थे । अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥" ( ऋ० ६ । ७५ । ४ )

ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्न-त्यावमित्रान् ॥

भा०—'आर्त्नी' इति देवतापदं सांग्रामिकोपकरणरूपं द्विवचनम् । आर्त्न्यौ खलु धनुष्कोटी धनुर्मुष्टी । 'अर्तन्यौ' 'ऋत गतौ' सौत्रो धातुः "ऋतेरीयङ्" ( अष्टा० ३।१।२९ ) ततो ल्युट् कर्तरि—अर्तनम्, स्त्रियां ङीप्—अर्तनी । 'अर्त' इत्यस्य 'आर्त्' भावो यद्वा पूर्वस्य वृद्धिस्तकारेऽकारलोपश्च छान्दसः । अर्तन्यौ—आर्त्न्यौ । यद्वा 'अरण्यौ' 'ऋ गतौ' धातोः 'रिष हिंसायाम्' धातोर्वा "घृणि-पृश्निपार्ष्णिचूर्णिभूर्णयः" ( उणा० ४ । ५२ ) इत्यत्र बाहुलकात्—निपातनप्रसङ्गे 'निः' प्रत्ययो नित् 'आर्त्' भावो निपातनात् ।

मन्त्रार्थः—

ते आर्त्न्यौ धनुष्कोटी धनुर्मुष्टी ज्याया आकर्षणे सति बाणं क्षेप्तुं समना—इव समानमनस्के योषे समागमाय—आचरन्त्यौ यथा तद्वत् 'समना' समानं मनो ययोस्ते, मनसः सकारलोपश्छान्दसः । यद्वा माता—इव मातरौ—इव पुत्रमुपस्थे निजाङ्के—आसङ्गे बिभृतां धारयेताम्, तद्वत् संविदाने एकमतिके भवन्त्यौ शत्रूनप-विध्यतां ताडयतां तान् खल्वमित्रान् विस्फुरन्त्यौ विशेषेण घ्नन्त्यौ भवेताम् । "स्फुरति वधकर्मा" ( निघं० २ । १९ ) ॥

शुनासीरौ ॥ ३४ ॥

शुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे, सीर आदित्यः सरणात् ॥ ४० ॥

तयोरेषा भवति—

"शुनासीराविमं वाचं जुषेथां यद्दिवि चक्रथुः पयः।
तेनेमामुप सिञ्चतम् ॥" ( ऋ० ४ । ५७ । ५ )

इति सा निगदव्याख्याता ॥

भा०—'शुनासीरौ' इति देवतायुगलम् । शुनश्च सीरश्च शुनासीरौ "देवताद्वन्द्वे च" ( अष्टा० ६ । ३ । २६ ) इति 'अनङ्' पूर्वपदस्यादेशः । 'शुनो वायुः' यतः शु क्षिप्रमन्तरिक्षे—एति 'एति' अत्र स्वयमेति स्वभिन्नान् पदार्थांश्च गमयति नयतीत्यर्थः । 'शु' उपपदात्—नीधातोः "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इति डः प्रत्ययः शुनः । सीर आदित्यः, 'सरणात्' इति धातुनिर्देशः, स्वरश्मिभिः सरति सारयति चान्यान् दिवि देवान् । 'सृ गतौ' ततः "गभीरगम्भीरौ" ( उणा० ४ । ३५ ) ईरन्प्रत्ययान्तनिपातनप्रसङ्गे बाहुलकात् 'सीरः' निपातः कल्पनीयः, निपातनाट्टिलोपः ।

मन्त्रार्थः—

हे शुनासीरौ वायो आदित्य च देवौ ! युवामिमां वाचं यज्ञे प्रवर्तितां मन्त्रवाचं सेवेथां यद् दिवि—आकाशे पय उदकं चक्रथुर्यज्ञप्रयोगेण सम्पादितवन्तौ तेनोदकेनेमां पृथिवीं सिञ्चतम् । वृष्टिजलस्य सम्पादकौ देवौ वायुसूर्यौ तस्मात् तयोर्देवत्वम् ॥

देवीजोष्ट्री ॥ ३५ ॥

देवीजोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वाहोरात्रे इति वा । शस्य च समा चेति कात्थक्यः ॥ ४१ ॥

तयोरेष सम्प्रैषो भवति—

"देवी जोष्ट्री वसुधिती * ययोरन्याघा द्वेषांसि यूयवदान्या वक्षद् वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥" ( मैत्रायणी सं० ४ । १३ । ८, काठक सं० १९ । १३–प्रैषाध्याये )

---

* 'वसुधीती' दुर्गस्कन्दभाष्ययोस्तन्मूले च पाठ उपलभ्यते परन्तु काठकमैत्रायणिसंहितयोः 'वसुधिती' इति पाठः । वेदेऽन्यत्र मन्त्रेषु 'वसुधिती' इति पाठ एवोपलभ्यते, यथा—"अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ।" (ऋ० १ । १८१ । १)

देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधिती वसुधान्यौ ययोर-न्याघानि द्वेषांस्यवयावयत्यावहत्यन्या वसूनि वननीयानि* यजमानाय वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा, यजेति सम्प्रैषः ॥

भा०—'देवीजोष्ट्री' इति देवतायुगलम् । देव्यौ जोष्ट्र्यौ जोषयित्र्यौ तौ द्यावापृथिव्यौ स्तो यद्वाऽहोरात्रे स्तो यद्वा शस्यं च समा च । शस्यं क्षेत्रे पक्वकल्पमन्नं समा तत्रैवापक्वा हरिता कृषिः । कृषेराश्रितो वर्षानन्तरं संवत्सरभाग ऋतुः कृषिरूप ऋतुः । लोकेऽस्यत्वे 'समा—फसल' इति शोभनो जात इत्युच्यते । वेदेऽपि यथा पर्जन्यं मेघं प्रति "अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥" (ऋ० ५ । ८३ । ७) समाः शस्याङ्कुरा उद्वता उद्गता निपादाः—नीचैर्मूला भवन्तु तथा मेघ ! त्वं वृष्टिं कुरु 'दिवो नो वृष्टिं मरुतो ररीध्वम्' इति पूर्व-मन्त्रतः । 'देवी जोष्ट्री'—'शस्यं समा' च इति कात्थक्यो मन्यते ।

मन्त्रार्थः—

देव्यौ जोष्ट्र्यौ जोषयित्र्यौ मनुष्याय कल्याणं सेवयित्र्यौ प्रापयित्र्यौ द्यावा-पृथिव्यौ यद्वाऽहोरात्रेऽथवा शस्यसमे वसुधान्यौ देव्यौ वसूनां निधाने स्तः । ययो-रन्या खल्वेका व्यक्तिः—अघानि पापानि स्वकीयपापानि द्वेषांसि द्वेषकराणि वस्तूनि पृथक्—अवयावयति—पृथक् करोति नाशयति सा प्रथमा द्यौर्द्योतनात्मकः सूर्यो यद्वा दिवसोऽथवा शस्यम् । सूर्यः पापानि रोगान्धकारादीन् हन्ति, दिवसोऽ-सावधानत्वालस्यापहारकानपाकरोति, शस्यं खलु क्षुधमस्वास्थ्यं दारिद्र्यं च हन्ति । अन्या पृथिवी रात्रिः समा वा वसूनि वासनिमित्तानि वार्याणि वननी-यानि वरणीयानि—आवक्षत्—आवहति समन्तात् प्रापयति । पृथिवी विविध-भोजनाच्छादनानि धनानि रत्नानि आवहति प्रापयति, रात्रिः शरीरे मनसि च स्वास्थ्यविरामारामशान्तिसौम्यभावान् प्रापयति, समा नवीना हरिता कृषिः—नव-जाता तरुश्रेणिर्नेत्रज्योतिःसौमनस्यजीवनशक्तिदीर्घायुष्ट्वानि प्रापयति । एवमुभे यजमानाय यजनशीलाय यजनशीलस्य मनुष्यस्य वसुवने वसुवननाय धनसम्भ-जनाय धनप्राप्तये वसुधानाय धनाधानाय च वीतां हव्यं पिबेतां यद्वा कामये-तामिति हेतोर्हे होतर्यजेति सम्प्रैषः सम्प्रेरणमेतत् ।

---

* 'वरणीयानि' इति पाठः क्वचित् ।

निरुक्तम्:—'देवी' दिव्धातोः पचाद्यचि देवट् निपातनात्–टित्वात्–टिड्ढाणञ्–ङीप् प्रत्ययः स्त्रियाम्–देवी । 'जोष्ट्री' "जुषी प्रीतिसेवनयोः" (तुदादि० ) ततः "सर्वधातुभ्यः ष्ट्रन्" ( उणा० ४ । १५९ ) षिल्लक्षणो ङीष् स्त्रियाम् "षिद्गौरादिभ्यश्च" ( अष्टा० ४ । १ । ४१ ) 'यूयवत्' "यु मिश्रणे अमिश्रणे च" ( अदादि० ) अमिश्रणेऽत्र णिजन्ताच्चङि लुङि छान्दसोऽडभावः । "बहुलं छन्दस्यमाङ्योगेऽपि" (अष्टा० ६ । ४ । ७५) सामान्यकाले, पावयति । वसूनि वनतीति क्विप्प्रत्ययान्तः–वसुवन् चतुर्थ्यां वसुवने ॥

देवी ऊर्जाहुती ॥ ३६ ॥

देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यौ द्यावापृथिव्याविति वाहो-रात्रे इति वा शस्यं च समा चेति कात्थक्यः ॥ ४२ ॥

तयोरेष सम्प्रैषो भवति—

"देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् सग्धिं सपीति-मन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥" ( मैत्रायणी सं० ४ । १३ । ८, काठक सं० १९ । १३ )

देवी ऊर्जाहुती देव्या ऊर्जाह्वान्यावन्नं * च रसञ्चावह-त्यावहत्यन्याः सहजग्धिं च सहपीतिं चान्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जय-माने अधातां वसुवननाय च वसुधानाय च वीतां पिबेतां कामयेतां वा । यजेति सम्प्रैषो यजेति सम्प्रैषः ॥ ४३ ॥

भा०—'देवी ऊर्जाहुती' इति देवतापदं द्विवचनम् । देव्यौ–ऊर्जाह्वान्यौ–'ऊर्ग्' इत्यन्नरसौ तयोः–आह्वानसाधनभूते । द्यावापृथिव्यौ यद्वाऽहोरात्रे च । शस्यं च समा चेति कात्थक्यमते ।

देव्यौ–ऊर्जाहुत्यौ स्तः–द्यावापृथिव्यौ यद्वाऽहोरात्रेऽथवा शस्यं समा च । तयोरेका द्यौः सूर्योऽस्मदर्थमिषमन्नम् "इषम्–अन्ननाम" (निघं० २ । ७ ऊर्जं रसम् "ऊर्ग् वै रसः" ( शत० ५ । १ । २ । ८ ) आवक्षत्–आवहति प्राप-यति स्वकिरणैः पृथिवीतस्तथा दिवसोऽपि तथैव क्षेत्रेऽन्नं रसं सम्पादयति । शस्यं

* 'इषम्' इति क्वचित्, पाठः स न शोभनः ।

तु भक्षणेन शरीरेऽन्नम्—अन्नभागं पुष्टिं रसं रसभागं जीवनरसं रक्तं प्रापयति। अन्या द्वितीया व्यक्तिः सग्धिं सहजग्धिं सहभोजनं सपीतिं सहपीतिं सहपानम्—आवहति प्रापयति पृथिवी कर्षणात् खल्वन्नं सह भोजयति रसं च सह पाययति तथैव रात्रिश्च श्रमनिवारणाद्भुक्तं पीतं सात्म्यरूपेण शरीरे सहभोजयति रसं सह पाययति। समा च स्वयं रसवत्त्वाद् रसपानेन सहैवान्नं भोजयति क्षुधं निवर्तयति रसञ्च सह पाययति पिपासां निवर्तयति। एवं नवेन प्राप्तेनोर्जाऽन्नेन पूर्वं बीजं बीजरूपे दधमाना रक्षन्तः स्याम पुराणेनान्नेन बीजेन क्षेत्रे बीजवपनेन नवमन्नं रक्षन्तः सम्पादयन्त उत्पादयन्तः स्याम। एवमूर्जाहुत्यौ—ऊर्जयमानेऽन्नं रसं बलं कुर्वत्यौ खल्वरमान—अधारयताम्, अग्रे पूर्ववत्। यजेति सम्प्रैषः सम्प्रेरणम्॥

इति नवमाध्यायस्य चतुर्थः पादः।

समाप्तश्च नवमोऽध्यायः॥

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

— —

# दशमोऽध्यायः

## तत्र

## प्रथमः पादः

---

अथातो मध्यस्थाना देवताः ।

तासां वायुः प्रथमागामी भवति ।

वायुः ॥ १ ॥

वायुर्वातेर्वेतेर्वा स्यात् गतिकर्मणः, एतेरिति स्थौलाष्ठीविः, अनर्थको वकारः ॥ १ ॥

तस्यैषा भवति—

"वायवा याहि दर्शतेमे सोमा अरङ्कृताः ।
तेषां पाहि श्रुधी हवम् ॥" ( ऋ० १ । २ । १ )

वायवायाहि दर्शनीयेमे सोमा अरङ्कृता अलङ्कृतास्तेषां पिब शृणु नो ह्वानमिति । कमन्यं मध्यमादेवमवक्ष्यत् ॥ २ ॥

भा०—अथेदानीमतः समाम्नायक्रमेण पृथिवीस्थानदेवतानां व्याख्यानानन्तरं मध्यस्थानाः—अन्तरिक्षस्थाना देवता अनुक्रम्यन्ते । तासां वायुः प्रथमं सम्मुखमागच्छति व्याख्यातुं देवतात्वेन परिभाषितुं वर्णयितुं पाठक्रमदृष्ट्याऽथ मध्यस्थानदेवतासु तस्य प्राधान्येन च । अथ वायुः शब्दः "वा गतिगन्धनयोः" ( अदादि० ) इत्यतः "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" ( उणा० १ । १ ) उण् प्रत्ययः "आतो युक् चिण्कृतोः" ( अष्टा० ७ । ३ । ३३ ) यद्वा "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" ( अदादि० ) इत्यतः स एव 'उण्' धातोर्बाहुलकात् । स्थौलाष्ठीविपक्षे "इण् गतौ" ( अदादि० ) ततः "छन्दसीणः—उण्" ( उणादि० १ । २ ) अनर्थको वकारोपजनः य आयुः—अयनो गमनशीलः स वायुः ।

वक्तव्यम्—'वायुः' देवतात्वेन—अदेवतात्वेन च मन्त्रेषु बहुत्र पठितः । अदेवतात्वेन यथा—"तिष्ठा हरी रथ आयुज्यमाना याहि वायुर्न नियुतो नो अच्छ ॥" ( ऋ० ३ । ३५ । १ ) इन्द्रदेवत्ये—उपमायाम् । "अश्विना वायुना

युवं सुदक्षा नियुत्मिश्च सजोषसा युवाना।" (ऋ० २।५८।७) आश्विने सूक्ते नामधेयेन प्रयुक्तः। यास्केन वायुदेवत्यो मन्त्र एतादृश उदाहृतो यत्र वायुगुणाः सम्यक् परिभाव्यन्ते।

मन्त्रार्थः—

हे दर्शत! द्रष्टव्य न तु दृष्ट किन्तु दर्शने वाञ्छनीय ज्ञानदृष्ट्या दर्शनपात्र! वायो! गतिशील देव! आ याहि—आगच्छ, समन्ताद्बल प्रवाहितो भव, इमे सोमा इमा ओषधयः कृषिभूमेरङ्कुरिताः, होमयज्ञादुद्भूताः, अरङ्कृताः—अलङ्कृताः सुसम्पन्नाः सन्ति तेषां तान् पाहि पिब—आदत्स्व स्वकीयस्पर्शशक्तौ धारय यतस्ताः प्रवृद्धाः प्रसृता भवेयुः, नोऽस्माकं हवं ह्वानं शब्दं श्रृणु स्वकीयगमनशक्तौ धारयान्यान् प्रति नय, अन्येषां शब्दमस्मान् प्रति चानय। इत्याधिदैविकदृष्ट्यावर्थः।

अध्यात्मिकदृष्टौ—हे दर्शत! द्रष्टव्य! दर्शने वाञ्छनीय! अध्यात्मयोगेन ध्यानयोगेन च द्रष्टव्य! "आत्मा वा अरे द्रष्टव्यः" (बृहदा० २।४।५) वायो वायुस्वरूप! ममान्तरे गमनशील परमात्मदेव! त्वमायाहि प्राप्तो भव, इमे सोमाः स्तुतिप्रार्थनोपासनारसा हावभावरूपा अरङ्कृता योगाभ्यासेन सम्पादिताः सन्ति तान् पिब स्वीकुरु, नोऽस्माकं हवं ह्वानं निवेदनमस्मदीयकल्याणकरं श्रृणु स्वीकुरु। वायुर्महाभाग्यवती देवता परमात्मा।

"वायवा याहि०' इति मन्त्रे 'कमन्यं मध्यमादेवमवक्ष्यत्' मध्यमाद् वायोर्भिन्नं कं देवमेवमवक्ष्यदृषिः, न वायुभिन्नं किन्तु वायुमेवोक्तवान् वायुरेवास्मिन् मन्त्रे देवता नान्यो यस्य वायुरिति विशेषणं नाम स्यात्। एतद् यास्कवचनं दुर्गस्कन्दाभ्यामन्यथा व्याख्यातं ताभ्यां वायुरिन्द्रो मध्यमशब्देन गृहीत इति व्याख्यातम्, तन्न युक्तं यतोऽनन्तरं हि सन्दिग्धं मन्त्रं यास्क उदाहरति यस्मिन् वायुर्देवता यद्वा—इन्द्रो देवता सन्दिह्यते। ऋग्वेदीयसर्वानुक्रमण्यां पूर्वस्य तृचस्य देवता वायुरेवोक्ता। तदग्रेऽपरस्य तृचस्य 'इन्द्रवायू' देवते दर्शिते। सोमपानमग्रे वायोश्चोच्यते मन्त्रेषु, यद्वा "विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना। पिबा मित्रस्य धामभिः॥" (ऋ० १।१४।१०) तेन स्पष्टं हि सिद्धमेतद् यत् "वायवा याहि०' मन्त्रे वायुरेव मध्यमशब्देनोक्तः॥

तस्यैषापरा भवति—

"आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः। अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत्॥" (ऋ० ६।३७।३)

आससृवांसोऽभिबलायमानमिन्द्रं कल्याणचक्रे रथे योगाय रथ्या अश्वा रथस्य वोढार ऋज्यन्त ऋजुगामिनोऽन्नमभिवहेयुर्नवं च पुराणं च। श्रव इत्यन्ननाम श्रूयत इति सतः। वायोश्चास्य भक्षो यथा न विदस्येदिति। इन्द्रप्रधानेत्येके नैघण्टुकं वायुकर्मोभयप्रधानेत्यपरम् ॥

मन्त्रार्थः—

भा०—सुचक्रे कल्याणचक्रे शोभनचक्रवति रथे योगाय योजनाय रथ्या रथयोग्या रथस्य वोढारोऽश्वाः-आसस्राणा आससृवांसः समन्तात् सर्वत्र गतिं कुर्वाणा-ऋज्यन्त ऋजुगामिनः शवसानं बलायमानमिन्द्रमभि श्रवमन्नं सोमरूपं नू चित्-नवं च पुराणं च क्षेत्रेषु—आमं च पक्वं च यद्वा—अहुतं च हुतं च वायोः—वायोः सकाशादभिवहेयुः "वायुः सोमस्य रक्षिता" (निरु० ११।५) यथा न विदस्येद् विनश्येद् यतो ह्येतत् सोमरूपममृतमन्नमस्य वायोर्भक्षः पूर्वं वायुर्भक्षयति गृह्णाति सोमं तद्द्वारा पश्चात् खल्विन्द्रस्यान्नं भवति। इन्द्रोऽत्र सूर्यः स सोमस्योषधिमात्रस्य रसमादत्ते परन्तु ततः पूर्वं वायुर्गृह्णाति रसं वहति हि वायुः सर्वैरेतदनुभूयते हरितस्थाने भ्रमणेन। यदि त्विन्द्रस्य सूर्यस्य रश्मयो रसं न गृह्णीयुस्तर्हि वायुरेव भक्षयिष्यति वायौ शोषमेष्यति।

एवमत्र मन्त्रे देवताद्वयस्य कर्मागतं तेन केचनाचार्या मन्त्र एष इन्द्रप्रधान इति मन्यन्ते, वायुकर्म नैघण्टुकं गौणं तेन वायुर्नैघण्टुकी देवता, इन्द्रो मुख्यः। केचन तूभयप्रधानो मन्त्र इति मन्यन्ते यतः सोमस्य द्वाभ्यां सह सम्बन्धोऽस्ति यतोऽनेकत्र वायोरपि सोमपानमुक्तम्। इत्येव यास्कमतम्।

निरुक्तयः—'आसस्राणाः' आङ्पूर्वात् 'सृ गतौ' ततः कानच्। 'शवसान' "शवस् बलनाम' (निघं० २।९) ततस्तत्करोति—इत्यर्थे क्विप् 'शवस्' इत्यस्य धातुत्वं पश्चात् 'शानच्' शवसानः। 'ऋज्यन्तः' "ऋज गतौ" (भ्वादि०) अत्र 'ऋजु गतौ' व्यत्ययेन श्यन् च पुनः शतृप्रत्ययः, ऋज्यन्तः—ऋजुगामिनः। "नू चित् पुराणनवयोः" (निरु० ४।१७)॥

वरुणः॥ २॥

वरुणो वृणोतीति सतः॥ ३॥

तस्यैषा भवति—

"नीचीनबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम॥" (ऋ० ५।८५।३)

नीचीनद्वारं वरुणः कबन्धं मेघम् । कवनमुदकं भवति तदस्मिन् धीयते, उदकमपि कबन्धमुच्यते बन्धिरनिभृतत्वे, कमनिभृतं च प्रसृजति, द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन, तेन सवस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् ॥ ४ ॥

भा०—'वरुणः' इति देवतापदम् । वृणोति हि स आकाशम् । "वृञ् वरणे' ( स्वादि० ) ततः "कृवृदारिभ्य उनन्" ( उणा० ३ । ५३ ) सूक्ष्म-जलयुक्तो वायुर्वृष्टिं यः प्रेरयति—आकाशं वृत्वा च तिष्ठति स वरुणः, यद्वा सर्वं जगद् वृणोति परमात्मा । तस्य मन्त्र "नीचीनवारं वरुणः····" ।

मन्त्रार्थः—

वरुणो देवः सूक्ष्मजलयुक्तो वायुः (Electrification of clouds by induction) नीचीनवारं नीचैर्द्वारमधोमुखं बिलं यस्य तथाभूतमधोमुखबिलं कृत्वा कबन्धं मेघमुदकधानं प्रससर्ज प्रसृजति प्रसारयति रोदसी द्यावापृथिव्यौ तथान्तरिक्षं प्रति । तेन विश्वस्य भुवनस्य सर्वस्योदकस्य "भुवनमुदकनाम" ( निघं० १ । १२ ) राजा स्वामी तेन महत्त्वेन मध्यमे स्थाने स्थितः सूर्यमा-च्छादयति क्षेत्रे धान्यबीजमिव विकिरति क्षिपति सामर्थ्याज्जलवृष्टिम् । सा च वृष्टिर्भूम भूमिं व्युनत्ति क्लेदयति । इति वर्षकर्म वरुणस्य कार्यम् ।

अदेवतात्वेन वरुणः—"प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ( ऋ० १ । ४० । ५ ) इति बृहस्पतिदेवत्ये सूक्ते ।

निरुक्तयः—'कबन्धम्' कवनं तदुदकमस्मिन् धीयते—इति कबन्धं मेघः । 'कवन' इत्युपपदाद् धा धातोः कः प्रत्यय औणादिकोऽधिकरणे । 'कवन' इत्यस्यान्तलोपश्च । कबन्धं मेघः । यद्वा कमुदकं तत् 'कम्' उपपदाद् बन्ध-धातोः पचाद्यच् । बन्धधातुरत्र—अनिभृतत्वेऽसूक्ष्मीकरणे स्थूलीकरणे, कमनिभृतं कं जलं स्थूलं प्रसृजति ॥

तस्यैषाऽपरा भवति—

"तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा
स मध्यमो नभन्तामन्यके समे ॥" ( ऋ० ८।४१।२ )

तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव यः स्यन्दमानानामासामपामुपोदये, सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । 'नभन्तामन्यके समे' । मा भूवन्नन्यके सर्व ये नो द्विषन्ति दुर्धियः पापधियः पापसङ्कल्पाः ॥

भा०—तस्य वरुणस्यायमन्यो मन्त्रः "तमू षु समना...." अस्ति ।

मन्त्रार्थः—

सिन्धूनां स्यन्दमानानामासामन्तरिक्षस्थानामपामुपोदये वृष्टिरूपेणोद्गमने-उपसरणे प्रकटीभावे प्रादुर्भावे वा यः सप्तस्वसा सप्तभिर्वाग्भिर्मध्यस्थानाभिर्विद्युद्धाराभिः सगर्जनाभिः स्वसृभूताभिः "वाताय कपिला विद्युदातपायातिलोहिनी...." ( महाभाष्य व्या० २ । ३ । १३ ) इत्याद्याभिः सह स सप्तस्वसा वरुणः पूर्वमन्त्रोक्तोऽनुवर्तते तं वृष्टेः प्रेरकं सूक्ष्मजलयुक्तं वायुमाकाशस्यावरकं वरुणं समना समानया मेघवर्षणनिमित्तभूतया योग्यया तद्विज्ञानसमकक्षया गिरा स्तुत्या गीत्या—उच्चारणक्रियया तथा पितॄणामृतूनां च मन्मभिर्मननीयैः स्तोमैः स्तुत्यैः प्रशस्तैः सिद्धान्तैर्मेघवर्षणे साधनभूतैः "ऋतवो वै पितरः" ( शत० २।४।१।३२ ) तथा नाभाकस्य मेघावृतस्याकाशस्य यः सम्पादकस्तस्य वायोर्वरुणसंज्ञकस्य प्रशस्तिभिः प्रशस्तक्रियाभिरनुष्ठानं यज्ञस्य वृष्टिविज्ञानस्य वा करोमि । एवमनुष्ठानं करोमि—एवं च वृष्टिर्भवेद् यदन्ये समे सर्वे नभन्तां न भवेयुः—न दृश्येरन् ये दुर्धियः पापधियः पापसङ्कल्पा अस्मान् द्विषन्ति कृमिकीटाश्चोरादयो वा मेघवर्षणेन दारिद्र्यनाशात् ।

अत्र 'ऋषिर्नाभाको बभूव' इति वचनं साम्प्रतकाले यथा पूर्वम् "च्यवन ऋषिर्भवति च्यावयिता स्तोमानाम्" ( निरु० ४ । १९ ) नाभाकः "नभते वधकर्मा" ( निघ० २ । १९ ) ततः "बलाकादयश्च" ( उणा० ४ । १४ ) बाहुलकात् 'आकः' प्रत्ययः, निपातनादुपधादीर्घः । स मेघयुक्तवायुर्वरुणो यो वृष्ट्या दुर्भिक्षं हिंसककृमीन् पापधींश्च हन्ति । 'मन्म' इति मनधातोः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) मनिन्, मन्मन्—मन्म ॥

रुद्रः ॥ ३ ॥

रुद्रो रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा,

"यदरुदत् * तद्रुद्रस्य रुद्रत्वम्" ( काठक० २५ । १ ) इति काठकम् । "यदरोदीत् † तद्रुद्रस्य रुद्रत्वम्" ( तै० सं० १ । ५ । १ । १ ) इति हारिद्रविकम् ॥ ५ ॥

तस्यैषा भवति—

"इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाढाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥" ( ऋ० ७ । ४६ । १ )

इमा रुद्राय दृढधन्वने गिरः क्षिप्रेषवे देवायान्नवतेऽषाढायान्यैः सहमानाय विधात्रे तिग्मायुधाय भरत शृणोतु नः । तिग्म तेजतेरुत्साहकर्मणः । आयुधमायोधनात् ॥६॥

भा०—'रुद्रः' इति देवतापदम् । स च रुद्रो मध्यस्थानः, रौति शब्दयति स्तनयित्नुरूपं शब्दं करोति मेघे वर्तमानः "रु शब्दे" ( अदादि० ) ततः "रोदेर्णिलुक् च–रक्" ( उणा० २ । २२ ) धातोर्बाहुलकात् 'रक्' प्रत्ययः पित्धर्मः— 'रुप्' अतो धातोस्तुक् । द्रक् प्रत्ययो वा, रुद्रः । यद्वा रोरूयमाणो द्रवति भृशं शब्दयन् मेघे द्रवति 'रु शब्दे' ततोऽन्तर्गतयङर्थात् क्विप् 'रुत्' पूर्वपदात् "द्रु गतौ" ( भ्वादि० ) ततः "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) इति डः प्रत्ययः । 'रुद् द्रः' एकस्य दकारस्य लोपश्च रुद्रः । अथवा रोदयति यः शत्रुं स रुद्रः, अत्र प्रसङ्गे वृत्रं मेघं रोदयति ताडनाद् गर्जनात् "रुदिर् अश्रुविमोचने" ( अदादि० ) ततो णिजन्तात् "रोदेर्णिलुक् च–रक्" ( उणा० २ । २२ ) रक् प्रत्ययः । काठके शाखासम्प्रदाये 'अरुदत्, लङि हारिद्रविके शाखासम्प्रदाये अरोदीत्' इति लङि प्रयोगाद् यो रुदितवान् रोदितिति स रुद्रः ।

रुद्रो देवतात्वेनादेवतात्वेन बहुषु मन्त्रेषूपलभ्यते । तत्रादेवतात्वेन यथा— "त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ( ऋ० २ । १ । ६ ) अग्निदेवत्ये तद्विशेषणरूपेण । "न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।" ( ऋ० २ । ३८ । ९ ) सवितृदेवत्ये । "रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ।" ( ऋ० २ । ३४ । २ ) मरुद्देवत्ये तदधीनत्वप्रदर्शनाय ।

---

* 'समरुजत्' इति पाठो मुद्रिते काठके–उपलभ्यते सोऽशुद्धः स्यात् ।

† 'सोऽरोदीत्' इति पाठः ।

मन्त्रार्थः—

स्थिरधन्वने स्थिरं दृढं धन्व धनुर्यस्य तस्मै क्षिप्रेषवे क्षिप्रं प्रहरणशीला इषवो यस्य तस्मै स्वधाम्नेऽवतेऽषाढायान्यैरसह्याय सहमानाय स्वयं सहने समर्थाय तिग्मायुधाय तीक्ष्णशस्त्राय विधात्रे दृष्टिद्वारेण प्राणिभोगस्य सम्पादयित्रे रुद्राय प्रतिद्वन्द्विनो रोदयित्रे स्वयं गर्जनशीलाय मध्यस्थानस्थाय रुद्रनाम्ने (High vottage currents in clouds) वृष्टिनिमित्तभूताय वायुविशेषाय हे विद्वांसः! इमा गिरः स्तुतीः वृष्टिनिमित्तीभूताः—वाणीर्विज्ञानरूपाः—भरत सम्पादयत यतः स दृष्टो नस्ता गिरः शृणोतु शृणुयात् स्वीकुर्याद् वृष्टिं प्रेरयेत्। एतद्वर्णनमालङ्कारिकं तद्रूपमनुष्यैर्योद्धृभिर्भवितव्यं यतो हि मनुष्यवद्देवताभिधानमेतद् वर्णनानुरूपं मनुष्यैर्भवितव्यम्।

निरुक्तयः—'तिग्मायुधाय' तिज उत्साहार्थात्' "युजिरुचितिजां कुश्च—मक्" (उणा० १। १४६)। 'आयुधम्' आयोधनात्, आङ्पूर्वाद् युधधातोः "घजर्थे कविधानम्" इति कः प्रत्ययः करणे॥

तस्यैषाऽपरा भवति—

"या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः। सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः॥ (ऋ० ७। ४६। ३)

या ते दिद्युदवसृष्टा दिवस्परि दिवोऽधि। दिद्युद् द्यतेर्वा द्युतेर्वा द्योततेर्वा। क्ष्मया चरति क्ष्मा पृथिवी तस्यां चरति तया चरति विक्ष्मापयन्ती चरतीति वा, परिवृणक्तु नः सा सहस्रं ते स्वाप्तवचन भैषज्यानि मा नस्त्वं पुत्रेषु च पौत्रेषु च रीरिषः। तोकं तुद्यतेः। तनयं तनोतेः॥

मन्त्रार्थः—

भा०—हे स्वपिवात! स्वाप्तवचन! सु सम्यक् प्राप्तघोष! तव या दिद्युत्—मेघच्छेदनी दीप्तिर्दीप्यमाना हेतिर्वज्ररूपा "दिद्युत्—वज्रनाम" (निघं० २। २०) दिवस्परि दिवोऽधि मध्यस्थाने मेघताडनायावसृष्टा त्वया क्षिप्ता सा क्ष्मया पृथिव्या सह सङ्गता चरति यद्वा पृथिव्यां चरति प्रहरति "क्ष्मा पृथिवीनाम" (निघं० १। १) अस्मिन् पक्षे 'क्ष्मया' सप्तम्यां याच् प्रत्ययः "सुपां सुलुक्-पूर्वसवर्णाच्छेयाडाड्यायाजालः" (अष्टा० ७। १। ३९) 'क्ष्मया' प्रथमैकवचनं वा 'विक्ष्मापयन्ती दिद्युत्' विधूनयन्ती कम्पयन्ती ताडयन्ती घ्नती वा

प्राणिनश्चरति "क्षमायी विधूनने" ( भ्वादि० ) स्म नोऽस्मान् परिवृणक्तु परिवर्जयतु नोऽस्माकं पुत्रेषु पौत्रेषु पुत्रान् पौत्रान् वा मा रीरिषः—न हिंस्याः किन्तु तव सहस्रं बहुविधानि भेषजा जलानि "भेषजम्—उदकनाम" ( निघं० १।१२ ) भैषज्यानि वा वृष्टिजलानि भवन्तु ।

अन्तरिक्षस्थाने मध्यस्थाने वा गर्जनशब्दकरणं मेघानां ताडनं नीचैः क्षेपणं प्रेरणं विद्युत्प्रहारश्च रुद्रस्य कार्यम्, रुद्रः खलु स्तनयित्नुकरणमेघताडनविद्युत्पातनधर्मवान् वायुविशेषः । संग्रामे योद्धृभिस्तथैव भवितव्यम्, तथाविधोऽर्थोऽप्याधिभौतिकदृष्ट्या मन्तव्यः ।

निरुक्तयः—'दिद्युत्' "दो अवखण्डने" (दिवादि०) ततः "क्विब् वचि प्रच्छि" (उणा० २।५८) इति क्विप् प्रत्ययो धातोर्बहुलात्, तथा "द्रुवः श्लुवच्च" (उणा० २।६१) इति श्लुवच्च कार्यं बाहुलकात् । आकारस्य स्थाने—इकारः "द्यतिस्यतिमास्थामित् ति किति" ( अष्टा० ७।४।४० ) अति किति खल्वपि छान्दसः 'उक्' आगमश्च धातोश्छान्दस एव पुनः "ह्रस्वस्य पिति कृति तुक्" (अष्टा० ६।१।६९) दिद्युत् । यद्वा "द्यु अभिगमने" (अदादि०) ततः पूर्ववत् क्विप्, द्वित्वं च । अथवा "द्युत दीप्तौ" (भ्वादि०) ततोऽपि पूर्ववद् द्वित्वम् । 'दिवस्परि दिवोऽधि' "पञ्चम्याः परावध्यर्थे" ( अष्टा० ८ । ३ । ५१ ) इति विसर्जनीयस्य सकारः । 'क्ष्मया' धातुपक्षे 'क्ष्मायी विधूनने" ( भ्वादि० ) ततः "अच्" उपधाया ह्रस्वत्वं छान्दसम् । 'स्वपिवातः' 'सु—आप्लृ' ततः—इन् "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) उपधाया ह्रस्वत्वं बाहुलकात् 'स्वपिः स्वाप्तः—वादो वचनमस्य स्वपिवातः' दकारस्य तकारश्छान्दसः । 'तोकः' "तुज हिंसाबलादाननिकेतनेषु" (चुरादि०) ततः संज्ञायां घः । 'तनयः' "तनु विस्तारे" ( तनादि० ) ततः 'वलिमलितनिभ्यः कयन्" ( उणा० ४ । ९९ ) तनयः ॥

अग्निरपि रुद्र उच्यते ॥ ७ ॥

तस्यैषा भवति—

"जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।

स्तोमं रुद्राय दृशीकम् ॥" ( ऋ० १ । २७ । १० )

जरा स्तुतिर्जरतेः स्तुतिकर्मणः, तां बोध * तया बोधयितुरिति वा, तद्विविड्ढि तत् कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम् ॥

* 'बोधय' इति क्वचित् पाठः, स न साधुः ।

भा०—अग्निरपि रुद्र उच्यते तस्य रौद्रगुणवत्त्वात् तैक्ष्ण्यधर्मवत्त्वाद् रोदयितृत्वात्। "जराबोध तद्विविड्ढि....." इति मन्त्रे।

मन्त्रार्थः—

हे जराबोध–अग्ने! "यमग्ने पृत्सु मर्त्यमवा....." (७) अग्निर्देवः प्रवर्तते। जरा स्तुतिः "जरति–अर्चतिकर्मा" (निघं० ३। १४) तां जरामस्माभिः कृतां स्तुतिं बुध्यते जानाति तत्सम्बुद्धौ जराबोध! यद्वा जरया बोधयितः! चेतयितः! अग्ने! तद् विविड्ढि तत्कुरु सम्पादय विशे विशे मनुष्यस्य मनुष्यस्य यज्ञियाय यजनाय, तुभ्यं रुद्राय प्रचण्डगुणवते दर्शनीयं स्तोमं पठामि।

आध्यात्मिकदृष्टौ—हे जराबोध! जरामस्माभिः कृतां स्तुतिं बुध्यमान! जरया जीर्णावस्थया स्तुत्या वाऽस्मान् बोधयितः! चेतयितः! अग्ने! परमात्मदेव! विशे विशे प्रत्येकस्मिन् मनोनिवेशप्रसङ्गे यज्ञियायाध्यात्मयज्ञे यजनीयाय जरया जरावस्थया रोदयित्रे स्तुत्या प्रखररूपेण प्रकाशमानाय तुभ्यमग्नये तद् दृशीकं दर्शनसाधकं स्तुतिवचनं स्तुतिसमूहं विविड्ढि विशेषण प्राप्तो भव।

निरुक्तयः—कर्मवाचकात् 'जरा' उपपदाद् बुधधातोः केवलाद्वा णिजन्ताद्वा "कर्मण्यण्" (अष्टा ३। २। १) यद्वा करणवाचकात् 'जरा' उपपदाच्छान्दसोऽण् प्रत्ययः–जराबोधः सम्बुद्धौ जराबोध। 'विविड्ढि' "विष्लृ व्याप्तौ" (जुहोत्यादि०) लोटि मध्यमैकवचने "हुझल्भ्यो हेर्धिः" (अष्टा० ६।४।१०१) 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्यनेन "निजां त्रयाणां गुणः श्लौ" (अष्टा० ७। ४। ७५) इति विहितोऽभ्यासस्य गुणनिषेधः। "विशः–मनुष्यनाम" (निघं० २। ३)। 'दृशीकम्' दृशधातोर्बाहुलकात् 'ईकन्' प्रत्यय औणादिकः किच्च॥

इन्द्रः॥ ४॥

इन्द्र इरां दृणातीति वा। इरां ददातीति वा। इरां दधातीति वा। इरां दारयत इति वा। इरां धारयत इति वा। इन्दवे द्रवतीति वा। इन्दौ रमत इति वा। इन्धे भूतानीति वा। "तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते।" इदंकरणादित्याग्रायणः। इदं दर्शनादित्यौपमन्यवः। इन्दतेर्वैश्वर्यकर्मणः। इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा। आदरयिता च यज्वनाम्॥ ८॥

भा०—'इन्द्र' इति देवतापदम्। 'इन्द्रः–इरां दृणाति, इरामन्नं क्षेत्रे क्षिप्त-

मुसं वृष्टिनिपातेन दणात्युज्झिनत्ति । यद्वा 'इरा' शब्देनान्नस्य निमित्तभूतो मेघो गृह्यते, उक्तं यथा मन्त्रे 'अदर्द्रृहत्सम्' । 'इराम्' उपपदात् "दृ विदारणे" ( क्र्यादि० ) ततः खक् प्रत्ययश्छान्दसः 'इरा' इति 'रा' भागस्य लोपे–इन्द्रः । यद्वा–इराम्–अन्नं ददाति वृष्टिद्वारा 'इरा' उपपदाद् 'दा दाने' ततो रक् "ऋजेन्द्र....." ( उणा० २ । २९ ) निपातनाद् रक्प्रत्ययान्तः, निपातनादेव 'इरा' इत्यस्य 'इन्' भावः । 'इरां दधाति'–इत्यर्थप्रदर्शनम्, अन्नं दधाति–आदधाति भूम्याम्–इन्द्रः, तदा दा धातुर्धारणे, यथा "दण्डो ददतेर्धारयतिकर्मणः ( निरु० २ । ११ ) पूर्ववद् रक्प्रत्ययान्तः । यद्वा 'इरां दारयते' इराशब्देनात्र मेघो गृह्यतेऽन्नस्य निमित्तभूतः, पूर्ववद् रक् प्रत्ययः, तदन्तो निपातितो विज्ञेयः । अथवा 'इरां धारयते' मेघं धारयतेऽवस्थापयति स्वाधीने, धकारस्य दकारः । अथवा 'इन्दवे द्रवति' सोमाय सोमं पातुं द्रवति 'इन्दु द्रु' डः प्रत्ययः 'इन्दु' इत्यस्य 'इन्' भावः–इन्द्रः । 'इन्दौ रमते' इति वा 'इन्दौ' उपपदाद् रमधातोर्डः प्रत्ययः 'इन्दु' इत्यस्य 'इन्द्' भावः । इन्धे दीपयति भूतानि–प्राणिनो दीपयति, इन्धे दीपयति प्रकाशयति सर्वं पूर्ववत् । "तद्यदेनं प्राणैः समैन्धन्" ( छान्दो० ५।१।१२ ) जीवात्मानं प्राणैरिन्द्रियैः समैन्धन् समदीपयन् देवास्तस्मादिन्द्रः । "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते.....देवाः" ( बृहदारण्यको० ४ । २ । २ ) "इन्धी दीप्तौ" ( रुधादि० ) ततः कर्मणि रक् प्रत्ययः 'इन्ध्' इत्यस्य 'इन्द्' भावः–इन्द्रः । 'इदं करणात्–इन्द्रः' इति–आग्रायणो मन्यते 'इदम्' शब्दोपपदात् 'कृञ् करणे' धातोः कः प्रत्ययश्छान्दसः, 'इदम्' शब्दस्य 'इन्द्' भावः, धातोः ककारस्य लोपश्च । 'इदं दर्शनाद्' औपमन्यव आचार्यो मन्यते । "स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति तस्मादिदन्द्रो नामेन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" ( ऐ० उ० ३ । १४ ) । 'इदम्' उपपदाद् दृशधातोर्णिजन्तात् क्विप् पृषोदरादित्वाद् रूपसिद्धिः । इदं जगद् दर्शयति । अथवा "इदि परमैश्वर्ये" ( भ्वादि० ) ततो रक् प्रत्ययः ( उणा० २ । २९ ) अथवा–इन्दन्–ऐश्वर्यमनुतिष्ठन्–ईशानः सन् शत्रूणां दारयिता नाशयिता, इन्दन् ईशानः सन् शत्रूणां द्रावयिता स्वाधीने प्रापयिता । 'इन्दन्' उपपदात्–णिजन्ताद् 'दृ विदारणे' धातोः कः प्रत्ययः । यद्वा 'द्रु गतौ' धातोर्णिजन्तात्–डः पूर्वपदस्य 'इन्द्' भावः । अथवा–इन्दन् सन् यज्वनां यजनशीलानां यजमानानामादरयिता मानयिता सत्कर्ता । 'इन्दन्' उपपदात्–आङ्पूर्वकात् "दृङ् आदरे" ( तुदादि० ) कः प्रत्ययः, इन्दन्' इत्यस्य 'इन्द्' भावः ॥

तस्यैषा भवति—

"अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः। महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन्॥" (ऋ० ५।३२।१)

अदृणा उत्सम्। उत्स उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा, व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान् माध्यमिकान् संस्त्यायान् बाबध्यमानानरम्णाः। रम्णातिः संयमनकर्मा, विसर्जनकर्मा वा, महान्तमिन्द्र पर्वतं मेघं यद् व्यवृणोर्व्यसृजोऽस्य धारा अवहन्नेनं दानवं दानकर्माणम्॥ ९॥

मन्त्रार्थः—

भा०—हे इन्द्र ! त्वम्–उत्समूर्ध्वगमनशीलमुपरिस्थितमूर्ध्वं वहमानमार्द्रं जलपूर्णं वा मेघमदर्दो दारयसि विदीर्णं करोषि, उत्सोऽत्र मेघो यथा वेदेऽन्यत्रोक्तम् "उत्सं दुहन्ति स्तनयन्तम्" (ऋ० १।६४।६) अस्य खानि–अस्यैव मेघस्य खानि छिद्राणि व्यसृजो जलनिर्गमनाय–उद्घाटयसि। स इन्द्रोऽर्णवान्–अर्णस्वतो जलवतो भृशं बध्यमानान् संस्त्यायान् संहतान् मेघान्–अरम्णा नियन्त्रणे स्थापयसि। तं महान्तं पर्वतं मेघं विवः–विवृतं शिथिलं कृतवान् करोषि दानवमुदकस्य दातारं मेघमवहंसि पुनरुदकधाराः–विसृजो विसृजसि प्रवाहयसि। यो मेघं दृणाति, यथा चोक्तं यास्केन 'इन्द्र इरां दृणातीति वा' वर्षणाभिमुखं करोति मेघोदकधाराश्च प्रवाहयति स इन्द्रः।

विरुक्तयः—'उत्सः' उत्पूर्वकात् 'सृ गतौ' धातोर्यद्वा 'षद्लृ गतौ' धातोर्डः प्रत्ययः "अन्येष्वपि दृश्यते–अन्येभ्योऽपि" (अष्टा० ३।२।१०१) अथवा "स्यन्दू प्रस्रवणे" (भ्वादि०) ततोऽपि डः प्रत्ययः, टिलोपेन यकारोऽपि लुप्तः। 'अर्णवान्' "अर्णः–उदकनाम" (निघं० १।१२) ततो मतुबर्थे 'वः' प्रत्ययश्छान्दसः, 'अर्णस्' इत्यस्य सकारलोपोऽपि, अर्णवः–द्वितीयाबहुवचने–अर्णवान्–अर्णस्वतः–उदकवतः। बद्बधानाम्' "बध संयमने" (चुरादि०) ततो यङ्लुगन्तादात्मनेपदं कर्मणि कर्तृप्रत्ययः कानच् छान्दसः, भृशं संयम्यमानान्। 'अरम्णाः' रम्धातुः संयमने मतः "रम्णाति वधकर्मा" (निघं० २।१९) स एवात्र संयमने 'बद्बधानाः' इति संयमनार्थकं पदमाश्रित्य। 'सृजो

वि' इति 'वि' उपसर्गः 'सृज' इत्यनेन सम्बध्यते "छन्दसि परेऽपि" ( अष्टा० १ । ४ । ८० ) ॥

तस्यैषाऽपरा भवति—

"यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः॥ ( ऋ० २ । १२ । १ )

यो जायमान * एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा। यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इति। ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ॥

मन्त्रार्थः—

भा०—यः खलु जातो जायमान एव प्रथमः प्रधानो मनस्वी मनो मननीयं विज्ञानं यद्वा मन इव मनोवेग इव शक्तिर्यस्य तथाभूतो देवो यः क्रतुना कर्मणा बलरूपेण कर्मणाऽन्यान् देवान् पर्यभवत् परिगृह्णाति स्वाधीनीकरोति स्वाश्रये स्थापयति, यद्वाऽतिक्रामति लङ्घयति पश्चात् करोति, यस्य शुष्माद् बलात् "शुष्मं बलनाम" ( निघं० २ । ९ ) द्यावापृथिव्यौ–अभ्यसेतामबिभीताम्" भ्यस भये" ( भ्वादि० ) तस्य नृम्णस्य बलस्य महत्त्वेन खल्वेतत् सर्वं कृत्यं भवति। हे जनाः! स इन्द्रो देवः (Ionization Potential) विज्ञानवान् मन इव तीव्रशक्तिमान् वा, अन्यदेवेषु यत्कर्मशक्तिमान् बलवान् च योऽस्ति स इन्द्रः। स चात्राधिदैविके क्षेत्रे विद्युदेव "यदशनिरिन्द्रः" (कौ० ६।९) "विद्युद्वाऽशनिः" (शत० ६।१।३।१४)। आधिभौतिके महाबलवान् राजा। आध्यात्मिके परमात्मा जीवात्माऽपीन्द्रो यथाप्रसङ्गमुत्प्रेक्ष्यः। यदत्र 'स जनास इन्द्रः' इति वार्तालापेन–इन्द्रस्य स्वरूपवर्णनं खल्वृषेर्येनार्थो दृष्टो यद्वा वस्तुतत्त्वं दृष्टं तत्याख्यानसंयुक्ता वार्तालापविषयिका प्रीतिर्भवति लोके यथा दृष्टं वस्तुतत्त्वं तज्ज्ञापयितुं सम्मुखं जनमाकाङ्क्षति तद्वदत्रापि जनान् स्वाभिमुखीभूतानिव मत्वा ज्ञापनीयं ज्ञापयति।

अदेवताप्रसङ्गे नामधेयेनैव–इन्द्रो वर्ण्यते तद्यथा "प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे॥" ( ऋ० १ । ४० । ५ ) इति बृहस्पतिदेवत्ये। "अनु त्वा सास इन्द्रत्र आपो न

---

* 'जातः' इति पाठः क्वचित्।

प्रवतासरन्। पुनाना इन्द्रमाशत ॥" (ऋ० ९।६।४) इति पवमान-सोमदेवत्ये ॥

पर्जन्यः ॥ ५ ॥

पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः। परो जेता वा। परो जनयिता वा। प्रार्जयिता वा रसानाम् ॥१०॥

तस्यैषा भवति—

"वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्। उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥" (ऋ० ५।८३।२)

विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि चास्माद् भूतानि बिभ्यति महावधान्महान् ह्यस्य वधोऽप्यनपराधो भीतः पलायते वर्षकर्मवतः, यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः ॥

भा०—'पर्जन्यः' इति देवतापदम्। "तृप प्रीणने" (दिवादि०) तस्याद्यन्तविपरीतस्य 'तर्पयिता' इति कर्तरि कृतविपर्ययात् 'पृत्' बाहुलकात् ततः। 'क्विप्' प्रत्ययश्च बाहुलकात्, गुणे कृते 'पर्त्' स जन्यश्च जनेभ्यो हितो जन्यः, सति समासे पूर्वपदस्य तकारलोपश्छान्दसः पर्जन्यः। यद्वा परो जेता पर्जन्यः, परशब्दोपपदात् 'जि जये' ततः 'अन्यः' प्रत्ययः पूर्वपदस्याऽकारलोपः। स च "पर्जन्यः" (उणा० ३।१०३) निपातनाद् रूपसिद्धिः—इकारस्य लोपः प्रत्ययस्य द्वित्वं वा निपातनात्। यद्वा परोपपदात् 'जनी प्रादुर्भावे' धातोः 'यक्' प्रत्यय औणादिकः "जनेर्यक्" (उणा० ४।१११) पूर्ववत् पर्जन्यः, पर उत्कृष्टो जनयिता—ओषधिवनस्पतीनाम्। अथवा प्रपूर्वात् "अर्ज अर्जने" (भ्वादि०) 'न्यः' प्रत्ययो बाहुलात् पर्जन्यः। 'प्र' इत्यस्य 'प्' भावः। ओषधिवनस्पतिषु रसस्य प्रार्जयिता प्रापयिता।

मन्त्रार्थः—

वृक्षान् विहन्ति पातयति वेगेन वृष्टो देवः, अथ च रक्षांसि कृमिकीटान् दुर्भिक्षरोगादींश्च विहन्ति विनाशयति विश्वं भुवनं सर्वाणि भूतानि खल्वस्माद् बिभ्यति भयं मन्यन्ते, उतानागा अनपराधोऽपि महावधात्—महान् वधो घातकप्रहारो यस्य तथाभूतादस्माद् वृष्ण्यावतो वर्षकर्मवतो वर्षतः पर्जन्याद् भीतः सन्

पलायते यतो दुष्कृतो मनुष्यस्यानिष्टकारिणो दुर्भिक्षरोगकृमिकीटान् स्तनयन् शब्दं कुर्वन् वर्षन् हन्ति पर्जन्यः—मेघ इत्यर्थः । अस्मिन् सूक्तेऽग्रे खलूक्तमस्ति यत् पर्जन्यो जीवनं प्रयच्छति जलं वर्षति तदा वाता वान्ति, विद्युतो विद्योतन्ते, ओषधय उद्गच्छन्ति, पृथिवीमुदकेन रक्षति—इत्यादि कर्मभिः पर्जन्यो देवो यो लोके प्रसिद्धो मेघः सोऽस्ति ।

निरुक्तयः—'वृष्ण्यवतः' "वृष सेचने" ( भ्वादि० ) ततः "इण्सिञ्जिदीङुष्यविभ्यो नक्" ( उणा० ३ । २ ) धातोर्बाहुलकात् 'नक्' प्रत्ययः 'वृष्णः' वर्षकः 'तस्येदम्' इत्यर्थे छान्दसो यत्—वृष्णस्य वर्षकस्येदं कर्म बलं वा 'वृष्ण्यम्' तद्वतो वृष्ण्यवतो वर्षणकर्मवतो वर्षणबलवतो वा ।

पर्जन्यस्यादेवतात्वेन "दि॒वा चि॒त्तमः॑ कृण्वन्ति प॒र्जन्ये॑नोदवा॒हेन॑ यत् पृ॑थि॒वीं व्यु॒न्दन्ति॑ ॥" ( ऋ० १ । ३८ । ९ ) इति मरुद्देवत्ये प्रयोगः ॥

बृहस्पतिः ॥ ६ ॥

बृहस्पतिर्बृहतः पाता वा पालयिता वा ॥ ११ ॥

तस्यैषा भवति—

"अश्नापि॑नद्धं॒ मधु॒ पर्य॑पश्य॒न्मत्स्यं॒ न दी॒न उ॒दनि॑ क्षि॒यन्त॑म् । निष्टज्ज॑भार चम॒सं न वृ॒क्षाद् बृह॒स्पति॑र्विर॒वेणा॑ वि॒कृत्य॑ ॥" ( ऋ० १० । ६८ । ८ )

अशनवता मेघेनापिनद्धं मधु पर्यपश्यन्मत्स्यमिव दीन उदके निवसन्तं निर्जहार तच्चमसमिव वृक्षात् । चमसः कस्माच्चमन्त्यस्मिन्निति बृहस्पतिर्विरवेण शब्देन विकृत्य ॥

भा०—'बृहस्पतिः' देवतापदम् । बृहतः प्रवृद्धस्य 'मेघस्य जगतो वा' पाता रक्षकः पालको वा ।

मन्त्रार्थः—

अश्नाऽशनवता व्यापनधर्मवता मेघेनापिनद्धमपिबद्धमन्तर्धारितं मधु—उदकम् "मधु—उदकनाम" ( निघं० १ । १२ ) दीने—उदनि तुच्छेऽगभीरे जले जलाशये क्षियन्तं निवसन्तं मत्स्यमिवापश्यद् दृष्टवान्, स बृहस्पतिर्देवः (Capacity of a condenser which maintains a Potential Diff between layers of clouds or between cloud and earth) विरवेण विशिष्टशब्देन प्रहारकशब्देन कर्कशशब्देन तं मेघं विकृत्य विच्छेद्य "कृती छेदने"

( तुदादि०, भ्वादि० ) उदकं निर्जहार निःसारितवान् वृक्षाच्चमसमिव यथा कश्चन तक्षकः शिल्पी वृक्षात्–चमसं चमन्ति भुञ्जते यस्मिन् तच्चमसं पात्रं यथा विकृत्य विच्छेद्य पृथक्–निःसारयति ।

निरुक्तयः—'अश्ना' "अशूङ् व्याप्तौ" ( स्वादि० ) ततः "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" ( उणा० १ । १५६ ) धातोर्बाहुलकात् कनिन् प्रत्ययः, 'अशन्'–अशा व्यापनशीलस्तृतीयैकवचनेऽश्ना । अथवा 'अशूङ्' धातोः क्विप्–भावे 'अश्' ततः 'नः' प्रत्ययो मतुबर्थे छान्दसः 'टा' विभक्तेः स्थाने 'इन' इत्यादेशस्याभावश्छान्दसः, यद्वाऽऽकारादेशः–अश्नाऽशनवता । 'निर्जभार' 'निर्' उपसर्गात् 'हृञ् हरणे' ततो लिटि रूपम्, हकारस्य भकारश्छान्दसः ।

अन्यदेवत्येऽदेवतात्वे "विशो अदे॑वीर॒भ्याचर॑न्ती॒र्बृह॒स्पति॑ना यु॒जेन्द्रः॑ ससाहे ।" ( ऋ० ८ । ९६ । १५ ) इति–इन्द्रदेवत्ये ।

बृहस्पतिः–मेघस्थस्य स्तब्धजलस्य गर्जनया द्रावको देवो गर्जनशीलो विद्युद्भेदः ॥

ब्रह्मणस्पतिः ॥ ७ ॥

ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा ॥ १२ ॥

तस्यैषा भवति—

"अश्मा॑स्यमव॒तं ब्रह्म॑ण॒स्पति॒र्मधु॑धारम॒भि यमोज॒सा-तृ॒णत् । तमे॒व विश्वे॑ पपिरे स्व॒र्दृशो॑ ब॒हु सा॒कं सि॑सि-चुरुत्स॑मु॒द्रिण॑म् ॥" ( ऋ० २ । २४ । ४ )

अशनवन्तमास्यन्दनवन्तमधातितं ब्रह्मणस्पतिर्मधुधारमभि यमोजसा बलेनाभ्यतृणत् । तमेव सर्वे पिबन्ति रश्मयः सूर्यदृशो बह्वेनं सह सिञ्चन्त्युत्समुद्रिणमुदकवन्तम् ॥ १३ ॥

भा०—'ब्रह्मणस्पतिः' देवतापदम् । ब्रह्मणः–उदकस्य मेघस्थस्य "ब्रह्म–उदकनाम" ( निघं० १ । १२ ) "ब्रह्म वै वाचः परमं व्योम" ( तै० स० ३ । ९ । ५ । ५ ) माध्यमिकाया वाचो विद्युतो व्योम–आकाशस्तस्य पतिः । अध्यात्मे ब्रह्मणो वेदस्य ज्ञानस्य वाग्गगनस्य पाता स्वामी पालयिता वा परमात्मा ।

मन्त्रार्थः—

अश्मास्यम्—अश्मश्च स एव–आस्यश्च–आश्मास्यः, अश्म–अशनवान्–

आस्यः–आस्यन्दनवान् । 'अशूङ् व्याप्तौ' ( स्वादि० ) धातोः "अशिशकिभ्यां छन्दसि–मनिन्" ( उणा० ४ । १४७ ) इति मनिन् प्रत्ययो भावे बाहुलकाच्छान्दसो वा । व्यापनमित्यर्थः । अश्मास्यास्तीति मतुबर्थीयोऽकारश्छान्दसः । 'अश्मः' आङ्पूर्वात् "स्यन्दू प्रस्रवणे" ( भ्वादि० ) डः प्रत्ययो भावे "अन्येष्वपि दृश्यते ( अष्टा० ३।२।१०१ ) 'अपि' शब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् कारकान्तरे कथने भावोऽपि गृह्यते, तस्माद् भावे । 'आ स्यन्द्–डः, इति–आस्यः–आस्यन्दः, आस्यन्दः–आस्यन्दनम्, 'आस्य' शब्दान्मतुबर्थीयः–अकारः, आस्यः । अश्मश्च स एवास्यश्च–अश्मास्यो मेघो व्यापनधर्मवान्–आस्यन्दनधर्मवान् प्रस्रवणधर्मवानस्ति, तं मेघं मधुधारं क्षारादिस्वादरहितधारं स्वाभाविकस्वादवत्यो धारा दुग्धधारावत् प्रवाहा यस्य तमवतमवाततिं निम्नतां गतं जलभारेण नम्रीभूतं मेघं यं ब्रह्मणस्पतिः (Gravity) ओजसा बलेनाभ्यतृणत्–च्छिनत्–छिन्नवान् यद्वा पृथिवीं प्राप्तः स जलरूपेण यद्वा मेघवर्षणेन पृथिवीं जलं विश्वे सर्वे स्वर्दृशः स्वरादित्यः "स्वरादित्यो भवति" ( निरु० २ । १४ ) तं सूर्यं दर्शयन्ति ते रश्मयो वर्षर्तुं विहाय तदनन्तरं सर्वकाले विशेषतो ग्रीष्मकाले पिबन्ति पुनश्च ते–एव बहुत्र बहुकृत्वो वा–उद्रिणमुदकवन्तमुत्सं जलकूपमिव महज्जलवन्तं मेघं सह मिलित्वा सिञ्चन्ति सृजन्त्याकाशे, सिञ्चन्ति पृथिव्याम्, आगते प्रावृषि ।

एवं धाराप्रवाहेण मेघवर्षणस्य कर्ता मेघस्य स्वामी मध्यस्थाने यो देवः स ब्रह्मणस्पतिर्देवो मेघोदकधारयुक्तो व्यापको वैद्युतदेवः ।

निरुक्तयः—'स्वर्दृशः' 'स्वः' उपपदाद् दृशधातोः "क्विप् च" ( अष्टा० ३ । २ । ७६ ) स्वर्दृश्–स्वर्दृक् प्रथमाबहुवचने स्वर्दृशः 'उद्रिणम्' "उन्दी क्लेदने" ( रुधादि० ) ततः "स्फायि....उन्दि....शुभिभ्यो रक्" ( उणा० २ । १३ ) उदम्–उदकम्, मतुबर्थीय इनिः प्रत्ययः "अत इनिठनौ" (अष्टा० ५।२।११५) ।

अदेवतात्वञ्चास्य "शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः ॥" ( ऋ० १० । ५३ । ९ ) सौचीकाग्निदेवत्ये तद्विशेषणरूपेण ॥

इति दशमाध्याये प्रथमः पादः ।

---

## द्वितीयः पादः

क्षेत्रस्य पतिः ॥ ८ ॥

क्षेत्रस्य पतिः। क्षेत्रं क्षियतेर्निवासकर्मणस्तस्य पाता वा पालयिता वा ॥ १४ ॥

तस्यैषा भवति—

"क्षेत्रस्य पतिना वयं हितेनेव जयामसि।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥"
(ऋ० ४ । ५७ । १)

क्षेत्रस्य पतिना वयं सुहितेनेव जयामो* गामश्वं पुष्टं पोषयितृ चाहरेति। स नो मृळतीदृशे। बलेन वा धनेन वा। मृळतिर्दानकर्मा पूजाकर्मा वा ॥ १५ ॥

भा०—'क्षेत्रस्य पतिः' इति देवता। क्षेत्रस्य पाता रक्षकः पालयिता वा। क्षेत्रम् "क्षि निवासे" (तुदादि०) ततः "हुयामाभसिभ्यस्त्रन्" (उणा० ४। १६८) धातोर्बाहुलकात् त्रन् प्रत्ययः।

मन्त्रार्थः—

वयं हितेन सुहितेन सुखस्य साधकेन मित्रेणेव क्षेत्रस्य पतिना देवेन सह क्षेत्रं पृथिवी पृथिवीखण्डानि च "इयं वै क्षेत्रं पृथिवी" (कौ० ३० । ११, गो० उ० ५ । १०) वृष्टेरनन्तरं पृथिवीपृष्ठं स्पृशन् मध्यस्थाने यो वर्तमानः सोम्यो वायुः स क्षेत्रपतिरत्र, य ओषधिवनस्पतिषु रसं प्राणिषु जीवनं च प्रयच्छति बलयति सर्वान्। तेन सह गां गोपशुमश्वं पोषयित्नुं पुष्टिकरमन्नं तथा गामिन्द्रियमिन्द्रियबलमश्वं प्राणं प्राणबलमन्नं च जयामः-प्राप्नुमः। स च नोऽस्मान् मृडाति सत्करोति यद्वा स नोऽस्मभ्यमीदृशं ददाति, अतः स त्वमाहर प्रापय।

निरुक्तिः—'पोषयित्नु' णिजन्तात् पुषधातोः "स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्" (उणा० ३ । २९) ॥

तस्यैषाऽपरा भवति—

"क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥" (ऋ० ४ । ५७ । २)

* 'जयेम' इति क्वचित् पाठः।

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयोऽस्मासु धुक्ष्वेति मधुश्चुतं घृतमिवोदकं सुपूतमृतस्य नः पातारो वा पालयितारो वा मृडयन्तु मृडयतिरुपदयाकर्मा पूजाकर्मा वा ॥

मन्त्रार्थः—

भा०—हे क्षेत्रस्य पते वृष्टेरनन्तरं वर्तमान सोम्यवातावरण ! त्वं यथा गौर्दुग्धं मधुमदस्मदर्थं दुग्धे तथा मधुमन्तं नीरोगं स्वादुं चोर्मिं सूक्ष्मं वाष्परूपं जलोर्मिं चास्मन्निमित्तमोषधिषु प्रस्रावय तथा मधुश्चुतं मधुररसस्रावं फलं च घृतसदृशं सुशुद्धं यथा दुग्धाद् घृतं निःसरति रसमयफलात् स्नेहमयं रसं प्रक्षारय । यतोऽस्मान् ऋतस्य सूक्ष्मजलस्य पतयः "ऋतमुदकनाम" ( निरु० १ । १२ ) सोम्यवाता रक्षन्तु सत्कुर्वन्तु वा ।

य ओषधिवनस्पतिषु रसं प्रयच्छति गवादिष्वस्मासु मनुष्येषु च जीवनं प्रेरयति तथा हरितफलानि मधुमयरसपूर्णानि शुष्कफलानि च स्निग्धानि सम्पादयति स क्षेत्रस्य पतिर्विज्ञेयः—आधिदैविके सोम्यवायुर्वातप्रवाह आधिभौतिके तु स कृषकः ॥

तद्यत् समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवतीत्येकम्, 'मधुमन्तं मधुश्चुतम्' इति * ।

यदेव समाने पदे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम् "हिरण्यरूपः स हिरण्यसन्दृक्" ( ऋ० २ । ३५ । १० ) इति यथा ।

यथा कथा च विशेषोऽजामि भवतीत्यपरम् "मण्डूका इवोदकान्मण्डूका उदकादिव" (ऋ० १० । १६६ । ५) इति यथा ॥

भा०—उपर्युक्ते मन्त्रे 'मधुमन्तं मधुश्चुतम्' इति द्वे पदे समानार्थे दृष्ट्वा किमप्युच्यते विशेषज्ञापनार्थम् । यत् समान्यामेकस्यामेवर्चि—एकस्मिन् मन्त्रे हि समानोऽभिव्याहारोऽभिप्रायोऽर्थो वा यस्मिन् पदे तथाभूतं पदं समानार्थकं द्विरुक्तं भवति तज्जामि—अतिरेकं पुनरुक्तिर्भवति पुनरुक्तिर्दोषो मन्यते—इत्येकं मतम् । यथा पूर्वस्मिन् मन्त्रे 'मधुमन्तम्' पूर्वार्धे, 'मधुश्चुतम्' उत्तरार्धे भागे । यत्खलु समाने पादे न तु समाने मन्त्रे—एकस्मिन्नेव समानार्थं पदं भवति तज्जामि भवति, यथा "हिरण्यरूपः स हिरण्यसन्दृक्" ( ऋ० २ । ३५ । १० ) इत्यपरम्,

* 'इति यथा' क्वचित् ।

मन्त्र एषः पूर्वं व्याख्यातः (निरु० अ० ३ ख० १६) यथा कथा च विशेषो भेदोऽजामि न जामि न पुनरुक्तिर्भवति, समानेऽर्थे समाने पदरूपेऽपि, यथा "मण्डूका इवोदकान्मण्डूका उदकादिव" ( ऋ० १० । १६६ । ५ ) अत्रोभयत्र वाक्ययोः 'मण्डूकाः' प्रथमाबहुवचनं समानरूपं पदं समानार्थकं च तथा 'उदकात्' पञ्चम्यन्तं पदं समानरूपं समानार्थकं च । परन्तु 'इव' शब्दस्यान्यत्रान्यत्र प्रयोगाद् भिन्नभिन्नोपमानात् किल जामि न भवति । एवमन्यत्राप्युत्प्रेक्ष्यम् । तस्माज्जामि पुनरुक्तिदोषो वेदेषु न मन्तव्यः । स च मन्त्रः पूर्णो व्याख्यायते ।

मन्त्रः—

योगक्षेमं वं आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥

मन्त्रार्थः—

हे सपत्नाः ! मम राज्याधिकारस्य मम शासनस्य विरोधिनः ! राज्ये निवसन्तोऽप्यमित्रायमाणाः ! यदि शासनविरोधं न त्यक्ष्यथ तर्हि वो युष्माकं योगक्षेमं योगो राज्याद् या प्राप्तिर्भवति मासिकी वार्षिकी वा तां तथा क्षेमं रक्षणं यद्रक्षितं पूर्वतः परम्परातो रक्षितमस्ति भौमं क्षेत्रादिकं धनं तदुभयमादाय राष्ट्रियीकरणनीत्या स्वायत्तीकृत्याहमुत्तम उग्रतमो युष्माकमुपरि भवेयमित्येव कर्तव्यं मम यद् वो युष्माकं मूर्धानमाक्रमीम्—आक्राम्येयम् । तस्माद् यूयं ममाधस्पदात् पादयोरधः—इति—अधस्पदमित्यव्ययीभावसमासः सप्तम्यां विभक्तौ—अधस्पदं स्थानं तस्मादधस्पदात् पादयोरधः प्रदेशात् पादतलान्मण्डूका इवोदकात् खलूद्वदत प्रार्थयध्वं गुणगानं कुरुत मम शासनं स्वीकुरुत यथा मण्डूका जलाजले रक्षां मन्यमाना उद्वदन्ति तद्वत्, ममाधीनत्वं स्वीकुरुतेच्छया, नो चेद् बलादेव मम पादयोरधोदेशे यूयमुद्वदत—उद्वक्ष्यथ मम शासनं स्वीकरिष्यथ मण्डूका उदकादिव—उदकाश्रयं विहायोद्वदन्ति—उद्गदन्ति तद्वद् यूयं मम पादतलादन्यत्र पादतलं विहाय तूद्वदत—उद्गोदिष्यथ दण्डान् भोक्ष्यध्वे । अत्र समाम्नां पुनरुक्त्यामपि लक्ष्यभेदो जात इवशब्दस्य पर्यायप्रयोगेणैव । मम शासने सुखं वैपरीत्ये दुःखम् ।

अस्यादेवतात्वे प्रयोगः "नमः क्षेत्रस्य पतये वीरुत्क्षेत्रियनाशन्यप क्षेत्रियमुच्छतु ।" ( अथर्व० २।८।५ ) इति वनस्पतिदेवत्ये सूक्ते ॥

वातोष्पतिः ॥ ९ ॥

वातोष्पतिः । वास्तुर्वसतोर्निवासकर्मणस्तस्य पाता वा पालयिता वा ॥ १६ ॥

तस्यैषा भवति—

"अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्।
सखा सुशेव एधि नः ॥" ( ऋ० ७ । ५५ । १ )

अभ्यमनहा वास्तोष्पते सर्वाणि रूपाण्याविशन् सखा नः सुसुखो भव । शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी, विभाषितगुणः शिवमित्यप्यस्य भवति । यद्यद् रूपं कामयते तत्तद् देवता भवति । "रूपं रूपं मघवा बोभवीति" ( ऋ० ३ । ५३ । ८ ) इत्यपि निगमो भवति ।

भा०—'वास्तोष्पतिः' देवतानाम । वास्तुः—निवासस्थानं तस्य पतिः पाता रक्षको वा पालयिता वा । "वस निवासे" ( भ्वादि० ) ततः "वसेरागारे णिच्च—तुन्" ( उणा० १ । ७० ) वास्तुस्तस्य पतिः—वास्तोष्पतिः, मध्यस्थानदेवतात्वाद् गृहस्य वातावरणं गृहे निरन्तरमागमनशीलो गृहाभ्यन्तरे वर्तमानश्च सर्वर्तुको वायुः । तस्य मन्त्रो निदर्शनार्थः "अमीवहा····।"

मन्त्रार्थः—

हे वास्तोष्पते ! गृहे वर्तमान वायो देव ! त्वममीवहा—अभ्यमनहा—अभिक्रामकस्य रोगस्य घातयिता भव "अम रोगे" ( चुरादि० ) ततः "शेवायह्वजिह्वाग्रीवाप्वामीवाः" ( उणा० १ । १५४ ) इति वन्प्रत्ययान्तो निपात्यते । अमीवा रोगो रोगजन्तुश्च तस्य हन्ता भव । अमीवानं हन्ति 'अमीवन् हन् क्विप्' "बहुलं छन्दसि" ( अष्टा० ३ । २ । ८८ ) बहुलं छन्दसि हनः क्विप् । एवं शुद्धो बलवांश्च भव । विश्वा रूपाणि सर्वाणि रूपाणि—आविशन् प्राप्नुवन् गृहेऽस्मभ्यं हितकराणि यानि तव रूपाणि सन्ति यद्वा यानि रूपाणि रोगनिवृत्तिकराणि तव सन्ति तानि प्राप्नुवन् नोऽस्माकं सुशेवः सुसुखकरः सखा भव । सुशेवः—सुसुखः—सुसुखयिता "शेवं सुखनाम" ( निघं० ३ । ६ ) शेवः "शिष्लृ विशेषणे" ( रुधादि० ) ततः "इण्शीभ्यां वन्" ( उणा० १ । १५२ ) इति धातोर्बाहुलकात् 'वन्' प्रत्ययः । तस्य 'शिष्' धातोरन्ते स्थितस्य 'ष्' इत्यस्य—अन्तरं स्थानमुपलिङ्गयति स्वस्मिन् मिश्रीकरोति—आत्मसात्करोति 'वः' प्रत्ययः । इति शेवो जीवने वैशिष्ट्यस्याधानकरणनिमित्तत्वात्—शेवः सुखम् । धातौ गुणस्य वैकल्प्यात् 'शिवम्' इत्यपि रूपं भवति, विकल्पश्च निपातनप्रसङ्गे "सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे" (उणा० १ । १५३) अत्र 'शिवः' निपातितः ।

मन्त्रे यदागतम् 'सर्वाणि रूपाण्याविशन्' इति विषये यास्कः कथयति देवताया महाभाग्यवत्त्वात् सा बहुरूपा बहुगुणा भवति, तस्या देवतायास्तेषु बहुषु रूपेषु यद् यद् रूपं कामयतेऽधिकारी सा देवता तत्तद्रूपा भवति। न केवलं वास्तोष्पतेरेव बहुरूपत्वं किन्त्वन्यस्या देवताया अपि बहुरूपत्वं भवति। अत्रेन्द्रदेवत्यं मन्त्रं चोदाहरति "रूपं रूपं मघवा बोभवीति।"

स समग्रमन्त्रस्तदर्थश्च—

रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्।
त्रिर्यद् दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा॥

(ऋ० ३।५३।८)

मघवा—इन्द्रो देवो रूपं रूपं बोभवीति—अवसरमवसरं प्रति तथा तथारूपं भृशं भवति तथा कार्यकरणे समर्थो भवति, मायाः प्रज्ञा बुद्धीः कुर्वन् स्वां तन्वं परि—स्वां विस्तृतां शक्तिं परि तामाश्रित्य स दिवो दिनस्य "दिवे दिवे—अहर्नाम" (निघं० १।९) दिनस्य त्रिः—त्रिरावृत्तेषु त्रिवारं प्रवृत्तेषु सवनेषु यज्ञसवनेषु "द्वित्रिचतुर्भ्यः सुच्" (अष्टा० ५।४।१८) स्वैः स्वसम्बन्धिभिः स्वसम्बद्धैर्मन्त्रैर्मननीयैः स्तवनैः ऋतावा सत्यवान्—अनृतुपाः—ऋतुप्रतिबन्धेन विना सर्वर्तुपाः सर्वेष्वृतुषु खल्वपि परिमुहूर्तं मुहूर्तं परि समयं प्रति यथासमयमागात्—आगच्छति।

वास्तोष्पतिर्देवो वास्तुनो गृहस्य गृहवासिनां स्वास्थ्यप्रदो रोगनिवृत्तिकरः सुखदो गृहस्य स्वाभाविकवायुप्रवाहो यज्ञेन सम्पादितश्च शुद्धो वायुर्विज्ञेयः, गृहस्य वातावरणं च।

अदेवतात्वं च तस्य "वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्। द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा॥" (ऋ० ८।१७।१४) इतीन्द्रदेवत्ये॥

वाचस्पतिः॥ १०॥

वाचस्पतिर्वाचः पाता वा पालयिता वा।॥ १७॥

तस्यैषा भवति—

"पुनरेहि* वाचस्पते देवेन मनसा सह।
वसोष्पते निरामय मय्येव तन्वं मम†॥

(मै० सं० १।६।२)

* 'उप न एहि' इति पाठः संस्कृतकालिजकलकत्ताप्रकाशितायाम् 'पुनरेहि' इति पाठः डाक्टररघुरसम्पादितायाम्।

† 'निरमय मय्येव तन्वां मम' इति संस्कृतकालिजकलकत्ताप्रकाशितायाम्।

इति सा निगदव्याख्याता ॥

भा०—'वाचस्पतिः' मध्यस्थानदेवतापदम् । वाचस्पतिः—वाचो वदनशक्ते-र्जीवनशक्तेः "वाग्घृदये श्रिता" ( तै० सं० ३ । १० । ८ । ४ ) चेतनत्वशक्तेः पाता रक्षकः पालयिता "न वि जानामि यदिवेदमस्मि····आदिद्वाचो अश्नुवे भागमस्याः ॥" ( ऋ० १ । १६४ । ३७ ) वागेव चेतनत्वं जीवत्वं सूचयति प्रसवकाले । स मनुष्यशरीरं प्रति नासिकां प्रति प्राप्तः प्राणो वायुर्वाचस्पतिः । "प्राणो वै वाचस्पतिः" ( शत० ४ । १ । ९ ) अत्र प्राणो जीवनप्रदो वायुः ।

वक्तव्यम्—

प्रस्तुतस्य मन्त्रस्य पाठो माथर्ववेदानुसारी न च मैत्रायणिसंहितानुसारी । तद्यथा—"पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरमय मय्येवास्तु मयि श्रुतम् ॥" ( अथर्व० १ । १ । २ ) इत्यथर्ववेदीयः पाठः । "उपप्रेहि वाचस्पते देवेन मनसा सह । वसुपते विरमय मय्येव तन्वं मम" ( मैत्रा० सं० ४ । १२ । १ ) इति मैत्रायण्याः पाठः । तस्मात् 'मय्येवास्तु मयि श्रुतम्' इति पाठो वाचस्पतिं पृथिवीस्थानकं विद्वांसं यद्वा सर्वस्थानकं सर्वव्यापिनं परमात्मानं साधयति, यस्माच्छ्रुतं ज्ञानं यस्य परम्परया ज्ञानं श्रुतं मयि तिष्ठतु—इति प्रार्थ्यते, तस्मादाथर्ववेदीयः पाठोऽभीष्टः । तथा 'उपप्रेहि वसुपते विरमय' इति पाठो मैत्रायण्या नाभीष्टः, पुनः पुनरागमनशीलो देवोऽभीष्टः 'वसुपते त्वं विरमय' नाभीष्टः किन्तु 'वसोष्पते निरामय' वसोर्निरमणं कारय प्राणस्य निर-मणं कारय । यास्केन 'निगदव्याख्याता' स्पष्टार्था खल्वेषा—ऋगस्तीत्युक्तम् । भवतु । अस्माभिस्तु देवतानुरोधेन व्याख्यातव्या हि ।

अर्थः—

हे वाचस्पते ! जीवनप्रद प्राणवायो ! त्वं पुनरेहि पुनः पुनरागच्छ जीवन-धारणाय देवेन मनसा सह देवरूपेण दिव्येन मनसा सह दिव्यं मनः सम्पादयन् पुनः पुनः प्राप्तो भव, प्रतिदिनमागच्छ प्रतिपलमागच्छ, आगच्छन् हे वसोष्पते ! प्राणस्य पते रक्षक ! "प्राणा वै वसवः" ( जै० उ० ४ । २ । ३ ) वसुं प्राणं मम तनुं प्राणरूपं तनुं मयि हि निरन्तरं रमय ।

वाचस्पतिरत्र शरीरस्याधारभूतं प्राणं यः प्रेरयति प्रयच्छति वा स जीवन-प्रदः प्राणनशक्तिप्रदो वा वायुः शरीरेण सह सम्पृक्तः ।

अस्यादेवतात्वेन प्रयोगाः "वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।" ( ऋ० १० । ८१ । ७ ) इति विश्वकर्मदेवत्ये विशेषणरूपेण ।

"इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् । वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥" ( ऋ० ९ । १०१ । ५ ) इति पवमानसोमदेवत्ये पवमानसोमस्य विशेषणरूपेण ॥

अपां नपात् ॥ ११ ॥

अपां नपात् तनूनप्त्रा व्याख्यातः ॥ १८ ॥

तस्यैषा भवति—

"यो अनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईळते अध्वरेषु । अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥" ( ऋ० १० । ३० । ४ )

योऽनिध्मो दीदयद् दीप्यसे * अभ्यन्तरमप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सोऽपान्नपान्मधुमतीरपो देह्यभिषवाय याभिरिन्द्रो वर्धते वीर्याय वीरकर्मणे ॥

भा०—'अपां नपात्' इति देवतानाम । अपान्नपात् खलु तनूनप्त्रा देवतापदेन तुल्यो व्याख्यातो विज्ञेयः "अननन्तरायाः प्रजाया नामधेयम्" ( निरु० अ० ८ पा० २ श० ३ ख० ५ ) तर्हि 'अपान्नपात्' अपामनन्तरा प्रजा-अपां पौत्रो मध्यस्थानो देवः ।

मन्त्रार्थः—

यस्त्वं हेऽपान्नपात् ! इन्धनेन विना दीप्यसेऽपां मेघस्थानां मध्ये यं च मेधाविनो जना यज्ञेषु विविधयजनीयेषु श्रेष्ठकर्मसु स्तुवन्ति प्रशंसन्ति यं गृहीत्वा प्रयोगकरणाय । सोऽपान्नपात्—अपां पौत्र ! ( Lightning ) अपां मेघो भवति मेघे विद्युद्देवः प्रादुर्भवति, विद्युद्देवोऽपान्नपादस्मभ्यं मधुमतीरपः स त्वं देव ! देहि, अभिषवाय सोमाद्योषधिषु रसप्रवाहाय रससम्पादनाय याभिरद्भिरिन्द्रो जीवात्मा "इन्द्रियमिन्द्रलिङ्गम्...." ( अष्टा० ५ । २ । ९३ ) वर्धते शरीरस्य वृद्धिमाप्नोति स्वयं च विकासं प्राप्नोति वीर्याय वीरकर्मणे पुरुषार्थकरणाय ॥

अत्र मेघस्थो विद्युद्देवो मध्यस्थान एवापान्नपात् । अन्यत्र च वेदे "हिरण्यरूपः स हिरण्यसन्दृगपां नपात् सेदु हिरण्यवर्णः ।" ( ऋ० २ । ३५ । १० ) वस्तुतस्तु विद्योतनधर्मवान् विद्युद्गर्भोऽपां नपात् "अपां नपादा ह्यस्थादुपस्थं

* 'दीप्यते' पाठो होशियारपुरीय वि० वै० शोधसंस्थानपुस्तकालयस्य १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्)

जिह्मानामूर्ध्वो विद्युतं वसानः ।" ( ऋ० २ । ३५ । ९ ) स विदुषां प्रयोग-विषयो विद्वद्भिराविष्करणीयः ।

तस्यादेवतात्वे प्रयोगाः "अपां नपाद् यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीददृत्वियः ।" ( ऋ० १ । १४३ । १ ) इति–अग्निदेवत्ये विशेषणत्वेन । तथा "अपां नपातमवसे सवितारमुपस्तुहि ।" ( ऋ० १ । २२ । ६ ) इति सवितृदेवत्ये ॥

यमः ॥ १२ ॥

यमो यच्छतीति सतः ॥ १९ ॥

तस्यैषा भवति—

"परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥" ( ऋ० १० । १४ । १ )

परेयिवांसं पर्यागतवन्तं प्रवत उद्वतो निवत इति । अवतिर्गतिकर्मा, बहुभ्यः पन्थानमनुपस्पाशयमानं वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्येति, दुवस्यती राध्नोतिकर्मा ॥

भा०—'यमः' मध्यस्थानो देवः । स यच्छति यमयत्युपरमयति जीवनं जीवनवतां जङ्गमस्थावराणाम् "यम उपरमे" ( भ्वादि० ) ततः पचाद्यच् । स चान्तकालात्मको वायुः, विनाशकः कालप्रवाहो वा । तस्य मन्त्रः "परेयिवांसं प्रवतो...." इति ।

मन्त्रार्थः—

'प्रवतः' इत्यत्र 'प्रवतः, उद्वतः, निवतः' इति त्रीणि पदानि समाविशन्ति । "अव रक्षणगति...." ( भ्वादि० ) गत्यर्थोऽत्राभीष्टः । 'प्र, उद्, नि' इत्युपसर्गेभ्यो धात्वर्थे वतिः प्रत्ययः "उपसर्गाच्छन्दसि धात्वर्थे" ( अष्टा० ५ । १ । ११८ ) अवधातोरर्थे वत्–प्रवतः, उद्वतः, निवतः–द्वितीयाबहुवचने । यद्वा 'प्र, उद्, नि' उपसर्गपूर्वकात्–अवधातोर्गत्यर्थात्–शतृप्रत्यये धातोरकारस्य लोपः, द्वितीया बहुवचने प्रयोगाः । एवं त्रिधान् प्राणिनः–उद्वतः–उत्कृष्टगतिकान् देवानृषीन्, प्रवतः प्रकृष्टगतिकान् धर्ममनुतिष्ठतो जनान्, निवतः–निकृष्टगतिं कुर्वतो जनांश्च परेयिवांसं पर्यागतवन्तं परिभूयागतवन्तं प्राप्तवन्तं बहुभ्यो योनिभ्यः

शरीरेभ्यो बहुषु विविधेषु योनिषु शरीरेषु वा जन्मधारणाय पन्थां पन्थानं मार्गमनुपस्पशानमनुपस्पाशयमानमनुसंश्लेषयमाणम् "स्पश ग्रहणसंश्लेषणयोः" ( चुरादि० ) "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्" ( कठो० ५ । ७ ) तं वैवस्वतं विवस्वान् सूर्यस्ततः प्रकटीभूतं कालात्मकं वायुं जीवनहेतुं जनानां जायमानानां सङ्गमनं सङ्गमनीयं सङ्गमनस्थानं वा, राजानं सर्वत्र राजमानं जायमानानामुपरि स्वामित्वं कुर्वाणं वा यमं हविषा युक्तेनौषधिहोमेनौषधसेवनेनान्नभोजनेन राध्नुहि साध्नुहि—अनुतिष्ठ, यथा शीघ्रं स न मारयेत् ॥

सूक्तेऽत्र "यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ...." ( ११ ) इत्युक्तं चतुश्चतुष्प्रहरयुक्तेऽहोरात्रे तस्य श्वानौ चतुरक्षौ ।

निरुक्तयः—'अनुपस्पशानम्' पदपाठे—'अनुऽपस्पशानम् ।' 'अनु' उपसर्गात् स्पश ग्रहणसंश्लेषणयोः" ( चुरादि० ) लिटि कानच्प्रत्ययान्तः प्रयोगः । यथाऽन्यत्र वेदे "गाः पस्पशानस्तविषीरधत्त" ( ऋ० १० । १०२ । ८ ) ॥

अग्निरपि यम उच्यते ॥ २० ॥

तमेता ऋचोऽनुप्रवदन्ति—

"सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत् त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥" ( ऋ० १ । ६६ । ४ )

"तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ।"
( ऋ० १ । ६६ । ५ ) इति द्विपदाः ।

सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत् त्वेषप्रतीका भयप्रतीका बलप्रतीका यशःप्रतीका महाप्रतीका दीप्तिप्रतीका वा ।

यमो ह जात इन्द्रेण सह सङ्गतः ।

"यमाविहेह मातरा" ( ऋ० ६ । ५९ । २ ) इत्यपि निगमो भवति ।

यम एव जातो यमो जनिष्यमाणो जारः कनीनां जरयिता कन्यानां पतिजनीनां पालयिता जायानाम् । तत्प्रधाना हि यज्ञसंयोगेन भवन्ति ।

"तृतीयो अग्निष्टे पतिः" ( ऋ० १० । ८५ । ४० )
इत्यपि निगमो भवति ।

तं वश्वराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयामेद्धं समिद्धं * भोगैः ॥

भा०—अग्निः खल्वपि यम उच्यते । 'सेनेव सृष्टामम्' इत्याद्या उक्ता ऋचस्तमनुप्रवदन्ति–अनुमोदन्ते ।

'सेनेव सृष्टामम्' इति मन्त्रस्यार्थः—

सेनापतिना सृष्टा प्रेरिताऽऽदिष्टा यथा सेना, अथवाऽस्तुः क्षेप्तुः–त्वेषप्रतीका दीप्तिरूपा भयरूपा बलरूपा प्रभावरूपा यथा दिद्युद् वज्रशक्तिः शत्रुषु–अमं भयं बलं वा दधाति, स एषोऽग्निर्यमो जातो जनित्वं जनित्वो जनिष्यमाणः सन् भयं स्वबलं वा दधाति–अयजमानमन्यथा प्रयोक्तारं प्रति । कनीनां कन्यानां जारो विवाहसंस्कारे वैवाहिकोऽग्निः कन्यानां कन्यात्वं निवर्तयति भार्यात्वं जायात्वं वा सम्पादयति तस्मात् स कनीनां कन्यानां जनीनां जायानां पतिश्च भवति विवाहोत्तरकालं स एवाग्निर्गृहे गृहपतिर्गार्हपत्योऽग्निर्वोच्यते तस्या गृहपत्नीत्वं सम्पादयति "पत्युर्नो यज्ञसंयोगे" ( अष्टा० ४ । १ । ३३ ) अग्निप्रधानाः पत्न्यो भवन्ति, यतो यज्ञसंयोगात् पत्नी भवति यज्ञाग्नेः संयोगस्तया कृतस्तस्मात् पतिः पालयिता जायानामग्निः । यमोऽग्निर्जातः खल्विन्द्रेण विद्युद्देवेन सह सङ्गतः, सूर्यात् तयोरुत्पत्तिर्भवति । उक्तं यथा 'यमाविहेह मातरा' ।

'यमाविहेहमातरा' इति समग्रमन्त्रस्तदर्थश्च—

बळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥

हे इन्द्राग्नी विद्युदग्नी बट्–इत्था सत्यं हि सत्यं खलु पनिष्ठोऽतिशयेन स्तुत्यो महिमा–आ चार्थे, अथ च वां युवयोर्जनयिता समान एकः सूर्यः, युवं युवां यमौ भ्रातरौ–इह–इह मातरौ–इह पृथिव्यामिहान्तरिक्षे मध्यस्थाने मातारौ ययोस्तौ तथाभूतौ स्थः ॥

• मन्त्रे यदुक्तं 'पतिर्जनीनां तद्यज्ञसंयोगेन तूपपद्यते परन्तु साक्षादपि 'तृतीयो

---

* 'समृद्धम्' इति पाठो होशियारपुरीय वि० वै० शोध संस्थान पुस्तकालयस्य १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्)

अग्निष्टे पतिः' इति स्त्रीणां पतिरग्निर्भवतीत्यत्र प्रमाणरूपेणोपस्थापितो मन्त्रो यास्केन ॥

'तृतीयो अग्निष्टे पतिः' इति समग्रमन्त्रस्तदर्थश्च—

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥

प्रथमो देवः सोमश्चन्द्रमाः "चन्द्रमा वै सोमः" ( कौ० १६ । ५ ) शैशवे काले कन्यां विविदे प्राप्नोति—तस्यां किशोरीत्वं विदधाति । उत्तरो देवो गन्धर्वो वातः "वातो गन्धर्वः" ( शत० ९ । ४ । १ । १० ) तां कन्यां विविदे प्राप्नोति—तस्यां सुकुमारीत्वं प्रेरयति—अल्पोपजातपुरुषसम्भोगेच्छावतीत्वं प्रवेशयति तां रजस्वलां करोति वातस्य रोमहर्षकारित्वात् । तदनन्तरं हे कन्ये ! तृतीयस्तव पतिरग्निः—अग्निस्त्वयि स्त्रीत्वं प्रतिष्ठापयति त्वां पूर्णोपजातपुरुषभोगेच्छावतीं सम्पादयति विवाहसंस्कारे पत्नीत्वं प्रसाधयति । तुरीयश्चतुर्थः पतिस्तव मनुष्यजाः—मनुष्यजातः परम्परातो मनुष्यकुले जातो भवति ॥

'सेनेव सृष्टामम्....यमो ह जातो....' इत्युक्तप्रसङ्गे यमोऽग्निरस्तीति स्पष्टं कर्तुं यत्तदग्निमा खल्वृगुदाहृता यास्केन "तं वश्चराथा...." तस्याः किलार्थः प्रदर्श्यते—

तं यमनामतः प्रचर्चितमग्निं वस्त्वं वचनव्यत्ययेन, चराथा चरति गच्छतीति चरथो जङ्गमो गवादिः पशुः 'चर गतौ' धातोः 'अथन्' प्रत्यय औणादिकः "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३५ ) इति प्रत्ययादेर्दीर्घश्च, पुनस्तृतीयास्थाने "सुपां सुलुक्...." (अष्टा० ७ । १ । ३९ ) इत्यनेन—आकारादेशः । चरथया चरन्त्या जङ्गमया पश्वाहुत्या पशोः सकाशात् प्राप्तयाऽऽहुत्या "चरथः पशुस्तत्प्रभवैर्हृदयादिभिः" ( सायणः ) यदि 'तत्प्रभवः' मुख्यार्थस्तेन तत्प्रभवं घृतं ग्रहीतुमुचितम् । पुनश्च वसत्या निवसन्त्या—औषधाहुत्या खल्विद्धं समिद्धं सम्यग् दीप्तं यमम्—इति कथनेऽग्निरेव यमशब्देनात्र लक्षितोऽग्निरेव घृताहुत्या तथौषधाहुत्या समिद्धो भवति, यममग्निं वयमस्तं न गावो नक्षन्ते—यथा गावोऽस्तं गोव्रजं नक्षन्ते—आप्नुवन्ति तथा समिद्धं भोगैर्हेतुभिराप्नुयामः "नक्षति व्याप्तिकर्मा" ( निघं० २ । १८ ) ।

मित्रः ॥ १३ ॥

मित्रः प्रमीतेस्त्रायते । सम्मिन्वानो द्रवतीति वा । मेदयतेर्वा ॥ २१ ॥

तस्यैषा भवति—

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥" ( ऋ० ३ । ५९ । १ )

मित्रो जनानायातयति प्रब्रुवाणः* शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं च मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति। कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दानकर्मा ॥

भा०—'मित्रः' इति देवतापदम्। प्रमीतेः प्रमरणात् त्रायते "मीञ् हिंसायाम्" ( क्र्यादि० ) क्विपि मीः प्रमरणं यथा भीः—भयम्। 'मी' उपपदात् "त्रैङ् पालने" ( भ्वादि० ) ततः "सुपि स्थः" ( अष्टा० ३ । २ । ४ ) 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति धातुविकल्पेन कः। यद्वा 'सम्मिन्वानो द्रवति' "मिञ् प्रक्षेपणे" ( स्वादि० ) "मिवि सेचने" ( भ्वादि० ) वृष्टिजलं सम्यक् मिन्वानः प्रक्षिपन् प्रेरयन् वृष्टिजलेन भूमिं सिञ्चन् वा द्रवति। 'मिन्वानः' उपपदे 'द्रु गतौ' ततो डः प्रत्ययः 'मिन्वानः' इत्यस्य 'मि' भावः 'द्रु' इत्यस्य 'त्र' भावः, मित्रः। मेदयतेः "ञिमिदा स्नेहने" ( भ्वादि० ) ततः "अमिचिमिशसिभ्यः क्त्रः" ( उणा० ४ । १६४ ) इति धातोर्बाहुलकात्, धातोरन्त्यलोपश्च बहुलादेव।

मन्त्रार्थः—

मित्रः Radiation Pressure (Causing repulsion and attraction as in a system of Induction machines with maker and brakes) वृष्टेरनन्तरं प्रब्रुवाणः प्रकृष्टं शब्दं कुर्वाणः प्रमरणात् त्रायमाणः, आर्द्रतां सिञ्चन् स्नेहमयः प्रवहमाणो वायुर्जनान् समन्ताद् यातयति प्रयत्ने प्रेरयति, इदानीं वृष्टिः समाप्ता यूयं जनाः स्वस्वकार्यं कुरुत विशेषतः कृषकान् प्रेरयति क्षेत्राणि कर्षत विलिखत बीजं वपत। मित्रः स पृथिवीं पृथिवीस्थान्

---

* 'ब्रुवाणः' इति पाठो होशियारपुरीय वि० वै० शोधसंस्थानपुस्तकालयस्थ १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) ६८४७ इति संख्याकायां प्रतिलिप्यां तु 'प्रब्रुवाणः'।

प्राणिनो दाधार धारयति स्वस्निग्धप्रवाहेण जीवनप्रदेन वृष्टेरनन्तरं द्यां च धारयति द्युलोकं निर्मलं कृत्वा वृष्टेरनन्तरं द्युस्थानानि ग्रहनक्षत्राणि सम्यग् दृष्टिपथानि करोति । आकाशीयपक्षिणश्च निर्बाधान् करोति । मित्रः स एव कृष्टीः कर्मवतो मनुष्यान् विकृष्टदेहान् विकसितदेहान्—उत्कृष्टदेहान् वा "कृष्टयो मनुष्यनाम" (निघं० २ । ३) अनिमिषमभिचष्टेऽभिविपश्यति—आभिमुख्येन लक्षयति हि निरन्तरं कर्मकरणाय यदेते कृष्टयः कर्मवन्तः कर्मशीलाः कर्मठाः कर्म कुर्वन्तु, मनुष्या एव कर्मवन्तोऽन्ये तु भोगवन्तो भोगयोनय एव, तस्मात् तस्मै 'मित्राय हव्यं घृतवज्जुहोत' इति वचनं व्याख्यातं विज्ञेयमस्य सौगम्यात् । घृतसहितं हव्यं जुहुत दत्ताऽग्नौ क्षिपत यूयं मनुष्याः, तेन सोऽतिहितकरो भविष्यति गृहेषु क्षेत्रेषु च ।

निरुक्तयः—कृष्टयः कर्मवन्तः, कृष्टं कृषिकर्म, अत्र सामान्येन कर्मवाचकः । यद्वा 'कृञ् करणे' धातोः क्तप्रत्यये 'षुक्' आगमश्छान्दसः । कृष्टं कृतं कर्म, यथा "कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः" ( अथर्व० ७ । ५० । ८ ) तत् कृष्टं कर्म यस्य स कृष्टिः, छान्दसो मत्वर्थे "लुगकारेकाररेफाश्च वक्तव्याः" वा० ( अष्टा० ४ । ४ । १२८ ) 'इः' प्रत्ययः । यद्वा 'विकृष्टदेहाः' 'वि' अत्र 'उद्' इत्यस्यार्थे—उत्कृष्टदेहाः ।

मित्रस्यादेवतात्वे प्रयोगाः "अचिक्रदद्वृषा हरिर्महान् मित्रो न दर्शतः ।" ( ऋ० ९ । २ । ६ ) इत्युपमायां पवमानसोमदेवत्ये । "देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।" ( ऋ० १ । ३६ । ४ ) अग्निदेवत्ये नामधेयेन प्रयुक्तः । रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे । पवमानस्य मरुतः ॥" ( ऋ० ९ । ६४ । २४ ) पवमानसोमदेवत्ये सोमपानस्य कर्तृषु नामधेयेन प्रयुक्तः ।

कः ॥ १४ ॥

कः कमनो वा, क्रमणो वा, सुखो वा ॥ २२ ॥

तस्यैषा भवति—

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥" ( ऋ० १० । १२१ । १ )

हिरण्यगर्भो हिरण्यमयो गर्भो हिरण्यमयो गर्भोऽस्येति वा । गर्भो गृभेर्गृणात्यर्थे, गिरत्यनर्थानिति वा । यदा हि

स्री गुणान् गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति, समभवदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातम्। विधतिर्दानकर्मा।

भा०—'कः' इति देवतापदम्। कः कमनः कामिनां कामस्य पूरकः कामः पूर्यते यमाश्रित्य स कमनः कः। "कमु कान्तौ" (भ्वादि०) ततो डः प्रत्ययः कः। यद्वा क्रमणः क्रममाणो मध्यस्थानः सन्नपि सर्वत्र त्रिषु स्थानेष्वपि यः क्रमते, "क्रमु पादविक्षेपे" (भ्वादि०) ततो डः प्रत्ययः, क्रमधातोः—रेफस्य लोपः। अथवा सुखः—इत्यर्थप्रदर्शनम् "सुख तत्क्रियायाम्" (चुरादि०) ततः पचादिलक्षणोऽच् प्रत्ययः। स इत्थम्भूतः कामस्य पूरयिता लोकत्रयस्पर्शी सुखयिता मध्यस्थानः कः। स च "प्रजापतिरब्रवीदथ कोऽहमिति यदेवैतदवोच इत्यब्रवीत् ततो वै को नाम प्रजापतिरभवत् को वै नाम प्रजापतिः (ऐ० ३।२१) "प्राणो वाव कः" (जै० उ० ४। २३। ४) अनिर्वचनीयस्वरूपवान् विश्वस्य प्राणात्मकः सूत्रात्मा 'कः' इति देवता।

मन्त्रार्थः—

अग्रे प्राक्सृष्टेर्यः 'कः' इति नामको देवो हिरण्यगर्भो हिरण्यमयो गर्भो यद्वा हिरण्यमयो गर्भोऽस्येति हिरण्यमयगर्भवान् तत्राहिरण्यं नासीत् तदा त्वहिरण्यमनर्थं निगरितवानासीत्। स भूतस्य जातः—जातस्योत्पन्नमात्रस्य षष्ठीस्थाने प्रथमा व्यत्ययेन, एक एव पतिः पाता रक्षक आसीत् तस्मिन्नेव सर्वभूतजातं धृतमासीत्। स एवेदानीं सर्वानुत्पाद्य स्वान्तरतो बहिर्निःसार्य मध्यमे स्थाने स्थितः पृथिवीमन्तरिक्षं दाधार धारयति "पृथिवी—अन्तरिक्षनाम" (निघं० १। ३) द्यां द्युलोकं धारयति—उतापीमां भूमिं प्रसिद्धां पृथिवीं च धारयति, तथाभूताय कस्मै देवाय विश्वस्य प्राणभूताय कामानां पूरकाय सर्वत्र गमनशीलाय सुखप्रदाय हविषा हव्यादनीयाभ्यां परिचरेम सेवेमहि। तस्मै हव्यादनीये दद्मः॥

निरुक्तयः—'गर्भः' गृभेः—गृभ गृणात्यर्थे—स्तुतौ, वैदिको धातुर्भवेत्, वेदे सन्ति प्रयोगा प्रभूताः, तद्यथा "यज्ञियासः प्र सू नयन्त गृभयन्त इष्टावश्वासो न...." (ऋ० १। १४८। ३) यज्ञियासः—ऋत्विजोऽग्निमिष्टौ गृभयन्तः स्तुवन्तो नयन्ते। "इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णान्त्यश्वम्।" (ऋ० १। १६२। १५) "अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया। गृभ्णन्ति जिह्वया ससम्।" (ऋ० ८। ७२। ३) ससं जिह्वया वाण्या

गृभ्णन्ति स्तुवन्ति । अथवा गर्भः—गृभेः—ग्रहधातोः कृतसम्प्रसारणात्, "ह्रग्रहो-र्भश्छन्दसि" वा० ( अष्टा० ३ । १ । ८४ ) कर्मणि घञ् प्रत्ययः । यद्वा गिरत्यनर्थान् "गॄ निगरणे" ( तुदादि० ) ततः "अर्तिगॄभ्यां भनन्" ( उणा० ३ । १५२ ) गर्भः । हिरण्यमयगर्भस्य सम्मुखं नानर्थोऽन्धकारस्तिष्ठति स निगिरति तम् । प्रसङ्गात् स्त्रीगर्भविषये किमप्युच्यते—यदा खलु स्त्री गुणान्—पुरुषस्थान्—अस्थिस्नायुमज्जात्मकान् गुणान् गृह्णाति, गुणाश्चास्या गृह्यन्ते पुरुषेण तच्छुक्रेण स्त्रीगुणास्त्वङ्मांसरुधिरात्मका गुणा गृह्यन्ते तदा गर्भः सम्भवति ।

अस्यादेवतात्वे प्रयोगाः—"को अस्मै वासः पर्यदधात् को अस्यायुरकल्पयत् । बलं को अस्मै प्रायच्छत् को अस्याकल्पयज्जवम् ॥" ( अथर्व० १० । २ । १५ ) इति पुरुषदेवत्ये विशेषणत्वेन । "को अद्धा वेद क इह प्र वोचत् कुत आजाता कुत इयं विसृष्टिः ।" ( ऋ० १० । १२९ । ६ ) भाववृत्तदेवत्ये जिज्ञासायाम् । "को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः । कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥" ( ऋ० १ । ८४ । १८ ) इतीन्द्रदेवत्ये—अनिर्वचनीयस्य जिज्ञासायाम् ॥

सरस्वान् ॥ १५ ॥

सरस्वान् व्याख्यातः ॥ २३ ॥

तस्यैषा भवति—

"ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।
तेभिर्नोऽविता भव ॥" ( ऋ० ७ । ९६ । ५ )

इति सा निगदव्याख्याता ॥ २४ ॥

भा०—'सरस्वान्' इति देवतापदम् । सरस्वान् व्याख्यातः, सरस्वतीव्याख्यानेन तुल्यत्वाद् व्याख्यातो विज्ञेयः, तत्र "सर इत्युदकनाम तद्वती सरस्वती" (निरु० ९।२६) तथात्र 'सरस्वान्—उदकवान्' । तस्यर्क् "ये ते सरस्व····" अस्ति । पाठेनैव स्पष्टा खल्वृगेषा, तस्माद् यास्केन न व्याख्याता । अस्माभिरर्थोऽत्र दीयते ।

मन्त्रार्थः—

हे सरस्वन् ! उदकवन् ! देव ! Electrons (in atomic orbits) ये तव मधुमन्तो मधुरस्वादवन्तो घृतश्चुतः—उदकस्राविणः "घृतमुदकनाम" ( निघं० १ । १२ ) ऊर्मयोऽन्तरिक्षमाच्छादयन्तस्तरङ्गा धाराप्रवाहाः सन्ति तैरस्माकं रक्षिता भव ।

क्षारादिस्वादरहितोदकवन्तः स्वाभाविकमधुरस्वादूदकवन्तः प्रवाहा ये चोदकं स्रावयन्ति नीचैः, ते यस्य भवन्ति, स सरस्वान् मध्यस्थानः। पृथिवीस्थानः सरस्वान् पृथिवीस्थः समुद्रः, तस्य न मधुमन्तः प्रवाहा न च नीचैरुदकं स्रावयन्तः प्रवाहाः किन्तु क्षारास्तत्तथा एव सन्ति। तर्हीत्थं तुलनया—आकाशस्थो मध्यस्थानो समुद्रः सोऽत्र सरस्वान् देवोऽभिप्रेतः। पुनश्च यस्य विषयेऽन्यत्र वेदे सल्लक्तमस्ति "अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि।" ( ऋ० १। १६४। ५२ ) तथा "यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रत उपतिष्ठन्त आपः। यस्य व्रते पुष्टपतिर्निविष्टस्तं सरस्वन्तमवसे हवामहे॥" ( अथर्व० ७। ४०। १ ) अनयोः सरस्वद्देवत्ययोर्मन्त्रयोः सरस्वतः स्वरूपं प्रतिपाद्यते यत् स वृष्टिं करोति तथा सोऽपामाश्रयश्च। एवमिदं भवति प्रवहमाणानामभ्रदलानामाशय आलयो वा सरस्वान् देवः, अभ्रदलानि तस्योर्मयः।

अस्यादेवतात्वेन प्रयोगः "सरस्वान् धीभिर्वरुणो धृतव्रतः" ( ऋ० १०। ६६। ५ ) इति विश्वदेवत्ये। "दैवीर्विशः पयस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहुः॥" ( अथर्व० ९। ४। ९ ) इति—ऋषभदेवत्ये॥

इति दशमाध्यायस्य द्वितीयः पादः।

---

## तृतीयः पादः

---

विश्वकर्मा॥ १६॥

विश्वकर्मा सर्वस्य कर्ता॥ २५॥

तस्यैषा भवति—

"विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक्। तेषामिष्टानि समिषा मदन्ति सप्त ऋषीन् पर एकमाहुः॥" ( ऋ० १०। ८२। २ )

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्द्रष्टा भूतानां तेषामिष्टानि वा, कान्तानि वा क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्त ऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम्।

अथाध्यात्मम्—

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्दर्शयितेन्द्रियाणामेषामिष्टानि वा, क्रान्तानि वा, क्रान्तानि वा, गतानि वा, मतानि वा, नतानि वान्नेन सह सम्मोदन्ते यत्रेमानि सप्त ऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥

भा०—'विश्वकर्मा' इति देवतापदम् । विश्वशब्दोपपदात् कृञ्धातोः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति मनिन् प्रत्ययः विश्वस्य सर्वस्य जडजङ्गमस्य जगतः कर्ता, यद्वा विश्वस्याम्बरसस्यौषधिवनस्पतिप्रभृतेः कर्ता मध्यस्थान इन्द्रो विद्युद्देवो विश्वकर्मा ।

वक्तव्यम्—

विश्वकर्मदेवत्ये (ऋ० १०।८१,८२) इति सूक्ते स्तः, तयोरेकैकं मन्त्रं यास्को व्याख्यातवान् । पूर्वसूक्तस्य 'विश्वकर्मन् हविषा वावृधानः' इति मन्त्रस्तु तेन परमात्मपरो व्याख्यातः सृष्टिविषयमवलम्ब्य, उत्तरसूक्तस्य 'विश्वकर्मा विमना' इति मन्त्रो द्विधा व्याख्यातः—अध्यात्मपरः 'अथाध्यात्मम्' इत्युक्त्वा, अधिदैवतपरश्च । सूक्तद्वयमाध्यात्मिकं सृष्टिरचनापरं सत् परमात्मानं वर्णयति विश्वकर्मनामतः । परन्तु निघण्टौ 'विश्वकर्मा' इति शब्दस्य मध्यस्थानदेवतासु पठितत्वात् तस्य मध्यस्थानिका योजना यास्केन कृता या तत्रैव विकल्पमाश्रित्य । तत्रादित्यस्तु स्पष्टः, स च द्युस्थानो देवः, न मध्यस्थानः, तस्माद् दुर्गाचार्यस्कन्दस्वामिभ्यां निरुक्तभाष्यकाराभ्यां विश्वकर्मा वायुरस्तीत्युक्तम् "विश्वकर्मा सर्वस्य कर्ता वाय्वात्मकत्वात्" ( दुर्गाचार्यः ) "विश्वकर्मा मध्यस्थानो वायुः" ( स्कन्दस्वामी ) आदित्यः खलु विश्वकर्मणो भिन्नोऽधिदैवतेऽर्थे यतो दुर्गाचार्येण "यत्र पर एकमाहुः—मण्डलाधिष्ठातरि यो हिरण्यश्मश्रुः—हिरण्यकेशः" ( दुर्गाचार्यः ) अध्यात्मव्याख्याने द्वौ विश्वकर्माणौ जीवात्मपरमात्मानौ मतौ दुर्गाचार्येण "विश्वकर्मा सर्वस्य कर्ता प्रतिशरीरं क्षेत्रज्ञत्वेन वर्तमानः—पर एकमाहुः परतरे विश्वकर्मणि परमात्मनि तद्विज्ञानोपासनात्" ( दुर्गाचार्यः ) स्कन्दस्वामिनाऽऽधिदैविके व्याख्याने तु दुर्गाचार्यवत् स्वमतं प्रदर्शितं परन्त्वाध्यात्मिके व्याख्याने जीवात्मा विश्वकर्मा मतः "विश्वकर्मा क्षेत्रज्ञ आत्मा" ( स्कन्दस्वामी ) तद्भिन्नः परमात्माऽपि मतः किन्तु स परतरो विश्वकर्माऽस्तीति दुर्गाचार्यवन्नोक्तम् । पण्डितचन्द्रमणिकृते भाषाभाष्ये त्वाधिदैविकपक्षे विश्वकर्मा प्राणवायु-

स्तत्रैव आदित्यो यत्र प्राणवायोरभ्यासमनुतिष्ठतां जनानां शरीराणि किलादित्य-मण्डलं गच्छन्तीति मतम् । प्राणवायुर्नाधिदैविकः किन्त्वाध्यात्मिकोऽस्ति । आध्यात्मिकव्याख्याने तु विश्वकर्मा तदुपासकानां मुक्तात्मनां सूक्ष्मशरीराणि ब्रह्मलोके ब्रह्मणो लोके परमात्मनि खलु विचरन्ति । सायणाचार्येणाऽधिदैवते पक्षे विश्वकर्माऽऽदित्यः, आध्यात्मिकपक्षे विश्वकर्मा परमात्मा मतः "विश्वकर्मा विमना-अयं मन्त्रो द्विधा व्याख्येयः, प्रथमं दैवतमधिकृत्योच्यते विश्वकर्मा बहुविध-प्रकाशवृष्टिप्रदानादिकर्मणां कर्तादित्यः । अध्यात्मपक्षे विश्वकर्मा परमात्मा, अत्र निरुक्तमनुसन्धेयम् ।" ( सायणः—ऋ० १० । ८२ । २ ) सूक्तद्वयं परमात्मपरं व्याख्यातं सायणेन प्रस्तुतमेकं मन्त्रं विहाय निरुक्तकारस्य व्याख्यानवशात् । अस्तु । वेदे तु खल्वादित्य इन्द्रश्च 'विश्वकर्मा' इति नामत उक्तौ "विभ्राजञ्ज्योतिषा स्वरगच्छो रोचनं दिवः । येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥" (ऋ० १० । १७० । ४) इति सूर्याय विश्वकर्मा—इति प्रयोगः । "त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः । विश्वकर्मा विश्वदेवो महाँ असि ॥" ( ऋ० ८ । ९८ । २ ) इन्द्रस्तु मध्यस्थानोऽस्ति परन्तु नादित्यः, एकं च देवता-नामैकस्मिन् मन्त्रे द्वयोर्बहूनां वाभिधायकं न भवति । अधिदैविकपक्षे त्वादित्याद् भिन्न एव पदार्थः कल्पनीयो यो मन्त्रस्यात्र मध्यस्थाने देवता स्यात् । तदा वैदिकदृष्ट्या—इन्द्र एवोपपद्यते देवतापदभाक् । अध्यात्मपक्षे परमात्मा हि परमा देवता विश्वकर्मा । इति निश्चयोऽस्माकम् । इन्द्रः कथं कदा वा विश्वकर्मा भवतीत्युच्यते "इन्द्रो वै वृत्रं हत्वा विश्वकर्माऽभवत् प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माऽभवत् ।" ( ऐ० ब्रा० अ० १८, ख० ८ ) इन्द्रो विद्युद्देवो वृत्रं मेघं हत्वा नीचैः पातयित्वा वृष्टेरनन्तरं विश्वकर्मा भवति यतो वृष्टिजलादोषधय उत्पद्यन्ते वर्धन्ते तथा प्राणिनो जन्म च जीवनं च गृह्णन्ति तस्मात् स इन्द्रो विद्युद्देवो विश्वकर्मा भवति—इत्याधिदैविकपक्षे, तथा प्रजापतिः परमात्मा स्थावरजङ्गमाः प्रजाः सृष्ट्वोत्पाद्य विश्वकर्मा भवति—इत्याध्यात्मिकपक्षे । तेन 'विश्वकर्मा विमना' इति मन्त्रस्याधिदैविकपक्षे—इन्द्रो विश्वकर्मा देवता, तस्यैव मन्त्रस्याध्यात्मिकपक्षे प्रजापतिः परमात्मा विश्वकर्मा देवता शिष्टानां मन्त्राणां सूक्तद्वयगतानां च ।

अथेदानीं 'विश्वकर्मा विमना' इति प्रस्तुतो यास्कोदाहृतो मन्त्रो व्याख्यायते ।

आधिदैविकपक्षे—

विश्वकर्मा मध्यस्थान इन्द्रो विद्युद्देवः (atoms) विमनाः—विभूतमनाः—विभूतानि विविधानि मनांसि यस्मिन्—आश्रितानि सन्ति मनुष्यादीनां वृष्टितो

मनोवाञ्छितानि—अन्नादीनि भोज्यादीनि वस्तूनि प्राप्यन्ते हि यतः । स विमनाः—भात्—अथ च स विहायाः—व्याप्ता सौक्ष्म्येणान्तर्भूतत्वेन वाऽऽप्ता व्याप्ता प्रापकः, धाता धर्ता—अन्तरिक्षस्य, विधाता निर्माता—अन्नादीनामुतापि परमा सन्दृक् परमः सन्द्रष्टा भूतानां जङ्गमानां सन्द्रष्टा सन्द्रष्टेव ज्योतिरात्मकत्वात्, अथ च तेषामिष्टानि वा कान्तानि कमनीयानि वा क्रान्तानि मार्गा वा गतानि लक्ष्याणि वा मतानि मननीयानि वाऽऽकर्षणानि वा, इषाऽद्भिः सह—आपोऽपि, इत्थं सर्वाणि सम्मदन्ति सम्मोदन्ते संहर्षयन्ति संविकसन्ति, कुत्र ? उच्यते—यत्र यस्मिन् द्युस्थानके सप्त ऋषीन् सप्त—ऋषीणानि दर्शनीयानि ज्योतींषि रश्मयः सन्ति तेभ्यः परः खल्वादित्योऽस्ति तानि ज्योतींषि रश्मय एतस्मिन्नादित्ये खल्वेकीभवन्ति तस्मिन्नादित्ये विकासङ्गतानि भवन्ति स आदित्य एव सृष्टेरन्तरं शरण्यः । इत्याधिदैविकोऽर्थः ।

आध्यात्मिकार्थः—

विश्वकर्मा प्रजापतिः परमात्मदेवो विमना विभूतमना अतिशयमननशक्तिमान्, विहायाः—व्याप्त व्यापको धाता जगतो धारयिता विधाता कर्मफलस्य प्रदाता परमा सन्दृक् परमः सन्दर्शयिता—इन्द्रियाणां गन्धादिग्रहणाय, एषामिन्द्रियाणां यानीष्टानि वा कान्तानि कमनीयानि वा नतानि धर्मा वा गन्धादिग्रहणप्रवृत्तय इत्यर्थः सन्तीति तानि सर्वाणीषाऽन्नेन सह सम्मदन्ति सम्मोदन्ते संहृष्यन्ति शुभं विकसन्ति यत्र सप्तऋषीन् परः—एकमाहुः—यस्मिन् विश्वकर्मणि प्रजापतौ परमात्मदेवे सप्त—ऋषीणानीन्द्रियाणि—पञ्चज्ञानेन्द्रियाणि नासिकाप्रभृतीनि मनो बुद्धिश्चेति सप्त किलैकी भवन्ति य एभ्यः परोऽतीन्द्रियो विश्वस्यात्मा विश्वकर्मा परमात्माऽस्ति ॥

तत्रेतिहासमाचक्षते—विश्वकर्मा भौवन सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार । तदभिवादिन्येषर्ग्भवति—

"य इमा विश्वा भुवनानि जुह्वत्" ( ऋ० १०।८१।१ )

इति ॥ २६॥

तस्योत्तरा भूयसे निर्वचनाय—

"विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥" ( ऋ० १० । ८१ । ६ )

विश्वकर्मन् हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥

भा०—'तत्र' इति सन्निहितार्थे, 'तत्राध्यात्मपक्षे खल्वितिहासमाचक्षते' दुर्गाचार्येण तत्र शब्देन सन्निहितोऽध्यात्मविषयोऽनुवर्तितः "यथा चेयमात्म-गतिवाचिका—ऋक्—तत्र—एतस्मिन्नर्थे—इतिहासमाचक्षते—आत्मविदः" (दुर्गाचार्यः) न ह्यध्यात्मगताविविहासो लौकिकः सम्भवति तत्खल्वलङ्कारमात्रमेव। भवतु किलालङ्कारः। यथात्र सूक्तयोर्विश्वकर्मणो गुणकर्माणि सन्ति तैस्तु स विश्वकर्मा परमात्मैव सर्वस्य जगतो होमं कर्तुं शक्नोति स्वात्मानं च प्रलये काले हुतवान् जीवात्मनां दृष्टितो हुतवानिव—विलुप्तो भवितुमर्हः, विश्वकर्मा परमात्माऽस्तीति तु श्वेताश्वतरोपनिषदि प्रतिपादितम् "मायां तु प्रकृतिं विद्यान्मायिनं तु महे-श्वरम्।....एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टो हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति" (श्वेताश्वतरो० ४।१०—१७) अन्तःसाक्ष्यं च विश्वकर्मणः परमात्मार्थत्वे "यतो भूमिं जनयन् विश्वकर्मा" (ऋ० १०। ८१। २)।

समग्रमन्त्रस्तदर्थश्च—

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥

यो होता—ऋषिः—यः प्रलयकाले होता—आदाता सर्वेषां द्रष्टा परमात्मा विश्वानि पृथिवीप्रभृतीनि लोकलोकान्तराणि स्वात्मनि होमयन् सन् विराजते सोऽस्माकं पिता स्वभावभूतया वाञ्छया द्रविणं बलमिच्छन् बलं प्रदर्शयन् "द्रविणं बलम्" (निघं० २। ९) प्रथमच्छत्—अवरान् प्रथमं जगत उपादानं यत् प्रथममेवा-च्छादयद् वर्तते तदुपादानं तथाऽवरान् तदनन्तरोत्पन्नान् पृथिव्यादीन्—आविवेश—आविष्टो वर्तते।

अथ 'विश्वकर्मन् हविषा०' इति मन्त्रस्यार्थः—

हे विश्वकर्मन्! परमात्मदेव! त्वं हविषाऽऽदानशक्त्याऽतिशयेन वृद्धि-माप्नुवन् पृथिवीं द्युलोकं च स्वयं यजस्व स्वस्मिन् सङ्गमय, पुनरन्ये जनाः सपत्नास्तव विरोधिनस्त्वां ये नोपासते संसारे हि लिप्ताः—बद्धाः—जीवात्मानः सन्ति तेऽभितो मुह्यन्तु प्रलयकाले नितान्तं मुग्धा भवन्ति लडर्थे लोट्, इहास्यां स्थितावस्माकं सूरिः—उत्पादको जनयिता पिता "सूङः क्रिः" (उणा० ४। ६४) ऐश्वर्यवान् भवान् परमात्मा भवतु।

अदेवतात्वे प्रयोगः "ध्रुवासि धरुणास्तृता विश्वकर्मणा। मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृंह ॥" ( यजु० १३ । १६ ) स्वयमातृण्णादेवत्ये * शिल्पिरूपेण नामधेयेन। "यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माण····सा नो भूमिर्वर्धयद्वर्धमाना ॥" ( अथर्व० १२ । १ । १३ ) इति भूमिदेवत्ये शिल्पिरूपेण नामधेयेन ॥

ताक्ष्यः ॥ १७ ॥

ताक्ष्यस्त्वष्ट्रा व्याख्यातः। तीर्णेऽन्तरिक्षे क्षियति तूर्णमर्थं रक्षति, अश्नोतेर्वा ॥ २६ ॥

तस्यैषा भवति—

"त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम्।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥"
( ऋ० १० । १७८ । १ )

तं भृशमन्नवन्तम्। जूतिर्गतिः प्रीतिर्वा। देवजूतं देवगतं देवप्रीतं वा। सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति। कमन्यं मध्यमादेवमवक्ष्यत् ॥ २८ ॥

भा०—'तार्क्ष्यः' इति देवतापदम्। तार्क्ष्यो व्याख्यातो विज्ञेयस्त्वष्ट्रा तुल्यः "तूर्णमश्नुते" ( निरु० ८ । १३ ) मध्यस्थानं क्षिप्रमश्नुते व्याप्नोति। तीर्णे प्रसृतेऽन्तरिक्षे क्षियति निवसति तार्क्ष्यः, तूर्णं क्षिप्रमर्थमर्थनीयमुदकं रक्षति स्वाधीने स्थापयति वर्षयितुम्, तूर्णं क्षिप्रमर्थमर्थनीयमुदकमश्नुते व्याप्नोति वर्षयितुम्। इति सर्वत्र 'तूर्णं' शब्दोपपदात् निवासार्थकात् क्षिधातोस्तथा रक्षधातोः 'अशूङ्व्याप्तौ' धातोश्च "अध्न्यादयश्च" ( उणा० ४ । ११२ ) इत्यनेन निपातनाद् यक्प्रत्ययान्तः सिद्धस्तत्र सर्वत्र 'तूर्णम्' इत्यस्य 'तार्' भावः। क्षिपक्षे यक् प्रत्ययो डित्, रक्षपक्षे यथास्वम्, अशपक्षे—उपधालोपः शकारस्य क्षकारादेशश्च निपातनात् कल्पनीयः।

मन्त्रार्थः—

त्यं तमवश्यं सु समीचीनं वाजिनं भृशमन्नवन्तं बह्वन्नस्य यन्निमित्तमुदकं तद्वन्तं बह्वन्नप्रदशक्तिमन्तं वा देवजूतं देवानां मध्यस्थानगतानां जूतं गमनं गतिः

* स्वयमातृण्णा सच्छिद्रा पाषाणमयी नैसर्गिकीष्टका लघ्वी शर्करा। गृहभूमिकायामास्तरणयोपयुक्ता लोके 'बजरी दूधी' उच्यते।

प्रीतिर्वा यस्मिन् भवति तथाविधं देवजूतं सहावानं सहस्वन्तं बलवन्तं रथानां देवरथानां मेघवलादीनां तरुतारं तारयितारं गमयितारमरिष्टनेमिमरिष्टोऽहिंसितव्यो नेमिर्वज्रो यस्य तम् "नेमिर्वज्रनाम" ( निघं० २ । २० ) पृतनाजं पृतनां संग्रामं जयतीति पृतनाजः—तं पृतनाजं पृतनाजितम् (Gravity) तार्क्ष्यं देवमिह कर्मणि स्वस्तये कल्याणाय—आह्वयेम । इति मध्यमाद् देवाद् भिन्नं कमेवं वदेद् ऋषिर्मन्त्रः । तार्क्ष्यः पक्षी गरुत्मान् गरुडभेदः सोऽत्र न भवितुमर्हति ॥

निरुक्तय:—'जूतं जूतिः' "जवति गतिकर्मा" ( निघं० २ । १४ ) ततो भावे क्तः, क्तिन् च । तरुतारम् "तॄ प्लवनसन्तरणयोः" ( भ्वादि० ) ततस्तृच्प्रत्यये "प्रसितस्कभित······तरुतृ······" ( अष्टा० ७ । २ । ३४ ) उडागमो निपात्यते छन्दसि । 'पृतनाजम्' "पृतनाः संग्रामनाम" ( निघं० २ । १७ ) तदुपपदात् 'जि जये' धातोः "अन्येष्वपि दृश्यते" (अष्टा० ३ । २ । १०१ ) इति डः प्रत्ययः ॥

तस्यैषाऽपरा भवति—

"स॒द्यश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इ॒व ज्योति॑षा॒पस्त॒तान॑ । स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते यु॒व॒तिं न शर्या॑म् ॥" ( ऋ० १० । १७८ । ३ )

सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥

मन्त्रार्थः—

भा०—यस्तार्क्ष्यः (Gravitation) सद्योऽपि यथावसरं तत्कालमेव शवसा बलेन "शव इति बलनाम" ( निघं० १ । १२ ) अपस्तनोति सूर्य इव ज्योतिषा यथा सूर्यो निजज्योतिषा पृथिवीस्थजलाशयेभ्योऽप आकृष्यान्तरिक्षे तनोति तथा स तार्क्ष्योऽन्तरिक्षात् पञ्च कृष्टीः पञ्च मनुष्यजातानि प्रति "कृष्टयो मनुष्याः" ( निघं० २ । ३ ) मनुष्यभेदा ये सन्ति "चत्वारो वर्णा निषादः पञ्चमः" ( निरु० ३ । ८ ) तान् प्रति वृष्टिरूपा अपस्तनोति पृथिव्यामिति यावत्, अस्य रंहिर्गतिः शतसानिनी सहस्रसानिनी शतस्थानानि सहस्रस्थानानि सम्भजमाना यद्वा शतादवैः सम्भजनीया सहस्रादवैः सम्भजनीया शतसहस्रशब्दावसंख्यातार्थद्योतकौ, असंख्यातामगतितुल्याऽस्ति तामेनां गतिं न वरन्ते स्म—न वारयन्ति नावरुन्धन्ति नावरोद्धुं शक्नुवन्ति के चन युवतिं न शर्यां यथा शरमयीमिषुं

धनुषो वियुक्तां बलवतीं सतीं न के धनावरोद्धुं शक्नुवन्ति लक्ष्यवेधनेन विना ॥

उभयोर्मन्त्रयोस्तार्क्ष्यस्य स्वरूपं यद् योऽन्तरिक्षेऽभ्रदलानां गतिप्रदोऽन्तरिक्षाच्च वृष्टिजलस्य पृथिवीस्थानं प्रति तनिता प्रेरयिता वायुविशेष इति निश्चयः । उक्तं च ब्राह्मणेषु "वायुर्वै तार्क्ष्यः" ( शां० ब्रा० ३० । ५ ) "अयं वै तार्क्ष्यो योऽयं वायुः पवते" ( ऐ० ब्रा०, पं० ४ । ख० २० ) स च-इन्द्रादिरिव स्वतन्त्रो देवो विश्वदेवेषु पठितः "स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः। स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥" ( ऋ० १ । ८९ । ६ ) ॥

मन्युः ॥ १८ ॥

मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा, मन्यन्त्यस्मादिषवः * ॥ २९ ॥

तस्यैषा भवति—

"त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ हर्ष॑माणासो धृषि॒ता म॑रुत्वः । ति॒ग्मेष॑व॒ आयु॑धा सं॒शिशा॑ना अ॒भि प्र य॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः ॥" ( ऋ० १० । ८४ । १ )

त्वया मन्यो सरथमारुह्य रुजन्ते हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः सन्नद्धा कवचिन इति वा ॥

भा०—'मन्युः' इति देवतापदम् । मनधातोर्दीप्त्यर्थात् "मन्यते कान्तिकर्मा" ( निघं० २ । ६ ) यद्वा क्रोधार्थात्, अथवा वधार्थात् "यजिमनिशुन्धिदसिजनिभ्यो युच्" ( उणा० ३ । २० ) वधार्थे कथमित्यत्रोच्यते मन्यन्त्यस्मादिषवः-अस्मात् किल मन्योर्निःसृता इषवः-इषव इव व्यवहाराः साक्षात् प्रहारा वा जनान् मन्यन्ति घ्नन्ति । आचार्येण वधार्थे मनधातुः परस्मैपदे मतः ।

मन्त्रार्थः—

हे मरुत्वः-मरुत्वन् मरुद्भिः सह वर्तमान मन्यो देव ! High (Electronic) Voltage (causing discharge of disrupted Electric particles) त्वया सह सरथमेकरथम्-आ-आरुह्य रुजन्तः शत्रूनिव मेघान् भञ्जन्तः

---

* इदं वचनं केनापि भाष्यकारेण न व्याख्यातम्, अस्य पाठोऽपि भिन्नभिन्न उपलभ्यते क्वचित् 'मन्युं त्वस्मात्' क्वचित् 'मन्युं त्यस्मात्' । अस्माकं सम्मतौ 'मन्यन्त्यस्मात्' इति पाठः स्यात्, यतः 'इषवः' इति बहुवचने प्रयुक्तानां कर्तॄणां बहुवचनिकया क्रियया भवितव्यम् ।

"रुजो भङ्गे" ( तुदादि० ) तस्य शतृप्रत्यये रूपम् । हृष्यन्तोऽन्यैरधर्षिता अनभिभूतास्तिग्मेषवस्तीक्ष्णवाणास्तीक्ष्णवाणवन्त आयुधानि शस्त्राणि संशिशानाः संशिश्यमानाः सम्यक् निश्यन्तस्तीक्ष्णीकुर्वन्तः "शो तनूकरणे" ( दिवादि० ) तस्य कानच्प्रत्यये रूपम् , अग्निरूपा अग्निकर्माणोऽग्निवत्तापकाः सन्नद्धाः सुरक्षिता कवचैः कवचिनो रक्षकलौहावरकोपेता नरो नरा इव ते हि मरुतोऽभिप्रयन्तु शत्रूनिव मेघानभिगच्छन्तु नीचैः पातनाय ।

मध्यस्थानस्य मन्यो स्वरूपमुक्तं रूपकालङ्कारेण यथा कश्चन राजा निजसैनिकैः समस्तशस्त्राणि धारयद्भिः सहैकस्मिन् महति रथे याने समारुह्य शत्रूनाक्राम्यति तथा मन्युर्मरुद्भिः सह मेघानाक्राम्यति यः स मन्युरस्ति मध्यस्थानभवः स विशिष्टावस्थां प्राप्त इन्द्रो विद्युद्देवोऽस्ति, यतोऽस्य सम्बोधनम् 'मरुत्वः' मरुत्वन्–इति क्रियते, इन्द्रो मरुत्वान् खल्वस्ति तद्यथा "यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ।" ( ऋ० १ । ८० । ११ ) "मरुत्वान् नो भवत्विन्द्र ऊती" ( ऋ० १ । १०० । १–१५ ) "मरुत्वन्तं हवामह इन्द्रमा सोमपीतये" ( ऋ० १।२३।७ ) "सं वो मदासो अग्मतेन्द्रेण च मरुत्वता ।" ( ऋ० १ । २० । ५ ) इन्द्र····मरुत्वते तुभ्यं राता हवींषि" ( ऋ० ३।३५।७ ) "इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे । यद् वा मरुत्वः ।" ( ऋ० १ । १०१ । ७–८ ) "इन्द्रं मरुत्व इह पाहि सोमं····" ( ऋ० ३ । ५१ । ७ ) यथा मध्यस्थान इन्द्रो मरुद्भिः सह मेघान् नीचैः पातयति तथा लोके राजा सैनिकैः सह शत्रून् नीचैः पातयेन्नाशयेद् यतो मनुष्यवद्देवताभिधानं वेदे मनुष्यास्तस्मिन् देवताभिधानेऽधिक्रियन्ते मनुष्यार्थं तत्र रूपकालङ्कारेण वर्णनं देवतानाम् ।

अस्यादेवतात्वे प्रयोगाः "न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः । अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ।" ( ऋ० ७ । ८६ । ६ ) इति वरुणदेवत्ये नामधेयत्वेन दोषरूपो मन्युः क्रोधः । "यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना ( ऋ० १।१३९।२ ) इति मित्रावरुणदेवत्ये नामधेयेन ॥

दधिक्राः ॥ १९ ॥

दधिक्रा व्याख्यातः ॥ ३० ॥

तस्यैषा भवति—

"आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषा-

पस्ततान सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥" ( ऋ० ४ । ३८ । १० )

आतनोति दधिक्राः शवसा बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसाः शतसा वाजी वेजनवान्-र्वरणवान् सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति ।

मधु धमतेर्विपरीतस्य ॥

भा०—'दधिक्राः' इति मध्यस्थानं देवतापदम् । दधिक्रा व्याख्यातः "दधत् क्रामति····" ( निरु० २ । २७ ) ।

मन्त्रार्थः—

दधिक्रा मध्यस्थानो देवः (Cyclone) शवसा बलेन सूर्य इव ज्योतिषा—अपः—आतनोति, यथा सूर्यः स्वेन ज्योतिषा रश्मिसमूहेन पृथिवीस्थजलाशयेभ्योऽप आकृष्यान्तरिक्षे समन्तात् तनोति प्रसारयति तथा दधिक्रा देवः स्वेन बलेनान्तरिक्षादपः पृथिव्याम् । पञ्च कृष्टीः—पञ्च मनुष्यान् ब्राह्मणक्षत्रियवैश्यशूद्रनिषादान् प्रति शतसाः शतस्थानानि सम्भजमानः सहस्रस्थानानि सम्भजमानः शतसहस्रासंख्यानि सम्भजमानस्तावच्छक्तिमान् सन् वाजी वेजनवान् चलनधर्मवान्—अर्वा—अश्व इव मेघोदकप्रेरणधर्मवान् स नोऽस्माकमिमानि वचनानि वृष्टिकामानि वचनानि स्तुत्यानि मध्वा मधुना—उदकेन "मधु—उदकनाम" ( निघं० १ । १२ ) सम्पृणक्तु संयोजयतु—उदकवृष्टिं कृत्वा सार्थकानि करोतु ॥

दधिक्रा मध्यस्थानो देवस्तार्क्ष्य इव वायुविशेषः परन्तु तद्भिन्नो विशेषतश्चलनशीलोऽन्धवातो भवति वर्षणात् पूर्वं वर्षणकाले च भवति वेगवान् ।

मधु "धमति गतिकर्मा" ( निघं० २ । १४ ) इति धमधातोर्विपरीतात् 'उः' प्रत्यय औणादिको बाहुलकात्, मधु—उदकम् ।

सविता ॥ ३० ॥

सविता सर्वस्य प्रसविता ॥ ३१ ॥

तस्यैषा भवति—

"सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥" ( १० । १४९ । १ )

सविता यन्त्रैः पृथिवीमरमयदनारम्भणे * ऽन्तरिक्षे

* 'अनालम्भने, अनालम्बने' इति क्वचित् ।

सविता यामदृंहदश्रमिवाधुक्षद् धुनिमन्तरिक्षे मेघं बद्धमतूर्त्ते बद्धमतूर्ण इति वात्वरमाण इति वा, सविता समुदितारमिति । कमन्यं मध्यमादेवमवक्ष्यत् ॥

भा०—'सविता' इति मध्यस्थानकं देवतापदम् । सविता सर्वस्य प्रसविता प्रेरयिता । "षू प्रेरणे" ( तुदादि० ) ततः 'तृचि' विकल्पत्वात्–इडागमो भवति "स्वरतिसूतिसूयतिधूञूदितो वा" ( अष्टा० ७ । २ । ४४ ) इत्यनेन ।

मन्त्रार्थः—

सविता देवो यन्त्रैर्नियमनकरणैर्नियन्त्रकसाधनैः पृथिवीमस्कम्भने निरालम्बनेऽन्तरिक्षेऽरम्णादरमयद् रमयति–अवलम्बयति–अवधारयति सूत्रैः कन्दुकमिवावलम्बयति, सविता द्यां द्युलोकमदृंहद् दृढमुत्तानयदुत्तानयति–उपरि तानयति, अथातूर्तेऽच्छेद्ये सूक्ष्मेऽचले वाऽन्तरिक्षमित्यन्तरिक्षे सप्तम्यर्थे द्वितीया, बद्धमवरुद्धं समुद्रं समुदितारं सम्यक् क्लेदयितारं मेघं धुनिं धूनयितव्यमश्वमिवाधुक्षदक्लेशयत् क्लेशयति भ्रमयति श्रान्तं करोति–अश्वारोही "धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु" ( भ्वादि० ) यद्वा "धुञ् कम्पने" ( स्वादि० ), अस्यैव रूपं स्यात् कुक् छान्दस आगमो धातोर्लुङि रूपम्, छान्दसः क्सश्च । अधूनयत्–धुनोति वा यथाश्वम् ।

एतादृशः सविता पृथिवीमवतोलयति द्युलोकमुत्तोलयति तथान्तरिक्षस्थं मेघं परिदोलयति क्षोभयति वर्षयितुं स मध्यमाद् भिन्नः कः स्याद् यमृषिर्मन्त्रोऽवोचत् कोऽपि न मध्यमाद् भिन्न इत्यर्थः । स चैतादृशः सविता धारणपालनशक्तिमान् विद्युन्मयो वायुः सविता (Ionophere) ।

अदेवतात्वे प्रयोगाः "युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति । ( ऋ० १।३४।१० ) इति–आश्विने । "ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।" ( ऋ० १ । ३६ । १३ ) इत्यग्निदेवत्ये–उपमायां नामधेयेन । "तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन ।" ( ऋ० १ । ११० । ३ ) इति–ऋभुदेवत्ये ॥

आदित्योऽपि सवितोच्यते, तथा च हैरण्यस्तूपे स्तुवोऽर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच ॥ ३२ ॥

तदभिवादिन्येषर्ग्भवति—

"हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् । एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥" ( ऋ० १० । १४९ । ५ )

हिरण्यस्तूपो हिरण्यमयस्तूपो हिरण्यमयः स्तूपोऽस्येति वा। स्तूपः स्त्यायतेः सङ्घातः। सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अन्ने अस्मिन्नेवं त्वाचन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम्॥

भा०—यदिदं सूक्तं हिरण्यस्तूप ऋषिर्द्रष्टाऽर्चन् प्रार्थयमानः प्रोवाच प्रवक्ति स्वान्तरिकभावनया प्रार्थयतेऽनुभति खल्वार्षदृष्ट्या तदस्मिन् सूक्ते हैरण्यस्तूपे सविता स्तुतो वर्णितः स आदित्योऽपि खलूच्यते तत्कथनपरा–ऋक्–एषा "हिरण्यस्तूपः सवितर्यथा…" इति।

वक्तव्यम्—"हैरण्यस्तूपे स्तुतोऽर्चन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच" इति पाठो नावश्यको निरुक्तबाह्यः खण्डितो वा वर्तते, यतोऽस्य सूक्तस्य हैरण्यस्तूप ऋषिर्न तु हिरण्यस्तूपः। प्रोवाच–प्रकृष्टमुक्तवानुच्चस्वरेण यद्वा प्रार्थनारूपेण गाढमनोभावनया वोच्चारितवान्, कदा? अर्चन्–अर्चनां स्तुतिं कुर्वन्। 'हिरण्यस्तूपः' हिरण्यमयः स्तूपः–तेजोमयस्तूपो यद्वा ज्योतिर्मयस्तूपः "तेजो वै हिरण्यम्" (तै० १।८।९।१) "ज्योतिर्वै हिरण्यम्" (शत० ४।३।१।२१) स्तूपः सङ्घातः समूहो वा, अग्नेर्यो ज्वालासमूहः स हिरण्यस्तूप, यद्वा हिरण्यमयस्तूपो ज्वालासमूहो यस्य ज्ञानविषयः स तथाविधो विद्वान् हिरण्यस्तूपः।

मन्त्रार्थः—

हे सवितः सूर्य! यथा त्वमाङ्गिरसोऽग्नेरुत्पन्नः "अङ्गिरा वा अग्निः" (शत० ६।४।४।४) "तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि।" (ऋ० ६।१६।११, यजु० ३।३) हिरण्यस्तूपो हिरण्मयस्तूपो ज्वालासमूहस्तस्य वेत्ता वा त्वां जुह्वे गृहीतवान् "हु दानादनयोः आदाने च" (जुहोत्यादि०) आदानेऽर्थेऽत्र। तथा अस्मिन् वाजेऽन्नेऽदनीयेऽद्यमाने–ओषधीनां हूयमाने यज्ञे यत्र देवा अदन्ति हवींषि तत्र स्वरक्षणाय वन्दमानस्त्वां स्तुवन् तव गुणान् वर्णयन् सोमस्यांशुं सोमस्य रसमिव स्वात्मानं तुभ्यं समर्पयन् प्रतिजागर्मि। यथाऽग्निना त्वत्तस्तेजः प्राप्तं तथाहमपि त्वत्तस्तेजः प्राप्स्यामि, उक्तं यथा "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।" (ऋ० ३।६२।१०, यजु० ३।३५)

'स्तूपः' "स्त्यै शब्दसंघातयोः" (भ्वादि०) ततः पः प्रत्यय औणादिको बाहुलकात् "स्तुवो दीर्घश्च–पः" (उणा० ३।२५) 'स्त्यै' इत्यस्य 'स्तू' भावश्च॥

त्वष्टा॥ २१॥

त्वष्टा व्याख्यातः॥ ३३॥

तस्यैषा भवति—

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान । इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥" ( ऋ० ३ । ५५ । १९ )

देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन बहुधा चेमा जनयतीमानि च सर्वाणि भूतान्युदकान्यस्य महच्चास्मै देवानामसुरत्वमेकं प्रज्ञावत्त्वं वानवत्त्वं वा । असुरिति प्रज्ञानाम, अस्यत्यनर्थान्, अस्ताश्चास्यामर्थाः । असुरत्वमादिलुप्तम् ।

भा०—'त्वष्टा' मध्यस्थानं देवतापदम् । त्वष्टा व्याख्यातः "त्वष्टा तूर्णमश्नुते" ( निरु० ८ । १३ ) तस्य "देवस्त्वष्टा⋯" इति मन्त्रः ।

मन्त्रार्थः—

त्वष्टा देवो मध्यस्थानः खलु सविता प्रेरयिता सर्वरूपः सर्वान् रूपयति व्यक्तीकरोति यः स तथाभूतः प्रजाः प्रजायमानान् जडजङ्गमान् पोषति पुष्णाति रसानुप्रदानेनावश्यायात्मकं रसं जडजङ्गमेष्वनुप्रवेशयति हि, स पुरुधा बहुधा बहुप्रकारेण जनयति चेमानि सर्वाणि भुवनानि भूतानि–उदकानि "भुवनं भूतं चोदकनाम" ( निघं० १ । १२ ) अथ चास्य–अस्मै देवानां यत् खलु महत् प्रज्ञावत्त्वम् "असुरः प्रज्ञानाम" ( निघं० ३ । ९ ) प्रज्ञावत्त्वं प्रज्ञानवत्त्वं चेतनावत्त्वं यतोऽस्यत्यनर्थान् निरस्यति बहिः क्षिपति, अर्था लाभा अस्यां क्षिप्ता निहिताः सन्ति । यद्वा–असुरत्वं प्राणवत्त्वं यतोऽसुः प्राणस्ततो मतुबर्थे रः, तेन प्राणवत्त्वं जीवनवत्त्वम् । यद्वा–असुरत्वं लुप्तादिकम्, वसुमत्त्वं वकारे लुप्तेऽसुरत्वं वसुरत्वं वसुमत्त्वं वाऽर्पितमस्ति देवानां मध्ये त्वष्टा देव एव प्रज्ञावत्त्वस्य प्राणवत्त्वस्य वसुमत्त्वस्य पात्रं स एव प्राणिषु चेतनवत्त्वस्य प्राणवत्त्वस्य वसुमत्त्वस्य कारणम् ॥

अवश्यायरूपेण वर्तमानानां जलानामुत्पादकः (Primodial Eneigy) तेनावश्यायेन–ओषधिवनस्पतीनामन्येषां प्राणिनां च पोषको यथास्थानमुत्पादकः प्राणिषु चेतनत्वस्य प्राणनक्रियायाः, वसुमत्त्वस्य च सञ्चारको मध्यस्थानो देवस्त्वष्टाऽस्तीति परिभाष्यते तद्विषये, भवतु स स्थिरगुणः सोम्यवायुः ।

अदेवतात्वे प्रयोगनिदर्शनम् "अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं

ततन्थ ।" ( ऋ० १ । ३२ । २ ) इति–इन्द्रदेवत्ये । "त्वमग्ने त्वष्टा विधते सुवीर्यम्....." ( ऋ० २ । १ । ५ ) इति–अग्निदेवत्ये सूक्तेऽग्नेर्विशेषणत्वेन । "उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥" ( ऋ० १ । २० । ६ ) इति–ऋभुदेवत्ये नामधेयेन ॥

वातः ॥ २२ ॥

वातो वातीति सतः ॥ ३४ ॥

तस्यैषा भवति—

"वात आवातु भेषजं शम्भु मयोभु नो हृदे ।
प्र ण आयूंषि तारिषत् ॥" ( ऋ० १ । १८६ । १ )

वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय प्रवर्धयतु च आयुः ॥

भा०—'वातः' इति मध्यस्थानदेवतापदम् । वातो वाति–इति कर्तृकारकः । "वा गतिगन्धनयोः" ( अदादि० ) ततः "हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्" ( उणा० ३ । ८६ ) तन् प्रत्ययः ।

मन्त्रार्थः—

वातो देवो नोऽस्माकं हृदे हृदयाय शम्भु मयोभु भेषजं शं रोगाणां शमनं भावयन्तीति तथाभूतानि रोगाणां शमयितॄणि तथा मयोभु मयसः सुखस्य भावयितॄणि भैषज्यानि–औषधानि–ओषधीनां गुणजातानि किलावातु समन्तात् प्रवाहयतु प्रापयतु, "शमनं रोगाणाम्" ( निरु० ४ । २१ ) "मयः सुखनाम" ( निघं० ३ । ६ ) एवं स नोऽस्माकमायूंषि प्रतारिषत् प्रवर्धयेत् ॥

यो देवो मध्यस्थानाद् वृष्ट्या सहास्माकं रोगान् शमयन् तथास्मभ्यं स्वास्थ्यं सुखं दीर्घायुष्ट्वं च प्रयच्छन् वाति स वातोऽस्ति ।

अदेवतात्वेन प्रयोगाः "नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।" ( ऋ० १ । ११६ । १ ) इत्याश्विने सूक्ते । "अयं चिद्वातो रमते परिज्मन्" ( ऋ० २ । ३८ । २ ) सवितृदेवत्ये नामधेयेन । "तस्मा एतमन्तरिक्षे न वातमिन्द्र सोमैरोर्णुत जूर्न वस्त्रैः । ( ऋ० २ । १४ । ३ ) इतीन्द्रदेवत्ये–उपमायाम् ॥

अग्निः ॥ २३ ॥

अग्निर्व्याख्यातः ॥ ३५ ॥

तस्यषा भवति—

"प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।

मरुद्भिरग्न आ गहि ॥" ( ऋ० १ । १९ । १ )

तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति ।

कमन्यं मध्यमादेवमवक्ष्यत् ॥ ३६ ॥

तस्यैषापरा भवति—

"अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।

मरुद्भिरग्न आगहि ॥" ( ऋ० १ । १९ । ९ )

अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छेति ॥

भा०—'अग्निः' इति मध्यस्थानं देवतापदमत्र । अग्निर्व्याख्यातः "अग्निरग्रणीर्भवति····" ( नि० ७ । १४ ) तस्य मध्यस्थानकस्य मन्त्रः "प्रति त्यं········" इति ।

मन्त्रार्थः—

हे अग्ने ! त्वं त्यं तं चारुं चरणशीलं निरन्तरं चिरं वा गमनप्रवृत्तिकं यज्ञं सङ्गमनीयं संयोजनीयं कर्मस्थानं प्रति गोपीथाय सोमपानाय सोमस्य तद्योग्यस्य पेयस्य पानाय यं त्वं पीत्वा प्रबलः सन् कार्यं विधातुं समर्थो भवसि तथा वयं च त्वदुपयोगेन सोममैश्वर्यं पिबेम भुञ्जीमहि—इति हेतोरस्माभिः प्रहूयसे प्रकृष्टमाहूयसे संघृष्यसे संघर्षेण व्यक्तीक्रियसे "ह्वेञ् स्पर्द्धायां शब्दे च" ( भ्वादि० ) "स्पर्द्ध संघर्षे" ( भ्वादि० ) तस्मात् त्वं मरुद्भिः सह रश्मिभिर्निजाणुरूपतरङ्गैः सूक्ष्मवायुप्रवाहैर्वा सहागच्छ प्राप्तो भव । "मरुतो रश्मयः" ( तां० १४ । १२ । ९ ) इत्थं कथनेन मध्यमादन्यं कं वक्तुमुत्सहेत, मध्यमोऽग्निश्च विद्युत्, अन्यत्रोच्यतेऽपि मरुद्भिः सह सम्बन्धो विद्युत इन्द्रस्य, तद्यथा "आ विद्युन्मद्भिर्मरुतः स्वर्कैः रथेभिर्यात" ( ऋ० १ । ८८ । १ ) तथा "यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ।" ( ऋ० १ । ८० । ११ ) इत्यनेकत्र मरुत्वानिन्द्रोऽस्तीत्युक्तम् ।

तस्य मध्यस्थानस्याग्नेरपरोऽपि मन्त्रः "अभि त्वा पूर्वपीतये····" ।

मन्त्रार्थः—

हे अग्ने मध्यस्थानभव विद्युद्देव ! त्वा त्वामभिलक्ष्य सोम्यं सोमपानमिव

मधु हर्षकरं विकासकरं तव पानमहं सृजामि सम्पादयामि त्वं पूर्वपीतये श्रेष्ठस्य स्वयोग्यस्य पानायास्मानपि पाययितुं मरुद्भिः सहागच्छ ।

अदेवतात्वे प्रयोगः "अ॒ग्निर्न यो वन॒ आ सृ॒ज्यमा॑नो॒ वृथा॒ पाजां॑सि कृणुते न॒दीषु॑ । जनो॒ न युध्वा॑ मह॒त उ॑प॒ब्दिरि॑र्यर्ति॒ सोम॒: पव॑मान ऊ॒र्मिम् ॥" ( ऋ० ९ । ८८ । ५ ) इति पवमानसोमदेवत्ये–उपमायाम् ॥

इति दशमाध्याये तृतीयः पादः

---

चतुर्थः पादः

---

वेनः ॥ २४ ॥

वेनो वेनतेः कान्तिकर्मणः ॥ ३८ ॥

तस्यैषा भवति—

"अ॒यं वे॒नश्चो॑दय॒त् पृश्नि॑गर्भा॒ ज्योति॑र्जरायू॒ रज॑सो वि॒माने॑। इ॒मम॒पां सं॑ग॒मे सूर्य॑स्य॒ शिशुं॒ न विप्रा॑ म॒तिभी॑ रिहन्ति ॥" ( ऋ० १० । १२३ । १ )

अयं वेनश्चोदयत् पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति । जरायु-र्जरया गर्भस्य जरया यूयत इति वेममपां च सङ्गमने सूर्यस्य च शिशुमिव विप्रा मतिभीरिहन्ति लिहन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा । शिशुः शंसनीयो भवति । शिशीतेर्वा स्याद् दानकर्मणः । चिरलब्धो गर्भो भवति ॥

भा०—'वेनः' मध्यस्थानं देवतापदम् । वेनः "वेनति कान्तिकर्मा" (निघ० २ । ६ ) पचादिलक्षणोऽच् प्रत्ययः कर्तरि ।

मन्त्रार्थः—

अयं वेनो ज्योतिर्जरायुर्ज्योतिरेव जरायुर्गर्भावरणमिव यस्य स तथाभूतः पृश्निगर्भाः "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः" (निरु० २।१४) तस्य गर्भा गर्भभूता आपः, यद्वा पृश्नयः प्राष्टः–उज्ज्वलः शुभ्रो वर्णो येषां ते रश्मयस्तेषां रश्मीनां गर्भा गर्भभूता आपः–आन्तरिक्ष्य आपस्ताश्चोदयत्–चोदयति प्रेरयति रजसः–उदकस्य विमाने विशिष्टमानस्थाने घनीभूतकरणस्थाने

निर्माणस्थानेऽन्तरिक्षे नीचैर्वर्षितुम् "उदकं रज उच्यते" ( निरु० ४ । १९ ) अपां सूर्यस्य च सङ्गमे सङ्गमने प्रावृषि वर्षतौ किलेमं वेनं शिशुमिव विप्रा मतिभिः स्तुतिभिः–रिहन्ति लिहन्ति स्निह्यन्ति वर्णव्यत्ययेन, यद्वा स्तुवन्ति "रिहति–अर्चतिकर्मा" ( निघं० ३ । १४ ) वर्धयन्ति पूजयन्ति वा। शिशुः शंसनीयो माननीयो लालनीयो भवत्यल्पवयस्कत्वात्, 'शसि–शंस धातोः 'उः' प्रत्यय औणादिकस्तत्र 'शिश' भावश्च धातोः। यद्वा शिशीतेर्दानार्थात्–उः प्रत्ययः शिशुः। पुरुषेण स्त्रियै शुक्रो दीयते स एव चिरलब्धो गर्भः शिशुरूपेणावस्थितः।

इत्येषा वेनस्य परिभाषा, स वेनः प्रावृषि खल्वान्तरिक्षीणामपां गर्भरूपाणां मध्ये शिशुरिव दृश्यमानः कान्तिमान् यद्वा कान्त इन्द्रो विद्युद्देवोऽस्ति स (Ions) इन्द्रो विद्युद्देवस्तदानीं वेन उच्यते। वेन इन्द्र इत्युक्तं चैतन्मन्त्रव्याख्याने शाङ्खायनब्राह्मणे "अपां वेनश्चोदयत् पृश्निगर्भा इतीन्द्र उ वै वेनः" ( शाङ्खा० ब्रा० ८ । ५ )।

अदेवतात्वे प्रयोगाः "बृहस्पतिर्यजति वेन उक्षभिः" ( ऋ० १।१३९।१० ) इति बृहस्पतिदेवत्ये तद्विशेषणत्वेन। "अस्मिन् पिशङ्गमिन्दवो दधाता वेनमादिशे। यो अस्मभ्यमरावा॥" ( ऋ० ९ । २१ । ५ ) पवमानसोमदेवत्ये नामधेयेन। "वेनस्तत् पश्यन्निहितं गुहासद् यत्र विश्वं भवत्येकनीडम्।" ( यजु० ३२ । ८, 'परमं गुहासद्' अथर्व० २ ।१।१ ) परमात्मदेवत्ये अध्यात्मदेवत्ये च ज्ञानेन ध्यानेन कान्तिमान् जनो वेनो नामधेयेन॥

असुनीतिः॥ २५॥

असुनीतिरसून्नयति॥ ३९॥

तस्यैषा भवति—

"असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः। रारन्धि नः सूर्यस्य सन्दृशि घृतेन त्वं तन्वं वर्धयस्व॥" ( ऋ० १०।५९।५ )

असुनीते मनोऽस्मासु धारय चिरञ्जीवनाय प्रवर्धय च न आयू रन्धय च नः सूर्यस्य सन्दर्शनाय।

रध्यतिर्वशगमनेऽपि दृश्यते—

"मा रधाम द्विषते सोम राजन्" ( ऋ० १०।१२८।५ )

इत्यपि निगमो भवति। घृतेन त्वमात्मानं तन्वं वर्धयस्व॥

भा०—'असुनीतिः' मध्यस्थानदेवतापदम्। असुनीतिः–योऽसून् प्राणान्

नयति पालयति 'असु' उपपदात् "णीञ् प्रापणे" ( भ्वादि० ) ततः 'तस्यैषा भवति' 'तस्य' इति यास्कीयपुल्लिङ्गनिर्देशादत्र क्तिन् प्रत्ययो व्यत्ययेन पुल्लिङ्गे नयति—इति च कथनेन कर्तरि कारकेऽपि व्यत्ययेन यद्वा क्विप् प्रत्यय औणादिकोऽसंज्ञायां छन्दसि । तस्य मन्त्रः "असुनीते मनो....।"

मन्त्रार्थः—

हे असुनीते ! प्राणानां पालक मध्यस्थानीय देव ! त्वं मध्यस्थानात्—मया—आत्मना सह पुनर्जन्मार्थमागतोऽस्मासु मयि "अस्मदो द्वयोश्च" ( अष्टा० १ । २ । ५९ ) एकस्मिन् बहुवचनम् । मम शरीरे—इति यावत्, मनोऽन्तःकरणं धारय तथा नोऽस्माकं ममायुर्जीवातवे जीवनाय "तुमर्थे....तवेन" ( अष्टा० ३ । ४ । ९ ) तवेन् प्रत्ययः, सुप्रतिर प्रवर्धय 'तिरा' "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३५ ) इति दीर्घः, प्रपूर्वकः—तॄधातुर्वृद्ध्यर्थे "प्र ण आयूंषि तारीः" ( ऋ० ८ । ४८ । ७ ) नोऽस्मान्—मां सूर्यस्य सन्दृशि सन्दर्शनाय चतुर्थ्यर्थे सप्तमी निमित्तसप्तमी वा ररन्धि साध्नुहि, त्वं च घृतेनोदकेन मध्यस्थानकेन मेघरूपेण "घृतमुदकनाम" ( निघं० १ । १२ ) तन्वं स्वकीयं शरीरं वर्धय यतो न त्वं हविर्भाक् ॥

ररन्धि—रन्धि "रध हिंसासंराध्योः" (दिवादि०) ततः "बहुलं छन्दसि" ( अष्टा० २।४।७६ ) श्लुः । लोटि मध्यमैकवचने हेर्धि तत्र च "रधिजभोरचि" ( अष्टा० ७ । १ । ६१ ) इति नुम्, अनचि छन्दसि । रन्धय—इत्यर्थः । रध्यति—रधधातुर्वशगमनेऽपि दृश्यते; तस्योदाहरणं दीयते यास्केन "मा रधाम...." इति ।

समग्रमन्त्रस्तदर्थश्च—

देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥

हे उर्वीः—उर्व्यो महत्यः षड् देवीर्देव्यः ! या यूयम् 'अग्निः, द्यौः, पृथिवी, आपः, वाजः—ओषधिः, अहः, रात्रिः' स्थ । उक्तं यथा शतपथे "षण्मोर्वीरंहसस्पान्त्वग्निश्च पृथिवी चापश्च वाजश्चाहश्च रात्रिश्चेत्येता मा देवता आर्तेर्गोपायन्त्विति" ( शत० १ । ५ । १ । २२ ) उरु बहु नोऽस्माकं कमनीयं वस्तु कुरुत सम्पादयत, अथ विश्वे देवा इह प्रसङ्गे—जीवने वीरयध्वमस्मान् वीरान् कुरुत । वयं प्रजया सन्तत्या मा हास्महि न त्यजेमहि "ओहाक् त्यागे" (जुहोत्यादि०) इत्यस्य रूपं लुङि, मा तनूभिः—न च स्वाभिस्तनूभिर्वियुक्ता भवेम, तथा हे सोम

राजन्-ऐश्वर्यवन् परमात्मदेव ! द्विषते द्विषतो द्वेषं कुर्वतः शत्रोः षष्ठ्यर्थे चतुर्थी, मा रधाम-न वशे भवाम ॥

असुनीतेः परिभाषा-जीवात्मानो मध्यस्थानं यं देवमाश्रित्य जन्म धारयन्ति, यतः शरीरे मनःप्रभृतीनामिन्द्रियाणां विकासः प्राणधारणं सञ्चालनं च भवति सोऽसुनीतिर्देवः सूर्यरश्मिमिश्रितः सूक्ष्मवायुः ।

अदेवतात्वे प्रयोगः "अद्धा यद् यावोऽसुनीतिमयन्मध्वा नो अत्र पितरो शिशीताम् ।" ( ऋ० १० । १२ । ४ ) इत्याग्नेये सूक्ते नामधेयेन ॥

ऋतः ॥ ३६ ॥

ऋतो व्याख्यातः ॥ ४० ॥

तस्यैषा भवति—

"ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥" ( ऋ० ४ । २३ । ८ )

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य प्रजा वजनीयानि हन्त्यृतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो बद्धश्रोत्रः । कर्णौ बोधयन् दीप्यमानश्चायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वा ।

भा०—'ऋतः' इति मध्यस्थानदेवतापदम् । ऋतः "ऋतमित्युदकनाम प्रत्यृतं भवति" ( निरु० २ । २५ ) मध्यस्थानदेवताप्रसङ्गे 'ऋत' शब्दस्यार्थोऽत्र विद्युन्मिश्रितं सूक्ष्ममुदकमेवार्थः (Water forming around lowred particles in clouds) उदकमपि यदुद्गतं सूक्ष्मभावेन स्थितं प्रत्यृतं मध्यमस्थाने प्राप्तं वर्तते । सारल्यमवलम्बनाय विद्युन्मयो मेघो विज्ञेय ऋतः, व्याख्यातः-इति पुल्लिङ्गनिर्देशनाच्च ।

मन्त्रार्थः—

ऋतस्य मध्यस्थानस्थस्य विद्युन्मयस्य मेघस्य शुरुधः-आपः "शुरुध आपो भवन्ति" ( निरु० ६ । १६ ) पूर्वीः प्रारम्भिकीः पृथिवीतलात् प्राग् यथासन् तथाभूताः श्रेष्ठा वा सन्ति । शुरुध ओषधयो वा स्वाभाविक्यो गुणवत्यो वा भवन्ति तद्वर्षणाच्छुद्धजलोद्भवात् तासां तथा शुरुधो भूमयः क्षेत्रभक्तयः स्वाभाविक्यः श्रेष्ठा वा भवन्ति तथा शुरुधो गावः पूर्वकालिक्यः श्रेष्ठाः-वा मेघजले स्नानेन तदुत्थं घासं भक्षयित्वा च । ऋतस्य मेघस्य धीतिः प्रज्ञायमाना साक्षाद्

पत्यमाना धारा वृजिनानि वर्जनीयानि—औष्ण्यशुष्कत्वतुष्कालत्वादि हन्ति। विद्युन्मयमेघस्य तस्य विद्युन्मयमेघस्य यज्ज्योतिरुदकं वा तस्य ज्योतिष उदकस्य वा श्लोको वाक्—शब्दो घोषो वा स्तनयित्नुर्बुधानो बोधयन् शुम्भानो दीपयन् बधिरस्यावरुद्धश्रोत्रस्य साक्षाद् बधिरस्याथोरयनस्य गन्तुर्मनुष्यस्य वा कर्णौ ततर्द तृणत्ति—उद्घाटयति—असावधानतया। अध्ययनाध्यापनकृष्यादिकर्मकरणाय प्रेरयति। "श्रवणेन स्वाध्यायानुपाकरोति, आचार्योऽन्तेवासिनां योगमिच्छन्" (वाराहगृह्यसूत्रम् १३) चिकित्साख्याऽपि कर्णरोगं बधिरत्वं नाशयेदिति सम्भावना।

अदेवतात्वे प्रयोगाः—"ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि। यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत् पिन्वते दिवः॥" (ऋ० ५।६३।१) मित्रावरुणदेवत्ये नामधेयेन। "ऋतेन मित्रावरुणावृतावृधावृतस्पृशा। क्रतुं बृहन्तमाशाथे॥" (ऋ० १।२।८) मित्रावरुणदेवत्ये। "यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि। तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि॥" (ऋ० १।३६।११) अग्निदेवत्ये मन्त्रे॥

इन्दुः॥ २७॥

इन्दुरिन्धेरुनत्तेवा॥ ४१॥

तस्यैषा भवति—

"प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान् मन्म रेजति रक्षोहा मन्म रेजति। स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम्। अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत्॥" (ऋ० १।१२९।६)

प्रब्रवीमि तद्भव्यायेन्दवे हवनार्ह इव य इषवानन्नवान् कामवान् वा मननानि च नो रेजयति रक्षोहा च बलेन रेजयति स्वयं सो अस्मदभिनिन्दितारम्। वधैरजेत दुर्मतिम्। अवस्रवेदघशंसः। ततश्चावतरं क्षुद्रमिवावस्रवेत्। अभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति। तत् परुच्छेपस्य शीलम्। परुच्छेप ऋषिः। पर्ववच्छेपः, परुषि परुषि शेपोऽस्येति वा। इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि। तेषामेतान्यहविर्भाञ्जि—वेनोऽसुनीतिर्ऋत इन्दुः॥

भा०—'इन्दुः' इति मध्यस्थानदेवतापदम् । इन्दुः "इन्धी दीप्तौ" ( रुधादि० ) ततः "भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः" ( उणा० १ । ७ ) इति धातोर्बाहुलकात्—उः प्रत्ययः, धकारस्य दकारः । यद्वा "उन्दी क्लेदने" ( रुधादि० ) ततः "उन्देरिच्चादेः" ( उणा० १ । १२ )

मन्त्रार्थः—

भव्याय भवितव्याय दर्शने च शोभनाय—इन्दवे दीप्तिमते तथार्द्रस्वभाववते देवाय Ionigld Particles (around which waterforms in the clouds) तदभीष्टं प्रब्रवीमि यो हव्यो न—हव्य इव हवनार्हं इव प्रतीयते न तु तं प्रति हव्यं गच्छति केनापि प्रकारेण साक्षाद्वा परम्परया वा, अस्ति तस्मिन् प्रकाशः परन्तु न तैजसः प्रकाशोऽस्ति येन हुतं द्रव्यमाकर्षेद् यद्वा तेनाकृष्टं भवेत्, यथाग्नौ सूर्ये वा प्रकाशस्तेजोमयो न तथा तस्मिन्निन्दौ । परन्तु हुतग्रहणेन विनाऽपि स इषवान्—अन्नवान् "इषम्—अन्ननाम" ( निघं० २ । ७ ) यद्वा कामवान्—अस्मभ्यमन्नं प्रवर्धयति तथाऽस्माकं काममभिलाषं च पूरयति, सर्वेष्वोषधिवनस्पतिषु हि केवलं न, अपित्वस्माकं शरीरेऽपि रसं प्रवाहयति तस्य रसवत्त्वात् "इषु इच्छायाम्" ( तुदादि० ) इष्यते काम्यत इति—इषः—भावे कः—एषणं तद्वान्—इषवान्, अथ च नोऽस्माकं मन्म मननानि मनोभावान् मनोबलानि रेजति रेजयति प्रेरयति, अन्तर्गतणिजर्थः । "रेजति गतिकर्मा" ( निघं० २ । १४ ) यो बलेन रक्षोहा रक्षांसि—अन्धकारप्रियाणि कृमिकीटान् शुष्कत्वादिमनोदोषांश्च हन्ति सः, तस्मात्—मननानि प्रेरयति । स स्वयमस्माकं प्रयत्नमन्तरेण ह्यस्मत्तोऽस्माकं मध्यात्—निदोऽभिनिन्दितारं दुर्मतिं बधैरजेत घातकसाधनैः—अजेत वशं नयेत्, न वयं तस्य यद्वा कस्याप्यभिनिन्दितारः स्याम । तस्मात्—अघशंसः पापस्य प्रशंसकः पापमवव्रवेत् त्यजेत्, क्षुद्रं तुच्छं निकृष्टं द्रव्यमिवावव्रवेत् त्यजेत् ॥

मन्त्रे 'मन्म रेजति रक्षोहा मन्म रेजति' योऽभ्यासः पुनरावृत्तिरस्ति तत्राधिकमर्थम्—अर्थवैशिष्ट्यं मन्यन्ते शिष्टाः, यथा 'अहो दर्शनीया, अहो दर्शनीया' इति कथने दर्शनीयत्वं विशेष्यतेऽवश्यं दर्शनीया विशेषेण दर्शनीयेति गम्यते । तदभ्यासेन वर्णनं परुच्छेपस्य शीलम् । मन्त्रेषु परुच्छेपस्यर्षेर्लक्षणं यस्मिन् मन्त्रे परुपर्वाण्यर्थपर्वाणि स्युस्तत्स्वर्षिः परुच्छेपः । उपाधिवादे, आर्षवादे वा देवता इव भौतिकाः पदार्था ऋत्विषयस्तेषां वेत्तापि तत्संज्ञां लभते स च भौतिकः पदार्थः परुच्छेप इन्द्रोऽस्ति "इन्द्र उ वै परुच्छेपः" ( कौ० २३ । ४ ) 'पर्ववच्छेपः परुषि शेपोऽस्य' इति स इन्द्रस्तथैवास्ति यतः परुः पर्व पर्ववान् पर्वतो मेघस्तथा

पर्व कालसन्धिः प्रातः सायं, पौर्णमासी, अमावस्या, वसन्तसम्पातः, शरत्सम्पातः—एषु पर्वसु शेपः प्रजननशक्तिर्यस्य स पर्ववच्छेपवान् मतुपि, यद्वा परुषि परुषि शेपो यस्य बहुव्रीहौ। इन्द्रो विद्युद्देवः पर्ववति पर्वते स्थानेऽनायासेनौषधिवनस्पति-प्रभृतीनुत्पादयति पर्ववता मेघेन तद्वर्षणात्। प्रातः सायं पौर्णमास्याममावस्यायां वसन्तसम्पाते शरत्सम्पाते चोत्पादनशक्तिः प्रवर्तते—सूर्योऽपीन्द्रः सोऽप्येतेषु पर्वसूत्पादयति वनस्पत्यादीन्। तथा सूक्तस्य खल्वेकादश मन्त्राः सन्ति, देवता च सूक्तस्य—इन्द्रः परन्तु षष्ठ्या ऋच इन्दुर्देवता ततः पूर्वासां पञ्चानामृचां तथो-त्तरासां पञ्चानामृचां च—इन्द्रो देवता मध्यभूताया ऋच इन्दुर्देवता, इत्यपि दैवतापर्वानुष्ठितमिन्द्रेण। एवं तद्विज्ञानविदो जनस्यापि परुच्छेप इत्यौपाधिकी यौगिकी वा संज्ञाऽस्ति।

'इन्दुः' अत्र मन्त्रे नवचन्द्रमाः, विद्युद्गर्भेषु मेघेषु दृश्यमानश्चन्द्रमाः।

वायुमारभ्येन्दुरिति यावत् सप्तविंशतिर्दैवतानामानि सूक्तभाञ्जि सूक्तं भजन्ते तन्नामभिः सूक्तानि वाय्यानि वायव्यं सूक्तमित्यादि, हविर्भाञ्जि हविर्भजन्ते यज्ञे हविराहुतिर्दीयते येभ्यस्तथाभूतानि देवतानामानि। परन्त्वेतेषां देवतानाम्नां मध्ये 'वेनः, असुनीतिः, ऋतः, इन्दुः' न हविर्भाञ्जि न हविर्भजन्ते, सूक्तभाञ्जि हि सन्ति।

अदेवतात्वे प्रयोगाः "प्र प्रं वस्त्रिष्टुभमिषं मुन्दद्वीरायेन्दवे ॥" (ऋ० ८। ६९। १) इन्द्रदेवत्ये तद्विशेषणरूपेण। "दधिष्वेमं जठर इन्दुमिन्द्र" (ऋ० ३। ३५। ६) इन्द्रदेवत्ये नामधेयेन। "अयं हि ते अमर्त्य इन्दुरत्यो न पत्यते।" (ऋ० १०। १४४। १) इन्द्रदेवत्ये नामधेयेन।

प्रजापतिः ॥ २८ ॥

प्रजापतिः प्रजानां पाता वा पालयिता वा ॥ ४९ ॥

तस्यैषा भवति—

"प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥" (ऋ० १०। १२१। १०)

प्रजापते न हि त्वदेताम्यन्यः सर्वाणि जातानि तानि परिबभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्याशीः।

भा०—'प्रजापतिः' मध्यमस्थानं देवतापदम् । प्रजापतिः प्रजानां पाता रक्षकः पालयिता वा षष्ठीसमासे पदम् ।

मन्त्रार्थः—

हे प्रजापते ! प्रजायमानानां जङ्गमानां रक्षक पालयितर्देव ! एतानि तानि विश्वानि सर्वाणि जातानि—उत्पन्नानि त्वदन्यस्त्वत्तो भिन्नो न परिबभूव परिपालकत्वेन न बभूव नास्ति, तस्माद् वयं यत्कामाः—यः कामो येषां ते यत्कामा यमभीष्टं कामयमानाः सन्तस्तुभ्यं जुहुम हविर्दद्मस्तदभीष्टमस्माकं भवतु यतो वयं रयीणां सुखैश्वर्याणां स्वामिनः स्याम ।

कदेवत्यस्य सूक्तस्यान्तिमो मन्त्रः प्रजापतिदेवत्यः, कस्तु विश्वस्य धारको वायुरासीत् प्रजापतिः खलु प्राजानां प्रजायमानानां जीवानां जीवनप्रदो वायुः शुद्धः पार्थिवांशेनासंसक्तो मध्यस्थानो वायुः । तस्य चोषोवेलातो होरामात्रं पूर्वः कालः, तत्सेवनेन प्रजायमानानां रक्षा भवति ।

अदेवतात्वे प्रयोगः "दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः । विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत् सविता सुम्नमुक्थ्यम् ॥" ( ऋ० ४ । ५३ । २ ) सवितृदेवत्ये ॥

अहिः ॥ २६ ॥

अहिर्व्याख्यातः ॥ ४३ ॥

तस्यैषा भवति—

"अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ।" ( ऋ० ७ । ३४ । १६ )

अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु—उदकेषु सीदन् । बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति वा । इदमपीतरद् बुध्नमेतस्मादेव बद्धा अस्मिन् धृता प्राणा इति ॥

भा०—'अहिः' मध्यस्थानं देवतापदम् । अहिर्व्याख्यातः "अहिरयनादेत्यन्तरिक्षे" ( निरु० २ । १७ ) ।

मन्त्रार्थः—

हे विद्वन् ! त्वमब्जाम्—अप्सु जातमहिं न खलु भूजां भूम्यां जातं किन्त्वपां मध्ये जातमन्तरिक्षे गमनशीलमहिं गृणीषे स्तौषि प्रशंससि—स्तुहि प्रशंस, यश्चाहिर्नदीनां नदनानामपां बुध्ने बन्धनस्थानेऽन्तरिक्षे तत्रत्येषु रजःसूदकेषु सीदन् वर्तते ।

'अहिः' मेघनामसु पठितः परन्त्वत्र देवतानामतः पठितस्तस्मिन्न एव स्यात् स च सर्पणशीलो विद्युद्देवः Ionic (Electric) Energy in clouds इत्यसर्पणेन मेघान् दोलयित्वा वर्षोन्मुखान् करोति ।

बुध्नमन्तरिक्षं भवति यतोऽस्मिन्नापो बद्धा धृता वा सन्ति । इदमितरद् बुध्नं मूलं वृक्षस्य यथा तथा शरीरस्य मूलं हृदयं तस्मिन् प्राणा बद्धा धृताः सन्ति।

अदेवतात्वेन प्रयोगाः "इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री । अहन्नहिमन्वपस्ततर्द॑····" ( ऋ० १ । ३२ । १ ) इन्द्रदेवत्ये मेघार्थकेन नामधेयेन । "अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीळन्नसरद् वृषा हरिः ।" ( ऋ० ९ । ८६ । ४४ ) पवमानसोमदेवत्ये सर्पवाचिन उपमायां प्रयोगः ॥

अहिर्बुध्न्यः ॥ ३० ॥

योऽहिः स बुध्न्यो बुध्नमन्तरिक्षं तन्निवासात् ॥ ४४ ॥

तस्यैषा भवति—

"मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिध- द्दृतायोः ॥" ( ऋ० ७ । ३४ । १७ )

मा च नोऽहिर्बुध्न्यो रेषणाय धान्मास्य यज्ञोत्था च स्रिधद् यज्ञकामस्य ॥

भा०—'अहिर्बुध्न्यः' देवता सविशेषणोऽहिः, बुध्न्य इति विशेषणम् । अन्तरिक्षस्थोऽहिरर्थः । मेघेषु वर्तमाना विद्युत्, यद्वा विद्युन्मयो मेघः ।

मेघेषु वर्तमाना विद्युत्–अहिर्बुध्न्यः—

उत नोऽहिर्बुध्न्यो मयस्कः शिशुं न पिप्युषीव वेति सिन्धुः ।

येन नपातमपां जुनाम मनोजुवो वृषणो यं वहन्ति ॥ (ऋ० १।१८६।५)

अहिर्बुध्न्यो विद्युतापि नोऽस्मभ्यं मयः सुखं कः करोतु यं सिन्धुः स्यन्दमाना मेघधारा शिशुमिव प्यायन्ती खलु वर्तते येन विद्युद्देवेनापां नपातं न पातयितारं स्वान्तरे रक्षकं मेघं जुनाम प्राप्नुमो यद्वापां नप्तारमग्निं प्राप्नुमः । यं खल्वहिर्बुध्न्यं विद्युद्देवं मनोजुवो मन इव वेगवन्तो वर्षका मेघा वहन्ति ।

विद्युन्मयो मेघः–अहिर्बुध्न्यः—

"तन्नोऽहिर्बुध्न्यो अद्भिरर्कैस्तत्पर्वतस्तत्सविता चनो धात् ॥"

( ऋ० ६ । ४९ । १४ )

अहिर्बुध्न्यो मेघोऽग्निः सह चनो धाद्यं धारयतु ॥

यास्कोदाहृतमन्त्रस्यार्थः—

अथ बुध्न्योऽहिर्नोऽस्मान् रिषे रेषणाय हिंसनाय मा धात्—न धरेत्, यथाऽस्य—ऋतायोर्यज्ञकामस्य यजमानस्य यज्ञो यज्ञोखा हव्यधानी हव्यस्थाली मा स्रिधत्—न नशयेत्—क्षुध्येद्वा । नातिवृष्टिर्भवेन्नावृष्टिर्भवेत् ।

एवमत्रान्तरिक्षस्थः सर्पो मेघेषु वर्तमानो विद्युद्देवो यद्वा विद्युन्मयो मेघः (Ionised clouds) अहिर्बुध्न्यः ।

निरुक्तयः—'रिषे' "रिष हिंसायाम्" ( भ्वादि०, दिवादि० ) ततः "क्विप् च" ( अष्टा० ३ । २ । ७६ ) भावे छन्दसि चतुर्थ्यां रिषे । 'स्रिधत्' 'स्रिधु' छान्दसो धातुर्हिंसायाम्, तस्य लेटि प्रयोगः । अस्य वैदिकप्रयोगा बहवः सन्ति, तद्यथा "न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यते ।" ( ऋ० ५ । ५४ । ७ ) "मा स्रेधत सोमिनो दक्षता महे कृणुध्वं राय आतुजे ।" ( ऋ० ७ । ३२ । ९ ) "राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध ।" ( ऋ० ८ । ७९ । ९—स्रिधः—हिंसकान्—सायणः ) "अपामीवामप स्रिधमप सेधत दुर्मतिम् ।" ( ऋ० ८ । १८ । १० )

अदेवतात्वे प्रयोगः "अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येकधेनुभिर्निपातु ।" ( ऋ० ७ । ३८ । ५ ) सवितृदेवत्ये । "शन्नो अज एकपाद् देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।" ( ऋ० ७ । ३५ । १३ ) विश्वदेवदेवत्ये नामधेयेन ॥

सुपर्णः ॥ ३१ ॥

सुपर्णो व्याख्यातः ॥ ४५ ॥

तस्यैषा भवति—

"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥" ( ऋ० १० । ११४ । ४ )

एकः सुपर्णः स समुद्रमाविशति स इमानि सर्वाणि भूतान्यभिविपश्यति तं पाकेन मनसापश्यमन्तित इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता तं माता रेढि वागेषा माध्यमिका स उ मातरं रेढि ॥

भा०—'सुपर्णः' इति मध्यस्थानं देवतापदम् । सुपर्णो व्याख्यातः "सुपर्णाः सुपतनाः [ आदित्यरश्मयः ]" ( निरु० ३ । १२, ४ । ३ ) तस्य देवतात्वं प्रदर्शनाय "एकः सुपर्णः…" इति मन्त्रः ।

मन्त्रार्थः—

एकः सुपर्णः सुपतनशीलः स समुद्रमन्तरिक्षमाविशति व्याप्नोति "समुद्रमन्तरिक्षनाम" ( निघं० १ । ३ ) स चेमानि सर्वाणि भूतानि प्राणिनो विपश्यति विदृत्वा पश्यति—इव, तमहं पाकेन मनसा व्यक्तेन मनसाऽन्तितः समीपतोऽपश्यं दृष्टवान् यदयमन्तरिक्षस्थानो देवो मया सहापि वर्तते—एतस्य सहयोगेनाहं शरीरे तिष्ठामि, इति—ऋषेर्द्रष्टुरात्मनः प्रीतिर्भवति दृष्टस्याख्यातुं तथाख्यायतेऽपश्यम् । अन्यच्च तं माता मेघस्य निर्मात्री शक्तिर्माध्यमिका वाग् विद्युत्—लेढि स च मातरम्—मातरं माध्यमिकां वाचं विद्युतं लेढि । स च सुपर्णो यस्य माध्यमिकया वाचा सह सम्बन्धो भवितुं शक्येत स खलु मध्यस्थानो वायुः, तेन सार्धमेव जीवात्मा शरीरे प्रविशति तिष्ठति तस्मात् स तमनुभवति ॥

अदेवतात्वे प्रयोगाः "वि सुपर्णो अन्तरिक्षाण्यख्यद् गभीरवेपा असुरः सुनीथः । क्वेदानीं सूर्यः...." ( ऋ० १ । ३५ । ७ ) इति सवितृदेवत्ये विशेषणरूपेण । "मनोजवा अयमान आयसीमतरत् पुरम् । दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ॥" ( ऋ० ८ । १०० । ८ ) इन्द्रदेवत्ये विशेषणरूपेण । "सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।" ( ऋ० ६ । ७५ । ११ ) इषुदेवत्ये नामधेयेन ॥

पुरूरवाः ॥ ३२ ॥

पुरूरवा बहुधा रोरूयते ॥ ४६ ॥

तस्यैषा भवति—

"समस्मिञ्जायमान आसत ग्ना उतेमवर्धयन्नद्यः स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः ॥" ( ऋ० १० । ९५ । ७ )

समासतास्मिञ्जायमाने ग्ना गमनादापः । देवपत्न्यो वापि चैनमवर्धयन्नद्यः स्वगूर्ताः स्वयङ्गामिन्यो महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन् दस्युहत्याय च देवाः देवाः ॥ ४६ ॥

भा०—'पुरूरवाः' इति मध्यस्थानदेवतापदम् । पुरूरवाः खलु बहुधा भृशं शब्दं करोति । 'पुरु' शब्दोपपदाद् "रु शब्दे" ( अदादि० ) 'ततः "पुरूरवाः" ( उणा० ४ । २३२ ) असुन्प्रत्ययान्तो निपात्यते भृशार्थत्वं रौतेः पूर्वपदस्य दीर्घत्वं च निपातनात् ।

मन्त्रार्थः—

अस्मिन् पुरूरवसि जायमाने वर्षकर्मार्थमुत्पद्यमाने ग्ना गमनशीला गन्त्र्य आपो मेघधाराः समासत सम्यक् प्राप्यातिष्ठन्–तिष्ठन्ति, उतापि चेममेनं पुरूरवसं देवपत्न्यो नद्यो नदीरूपेण वहमाना देवानां शक्तयः स्वगूर्तयः स्वयङ्गामिन्यः स्वतः प्रेरणक्रियावत्योऽवर्धयन्–वर्धयन्ति । प्रत्यक्षदृष्ट्योच्यते–हे पुरूरवः ! पुनस्त्वां महते रणाय रमणीयाय संग्रामाय संग्रामं कर्तुं तत्र च दस्युहत्यायै दसनीयस्य क्षेतुं योग्यस्य मेघस्य दसितुरनावृष्टिकारकस्य हत्यायै देवा मरुदादयोऽवर्धयन् वर्धयन्ति ॥

पुरूरवा लम्बमानं भृशं च 'थर थरा' इति शब्दं कुर्वन् प्रवर्तते वर्षकर्मार्थं स पुरूरवाः–दीर्घस्तनयित्नुमान् वज्रात्मको देवः ।

निरुक्तयः—'स्वगूर्ताः' 'गूरी हिंसागत्योः' क्तः प्रत्ययो भावे "नपुंसके भावे क्तः" ( अष्टा० ३।३।११४ ) स्वं स्वयं स्वाधीनं गूर्तं गमनं यासां ताः स्वगूर्ताः ।

अदेवतात्वे प्रयोगः "त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः । श्वात्रेण यत् पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥" ( ऋ० १ । ३१ । ४ ) अग्निदेवत्ये नामधेयेन ॥

इति दशमाध्यायस्य चतुर्थः पादः ।

समाप्तश्च दशमोऽध्यायः ॥

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्शे' निरुक्तभाष्ये

---

## एकादशोऽध्यायः

तत्र

### प्रथमः पादः

---

श्येनः ॥ १ ॥

श्येनो व्याख्यातः। तस्यैषा भवति—

"आदाय श्येनो अभरत् सोमं सहस्रं सवाँ अयुतं च साकम्। अत्रा पुरन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः॥" ( ऋ० ४ । २६ । ७ )

आदाय श्येनोऽहरत् * सोमं सवानयुतं च सह सहस्रं सहस्रसाव्यमभिप्रेत्य तत्रायुतं सोमभक्षास्तत्सम्बन्धेनायुतं दक्षिणा इति वा तत्र पुरन्धिरजहादमित्रानदानानिति वा। मदे सोमस्य मूरा अमूरः। इति ऐन्द्रे च सूक्ते सोमपानेन च स्तुतस्तस्मादिन्द्रं मन्यन्ते ॥ १ ॥

भा०—'श्येनः' इति मध्यस्थानं देवतापदम्। श्येनो व्याख्यातः "श्येनः शंसनीयं गच्छति" ( निरु० ४ । २४ ) तस्य "आदाय श्येनो...." इति मन्त्रः।

वक्तव्यम्—

अत्र श्येनः कः पदार्थ इति प्रश्नः। इन्द्रो विद्युद्देवः श्येनः स विद्युद्देव एव शंसनीयं प्रशंसनीयं गच्छति नृत्यं कुर्वन्निव '~~~~~~~~' इति धारया धाराप्रवाहेण तरङ्गैः समानवेगरूपैर्गच्छति। पुनश्च स ऐन्द्रे सूक्ते सूक्तवर्गे पठितः सोमपानेन च स्तुतो वर्णितः, सोमपानं चेन्द्रस्य भक्षः, तस्मात्-श्येन इन्द्र इति नैरुक्ता मन्यन्ते, इति यास्केनोक्तमेव। पुनश्चाग्निमे सूक्ते श्येनो देवता पठितः शरीरान्तर्वर्ती यो जीवात्मा स चापीन्द्रः, इन्द्रियमिन्द्रलिङ्गं भवति यतः। "गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्॥" ( ऋ० ४ । २७ । १ ) तस्मात्-श्येन इन्द्र एव स आधिदैविकदृष्टया मध्यस्थानो विद्युद्देवः, आध्यात्मिकदृष्टया शरीरे

---

* 'अपिबत्' इति क्वचित्, सोऽपपाठः।

जीवात्मा, जीवात्मनं इन्द्रस्यापि गतिः शंसनीया यथा श्येनस्य पक्षिणो यथा वा विद्युतः शंसनीया शीघ्रगतिर्भवति तथा जीवात्मनोऽपि शंसनीया शीघ्रगतिर्भवति देहाद् देहान्तरं प्रति । यथा श्येनस्य द्वौ पक्षौ यथा वा विद्युतः शुष्कार्द्रे द्वे धारे तथा जीवात्मनोऽपि देहाद् देहान्तरगमनाय ज्ञानकर्मणी स्तः "विद्याकर्मणी समन्वारभेते" ( बृहदा० ४ । ४ । २ ) "यथा कर्म यथा श्रुतम्" ( कठो० वल्ली ५ । ७ ) इत्थं श्येनो मध्यस्थानो मध्यमो देव इन्द्रो विद्युद्वः ।

मन्त्रार्थः—

श्येनः—इन्द्रो विद्युद्देवः (High Voltage Current) सोमं सोमरूपं सोम्यधर्मवन्तं वृत्रं मध्यस्थानरयावरकं मेघमादाय गृहीत्वा स्वाधीनीकृत्य "वृत्रो वै सोम आसीत्" ( शत० ३ । ४ । ३ । १३ ) सहस्रमयुतं च साकं सवान्—अभरत्—अहरत् । सहस्रं लक्षं सवान् सवनीयान्—उत्पादनधर्मिणो भक्षान् भक्षणीयानाहारान् जडजङ्गमानां लक्ष्यं कृत्वा तेभ्यो दक्षिणामिव वा कृत्वाऽभरत् तेभ्योऽहरत् सहैव प्रापयति । अत्र प्रसङ्गे—इत्थङ्करणेन मेघरूपे सोमे पृथिवीं प्रति गते स श्येन इन्द्रो विद्युद्देवः पुरन्धिः पुरो जडजङ्गमशरीराणि धारयिता पोषकश्चास्ति । सोमस्य मदे तृप्तियोगे "मद तृप्तियोगे" ( चुरादि० ) सोमप्राप्त्या मेघजलप्राप्त्या सर्वे जडजङ्गमजीवास्तृप्तिं प्राप्तास्तृप्ता जाताः, तदाऽयममूरोऽमूढः सावधानो बुद्धिमानिव सन् मूराः—अरातीः—मूढान् संसारे मुग्धानज्ञान् लोभेन वा मुग्धान् यद्वा पापेन हतबुद्धीन् शत्रून्—अदानान्—अदातॄन् कृपणान् वाऽजहात् पापात् कृपणत्वाद् वा निवर्तितवान् ॥

अदेवतात्वे प्रयोगाः "अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् । नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥" ( ऋ० १ । ३२ । १४ ) इन्द्रदेवत्ये—उपमायां पक्षी । "यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।" ( ऋ० ७ । ६३ । ५ ) सूर्यदेवत्ये नामधेयेनोपमायाम् । "नव्यं नु स्तोममग्नये दिवः श्येनाय जीजनम् ।" ( ऋ० ७ । १५ । ४ ) अग्निदेवत्ये तद्विशेषणरूपेण ॥

सोमः ॥ २ ॥

ओषधिः सोमः, सुनोतेर्यदेनमभिषुण्वन्ति । बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन ॥ २ ॥

तस्य पावमानीषु निदर्शनायोदाहरिष्यामः—

"स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।

इन्द्राय पातवे सुतः ॥" ( ऋ० ९ । १ । १ )

इति सा निगदव्याख्याता ॥ ३ ॥

भा०—'सोमः' इति मध्यस्थानं देवतापदम् । मध्यस्थानादन्यत्र तु सोमः ओषधिर्भवति, यत एनमाभिषुण्वन्ति निपीडयन्ति "षुञ् अभिषवे" ( स्वादि० ) ततः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्" ( उणा० १ । १४० ) इति मन् प्रत्ययः कर्मणि—ओषधिवाचकत्वे । अन्यत्र मध्यस्थानदेवतावाचकत्वे तु कर्तरि । अस्य सोमस्य नैघण्टुकं वर्णनम्—अमध्यस्थानदेवताकं बहुलं बहुतरं विद्यते, प्राधान्येन मध्यस्थानदेवतात्वेन विरलं हि भवति । तस्यौषधिरूपस्या-मध्यास्थानदेवतात्मकस्य सोमस्य पावमानीषु खल्वृक्षु निदर्शनाय दिग्दर्शनार्थं सङ्केतनार्थमुदाहरणं दीयते "स्वादिष्ठया मदिष्ठया....." इति ।

मन्त्रार्थः—

हे सोम ! ओषधिरूप सोम ! त्वं सुतो निपीडितः सन् स्वादिष्ठया स्वादुतमया मदिष्ठया हर्षयित्रितमया च धारया रसधारया पवस्व प्रक्षर प्रस्रव, इन्द्राय यजमानाय "इन्द्रो वै यजमानः" ( शत० २ । १ । २ । ११ ) पातवे पातुम्, तुमर्थे तवेन् ॥

अस्यामृचि—ओषधिः सोमो देवतात्वेनोक्तः । स्तुतिरत्र तस्य धारया, स्वादिष्ठा मदिष्ठा हि तस्य धारा, तथा स्तुतिभाक् । इति निदर्शनं सर्वाः पावमान्य ऋचः सोमदेवत्याः, यद्वा सर्वं नवमं मण्डलं सोमदेवताकम् । अत्र नैघण्टुकशब्दोऽमध्यस्थानपरः । यद्वा मध्यस्थाने—ओषधिः सोमः साक्षान्नोपलभ्यते गौणरूपेण सोऽपि मध्यस्थानको मतोऽतः पृथिवीस्थाने न पठितः, दिव्यो हि सोमः—ओषधिः, तस्य दिव्यगुणवत्त्वात् । उक्तं च "दिवि सोमो अधिश्रितः" ( ऋ० १० । ८५ । १ ) "देवाः सोमं दिवः साम्ना समानयन्" ( तै० सं० २ । २ । ८ । ७ ) तथा ।

अथैषापरा भवति चन्द्रमसो वैतस्य वा—

"सोमं॑ मन्यते पपि॒वान् यत् सं॑पि॒षन्त्योष॑धिम् ।

सोमं॒ यं ब्र॒ह्माणो॑ वि॒दुर्न तस्या॑श्नाति॒ कश्च॒न ॥"

( ऋ० १० । ८५ । ३ )

सोमं मन्यते पपिवान् यत् सम्पिषन्त्योषधिमिति वृथासुतमसोममाह । सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम् ।

अथाधिदैवतं सोमं मन्यते पपिवान् यत् सम्पिषन्त्योषधि-
मिति यजुः सुतमसोममाह, सोमं यं ब्रह्माणो विदुश्चन्द्र-
मसं न तस्याश्नाति कश्चनादेव इति ॥ ४ ॥

भा०—अथायं मन्त्रः "सोमं मन्यते····" एतस्यौषधिरूपस्य सोमस्य चन्द्र-मसो वा वर्णनपरः ।

मन्त्रार्थः—

सोमं पीतवान् जनोऽन्यथासुतं विपीडितं तं सोमं मन्यते यत् खल्वौषधिं सम्पिषन्ति परन्तु ब्रह्माणो विधिना संस्कुर्वाणाः–विद्वांसो यं सोमं जानन्ति तं कश्चन यज्ञविहीनो नाश्नाति न हि पातुं शक्नोति । इत्यधियज्ञमोषधिपरोऽर्थः, ओषधिः सोमो देवता नैघण्टुकत्वेनामध्यस्थानत्वेन ।

अथाधिदैवतम्—पीतवान् जनः सोमं मन्यते यत्खल्वोषधिं सम्पिषन्ति निपीडयन्ति यजुःसुतं यजुर्वेदमन्त्रैः सुतं स सोमो न मध्यस्थानः । किन्तु यं सोमं ब्रह्माणो ज्योतिर्विदः खगोलशास्त्रज्ञा ग्रहनक्षत्रज्ञा विदुर्जानन्ति तस्य सोमस्याशनं पानं न कश्चिद्देवो मनुष्यः कर्तुं शक्नोति–स च सोमश्चन्द्रमाः । इत्येष एवार्थो नैरुक्तपक्षे देवतात्वेन च सोम उभयविधो मन्त्रेऽस्मिन् विद्यते पूर्वोत्तरार्द्धविभागशः ॥

अथैषापरा भवति चन्द्रमसो वैतस्य वा—
"यत्त्वा॑ देव प्र॒पिब॑न्ति॒ तत॒ आप्या॑यसे॒ पुन॑ः ।
वा॒युः सोम॑स्य रक्षि॒ता समा॑नां॒ मास॒ आकृ॑तिः ॥"
(ऋ० १० । ८५ । ५)

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा, वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद् रसहरणाद् वा । समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिश्चचन्द्रमा वा ॥

भा०—"यत्त्वा देव····" इति मन्त्रे सोमो देवता–ओषधिश्चन्द्रमा वा विकल्पमाश्रित्य, ओषधिर्नैघण्टुकोऽमध्यस्थानः, चन्द्रमाः प्राधान्येन मध्यस्थानो देवतात्वभाक् ।

ओषधिपक्षे मन्त्रार्थः—

हे ओषधिरूप सोम ! यत् खलु त्वां प्रपिबन्ति प्रकृष्टं पिबन्ति नरा ऋत्वि-

व्यजमानाः पुनरपि त्वमाप्यायसे—आवर्धसे पूर्ववत् प्रवृद्धो भवसि—पयसि दुग्धे मिश्रितः, पयसि दुग्धे मिश्रितं दधीवाप्यायनं प्रवृद्धिमाप्नोति, सोमस्य खल्वेष स्वभावो यद् दुग्धे मिश्रितः सर्वं दुग्धं सोमत्वे परिणमयति यथा दुग्धे मिश्रितं दधि सर्वं दुग्धं दधित्वे परिणमयति। इत्येतदाप्यायनं सोमस्य नाराशंसानभिप्रेत्य भवतीत्युक्तं यास्केन, नाराशंसा मन्त्रा भवन्ति ( निरु० अ० ९। पा० १ ख० ८ ) मन्त्रेषु सोमस्याप्यायनं पयसि वर्णितमस्ति, तद्यथा "आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥" तथा "आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः।" "सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः आप्यायमानो अमृताय सोम...." ( ऋ० १। ९१, १६,१७, १८) प्रातः सवनेऽभिषुतः सोमः पयसि दुग्धे मिश्रयित्वा स्थापितः स मध्यन्दिने सवने तृतीयसवने चाप्यानः प्रवृद्धो भवति यतो वायुः सोमस्य रक्षिता दुग्धे मिश्रिते सोमरसे वायुस्तस्य मदं वर्धयति। तद्विपरीतं यथा दुग्धे मिश्रिते दध्नि तदम्लत्वमग्निरौष्ण्यं वा वर्धयति। इति त्वभिषुतस्य सोमस्य यज्ञे पानेनापचयोऽवशिष्टस्य भवति किन्तु तस्य दुग्धे स्थापनेनोपचयो भवति। पुनर्यास्कः कथयति सोमस्यापचयोपचयौ क्षयवृद्धी पूर्वपक्षापरपक्षावभिप्रेत्य शुक्लपक्षकृष्णपक्षौ लक्षयित्वा वा भवतः। अपरपक्षे कृष्णपक्षे सोऽपचीयते पर्णैः पूर्वपक्षे शुक्लपक्षे तूपचीयते प्रवर्धते पर्णैः। तस्य स्वभाव एषः। कृष्णपक्षे तं प्रपिबन्ति समीपस्था ओषधयस्ताः सोमाद् रसं गृह्णन्ति शुक्लपक्षे स पुनराप्यायते वायुस्तस्य रक्षकस्तेन स कृष्णपक्षे न म्रियते शुक्लपक्षे वायुस्तं प्रवर्धयति शुक्लपक्षे वायुस्तस्मै—अवश्यायमानयति प्रवेशयति च तदन्तरे। अथ च हे ओषधिरूप सोम! त्वं 'समानां मास आकृतिः' असि। इत्यस्य वचनस्य व्याख्या चन्द्रमसः पक्षे द्रष्टव्या।

चन्द्रमसः पक्षे मन्त्रार्थः—

हे चन्द्रमाः सोम! यत्खलु त्वां कलाशः प्रपिबन्ति प्रकृष्टं पिबन्ति किलादित्यरश्मयोऽपरपक्षे कृष्णपक्षे पश्चात् पूर्वपक्षे शुक्लपक्षे त्वमाप्यायसे कलाशः पुनराप्यानो जायसे प्रवर्धसे पूर्णो भवसि। उक्तं यथा पञ्चमाध्याये यास्केन "तद्या एताश्चान्द्रमस्य आगामिन्य आपो [ कलारूपाश्चन्द्रिकारूपा वा ] भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति तथापि निगमो भवति 'यमक्षितिमक्षितयः पिबन्ति' ( मै० सं० २। ७। २, तै० सं० २। ४। १४। १ ) तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति 'यथा देवा अंशुमाप्याययन्ति" (मै० सं० २। ७। २)" ( निरु० अ० ५। ख० ११। श० ४२ काणुका ) "यथादित्या अंशुमाप्याय-

यन्ति" ( तै० सं० २ । ४ । १४ । १ ) देवा आदित्याः—रश्मयः । वायुः सोमस्य चन्द्रमसो रक्षिता । स प्रवहनामको वायुर्यस्याश्रये चन्द्रमास्तिष्ठत्याकाशे यस्मिन् परिधिरूपे स भ्रमति गच्छत्याकाशे । स सोमः 'समानां मास आकृतिः' समानां संवत्सराणाम्—इति बहुवचने वर्षार्थे—ऋतवो गृह्यन्ते यथा च 'शरदः शतम्' शरदित्येकवचनं शरदृतुर्भवति शरदो बहुवचने बह्व्यः शरदः संवत्सराणि, एवमत्र 'समा' इति वसन्तर्तुः "तस्य संवत्सरस्य वसन्तो द्वारम्" ( शत० १ । ६ । १ । १९ ) "तस्माद् ब्राह्मण आदधीत" ( शत० २ । १ । ३ । ५ ) "शस्यं च समा च" ( निरु० ९ । ३५, ३६ ) यथा द्यावापृथिव्यौ तथा 'शस्यं समा च' क्षेत्रे शस्यं पक्वकल्पमन्नम्, समा हरिता कृषिभूमिर्यथा तथा वसन्तः समा बहुवचने समाः—वसन्तादय ऋतवः, ऋतूनां वसन्तग्रीष्मशरदाम्, एतेषु ह्यृतुष्वोषधयो जायन्ते, अतः पूर्वमन्त्रे चोच्यते "ऋतूँरन्यो विदधज्जायते पुनः ।" ( ऋ० १० । ८५ । १८ ) तस्मात् सोमश्चन्द्रमाः खल्वेषामृतूनां तथा मासः—इति मासस्य "पद्दन्नोमास्....." ( अष्टा० ६ । १ । ६३ ) इति 'मासशब्दस्य 'मास्' आदेशः षष्ठ्येकवचने मासस्य च—आकृतिः—आकारकः आकृतिप्रदो व्यञ्जकः । उक्तं यथान्यत्र यास्केन "मासकृत्—मासानां चार्धमासानां च कर्ता भवति चन्द्रमाः" ( निरु० ५ । २१ ) ओषधिः सोमश्चन्द्रमाः सोमो वा रूपविशेषैः, ओषधिः सोमः पर्णवद्रूपैश्चन्द्रमाः सोमः कलावद्रूपैः ॥

अदेवतात्वेन प्रयोगः "आदाय श्येनो अभरत् सोमम्...." ( ऋ० ४ । २६ । ७ ) इति श्येनदेवत्ये नामधेयेन ॥ "वायवा याहि दर्शतेमे सोमा अरंकृताः ।" ( ऋ० १ । २ । १ ) वायुदेवत्ये नामधेयेन ॥

सोमौषधिविषये सुश्रुतग्रन्थे खलूक्तमस्ति यत्—

"सर्वेषामेव सोमानां पत्राणि दश पञ्च च ।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥ २० ॥

एकैकं जायते पत्रं सोमस्याहरहस्तदा ।
शुक्लस्य पौर्णमास्यां तु भवेत् पञ्चदशच्छदः ॥ २१ ॥

शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः ।
कृष्णपक्षक्षये चापि लता भवति केवला ॥ २२ ॥

सोमभेदाः—

अंशुमानाज्यगन्धस्तु कन्दवान् रजतप्रभः ।
कदल्याकारकन्दस्तु मुञ्जवान् लशुनच्छदः ॥ २३ ॥

चन्द्रमाः कनकाभासो जले चरति सर्वदा ।
गरुडाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ॥ २४ ॥
सर्पनिर्मोकसदृशौ तु वृक्षाग्रावलम्बिनौ ।
तथान्ये मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ॥ २५ ॥
सर्वे तु विज्ञेयाः सोमाः पञ्चदशच्छदाः ।
क्षीरकन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः ॥ २६ ॥

सोमस्य स्थानानि—

हिमवत्यर्बुदे सह्ये महेन्द्रे मलये तथा ।
श्रीपर्वते देवगिरौ गिरौ देवसहे तथा ॥ २७ ॥
पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ।
उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ॥ २८ ॥
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ।
हंसवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥ २९ ॥
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि ।
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥ ३० ॥
गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाक्करस्तथा ।
अत्र सन्त्यपरेऽपि सोमाः सोमसमप्रभाः ॥ ३१ ॥"

( सुश्रुत० चिकित्सा अ० २९ । २०–३१ )

नामानि—

अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दुर्वा सोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥ ५ ॥
प्रतानवांस्तालवृन्तः करवीरोंशवानपि ।
स्वयंप्रभो महासोमो यश्चापि गरुडाहृतः ॥ ६ ॥
गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाक्करस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥ ७ ॥
गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते ।
एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥ ८ ॥

( चरके चिकित्सास्थाने )

"सोमो नामौषधिराजः पञ्चदशपर्णो [ पर्णः ] स सोम इव हीयते वर्धते च ।" ( चरक० चि० अ० १ । ७ ) ।

चन्द्रमाः ॥ ३ ॥

चन्द्रमाश्चायन् द्रमति, चन्द्रो माता, चान्द्रं मानमस्येति वा । चन्द्रश्चन्दतेः कान्तिकर्मणः । चन्दनमित्यप्यस्य भवति । चारु द्रमति, चिरं द्रमति, चमेर्वा पूर्वम् । चारु रुचेर्विपरीतस्य ॥ ५ ॥

तस्यैषा भवति—

नवो॑नवो भवति॒ जाय॑मा॒नोऽह्नां॑ के॒तुरु॒षसा॑मे॒त्यग्र॑म् । भा॒गं दे॒वेभ्यो॒ वि द॑धात्या॒यन् प्र च॒न्द्रमा॑स्तिरते दी॒र्घमायुः॑ ॥" ( ऋ० १० । ८५ । १९ )

'नवो नवो भवति जायमानः' इति पूर्वपक्षादिमभिप्रेत्य 'अह्नां केतुरुषसामेत्यग्रम्' इत्यपरपक्षान्तमभिप्रेत्य । आदित्यदैवतो द्वितीयः पाद इत्येके । 'भागं देवेभ्यो विदधात्यायन्' इत्यर्द्धमासेज्यामभिप्रेत्य । प्रवर्धयते चन्द्रमा दीर्घमायुः ॥

भा०—'चन्द्रमाः' इति मध्यस्थानं देवतापदम् । चन्द्रमाः—चायन् पश्यन् द्रमति गच्छतीति प्रतिभाति "चायृ पूजानिशामनयोः" ( भ्वादि० ) निशामनं दर्शनम् । ततः शतृप्रत्ययः—चायन् । "द्रम गतौ" ( भ्वादि० ) 'चायन्' इत्युपपदात् द्रमधातोः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) असुन् प्रत्ययः । 'चायन्' इत्यस्याद्यन्तौ गृहीत्वा 'चन्' भावः—चन्द्रमाः । यद्वा 'चन्द्रो माता' चन्द्रश्चासौ माता च चन्द्रमाः । चन्द्रः—आह्लादकः, माता निर्माता—ओषधीनाम् । 'चन्द्रः' उपपदात् "माङ् माने" ( जुहोत्यादि० ) ततः "चन्द्रे मो डित्" ( उणा० ४ । २२८ ) असुन् प्रत्ययो डिच्च । अथवा चान्द्रं मानम्—अस्य चान्द्रं मानं कालमानं तिथिपक्षमासवर्षात्मकं मानमस्येत्यनेन व्यवह्रियते—इति चान्द्रं चन्द्रसम्बन्धि मानं चन्द्रस्य मो मानम् । माङ्धातोः—असुन् भावे बाहुलकात्—डिच्च—मस्, चन्द्रस्य चान्द्रं मस्—मानमस्येति—असमानाधिकरणो मध्यमपदलोपी बहुव्रीहिसमासः, चन्द्रमाः । पक्षद्वयेन लक्षितश्चन्द्रश्चन्द्रमाः । चन्द्रः "चदि आह्लादने दीप्तौ च" ( भ्वादि० ) कान्तिर्दीप्तिः—दीप्त्यर्थात् "स्फायित····चञ्चि···· क्षुम्भो रक्" ( उणा० २ । १३ ) इति रक् प्रत्ययः । चदिधातोश्चन्दनमपि तत्राह्लादोऽर्थः बहुलमन्यत्रापि युच्" ( उणा० २ । ७९ ) । अथवा चन्द्रमाः—चारु द्रमति शोभनं गच्छति, चिरं द्रमति चिरेण गच्छति, चारुचिरयोः 'चन्'

भावोऽन्यत् पूर्ववत् । अथवा "चमु अदने" ( भ्वादि० ) "चमु भक्षणे" ( स्वादि० ) ततः कर्मणि क्विप्, चम्यमानो द्रमति गच्छति यावदेका कलाप्यव-शिष्येतामावस्यान्तम् । 'चम्' उपपदाद् द्रम धातो र्बाहुलकात्—असुन् प्रत्ययः, चन्द्रमाः । 'चारु' शब्दः "रुच दीप्तावभिप्रीतौ च" ( भ्वादि० ) 'का' प्रत्यये रुचा तद्विपरीते 'चारु' शब्दः ।

मन्त्रार्थः—

जायमान उदयमानो नवो नवः पूर्वपूर्वदिवसापेक्षया वर्धमान एकैककलया भवति पूर्वपक्षे शुक्लपक्षे चन्द्रमाः, अथ च उपसामग्रमह्नां दिवसानां केतुः प्रज्ञानं सूचकं भवति चन्द्रमा अपरपक्षस्य कृष्णपक्षस्यान्तिमभागे पूर्वस्यां दिश्युद्यन् । स चन्द्रमाः शुक्लपक्षान्ते कृष्णपक्षान्ते चायनुदगच्छन् देवेभ्योऽर्द्धमासयागयो-र्दर्शपौर्णमासयागयोर्भागमग्निप्रभृतिभ्यः समर्पयति । एवं स चन्द्रमा एव कृष्ण-पक्षेऽस्माकं रोगान् हरन् शुक्लपक्षे स्वास्थ्यगुणान् वर्धयन् दीर्घमायुः प्रवर्धयति ।

मन्त्रस्य द्वितीयः पादः 'अह्नां केतुरुषसामेत्यग्रम्' आदित्यदेवत्योऽस्तीति केचन नैरुक्ता मन्यन्ते । यतः पूर्वमन्त्रे "पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥" ( ऋ० १० । ८५ । १८ । ) अत्र—आदित्याचन्द्रमसौ वर्णितौ, तयोरादित्यो भुवनानि प्रकाशयति चेष्टयति च, चन्द्रमाः—ऋतून् विदधाति । आदित्यपक्षे द्वितीयपादस्यार्थः—आदित्योऽह्नां केतुः केतयिता प्रकाशकः प्रज्ञानभूतो वा तथोष-सामग्रमुपरि तासामग्रं गमयिता वा—एति—उदेति ॥

अदेवतात्वे प्रयोगाः—"अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद् दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ।" ( ऋ० १ । २४ । १० ) वरुणदेवत्ये नामधेयेन ।" चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।" ( ऋ० १० । ९० । १३ ) पुरुषदेवत्ये नामधेयेन ॥

मृत्युः ॥ ४ ॥

मृत्युर्मारयतीति सतः । मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः ॥ ६ ॥

तस्यैषा भवति—

"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥" ( ऋ० १० । १८ । १ )

इति सा निगदव्याख्याता ।

भा०—'मृत्युः' इति मध्यस्थानं देवतापदम् । मृत्युः—मारयति यः । "मृङ् प्राणत्यागे" ( तुदादि० ) ततोऽन्तर्गतणिजर्थात् "भुजिमृङ्भ्यां युक्त्युकौ" ( उणा० ३ । २१ ) इति त्युक् प्रत्ययः । यद्वा 'मृतं च्यावयति' मृतं म्रियमाणमस्माच्छरीराच्च्यावयति पृथक् करोति तथा—अन्यं देहं धारयितुं क्षिपति—इति शतबलाक्षो मौद्गल्य आचार्यो मन्यते मुद्गलस्य पुत्रो बहुबलानि बहुशक्तिमन्ति—अक्षीणि—इन्द्रियाणि यद्वा बहुबलेऽक्षिणी नेत्रे यस्य दूरदर्शी सः । 'मृत' शब्दोपपदात् "च्युङ् गतौ" ( भ्वादि० ) ततः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इत्यनेन विच् प्रत्ययः । मृतच्युः—मृत्युः । 'मृत' इत्यस्य 'मृ' भावो धातोश्च चकारस्य तकारः । तस्य "परं मृत्यो····" इति मन्त्रः ।

अस्योपरि यास्कस्य वचनं तु 'इति सा निगदव्याख्याता' परन्तु—

[ परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो कथितं तेन मृत्यो मृतं च्यावयते भवति मृत्यो मदेर्वा मुदेर्वा ॥ ७ ॥
तेषामेषा भवति—"त्वे॒षमि॒त्था स॒मर॑णं॒ शिमी॑वतो॒रिन्द्रा॑विष्णू सु॒त॒पा वा॑मुरु॒ष्यति । या मर्त्या॑य प्रतिधी॒यमा॑न॒मित्कृ॒शानो॒रस्तु॑ र॒स॒ना॒मु॑रु॒ष्यथः॑ ॥" ( ऋ० १ । १५५ । २ ) ]

भा०—इति पाठस्तु खल्वयास्कीयो लिपिप्रमादादेवापतितः । यतः 'इति सा निगदव्याख्याता' तु 'परं मृत्यो अनुपरेहि०' इत्यृचमपेक्षते न तु "त्वेषमित्था समरणं शिमीवतो····" इति, किन्त्वेषा त्वस्पष्टार्था । पुनश्च 'त्वेषमित्था०' इति प्रसङ्गबाह्या यद्वा—अप्रासङ्गिकी ऋगेषा, तदुपरि 'तेषामेषा भवति' इति शीर्षकं नितान्तमसम्बद्धं तेषामिति केषां केऽपि न निर्दिष्टा वर्णिता वर्ण्यमाना वा सन्ति येभ्यस्तेषामित्युच्येत । उक्तभागः पाठो वा न दुर्गाचार्येण न च स्कन्दस्वामिना व्याख्यातः । पाठ एष मुद्रितस्त्वस्ति सर्वत्र मुद्रितपुस्तके हस्तलिखितेषु चापि पाठो यथास्वं सर्वत्रोपलभ्यते, अहं स्वयं बडौदाप्राच्यविद्यामन्दिरे, जोधपुर प्राच्यानुसन्धानसंस्थाने, अलवरस्थसंग्रहालये, होशियारपुरस्थे वैदिकशोधसंस्थाने च षोडश हस्तलिखितानि निरुक्तपुस्तकानि दृष्टवान् । एष प्रामादिकः पाठोऽन्धपरम्परया प्रवृत्तः सर्वेषु निरुक्तपुस्तकेषु । अत्र पाठे—ऋक् तु 'सर्वथैवाऽप्रासङ्गिकी । 'परं मृत्यो ध्रुवं मृत्यो····' इति पाठः प्रासङ्गिको वक्तु युज्यते परन्तु भ्रष्टोऽथ नष्टोऽपि स्यादवचनम् । यथास्थार्थयोजनापेक्ष्येत तर्ह्येवं कर्तुं शक्यते यत्

'परं मृत्यो' इति यन्मन्त्रे तत्खलु 'ध्रुवं मृत्यो' इति विज्ञेयम् । तं 'परम्—अनुपरेहि' इति कथने 'ध्रुवम्—नियतम्—अनुपरेहि' इति विज्ञेयम् । कं ध्रुवमिति पन्थां पन्थानं मार्गमनुपरेहि कं कतरं मार्गमनुपरेहि—इति प्रश्ने 'यस्ते स्व इतरो देवयानात्' ते तव यत् स्वः स्वकीयो मार्गस्तमनुपरेहि, को मृत्योर्मार्गः—इति प्रश्ने देवयानात्—इतरः पितृयाणं मार्गः । यस्मिन् मार्गे जनाः पितरौ मातापितरौ प्राप्नुवन्ति पुनर्जन्म धारयन्ति तं मार्गमनुपरेहि पुनर्जन्मेच्छुकान् पुनर्जन्मधारणयोग्यान् जनाननुप्रसर, तान् मृत्युर्मारयति पुनर्जन्मनि निवेशयितुम्, देवयानं देवयानस्य पथिकाननु न परैति मृत्युस्ते तु जीवन्मुक्ता अमृताः सञ्जाताः, तान् खल्वमृतान् न मारयति पुनर्जन्मनि प्रवेशयितुं यतो हे मृत्यो कथितं ते [ तेन ? ] यद्वा तेन शतबलाक्षेण मौद्गल्येन 'मृतं च्यावयति'—च्यावयते—अनुवादे—आत्मनेपदम् । म्रियमाणं च्यावयति मोक्ष्यमाणममृतं नेत्यर्थः । तस्मै मोक्ष्यमाणाय जीवन्मुक्ताय भवति मृत्युः [ मृत्यो ? ] मदेर्वा, मुदेर्वा, आनन्दप्रदो हर्षप्रदो वा किन्तु स मृत्युस्त्वमृतत्वाय कल्पते । "मदी हर्षे" ( भ्वादि०, दिवादि० ) "मद हर्षे" ( भ्वादि० ) ततो मदेर्मुदेर्वा 'मृ' भावः—त्युक् प्रत्ययः पूर्ववत्, मृत्युः ॥ आश्चर्यं खलु यस्मान्मृत्योर्बिभेति पितृयाणी जनस्तस्माद्धर्षमाप्नोति देवयानी मुमुक्षुर्जीवन्मुक्तः ॥ अग्रे त्वृक् निगदव्याख्याता । यत्—हे चक्षुष्मते शृण्वते, हे चक्षुष्मन् नेत्रवन् हे शृण्वन् ! मृत्यो ! इत्यालङ्कारिकत्वेन वर्ण्यते । ते तुभ्यमहं ब्रवीमि देवयानस्य पथिको मुमुक्षुरस्माकं प्रजां प्रजायमानो तनुं शरीरं वीरान् प्राणान् च मा हिंसिष्ठ हन्याः "प्राणा वै दश वीराः" ( शत० १२ । ८ । १ । २२ ) ।

अदेवतात्वेन प्रयोगाः "अ॒हमिन्द्रो॒ न परा॑ जिग्य॒ इद्धनं॒ न मृ॒त्यवेऽव॑ तस्थे॒ कदा॑ च॒न ।" ( ऋ० १० । ४८ । ५ ) इन्द्रदेवत्ये नामधेयेन । "न मृ॒त्युरा॑सीद॒मृतं॒ न तर्हि॒....." ( ऋ० १० । १२९ । २ ) भाववृत्तदेवत्ये नामधेयेन । "उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ माऽमृता॑त् ।" ( ऋ० ७ । ५९ । १२ ) रुद्रदेवत्ये नामधेयेन । "यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नीत॑ ए॒व । तमा ह॑रामि॒ निर्ऋ॑तेरु॒पस्था॒दस्पा॑र्षमेनं श॒तशा॑रदाय ॥" (ऋ० १० । १६१ । २ ) राजयक्ष्मनाशनदेवत्ये नामधेयेन ॥

विश्वानरः ॥ ५ ॥

विश्वानरो व्याख्यातः ॥ ८ ॥

तस्यैषा भवति—

"प्र वो॑ मुहे मन्द॑मानायान्ध॒सोऽर्चा॑ वि॒श्वान॑राय विश्वा॒भुवे॑ । इन्द्र॑स्य॒ यस्य॒ सुम॑खं॒ सहो॒ महि॒ श्रवो॑ नृम्णं॑ च॒ रोद॑सी सप॒र्यतः॑ ॥" ( ऋ० १० । ५० । १ )

प्रार्चत यूयं स्तुतिं महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय स्तूयमानाय शब्दायमानायेति वा, विश्वानराय सर्वं विभूतायेन्द्रस्य यस्य प्रीतौ सुमहद् बलं महच्च श्रवणीयं यशो नृम्णं च बलं नृन्नतं द्यावापृथिव्यौ वः परिचरत इति । कमन्यं मध्यमादेवमवक्ष्यत् ॥ ९ ॥

'विश्वानरः' इति मध्यस्थानदेवतापदम् । विश्वानरो व्याख्यातः "प्रत्यृतो विश्वान् नरान्—प्रत्यृतः सर्वाणि भूतानि" ( निरु० ७ । २१ ) ।

मन्त्रार्थः—

वः—यूयं हे विद्वांसः ! स्तोतारः प्रथमाबहुवचने व्यत्ययेन 'वः' द्वितीयाबहुवचनम् । महे—महतेऽन्धसोऽन्नस्य दात्रे मन्दमानाय मोदमानाय हृष्यते—हृष यद्वा स्तूयमानाय "मदि स्तुतिमोद····" ( भ्वादि० ) यद्वा शब्दायमानाय वेगवशात्—हर्षध्वनिमिव शब्दं कुर्वाणाय विश्वभुवे सर्वं विभूताय सर्वस्य विभवित्रे विश्वानराय देवाय (Kinetic Energy) अर्च—अर्चत व्यत्ययेनैकवचनम् । यस्य—इन्द्रस्य विश्वानरस्य प्रीतौ सुमखं सुमहत्, यास्कस्य विधानसामर्थ्यात् 'मख' महदर्थेऽत्र, सहो बलम् "सहः—बलनाम" ( निघं० २ । ९ ) महि श्रवो महच्च श्रवणीयं यशो नृम्णं बलम् "नृम्णं बलनाम" ( निघं० २ । ९ ) तच्च बलं नृन्नतं मनुष्यान् प्रति नतं नराणां मनुष्याणां हितसाधनाय नतमनुकूलं भवति यद्वा नृम्णं नॄन् नरान् नेतॄन् भौतिकदेवान् खल्वपि नतं स्वाधीनान् कर्तुं प्रवृत्तमस्ति यद्बलं रोदसी द्यावापृथिव्यौ सपर्यतः परिचरतोऽनुतिष्ठतः । "रोदसी द्यावापृथिवीनाम" ( निघं० ३ । ३० ) इतीत्थं गुणवन्तं विश्वानरं मध्यमादन्यं कं मन्त्रः कथयेत्, यस्य बलं द्यावापृथिव्यावपि परिचरतो मध्यम एव स विश्वानरः ।

कात्यायनसर्वानुक्रमण्यनुसारी तु वैकुण्ठ इन्द्रो देवता सर्वस्य सूक्तस्यास्ति । यास्कमतेऽस्य प्रथममन्त्रस्य तु विश्वानरो देवता । मन्त्रे 'इन्द्रस्य' इन्द्रोऽप्यस्ति तेन सर्वानुक्रमण्यां त्विन्द्रो देवता, यास्कस्य मते मन्त्रस्य पूर्वार्द्धे प्रार्च—प्रार्चत क्रियायाः साक्षात् सम्बन्धः खलु विश्वानराय, तेन तन्मते विश्वानरो देवता, इन्द्रस्तु विशेषणं मतम्—परमैश्वर्यवान्—ईश्वरः । "इदि परमैश्वर्ये" ( भ्वादि० ) ।

स विश्वानरः कोऽस्त्यत्र मन्त्रे—इति प्रश्नः । पृथिवीस्थानोऽग्निर्न विश्वानरः, स तु वैश्वानर उक्तो हि सप्तमाध्याये तत्रेदमप्युक्तं यद् वैश्वानरोऽग्निः पार्थिवः, यतः स विश्वानरोद्भवः । विश्वानरौ चोत्तरे ज्योतिषी मध्यमोत्तमौ देवौ । तत्रैवेदमप्युक्तम् "विश्वानरावित्यप्येते उत्तरे ज्योतिषी, वैश्वानरोऽयं [ पार्थिवोऽग्निः ] यत्ताभ्यां जायते" ( निरु० अ० ७ । पा० ६ । ख० २१ ) तर्हि विश्वानरौ मध्यमोत्तमौ । मध्यमोत्तमयोरुत्तमस्तु सूर्यः, मध्यमो मध्यस्थाने भवः—मध्यस्थानभवो वायुरिन्द्रश्च "वायुर्वेन्द्रो वान्तरिक्षस्थानः" ( निरु० अ० ७ । पा० २ । ख० ५ ) प्रस्तुते मन्त्रे तूभयरूपो देवो लक्ष्यते, इन्द्रधर्मविशिष्टो वायुर्वैद्युतशक्तिमान् वायुरत्र विश्वानरः, एतादृशस्य वायोराश्रये सर्वं जगद् वर्तते, एतमाश्रित्य सर्वे लोका गतिं कुर्वन्ति, तद्यथा—"आत्मा ते वातो रज आ नवीनोत्० ॥" ( ऋ० ( ऋ० ७ । ८७ । २ ) विश्वगोलस्यात्मा वातो रजो लोकमात्रं प्रेरयति । "इरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते वृथगग्नयः ॥" ( ऋ० ८ । ४३ । ४ ) पुच्छवत्यस्तारा वातप्रेरिता गच्छन्ति । "परिणाहवशाच्छिता तद्वशाद् भानि भुञ्जते ॥" ( सूर्यसिद्धान्ते १।२६ ) परिणाहनामकवायुवशे नक्षत्राणि गच्छन्ति । "प्रवहाख्यो मरुत् [ लोकान् ] स्वोच्चाभिमुखमीरयेत् ।" ( सूर्यसिद्धान्ते २ । २९ ) तस्मात् स वैद्युतशक्तिमान् वायुर्विश्वानरो मध्यस्थानः सन्नूर्ध्वाधो द्यावापृथिव्यौ विभवति—तयोरन्तराले सन् तावपि स्पृशति । भवतु द्युलोकस्याभ्यन्तरे सूर्यस्य साम्राज्यं पृथिवीलोकमध्येऽग्नेः प्रभावः परन्तु यावत् तयोर्बाह्यावधी तावत्पर्यन्तं तु विश्वानरो मध्यस्थानो देव एव राजते । भवतु वर्षकर्मणि विद्योतनादेकदेशी देवो विद्युत् तथा पवनादेकदेशी स्थूलो वायुः परन्तूभयधर्मयुक्तोऽदृश्योऽस्पृश्यश्च निरन्तरं समतरङ्गैर्वहमानो विश्वानरो भवति ॥

तस्यैषापरा भवति—

"उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।" ( ऋ० ७ । ७६ । १ )

उदशिश्रिय * उज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति ॥

भा०—अस्य विश्वानरस्यायमन्यो मन्त्रो यस्मिन् विश्वानरो मध्यमो देवोऽसंशयं सिध्यति ।

---

* 'उदशिश्रयज्ज्योति' इति पाठान्तरम् ।

मन्त्रार्थः—

सर्वजन्यं सर्वजनेभ्यो हितममृतं ज्योतिः सविता प्रेरयिता विश्वानरो देवोऽमृतं ज्योतिः सूर्यमुच्छ्रेत्—उदशिश्रियत्—उच्छ्रयति—ऊर्ध्वं प्रेरयति—उत्तानयति । इति कथने सूर्यस्योत्ताने—ऊर्ध्वस्थापने तस्यैवैमध्यस्थानो देवो विश्वानर इति सिद्धम् । पुनरर्द्धर्चः—"क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ।" एवं विश्वानरस्य क्रत्वा कर्मणा यदोत्तानितः सूर्यस्तदा देवानां रश्मीनां चक्षुः प्रकाशः—उषाः—अजनिष्ट प्रादुरभवत्—प्रादुर्भवति सा विश्वं भुवनं जगत्—आविः—आविष्करोति दृष्टं करोति दर्शयति ॥

अदेवतात्वेन प्रयोगः "इन्द्रो रूपेणाग्निर्वहेन प्रजापतिः परमेष्ठी विराट् । विश्वानरे अक्रमत वैश्वानरे अक्रमतानडुह्यक्रमत ।" ( अथर्व० ४ । ११ । ७ ) इन्द्ररूपानडुद्देवत्ये नामधेयेन ॥

धाता ॥ ६ ॥

धाता सर्वस्य विधाता ॥ १० ॥

तस्यैषा भवति—

"धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् ।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥"

( शां० श्रौ० ९ । २८ । ३ )

धाता ददातु दत्तवते प्रवृद्धां जीविकामनुपक्षीणां वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः ॥

भा०—'धाता' इति मध्यस्थानदेवतापदम् । धाता सर्वस्य विश्वस्य विधाता 'वि' इत्युपसर्गार्थगर्भितात् "धाञ् धारणपोषणयोः" ( जुहोत्यादि० ) धातोः तृच् प्रत्ययः ।

मन्त्रार्थः—

धाता विधाता जीवनायाऽऽौषधीनां स्रष्टा दत्तवते पृथिव्यै कृषिविधिना बीजं दत्तवते कृषीवलाय अग्नये च होमविधिना हविर्दत्तवते यजमानाय वा प्राचीं प्रगतां लम्बमानां प्रवृद्धां जीवातुं जीविकां जीवनस्य निर्वाहिकामन्नसम्पत्तिमक्षितामनुपक्षीणां स्थिरां ददातु । अतो वयं तस्य सत्यधर्मणः सत्यधर्मवतो यथाकर्म तथाफलस्य प्रदातुः सुमतिं कल्याणीं कल्याणकारिणीं शुभां पवित्रां मतिं कृपां तथाचरणं विधाय धीमहि धारयेम ॥

वृष्टेः पूर्वं तदनन्तरं वा हविर्बीजप्रक्षेपणानुरूपमन्नादिकस्योत्पादको भूलवर्ती मध्यस्थानो देवो वायुविशेषो धाता (Oxygen)।

निरुक्तयः—जीवातुम् "जीवेरातुः" ( उणा० १ । ७८ )।

अदेवतात्वे प्रयोगाः—"भगस्य स्वसा⋯थो अघस्य धाता जयेम तं दक्षिणया रथेन ॥" ( ऋ० १ । १२३ । ५ ) उषोदेवत्ये क्रियाविधायकत्वेन । "विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक् ।" ( ऋ० १० । ८२ । २ ) विश्वकर्मदेवत्ये तद्विशेषणरूपेण ॥

विधाता ॥ ७ ॥

विधाता धात्रा व्याख्यातः॥ ११ ॥

तस्यैष निपातो भवति बहुदेवतायामृचि—

"सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि । तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥" ( ऋ० १० । १६७ । ३ )

इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति । कलशः कस्मात् कला अस्मिञ्छेरते मात्राः। कलिश्च कलाश्च किरतेर्विकीर्णमात्राः ॥ १२ ॥

भा०—'विधाता' इति मध्यस्थानं देवतापदम् । विधाता 'धात्रा' इति शब्देन समानो व्याख्यातो विज्ञेयः, विपूर्वाद् धाञ्धातोस्तृच् प्रत्ययः, विधाता । धातुर्वैपरीत्येन प्रेरयिता, धाता त्वस्मिन् जन्मनि प्रेरयिता विधाता प्राणानाद्यान्यजन्मनि धारयिता वायुविशेषस्तस्य बहुदेवतायामृचि निपातोऽस्वतन्त्रोऽकेवलः प्रयोगो भवति । मिश्रितदेवतात्वभाक् खलु निपातो भवति ।

यास्कोऽनुवदते–एताभिर्देवताभिरभिप्रसूतः समुत्पादितो यः सोमस्तस्य कलशान् भक्षितवान् पीतवान् । सोमे देवानां गुणाः सन्ति तस्य पानमुक्तानां देवानां स्तुतिं कुर्वता कर्तव्यम् । ते देवाः सन्ति निरुक्ते देवताशब्देन प्रोक्ताः, मन्त्रस्यान्वयः–"वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि मघवन् धातर्विधातः–तवोपस्तुतौ–अद्य सोमस्य राज्ञः कलशान्–सोमकलशान्–अभक्षयम्' कस्य सोमस्य कलशान् ? वरुणबृहस्पत्यनुमतीन्द्रधाताविधातृभिर्देवैरभिप्रसूतः समुत्पादितो यः । मन्त्रे 'राज्ञः' इति शब्दो विशेषणरूपोऽस्ति न स्वतन्त्रो यतो नहि निरुक्ते 'राजा' देवतात्वेन पठितः । प्रायः सोमो राजा पठ्यते, तद्यथा "इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन् प्र णु

आयूंषि तारीरहानीव सूर्यो वासराणि ॥" ( ऋ० ८ । ४८ । ७ ) "सोम राजन् मृळया नः स्वस्ति…." ( ऋ० ८ । ४८ । ८ ) सोमो राजा" ( तै० सं० २ । ५ । ७ । ३ ) "राजा वै सोमः" ( शत० १४ । १ । ३ । १२ ) "सोमो वै राजौषधीनाम्" ( गो० उ० १ । १७ ) "सोममेव राजानं क्रीयमाणमनु यानि कानि च भेषजानि तानि सर्वाण्यग्निष्टोममपि यन्ति" ( ऐ० ३ । ४० ) सोमः सर्वासामोषधीनां राजा श्रेष्ठो वा सर्वौषधिप्रतिरूपको यत् तस्मिन् बहूनां देवानां गुणाः शक्तयो वा-आगताः, बह्वीभिर्देवताभिः स उत्पादितः, सुश्रुतस्य चिकित्सा-स्थाने चोक्तम् "ब्रह्मादयोऽसृजन् पूर्वममृतं सोमसंज्ञितम् ।" ( सुश्रुत चिकि० अ० २९ । ३ ) ।

मन्त्रार्थः—

वरुणस्य देवताप्रसङ्गे प्रोक्तस्य "नीचीनवारं वरुणः कबन्धं….यवं न वृष्टि-र्व्युनत्ति भूम ॥" ( ऋ० ५ । ८५ । ३ ) वृष्टेः प्रेरको देवो वरुणस्तस्य धर्मणि वृष्ट्यर्थं यज्ञविधौ वर्तमानः, बृहस्पतिर्देवताप्रसङ्गे निर्दिष्टस्य देवस्य स्तनयित्नु-शब्दकारिणो वर्षकर्मण आदेष्टुः-आदेष्टुर्जनस्येव तथा-अनुमत्याः-देवपत्न्याः-उत्तरदिक्स्थाया व्योमकक्षायाः, यद्वा पूर्वस्याः पौर्णमास्याः-देवतायाः [ अस्मि-न्नेवाध्याये देवताप्रसङ्गे वक्ष्यमाणायाः ] "या पूर्वा पौर्णमासी सानुमतिः" ( ऐ० ७ । ११ ) शर्मणि यज्ञसदने यत्र मन्त्रपाठाः स्युः, पौर्णमास्यां तिथौ च "शर्म गृहनाम" ( निघं० ३ । ४ ) मघवन् हे इन्द्र ! विद्योतमान विद्युदेव धातः-रसस्य प्रेरयितः ! विधातः ! संहरणशक्तिरूपदेव ! (Hydrogen) युष्माक-मुपस्तुतौ सोमस्य राज्ञः कलशान् सोमकलशान् चमसान्-अभक्षयं भक्षयामि पिबामि सोमं पिबामीत्येव, किन्तु वरुणस्येत्येवमुक्तस्य देवगणस्य कलशान् पिबामि, तत्र सोमे वरुणादीनामपि कलाः सन्तीति सोमपानं शोभनम् ।

निरुक्तयः—'कलशः' कला मात्राः पानमात्राः शेरतेऽस्मिन् 'कला'-शब्दो-पपदात्-शीङ्धातोः "अन्येष्वपि दृश्यते" ( अष्टा० ३ । २ । १०१ ) डः प्रत्ययोऽधिकरणवाच्ये बाहुलकात्, कलशः । कलिः, कलाः, "कॄ विक्षेपे" ( तुदादि० ) "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) रेफस्य लत्वं बाहुल-कात्, कलिः । 'कला' पचादिलक्षणोऽच् ततः स्त्रियां टाप् बहुवचने कलाः ।

अदेवतात्वे प्रयोगः—"उभे द्यावापृथिवी विश्वमिन्वे अर्यमा देवो अदिति-र्विधाता ।….विश्वे देवाः पवमानं जुषन्त ॥ ( ऋ० ९ । ८१ । ५ ) इति पव-मानसोमदेवत्ये नामधेयेन ॥

इत्येकादशाध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः

अथातो मध्यस्थाना देवगणाः । तेषां मरुतः प्रथमागामिनो भवन्ति ॥

मरुतः ॥ ८ ॥

मरुतो मितराविणो वा, मितरोचिनो वा, महद् द्रवन्तीति वा ॥ १३ ॥

तेषामेषा भवति—

"आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥" ( ऋ० १ । ८८ । १ )

विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा, स्वर्चनैरिति वा, स्वर्चिभिरिति वा रथैरायात । ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा ॥

भा०—अथेदानीमत आरभ्य मध्यस्थाना देवगणा बहुवचनेन निर्देश्या देवाः स्वस्वजातिरूपाः श्रृङ्खलाक्रमयुतास्तरङ्गा इव प्रवहमाणा व्यापिनोऽनेकदेशिनो देवा अविच्छिन्ना देवगणाः सन्ति । तेषां मरुतः प्रथमं प्राप्तावसरा मध्यस्थाने । व्यक्तिर्देवो वायुर्यथा प्रथमागामी भवति तथा मरुतः प्रथमागमिनः । वायुरपि मध्यस्थानी पृथगेकदेशी भूत्वा स्थूलत्वं चादाय पृथिवीपृष्ठं दध्नाति वृक्षानुत्पाटयति तीव्रध्वनिं कुर्वंश्च वाति । न तथा मरुतो वान्ति, मरुतस्तु मितराविणः—मितं संक्षिप्तमेकरसं ध्वनिं कुर्वाणाः, मितमेकरसं ज्वलयन्तः, महत्—अतीव द्रवन्तः सर्पन्तः सततं विचरन्ति । 'मित' शब्दोपपदात् 'रु शब्दे' ततः क्विप् 'मित' इत्यस्य 'म' भावः, मरुत् । 'मित' शब्दोपपदात् "रुच दीप्तावभिप्रीतौ च" ( भ्वादि० ) ततः क्विप् 'मित' इत्यस्य 'म' भावः, धातोश्चकारस्य तकारश्छान्दसः । मरुत् । 'मित' शब्दोपपदात् "द्रु गतौ" ( भ्वादि० ) ततः क्विप् 'मित' शब्दस्य 'म' भावः, धातोराद्यन्तविपर्ययः, म-रुद्-मरुत्, दकारस्य तकारश्छान्दसः । तथाभूता अन्तरिक्षस्था मरुतः—मरुद्गणः । तेषां मरुतामाधारे सर्वे लोका गच्छन्ति तेषामाधारे विद्युत्प्रवाहाश्च व्रजन्ति वस्तुतस्तु ते विद्युन्मयशक्तिमन्तः सन्ति तेषां विषये यास्कोदाहृतो मन्त्रः "आ विद्युन्मद्भिर्मरुतः....." ।

मन्त्रार्थः—

हे मरुतः ! अस्माकमुपयोगिनः प्रथमगणस्थाः ! "सप्त सप्त हि मारुता गणाः" ( शत० ९ । ३ । १ । २५ ) वायुस्तराः ! यूयं विद्युन्मद्भिर्विद्युद्युक्तैः स्वर्कैः स्वञ्चनैः—सुगमनैः, स्वर्चनैः—सुप्रशंसनीयैः, स्वर्चिभिः—सुदीप्ततरङ्गैः, ऋष्टिमद्भि-रस्त्रशक्तिमद्भिरश्वपर्णैरश्वपतनैरश्वैरिव पतनसाधनवद्भिः—रथैः स्वकीयरमणयोग्यैः—रथरूपैर्मेघैः—आयात—आगच्छत, अथ च नोऽस्मभ्यं वर्षिष्ठया—इषा वर्षिष्ठेनाति-शयितप्रवृद्धेनान्नेन सुमायाः कल्याणकर्माणो यद्वा कल्याणकरप्रज्ञावन्तो वय इव पक्षिण इवापप्तत—आपतत शीघ्रमागच्छत वृष्टिकरणाय "मरुतो वै वर्षस्येशते" ( शत० ९ । १ । २ । ५ ) Resonance Radiations (Spectrums) fo/and Ions अत्र मन्त्रे मरुतां विद्युन्मन्त ऋष्टिमन्तो रथा उक्तास्ते खल्वाल-ङ्कारिकत्वेन मरुद्भिः सह विद्युतोऽथ वज्रस्य वज्रनिर्घोषणात् साक्षात् सम्बन्धो मेघहनने दृश्यते हि, तदित्थं वर्णनं मनुष्यार्थं पूर्वं भूमिकायां यास्केनोक्तमेव "मनुष्यवद्देवताभिधानम्" ( निरु० १ । १ । २ ) देवताभिधाने तद्गुणवर्णने मनुष्या अधिक्रियन्ते, मनुष्या अपि शत्रुहननाय संग्रामे विद्युन्मद्भिः ऋष्टि-शक्तिमद्भी रथैर्गच्छन्तु । मरुतां विषये चान्यत्रोक्तं मन्त्रे "असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना । तां विध्यत तमसापव्रतेन यथैषामन्यो अन्यं न जानात् ॥" ( अथर्व० ३ । २ । ६ ) यास्केन प्रथमगणस्य मरुतां मेघस्य पातयितृणामुदाहरणं दत्तं मनुष्याणामुपयोगार्थम् । अन्यस्तरीयाणां मरुतां कार्यं पृथिव्यादिभ्रामणम्, उक्तं यथा वेदे "येषाम् [ मरुताम् ) अज्मेषु पृथिवी जुजुर्वाँ इव विश्पतिः । भिया यामेषु रेजते ॥" ( ऋ० १ । ३७ । ८ ) "आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः मरुतः सोमपीतये ॥" (ऋ० ८।९४।९) ।

अदेवतात्वे प्रयोगाः "त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥" ( ऋ० १ । ३१ । १ ) अग्निदेवत्ये । "त्वं मानेभ्य इन्द्र विश्वजन्या रदा मरुद्भिः शुरुधो गो अग्राः ।" ( ऋ० १ । १६९ । ८ ) इन्द्रदेवत्ये सूक्ते नामधेयेन । "इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।" ( ऋ० १ । ११४ । ६ ) रुद्रदेवत्ये ।

निरुक्तयः—'वर्षिष्ठया' वृद्धशब्दात्—अतिशायने—इष्ठन् प्रत्यये वृद्धस्य 'वर्षि' आदेशः "प्रियस्थिर····वृद्ध····वृन्दारकाणां प्रस्थ····वर्षि····वृन्दाः" ( अष्टा० ६ । ४ । १५७ ) स्त्रियां टाप् वर्षिष्ठा, तृतीयायां वर्षिष्ठया । 'स्वर्कैः' सुपूर्वकात् "अर्च पूजायाम्" ( भ्वादि० ) ततः "कृदाधारार्चिकलिभ्यः कः" ( उणा० ३ ।

४० ) भावे बाहुलकात् । स्वकः स्वपनैः करणे वा दीप्त्यर्थात् स्वकैः स्वर्चिभिः—इत्यर्थप्रदर्शनम् । यद्वा सुपूर्वकः 'अञ्चु गत्याम्' ततो घञ् प्रत्ययो भावे—उपधाया वर्णव्यापत्तिः, नकारस्य स्थाने रेफः ॥

रुद्राः ॥ ९ ॥

रुद्रा व्याख्याताः ॥ १४ ॥

तेषामेषा भवति—

"आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥" ( ऋ० ५ । ५७ । १ )

आगच्छत रुद्रा इन्द्रेण सह जोषणाः सुविताय कर्मणे इयं वो अस्मदपि प्रतिकामयते मतिस्तृष्णज इव दिव उत्सा उदन्यवे इति । तृष्णक् तृष्यतेरुदन्युरुदन्यतेः ।

भा०—'रुद्राः' इति मध्यस्थानं गणदेवतापदम् । रुद्रा व्याख्याताः "रुद्रो रौतीति सतः" ( निरु० अ० १० । पा० १ । ख० ५ ) ।

मन्त्रार्थः—

हे रुद्राः ! रोरूयमाणाः शब्दं कुर्वन्तो गमनशीला मेघानां रोदयितारो देवाः ! यूयमिन्द्रवन्त इन्द्रेण विद्युद्देवेन सह जोषणाः समानसेवनभाजिनः—ऐक्यं प्राप्ताः—हिरण्यरथाः—हिरण्यं तेज एव रथो येषां ते हिरण्यरथास्तेजोधर्माणः सुविताय सुखप्राप्तिसाधनभूताय कर्मणे यथावसरमागच्छत । अस्मत्—अस्माकम् "सुपां सुलुक्......" ( अष्टा० ७ । १ । ३९ ) 'इति 'आम्' इत्यस्य लुक् । इयं मतिः—सदिच्छा वो युष्मान् प्रतिहर्यते प्रतिकामयतेऽपि प्राबल्येन कामयते Particles (Carriers of Electric current) driven to fixed Electrodes in Electrolytes to grid in Thermionic Values also in Electric welding Mercury and carbon Ares of Electric furnaces युष्माकं तृष्णजे पिपासाशीलायेवोदन्यवे—उदकमिच्छवे दिवः—आकाशादुत्सा उत्स्यन्दमाना आप आगच्छन्ति ॥

मेघेषु ये शब्दयन्तोऽवरुद्धान् मेघान् द्रावयन्तो विद्युत्संयुक्ता विद्युत्प्रधाना वाततरङ्गाः प्रचलन्ति ते रुद्रा मध्यस्थाना देवाः मनुष्यवद्देवताभिधानात् खलु ये मनुष्या राजाज्ञया राष्ट्रसुखस्यावरोधकान् दण्डयन्ति तान् रुदून् सम्पादयन्ति तेऽपि मध्यस्थानानां रुद्राणामिव भवेयुः, यथा—"नहि वः शत्रुर्विविदे अधि द्यवि

न भूम्याँरिशादस: । युष्माकमस्तु तविषी तना युजा रुद्रासो नूचिदाधृषे ॥"
( ऋ० १ । ३९ । ४ ) ।

अदेवतात्वे प्रयोगः—"रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथुज्रयः । इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥" ( ऋ० १ । १०१ । ७ ) इतीन्द्रदेवत्ये ।

निरुक्तय:—'तृष्णक्' "तृष पिपासायाम्" ( दिवादि० ) ततः "स्वपितृषो-र्नजिङ्" ( अष्टा० ३ । २ । १७२ ) चतुर्थ्यां तृष्णजे । 'उदन्यवे' "अशनायो-दन्यधनाया बुभुक्षापिपासागर्द्धेषु" ( अष्टा० ७ । ४ । ३४ ) उदकमिच्छतीति-उदन्यति, उदकस्य क्यचि-आत्मन इच्छायाम् 'उदन' आदेशः, कर्तरि ताच्छी-लिकः 'उः' प्रत्ययः "क्याच्छन्दसि" ( अष्टा० ३ । २ । १७० ) ॥

ऋभवः ॥ १० ॥

ऋभव उरु भान्तीति वा । ऋतेन भान्तीति वा । ऋतेन भवन्तीति वा ॥ १५ ॥

तेषामेषा भवति—

"विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः । सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः । ( ऋ० १ । १०१ । ४ )

कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ॥

भा०—'ऋभवः' इति मध्यस्थानं देवतापदं बहुवचने । ऋभवः—उरु भान्ति बहु दीप्यमानाः 'उरु' शब्दोपपदात् "भा दीप्तौ" ( अदादि० ) ततो बाहुल-कात् "मृगय्वादयश्च" ( उणा० १ । ३७ ) इति कुप्रत्ययान्तो निपात्यते । 'उरु' पूर्वपदस्य 'ऋ' भावः । यद्वा 'ऋतेन भान्ति' 'ऋत' शब्दोपपदाद् भाधातोः पूर्ववत् कुः प्रत्ययः, पूर्वपदस्य पूर्ववर्णः 'ऋ' अवशिष्टः, अन्तिमवर्णद्वयस्य लोपात्, सत्येन नियमेन भासमानाः । अथवा 'ऋतेन भवन्ति' सत्येन स्थिर-नियमेन सत्तावन्तः, 'ऋत' शब्दोपपदाद् भूधातोः पूर्ववत् पूर्वपदस्य 'ऋ' धातो-श्चान्त लोपः, ऋभुः—बहुवचने—ऋभवः । तेषां मन्त्रः "विष्ट्वी शमी····" ।

मन्त्रार्थः—

सौधन्वनाः सु—सुगतमनुकूलं धन्व—अन्तरिक्षं सुधन्व "धन्व अन्तरिक्षनाम" ( निघं० १ । ३ ) सुधन्वनि भवाः सौधन्वनाः—ऋभवः स्वरूपतो भासमानाः स्वाधारसत्तावन्तो विद्युतोऽण्वात्मनो वैद्युता अणुतरङ्गाः Flourescent atoms in Vacumm tulus ( ऋभुः ) & special Neon & Argon (विभ्वा) and X raj ( वाज )—all in Vacumm Tulus. सूरचक्षसः सूरख्यानाः सूर्यसमानदर्शना यद्वा सूरप्रज्ञानाः सूर्यसमानप्रज्ञापकाः—सूर्यसमानप्रेरकशक्तिमन्तस्तरणित्वेन क्षिप्रत्वेन शमी—कर्माणि मेघानां निर्माणच्छेदनपातनानि विष्ट्वी कृत्वा "शमी कर्मनाम" ( निघं० २ । १ ) विष्ट्वी—विष्ट्वा "स्नात्व्यादयश्च" ( अष्टा० ७ । १ । ४९ ) इत्यनेन क्त्वाप्रत्ययान्तश्छान्दसः प्रयोगः । ते ऋभवो वाघतो वोढारः कार्यस्य वाहका मेधाविनो जनानां मेधा येषु ते तथाभूताः—मर्तासः—सन्तो व्यक्तिशो नश्वराः सन्तः संक्राम्यन्तः श्रृङ्खलया प्रवर्तमानाः परस्परं भाक्तया संसरन्तोऽमृतत्वमानशिरेऽमृतत्वमनश्वरत्वं प्राप्तवन्तः प्राप्नुवन्ति संवत्सरे वर्षात्मके चक्रे धीतिभिः कर्मभिः सांवत्सरिकैः कर्मभिः समपृच्यन्त सम्बन्धमाप्नुवन्ति ।

मेघानां निर्माणच्छेदनपातनकर्माणि संवत्सरे प्रवर्तिष्यमाणानि कर्माणि ऋभवः कुर्वन्ति, यथावसरं निर्माणोच्छेदनं कुर्वन्ति ते मध्यस्थानेऽन्तरिक्षे स्थिताः । मनुष्यवद्देवताभिधानफलत्वात् तथा मनुष्या अपि ये खल्वाचरन्ति तेऽपि ऋभवः शिल्पिनः कृषिवलाश्च—अन्यत्र वेदे प्रोच्यन्ते, तद्यथा "येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ।" ( ऋ० ३ । ६० । २ ) "य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥" ( ऋ० १ । २० । २ ) "तक्षन् रथं सुवृतं विद्मनापसस्तक्षन् हरी इन्द्रवाहा वृषण्वसू ।" ( ऋ० १ । १११ । १ ) ऋभवः कर्मकरा शिल्पिनो भवन्ति "यदि कृतं पतित्वा संशश्रे यदि वाश्मा प्रहृतो जघान । ऋभू रथस्येवाङ्गानि सं दधत् परुषा परुः ॥" ( अथर्व० ४ । १२ । ७ ) ॥

ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति ॥

भा०—अङ्गिरोऽग्निः "अङ्गिरा उ ह्यग्निः" ( शत० १ । ४ । १ । २५ )

अङ्गिराः प्राणः "प्राणो वा अङ्गिराः" ( शत० ६।१।२।२८ ) अङ्गिरसाऽग्निना प्राणेन निर्वृत्तम्—आङ्गिरसम् ( अष्टा० ४ । २ । ६८ ) यद्वा—अङ्गिरस इदम्—आङ्गिरसम् "तस्येदम्" ( अष्टा० ४ । ३ । १२० ) सुधन्व—शोभनमन्तरिक्षम्। आग्नेयशक्तिसम्पन्नं यद्वा प्राणशक्तिसम्पन्नं यत्—अन्तरिक्षं यदा—इन्द्रयोगेन जातं तदा तस्य 'ऋभुः, विभ्वा, वाजः' इति पुत्राः—तज्जा अभवन् भवन्ति "ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।" ( ऋ० ४ । ३४ । १ ) तथा "ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ।" ( ऋ० ४ । ३३ । ३ ) "इन्द्रेण याथ [ ऋभवः ] सरथं सुते सचाँ" ( ऋ० ३।६०।४ ) ऋभुः प्रकाशतरङ्गः, वाजो बलतरङ्गः, विभ्वा यस्तयोर्द्वयोर्मध्ये विभवति सन्धिरूपेण तिष्ठति यद्वा तौ द्वौ संयोजयति । एते त्रयः प्रकटीभूताः । तेषां त्रयाणां मध्ये प्रथमेन—ऋभुना—उत्तमेन वाजेन बहुवचनयुक्ता निगमा वैदिकप्रयोगा भवन्ति, मध्यमेन विभ्वना बहुवचने न भवन्ति, तद्यथा "अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे । प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ ३ ॥" "पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४ ॥" ( ऋ० ४ । ३४ । ३,४ ) "आ वो वाजा ऋभवो वेदयामसि ॥ २ ॥" "तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु····॥ ३ ॥" "श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ॥ ७ ॥" ( ऋ० ४ । ३६ । २, ३, ७ ) "विभ्वाँ ऋभवो यमाविषुः" ( ऋ० ४ । ३६ । ६ ) दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।" ( ऋ० १० । ७६ । ५ ) "रथं इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ।" (ऋ० ६ । ६१ । १३) ऋभुसूक्तान्यन्यान्यपि सन्ति (ऋ० १।२०, ११०, १११, १६१; ३।६०; ७।४८) अथ यद् यास्केनोक्तमस्य—ऋभोर्बहुवचनेन चमसस्य संस्तवेन दशतयीषु दशमण्डलात्मकऋक्षु—ऋग्वेदे बहूनि सूक्तानि भवन्ति, तदुदाहरणान्यपि दीयन्ते, यथा "उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥" ( ऋ० १ । २० । ६ ) "ज्येष्ठ [ ऋभुः ] आह चमसा [ चमसौ ] द्वा [ द्वौ ] करेति कनीयान् त्रीन् कृणवामेत्याह । कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥५॥" "सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् । विभ्राजमानांश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥" ( ऋ० ४ । ३३ । ५,६ ) तथा "सुकृत्यया यत् स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा ॥ २ ॥" "व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत । अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः ॥ ३ ॥" ( ऋ० ४ । ३५ । २, ३ ) "एकं वि

यत्र वमुसं चतुर्वयं निश्चमंणो गामरिणीत धीतिभिः। अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यम् ॥" (ऋ० ४।३६।४)।

अदेवतात्वे प्रयोगः "इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृता-रुहत्।" (ऋ० १।५१।२) इन्द्रदेवत्ये नामधेयेन।" "क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम्।" (ऋ० ४।५१।६) उषोदेवत्ये नामधेयेन।

आदित्यरश्मयोऽप्यृभव उच्यन्ते—

"अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ।" (ऋ० १।१६१।१७)

अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेति॥

भा०—सूर्यस्य किरणाः खल्वप्यृभव उच्यन्ते। तेषां "अगोह्यस्य...." इति मन्त्रः।

पूर्णमन्त्रस्तदर्थश्च—

उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः।

अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ॥

हे नरो लोकस्य नेतारो निर्वाहकाः-ऋभवः सूर्यरश्मयः! यूयं स्वपस्यया शोभनकर्मेच्छया समुचितकर्मप्रवृत्त्याऽस्मै-अस्य लोकस्य-उद्वत्सु-उद्गतेषून्नतेषु प्रदेशेषु तृणं तृणादिकं तर्दनीयं चर्वणीयं भक्षणीयमोषधिप्रभृतिखाद्यमन्नं तथा निवत्सु निम्नप्रदेशेषु-अपो जलानि-अकृणोतन-अकुरुत कुरुथ सम्पादयथ, पृथिवीलोकस्य व्यवस्थार्थं प्राणिमात्रस्य निर्वाहार्थं भक्षणं पानं च। "उपसर्गा-च्छन्दसि धात्वर्थे-वतिः" (अष्टा० ५।१।११८) इति 'उद्-नि' उप-सर्गाभ्यां वतिप्रत्यये 'उद्वत्-निवत्' तेषु 'उद्वत्सु,' 'निवत्सु' एतादृशा यूयमगोह्य-स्यागूहनीयस्य केनापिगूहितुमशक्यस्य प्रकाशात्मकत्वात् प्रकटीभूतस्य प्रसिद्धस्य सूर्यस्य गृहे मण्डले यद्-असस्तन-यावत् कालम्-अस्वपत रात्रौ तत्र भवथ "षस स्वप्ने" (अदादि०) रात्रौ स्वपिथ तावत्कालेऽत्र दिने न प्राप्नुथ न भवथ। भूमेरुच्चप्रदेशे खल्वोषधिवनस्पतीनामुत्पादनं निम्नप्रदेशे जलप्रवाहाणां प्रवाहण-मृभूणां सूर्यरश्मीनां कार्यम्॥

अङ्गिरसः ॥ ११ ॥

अङ्गिरसो व्याख्याता ॥ १६ ॥

तेषामेषा भवति—

"विरूपास इदृषयस्त इद्गम्भीरवेपसः।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे॥"
(ऋ० १० । ६२ । ५)

बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा ते अङ्गिरसः पुत्रास्ते अग्नेरधिजज्ञिर इत्यग्निजन्म ॥ १७ ॥

भा०—'अङ्गिरसः' इति मध्यस्थानं गणदेवतापदम्। अङ्गिरसो व्याख्याताः "अङ्गारेष्वङ्गिराः" ( निरु० ३ । १७ )।

मन्त्रार्थः—

विरूपाः—बहुरूपा विविधरूपा एव ऋषयो मध्यस्थाने प्रसरणशीला विविध-मेघेषूद्भूता वैद्युततरङ्गाः—गम्भीरवेपसः—गम्भीरकर्मवन्तस्तेषां गम्भीरं कर्म मेघ-निपातनं यद्वा गम्भीरप्रज्ञानाः—गम्भीरं प्रज्ञानं सूचनं सङ्केतनं येषां ते "वाताय कपिला विद्युदातपायातिलोहिनी ( महाभाष्य व्या० २ । ३ । १३ ) सन्ति तेऽङ्गिरसः Electrons in orbit of atomic shell ( representing some essential properties of various elements) & B rays मध्यस्थानीयास्ते सूनवः—उत्पद्यमाना उत्पत्तिशीलाः सन्ति, कुतस्तेषामुत्पत्तिः? उच्यते—तेऽग्नेः परिजज्ञिरेऽग्निसकाशात् खलूत्पन्नाः सन्ति। मेघेषु यदा विद्युद्रूपोऽग्निर्विद्योतते तदा तत्तरङ्गभूता उत्पद्यते, अग्निशब्दस्तेषामुत्पत्तौ सामान्यः पार्थिवो वाऽन्तरिक्षस्थो दिव्यः सूर्यो वा स्यात् "इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः।" ( ऋ० ३ । ५३ । ७ ) इन्द्रदेवत्ये। तथ "दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः।" ( ऋ० ४ । २ । १५ ) अग्निदेवत्ये।

यथा मध्यस्थाना एते विविधरूपा अङ्गिरसस्तथैव मनुष्यैरपि शत्रुबलानां निपातने विविधरूपाग्नेयास्त्रवद्भिर्भवितव्यमिति मनुष्यवद्देवताभिधानात्।

अङ्गिरसामग्निना सह त्वष्ट्रा सह—इन्द्रेण सह च सम्बन्धोऽस्ति। त्वष्टा—आदित्येन सह काश्चित्कः, तद्यथा "देवं त्वष्टर्यद्ध चारुत्वमानड् यदङ्गिरसामभवः सचाभूः।" ( ऋ० १०।७०। ९ ) त्वष्टा—आदित्यः, अङ्गिरसो रश्मयः। अग्निना सहाङ्गिरसां सम्बन्धः साजात्यः "त्वमग्ने प्रथमो अङ्गिराः" (ऋ० १ । ३१ । १) "त्वमग्ने प्रथमो अङ्गिरस्तमः" ( ऋ० १ । ३१ । २ ) उक्तं यथा। तथा "यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र...." ( ऋ० १ । १२७ । २ ) आग्नेय-

सूक्ते । "ऋतेनाद्रिं व्यसन् भिदन्तः समङ्गिरसो नवन्त गोभिः । शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥" ( ऋ० ४ । ३ । ११ ) आग्नेयसूक्तेऽपि खल्वङ्गिरस अन्तरिक्षस्था लक्ष्यन्ते । परन्त्विन्द्रेण सहाङ्गिरसां सम्बन्धः स्थिरो मेघहनने च तत्साधनभूताः सन्ति, ऐन्द्रेषु सूक्तेषु च ते प्राचुर्येणोपलभ्यते, तद्यथा "इन्द्रस्याङ्गिरसां चेष्टौ विदत् सरमा तनयाय धासिम् ।" ( ऋ० १ । ६२ । ३ ) "भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् । रिणग् रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥" ( ऋ० २ । १५ । ८ ) "·····वलमङ्गिरोभिः । हत्वाच्युतच्युद्दस्मेषयन्तमृणोः पुरो वि दुरो अस्य विश्वाः ॥" ( ऋ० ६ । १८ । ५ ) ।

अदेवतात्वे प्रयोगाः "त्वमिन्दो परिस्रव स्वादिष्ठो अङ्गिरोभ्यः" ( ऋ० ९ । ६२ । ९ ) पवमानसोमदेवत्ये सोमपाने खल्विन्द्रवद्वर्ण्यते । "अङ्गिरसो न सामभिः" ( ऋ० १० । ७८ । ५ ) मरुतां सूक्ते खलूपमायाम् । "नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।" ( ऋ० १० । १०८ । १० ) सरमादेवत्ये ॥

पितरः ॥ १२ ॥

पितरो व्याख्याताः ।

तेषामेषा भवति—

"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥" ( ऋ० १० । १५ । १ )

उदीरतामवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पादिनस्तेऽसुं ये प्राणमन्वीयुरवृका अनमित्राः सत्यज्ञा वा, ते न आगच्छन्तु पितर ह्वानेषु ॥

भा०—'पितरः' इति मध्यस्थानं गणदेवतापदम् । पितरो व्याख्याताः "पिता पाता वा पालयिता वा" ( निरु० ४ । २१ ) तेषां मन्त्रः "उदीरतामवर उत्परास·····" इति ।

मन्त्रार्थः—

अवरे मध्यमासः परासः पितरः सोम्यास उदीरताम्, 'उद्' उपसर्गावृत्तिः आवर्त्यते त्रिभिः सह सम्बन्धार्थम् । "ऋतवो वै पितरः" ( शत० २ । ६ । १ । ३२ ) सामान्येन त्रय ऋतवो भवन्ति प्रावृट्शीतग्रीष्माः "वातपित्तश्लेष्माणः

प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति सम्यगाचरिता धर्मार्थकामा इव निःश्रेयसेन महता पुरुषमिह चामुष्मिन् लोके ऋतवश्च इव" ( चरक० सूत्र० १२ । १३ ) तेऽवरमध्यमपराः सन्ति क्रमवशात् । प्रत्येकमृतुर्बहुवचनेनोच्यते मासान् लक्ष्यीकृत्य । अवरे वर्षर्तुमासाः सोम्याः सोमसम्पादिन उदीरतामस्मानुन्नयन्तु, मध्यमाः शीतर्तुमासाः सोमसम्पादिनः सन्तोऽस्मानुन्नयन्तु, परे ग्रीष्मर्तुमासाः सोमसम्पादिनः सन्त उदीरतामस्मानुन्नयन्तु । येऽसुं प्राणमनुयन्ति प्राणिमात्रं प्राप्ता भवन्ति तेऽवृका अच्छेदका अहिंसका अनमित्राः सन्तस्तथा–ऋतज्ञाः सत्यज्ञा इव यज्ञज्ञा इव पितर ऋतवो नोऽस्माकं हवेषु ह्वानेषु प्रार्थनीयावसरेषु–आगच्छन्तु ॥

अत्र निरुक्तकारो यास्कः कथयति—

माध्यमिको यम इत्याहुः । तस्मान्माध्यमिकान् पितॄन् मन्यन्ते ॥ १८ ॥

भा०—यमः खलु विनाशकः कालप्रवाहः कालात्मको वायुर्वा माध्यमिको देवस्तस्मादेते पितरोऽपि माध्यमिका देवाः सन्तीति नैरुक्ता मन्यन्ते ये खल्वृतवो वायुविशेषाः कालावयवाः सन्ति ।

अदेवतात्वे प्रयोगाः "वीळु चिद् दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।" ( ऋ० १ । ७१ । २ ) अग्निदेवत्ये–उपमायाम् । "त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।" ( ऋ० ८ । ४८ । १३ ) सोमदेवत्ये नामधेयेन । "होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।" ( ऋ० २ । ५ । १ ) अग्निदेवत्ये नामधेयेन । "स तु श्रुधीन्द्र····त्वं ह्यापिः प्रदिवि पितॄणां शश्वद् बभूथ सुहव एष्टौ ॥" ( ऋ० ६ । २१ । ८ ) इन्द्रदेवत्ये नामधेयेन । "आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥" ( ऋ० १।४२।५ ) पूषदेवत्ये नामधेयेन ॥

अङ्गिरसो व्याख्याताः । पितरो व्याख्याताः ।
अथर्वाणः ॥ १३ ॥ भृगवः ॥ १४ ॥

भृगवो व्याख्याताः । अथर्वाणोऽथनवन्तः *। थर्वतिश्चरतिकर्मा तत्प्रतिषेधः । तेषामेषा [ साधारणा ] भवति—
"अङ्गिरसो न पितरो नवग्वा अथर्वाणो भृगवः

* 'अथर्ववन्तः' इति पाठः शोभनः ।

सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥" ( ऋ० १० । १४ । ६ )
अङ्गिरसो नः पितरो नवगतयो नवनीतगतयो वाथर्वाणो भृगवः सोम्याः सोमसम्पादिनस्तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानामपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति ॥

भा०—अङ्गिरसो व्याख्याताः ( निरु० ३ । १७, ११ । १७ ) पितरः (Energy levels in orbits) व्याख्याताः ( निरु० ४ । २१, ११ । १८ ) भृगवः (Protons) व्याख्याताः "अर्चिषि भृगुः सम्बभूव भृज्यमानो न देहे" ( निरु० ३ । १७ ) अथर्वाणः—अथर्वन्तः—न थर्वन्तः—थर्वति—चरति, गतिरहिताः प्रसिद्धगतिरहिता लक्षितगतिरहिताः (Nuclers) तेषां चतुर्णामङ्गिरस्पितृभृग्वथर्वणामेको मन्त्रः ।

मन्त्रार्थः—

ये नोऽस्मत्सम्बद्धा अङ्गिरसो वैद्युततरङ्गाः, ये नवग्वा नवगतयः प्रबलगतियुक्ताः, नवनीतगतयः—नवीना नीता प्राप्ता गतिर्यैर्षां ते नवनीतगतयः सन्ति । 'नवग्वाः' अङ्गिरसां विशेषणम्, यथान्यत्र वेदे "अङ्गिरसो नवग्वाः" ( ऋ० १० । १०८ । ८ ) तथा भृगवो वैद्युततरङ्गाणां स्तराः सहायका वा, तथा पितर ऋतवो वायुविशेषाः कालविभागा वा सोम्याः सोमसम्पादिनः पूर्वोक्तवत् 'पितरः सोम्यासः', अथर्वाणः—गतिरहिता लक्षितगतिरहिताः पितॄणामृतूनामाधारभूताः स्तराः सहायका वा, तेषां यज्ञियानां सङ्गमनीयानां वयं सुमतौ कल्याण्यां मतौ विचारणायां तथा भद्रे सौमनसे भन्दनीये भाजनवति यस्मिन् वयमभिकारिणः समस्तद्युति कल्याणे मनसि विज्ञाने स्याम ॥

माध्यमिको देवगण इति नैरुक्ताः । पितर इत्याख्यानम् ॥ १९ ॥
अथाप्यृषयः स्तूयन्ते—
"सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वासिष्ठा अन्वेतवे वः ॥" ( ऋ० ७ । ३३ । ८ ) इति यथा ॥

भा०—एते खलूपर्युक्ता अङ्गिरस इत्येवमादयो माध्यमिको देवगण इति नैरुक्ता मन्यन्ते, देवगणानामधिकारे समाम्नानात् । पितरः—लोके खलूत्पन्ना जनाः पितरः सन्तीत्याख्यानम्—आख्यानी, भाषायाम् 'कहानी' या खलु किंवदन्ती । तत्पक्षे न देवाः पितृत्वे लोकाख्याने प्रसिद्धाः । यास्कः प्रतिवदति यत्—अथाप्यृषयः स्तूयन्ते, लोके तन्नामतः प्रसिद्धया किम् ? लोके ऋषिनामतोऽपि जनाः प्रसिद्धाः, वेदे ऋषयोऽपि लोकप्रसिद्धर्षिनामतोऽपि मन्त्रोक्तदेवाः स्तूयन्ते न तेन ते लोकप्रसिद्धा ऋषयः सन्ति किन्तु देवतात्मकास्तद्भिन्नाः सन्ति । तद्यथा "सूर्यस्येव वक्षथो····" इति मन्त्रस्तेषाम् ।

मन्त्रार्थः—

एषां वसिष्ठानां वक्षथो सह वाहः प्रवाहः प्रसारो ज्ञानप्रसारो वा 'वह प्रापणे' ततः 'अथः' प्रत्ययः "शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः" ( उणा० ३ । ११३ ) इति बाहुलकात् सुट् आगमः प्रत्ययस्य, वक्षथः । अन्यत्र च वेदे वहनार्थे प्रयुज्यते "अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ।" ( ऋ० ४ । ५ । १ ) सूर्यस्य ज्योतिरिव गुणोऽस्ति । एषां महिमा च समुद्रस्य गभीरो गहनीभूतोऽस्ति, एषां स्तोमः प्रतिधिः स्तरः "स्तोमा आसन् प्रतिधयः" ( ऋ० १० । ८५ ८ ) वातस्य प्रजवो ध्राजिरिवास्ति, तस्मात्—हे वसिष्ठाः ! वो युष्माकं वक्षथो महिमा स्तोमोऽन्येन नान्वेतुमनुगन्तुं धारयितुं प्राप्तुं वा शक्यः ॥

अत्र वसिष्ठा आख्यानप्रसिद्धा न सन्ति किन्त्वाधिभौतिकदृष्ट्या विद्याया-मतिशयेन कृतवासाः, आधिदैविकदृष्ट्या तु—आपो जलप्रवाहाः सन्ति । तदग्रिमे मन्त्रे च "यमेन ततं परिधिं वयन्तोऽप्सरस उप सेदुर्वसिष्ठाः ॥" ( ९ ) एक-वचने वसिष्ठस्य जन्म च मित्रावरुणाभ्यामुक्तम् "विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा । तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आज-भार ॥" ( १० ) ।

अदेवतात्वेऽथर्वाणः "अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥" ( ऋ० ९ । ११ । २ ) पवमानसोमदेवत्ये नामधेयेन ।

भृगवोऽदेवतात्वे "दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः । होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥" ( ऋ० १।५८।६ ) अग्निदेवत्ये सूक्ते ॥

आप्त्याः ॥ १९ ॥

आप्त्या आप्नोतेः ॥ २० ॥

तेषामेष निपातो भवत्यैन्द्र्यामृचि—

"स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ॥" ( ऋ० १० । १२० । ६ )

स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामाद्दृणाति यः शवसा बलेन सप्त दातॄनिति वा सप्त दानवानिति वा प्रसाक्षते प्रतिमानानि बहूनि ।

साक्षतिराप्नोतिकर्मा ॥ २१ ॥

भा०—'आप्त्याः' इति मध्यस्थानं गणदेवतापदम् । "आप्लृ व्याप्तौ" ( स्वादि० ) ततः "अघ्न्यादयश्च" ( उणा० ४ । ११२ ) इति बहुलवचनात्—निपात्यते यक् प्रत्ययः प्रत्ययस्य तुट् च बहुलादेव कृत्यसंज्ञा च । बहुवचने—आप्त्याः । तेषामिन्द्रदेवत्यायामृचि निपातोऽस्वतन्त्रं देवतात्वं गौणदेवतात्वं भवति ।

मन्त्रार्थः—

आप्त्यानामस्माभिराप्तव्यानामाप्त्यानां देवानामाप्त्यं तैराप्तव्यं पुनरस्माभिरतिशयेनाप्तव्यमिन्द्रं देवं पुरुवर्पसं बहुरूपमृभ्वमुरुभूतं महान्तमिनतममीश्वरतमम् "इन–ईश्वरनाम" ( निघं० २ । २२ ) स्तुषेय्यं स्तोतव्यं स्तौमीति शेषः । य इन्द्रः शवसा बलेन "शव इति बलनाम" ( निघं० २ । ९ ) सप्त दानून् सृप्तान् दातॄन् जलस्य दातॄन् मेघान् "दाभाभ्यां नुः" ( उणा० ३ । ३२ ) दाञ् दाने, यद्वा दानवान् खण्डनीयान् "दो अवखण्डने" ( दिवादि० ) "दाभाभ्यां नुः" ( उणा० ३ । ३२ ) दानुरेव दानवः स्वार्थेऽण् द्वितीयाबहुवचने दानवान् मेघान्, आदर्षते–आदृणाति–समन्ताद् विदारयति पुनर्भूरि बहूनि "भूरि बहुनाम" ( निघं० ३ । १ ) प्रतिमानानि प्रतिरोधकानि दुर्गाणीव मेघदलानि साक्षते–आप्नोति स्वाधीनं करोति ।

निरुक्तयः—'स्तुषेय्यम्' स्तुधातोः "स्तुवः क्सेय्यश्छन्दसि" ( उणा० ३ । ९९ ) अत्रोणादिवृत्तौ "क्सेय्य इति पाठान्तरम्—स्तुषेय्यः' इति दयानन्दः । तथा च "स्तुवः क्सेय्यश्छन्दसि" इति सायणः । 'आदर्षते' "दॄ विदारणे" ( क्र्यादि० ) ततो लेट्, व्यत्ययेनात्मनेपदं सिप् च ।

आप्त्याः खल्विन्द्रस्य विद्युद्देवस्य परिधयः संरक्षका इव मण्डलाकारास्तरक्षा वा ॥

इत्येकादशाध्यायस्य द्वितीयः पादः ।

## तृतीयः पादः

अथातो मध्यस्थानाः स्त्रियः ।
अदितिः ॥ १६ ॥
तासामदितिः प्रथमागामिनी भवति । अदितिर्व्याख्याता । २२ ।
तस्या एषा भवति—

"दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि । अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥" ( ऋ० १० । ६४ । ५ )

दक्षस्य वादिते जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि । विवासतिः परिचर्यायाम् । "हविष्माँ आविवासति" ( ऋ० १ । १२ । ९ ) इति । आशास्तेर्वा । अतूर्तपन्था अत्वरमाणपन्था बहुरथो अर्यमाऽऽदित्योऽरीन्नियच्छति, सप्तहोता सप्तास्मै रश्मयो रसानभिसन्नामयन्ति, सप्तैनमृषयः स्तुवन्तीति वा विषमरूपेषु जन्मसु कर्मसूदयेषु ॥

भा०—अधुना खल्वितो मध्यस्थानाः स्त्रियो देवता उच्यन्ते तासामदितिः समाम्नातक्रमेण स्त्रीलिङ्गदेवतानामुपयोगक्रमेण च प्रथमावसरप्राप्ता 'अदितिः' अस्ति । अदितिर्व्याख्याता "अदितिरदीना देवमाता वा" ( निरु० अ० ४ खं० २२ ) सा स्वतन्त्रा स्याद् देवानां च माता स्यात् । सा च मध्यस्थाना सा का स्यादित्यत्र परिभाषारूपेणोच्यते "दक्षस्य वादिते...." इति मन्त्रः ।

मन्त्रार्थः—

हे अदिते ! मध्यस्थानदेवते ! प्रातस्तनि प्रारम्भिके—उषोदेवि ! उक्तं चान्यत्र वेदे "ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते [ मित्रावरुणौ ] दिवेदिवे" ( ऋ० १ । १३६ । ३ ) 'वा' पक्षावलम्बने । लक्ष्यते खल्विदं कदाचित् त्व दक्षस्य सूर्यस्य जन्मनि व्रते—उत्पादकर्मणि—उदयकर्मणि राजानौ राजमानौ मित्रावरुणौ—अहोरात्रौ "अहोरात्रौ मित्रावरुणौ" ( तां० २५ । १० । १० ) 'विवाससि परिचरसि सेवसे—एकस्मिन् पार्श्वे रात्रिं द्वितीये पार्श्वे दिवसं परिचरसि सेवसे, विवासति परिचर्यायाम् "यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय ।" ( ऋ० १ । १२ । ९ ) यो हविर्दातुमुद्यतो यजमानोऽग्निं

परिचरति—इति स्पष्टम् । स दक्षः—अतूर्तपन्था अत्वरमाणपन्था एकरसपन्था अवक्रमार्गः, पुरुरथो बहुरमणक्षेत्रोऽयमाऽऽदित्योऽरीन् नियच्छति तमःप्रभृतीनि नियन्त्रयति निगृह्णाति हन्ति च, सप्तहोता सप्त रश्मयो होतारो रसान् सन्नामयन्ति समर्पयन्ति यद्वा—एनमादित्यं सप्त होतार ऋषयः सप्तछन्दोबद्धा गायत्रीप्रभृतिछन्दोबद्धा मन्त्राः स्तुवन्ति, विषुरूपेषु जन्मसु—विषमरूपेषु कर्मसूदयेषु यथर्तूदयेषु ॥

आदित्यो दक्ष इत्याहुरादित्यमध्ये च स्तुतः ।

यास्कः कथयति दक्ष आदित्योऽस्ति, यतः स आदित्यानां मध्ये स्तुतो वर्णितः "इमा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नूः॑ स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि । शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंशः॑ ॥" ( ऋ० २।२७।१ ) ।

अदितिर्दाक्षायणी ।

"अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑तिः॒ परि॑ ।"

( ऋ० १० । ७२ । ४ )

इदानीं यास्कः 'दक्षस्य वादिते जन्मनि' इत्यस्य 'वा' विकल्पस्यापरपक्षे ब्रवीति 'अदितिर्दाक्षायणी' दक्षादुत्पन्नत्वात् सा दाक्षायणी । प्रमाणमुपस्थापयति "अदितेर्दक्षो····" इति ।

समग्रमन्त्रस्तदर्थश्च—

भूर्ज॑ज्ञ उत्ता॒नप॑दो भु॒व आशा॑ अजायन्त ।

अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑तिः॒ परि॑ ॥

उत्तानपदः संसारवृक्षाद् भूः पृथिवी जाता पृथिव्याः—आशाः—आशासते—इच्छन्तीत्याशाः—आशाजीविनो मनुष्यादयोऽजायन्त । एवमदितेर्दक्षो जातो दक्षाचादितिर्जाता । दक्षादादित्याद्दितिः प्रातस्तनी प्रारम्भिकी—उषाः—जायते प्रत्यक्षमेतत् । उषसो दक्ष आदित्यस्तत्पार्श्वतो जातः प्रतिभासते ॥

तत्कथमुपपद्येत समानजन्मानौ स्यातामिति । अपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती ॥

भा०—तर्हि कथमेतदुपपद्यते युज्यते यत् "अदितेर्दक्षो दक्षाददितिर्जायते' यास्कः समाधत्ते—एतौ—अदितिदक्षौ समानजन्मानौ सापेक्षजन्मानौ परस्परमपेक्ष्य जातौ, यत्—अदितिमुषसमपेक्ष्य दक्ष आदित्यो जातः, अदितिरुषा दृष्टाऽथ दक्ष आदित्योऽपि जातः, अदितेरुषसश्च जन्म दक्षादादित्यात्, पृथिव्या यस्मिन् प्रदेशे दक्षस्याऽऽदित्यस्य संस्पर्शो भवति तदाऽऽदित्याददितिरुषा जायते । अथवा

देवधर्मेण दिव्यगुणवत्त्वेनेतरेतरजन्मानावन्योऽन्यजन्मानौ, न हि मनुष्यधर्मेणेत्थं भवति, देवाः सर्वे स्वाधीनसत्तावन्तः सन्तोऽपेक्षन्ते सम्बन्धं परस्परं न मनुष्यवद् देवानामुत्पादविनाशौ स्तः ॥

अग्निरप्यदितिरुच्यते ॥ २३ ॥

तस्यैषा भवति—

"यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शो॒ऽनागा॒स्त्वम॑दिते स॒र्व॑ता॑ता । यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ ते राध॑सा॒ स्या॑म ॥" ( ऋ० १ । ९४ । १५ )

यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु कर्मततिषु । आग आङ्पूर्वाद् गमेः । एन एतेः । किल्विषं किल्भिदं सुकृतकर्मणो भयं कीर्तिमस्य भिनत्तीति वा । यं भद्रेण शवसा बलेन चोदयसि प्रजावता च राधसा धनेन ते वयमिह स्यामेति ॥

भा०—अधुना मध्यस्थानदेवताया अदितेर्भिन्नामदितिं प्रसङ्गतः सूचयति यत्—अग्निः खल्वप्यदितिरुच्यते । तस्य मन्त्रः "यस्मै त्वं····।"

मन्त्रार्थः—

हे सुद्रविणः ! शोभनं धनं यस्मात् तथाभूत ! अदिते ! अखण्डाग्ने ! त्वं यस्मै—अनागास्त्वं निष्पापत्वं पवित्रत्वं सर्वकर्मततिषु ददाशः—ददासि, यं च भद्रेण कल्याणकरेण बलेन प्रजावता सन्तानयुक्तेन राधसा धनेन च चोदयसि प्रेरयसि पूरयसि प्रवर्धयसि तस्मात् तव वयं स्याम भवेम । "राधो धननाम" ( निघं० २ । १० ) ।

निरुक्तयः—'आगः' आङ्पूर्वात् "गम्लृ गतौ" ( भ्वादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४ । १८९ ) असुन् डिच्च बाहुलकात् । 'आगः' यतः कृतमागः पापमागच्छति कर्तारं फलभोगाय । उक्तं हि वेदे "असद् भूम्याः समभवत्····प्रत्यक् कर्तारमृच्छतु" ( अथर्व० ४ । १९ । ६ ) प्रसक्तानुषक्तमुच्यते 'आगः—एनः' एनः—एतेः "इण् गतौ" ( अदादि० ) ततः "इण आगसि—नुट् च" ( उणा० ४ । १९८ ) असुन् प्रत्ययः । एतदपि कृतमवश्यं कर्तारं फलभोगाय—एति प्राप्नोति । किल्विषं पापं भवति, किल्विषं किल्भिदम्—करोति सुकृतं कर्म किल् 'कृञ्' धातोः—डिलि बाहुलकात्, किल् तं सुकृतकर्मणो

जनस्य भिदं भयदं भवति यद्वा सुकृतकर्मणो जनस्य कीर्तिं भिनत्ति नाशयति पापं किल्विषम् "कृत संशब्दने" ( चुरादि० ) ततोऽपि डिलिः प्रत्ययः किल् कीर्तिः, तां भिनत्ति सुकृतकर्मणः कीर्तिं भिनत्ति । 'सर्वताता' सर्वासु कर्मततिषु–सर्वतातौ 'सर्वतातिः' शब्दस्य सप्तम्यां डा "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः" ( अष्टा० ७ । १ । ३९ ) सर्वाः–ततयः कर्मततयो यासु ताः सर्वतातयः । सर्वतातयस्तासु । 'तनु विस्तारे' धातोः "तनोतेर्यकि:" ( अष्टा० ६ । ४ । ४४ ) इत्यत्र 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति परिभाषया–अप्राप्तो विधिरपि विकल्प्यते, क्तिनि तनधातोराकारादेशः ।

'दक्षस्य वादिते जन्मनि' इत्यत्र प्रसङ्गे–अदितिर्मध्यस्थाना स्त्रीलिङ्गा देवतेति व्याख्याय 'अग्निरप्यदितिरुच्यते' यदुक्तं तेनात्र मन्त्रेऽग्निरपि खल्वदितिरिष्यते मध्यस्थानपक्षं विहायेति लक्ष्यं यास्कस्य । तदा मन्त्रस्यार्थयोजनेत्थं भवति यत् प्रलयान्धकारानन्तरं सृष्टेरारम्भे किलादित्यप्रभृतयो नैवं खण्डरूपेणासन् किन्त्वेषां प्रकृतिभूताऽदितिरखण्डा खण्डरहिताग्निराग्नेयशक्तिः (Plack's Quantum of Energy) अवर्तत । अत्र–अदितिः 'दो अवखण्डने' ततः क्तिनि "द्यतिस्यतिमास्थामित्ति किति" ( अष्टा० ७ । ४ । ४० ) तथा च सायणः "अदितेऽखण्डनीयाग्ने ( ऋ० १ । ९४ । १५ ) दितिः–नञ्पूर्वात् 'अदितिः ।' पुनस्तस्य खण्डरहितस्याखण्डस्याग्नेरदितेः सूर्यः खण्डभूतो जातस्तस्मात् ततो जायमानत्वात् 'आदित्यः' इति नामतः प्रसिद्धो जातः । "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ( अष्टा० ४ । १ । ८५ ) अत एव 'दक्षस्य वादिते जन्मनि' अदितिसकाशादादित्यस्योत्पत्तिरुक्ता । यदा स आदित्यः प्रकटीभूतः प्रकाशमानो जातस्तदा सद्य एव तेनैवादित्येन सार्द्धं मित्रावरुणौ तस्यादित्यस्य द्वौ धर्मौ मित्रावरुणौ पृथिव्यादीनां पिण्डानां प्रेरकं मित्रम् "मि प्रक्षेपणे" ( स्वादि० ) ततः "अमिचिमिशसिभ्यः क्त्रः" ( उणा० ४ । १६४ ) मित्रः, तं तथा तेषां पृथिव्यादिपिण्डानां स्वाभिमुखमाकर्षितारं वरुणम् "वृञ् वरणे" ( स्वादि० ) ततः "कृवृदारिभ्य उनन्" ( उणा० ३ । ५३ ) वरुणः, तं मित्रावरुणावदितेऽग्ने प्रारम्भिकाग्ने ! त्वं विवाससि विवासयसि, अन्तर्गतणिजर्थः, विपर्ययेण प्रकटयसि प्रसारयसि प्रत्येकपृथिव्यादेः पिण्डस्योभयतः प्रसारयसि, ताभ्यामादित्यः पृथिव्यादीन् गोलानाकर्षत्यपकर्षति च, आकर्षणापकर्षणाभ्यां गोला भ्रमन्ति । पृथिव्यादिगोलानामाकर्षणापकर्षणौ मित्रावरुणाभ्यामादित्यः करोति हस्ताभ्यामिव, मित्रावरुणौ खल्वादित्यस्य हस्तौ, उक्तं च "बाहू वै मित्रावरुणौ" ( शत० ५ । ४ । १ । १५ ) मित्रावरुणौ सूर्यस्य धर्मौ तौ सूर्यः सर्वगोलान् प्रति प्रेरयति, उक्तं च

"उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणाम् । चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि ॥" ( ऋ० ७ । ६३ । १ ) उत्तरार्द्धस्तु पूर्ववत् । अदितिर्दाक्षायणी—"अदितेर्दक्षो अजायत दक्षाद्वदितः परि" आदित्याच्चादितिरग्निर्जायते—इति तु प्रत्यक्षं सूर्यादग्निर्जायते सूर्यकान्तमाध्यमेन सूर्यकान्तस्य प्रतिस्वरे प्रतिबिम्बे शुष्कगोमयस्य वस्त्रस्य वा स्थापनेनेत्युक्तं च पूर्वमेव यास्केन वैश्वानरप्रकरणे ॥

अदेवतात्वे प्रयोगाः "तमंमृत्तन्त वाजिनमुपस्थे अदितेरधि ।" ( ऋ० ९ । २६ । १ ) पवमानसोमदेवत्ये नामधेयेन । "अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम । स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥" ( ऋ० १ । २४ । २ ) अग्निदेवत्ये सूक्तगे । "उदुत्तमं वरुण पाशम्....अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥" ( ऋ० १ । २४ । १५ ) वरुणदेवत्ये सूक्तये ॥

सरमा ॥ १७ ॥

सरमा सरणात् ॥ २४ ॥

तस्या एषा भवति—

"किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः । कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि ॥" ( ऋ० १० । १०८ । १ )

किमिच्छन्ती सरमेदं प्रानड् दूरे ह्यध्वा जगुरिर्जङ्गम्यतेः पराञ्चनैरचितः * का तवास्मास्वर्थहितिरासीत् किं परितकनम् । परितक्म्या रात्रिः परित एनां तक्म । तक्मेत्युष्णनाम तकत इति सतः । कथं रसाया अतरः पयांसीति । रसा नदी रसतेः शब्दकर्मणः । कथं रसानि तान्युदकानीति वा । देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानम् ॥

---

* स्कन्दभाष्ये 'आचितः' इत्यपपाठः । स नास्माभिः क्वचिद् दृष्टः, मुद्रितपुस्तकेषु तु 'अचितः' पाठ उपलभ्यते हि हस्तलिखितेऽप्ययमेव पाठो दृष्टः, तद्यथा 'पराञ्चनैरचितः' होशियारपुरस्थे वि० वैदिकशोधसंस्थाने १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) ।

भा०—'सरमा' इति मध्यस्थानं स्त्रीलिङ्गं देवतापदम्। सरमा सरणात् प्रसरणात् प्रसरणशीलत्वात् 'सृ गतौ' ततः "कलिकर्योरमः" (उणा० ४। ८४) इति धातोर्बाहुलकात् 'अमः' प्रत्ययः, स्त्रियां टाप्–सरमा। तस्याः "किमिच्छन्ती सरमा....." इति मन्त्रः।

वक्तव्यम्—

अत्र यास्को मन्त्रं व्याख्याय–अन्ते 'सरमा–देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूदे' इत्याख्यानमुक्तवान्। यास्कस्याशयो यद् 'देवानां शुनी खल्विन्द्रेण प्रेषिता सती पणिभिः सह संवादं कृतवती' इति कथनं केवलमाख्यानमाख्यानी भाषायां 'कहानी' इत्येवालङ्कारिकी। न स इतिहासः। वस्तुतस्तु सरमा मध्यस्थाना स्त्रीलिङ्गदेवताऽस्ति। 'अदितिः' इति मध्यस्थानया देवतया सह पठिता, मध्यस्थाने भौतिकी सा मन्तव्या न हि पशुरूपा। सा च सरमा स्तनयित्नुवाक्, उक्तं च मैत्रायणीसंहितायाम् "वाग् वै सरमा" (मै० सं० ४। ६। ४) सरणशीला माध्यमिका वाक्–विद्युद्द्वारा। अन्यत्र वेदे चोच्यते "अपो यदद्रिं पुरुहूत दर्दराविर्भुवत् सरमा पूर्व्यं ते। स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः॥" (ऋ० ४। १६। ८) हे पुरुहूत! इन्द्र! अपो लक्ष्यीकृत्य यत् पूर्व्यं पूर्वतो जातमद्रिं मेघं त्वं दर्दः–दारयसि तदा ते सरमाऽऽविर्भुवत्–आविर्भवति प्रकटीभवति मेघविदारणकाले स्तनयित्नुरेवाविर्भवति या च सरमा–इति स्पष्टमुच्यते। स त्वमस्माकं नेता गृणानः स्तूयमानः सन् गोत्राणि मेघान् "गोत्रा मेघनाम" (निघं० १। १०) अङ्गिरोभिर्वैद्युततरङ्गैः सहारुजन् भञ्जन्–अस्मदर्थं भूरि बहु वाजमन्नमादर्षि दृणासि यत्–मेघं दृणासि यतो मेघविदारणेऽन्नं बहु भवति तस्मात् तदन्नम्। इयमाख्यानी खल्वालङ्कारिकी चर्चा वृष्टिविज्ञाने निबद्धाऽस्ति। सूक्ते गावः सन्ति सूर्यरश्मयः–मेघेषु गुप्ता अन्तर्हिता आसन्। "सर्वेऽपि रश्मयो गाव उच्यन्ते" (निरु० २। ७) यथा षष्ठाध्याये (निरु० ६। ३२) वृत्तमेतदागतम् "किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्।" गावो रश्मयः कीकटेषु मेघेषु गताः किं कुर्वन्ति न–आशिरं सर्वेषामाश्रयमुदकं न दुहन्ति द्रावयन्ति न घर्मं दिनं तपन्ति। अस्य सूक्तस्य मन्त्र एषोऽपि द्रष्टव्यः—"नाहं तं वेद दभ्यं दभत् स यस्येदं दूतीरसरं पराकात्। न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे॥" (४) हे पणयः! गवां रश्मीनां व्यवहर्तारो मेघाः! अहं तं न वेद यो दभ्यं वध्यं हन्तव्यं दभत्–हन्ति, यस्य दूती प्रेरिता सती पराकात्–दूरात्–इदं स्थानमसरं प्राप्तवती। न तं गूहन्ति गोपायितुं शक्नुवन्ति तस्य रश्मीन् गाः–न गोपायितुं

शक्नुवन्ति यूयं गभीराः–इन्द्रेण हताः स्रवतः स्रवणमाचरन्तश्च्यवन्तः क्षरन्तो नीचैः पृथिव्यां शेध्वम् ॥

अथ मन्त्रार्थः प्रस्तूयते—

सरमा स्तनयित्नुवाक् (Wave length of Radio Communication & Transmission) किमिच्छन्ती किमन्वेषमाणा–इदं स्थानं प्रानट् प्राप्ता–अभूत्? दूरे हि मार्गः पराचैः पराञ्चनैः पराङ्मुखैर्ज्ञानप्रकाशतो विमुखैरयं मार्गोऽचितोऽलक्षितोऽतः कश्चिदेव जगुरिर्भृशं गन्ता–अत्र मार्गे गन्तुं शक्तः। तवास्मासु–निमित्तसप्तमी–अस्मन्निमित्तमर्थंहितिः–अर्थलाभः कोऽस्ति । परितक्म्या परितकनं परिगमनमाश्रयणं किमस्ति, परितक्म्या रात्रिर्वा का कीदृशी तवागमनेऽत्रासीत्, रसायाः–नद्याः–अन्तरिक्षनद्याः पयांसि जलानि कथमतरोऽपारयः। रसा नदी यास्कवचनात्। यद्वा 'रसायाः–रसानि' लिङ्गविभक्त्योर्व्यत्ययेन । रसरूपाणि पयांस्युदकानि कथमतरोऽपारयस्त्वं हे सरमे ॥

निरुक्तयः—'आनट्' आङ्पूर्वान्नशधातोर्व्याप्त्यर्थात् "नशत्–व्याप्तिकर्मा" ( निघं २ । १८ ) लुङि रूपं च्लेर्लुक् च, आट् चागमोऽनजादावपि "छन्दस्यपि दृश्यते" ( अष्टा० ६ । ४ । ७३ ) । 'जगुरिः' यङ्लुगन्ताद् गमधातोः "जसिसहोरुरिन्" ( उणा० २ । ७४ ) उरिन् प्रत्ययो धातुबाहुलकात् । 'पराचैः' परापूर्वात् 'अञ्चू गत्यर्थात्' घञर्थे कविधानमिति कः प्रत्ययः । परितक्म्या–रात्रिः, यत एनां परितः तक्म, तक्म–उष्णम्, तदपि कथम्? 'तक गत्याम्' धातोः "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४५ ) यकारोपजनश्छान्दसः प्रत्ययस्य मकारादनन्तरम् । तक्म नपुंसके । उष्णं गतिशीलं भवति । रसा नदी "रस शब्दे" ( भ्वादि० ) नदी गच्छन्ती शब्दं करोति ।

अदेवतात्वे प्रयोगः—"विदद् गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ।" ( ऋ० १ । ७२ । ८ ) अग्निदेवत्ये सूक्ते ।

सरस्वती ॥ १८ ॥

सरस्वती व्याख्याता ॥ २५ ॥

तस्या एषा भवति—

"पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥" ( ऋ० १ । ३ । १० )

पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः ॥ २६ ॥

भा०—'सरस्वती' इति मध्यस्थाना स्त्रीलिङ्गा देवता । सरस्वती व्याख्याता "सरस्वती सर इत्युदकनाम सर्तेस्तद्वती" ( निरु० अ० ९ खं० २६ ) तस्या मन्त्रः "पावका नः····।"

मन्त्रार्थः—

सरस्वती मध्यस्थाना माध्यमिका वाक् Vibrating charged (energy) Particles. सरांसि मेघोदकानि यस्याः–अविकारे सन्ति सा पावका सरसो मेघोदकानां पावयित्री गमयित्री–अस्मान् प्रति प्रेरयित्री "पवते गतिकर्मा" ( निघं २ । १४ ) वाजेभिर्वाजैरन्नैर्मेघरूपैर्वाजिनीवती–अन्नवती नोऽस्माकं यज्ञं धियावसुः कर्मवसुः कर्मधना सती कार्यस्य विधायिकाऽन्नरूपमेघानां प्रापयित्री सती वष्टु "वश कान्तौ" ( अदादि० ) अत्रान्तर्गतो णिजर्थः । कामपूर्तिं कामसिद्धिं करोतु "वष्टु कामसिद्धिप्रकाशिका भवतु" ( दयानन्दः ) यज्ञेन सुखकराण्युदकानि प्रेरयतु ॥

तस्या एषापरा भवति—

"म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ ।
धियो॒ विश्वा॒ वि रा॑जति ॥" ( ऋ० १ । ३ । १२ )

महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभि विराजति । वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते ।

भा०—तस्याः सरस्वत्याः खल्वेषाऽन्यर्क् "महो अर्णः····" तस्या माध्यमिकत्वसाधनाय देवतात्वसाधनाय च ।

मन्त्रार्थः—

सरस्वती माध्यमिका वाक्–गर्जनरूपा मेघे स्तनयित्नुलक्षणा वाक्, अन्यत्र वेदे यथा "उ॒त स्या नः॒ सर॑स्वती घो॒रा हिर॑ण्यवर्तनिः । वृ॒त्र॒घ्नी व॑ष्टि सुष्टु॒तिम् ॥" ( ऋ० ६ । ६१ । ७ ) अत्र वृत्रघ्नी मेघस्य हन्त्री माध्यमिका वाग् भवति । केतुना–कर्मणा मेघताडनकर्मणा प्रहाररूपेण यद्वा प्रज्ञया प्रज्ञापनेनादेशेनेव "केतुः प्रज्ञानाम" ( निघं० ३ । ९ ) महद्–अर्णः–उदकराशिं मेघं प्रचेतयति प्रज्ञापयति प्रेरयति वर्षितुम् "अर्णः–उदकनाम" ( निघं० १ । १२ ) अथ च विश्वाः–धियः–इमानि सर्वाणि प्रज्ञानानि प्राणिनां वाञ्छितानि मनसि स्थितानि सङ्कल्पितानीष्टानि भोजनाच्छादनानि "धीः प्रज्ञानाम" ( निघं० ३ । ९ ) मेघोदकानि प्रवर्ष्याभिविराजति तेषां सम्मुखं प्रकाशयति ।

सरस्वती पृथिवीस्थाने नदी सती मध्यस्थाने कथं वाक्? यतो वाक्—वाणी खल्वर्थेषु साधनीयेष्वभीष्टेषु विधीयते प्रयुज्यते प्रेर्यते शासकैर्जनैश्च तथाऽत्रापि केतुना भर्त्सनेनादेशेन वा महतोऽर्णसः प्रचेतनं वर्षितुं ताडनं प्रेरणं वा तथा पृथिवीस्थानां प्राणिनां तदभीष्टविषये प्रज्ञापनमाश्वासनं सरस्वत्या क्रियते तेन सा माध्यमिका वागिति निश्चयः। माध्यमिकया वाचा यथा मेघानानुकूल्येऽभिनेतुं ताडनं यद्वाऽऽज्ञापनं जनानां हितसाधनं च क्रियते तथा मानवीयया वाचाऽविनीतानानुकूल्येऽभिनेतुं ताडनमाज्ञापनं तथा जनानां हितसाधनं कर्तव्यमिति मनुष्यवद्देवताभिधानात् कर्तव्यम्।

भदेवतात्वे प्रयोगाः "दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि।" (ऋ० ३।२३।४) अग्निदेवत्ये नदीवाचकत्वेन। "त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा। त्वमिळा शतहिमासि दक्षस त्वं वृत्रहा वसुपते सरस्वती॥" (ऋ० २।१।११) अग्निदेवत्ये सूक्ते 'माध्यमिका सरस्वती' अग्निप्रशंसायाम्॥

वाक्॥ १९॥

वाग्व्याख्याता॥ २७॥

तस्या एषा भवति—

"यद् वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा। चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम॥" (ऋ० ८।१००।१०)

यद् वाग् वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि क्वस्विदस्याः परमं जगामेति यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा॥ २८॥

भा०—'वाक्' इति मध्यस्थाना स्त्रीलिङ्गा देवता। वाग् व्याख्याता "वाक् कस्माद् वचेः" (निरु० अ० २ खं० २३) "वच परिभाषणे" (अदादि०) ततः "क्विब् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च" (उणा० २।५८) कर्तरि कर्मणि करणे च यथायोग्यम्। अत्र कर्तरि वक्तीति वाक्। तस्या मन्त्रः "यद् वाग्....।"

मन्त्रार्थः—

यत् खलु देवानां—माध्यमिकानां देवानां वाक्—माध्यमिका वाक् स्तनयित्नु-

लक्षणा (Vibration) मन्द्रा मदना हर्षयित्री राष्ट्री मध्यस्थानस्य-ईश्वरा स्वामिनी यद्वा मेघानां स्वामिनी "राष्ट्री-ईश्वरनाम" ( निघं० २ । २२ ) अविचेतनानि-अविज्ञातानि वचनानि वस्तूनि वा वदन्ती सती निषसाद निषीदति समुद्यता भवति मेघोदकं वर्षयितुमन्तरिक्षे तदा चतस्रो दिशोऽनु सा खलूर्जमन्नं पयांस्युदकानि दुग्धवती दोग्धि वाऽथास्याः परमं फलमोषधिवनस्पतिरूपं क्व जगाम क्व क्व गतं भवति पृथिवीं गच्छति पृथिवीस्थान् मनुष्यादीन् प्राणिनः प्रति गच्छति तथा चादित्यरश्मयो हरन्ति गृह्णन्ति रसरूपेणाकर्षन्ति ॥

अविज्ञातभाषणं चतस्रो दिशः प्रति जलवृष्टिकरणं पृथिव्यां दिवि चौषधिरसप्रेरणं च माध्यमिकाया वाचः कार्यम् ॥

तस्या एषापरा भवति—

"दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति। सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॥" ( ऋ० ८ । १०० । ११ )

देवीं वाचमजनयन्त देवास्तां सर्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाऽव्यक्तवाचश्च सा नो मदनान्नं च रसं च धेनुर्वागस्मानुपैतु सुष्टुता ॥

भा०—माध्यमिका देवाः—इन्द्रबृहस्पतिप्रभृतयो देवीं द्योतमानां माध्यमिकां वाचमजनयन्त जनयन्ति तां विश्वरूपाः सर्वरूपाः पशवः पश्यन्ति ये ते मनुष्या व्यक्तवाचः पशुपक्षिणश्चाऽव्यक्तवाचो वदन्ति यतः पूर्वमाधिदैविके जगति देवानां कार्यं भवति पश्चाच्छरीरे । सा देवी वाक् मन्द्रा मदना हर्षयित्री किल नोऽस्मभ्यमिषमन्नमूर्जं रसं च दुहाना प्रक्षरन्ती स्रावयन्ती वा धेनुर्वाक् स्तुताऽनुष्ठिता सती-अस्मानुपैतु प्राप्नोतु प्रयुक्ता भवतु ॥

देवैरुत्पादिता वाक्-मनुष्यादिषु प्रविशति धेनुवन्मनुष्येभ्योऽन्नं रसं च स्रावयति सा माध्यमिकाऽस्ति । मनुष्यवद्देवताभिधानात् सर्वेष्टानां साधिका वाक् सम्पादनीया मनुष्यैः ।

यैषा वेदरूपा वाक् तस्या ऋक् तु "च॒त्वारि॒ वाक्परि॑मिता प॒दानि॒ तानि॑ विदुर्ब्राह्म॒णा ये म॑नी॒षिणः॑ ।" ( ऋ० १ । १६४ । ४५ ) सा परिशिष्टेऽतिस्तुतिप्रसङ्गे खल्वागमिष्यति ।

अदेवतात्वे प्रयोगाः "तमिद्वो॑चेमा वि॒दथे॑षु श॒म्भुवं॒ मन्त्रं॑ देवा अने॒हस॑म् । इ॒मां च॒ वाचं॑ प्रति॒हर्य॑था नरो॒ विश्वेद् वा॒मा वो॑ अश्नवत् ॥ ( ऋ० १ । ४० ।

६ ) बृहस्पतिदेवत्ये नामधेयेन । "प्र या घोषे न भृगवाणे शोभे यया वाचा यजति पज्रियो वाम् । प्रैषयुर्न विद्वान् ॥ ( ऋ० १ । १२० । ५ ) आश्विने सूक्ते नामधेयेन । "प्र सा वाचि सुष्टुतिर्मघोनामिदं सूक्तं मरुतो जुषन्त ।" ( ऋ० ७ । ५८ । ६ ) मरुद्देवत्ये नामधेयेन । "स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।" ( ऋ० १ । ११३ । १७ ) उषोदेवत्ये ॥

अनुमती राकेति देवपत्न्याविति नैरुक्ताः, पौर्णमास्याविति याज्ञिका या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायते ।

अनुमतिः ॥ २० ॥

अनुमतिरनुमननात् ॥ २१ ॥

तस्या एषा भवति—

"अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।

क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥"

( यजु० ३४ । ८ )

अनुमन्यस्वानुमते त्वं सुखं च नः कुर्वन्नं च नोऽपत्याय धेहि प्रवर्धय च न आयुः ॥

भा०—मध्यस्थानानां स्त्रीलिङ्गानां देवतानां क्रमे 'अनुमतिः, राका' इति द्वे मध्यस्थाने स्त्रीलिङ्गे देवतेऽन्योन्यमपेक्ष्य वर्तेते । ते उभे अनुमतिः, राका द्वे मध्यस्थानानां देवपत्न्यौ स्तः, मध्यस्थानानां देवानामाश्रयभूते स्तः—इति नैरुक्ता मन्यते । अत्रांशिकं लिङ्गं वेदे, यथा "दमूनसो अपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः । सरस्वती बृहद्दिवोत राका...." ( ऋ० ५ । ४२ । १२ ) अनुमतेऽन्विदं मन्यस्व...." ( अथर्व० ६ । १३१ । २–हे अनुमते सर्वकार्याणामनुमन्त्रि–अनुमतकारिणि देवपत्नि–इति सायणः ) पृथिवीस्थविषुवद्रेखागोलस्योपरि यद्वा ग्रहगतेरनुमापिकाया व्योमकक्षाया नीचैर्मध्यस्थाने वा–उत्तरगोलार्द्धस्य परिक्रमा सा–अनुमतिर्देवता देवानां पत्नी या दक्षिणगोलार्द्धपरिक्रमा सा राका देवानां पत्नी वसन्तसम्पातावसरे भवतः । अथवा–इन्द्रस्य विद्युद्देवस्य पत्न्यौ द्वे, धारे–अनुमतिराके धनर्णात्मिके शुष्कार्द्रे (Positive and Negative) वर्षकर्मारम्भे भवतः । अनुमतिरनुमन्यते तं राका ददाति तस्मै–इन्द्रदेवाय बलम् । इति नैरुक्ते यत्किञ्चन विवरणम् । याज्ञिकाः–अनुमतिराके द्वे पौर्णमास्यौ मन्यन्ते, तेषां मते या पूर्वा पौर्णमासी साऽनुमतिर्या चोत्तरा

पौर्णमासी सा राकाऽस्ति, इत्येतद् ब्राह्मणे निर्दिश्यते—"या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका" ( मै० सं० ४ । ३ । ५, ऐ० ब्रा० प० ७ । १० । अ० ३२ । ख० ९ ) तिथिक्षयाद् द्वयोर्दिनयोः पौर्णमासी सम्पद्यते तदा पूर्वा पौर्णमासी खल्वनुमतिः, उत्तरा पौर्णमासी राका । कथं द्वे पौर्णमास्यौ स्यातामत्रेदं वर्ण्यते यत् "कलाहीने साऽनुमतिः पूर्णे राका निशाकरे" चन्द्रमसि यदा चतुर्दशीसंयोगाच्चन्द्रमाः—एककलाहीनो भवति तत्सम्बन्धादारम्भपौर्णमासी भवत्यनुमतिः, अनुमन्यते पौर्णमासी यथा यदागता पौर्णमासी तस्मात् साऽनुमतिः । चतुर्दशीं लङ्घयित्वा पूर्णो भूतस्तिष्ठति चन्द्रमा यस्यां पौर्णमास्यां तिथौ सा खलूत्तरा पौर्णमासी—इति याज्ञिकमतम् ।

अनुमतिः—अनुमननात् । अनुपूर्वात्—मनधातोः कर्तरि क्तिन् प्रत्ययः । उक्तं हि 'अनुमतेऽनुमन्यस्व ।'

मन्त्रार्थः—

हे अनुमते मध्यस्थाने देवते ! विद्युद्देवस्य प्रथमधारे ! याज्ञिकपक्षे पूर्वपौर्णमासि ! त्वमवश्यमनुमन्यस्वानुकूला भव प्रवृद्धयेऽनुमतिं प्रयच्छ, नोऽस्मभ्यं सुखं कृधि कुरु तथाऽस्माकं क्रत्वेऽपत्याय दक्षायान्नं च हिनु धेहि विधेहि सम्पादय नोऽस्माकमायुश्च प्रतारिषः प्रवर्धय ।

इन्द्रस्य विद्युद्देवस्य प्रथमधाराऽस्मदर्थं मेघं वर्धयति पूर्वा पौर्णमासी चन्द्रमसमुत्तरोत्तरं वर्धयति तद्वदस्मानपि वर्धयतु सेत्याकाङ्क्षा । तथा मेघवर्धनेन च सुखमन्नमायुश्च प्राप्स्यते हीति निश्चयः ।

निरुक्त्यः—'मन्यासै' "मन ज्ञाने" ( दिवादि० ) ततो लेट् मध्यमपुरुषस्यैकवचने थासि रूपम् । 'क्रत्वे' क्रतुशब्दस्य चतुर्थ्यां छान्दसं रूपम्, अपत्यार्थे च यास्कवचनात् । "क्रतुं दक्षं वरुण संशिशाधि—वीर्यं प्रज्ञानं वरुण संशिशाधि" ( ऐ० १ । १३ ) क्रतुं वीर्यं लक्षणयाऽपत्यं स्यात् । दक्षाय द्वितीयार्थे चतुर्थी दक्षमन्नं यास्कवचनात् "दक्ष—बलम्" ( निघं० २ । ९ ) तदपि लक्षणयाऽन्नं भवेत्, अन्नं बलं प्रयच्छति ।

अदेवतात्वे प्रयोगः "असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥" ( ऋ० १० । ५९ । ६ ) असुनीतिदेवत्ये तद्विशेषणरूपेण ॥

राका ॥ २९ ॥

राका रातेर्दानकर्मणः ॥ ३० ॥

तस्या एषा भवति—

"राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना। सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥" ( ऋ० २ । ३२ । ४ )

राकामहं सुह्वानां * सुष्टुत्याह्वये शृणोतु नः सुभगा बोधत्वात्मना सीव्यत्वपः प्रजननकर्म सूच्याच्छिद्यमानया। सूची सीव्यतेः। ददातु वीरं शतप्रदमुक्थ्यं वक्तव्यप्रशंसम् ॥

भा०—'राका' इति मध्यस्थाना स्त्रीलिङ्गा देवता। राका "रा दाने" ( अदादि० ) ततः "कृदाधारार्चिकलिभ्यः कः" ( उणा० ३ । ४० ) स्त्रियां राका। सा च देवपत्नी, "पत्नी....राका" यथा "अनुमते पत्नि" इति सायणः ( अथर्व० ६ । १३१ । २ ) इन्द्रस्य पत्नी विद्युतो द्वितीया धारा (Negative) नैरुक्तमते। उत्तरा पौर्णमासी यस्यां चन्द्रमाः पूर्ण इति याज्ञिकमते।

मन्त्रार्थः—

अहं कृतविवाहो जनो नूतनगृहस्थः सुहवां सुह्वानां सम्यगाह्वानयोग्यां राकामिन्द्रस्य पत्नीं विद्युतो द्वितीयां धारां तामिव निजपत्नीं यद्वा—उत्तरां पौर्णमासीं तामिव निजपत्नीं सुष्टुत्या शोभनस्तुत्या हुवे—आह्वये सा सुभगाऽस्माकमामन्त्रणं शृणोतु तथान्तरात्मना बोधतु भावयतु तथाऽछिद्यमानया—अविच्छिन्नगतिकया सूच्या—अपः प्रजननकर्म सीव्यतु वीरं पुत्रं शतदायं शतप्रकारेण सुखप्रदं वक्तव्यप्रशंसं वक्तव्या प्रशंसा यस्य तथाविधं पुत्रं ददातु "पुत्रो वै वीरः" ( शत० ३ । ३ । १ । १२ ) अनुमतिश्च सिनीवाली चेन्द्रस्य विद्युतः प्रथमा धारा यद्वा पूर्वा पौर्णमासी कन्यां प्रयच्छति गृहस्थाय, अन्या राका कुहूश्चेन्द्रस्य विद्युतो द्वितीया धारा यद्वा—उत्तरा पौर्णमासी पुत्रं ददाति गृहस्थाय, एतद्विषयको मन्त्रोऽथर्ववेदेऽयम् "प्रजापतिरनुमतिः सिनीवाल्यचीक्लृपत्। स्त्रैषूयमन्यत्र दधत् पुमांसमु दधदिह ॥" ( अथर्व० ६ । ११ । ३ ) इति सन्तानकर्मणि गृहस्थजना जानन्तु विद्यामेतां तथा स्वकीयां पत्नीं संसाध्नुवन्तु, यतो मनुष्यवद्देवताभिमानं मन्त्रे, मन्त्रगताभिप्रायेणानुकूलां शिक्षां गृह्णन्तु च ॥

सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः। अमावस्ये

* 'स्वाह्वानाम्' इति पाठान्तरम्।

इति याज्ञिकाः। या पूर्वामावस्या सा सिनीवाली योत्तरा सा कुहूरिति विज्ञायते। सिनीवाली ॥ २२ ॥

सिनीवाली सिनमन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेः, तस्मिन्नन्नवती वालिनी वा, वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा ॥ ३१ ॥

तस्या एषा भवति—

"सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥"

( ऋ० २।३२।६ )

सिनीवालि पृथुजघने, स्तुकः स्त्यायतः सङ्घातः पृथुकेशस्तुके पृथुष्टुत वा, या त्वं देवानामसि स्वसा सु असा स्वेषु सीदतीति वा, जुषस्व हव्यमदनं * प्रजां च देवि दिश नः ॥

भा०—'सिनीवाली कुहूः' इति मध्यस्थाने स्त्रीलिङ्गे देवते देवपत्न्यौ स्तः—इति नैरुक्ता मन्यन्ते। शरत्सम्पाते ग्रहाणां परिक्रमे—उत्तरदक्षिणगोलार्द्धयोः प्रवृत्ते यद्वा—इन्द्रस्य विद्युद्रूपस्य द्वे धारे वर्षकर्मान्ते भवतः। अमावस्ये द्वे—इति याज्ञिका मन्यन्ते। "या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः" ( मै० सं० ४।३।५, ऐ० ब्रा० प० ७।९। अ० ३२। ख० ९ ) "दृष्टेन्दुः कृष्णा चतुर्दशी' सिनीवाली नष्टेन्दुकलाऽमावास्या कुहूः"। सिनीवाली—सिनी वाली—सिनमन्नं भवति "सिनम्—अन्ननाम" ( निघं० २।७ ) यतः सिनाति बध्नाति स्थिरीकरोति प्राणिनो जीवयतीत्यर्थः। तद्वती सिनी "छन्दसीवनिपौ च वक्तव्यौ" वा० ( अष्टा० ५।२।१०९ ) ईप्रत्ययो मत्वर्थे वालं पर्व, द्वयोः पक्षयोर्वरयिता मध्यभागः, 'वालम्' "वृञ् वरणे" ( स्वादि० ) वारः, रेफस्य लत्वं रलयोरभेदः प्रसिद्धः। अथवा वालेनेवाणुत्वात् सूक्ष्मत्वाच्चन्द्रमा अस्यां सेवितव्यो भवतीति वा, एवं सिनी च वाली—वालिनी च सिनीवाली, उभयत्र प्रयोगयोः—ईप्रत्ययश्छान्दसो मतुबर्थे।

मन्त्रार्थः—

हे मध्यस्थाने सिनीवालि! अन्नवति च पर्ववति नवर्तुसञ्चारिणि—इन्द्रस्य विद्युद्देवस्य पत्नि वर्षकर्मान्ते प्रथमे धारे, पूर्वामावास्ये! या त्वं पृथुष्टुके पृथुजघने

* 'हव्यमाहुतम्' इति पाठान्तरम्।

स्थूलजघने यद्वा पृथुकेशस्तुके पृथुकेशगुम्फिके नारीव देवते। अथवा पृथुष्टुते बहुस्तुते प्रशंसिते देवते ! त्वं देवानां मध्यस्थानानां देवानां स्वसा भगिनी—सह-जाता, इन्द्रस्य तु पत्नी ह्यसि यद्वा सु–असा सु सम्यक् खलु मेघानां प्रक्षेपिका सद्भावप्रेरिणी वा, अथवा स्वेषु बन्धुषु सीदति यथा कुलवधूस्तथा त्वमसि हव्य-मदनमदनीयं हवीरूपं सेवस्वाऽस्मभ्यं प्रजां सन्ततिं च दिदिड्ढि दिश निर्दिश प्रेरय देहि ॥

मन्त्रे वर्णनमालङ्कारिकमस्ति मनुष्यवद्देवताभिधानान्मनुष्यैस्तथा शिक्षा ग्राह्या कुलवध्वा तादृशया भवितव्यम्।

निरुक्तयः—'पृथुष्टुके' 'पृथु' इत्युपपदात् "स्त्यै संघाते" (भ्वादि०) डुकन् प्रत्यय औणादिकः "उल्कादयश्च" (उणा० ४। ४१) निपात्यते। 'दिदिड्ढि" "दिश अतिसर्जने" (तुदादि०) "बहुलं छन्दसि" (अष्टा० २। ४। ७६) इति श्लुर्जातः।

अदेवतात्वे प्रयोगः "इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन्। सिनीवाली नयत्वाग्रमेषामाजग्मुषो अनुमते नि यच्छ ॥" (अथर्व० २।२६।२) पशुदेवत्ये ॥

कुहूः ॥ ३३ ॥

कुहूर्गूहतेः, क्वाभूदिति वा, क्व सती हूयत इति वा, क्वाहुतं हविर्जुहोतीति वा ॥ ३२ ॥

तस्या एषा भवति—

"कुहूमहं सुकृतं * विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥" (ऋ० ४। १२। ६)

कुहूमहं सुकृतं विदितकर्माणमस्मिन् यज्ञे सुह्वानामाह्वये, सा नो ददातु श्रवणं पितॄणां पित्र्यं धनमिति वा, पित्र्यं यश इति वा, तस्यै ते देवि हविषा विधेमेति व्याख्यातम्।

---

* पं० सातवलेकरसम्पादितायां तथा स्कन्दभाष्ये च निरुक्तपाठ एष एव, दुर्गभाष्ये निरुक्तपाठः 'सुवृतम्' यास्कव्याख्यानुरोधेन 'सुकृतम्' एव पाठः शोभनः। होशियारपुरस्थे वि० वैदिकशोधसंस्थाने १६५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रपिलिपितायाम्) तु 'सुवृतम्' पाठः।

भा०—'कुहूः' इति मध्यस्थाना स्त्रीलिङ्गा देवता । सा शरत्सम्पातस्य दक्षिणदिग्वर्तिनी परिक्रमा, इन्द्रस्य विद्युद्देवस्य वृष्टेरन्ते द्वितीया धारा नैरुक्त-पक्षे । उत्तराऽमावास्या याज्ञिकानां मते । 'कुहूः' "गुहू संवरणे" ( भ्वादि० ) "मृगय्वादयश्च" ( उणा० १ । ३७ ) इति बाहुलकात्—उः कित्, धातोर्गकारस्य ककारश्च निपातनात् । पुनः स्त्रियाम् "ऊङुतः" ( अष्टा० ४ । १ । ६६ ) ऊङ् प्रत्ययः । कुहूः संवृता—इन्द्रस्य शान्तधारा धूमरूपा—उत्तराऽमावस्या संवृणोति चन्द्रमसम् । यद्वा 'क—अभूत्' कशब्दोपपदाद् भूधातोः "अन्दूदृम्फूजम्बूकफेलू-कर्कन्धूदिधिषूः" ( उणा० १ । ९३ ) बाहुलकादत्र निपातनं कूप्रत्ययान्तं विज्ञे-यम् । 'क' इत्यस्य कुभावो धातोर्भकारस्य हकारश्च । कुहूः—वृष्टेः पूर्वमेषा काभूत्, यद्वा चन्द्रमसः प्रकाशकाले कुत्रासीत् । अथवा क सती हूयते, क सती कश्चिद् गुप्ता सती गुप्तरूपा सती खल्वप्याहूयते बहुवृष्टिनिर्वपनाय, यद्वा यज्ञकरणा-र्थोत्तरामावस्याऽऽहूयते । 'क' उपपदात्—हु यद्वा ह्वेञ्धातोः 'कूः' ङिच्च बाहुल-कात्—ह्वेञः सम्प्रसारणं च, बाहुलकात् 'क' इत्यस्य कुभावः । अथवा 'काहुतं हविर्जुहोति'—आहुतं समर्पितं हविः क जुहोति—अत्ति गृह्णाति, अदृश्या सती । निरुक्तिः पूर्ववत् ॥

मन्त्रार्थः—

अहं सुकृतं सुकार्यस्यौषधिवनस्पतिषु प्राणिसन्ततिषु रससञ्चारकार्यस्य कर्त्रीं विघ्ननापसं विदितकर्माणं विदितानि कर्माणि यया यस्यां वा जनैस्तां सुहवां सुह्वानां सौगम्येन ह्वातुं योग्यामस्मिन् यज्ञे गृह्ये यज्ञे जोहवीमि—आह्वये, सा नोऽस्मभ्यं पितॄणां श्रवणं श्रूयेरन् जना येनास्माकं पितॄणां नाम, पितॄन् वा तथाभूतं पित्र्यं धनं सन्तानं यद्वा पित्र्यं यशो ददातु तस्यै तुभ्यं हे देवि ! हविषा विधेम—हविर्विधेम हव्यं समर्पयामः ॥

विज्ञप्तिः—देवतास्त्रिविधाः पृथिवीमध्यद्युलोकभेदात्, तथा मनुष्यास्त्रिविधाः—मनुष्याः, पितरः, देवाः । "मनुष्यवद्देवताभिधानम्" ( निरु० १ । १ । २ ) इत्यतो देवताभिधानं देवतानां गुणकर्मवर्णनं मनुष्यवत्—मनुष्येभ्योऽस्ति । द्युस्थानानां देवतानां गुणकर्माभिधानं देवजनेभ्यः—देवजनैर्मुमुक्षुभिः श्रेष्ठतमैरा-चरणीयम्, मध्यस्थानानां देवतानां गुणकर्माभिधानं पितृजनेभ्यः पितृजनैर्मध्यम-जनैः श्रेष्ठतरैराचरणीयम्, पृथिवीस्थानानां देवतानां गुणकर्माभिधानं श्रेष्ठेभ्यो धार्मिकेभ्यो जनेभ्यस्तैः श्रेष्ठैर्जनैराचरणीयमिति सर्वत्र लक्ष्यं प्राह्यं देवतानां गुणवर्णने । तथैवात्रापि गृहे पत्नी कुहूः स्यात् कुहूवत् कार्यस्य साधिका गुणवती

स्यात्, ज्योतिर्विज्ञानं वृष्टिकालविज्ञानं तथाभूतेऽवसरे यजनं कार्यम्। सम्मान-यशोलाभश्चापि प्राह्यः।

निरुक्तयः—'विघ्नापसम्' यास्कीयनिर्वचने 'विघ्न' शब्दो विहितार्थो भूतकाले। 'विद् ज्ञाने' धातोः 'मनक्' प्रत्ययो भूते काले बाहुलकादौणादिकः। विघ्नक्लिलिङ्गः, विघ्नानि—अपांसि कर्माणि यया यस्यां वा तां विघ्नापसम्॥

यमी ॥ २४ ॥

यमी व्याख्याता ॥ ३३ ॥

तस्या एषा भवति—

"अ॒न्यमू॒ षु त्वं य॑म्य॒न्य उ॒ त्वां परि॑ ष्वजाते॒ लिबु॑जेव वृ॒क्षम्। तस्य॑ वा॒ त्वं मन॑ इ॒च्छा स वा॒ तवाधा॑ कृणुष्व सं॒विदं॑ सु॒भद्रा॑म्॥" ( ऋ० १० । १० । १४ )

अन्यमेव हि त्वं यम्यन्यस्त्वां परिष्वङ्क्ष्यते * लिबुजेव वृक्षं तस्य वा त्वं मन इच्छा स वा तवाधानेन कुरुष्व संविदं सुभद्रां कल्याणभद्राम्। यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम्॥ ३४ ॥

भा०—'यमी' इति मध्यस्थाना स्त्रीलिङ्गा देवता। यमी व्याख्याता "यमो यच्छतीति सतः" ( निरु० अ० १० ख० १९ ) सूक्तेऽस्मिन् यमो यमी च परस्परं संवदेते, तावृषी तावेव च देवते पर्यायेण स्तः। अथ च तावुभौ वैवस्वतौ "ओचित् सखाया वैवस्वतयोर्यमयम्योः संवादः षड्युग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे।" ( ऋग्वेदीयसर्वानुक्रमणी ) तौ वैवस्वतौ, विवस्वान् सूर्यस्तत्प्रभवौ स्त्रीपुरुषौ रात्रिदिवसौ कालात्मकौ स्तः, तावेव निरन्तरं जडजङ्गमानां यन्तारौ स्वाधीने स्थापयितारौ तेषां बाल्ययौवन-जराणां नियन्तारौ ग्रहीतारौ प्रवर्तेते, पृथिवीगोलस्य परितो मध्यस्थाने प्रति-द्वन्द्वित्वेनार्धमर्धं गोलमधिकृत्य परिक्राम्यतः। तयोः संवादः परस्परं गार्हस्थ्य-संयोगवत् खल्वालङ्कारिकोऽस्ति, यथा चोक्तं यास्केन 'यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम्' आख्यानमाख्यानी किलालङ्कारिकी चर्चा परन्तु मध्ये पृथिवीगोलस्य वर्तमानत्वात् संयोगस्तयोरसम्भवः। एतदलङ्कारस्य विवरणं सूक्तस्य व्याख्यानं च पश्यन्तु खल्वस्मद्विरचिते 'यमयमीसूक्तम्' इति पुस्तके यद्वा 'यमपितृपरिचयः' इति पुस्तके। अत्र तु मन्त्रार्थ एव क्रियते।

---

* 'परिष्वजताम्' इति पाठान्तरम्।

मन्त्रार्थः—

हे यमि ! रात्रे ! अन्य एव त्वां परिष्वजाते–परिष्वङ्क्ष्यते–आलिङ्गयिष्यति त्वं चान्यं परिष्वङ्क्ष्यसे–आलिङ्गयिष्यसि लिबुजा–इव लिबुजा लता वल्ली यथा वृक्षमालिङ्गयति वृक्षो वा लिबुजां लतां वल्लीमालिङ्गयति । नावयोः संयोगः सम्भवः पृथिवीगोलस्य मध्ये वर्तमानत्वात् । तस्मात् तस्यान्यस्य मन इच्छ स च तव मन इच्छतु अथेत्थं कृते सति किलानेनान्येन सह संविदं नियोगरूपां प्रतिज्ञां सुभद्रां कल्याणभद्रां कुरुष्व ॥

इत्येकादशाध्यायस्य तृतीयः पादः ।

---

## चतुर्थः पादः

---

उर्वशी ॥ २५ ॥

उर्वशी व्याख्याता ॥ ३५ ॥

तस्या एषा भवति—

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।

जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥"

( ऋ० १० । ९५ । १० )

विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यान्युदकान्यन्तरिक्षलोकस्य यदा नूनमयं जायेताद्भ्योऽध्यप इति । नर्यो मनुष्यो * नृभ्यो हितो नरापत्यमिति वा । सुजातः सुजाततरोऽथोर्वशी प्रवर्धयते दीर्घमायुः ॥

भा०—'उर्वशी' इति मध्यस्थाना स्त्रीलिङ्गा देवता । उर्वशी व्याख्याता "उर्वभ्यश्नुते····" ( निरु० अ० ५ ख० १३ ) तस्याः "विद्युन्न या····" इति मन्त्रः ।

मन्त्रार्थः—

उर्वशी मध्यस्थाने बहुव्यापिनी विद्युदस्ति (Electro Magnatic wave) सा विद्युन्न–विद्युदिव–विद्युदेव विद्युत्सदृशी वा, 'न' इति 'इव' स च द्व्यर्थको यास्केन मतः पदपूरणार्थे–उपमार्थे च "इवोऽपि दृश्यते पदपूरणः" ( निरु०

---

* 'मनुष्यो' इत्यधिकः पाठः, लिपिप्रमादात्–मुद्रितेषु हस्तलिखितेषु च लभ्यते पाठ इत्थमेव ।

१ । ११ ) पतन्ती दविद्योत्–अद्योतत द्योतते या च महाम्–अप्या–अप्यानि–आन्तरिक्षाणि–अन्तरिक्षलोकभवानि कान्यान्युदकानि भरन्ती–हरन्ती–आहरन्ती–आनयन्ती "आपः–अन्तरिक्षनाम" ( निघ० १ । ३ ) दविद्योत्–द्योतते–इति सम्बध्यते । तदा नर्यो नृभ्यो मनुष्येभ्यो हितो हितकरोऽपो योयमध्यपोऽन्तरिक्षे सुजातः सु–सुगमतया जायते सुजात उदकसङ्घातो यद्वाऽध्यपोऽभिकर्म कर्मानुरूपो नरापत्यं पुत्रो जनिष्टोऽजायत–जातः । उर्वशीव या मानुषी देवी तस्याः । तदा सोर्वशी दीर्घमायुः प्रवर्धयति । भावद्वयस्तुगृगेषा ।

निरुक्तयः–'दविद्योत्' 'द्युत दीप्तौ' ततो यङ्लुगन्तात्–लुङि छान्दसः शपो लुगडभावोऽभ्यासस्य सम्प्रसारणाभावश्च । 'जनिष्टः' "जनी प्रादुर्भावे" (दिवादि०) ततो लुङि प्रथमैकवचनेऽडभावश्छान्दसः "बहुलं छन्दस्यमाङ्योगेऽपि" ( अष्टा० ६ । ४ । ७५ ) ॥

अदेवतात्वे प्रयोगः—"उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजातः ।" ( ऋ० ७ । ३३ । ११ ) वसिष्ठदेवत्ये नामधेयेन, उर्वश्याः पुत्रो वसिष्ठः–उदकसंघातः ॥

पृथिवी ॥ २६ ॥

पृथिवी व्याख्याता ॥ ३६ ॥

तस्या एषा भवति—

"बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥"

( ऋ० ५ । ८४ । १ )

सत्यं त्वं पर्वतानां मेघानां खेदनं छेदनं भेदनं बलमत्र धारयसि पृथिवि प्रजिन्वसि या भूमिं प्रवणवति महत्त्वेन महतीत्युदकवतीति वा ॥

भा०—'पृथिवी' इति मध्यस्थाना स्त्रीलिङ्गा देवता । पृथिवी व्याख्याता "प्रथनेन पृथुः" ( निरु० १ । १४ ) तस्या मन्त्रः "बळित्था पर्वतानां....।"

मन्त्रार्थः—

हे पृथिवि ! अन्तरिक्षे प्रथनस्वभावे प्रथिते वा देवते सूक्ष्मरूपेण प्रसृते पृथिवीतन्मात्रयुक्ते विद्युत् ! (Dust in upper layers of the atmosphere) या त्वं 'पर्वतानां मेघानाम् "पर्वतो मेघनाम" ( निघं० १ । १० ) खिद्रं खेदनं छेदनं बलं भेदनं बलमित्थामुत्र मध्यस्थानेऽन्तरिक्षे "इत्थाऽमुथा"

( निरु० ३ । १६ ) "इत्था चन्द्रमसो गृहे—अमुत्र चन्द्रमसो गृहे" ( निरु० ४ । २४ ) बट् सत्यं बिभर्षि धारयसि, हे प्रवत्वति प्रवणवति निम्नगमनधर्मवति ! महिनि मह्ना—महत्त्वेन महती यद्वा मह्ना—उदकेन—उदकवति ! "महत्, महः—उदकनाम" ( निघं० १ । १२ ) भूमिं भवन्ति भूतानि यस्यां तां पृथिवीं पृथिवीलोकं प्रजिनोषि प्रजिन्वसि प्रीणयसि "जिवि प्रीणने" ( भ्वादि० ) ॥

निरुक्तयः—'खिद्रम्' "खिद परिघाते" ( तुदादि० ) ततः "स्फायि···· खिदि···भ्यो रक्" ( उणा० २ । १३ ) खिद्यते परिहन्यते येन तत् खिद्रं परिघातकं बलम् ।

अदेवतात्वे प्रयोगाः—"त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् । ( ऋ० १ । ३४ । ७ ) आश्विने सूक्ते नामधेयेन । "या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन् राजन्त्सोम प्रति हव्या गृभाय ॥" ( ऋ० १।९१।४ ) सोमदेवत्ये नामधेयेन ॥

इन्द्राणी ॥ २७ ॥

इन्द्राणीन्द्रस्य * पत्नी ॥ ३७ ॥

तस्या एषा भवति—

"इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥" ( ऋ० १० । ८६ । ११ )

इन्द्राणीमासु नारिषु सुभगामहमशृणवं न ह्यस्या अपरामपि समां जरया म्रियते पतिः सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥ ३८ ॥

भा०—'इन्द्राणी' मध्यस्थाना स्त्रीलिङ्गा देवता । इन्द्राणी—इन्द्रस्य पत्नी सा का यस्याः पतिरिन्द्रः । उत्तरो ध्रुवोऽत्रास्तीन्द्रो यतोऽस्मिन् सूक्ते त्रयोविंशत्यृचे प्रत्यृगन्ते 'विश्वस्मादिन्द्र उत्तरः' इत्यावर्त्यते । विश्वस्योत्तरदिशि स्वस्तीन्द्रः स ध्रुवः, उक्तं च "इन्द्रेहैव ध्रुवस्तिष्ठेह राष्ट्रमु धारय ।" ( अथर्व० ६ । ८७ । २ ) अस्य मन्त्रस्य ध्रुवो देवताऽप्यस्ति । इन्द्राणी व्योमकक्षा ग्रहाणां गतेः परिचायिका "ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधो-

* 'इन्द्राणीन्द्रस्य वा पत्नी' स्कन्दभाष्ये 'वा' इति सम्भावनीयः । स्वतन्त्रा इन्द्राणी माध्यमिका पक्षे पत्नी वा ।

ऽवस्तथा ।" ( सूर्यसि० १२ । ३० ) इति ज्योतिर्विद्याद्दृष्टिः समग्रे सूक्ते समुच्छते । सामान्यदृष्ट्या—इन्द्रो विद्युद्देवः—इन्द्राणी वैद्युतशक्तिर्यदाश्रिता मेघा भवन्ति ।

मन्त्रार्थः—

हे इन्द्राणि ! Terrestrial Magnetic Polarity (North & South facets of Ionosphere) अहमिन्द्रोऽन्यासु मध्यस्थानासु स्त्रीषु देवतासु विशेष्माणीं सुभगां सुधनां ग्रहैस्तद्वतीं यद्वा मेघैस्तद्वतीं श्रुतवान्, अस्याः पतिरिन्द्रो जरसा न म्रियतेऽपरं पन कालं यावत्—अपरां समामन्तिम वसन्तसम्पातमाप्रकर्षं न प्राप्नुयात् ॥

निरुक्तिः—'मरते' म्रियते—इति "मृङ् प्राणत्यागे" ( तुदादि० ) व्यत्ययेन शस्थाने शप् ॥

तस्या एषाऽपरा भवति—

"नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥" ( ऋ० १० । ८६ । १२ )

नाहमिन्द्राणि रमे सख्युर्वृषाकपेर्ऋते यस्येदमप्यं हविरप्सु शृतमद्भिः संस्कृतमिति वा प्रियं देवेषु निगच्छति सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥

मन्त्रार्थः—

भा०—हे इन्द्राणि ! व्योमकक्षे ! सख्युः—वृषाकपेः सलिभूतादादित्यादृते सलिभूतेनादित्येन विना न रमे यत् त्वत्प्रेरणया वराहयुः मां चन्द्रमा अस्य कर्णं कोणं जम्भिषत्—अग्रसत् "श्वान्वस्य जम्भिषदपि कर्णे वराहयुर्वि०" (२) वृषाकपिरादित्यः "वृषाकपिर्भवति वृषाकम्पनः, तस्यैषा भवति 'पुनरेहि वृषाकपे' " ( निरु० १२ । २८, ऋ० १० । ८६ । २१ ) यस्य वृषाकपेः सूर्यस्येदं प्रियम्—अप्यं हविः, अप्सु—अन्तरिक्षे श्रुतं सम्पन्नं ज्योतिः "आपोऽन्तरिक्षनाम" ( निघं० १ । ३) देवेषु च स्थानकेषु ग्रहेषु गच्छति निगच्छति प्रविशति । यद्वाऽद्भिः संस्कृतं मेघोदकैः सम्पन्नमोषधिरूपं हविः, देवेषु गच्छति यज्ञेन ॥

निरुक्तयः—'रारण' 'रण रमणे' छान्दसो धातुस्ततो लिटि उत्तमे "णलुत्तमो वा" ( अष्टा० ७ । १ । ९१ ) विकल्पेन णित्वात्—उपधावृद्धिर्न

भवति । अभ्यासवृद्धिस्तु सामान्या छान्दसी "अन्येषामपि दृश्यते" ( अष्टा० ६ । ३ । १३७ ) ॥

गौरी ॥ २८ ॥

गौरी रोचतेर्ज्वलतिकर्मणः । अयमपीतरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति ॥ ३९ ॥

तस्या एषा भवति—

"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥" ( ऋ० १ । १६४ । ४१ )

गौरीर्निर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन, द्विपदी मध्यमेन चादित्येन च, चतुष्पदी दिग्भिः, अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च, नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च, सहस्राक्षरा बहूदका परमे व्यवने ॥ ४० ॥

भा०—'गौरी' इति मध्यस्थाना स्त्रीलिङ्गा देवता । गौरी "रुच दीप्तावभिप्रीतौ च" ( भ्वादि० ) दीप्त्यर्थोऽत्र गृह्यते, तथा "रोचते ज्वलतिकर्मा" ( निघं० १ । १६ ) ततः "ऋज्रेन्द्राग्रवज्रविप्रकुब्जक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवज्रेरामालाः" ( उणा० २ । २९ ) गौरः—रन्प्रत्ययान्तो निपात्यते, निपातनादाद्यन्तविपर्ययो गकारश्च चकारस्थाने । "षिद्गौरादिभ्यश्च" ( अष्टा० ४ । १ । ४१ ) इति ङीष् स्त्रियाम् । इतरो लोके प्रसिद्धो गौरो वर्णोऽप्यस्मादेव दीप्त्यर्थाद् रुचधातोः—रोचते हि स जनेभ्यः, प्रशस्यश्च जनैः ।

मन्त्रार्थः—

गौरीः—गौरी "हल्ङ्याब्भ्यो दीर्घात्" ( अष्टा० ६ । १ । ६८ ) इति सुलोपाभावश्छान्दसः । सा गौरी ज्वलद्वर्णा शुभ्रा विद्युत् Primordial matter i, e. Energy (in relalion to Vibratary-motion) तक्षती कुर्वती, धातोः सामान्यार्थो गृहीतः । किं कुर्वती तक्षणं कर्म—इति सामर्थ्यात्, विद्युच्छिल्पकार्ये प्रयुज्यते हि, सलिलान्युदकानि मिमाय निर्मिमाय निर्माति सा तथाभूता देवता—एकपदी सती खल्वेकेन मध्यमेनेन्द्रेण युक्ता सती पुनर्द्विपदी मध्यमेनोत्तमेनादित्येन च युक्ता सती पश्चाच्चतुष्पदी चतसृभिर्दिग्भिः सह सङ्गता सती पुनरष्टापदी दिग्भिरुपदिग्भिश्च संयुक्ता सती पुनरपि नवपदी दिगुपदिग्भिरादित्येन

क्तयुक्ता सती सहस्राक्षरा बहूदका सती "सहस्रं बहुनाम" ( निघं० ३ । १ ) "अक्षरमुदकनाम" ( निघं० १ । १२ ) परमे व्योमन् परमे व्यवने पृथिवीत उत्कृष्टे–उपरि–अन्तरिक्षे विविधप्रकारेण रक्षास्थाने–उदकानां निर्मात्री बभूवुषी भवन्ती प्रसृता भवतु । "व्योम अन्तरिक्षनाम" ( निघं० १।३ ) । मनुष्यवद्दे-वताभिधानाद् गृहे गृहिणी विविधविद्याकौशलप्रसारिणी भवतु ॥

निरुक्तयः—'बभूवुषी' भूधातोर्लिटि क्वसुः स्त्रियां ङीप् "उगितश्च" ( अष्टा० ४ । १ । ६ ) । 'मिमाय' "माङ् माने" ( जुहो० ) ततो व्यत्ययेन परस्मैपदे णलि "आत औ णलः" (अष्टा० ७ । १ । ३४) औकारादेशाभावश्छा-न्दसो युक् च छान्दसः ॥

तस्या एषाऽपरा भवति—

"तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥"

( ऋ० १ । १६४ । ४२ )

तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति ॥

मन्त्रार्थः—

भा०—तस्या गौर्याः शुभ्राया विद्युतः—तत्सम्पादिताः समुद्राः—मेघाः—यास्कविधानसामर्थ्यात्, यद्वा "समुद्रोऽन्तरिक्षम्" ( निघं० १ । ३ ) समुद्रे-ऽन्तरिक्षे भवाः समुद्राः । तद्धितप्रत्ययस्य लोपः । कृत्स्नवत् प्रयोगस्ताद्धितः । अधिक्षरन्ति वर्षन्ति, तेन चतस्रः प्रदिशो जीवन्ति दिगाश्रयाणि भूतानि जङ्गमरूपाणि जीवन्ति, ततोऽक्षरमुदकं पार्थिवमोषधिवनस्पतिषु क्षरति वहति तत सर्वाणि भूतानि पृथिव्याश्रयिणः प्राणिन उपजीवन्ति तदाश्रयेण जीवनं धारयन्ति ॥

अदेवतात्वे प्रयोगः—"मदच्युत् क्षेति सादने सिन्धोरूर्मा विपश्चित् । सोमो गौरी अधि श्रितः ॥" ( ऋ० ९ । १२ । ३ ) पवमानसोमदेवत्ये नामधेयेन

गौः ॥ २९ ॥

गौर्व्याख्याता ॥ ४१ ॥

तस्या एषा भवति—

"गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा

उ । सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥" ( ऋ० १ । १६४ । २८ )

गौरन्वमीमेद्वत्सं निमिषन्तमनिमिषन्तं * मादित्यमिति वा, मूर्द्धानमस्याभिहिङ्ङ्करोन्मननाय सृक्काणं सरणं घर्मं हरणमभिवावशाना मिमाति मायुं प्रप्यायते पयोभिर्मायुमिवादित्यमिति वा । वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ॥

भा०—'गौः' इति मध्यस्थाना स्त्रीलिङ्गा देवता । गौः—व्याख्याता "यद् दूरं गता भवति""गातेर्वौकारो नामकरणः" ( निरु० अ० २ खं० ५ ) सा च माध्यमिका वाक् स्तनयित्नुयुक्ता मेघमाला । तस्या मध्यस्थानप्रकरणे "गौरमीमेदनु…." मन्त्रः ।

मन्त्रार्थः—

गौर्वत्समादित्यं मिषन्तं—निमिषन्तं निमीलितनेत्रं निमीलितनेत्रमिवास्तं यन्तं यद्वाऽनिमिषन्तमुन्मीलितनेत्रमिवोद्यन्तमादित्यमनुमीमेच्छब्दं करोति, अस्य मूर्द्धानं रश्मिस्तूपं हिङ्करोति हिङ्कृत्य स्पृशतीति शनैः शब्दयन् स्नेहं करोति मातेव—उ मन्तुं मननाय मनसि—आत्मसात्करणायेव । पुनः सृक्काणं सरणं सर्तारं घर्मं हरणं रसानां हरणं हर्तारं प्रत्यभिवावशाना पुनः पुनर्वावश्यमाना मायुं शब्दं मिमाति वाचयति 'मिमाति' अन्तर्गतणिजर्थः । यद्वा मायुमिव वत्समिवादित्यं वाचयति पयोभिरुदकैश्च पयते प्रप्यायते प्रवर्धयति † । सैषा माध्यमिका वाक् स्तनयित्नुरूपा मेघं गता मेघाधिकारिणी Simple Harmonic (or Periodic) Wave motion of Sound.

घर्मधुक्—यज्ञधुक्—यज्ञसाधनं घृतं दुग्धं वा दोग्धि सा पशुर्गौरस्ति—इति

---

* 'अनिमिषन्तम्' इत्यपपाठः—इति स्कन्दः । इति कथनं न युक्तं मन्त्रपाठः सामान्येन 'मिषन्तम्' तस्य 'निमिषन्तम्' निमीलितनेत्रम्, उन्मिषन्तम्—इत्यर्थद्वयं भवति, 'उन्मिषन्तम्' इत्यस्यार्थे 'अनिमिषन्तम्' इत्युक्तम् । अयं पाठो होशियारपुरस्थे वि० वैदिकशोधसंस्थाने १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) अपि विद्यते ।

† 'मायुः' पक्षे वत्सार्थे मतो यास्केन "माङ् माने शब्दे च" (जुहो०) उण्प्रत्ययान्तः कर्तरि मिमीते—इति मायुः—अव्यक्तवाक्—वत्सः ।

याज्ञिका मन्यन्ते । याज्ञिकपक्षे गौरेषैव पृथिवीस्थाना पशुरूपा, तदा मन्त्रार्थः स्पष्टः, तदर्थेनात्र नार्थः ।

निरुक्तयः—'अमीमेत्' "माङ् माने शब्दे च" ( जुहोत्यादि० ) व्यत्ययेन परस्मैपदमभ्यासस्य दीर्घत्वं च । 'सृक्वाणम्' यद्यपि 'सृज विसर्गे' धातोः साधारणः प्रयोगः क्वनिप्प्रत्ययान्तः परन्तु यास्केन 'सृ गतौ' धातोर्मतः, तदा 'सृ' धातोः 'कुक्' आगमेन सृक्वा द्वितीयायां सृक्वाणम् । 'घर्मः' "हृञ् हरणे" ( भ्वादि० ) "घर्मग्रीष्मौ" ( उणादि० १ । १४९ ) इति मक्प्रत्ययान्तो निपात्यते, हकारस्य घकारो निपातनात् । 'वावशानाः' "वाश्ट शब्दे" (दिवादि०) ततः "लिटः कानज् वा" (अष्टा० ३ । २ । १०६) "तुजादीनां दीर्घोऽभ्यासस्य" ( अष्टा० ६ । १ । ७ ) उपधाह्रस्वत्वं छान्दसम् । 'पयते' "प्यायी वृद्धौ" ( भ्वादि० ) कृतसम्प्रसारणात्–लटि रूपम्, सम्प्रसारणं च छान्दसं प्रत्ययात् पूर्वमेव ।

अदेवतात्वे प्रयोगाः—"इदमु त्यन्महि महामनीकं यदुस्रिया सचत पूर्व्यं गौः ।" ( ऋ० ७ । ५ । ९ ) वैश्वानरदेवत्ये । "इषमूर्जमभ्यर्षाश्वं गामुरु ज्योतिः कृणुहि मत्सि देवान् ।" ( ऋ० ९ । ९४ । ५ ) पवमानसोमदेवत्ये नामधेयेन । "दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।" ( ऋ० १ । ५३ । २ ) इन्द्रदेवत्ये नामधेयेन ।

धेनुः ॥ ३० ॥

धेनुर्धयतेर्वा धिनोतेर्वा ॥ ४२ ॥

तस्या एषा भवति—

"उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥" ( ऋ० १ । ६४ । २६ )

उपह्वये सुदोहनां धेनुमेतां कल्याणहस्तो गोधुगपि च दोग्ध्येनां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो घर्मस्तं सु प्रब्रवीमि । वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ॥

भा०—'धेनुः' इति मध्यस्थाना स्त्रीलिङ्गा देवता । धेनुः "धेट् पाने" ( भ्वादि० ) ततः "धेट इच्च–नुः" ( उणादि० ३ । ३४ ) धापयति पाययति हि सा वृष्टिजलं जडजङ्गमं जगत्, यद्वा "धिवि प्रीणनार्थे" ( भ्वादि० ) पूर्ववत्

धातोर्बाहुलकात्–नुः प्रत्ययः 'धिन्व्' इत्यस्य 'धि'भावो गुणश्च सति प्रत्यये। धिन्वति प्रीणयति वृष्टिजलेन जङ्गमं जगत्, धेनुः। सा च माध्यमिका वाक् स्तनयित्नुरूपा मेघपङ्क्तिः। तस्या मन्त्रः "उपह्वये सुदुघां....।"

मन्त्रार्थः—

अहमेतां सुदुघां सुदोहनां सुष्ठु दोहनीयां सुदोग्ध्रीं वा धेनुं माध्यमिकां स्तनयित्नुयुक्तां मेघपङ्क्तिमुपह्वये–होमयज्ञेन वृष्टिकरणनियमेनामन्त्रये सम्पादयामि, एतां सुहस्तः कल्याणहस्तो गोधुक्–गोर्दोग्धा मध्यस्थान इन्द्रो विद्युद् देवो दोहद् दोग्धि सविता सूर्यश्चेद्धो दीप्यमानो घर्मस्तप्तः श्रेष्ठं शुक्लं सवमवसरं प्रति साविषत् सौतु सम्पादयतु पृथिवीस्थजलाशयेभ्यः, इति प्रबोधं प्रार्थये।

धेनुर्वागेषा माध्यमिका, घर्मधुग्–इति याज्ञिका मन्यन्ते।

निरुक्तयः—'साविषत्' इति लेट्प्रयोगः "षु प्रसवैश्वर्ययोः" (भ्वादि०) सिप्, स च "सिब्बहुलं णिद्वक्तव्यः" (वा०)।

अदेवतात्वे प्रयोगः—"धेनुर्न वत्सं पयसाभि वज्रिणमिन्द्रमिन्दवो मधुमन्त ऊर्मयः।" (ऋ० ९। ८६। २) पवमानसोमदेवत्ये। "मा निररं शुक्रदुघस्य धेनोराङ्गिरसान् ब्रह्मणा विप्र जिन्व।" (ऋ० ६। ३५। ५) इन्द्रदेवत्ये॥

अघ्न्या॥ ३१॥

अघ्न्याऽहन्तव्या भवति। अघघ्नीति वा॥ ४३॥

तस्या एषा भवति—

"सुयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती॥" (ऋ० १। १६४। ४०)

सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती॥ ४४॥

भा०—'अघ्न्या' इति मध्यस्थाना स्त्रीलिङ्गा देवता। अघ्न्या–अहन्तव्या नञ्पूर्वकात् "हन हिंसागत्योः" (अदादि०) ततः "अघ्न्यादयश्च" (उणा० ४। ११२) इत्यनेन कर्मणि यक्प्रत्ययान्तो निपात्यते, उपधालोपो हकारस्य घकारश्च निपातने स्तः। यद्वा 'अघघ्नी' अघं दुर्भिक्षादि हन्तीति–अघ्न्या, अघपूर्वाद्–हनधातोः पूर्ववत् कर्तरि यक्प्रत्ययान्तो निपात्यते 'अघ' शब्दस्य 'घ' इत्यस्य लोपो निपातनाद् विज्ञेयः, अन्यत् पूर्ववत्।

मन्त्रार्थः—

हे अध्न्ये ! माध्यमिके देवते ! स्तनयित्नुरूपे ! त्वं सुयवसं शोभनं यवसं घासमत्सीति सुयवसात्–सुयवसादिनी शोभनघासस्यात्त्री भक्षिका भगवती धनवती रश्म्युपहृतं सूक्ष्ममुदकं तव यवसं घासस्तेन तद्वती धनवती भव, अथानन्तरं वयं भगवन्तो धनधान्यवन्तो वृष्ट्युदकप्राप्त्या भवेम । तस्मात् त्वं विश्वदानीं सर्वदा यथाकालं तृणं तर्दनीयं मेघमद्धि छिन्नभिन्नं कुरु शुद्धमुदकं पिब तदेव मेघरूपम्, आचरन्ती तदन्तरे विचरणं कुर्वती सती ।

निरुक्तयः–'सुयवसात्' 'सुयवस' उपपदात् "अद भक्षणे" ( अदादि० ) ततः क्विप् "क्विप् च" ( अष्टा० ३ । २ । ७६ ) 'यवसम्' "यु मिश्रणेऽमिश्रणे च" ( अदादि० ) "वहियुभ्यां णित्–असच्" ( उणा० ३ । ११९ ) इत्यनेन 'असच्' प्रत्ययः संज्ञापूर्वकत्वात्–वृद्धिर्न । 'विश्वदानीम्' विश्वशब्दात् सर्व-पर्यायाद् दानीम् प्रत्ययश्छान्दसः ॥

तस्या एषापरा भवति—

"हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसा-भ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥" ( ऋ० १ । १६४ । २७ )

इति सा निगदव्याख्याता ॥

भा०—तस्या अघ्न्याया माध्यमिकाया देवतायाः खल्वेषाऽप्यपरास्ति "हिङ्कृण्वती...." तस्या वसुपत्नीत्वात् तथाऽश्विभ्यां दोहनान्मध्यस्थानत्वं पुष्टं भवति । अतः स्पष्टार्थत्वादुक्तं यास्केन सा निगदव्याख्याता । तथापि कर्तव्य-दृष्ट्या खल्वस्माभिर्व्याख्यायते ।

अर्थः—

अघ्न्या–इयं वसुपत्नी वसूनां रश्मीनां पत्नी "वसवो रश्मयः" ( निघं० १ । ५ ) वसूनां रश्मीनां वत्समिच्छन्ती रश्मिभिराकृष्य यदुदकं सूक्ष्मं समर्प्यते हिङ्कृण्वती–'हिङ्' इत्येवमव्यक्तं स्नेहमयं शब्दं कुर्वती तं वत्समुदकं मनसाऽ-भ्यगात्–अभिप्राप्ता । पुनरश्विभ्यां द्यावापृथिवीभ्यामाकाशस्थपृथिवीस्थप्रजाय-मानाभ्यां प्रजाभ्यां तयोरर्थे सा दुग्धां दोग्धु दोग्धि पयः–उदकम् । सा महते सौभगायास्माकं सौभाग्यसम्पादनाय वर्धताम् । "अश्विनौ द्यावापृथिव्यौ" ( निरु० १२ । १ ) "इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनौ...." ( शत० ४ । १ । ५ । १६ ) ॥

निरुक्त्य:—'दुहाम्' "लोपस्त आत्मनेपदेषु" ( अष्टा० ७ । १ । ४१ ) इत्यनेन दुहधातोः परस्य 'ताम्' इति लोटि प्रथमैकवचनस्य प्रत्ययस्य तकार-लोपः । 'दुग्धाम्' इति प्राप्ते 'दुहामश्विभ्यां पयो अघ्न्येयम्' उदाहरणं काशिकायाम् ।

अदेवतात्वे प्रयोगाः—"यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः ।" ( ऋ० ७ । ८६ । ८ ) आश्विने सूक्ते नामधेयेन । "उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः ।" ( ऋ० ९ । ९३ । ३ ) पवमान-सोमदेवत्ये ॥

पथ्या ॥ ३२ ॥ स्वस्तिः ॥ ३३ ॥

पथ्या स्वस्तिः—पन्था अन्तरिक्षं तन्निवासात् ॥ ४५ ॥

तस्या एषा भवति—

"स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाम-मेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥" ( ऋ० १० । ६३ । १६ )

स्वस्तिरेव हि प्रपथे श्रेष्ठा रेक्णस्वती धनवत्यभ्येति या वसूनि वननीयानि सा नोऽमा गृहे सा निरमणे * सा निर्गमने पातु स्वावेशा भवतु देवी गोप्त्री देवान् गोपाय-त्विति देवा एनां गोपायन्त्विति वा ॥

भा०—'पथ्या स्वस्तिः' इति मध्यस्थाना स्त्रीलिङ्गा देवता । पथ्या—पन्था निवासोऽस्याः—इति "सोऽस्य निवासः" ( अष्टा० ४ । ३ । ८९ ) पथिन्शब्दाद्-यत् प्रत्ययश्छान्दसो भवार्थकः "भवे छन्दसि" ( अष्टा० ४ । ४ । ११० ) इत्यनेन यत् प्रत्ययः, तथाकृत्वा हि "यतोऽनावः" ( अष्टा० ६ । १ । २१३ ) इत्यनेन—आद्युदात्तः । "नस्तद्धिते" ( अष्टा० ६ । ४ । १४४ ) इति टिलोपः । एवं पथि निवासात् पथ्या, पन्थाश्चात्र—अन्तरिक्षम् । अन्तरिक्षं निवासोऽस्या इति यस्मात् पथ्या सा च 'स्वस्तिः' स्वल्पकनिर्वचनः शब्दः "अस्तिरभिपूजितः स्वस्तिः" ( निरु० अ० ३ । ख० २१ ) सुपूर्वात्—असधातोः "सावसेक्तिः"

* होशियारपुरस्थे वि०: वैदिकशोधसंस्थाने १७५ इति संख्याकायां हस्त-प्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) 'निरमणे' इत्येव पाठः, न तु 'निररणे' इति । स्कन्दभाष्ये दत्तः ॥

( उणा० ४ । १८१ ) उणादयो बहुलमिति बाहुलकाद् यद्वा सूत्रे 'असेः' इति विधानसामर्थ्यात्–अस्तेर्भूर्न भवति ।

वक्तव्यम्—

'पथ्या' इति पदं निघण्टौ पृथग्देवतापदत्वेन परिगणितं निरुक्ते यास्केन 'स्वस्तिः' इत्यस्य विशेषणं पदं मत्वगुंदाहृता–इति चिन्त्यं खलु । यास्कमते यत्र क्वचित् पथ्या पदं तत् 'स्वस्तिः' इति देवतापदस्य विशेषणीभूतं पृथक् सदपि, यत्र च क्वचित् 'स्वस्तिः' इति पदमन्यया देवतया सम्बद्धं न भवेत् तत्र मन्त्रे स्वस्तिः' इति केवला प्रयुक्ता भवेद् देवतात्वेन सा स्वस्तिः पथ्या विज्ञेया । अत्रोदाहरणानि कानिचिद् दीयन्तेऽस्माभिः । स्वस्तिविषये तावत्–अस्मिन्नेव प्रस्तुते सूक्ते "द्यौ····ताँ आ॑दि॒त्याँ अनु॑मदा स्व॒स्तये॑" ( ३ ) "····आ॑दि॒त्याँ अदि॑तिं स्व॒स्तये॑" ( ५ ) "····त आ॑दि॒त्या अभ॑यं शर्म॑ यच्छत सु॒गा नः॑ कर्त सु॒पथा स्व॒स्तये॑" ( ७ ) "····दे॑वासः पिपृ॒ता स्व॒स्तये॑" ( ८ ) "भरे॒ष्विन्द्रं सु॒हवं॑ हवामहें॒ऽहोमुचं॑ सु॒कृतं॒ दैव्यं॑ जन॑म् । अ॒ग्निं मि॒त्रं वरु॑णं सा॒तये॒ भगं॒ द्यावा॑पृथि॒वी म॒रुतः॑ स्व॒स्तये॑ ॥" ( ९ ) "प्रा॒त॒र्यावा॑णं रथ॑मिन्द्र सान॒सिमरि॑ष्यन्तमा रु॑हेमा स्व॒स्तये॑ ।" ( १४ ) इत्यत्रपर्यन्तानां मन्त्राणां देवता द्यौरादित्यमरुग्मित्र-वरुणेन्द्रादयः सन्ति 'स्वस्तये' इति चतुर्थ्यन्तं पदं देवतात्वेन न वर्ण्यतेऽन्यदेवता-प्रसङ्गे विनियुक्तत्वात् । परन्तु–अन्तिमस्य–ऋग्द्वयस्य 'स्वस्तिः' पदं स्वतन्त्रं पठ्यते, पञ्चदशे मन्त्रे तु "····स्व॒स्ति रा॒ये म॑रुतो दधातन ।" ( १५ ) अत्र स्वस्तिर्याच्यते । याचनीयत्वात् स्वस्तिर्देवता, सा च मरुतामधीना प्रार्थ्यते । अन्तिमे षोडशे मन्त्रे सर्वथा स्वतन्त्रा देवता स्वस्तिः, यश्च मन्त्रो यास्केनोदाहृतो यत्र स्वस्त्याः स्वरूपं वर्ण्यते प्रार्थ्यते सैव । "स्व॒स्तिरिद्धि प्रप॑थे॒ श्रेष्ठा····" (१६) ऋग्वेदीयसर्वानुक्रमण्यामुक्तं च "स्वतितस्त्रिष्टुब्वा सह सोत्तरया पथ्यास्वस्ति-देवत्या" ( ऋग्वेदीया सर्वानुक्रमणी अ० १० । ६३ ) यास्कमते केवलापि देवतात्वेन स्वस्तिः पथ्या ह्यस्ति । 'पथ्या' पदं चतुःषु वेदेषु शाखासंहितासु च विशेषणीभूतमुपलभ्यते, स्वस्तिपदस्य विशेषणं तु बहुधाऽन्यपदस्य क्वाचित्कं विशेषणम्, तद्यथाऽन्यस्य "व्युषा आ॑वः प॒थ्या॒३ जना॑नां पञ्च॑ क्षि॒तीर्मानु॑षीर्बो॒धय॑न्ती ।" ( ऋ० ७ । ७९ । १ ) उषोदेवत्ये सूक्ते–उषोदेवताया विशेषणम् । अथ स्वस्तिः, इत्यस्य विशेषणीभूतं पथ्यापदम् "पुन॑र्नो॒ असुं॑ पृथि॒वी द॑दातु पुन॒र्द्यौर्दे॒वी पुन॑र॒न्तरि॑क्षम् । पुन॑र्नः॒ सोम॑स्त॒न्वं॑ ददातु॒ पुनः॑ पू॒षा प॒थ्या॒३ या स्व॒स्तिः ॥" ( ऋ० १० । ५९ । ७ ) पृथिवीप्रभृतिपूषान्तदेवत्ये मन्त्रे पूषा पथ्यां ददातु या स्वस्तिस्तां स्वस्तिं पथ्यां ददातु, इति स्वस्तिपदस्य विशेषणम् ।

शाखासंहितासु तद्यथा—"पथ्यां स्वस्तिमयजन्...पथ्यां स्वस्तिं यजति प्राचीमेव तया दिशं प्रजानन्ति पथ्यां स्वस्तिमिष्ट्वा" (तै० सं० ६ । १ । ५ । १) "पथ्यां स्वस्तिं प्रथमां प्रायणीये यजत्यथाग्निमथ सोममथ सवितारमथादितिं स्वर्गं लोकं प्रायणीयेनाभिप्रैति....पथ्यां स्वस्तिं यजति स्वस्त्ययनमेव तत्कुरुतेऽस्य लोकस्य समष्ट्यै ता वै पञ्च देवता यजति ताभिर्यत् किञ्च पञ्चविधमधिदैवतमध्यात्मं तत्सर्वमाप्नोति ।" (कौ० शाङ्खायन ब्रा० ७ । ८) अत्र देवतानां पञ्च संख्या दर्शिता—'पथ्या स्वस्तिः, अग्निः, सोमः, सविता, अदितिः' पथ्यास्वस्तिः खल्वेकैव देवता दर्शिता तस्मात् पथ्या विशेषणम् । प्रतिभासते च क्वचित् पथ्यायाः स्वतन्त्रं देवतात्वम्, तद्यथा "स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति" (ऋ० ५ । ५१ । १४) अत्र 'पथ्ये' सम्बोधनपदं सम्बोध्यते हि पथ्या सा देवता स्यात् । अथ च "वाग्वायोः पत्नी, पथ्या पूष्णः, पृथिव्यग्नेः...." (मैत्रा० सं० १ । ९ । १) अत्र पत्नीप्रसङ्गे पूष्णः पत्नी पथ्या—इत्युक्तम् । स्वतन्त्रं पदं पत्नीत्वे दर्शितं सा स्वतन्त्रा स्यात् । "स्वस्तिं यजति यज्ञस्य स्वस्त्यै, पथ्यां यजति वाग्वै पथ्या" (मैत्रा० सं० ३।७।१) अत्र पथ्यां यजति यजनक्रियायां पथ्या पृथक् पठिता । एवमेषु स्थानेषु साक्षात् पाठदृष्ट्या 'पथ्या' स्वतन्त्रं देवतापदं निघण्टौ परिगणितं भवतु । अन्तर्दृष्ट्याऽत्र स्थलेष्वपि पथ्या स्वस्तिरस्ति । 'पथ्ये रेवति' (ऋ० ५ । ५१ । १४) स्थले 'पथ्ये स्वस्ते रेवति' लक्ष्यते 'रेवति' यथा यास्कोदाहृते मन्त्रे 'स्वस्ति....रेक्णस्वती' उक्ता, रेक्णस्वती—धनवती, रेवति धनवति । 'पूष्णः पत्नी पथ्या' साऽपि स्वस्तिरन्तर्दृष्ट्या, उक्तं हि पूर्वम् "ददातु पुनः पथा पथ्यां या स्वस्तिः" (ऋ० १० । ५९ । ७) या स्वस्तिस्तां पथ्यां ददातु पूष्णः सम्बन्धस्तया पथ्यया कया या स्वस्तिः । अथ 'पथ्यां यजति वाग्वै पथ्या' इत्युक्तं तत्राप्यन्तर्हितं स्वस्तिः पथ्या वाक् तत्र स्पष्टीकरणायोक्तं स्यात् स्वस्तिं यजति कां स्वस्तिं पथ्यां स्वस्तिं यजतीत्यर्थः, सा च वाक्, स्वस्तिः पथ्या हि वाक्, तद्यथा "पथ्यां स्वस्तिं यजति वाग्वै पथ्या स्ववतिः" (काठक सं० २३ । ९) "अथैभ्यः पथ्या स्वस्तिः प्रारोचत । तामयजन् वाग्वै पथ्या स्वस्तिः" (शत० ३ । २ । ३ । ८) । अथ निष्कर्षः—केवलं पथ्या पदं भवतु देवतापदं स्वस्तिपदगर्भितम् । यत् 'स्वस्तिः' इति देवता सा पथ्या सतीत्यपि विज्ञेयं न केवला पथ्या न च केवला स्वस्तिर्देवता । निघण्टौ परिगणिते पथ्या च स्वस्तिश्चोभेऽपि देवते, यत्र पथ्या देवता सा स्वस्तिः पथ्या विज्ञेया यत्र स्वस्तिर्देवता सा पथ्या विज्ञेया, अतो द्वेऽपि देवते । यस्मिन् मन्त्रे द्वेऽपि देवतात्वेन स्यातां न तादृशो मन्त्रोऽस्ति, "पथ्ये रेवति' (ऋ० ५ । ५१ । १४) इति मन्त्रे पथ्या

एवं देवतात्वेन स्वस्तिपदगर्भितं बहुदेवत्ये सूक्ते पठितं तस्माद् यास्केन नोदाहृतः स मन्त्रः। केवलदेवतात्वमभिलक्ष्य "स्वस्तिरिद्धि प्रपथे……" इति मन्त्र उदाहृतः। अस्तु।

मन्त्रार्थः—

या स्वस्तिः पथ्या स्वस्तिर्माध्यामिका वाक् (e. g. Ionisation current Circuit in Electrolytes) स्तनयित्नुलक्षणा मेघयुक्ता हि खलु प्रपथे प्रकृष्टे पथि—अन्तरिक्षे स्थिता श्रेष्ठा धनवती धनधान्यरूपोदकवती सती वामं वननीयानि वसूनि—अभ्येति—अभिगमयति प्रापयति वृष्ट्युदकं वर्षित्वा, अन्तर्गतणिजर्थः, सा नोऽस्माकम्—अमा गृहे "अमा गृहनाम" ( निघं० ३ । ४ ) सो सा—उ सैव, अरणे अ—रणे निरमणे निर्गमने गृहागाराद् बहिर्गमनं यस्मिन् स्थाने भवति तस्मिन्नरण्ये नोऽस्मान् पातु गोप्त्री रक्षिका देवी भवतु—देवान् दिव्य-गुणान् पदार्थान् गोपायतु रक्षतु प्रवर्धयतु यद्वा देवा गोपा यस्यास्तथाभूता सती देवै रश्मिभिर्मरुद्भिश्च गोपिता भवतु देवा एनां गोपायन्तु रक्षन्तु ॥

निरुक्तयः—'अरणे' निरमणे दिर्गमने, नञ्पूर्वात् रमधातोः—ल्युट् बाहुलकादधिकरणे, अरणः। 'देवगोपा' देवी च गोपा च कर्मधारयः समासः, देवगोपा। यद्वा देवानां गोपा 'रक्षिका' देवगोपा षष्ठीसमासे, अथवा देवनां गोपनीया रक्षणीया 'गुपू रक्षणे' ततोऽच् कर्मणि।

अदेवतात्वे प्रयोगाः—"वीहि स्वस्तिं सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥" अग्निदेवत्ये।

उषाः ॥ ३४ ॥

उषा व्याख्याता ॥ ४६ ॥

तस्या एषा भवति—

"अपोषा अनसः सरत् सम्पिष्टादह बिभ्युषी।
नि यत्सीं शिश्नथद् वृषा ॥" ( ऋ० ४ । ३० । १० )

अपासरदुषा अनसः सम्पिष्टान्मेघाद् बिभ्युषी। अनो वायुरनितेरपि वोपमार्थे स्यादनस इव शकटादिवानः शकटमानद्धमस्मिंश्चीवरमनितेर्वा स्याज्जीवनकर्मणा उप-जीवन्त्येनन्मेघोऽप्यन एतस्मादेव यन्निरशिश्नथद् वृषा वर्षिता मध्यमः ॥ ४७ ॥

भा०—'उषाः' इति मध्यस्थाना स्त्रीलिङ्गा देवता। उषाः—व्याख्याता "उषाः कस्मादुच्छतीति सत्याः" ( निरु० अ० २ ख० १८ )।

मन्त्रार्थः—

यदा हि वृषा वर्षिता वृष्टेः कर्ता मध्यमो मेघं सीं सर्वतो निशिश्नथत्—निरशिश्नथत्—निरहन् निहन्ति "श्नथति वधकर्मा" ( निघं० २। १९ ) तदाऽनसस्तस्य वायोः सम्पिष्टात् सम्पेषणात् प्रहारात्—अनो वायुः—अनिति प्राणिति यतः, अत्र क्तप्रत्ययो भावे "नपुंसके भावे क्तः" ( अष्टा० ३। ३। ११४ ) उषाः—माध्यमिका विद्युद्दीप्तिः (e. g. Ionisalion currents in atmosphere) बिभ्युषी भीता सती भयं कुर्वती मेघादपासरत्—अपागच्छत्—अपगता पलायिता। यद्वा—अनः शकटः, अनसः शकटादिव मेघादपासरद् यदा वृषा वर्षिता वृष्टेः कर्ता मध्यमो देवो वायुर्मेघं शिश्नथत्—निरहन् निहन्ति तदा सम्पिष्टात् सञ्चूर्णिताच्छकटादिव मेघादुषा विद्युद्दीप्तिरपासरत्—निरगच्छत्—निर्गच्छति॥

निरुक्तयः—'अनः' अनस् वायुपक्षे "अन प्राणने" ( भ्वादि० ) ततः "सर्वधातुभ्योऽसुन्" ( उणा० ४। १८९ ) अनस्—अनो वायुः। शकटपक्षे—आङ्पूर्वात् "णह बन्धने" ( दिवादि० ) ततोऽपि 'असुन्' प्रत्ययो डिद्धर्मः, उपसर्गस्य ह्रस्वत्वं बाहुलकात्। अनस्—अनः शकटम्—आनद्धं चीवरं वस्त्रमस्मिन्निति, यद्वा 'अन प्राणने' जीवनार्थाद् यतो जना एतदाश्रित्योपजीवन्ति, मेघोऽस्मादेव—अनधातोः, यत उपजीवन्ति हि जना मेघमाश्रित्य। 'शिश्नथत्' "श्नथति वधकर्मा" (निघं० २।१९) लुङि—अडभावो धातोरभ्यासश्च छान्दसः॥

तस्या एषापरा भवति—

"ए॒तद॑स्या॒ अनः॑ शये॒ सुस॑म्पिष्टं॒ विपा॒श्या।
स॒सार॒ सीं प॑रा॒वतः॥" ( ऋ० ४। ३०। ११ )

एतदस्या अन आशेते सुसम्पिष्टमितरदिव विपाशि विमुक्तपाशि ससारोषाः परावतः प्रेरितवतः पारागताद्वा॥

मन्त्रार्थः—

भा०—पुनरस्याः खलु माध्यमिकाया उषसो विद्युद्दीप्तेरेतत् सञ्चूर्णितमनः शकटरूपो मेघो विपाशि विगतपाश आन्तरिक्षबन्धनान्मुक्तः—आशेते भूम्यां पृथिव्यां सर्वत्र प्रसृतच्छिन्नभिन्नः शेते मृत इवावतिष्ठते सा चोषा माध्यमिका विद्युद्दीप्तिः सीं खलु परावतः प्रेरितवतः—प्रेरितस्ताडितः प्रहारो यस्मिन् तद्वतः—

आयातवतः शकटाद्वा परागताद् दूरं पतितात्—शकटरूपात् खलु मेघात् ससार—अपससार पलायिता ॥

निरुक्तयः—'परावतः'—प्रेरितवतः, परा—प्रेरितः 'परा' उपसर्गो धात्वर्थे, ततो मतुबर्थीयो वत् । यद्वा 'परा' उपसर्गात् "उपसर्गाच्छन्दसि धात्वर्थे वतिः" ( अष्टा० ५ । १ । ११७ ) परागताद् दूरदेशात्—अन्तरिक्षान्मध्यस्थानाद् दूरं पृथिवी पृथिव्या दूरमन्तरिक्षं मध्यस्थानं दूरमपगता ॥

अदेवतात्वे प्रयोगाः—"स पवस्व विचर्षण आ मही रोदसी पृण । उषाः सूर्यो न रश्मिभिः ॥" ( ऋ० ९ । ४२ । ५ ) पवमानसोमदेवत्ये नामधेयेन । "देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः ।" ( ऋ० १ । ५६ । ४ ) इन्द्रदेवत्ये नामधेयेन । "प्रवतां त उषसां वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।" ( ऋ० ३ । १४ । ३ ) अग्निदेवत्ये ॥

इळा ॥ ३५ ॥

इळा व्याख्याता ॥ ४८ ॥

तस्या एषा भवति—

"अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥"

( ऋ० ५ । ४१ । १९, २० )

अभिगृणातु न इळा यूथस्य माता सर्वस्य माताऽस्मदभिनदीभिरुर्वशी वा गृणातूर्वशी वा बृहद्दिवा महद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्यायोरयनस्य मनुष्यस्य ज्योतिषो वोदकस्य वा सेवतां नोऽन्नस्य पुष्टेः ॥

भा०—'इळा इति मध्यस्थाना स्त्रीलिङ्गा देवता । इळा व्याख्याता "इळ ईट्टेः स्तुतिकर्मणः" ( निरु० अ० ८ ख० ७ ) ।

मन्त्रार्थः—

इडा माध्यमिका देवता (Wave length or Frequency of speech transmission by Wireless) यूथस्य माता मेघयूथस्य निर्मात्री सा खल्वंशीव बहुव्यापिनी ; इवार्थे वा "वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये"

( अव्ययार्थनिबन्धनम्, बड़ौदा ) नदीभिर्नदनाभिरद्भिर्नोऽस्मभ्यं स्मत्–प्रशस्त-मभिगृणातु शब्दयतु स्तनयतु । पुनरुर्वशीव बृहद्दिवा महद्दिवा महद्दीप्तिका सती गृणाना स्तनयन्ती शब्दयन्ती–अभ्यूर्ण्वाना प्रभृथस्य प्रभृतस्य धारितस्यायोरयन-स्य गमनस्य यद्वा मनुष्यस्य यद्वा ज्योतिषोऽथवोदकस्याभिप्रच्छादयित्री सती, ऊर्जव्यस्यान्नस्य पुष्टेः–पुष्टये प्रापये नोऽस्मान् सेवताम् ॥

निरुक्तः—'प्रभृथस्य' प्रपूर्वात् "भृञ् धारणपोषणयोः" ( जुहोत्यादि० ) ततः "भवे भृञः क्थन्" (उणा० २।३) उपसर्गबाहुल्यात् क्थन् प्रत्ययश्छान्दसः।

अदेवतात्वे प्रयोगाः—"बृहस्पतिं यः सुभृतं बि भर्ति"...। स इत् क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।" ( ऋ० ४ । ५० । ७–८) बृहस्पतिदेवत्ये नामधेयेन । "उपस्तोम इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।" ( ऋ० ५ । ४ । ५ ) अग्निदेवत्ये ॥

रोदसी ॥ ३६ ॥

रोदसी रुद्रस्य पत्नी ॥ ४९ ॥

तस्या एषा भवति—

"रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।

आ यस्मिन् तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥" ( ऋ० ५ । ५६ । ८ )

रथं क्षिप्रं मारुतं मेघं वयं श्रवणीयमाह्वयामह आ यस्मिन् तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ॥ ५० ॥

भा०—'रोदसी' इति मध्यस्थाना स्त्रीलिङ्गा देवता । रोदसी रुद्रस्य पत्नी 'रुद्र' शब्दाद् यास्कस्य विधानसामर्थ्यात् पुंयोगवत्–ङीष् प्रत्ययः । सा रोदसी रुद्रस्य मेघानां ताडयितुर्वायोः शक्तिर्विभूतिर्वा ।

मन्त्रार्थः—

वयं मारुतं मरुतां स्वभूतं रथम् "तस्येदम्" ( अष्टा० ४ । ३ । १२० ) मरुद्भिरधिकृतं मेघं रथं श्रवस्युं श्रवणीयं प्रशंसनीयं यो गच्छन् आवयति शब्दं तथाभूतं रथं क्षिप्रमाह्वयामहे, यस्मिन् मेघरूपे रथे सुरमणीयान्युदकानि बिभ्रती धारयन्ती मरुद्भिः सह रोदसी मेघताडने समर्थस्य वायोः शक्तिः समन्तात् स्थिताऽस्ति । Aerial & earthwire as receiving & broad Casting units for Tele-Vision & Telecommunication.

निरुक्तयः—'अवस्युः' "श्रु श्रवणे" (भ्वादि०) ततः 'अस्युच्' प्रत्ययो बाहुलकात् कर्मणि । 'सुरणानि' सुपूर्वकाद् रमधातोर्ल्युट् प्रत्ययो डिद्धर्मवान् कर्मणि छान्दसः ।

अदेवतात्वे प्रयोगः—"जोषद् यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः । आ सूर्येव विधतो रथं गात् त्वेषप्रतीका नभसो नेत्या ॥" (ऋ० १ । १६७ । ५) मरुद्देवत्ये ॥

इत्येकादशाध्यायस्य चतुर्थः पादः ।

पूर्तिङ्गतश्चैकादशोऽध्यायः ।।

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मर्श' निरुक्तभाष्ये

—

# द्वादशोऽध्यायः

## तत्र

## प्रथमः पादः

---

अथातो द्युस्थाना देवताः। तासामश्विनौ प्रथमागामिनौ भवतः।

अश्विनौ ॥ १ ॥

अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः।
अश्वैरश्विनावित्यौर्णवाभः।
तत्कावश्विनौ? द्यावापृथिव्यावित्येके।
अहोरात्रावित्येके।
सूर्याचन्द्रमसावित्येके।
राजानौ पुण्यकृतावित्यैतिहासिकाः।
तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनु तमो * भागो हि मध्यमः, ज्योतिर्भाग आदित्यः ॥ १ ॥

भा०—अथेदानीमित आरभ्य द्युस्थानाः-देवताः-अनुक्रमिष्यामः। तासां देवतानां क्रमानुरोधेन-पाठक्रमानुरोधेन स्थानरोहणक्रमानुरोधेन च प्रथमागामिनौ-अश्विनौ स्तः। मध्यस्थानमांशिकत्वेन स्पृशन्तौ खल्वश्विनौ द्युस्थाने विराजेते। अश्विनौ कस्मात्? उच्यते-सर्वं जगत् खल्वेतौ विशेषेणाश्नुवाते-व्याप्नुतः-तस्मादेतावश्विनौ "अशूङ् व्याप्तौ" (स्वादि०) बाहुलकात् 'विनिः' औणादिकः। यद्वा "अन्येभ्योऽपि दृश्यन्ते" (अष्टा० ३।२।७५) अपि शब्दः सर्वोपाधिव्यभिचारार्थः-इति कथनाद् विनिः प्रत्ययः, अश्विन् द्विवचने-अश्विनौ। तत्कथं सर्वं व्यश्नुवाते? अग्निषोमात्मकं सर्वं जगत्-तावेतौ चाग्नि-

---

* 'अनुत्तमः' (दुर्गाभाष्यस्य मूलपाठे) अन्यत्र बहुत्र 'अनुतमः' इति पाठः। यथा बडौदास्थप्राच्यविद्यामन्दिरस्य ४५४० इति संख्याकायां हस्तप्रतिकायाम्, होशियारपुरस्थस्य वि० वैदिकशोधसंस्थानस्य १७५ इति संख्याकायां हस्तप्रतिकायां च।

सोमधर्मिणौ यथो रसेन खल्वेको ज्योतिषान्यः—इति वैदिकानां नैरुक्तानां वा पक्षः । अश्वैरश्विनौ—इति मन्यते किलौर्णवाभः । अश्वाः—अश्वसदृशाः शक्तयः पशुरूपा अश्वा वा सम्त्यनयोस्तस्मादश्विनौ, अश्वशब्दान्मतुबर्थे—इनिः "अत इनिठनौ" ( अष्टा० ५ । २ । ११५ ) एवं धातुतो नामतश्च यद्वा कृधोगात् तद्धितयोगाच्च साध्यावश्विनौ । पूर्वा व्युत्पत्तिर्नैरुक्तानां मुख्या, द्वितीया व्युत्पत्तिरौर्णवाभस्य । प्रथमं मुख्ये नैरुक्तपक्षे कौ तावश्विनावित्युच्यते यद् द्यावापृथिव्यौ स्तोऽश्विनौ, इत्येके नैरुक्ता यज्ञप्रसङ्गे मन्यन्ते "तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव ते द्यावापृथिव्यौ" (शत० ७ । १ । ५ । १६) । द्यौर्ज्योतिषा व्यश्नुते व्याप्नोति पृथिवी किलौषधिरसेन [ अन्नरसेन ] । अहोरात्रौ स्तोऽश्विनौ, इत्येके नैरुक्ता लोकव्यवहारे मन्यन्ते । तत्र—अहर्ज्योतिषा व्यश्नुते व्याप्नोति रात्री रसेनावश्यायेन । सूर्याचन्द्रमसौ स्तोऽश्विनौ, इत्येके नैरुक्ता ज्योतिर्विद्यायां ज्यौतिषे क्षेत्रे मन्यन्ते । तत्र सूर्यो ज्योतिषा व्यश्नुते चन्द्रमा रसेन ज्योत्स्नारूपेण । राजानौ पुण्यकृतौ स्तोऽश्विनौ—इत्यैतिहासिका मन्यन्ते । तयोरश्ववत्त्वात् पशुरूपाश्वादेवाश्विनाविति ते मन्येरन्, तौ तु मृतौ भवेतां परन्तु यज्ञविधिविनियोगेषु विद्याकलादिप्रसङ्गेषु खल्वप्याहूयेतेऽश्विनौ, मन्त्रेषु कलाविज्ञानप्रकरणेषु तयोरुपयोगः प्रदर्श्यते तस्मात् तावैतिहासिकौ न शक्येते नियोक्तौ, न तौ वैदिकौ । अथ यौ वैदिकावश्विनौ नैरुक्तैर्मन्येते । तयोः कालः कोऽस्ति यज्ञादिप्रसङ्गे खलूपयोक्तुम् ? उच्यते—तयोः कालोऽस्ति—अर्धाया रात्रेः पश्चात् प्रकाशीभावस्य विष्टम्भमनु—प्रकाशीभावस्य विष्टब्धत्वमनु स्थितत्वमनु स्थिरत्वमनु यावत् सूर्यस्य प्रकाशः स्थिरो भवेत् स तयोः कालः । वक्ष्यति ह्याचार्योऽग्रे "तयोः कालः सूर्योदयपर्यन्तः" ( निरु० अ० १२ । खं० ५ ) तत्र तथाविधे काले 'अनुतमो भागो हि' यो भागस्तमोऽनु—तमः प्रति—अन्धकारं प्रति—उक्तस्य कालस्य तत्कालस्थः स मध्यमो मध्यस्थानाभिमुखीभूतो मध्यस्थानसंस्पर्शी वाऽश्वी रसेनान्तरिक्षेण सौम्येन युक्तो भवति । यश्च ज्योतिर्भागः—ज्योतिषि भागो ज्योतिर्भागः—ज्योतिषि प्रकाशे यो भागस्तस्योक्तकालस्य तत्कालस्थोऽर्धरात्रकालस्य प्रकाशमभिमुखीभूतो भागस्ताद्धश्यः स आदित्यः—अदितिर्द्यौस्तत्सम्बद्धः, यद्वा—आदित्यः सूर्यस्तेन युक्तः सूर्यस्पर्शी—उत्तमोऽश्वी—आदित्येन युक्तः कालः "लुबविशेषे" ( अष्टा० ४।२।४ ) इति तद्धितप्रत्ययस्य लुप् । आदित्येन युक्तः काल आदित्यः । द्वितीयोऽश्वी सूर्येण ज्योतिषा, ज्योतिषाऽन्य इत्युक्तत्वात् ॥

तयोरेषा भवति—

"वसातिषु स्म चरथोऽसितौ पेत्वाविव ।

कुदेदम॒श्विना युवम॒भि दे॒वाँ अ॑गच्छतम् ॥"

इति सा निगदव्याख्याता * ।

मन्त्रार्थः—

भा०—हे अश्विनौ युवां वसातिषु रात्रिषु पेत्वौ—असितौ—अमृतस्य जलस्य पाययितारौ कृष्णौ मेघाविव चरथः, युवामिदं यजनस्थानं देवान् कदाऽगच्छतम्—गच्छथः प्राप्तौ भवथः । इति तयोः कालस्य पोषणाय प्रमाणीकृता खल्वृगेषा ।

निरुक्तयः—'वसातिः'—रात्रिः, वसन्ति प्राणिनो यस्यां सा रात्रिः "वस निवासे" ( भ्वादि० ) ततः "वहिवस्यर्तिभ्यश्चित्—अतिः" ( उणा० ४ । ६० ) उणादयो बहुलमिति 'अति'स्थाने 'आतिः' प्रत्ययः, वसातिः ।

तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोः ।
असंस्तवेनैषोऽर्द्धर्चो भवति—
वासात्योऽन्य उच्यत उषः पुत्रस्तवान्य † इति ॥ २ ॥

भा०—तयोरश्विनोः समानकालयोः, यथा चोक्तं पूर्वम् "ऊर्ध्वमर्धरात्रात्……" तथा समानकर्मणोः, समानं कर्माप्यनयोरुक्तमन्यत्र बहुषु मन्त्रेषु, तद्यथा "तुग्रो ह भु॒ज्युम॑श्विनोदमे॒घे र॒यिं न कश्चिन्ममृ॒वाँ अवा॑हाः । तमूहथुर्नौ॒भिरा॑त्म॒न्वती॑भिरन्तरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥" ( ऋ० १ । ११६ । ३ ) इति समुद्रे निमज्जन्तं भुज्युं नौभिरुद्वहतः, इति समानं कर्म । "याभि॒ः शची॑भिर्वृषणा परावृ॒जं प्रान्धं श्रो॒णं चक्ष॑स॒ एत॑वे कृ॒थः ।" ( ऋ० १ । ११२ । ८ ) अन्धाय नेत्रहीनाय दृष्टिप्रदानं कर्म समानम् । "अश्विना मधुषुत्त॑मो यु॒वाकु॒ः सोम॒स्तं पा॑तमा ग॑तं दुरो॒णे । रथो॑ ह वां॒ भूरि॒ वर्प॒ः करि॑क्रत् सु॒ताव॑तो निष्कृ॒तमाग॑मिष्ठः ॥" ( ऋ० ३ । ५८ । ९ ) अत्र संस्तवः समानस्तवः प्रस्तावः समानस्तुतिर्वा सोमपानस्य वर्त्तते । तथा यजमानस्य गृहे तयोरागमनं कर्म समानम् । "आ वां श्ये॒नासो॑ अश्विना वहन्तु र॑थे युक्तास॑ आ॒शव॑ः पत॒ङ्गाः" ( ऋ० १ । ११८ । ४ ) समानो रथश्चेति समानः स्तवो बहुधा वर्त्तते । परन्तु—एष वक्ष्यमाणः खल्वर्द्धर्चोऽसंस्त-

---

* 'इति सा निगदव्याख्याता' इत्येतस्य पश्चात् 'वसातिषु स्म चरथो वंसातयो रातयो [रात्रयः] वसन्ते स्म इतरेतरा तयोः, वक्तेर्वा वहतेर्वा सितौ पेत्वाविव । अपेत्वा वृत्रहणं सुरातयोः" इति पाठोऽप्युपलभ्यते हस्तलेखे च, 'इति सा निगदव्याख्याता' कथनात् पाठोऽसम्बद्धोऽयुक्तश्च ।

† कदाचित् 'त्वम्यः' इति पाठः स्यात् ।

वेनासमानस्तवेन भिन्नत्वप्रदर्शनपरत्वेन भवति यद् युवयोर्वासात्यो रात्रेः पुत्र एकः, उषसः पुत्र एकः । तस्मादेतौ–अश्विनौ राजानौ न स्त इत्यपि सिद्धम् ।

तयोरेषाऽपरा भवति—

"इहेह जाता समवावशीतामरेपसा तन्वा नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥" ( ऋ० १ । १८१ । ४ )

इह चेह च जातौ संस्तूयेते पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमा दिवो अन्यः सुभगः पुत्र ऊह्यत आदित्यः ॥ ३ ॥

मन्त्रार्थः—

भा०—'इह–इह' इति पृथक् स्थाननिर्देशाय, अत्र मध्यस्थाने तथात्र–उत्तमे स्थाने जातौ किलाश्विनौ समवावशीताम्–संस्तूयेते, अरेपसा पापेनालिप्यमानया तन्वा नामभिश्च स्वैः, वां युवयोर्जिष्णुः सुमखस्य बलस्य सूरिः–ईरयिता प्रेरयिता शत्रून् प्रति मध्यमः, दिवः पुत्रः सुभगोऽन्य ऊह्यते स्वरश्मिभिरादित्यः ।

निरुक्तयः—'समवावशीताम्' 'सम्' उपसर्गात् "वश कान्तौ" (अदादि०) यङ्लुगन्ताल्लुङि मध्यमस्य स्थाने प्रथमद्विवचने प्रयोगः पुरुषव्यत्ययेन । सम्यक् पुनः पुनरुच्येथे जनैः संस्तूयेथे–इत्यर्थः । 'ऊहे वहधातोः कर्मणि कर्तृप्रत्ययो लकारव्यत्ययश्च लिटि पुरुषव्यत्ययश्च–उत्तमः पुरुषः प्रथमस्य स्थाने ॥

तयोरेषाऽपरा भवति—

"प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।
अस्य सोमस्य पीतये ॥" ( ऋ० १ । २२ । १ )

प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय ॥ ४ ॥

भा०—हे स्तोतः ! प्रातर्युजौ प्रातर्योगिनौ प्रातर्वेलां युञ्जानौ–अश्विनौ–इह कर्मणि जीवने वा विबोधय प्रयोजय, यतस्तौ सोमस्यैश्वर्यस्य सेवनायागच्छताम् ॥

तयोरेषाऽपरा भवति—

"प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥" ( ऋ० ५ । ७७ । २ )

प्रातर्यजध्वमश्विनौ प्रहिणुत न सायमस्ति देवेज्या अजुष्ट-मेतदध्यन्यो अस्मद् यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् वनयितृतमः ।

तयोः कालः सूर्योदयपर्यन्तस्तस्मिन्नन्या देवता ओप्यन्ते * ॥

भा०—हे यजमानाः ! यूयमश्विनौ प्रातर्यजध्वमुपयुङ्ध्वमथ तदानीमेव परमात्मानं प्रहिणुत प्रार्थयत देवयाः—देवेज्या देवेष्टिः—अश्विनावभिलक्ष्येष्टिः सायं न भवति, यतोऽनयोः कालः प्रातरेव, सायं त्वजुष्टमसेवितं भवति । अपि, अस्मदन्यः प्रातस्तावश्विनौ यो यजतेऽथ च 'वि–आवः' विशेषेण स्वीकरोति—उपास्ते परमात्मनं तस्मिन् काले पूर्वः पूर्वः स यजमानो वनीयान् वरस्य फलस्य वनयितृतमोऽतिशयेन सम्भक्ता प्राप्ता भवति ।

तयोरश्विनोः कालः सूर्योदयपर्यन्तः, तस्मिन्नेतस्मिन् कालेऽन्या देवताः खल्वप्योप्यन्ते वापं प्राप्यन्ते ह्याश्विने प्रशंसनविधौ । ताश्च देवता उषःप्रभृतयो यथाक्रमं वक्ष्यन्ते ह्यनन्तरं यास्केन । अश्विनोस्तालिका सुबोधाय दीयतेऽत्र—

—सन्धि–वेला—

| | | | |
|---|---|---|---|
| | रात्रेरवसानम्, | सन्धिः, | दिनस्यारम्भः |
| (समयः) ४ | | ५ | ६ (समयः) |
| | तमः | ५ | ज्योतिः |
| (१) मूलभूतावश्विनौ | रसप्रधानोऽश्वी सोमः | | ज्योतिष्प्रधानोऽश्वी अध्यात्मा |
| (२) तरोर्मध्यो भागः | रात्रिः (रात्र्यश्वी) | | दिवसः (अहरश्वी) |
| (३) शाखी— | पृथिवी (पृथिव्यश्वी) | | द्यौः ( द्यौरश्वी ) |
| (४) सपुष्पफलो वृक्षः— | चन्द्रमाः (चन्द्रमाः–अश्वी) | | सूर्यः (सूर्योऽश्वी) |

निरुक्तयः—'देवयाः' देवशब्दोपपदाद् यजधातोश्छान्दसो ण्विन् प्रत्ययः । 'वि–आवः' "वृञ् वरणे" ( स्वादि० ) ततः प्रत्ययस्य लुक् छान्दसः "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७३ ) लङि प्रथमपुरुषैकवचने ।

अदेवतात्वे प्रयोगाः—"कस्याश्विनाविन्द्रो अग्निः सुतस्यांशोः पिबन्ति मनसाविवेनम् ।" ( ऋ० ४ । २५ । ३ ) इन्द्रदेवत्ये नामधेयेन । "जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् । सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि

* 'उप्यन्ते' क्वचित् ।

अर्वो बृहत् ॥" ( ऋ० १ । ४४ । २ ) अग्निदेवत्ये । "यदी मन्थन्ति बाहुभिर्वि रोचतेऽश्वो न वाज्यरुषो वनेष्वा । चित्रो न यामन्नश्विनोरनिवृतः परिवृणक्त्यश्मनस्तृणा दहन् ॥" ( ऋ० ३ । २९ । ६ ) अग्निदेवत्ये नामधेयेन ॥

उषाः ॥ २ ॥

उषा वष्टेः कान्तिकर्मण उच्छतेरितरा माध्यमिका ॥ ५ ॥

तस्या एषा भवति—

"उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।

येन तोकं च तनयं च धामहे ॥" (ऋ० १।९२।१३)

उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि ॥ ६ ॥

भा०—'उषाः' इति द्युस्थाना स्त्रीलिङ्गा देवता । उषाः "वश कान्तौ" ( अदादि० ) ततः "उषः किच्च—असिः" ( उणा० ४ । २३४ ) इति धातोर्बाहुलकात् 'असिः' प्रत्ययः कित्, कित्वात् सम्प्रसारणं शकारस्य षकारश्च छान्दसः । इतरा मध्यस्थाना—उषाः "उच्छी विवासे" ( भ्वादि० ) इत्यतः, साऽत्र न लक्ष्यते । अत्र द्युस्थाना सोषाः सूर्यस्य ज्योतिः प्रकाशप्रसारिणी शक्तिः वा ।

मन्त्रार्थः—

हे उषः ! द्युस्थाने सूर्यस्य प्रकाशशक्ते ! (Ultra Violet Rays) कामयितव्ये ! कामस्य पुत्रादिकस्य कमनीयस्य वस्तुनः प्रेरयित्रि ! वाजिनीवति—अन्नवति ! त्वमस्मभ्यं चित्रं चायनीयं मंहनीयं प्रशंसनीयं धनमाहर प्रापय येन पुत्रान् पौत्रांश्च दधीमहि—धारयेम प्राप्नुम ॥

निरुक्तयः—'वाजिनीवती' वाजिनी "वाजोऽन्ननाम" ( निरु० २ । ७ ) स्वार्थे—इनिः प्रत्ययः, वाज एव वाजिनी तद्वती वाजिनीवती । 'धामहे' इति लट्—प्रयोगः "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) श्लोरभावः ॥

तस्या एषाऽपरा भवति—

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥" ( ऋ० १ । ९२ । १ )

एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वे अर्द्धे अन्तरिक्षलोकस्य, समञ्जते

भानुना निष्कृण्वाना आयुधानीव धृष्णवः। निरित्येष समित्येतस्य स्थाने।

"एमीदेषां निष्कृतं जारिणीव" ( ऋ० १० । ३४ । ५ ) इत्यपि निगमो भवति। प्रतियन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः ॥

मन्त्रार्थः—

भा०—'एतास्ता उषसः' इति बहुवचनं पूजनार्थं प्रशंसार्थम्। एताः खलु ता उषसो रजसोऽन्तरिक्षलोकस्य पूर्वे सम्मुखीभूतेऽर्द्धे भागे केतुं प्रज्ञानं प्रज्ञायते येन वस्तुजातं तं प्रकाशमक्रताकृषत कुर्वन्ति यदा भानुम्—भानुना भासेनाञ्जते समञ्जते खल्वात्मानं व्यञ्जयन्ति प्रकटीकुर्वन्ति, धृष्णवो धर्षणशीला योद्धारः—आयुधानि शस्त्राणि निष्कृण्वाना निष्कुर्वाणाः संस्कुर्वाणा मलमवधूय तानि दीप्तानि कुर्वाणाः—इवैताः—गावो गन्त्र्यः—आरोचमाना भासो दीप्तेर्मातरो निर्मात्र्योऽन्तरिक्षलोकस्य तमोऽवधूय तं संस्कुर्वाणा दीप्तं कुर्वाणाः प्रतियन्ति प्रतिप्राप्नुवन्ति पुनः पुनः प्राप्नुवन्ति ॥

अत्र मन्त्रे 'निष्कृण्वानाः' इति पदे 'निः' उपसर्गः 'सम्' उपसर्गस्य स्थाने विज्ञेयः—इति यास्केनोक्तं तदर्थमन्यामृचमुदाहरति यत्र 'निः' उपसर्गः 'सम्' उपसर्गस्यार्थं विदधाति। स समग्रो मन्त्रस्तदर्थश्च दीयते—

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥

द्यूतव्यसनिनोऽनुभूतिरेषा—यदा पारिवारिकजनैः कुत्सितोऽहमादीध्ये—आध्यायामि सङ्कल्पयामि यदेभिरक्षैर्न दविषाणि न देविष्यामि न द्यूतं क्रीडिष्यामीति सङ्कल्प्य परायद्भ्यो द्यूतक्रीडास्थानं प्रति गच्छद्भ्यः सखिभ्यः कितवेभ्योऽवहितो भवामि यद्वाऽपसर्पामि न्युप्ताः कितवैर्निक्षिप्ता बभ्रवो बभ्रुवर्णा अक्षाः शब्दं कुर्वन्ति तदैषां निष्कृतं संस्कृतं द्यूतस्थानमास्फारमेम्यागच्छामि जारिणी स्वैरिणी व्यभिचारिणीव यथा व्यभिचारव्यसनाभिभूता व्यभिचारस्थानं गच्छति तद्वद् गच्छामीति व्यसनस्य दोषो महान्।

निरुक्तयः—'दविषाणि' "दिवु क्रीडा····" ( दिवादि० ) अत्र द्यूतक्रीडार्थो गृह्यते 'दिव' इत्यस्य वर्णव्यापत्तिः—इकारस्य स्थाने—अकारादेशः। 'स्य' इत्यस्य मध्याद् यकारलोपः, मिप्रत्ययस्य णिभावः सर्वं छान्दसम्। 'अवहीये' अव-

पूर्वोत् "ओहाङ् गतौ" ( जुहो० ) उत्तमैकवचने लटि रूपम् । धातोरीकारादेशश्च छान्दसः ।

अदेवतात्वे प्रयोगः—एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥" ( ऋ० १ । ४६ । १ ) अश्विनोर्दैवत्ये ॥

सूर्या ॥ ३ ॥

सूर्या सूर्यस्य पत्नी । एषैवाभिसृष्टकालतमा ॥ ७ ॥

तस्या एषा भवति—

"सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥" ( ऋ० १० । ८५ । २० )

सुकाशनं शन्नमलं सर्वरूपम् । अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति । किंशुकं क्रंशतेः प्रकाशयतिकर्मणः । शल्मलिः सुशरो भवति, शरवान् वा । आरोह सूर्ये अमृतस्य लोकमुदकस्य सुख पत्ये वहतुं कुरुष्व । "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा" इति च ब्राह्मणम् ॥

भा०—'सूर्या' इति द्युस्थाना स्त्रीलिङ्गा देवता । सूर्या सूर्यस्य पत्नी सूर्येण पालयितव्या रक्षितव्या सा खल्वेषा ह्युषा अभिसृष्टकालतमा—सूर्योदयं प्रतिव्यक्तकालतमा सूर्योदये सत्यतिशयेन समासकाला किन्तु सूर्येऽन्तर्गता सूर्येण सह संसक्ता यदा भवति तदा सूर्या भवति । उषसोऽपेक्षयाऽधिकशुभ्रा सुन्दरी ज्योतिर्मयी भवति ।

मन्त्रार्थः—

हे सूर्ये ! (Infra Red Rays) त्वं सुकिंशुकं सुकाशनं सु सुन्दरं काशनं प्रकाशनं प्रकाशस्थानं शल्मलिं शन्नमलं नष्टमलं निर्मलं यद्वा सुपुष्पितं शल्मलिं शाल्मलिमिव शोभनं विश्वरूपं सर्वरूपं हिरण्यवर्णं सुवृतं सु—वृतं वर्तनमावर्तनं यस्य तं सुचक्रं सुचकनं सुदीप्तममृतस्यामृतत्वस्य स्योनं सुखकरं लोकमारोह पत्ये वहतुं वहनं प्रापणं समर्पणं कुरुष्व ।

सूर्यायाः प्रदानं सोमाय कृतमित्यत्र यास्को ब्राह्मणवचनं प्रदर्शयति—"सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा 'यदि वा प्रजापतेः' १"

( शाङ्ख ब्रा० १८ । १ ) सविता मध्यमो देवो यदा, तदा प्रजापतये सूर्याय सूर्या दत्ता तदा सूर्यस्य पत्नी भार्या सूर्या । यदा सविता सूर्यस्तदा सोमाय चन्द्रमसे सूर्या दत्ता तदा सा सूर्यस्य पत्नी पालयितव्या रक्षितव्या दुहितृरूपेण । 'पा रक्षणे' धातोः कत्निच् प्रत्ययः "ऋतन्यञ्जि·····कत्निच्·····"( उणा० ४ । २ ) धातोर्बाहुलकात्–कर्मणि पुनः कृदिकारादक्तिन ङीष्, पत्नी ।

निरुक्तयः–'सुकिंशुकः' सुपूर्वात् "काशृ दीप्तौ" ( भ्वादि० ) तत उकन् प्रत्ययः 'काश' इत्यस्य 'किंश्' भावः । उपमायां सुकिंशुकमिव, किंशुकं क्रंशतेः, क्रंश प्रकाशने वैदिको धातुर्यास्काभिमतः । ततोऽपि–उकन् प्रत्ययः 'क्रंश' इत्यस्य 'किंश्' भावः । 'शल्मलिम्'–शन्नमलम्, शन्नं नष्टं मलं यस्य निर्मलम् 'शद्लृ शातने–नाशने' क्तप्रत्यये शन्नम् । शद्लृ क्विप् भूते दकारस्य लकारः शल्मलिम्, मलिं मलम् । शल्मलिर्वृक्षः सुशरो भवति, सुगमतया शीर्यते यद्वा सुशरवान् भवति ।

अदेवतात्वे प्रयोगः—आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा ।" ( ऋ० ५ । ७३ । ५ ) आश्विने सूक्ते नामधेयेन । "तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना सङ्गतिं गोः । यः सूर्यां वहति·····" (ऋ० ४।४४।१) आश्विने सूक्ते नामधेयेन ॥

वृषाकपायी ॥ ४ ॥

वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा ॥ ८ ॥

तस्या एषा भवति—

"वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥ ( ऋ० १० । ८६ । १३ )

वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा । स्नुषा साधुसादिनीति वा, साधुसानिनीति वा, स्वपत्यं तत् सनोतीति वा । प्राश्नातु त इन्द्र उक्षण एतान् माध्यमिकान् संस्त्यायान् । उक्षण उक्षतेर्वृद्धिकर्मणः, उक्षन्त्युदकेनेति वा, * प्रियं कुरुष्व सुखाचयकरं हविः सुखकरं हविः सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥

भा०—'वृषाकपायी' इति द्युस्थाना स्त्रीलिङ्गा देवता । वृषाकपायी वृषाकपेः पत्नी, एषा पूर्वोक्ता सूर्या ह्यभिसृष्टकालतमा–सूर्याया अपेक्षयाऽतिशयेन प्रवृद्ध-

---

* 'उक्षतेर्वा सिञ्चनकर्मणः' इति क्वचित् ।

कान्ता सूर्यस्यान्तर्गता दीप्तिर्यद्वाऽतिशयेनातिक्रान्तकान्ता दीप्तिः सृष्टेरारम्भे सूर्योदयरूपा दीप्तिः प्राथमिकी यथा संसक्ता रेवती तारा भवति । ज्योतिर्विद्यायां वृषाकपेरादित्यस्य सृष्टेरारम्भे योगतारा भवति मन्त्रे च सम्बोध्यते 'वृषाकपायि रेवति'।

मन्त्रार्थः—

हे वृषाकपायि ! रेवति धनवति ! सुपुत्रे सुपुत्रवति ! मध्यमेन वायुना सुपुत्रा वृषाकपायी, आत्–उ–अथ च सुस्नुषे ! सुस्नुषा पुत्रवधूर्यस्याः सा सुस्नुषा सम्बोधने सुस्नुषे ! माध्यमिकथा वाचा । सा स्नुषा माध्यमिका वाक् स्तनयित्नुयुक्ता विद्युत् (Rays of the spectum Region forming the white rays of the sun also Ionosphere.) ते–उक्षणः–प्रवर्धकान् सेचकान् माध्यमिकान् संस्त्यायान् सङ्घातान् मेघान्–इन्द्रो घसत् ग्रसनात् काचित्करं कं सुखं तस्य–आचितं सञ्चयं यत् करोति तत् काचित्करं जनानां सुखसञ्चयकरं हविरत्रादिकं कुरुष्व । इन्द्रः सर्वस्मादुत्तरः–इति अमी वयमादित्यं प्रति घोषयामः।

'रेवती तारा' इत्यस्मिन् पक्षे मन्त्रार्थः—

इन्द्र उत्तरध्रुवो वृषाकपायीं सान्त्वयति सदा सृष्टेरारम्भे रेवतीताराया मागतो वृषाकपिः सूर्यः सर्वग्रहणावसरे ग्रस्तः, हे वृषाकपायि रेवति तारे ! सुपुत्रे ! सुस्नुषे सुपुत्रबंधु ! तव वृषाकपिप्रभृतीन्–उक्षणः–त्वयि वीर्यसेचकान् ग्रहान्–इन्द्रस्तव श्वसुरः–उत्तरध्रुवो घसत् खगोलरूपे खलूदरे रक्षितवान् ! त्वं सुखसञ्चयरूपं हविरन्नादिकं सम्पादय । *

निरुक्तयः—'रेवती' रयिशब्दात्–मतुपि सम्प्रसारणम् "रयेर्मतौ बहुलम्" वा० ( अष्टा० ६ । १ । ३७ ) । 'स्नुषा'–साधुसादिनी 'साधु' उपपदात् सद्धातोर्डः प्रत्ययः 'साधु' इत्यस्य 'स्नु' भावः । यद्वा साधुसानिनी 'साधु' उपपदात् 'षण सम्भक्तौ' धातोर्डः प्रत्ययः, सर्वं पूर्ववत् । यद्वा स्नु–सु–अपत्यं तत् सनोति 'सु' इत्यस्य 'स्नु' भावः सन डः, स्नुषा । 'घसत्' लुङि प्रयोगोऽडभावश्छान्दसः । "लुङ्सनोर्घस्लृ" ( अष्टा० २ । ४ । ३७ ) अदः स्थाने घस्लृ लृदित्वादङ् । 'उक्षणः' 'उक्ष वृद्धौ सेचने वा' ततः "श्वसन्नुक्षन्...." ( उणादि० १ । १५९ ) कनिन्प्रत्ययान्तो निपात्यते ॥

---

* इन्द्रेन्द्राणीवृषाकपीनां संवादस्य ज्ञानार्थं पश्यन्तु किलास्माभिर्विरचितम् "वैदिक ज्योतिष्-शास्त्र' इति पुस्तकम् ।

सरण्यूः ॥ ५ ॥

सरण्यूः सरणात् ॥ ९ ॥

तस्या एषा भवति—

"अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥ ( ऋ० १० । १७ । २ )

अप्यगूहन्नमृतां * मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ मिथुनौ सरण्यूः मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः। यमं च यमीं चेत्यैतिहासिकाः॥

भा०—'सरण्यूः' इति द्युस्थाना स्त्रीलिङ्गा देवता। सरण्यूः सरणाद् दक्षिणपश्चात् सृता लुप्ताऽस्तं यन्तं सूर्यमनु सृता प्रसृताऽनेकदेशवर्तिनी स्वरूपतोऽप्यपसृता तमोमयी स्थितिः—रात्रिर्लक्ष्यते। 'सृ गतौ', ततः "सृयुवचिभ्योऽन्युजागूजक्नुचः" ( उणा० ३ । ८१ )।

मन्त्रार्थः—

मर्त्येभ्यः—अमृताम्—अपागूहन्—रश्मयो मर्त्येभ्यो मरणधर्मिभ्यः प्राणिभ्यस्तेषां हितार्थममृतां यस्य मृतं मरणं यस्माद् भवति तथाभूताममृतामुषसमपागूहअप्यगूहन्नन्तर्हितमकुर्वन् कृतवन्तः "अमृता—उषाः" ( निरु० २ । २० ) अथ सवर्णा कृत्वा विवस्वते सूर्यायाददुर्दत्तवन्तः सूर्योदयानन्तरमुषसः कालास्यापि पश्चात् पुनः सा सवर्णा प्रभा। अथाश्विनौ द्यावापृथिव्यौ "अश्विनौ द्यावापृथिव्यावित्येके" ( निरु० १२।१ ) "तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव द्यावापृथिव्यौ" ( शत० ७ । १ । ५ । १६ ) अभरद्धारयत् स्वप्रकाशेन प्रकाशितवती, सरण्यूः खलु या बहुत्र प्रसृता तमोमयी (Dark Radiations of the Sun.) याऽऽसीत् सा द्वौ मिथुनौ मध्यमं वायुं माध्यमिकां वाचं वैद्युतशक्तिं चाजहात् त्यक्तवती। रात्रौ खल्वग्निसूर्यौ न भवतः किन्तु वायुवैद्युतशक्ती तु कार्ये विद्यत एव।

मध्यमं माध्यमिकां वाचं नैरुक्ता मन्यन्ते द्वौ मिथुनौ। ऐतिहासिकास्तु यमं यमीं मन्यन्ते॥

---

* 'अपागूहन्' इति क्वचित्।

तत्रेतिहासमाचक्षते—त्वाष्ट्री सरण्यूर्विस्वत आदित्याद् यमौ मिथुनौ जनयाञ्चकार, सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव, ततोऽश्विनौ जज्ञाते सवर्णायां मनुः ॥ १० ॥

भा०—अत्रैतिहासिका आचक्षते, आचक्षेरन् त इतिहासं नैरुक्तास्तु न मन्यन्ते। 'उषाः, सूर्या, त्वष्टा, सविता, सूर्यः' इति द्युस्थानीयपदार्थमध्ये पठिता सरण्यूः खलु न ऐतिहासिकी व्यक्तिः सिध्यति।

तदभिवादिन्येषर्ग्भवति—

त्वष्टा ॥ ६ ॥

"त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति।
य॒मस्य॑ मा॒ता प॒र्युह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥" ऋ० १० । १७ । १ )

त्वष्टा दुहितुर्वहनं करोतीदं विश्वं भुवनं समेतीमानि च सर्वाणि भूतान्यभिसमागच्छन्ति, यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश। रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते ॥ ११ ॥

भा०—उषःसरण्यूविषयस्य प्रतिपादयित्री खल्वृगेषा "त्वष्टा दुहित्रे ...... अस्ति।"

मन्त्रार्थः—

त्वष्टा विश्वस्य निर्माता प्रकाशात्मा देव उषसो दुहितुर्वहनं विवाहमग्रगमनं वा करोति "त्वष्टा हि रूपाणि करोति" ( तै० २ । ७ । २ । १ ) विश्वं भुवनं समस्तं वस्तु सम्यक् प्राप्तं भवति स्वस्वरूपे दृश्यं भवति। यमस्य माता तदा पर्युह्यमानाऽऽसीत्, महो महतो विवस्वतः सूर्यस्य जाया रात्रिर्ननाश नष्टा सूर्योदयेऽन्तर्धीयते। रात्रिरुषसे निजस्थानं प्रयच्छति, उक्तं यथान्यत्र "रात्र्युषसे योनिमारैक्" ( ऋ० १ । ११३ । १ ) "रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः" ( ऋ० १ । ११३ । २ ) रात्रेरनन्तरमुदयं प्राप्नुवति सूर्ये प्रकाशमात्रा 'उषाः' तदनन्तरं प्रकाशमानाद् दिवसात् पूर्वं सवर्णा भवति, रात्रिरुषसः पूर्वम् ॥

रात्रिः......उषाः......सवर्णा।

## द्वितीयः पादः

सविता ॥ ७ ॥

सविता व्याख्यातः । तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति ॥ १२ ॥

तस्यैषा भवति—

"विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥" ( ऋ० ५ । ८१ । २ )

सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति, कवतेर्वा, प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजति ॥

भा०—'सविता' इति मुख्यार्थं देवतापदम् । सविता व्याख्यातः "सवितारमाह सर्वस्य प्रसवितारम्" ( निरु० अ० ७ सं० ३१ ) "सविता सर्वस्य प्रसविता" ( निरु० अ० १० सं० ३१ ) सर्वस्य प्रेरयिता सोऽत्र—आदित्यः । तस्य कालो यदा द्यौः—आकाशो नष्टतिमिरो रश्मयश्च तस्मिन्नाकीर्णाः क्षिप्ताः रश्मय एव यदा दृष्टिपथमायान्ति न सूर्यः, पृथिव्यां च भवति तदा तमः, स सवितुः कालः, यदा सूर्य उदयात् पूर्वमुदेतुं प्रवर्तते तदा सूर्यः 'सविता' इत्युच्यते ।

मन्त्रार्थः—

सविता—प्रातर्वेलायामुदयात् पूर्वमुदेतुं प्रवर्तमानः सूर्यो विश्वानि सर्वाणि रूपाणि प्रज्ञानानि प्रज्ञापनीयस्वरूपाणि प्रतिमुञ्चते प्रतिसृजति तेषु तेषु रूपवत्सु वस्तुषु, स खलु कविर्मेधावी मेधासम्पत्तिमान् जनेभ्यो मेधां सम्पत्तिं प्रयच्छति यद्वा क्रान्तदर्शनः क्रान्तं दूरतमं वस्तु तदपि दर्शयतीति तथाभूतोऽस्ति, यद्वा "कवते गतिकर्मा" ( निघं० २ । १४ ) उदयेन गतिमान् स द्विपदे द्विपाद्भ्यो मनुष्येभ्यश्चतुष्पदे चतुष्पाद्भ्यो गवादिभ्यो भद्रं कल्याणं प्रासावीत् प्रसुवति—उत्पादयति, स वरेण्यो वरणीयः सविता—उषसः प्रयाणमनु नाकमाकाशं व्यख्यत् प्रकाशयति, उषस उदयनमनु संलग्नो विराजति प्रकाशते ॥

अत्र नाकं व्यख्यत्, न तु पृथिवीं व्यख्यत् । तस्मादुषोवेलायामाकाशं प्रकाशयमानः सूर्यः सवितेति तत्काले मन्त्रलिङ्गम् ।

अधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादित्यधस्तात्तद्वेलायां तमो भवत्येतस्मात् सामान्यादधस्ताद् रामोऽधस्तात् । कृष्णः कस्मात् सामान्यादित्यग्निं चित्वा न रामामुपेयात्, रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात् सामान्यात् ।

कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात् सामान्यादिति कालानुवादं परीत्य । कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरम् ॥

भा०—सवितुर्देवस्य स्वरूपं पशुगुणसामान्यात् समर्थयति "अधोरामः" 'अधोरामः सावित्रः' इति पशुसमाम्नाये विज्ञायते लभ्यते, तद्यथा "आग्नेयः कृष्णग्रीवः....अधोरामः सावित्रः...." ( यजु० २९ । ५८, तै० सं० ५।५।२२ ) कस्मात् सोऽधोरामः सावित्रः, सामान्यात्, यतः सवितुरधस्तात् तस्य वेलायां तमो भवति तथोपरि ज्योतिः, अधस्तात् कृष्णो भवत्यधोरामः, रामः कृष्णो निकृष्टः कथमिति सामान्यात्, यथोच्यते "अग्निं चित्वा न रामामुपेयात्" ( काठ० सं० २२ । ७ ) रामा सा स्त्री या केवलं रमणाय भोगायोपगम्यते सेव्यते, न तु धर्माय, कृष्णजातीया निकृष्टजातीया । तस्मात् 'रामः कृष्णः ।' पुनर्द्वितीयमुदाहरणं दीयते कृकवाकोः 'कृकवाकुः सावित्रः' पशुसमाम्नाये विज्ञायते लभ्यते, तद्यथा "पुरुषमृगश्चन्द्रमसो....कृकवाकुः सावित्रः...." ( यजु० २४ । ३५ ) "शका भौमी....कृकवाकुः सावित्रः" ( तै० सं० ५ । ५ । १८ ) स कस्मात् सावित्रः, सामान्यात् स खलु कालानुवादं प्राप्य सवितुः कालमनुवदति कृकवाकुः कुक्कुटस्ताम्रचूडः । अस्मिन्नुदाहरणे सवितुः कालो ज्ञाप्यते । 'कृकम्' इत्यव्यक्तध्वनिं यो वक्तीति स कृकवाकुः 'कृक' उपपदाद् वचधातोः "कृके वचः कश्च—ञुण्" ( उणा० १ । ६ ) कृकवाकुः ॥

भगः ॥ ८ ॥

भगो व्याख्यातः । तस्य कालः प्रागुत्सर्पणात् ॥ १३ ॥

तस्यैषा भवति—

"प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥" ( ऋ० ७ । ४१ । २ )

प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेर्यो विधारयिता ।

सर्वस्याध्रश्चिद्यं मन्यमान आढ्यालुर्दरिद्रस्तुरश्चित् । तुर इति यमनाम तरतेर्वा, त्वरतेर्वा, त्वरया तूर्णगतिर्यमो राजा चिद्यं भगं भक्षीत्याह ।

अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणम् । जनं भगो गच्छतीति वा, विज्ञायते जनं गच्छत्यादित्य उदयेन ॥

भा०—'भगः' इति द्युस्थानं देवतापदम् । भगो व्याख्यातः "भगो भजतेः" ( निरु० अ० ३ खं० १६ ) भजनीयः सः । तस्य कालः सवितुः कालादुत्तरः मीनामुत्सर्पणात्–क्षितिजाद् बहिः प्रसरणात् पूर्वः कालः । तस्य "प्रातर्जितं……" मन्त्रः ।

मन्त्रार्थः—

वयं प्रातर्जितं प्रातर्वेलां प्रातस्तनं तमो यो जयति तं प्रातर्जितमह्नो भावयितारमुग्रमुग्रन्तं भगं भगनामानमादित्यं हुवेम ह्वयेमाह्वयेमामन्त्रयामहे काङ्क्षामः, यो विधर्ता सर्वस्य विधारयिता विशेषेण धारयिता सर्वेषां जीवनाधारो जीवेषु प्राणान् धारयिता–अदितेः पुत्रः–आदित्यः, अदितिर्दृष्टिपथतया–उषाः, उषसोऽनन्तरं तस्योदीयमानत्वात् स आदित्यः । आध्रश्चिदाढ्यालुर्दरिद्रश्चित्–दरिद्रोऽपि राजाचित्–राजाऽपि तुरश्चिद् यमो यतिर्योगी त्यागी खल्वपि यं मन्यमानः कामयमानः "मन्यते कान्तिकर्मा" ( निघ० २ । ६ ) भगं भक्षि भजेयं सेवेय–इत्याह–इति सङ्कल्पयति ॥

अन्धो भग इत्याहुः कथयन्ति यतोऽनुत्सृप्तोऽनुद्गतोऽनुदितो न दृश्यतेऽनुदितः प्रकाशरहितः कथं दृश्येत । प्राशित्रं प्राशनीयं वस्तु खल्वस्याक्षिणी नेत्रे निर्जघान निरहन्–इति ब्राह्मणं कथयति "प्राशित्रं परिदद्युः……तस्याक्षिणी निर्जघान तस्मादाहुरन्धो भग इति" ( शाङ्खा० ब्रा० ६ । १३ ) इत्यलङ्कारः प्राशित्रं प्राशनीयं खादनीयं भवति "यद् प्राशित्रं तस्मै पर्याहापुस्तत्प्राशीद०" ( शत० १ । ७ । ४ । १८ ) तथा जनं भगो गच्छति जनं जन्यमानं प्राणिमात्रं भग आदित्यो गच्छति–उद्यन् सन्–आदित्य उदयेन जनं गच्छति ब्राह्मणे दर्शितम् "जनं भगोऽगच्छत्" ( मै० सं० १ । ६ । १२ ) इत्थं प्रमाणद्वयेन भगः–उदयमान आदित्यो न तूदितः ।

निर्वचनः—'तुरः' 'तृ सन्तरणे' धातोः, त्वराधातोर्वा 'कुरच्' प्रत्ययः, तुरः । त्वरा धातोर्वकारोऽपि लुप्यते । यद्वा कः प्रत्यय औणादिको बाहुलकाद्

'तु' धातोः—ऋकारस्य "बहुलं छन्दसि" ( अष्टा० ७ । १ । १०३ ) इत्यनेन 'उत्' भवति 'त्वरा–त्वर्' धातोर्वकारस्य सम्प्रसारणं च छान्दसं भवति । अत्रैव-तात्वे प्रयोगः—"उभे द्यावापृथिवी विश्वमिन्वे अर्यमा देवो अदितिर्विधाता । भगो नृशंस उर्वन्तरिक्षं विश्वे देवाः पवमानं जुषन्त ॥" ( ऋ० ९ । ८१ । ५ ) पवमानसोमदेवत्ये ॥

सूयः ॥ ९ ॥

सूर्यः सर्तेर्वा, सुवतेर्वा, स्वीयतेर्वा ॥ १४ ॥

तस्यैषा भवति—

"उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्यम् ॥" ( ऋ० १ । ५० । १ )

उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति । कमन्यमादित्यादेवमवक्ष्यत् ॥ १५ ॥

भा०—'सूर्यः' इति द्युस्थानं देवतापदम् । सूर्यः "सृ गतौ" ( भ्वादि० ) धातोः, यद्वा "षु प्रेरणे" ( तुदादि० ) इत्यतः, अथवा सुपूर्वात् "ईर गतौ कम्पने च" ( अदादि० ) धातोः "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" ( अष्टा० ३ । १ । ११४ ) इत्यनेन क्यप्प्रत्ययान्तो निपात्यते कर्तरि कर्मणि वा यथायोग्यम् । सृधातोरुत्वं, सूधातोः 'रुट्' आगमः, 'सु' उपसर्गस्य 'ईर' धातोः—ईकारस्य च पूर्वसवर्णो दीर्घ ऊकारो निपातनाद् भवति । अगकाकाशे सरतीति सूर्यः, सुवति प्रेरयति प्राणिमात्रं स्वस्वकर्मणीति सूर्यः, स्वीर्यते प्रेर्यते स्वमार्गे वरुणेन परिधिमण्डलात्मकेन वायुना "उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।" ( ऋ० १ । २४ । ८ ) तस्य मन्त्रः "उदुत्यं…।"

मन्त्रार्थः—

त्यं तं जातवेदसं जातानि वस्तूनि वेदयति स्वप्रकाशेन ज्ञापयति यस्तं देवं द्योतमानं सूर्यं विश्वाय विशेषां सर्वेषां भूतानां दृशे दर्शनाय केतवो रश्मयः—उद्वहन्ति—ऊर्ध्वं वहन्ति—उद्गमयन्ति ।

जातप्रकाश उद्यन्नादित्यः सूर्य उक्तः । आदित्याद्भिन्नं न कमपि वदति मन्त्रः । न केवलमुद्यन्नेव—अपितु स उदितः सन्नपि सूर्यः । यदुच्यतेऽग्रे ॥

तस्यैषाऽपरा भवति—

"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥" ( ऋ० १ । ११५ । १ )

चायनीयं देवानामुदगादनीकं ख्यानं मित्रस्य वरुणस्याग्नेः आपूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ॥

मन्त्रार्थः—

भा०—देवानां रश्मीनां चित्रं चायनीयं दर्शनीयम्—अनीकं पुञ्जं मित्रस्य निजप्रेरणबलस्य येन प्रेरयति पदार्थान् तस्य वरुणस्य निजाकर्षणबलस्य येन रसादीनाकर्षति तस्य तथाग्नेरग्नितत्त्वस्य चक्षुः ख्यानं प्रदर्शकमुदगमदुदितः । द्यावापृथिव्यौ तथान्तरिक्षं च स्वमहत्त्वेन प्रकाशात्मकेन गुणेनापूपुरत् पूरितवान् । जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा—आत्मभूतो जातस्तदन्तरे तेजोधर्मेण प्रविष्टत्वात् ।

निरुक्तयः—'चित्रम्' "चायृ पूजानिशामनयोः" ( भ्वादि० ) निशामने दर्शनेऽर्थे धातुस्ततः "अमिचिमिशसिभ्यः क्त्रः" ( उणा० ४ । १६४ ) धातोर्बाहुलकात् क्त्रः प्रत्ययो यास्कमते चिभावश्च ।

अदेवतात्वे प्रयोगाः—"अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥" ( ऋ० १ । २३ । १७ ) अब्देवत्ये नामधेयेन । "इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत्" ( ऋ० १ । ७ । ३ ) ऐन्द्रे सूक्ते नामधेयेन । "पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥" ( ऋ० ९ । १ । ६ ) पवमानसोमदेवत्ये नामधेयेन ॥

पूषा ॥ १० ॥

अथ यद् रश्मिपोषं पुष्यति तत् पूषा भवति ॥ १६ ॥

तस्यैषा भवति—

"शुक्रं ते अन्यद् यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥" ( ऋ० ६ । ५८ । १ )

शुक्रं ते अन्यल्लोहितं ते अन्यद् यजतं ते अन्यद् यज्ञियं ते अन्यद् विषमरूपे ते अहनी कर्म द्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु ॥ १७ ॥

भा०—'पूषा' इति मुख्यनं देवतापदम् । पूषा, यदा स सूर्यो रश्मिपोषं पुष्यति–रश्मिभिः पुष्यति परिविष्टो भवति तदा स पूषा भवति । "स्वे पुषः" ( अष्टा० ३ । ४ । ४० ) इति णमुल्प्रत्ययान्तः 'रश्मिपोषम्' शब्दः । करणवाचके रश्मिशब्दोपपदे पुषधातोर्णमुल् प्रत्ययः ।

मन्त्रार्थः—

पूषन् ! रश्मिभिः परिविष्ट देव ! ते तवान्यदेकं शुक्रं शुक्लं शुक्लवर्णं लोहितं शुभ्रमन्यदेकं द्वितीयं यजतं यष्टव्यं यज्ञियमिन्धनवत् कृष्णमित्यर्थः, इत्थं विषुरूपे ते स्तः, के ते उच्येते–अहनी अहोरात्रे कर्म–कर्मणी स्तः, त्वं द्यौरिवासि यथा रात्री द्यौः प्रकाशते तथा त्वं दिने प्रकाशसे । विश्वा माया सर्वाणि प्रज्ञानानि प्रज्ञातव्यानि–अवसि रक्षसि । हे स्वधावः ! अन्नवन् ! तव भद्रा भाजनवती भजनीयगुणवती–सुसेवनीया रातिर्दत्तिर्दानमस्तु ।

मध्याह्नं गतः सूर्यः पूषा कथ्यते, यथा द्यौरुपरि तथा सूर्योऽप्युपरि शिरस उपरि गतः पूषा भवति, द्वितीयं लक्षणं तस्योभययोः पार्श्वयोरहोरात्रे–इत्थं स्यातां यत्–एको भागो यजनीयः प्रज्वालनीयो रात्रिरूपो भवेत् तथैकश्च प्रज्वलितीकृतो दिवसः ।

निरुक्तयः—'यजतः'–यजनीयो यज्ञियः "भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्" ( उणा० ३ । ११० ) इति यजधातोः 'अतच्' प्रत्ययः । 'रातिः' "रा दाने" ( अदादि० ) ततः क्तिन् प्रत्ययः ॥

तस्यैषापरा भवति—

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियं धियं सीषधाति प्र पूषा ॥" ( ऋ० ६ । ४९ । ८ )

पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानडर्कमभ्यापन्नोऽर्कमिति वा स नो ददातु चायनीयाग्राणि धनानि कर्म कर्म च नः प्रसाधयतु पूषेति ।

मन्त्रार्थः—

भा०—वचस्या वचनेन सत्यभाषणेन कामेन सङ्कल्पेन सत्यसङ्कल्पेन कृतः–संस्कृतो अयं पथस्पथो मार्गस्य मार्गस्य परिपतिमधिपतिं सर्वमार्गाणां प्रदर्शकमर्कं अर्चनीयम् "अर्चिः–अर्कतो वाम" ( निघं० १ । १७ ) प्रकृष्टप्रकाशमानं पूषणमभ्यानडभ्यापन्नो भवामि "अश्नुते व्याप्तिकर्मा" ( निघ० २ । १८ )

व्यत्ययेन रूपसिद्धिः। तदा स पूषा नोऽस्मभ्यं शुरुधः—चन्द्राग्राः सद्यो दारिद्र्यस्य रोधयित्र्यश्चायनीयाग्रा दर्शनीयप्रधानाः सम्पत्तयो धनानि रासद् ददातु ददाति धियं धियं कर्म कर्म प्रत्येकं कर्म "धीः कर्मनाम" ( निघ० २। १ ) प्रसीषधाति प्रसाधयति ।

निरुक्तयः—'चन्द्रः' "चायृ निशामने–दर्शने" ( भ्वादि० ) ततः "स्फायितञ्चि···भ्यो रक्" ( उणादि० २। १३ ) इति धातोर्बाहुलकाद् रक्, धातोः 'चन्द्' भावः, चन्द्रः। चन्द्राणि–आह्लादकानि–अग्रे धनानि यासां ताश्चन्द्राग्राः सम्पत्तयः धनानि ॥

अदेवतात्वे प्रयोगाः—"आ नः पूषा पवमानः सुरातयो मित्रो गच्छन्तु वरुणः सजोषसः।" ( ऋ० ९। ८१। ४ ) पवमानसोमदेवत्ये नामधेयेन। "अयं पूषा रयिर्भगः सोमः पुनानो अर्षति। पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥" ( ऋ० ९। १०१। ७ ) पवमानसोमदेवत्ये तद्विशेषरूपेण। "सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाँ अजस्रम्। तस्य पूषा प्रसवे याति विद्वान्त्सम्पश्यन् विश्वा भुवनानि गोपाः ॥" ( ऋ० १०। १३९। १ ) सवितृदेवत्ये नामधेयेन ॥

विष्णुः ॥ ११ ॥

अथ यद् विषितो भवति तद् विष्णुर्भवति। विष्णुर्विशतेर्वा व्यश्नोतेर्वा ॥ १८ ॥

तस्यैषा भवति—

"इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूळ्हमस्य पांसुरे ॥" ( ऋ० १। २२। १७ )

यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूळ्हमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यते। अपि वोपमार्थं स्यात् समूळ्हमस्य पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा, पन्नाः शेरत इति वा, पंसनीया * भवन्तीति वा ॥ १९ ॥

---

* 'पिशनीयाः' इति पाठान्तरं तदर्थप्रदर्शनं स्यात्।

भा०—'विष्णुः' इति धुस्थानं देवतापदम् । विष्णुः—विषितः, विपूर्वकात् "षिञ् बन्धने ( स्वादि०, क्र्यादि० ) धातोः । यद्वा "विष्लृ व्याप्तौ" ( जुहोत्यादि० ) धातोः 'विषितः' इत्यार्षप्रयोगः । विपूर्वात् षिञ्धातोर्यद्वा विष्लृधातोः "विषेः किच्च—नुः" ( उणा० ३ । ३९ ) 'विषेः' इति 'वि—षेः' विपूर्वकात् षेः षिञः, षेः पञ्चमी, यद्वा विष्लृ—विषे 'इः' धातुनिर्देशे, विषेः पञ्चमी । विषितो रश्मिभिर्विशेषेण सितो वेष्टितः, रश्मिभिर्विषितो विष्टो व्याप्तः । "यद्वा विश प्रवेशने" ( तुदादि० ) ततोऽपि धातोर्बाहुलकात् स एव नुः कित्—शकारस्य षकारः । स विष्णू रश्मिभिः सर्वान्तरे प्रविष्टस्तीव्रतरतापवत्त्वात् । अथवा विपूर्वात् "अशूङ् व्याप्तौ" ( स्वादि० ) ततः पूर्ववत्—नुः कित्, उपधालोपश्छान्दसः । विष्णू रश्मिभिर्विशेषेण व्याप्तः ।

मन्त्रार्थः—

यदिदं किञ्च सर्वं जगत् तद् विष्णुर्विक्रमते विजयते स्वाधीनं करोति, अतस्त्रिधा पदं निधत्ते त्रिधा भावाय पृथिव्यामन्तरिक्षे दिवि पदं स्वरूपं निधत्ते नियतं करोति—इति शाकपूणिर्मन्यते । और्णवाभमते समारोहणे विष्णुपदे गयशिरसि । समारोहणे पूर्वाह्णे काले पूर्वस्यां दिशि मध्याह्ने विष्णुपदे यदा विष्णुसंज्ञां लभते मध्याकाशे गयशिरसि—उत्तराह्णे पश्चिमायां दिशि "गयः, अस्तम्—गृहनाम" ( निघ० ३।४ ) गयेऽस्ते गृहे शिरो यस्मिन् काले देशे वा स कालो देशो वा 'गयशिराः' तस्मिन् गयशिरसि—उत्तराह्णे पश्चिमायां दिशि । अस्य पांसुरे प्यायने विस्तृतेऽन्तरिक्षे यत् पदं तत् समूढं सम्मूढमर्थात्—न दृश्यते यद्वा पांसुले—इव पदं न दृश्यते यथा पांसुले धूलिराशौ क्षिप्तं पदं न्यस्तमुत्क्षेपणे चिह्नं न दृश्यते । एवं मन्त्रदृष्ट्या यास्कदृष्ट्या च त्रीणि स्थानान्यत्र 'पृथिवी, अन्तरिक्षम्, द्युलोकः' सन्ति तेषां पृथिव्यां त्वग्निरूपेण, दिवि किलादित्यरूपेण, अन्तरिक्षे तु गुप्तविद्युद्भावेन वर्तते न दृश्यते ।

एवमत्र विष्णोः स्वरूपमुक्तम् । पूर्वाह्णादारभ्योत्तराह्णपर्यन्तमादित्यस्य विष्णुर्नाम । त्रिषु लोकेषु हि कालेषु च प्रवर्तमानो विष्णुर्भवति ।

निरुक्तयः—'पांसुरः'—प्यायनः "प्यायी वृद्धौ" ( भ्वादि० ) डांसुरच् बाहुलकाद् यकारलोपश्च: यद्वा "प्यायः पी" (अष्टा० ६ । १ । २८) अनिष्ठायामपि छन्दसि, पांसुरः । अथवा पांसुल एव पांसुरः "सिध्मादिभ्यश्च—लच्" ( अष्टा० ५ । २ । ९७ ) पांसुर्धूलिस्तद्वान् पांसुरः, यद्वा 'पांसुरः' एव नगपांसुपाण्डुभ्यश्चेति वक्तव्यम् ( अष्टा० ५ । २ । १०७ वा० ) रः प्रत्ययः । पांसवः पादैः सूयन्ते जन्यन्ते पुनः पुनः पादक्षेपणात् पांसवो जायन्ते, 'पाद'

उपपदात् 'षु प्रसवैश्वर्ययोः (भ्वादि०) ततः क्विप् 'पाद' शब्दस्य 'पाम्'। अथवा पद्माः—विपद्माः—आघातं प्राप्ताः शेरते 'पद्मा' इत्युपपदे शीङ्धातोर्डः प्रत्ययः, 'पद्मा' इत्यस्य 'पाम्' भावो धातोः शकारस्य सकारः, पांसवः। पंसनीया भवन्तीति वा "पसि नाशने" (चुरादि०) ततः "अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च" (उणा० १।२७) कुः प्रत्ययः। पसि-पंस दीर्घश्च सूत्रेण कृते सति पांसवः। कर्मणि कुः प्रत्ययोऽत्र।

अदेवतात्वे प्रयोगाः—"त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः।" (ऋ० २।१।३) अग्निदेवत्ये—अग्निप्रशंसायां नामधेयेन। "मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम्।" (ऋ० ९।९०।५) पवमानसोमदेवत्ये नामधेयेन। "त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना सुतं यथावशत्।" (ऋ० २।२२।१) इन्द्रदेवत्ये॥

इति द्वादशाध्यायस्य द्वितीयः पादः।

---

## तृतीयः पादः

---

विश्वानरः ॥ १९ ॥

विश्वानरो व्याख्यातः ॥ २० ॥

तस्यैष निपातो भवत्यैन्द्र्यामृचि—

"विश्वानरस्य वस्पतिमनानतस्य शवसः।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥" (ऋ० ८।६८।४)

विश्वानरस्यादित्यस्यानानतस्य शवसो महतो बलस्यैवैश्च कामैरयनैरवनैर्वा, चर्षणीनां मनुष्याणामूत्या च पथा रथानामिन्द्रमस्मिन् यज्ञे ह्वयामि ॥

भा०—'विश्वानरः' इति पस्थानं देवतापदम्। विश्वानरो व्याख्यातः "प्रत्यृतः सर्वाणि भूतानि" (निरु० ७।२१) तस्य निपातोऽस्वतन्त्रदेवतात्वेन प्रयोगः खल्विन्द्रदेवत्ये मन्त्रेऽस्ति।

मन्त्रार्थः—

विश्वानरस्य स्वरश्मिभिर्विश्वान् सर्वान् प्रति प्राप्तस्यादित्यस्य 'अनानतस्य शवसः' तस्यादित्यस्य यदनानतं शवः—यन्न-आनतं भवति तन्महद्रश्मिमयं तस्य

रश्मिबलस्य पतिमिन्द्रमस्मिन् यज्ञे वः—त्वां हुवे ह्वयामि—आह्वयामि—आमन्त्रये । इन्द्रो देवत्वेन प्रक्रियते प्रथममन्त्रतः "तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ।" ( ऋ० ८ । ६८ । १ ) आदित्यस्य यद् रश्मिबलं तस्येन्द्रः पतिः पालयिता रक्षकः, उक्तं ह्यन्यत्र मन्त्रे "इन्द्रः सूर्यमरोचयत्" ( ऋ० ८ । ३ । ६ ) कथं हुवे ? 'रथानाम्—ऊती' विश्वानरस्य रथानां रमणीयानां रंहमाणानां रश्मीनां यथा हुवे रश्मीनां यथावत् प्रयोगेण, किमर्थम् ? चर्षणीनां मनुष्याणामेवैः कामैः काम-पूर्तिहेतुना, यद्वा—अयनैः—गमनैः कार्येषु गतिप्रवृत्तिः स्यादिति हेतुना, अथवा—अवनैः—रक्षणैः—रक्षणहेतुना ह्वयामि "चर्षणयः—मनुष्याः" ( निघं० २ । ३ ) ।

अदेवतात्वे प्रयोगः—"उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् । क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥" ( ऋ० ७ । ७६ । १ ) उषोदेवत्वे नामधेयेन ॥

वरुणः ॥ १२ ॥

वरुणो व्याख्यातः ॥ २१ ॥ तस्यैषा भवति—

"येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।

त्वं वरुण पश्यसि ॥" ( ऋ० १ । ५० । ६ )

भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोळ्हा तत्सम्पाती भुरण्युरनेन पावक-ख्यानेन । भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि । तत्ते वयं स्तुम इति वाक्यशेषः ॥ २२ ॥

भा०—'वरुणः' इति द्युस्थानं देवतापदम् । वरुणो व्याख्यातः "वृणोतीति सतः" ( नि० १० । ३ ) यो रश्मिभिर्वृणोति जगत् ।

मन्त्रार्थः—

हे पावक वरुण ! रश्मिभिः शोधयितर्देव ! आदित्य ! त्वं येन चक्षसा ख्यानेन व्यापकेन धर्मेण भुरण्यन्तं क्षिप्रत्वं कुर्वन्तं क्षिप्रं गच्छन्तम् "भुरण्युः क्षिप्रनाम" ( निघं० २ । १५ ) भुरण्युः क्षिप्रगामी यथा भुरण्युः शकुनिः सम्पाती भूरिमध्वानं नयत्यात्मानमाकाशे "भुरण्यति गतिकर्मा" ( निघं० २ । १४ ) एवं भुरण्यन्तं क्षिप्रं गच्छन्तं भुरण्युरिव दूरं क्षिप्रं नयन्तं स्वरश्मिसमूहम् "वयाः सुपर्णा आदित्यरश्मयः" ( निरु० ४ । २ ) जनान् जन्यमानान् प्रति जनेभ्यो जनानां हिताय पश्यसि दर्शयसि, अन्तर्गतणिजर्थः, तस्मात्त्वं तुभ्यं स्तुतिं कुर्मः ॥

भुरण्युः शकुनिः, भूरिम्—अध्वानं नयति 'भूरि' उपपदात् "णीञ् प्रापणे" (भ्वादि०) ततः 'क्युः' प्रत्ययो बाहुलकात् पूर्वपदस्य—इकारस्य—अकारः, भुरण्युः। स भुरण्युः शकुनिः क्षिप्रं दूरगामी भवति स्वर्गस्य लोकस्यापि वोढा तत्सम्पाती हि तस्य दूरगमनमतिशयालङ्कारेणोच्यते द्युलोकपर्यन्तं नाक्षत्रलोकपर्यन्तम् ॥

अपि वोत्तरस्याम्—

येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑।
त्वं व॑रुण॒ पश्य॑सि ॥
"वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑।
पश्य॒ञ्जन्मा॑नि सूर्य ॥" (ऋ० १।५०।७)

व्येषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानो अक्तुभी रात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य ॥२३॥

भा०—अपि वा—अपि च पूर्वो मन्त्रः—उत्तरेणाग्रिमेण मन्त्रेण सहैकवाक्यतामपेक्षते।

मन्त्रार्थः—

हे पावक वरुण! सूर्य! येन चक्षसा ख्यानेन व्यापनधर्मेण त्वं भुरण्यन्तं क्षिप्रं गच्छन्तं रश्मिसमूहं जनान् प्रति जनानां हिताय पश्यसि दर्शयसि, तेन चक्षसा ख्यानेन व्यापनधर्मेण त्वमक्तुभिः सह रात्रिभिः सह—अहा—अहानि—अहोरात्राणि मिमानो निर्मिमाणो जन्मानि जातानि पश्यन् दर्शयन् प्रकाशयन् पृथु महान्तं रजोऽन्तरिक्षलोकं द्यां द्युलोकं च व्येषि व्याप्नोषि ॥

अपि वा पूर्वस्याम्—

येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑।
त्वं व॑रुण॒ पश्य॑सि ॥
"प्र॒त्यङ् दे॒वानां॒ विशः॑ प्र॒त्यङ्ङुदे॑षि॒ मानु॑षान्।
प्र॒त्यङ् विश्वं॒ स्व॑र्दृ॒शे ॥" (ऋ० १।५०।५)

प्रत्यङ्ङिदं सर्वमुदेषि प्रत्यङ्ङिदं ज्योतिरुच्यते।
प्रत्यङ्ङिदं सर्वमभिविपश्यसीति ॥ २४ ॥

भा०—हे वरुण! आदित्य! त्वं येन चक्षसा ख्यानेन व्यापनेन जनान् प्रति भुरण्यन्तमुद्गच्छन्तं रश्मिसमूहं दर्शयसि, तेन ख्यानेन सह त्वं पूर्वस्यां

दिशि खल्वयं प्राप्य देवानां विशः—उत्कृष्टान् प्राणिनः प्रत्यङ् प्रतिगतः सन्नुदेषि, तथा मानुषान् प्रत्यङ् प्रतिगतः सन्नुदेषि—एवं विश्वं प्रत्यङ् प्रतिगतः सन्नुदेषि स्वर्दृशे स्वः सुखमयं स्वस्वरूपं दर्शनाय ।

यास्कः कथयति मन्त्रे 'प्रत्यङ्' शब्दो ज्योतिः, न तु क्रियाविशेषणम् । इदं सर्वं प्रति ज्योतिः, त्वं ज्योतिःस्वरूप ! उदेषि पश्यसि सर्वं दर्शयसि च ।

अपि वैतस्यामेव—

येना॑ पावक॒ चक्ष॑सा भु॒र॒ण्यन्तं॒ जनाँ॒ अनु॑ ।

त्वं व॑रुण॒ पश्य॑सि ।

तेन नो जनानभिविपश्यसि ॥

भा०—"येना पावक....." इत्यस्मिन्नेव मन्त्रेऽध्याहारेण विना भवति वाक्यपूर्णता ।

हे पावक वरुण ! आदित्य ! येन चक्षसा ख्यानेन ख्यापनधर्मेण स्वकीय-प्रकाशस्वरूपेण भुरण्यन्तं क्षिप्रं गच्छन्तं रश्मिसमूहं पश्यसि प्रकाशयसि तेनैव जनाननु—अस्मानपि पश्यसि पश्य प्रकाशय । एवं वरुणः सर्वेषामपि रश्मि-प्रकाशेनावरक आच्छादक आदित्यः ॥

केशी ॥ १४ ॥

केशी केशा रश्मयस्तैस्तद्वान् भवति, काशनाद्वा प्रकाश-नाद्वा ॥ २५ ॥

तस्यैषा भवति—

"के॒श्य१॒॑ग्निं के॒शी वि॒षं के॒शी बि॑भर्ति॒ रोद॑सी ।

के॒शी विश्वं॒ स्व॑र्दृ॒शे के॒शीदं ज्योति॑रुच्यते ॥

( ऋ० १० । १३६ । १ )

केश्यग्निं च विषं च । विषमित्युदकनाम—विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य, विपूर्वस्य वा सचते । द्यावा-पृथिव्यौ च धारयति केशीदं सर्वमिदमभिविपश्यति, केशीदं ज्योतिरुच्यत इत्यादित्यमाह ॥

भा०—'केशी' इति पुस्थानं देवतापदम् । केशी, केशा रश्मयः सन्ति यस्य स केशी केशवान् रश्मिमान्—आदित्यः "अत इनि ठनौ" ( अष्टा० ५ । २ । ११५ ) इनिः प्रत्ययो मत्वर्थकः । यद्वा काशनात् "काशृ दीप्तौ" ( भ्वादि०

( दिवादि० ) यद्वा प्रकाशनात् 'प्र' उपसर्गपूर्वाद् काशधातोरेव 'प्र' उपसर्गस्य लोपः । प्रकाशते प्रकाशवान् वा केशी, आकारस्य—एकारादेशश्छान्दसः ।

मन्त्रार्थः—

केशी रश्मिमान्—आदित्योऽग्निं बिभर्ति धारयति तदन्तरे विद्यमानत्वात् तस्य तद्द्वारा प्रकाशयत्वाच्च, केशी विषमुदकं धारयति रश्मिभिराहृतमन्तरिक्षे धृतत्वात् "विषमुदकनाम" (निघ० १ । १२ ) केशी स एवादित्यो रश्मिमान् रोदसी द्यावापृथिव्यौ द्युलोकभूलोकौ धारयति प्रकाशप्रदानेनाकर्षणेन च "रोदसी द्यावापृथिव्यौ" ( निघ० ३ । ३० ) केशी विश्वमिदं सर्वं जगत् स्वः सर्वं 'स्वर्—सर्व' आद्यन्तविपर्ययेण । दृशे विपश्यति विदर्शयति प्रकाशयति, अन्तर्गतणिजर्थः । केशी—इदं ज्योतिरादित्य उच्यते तदभावात् तमो भवति ॥

निरुक्तः—'विषम्'—उदकम्, विपूर्वात् "ष्णा शौचे" ( अदादि० ) ततः, यद्वा विपूर्वात् "षच सेचने" ( भ्वादि० ) ततो डः प्रत्ययः, विषम् । 'ष्णा' इत्यस्य णकारलोपश्च ।

अदेवतात्वे प्रयोगः—कुकर्दवे वृषभो युक्त आसीदवावचीत्सारथिरस्य केशी ।" ( ऋ० १० । १०२ । ६ ) ऐन्द्रे द्रौघणे सूक्ते ॥

केशिनः ॥ १५ ॥

अथाप्येते इतरे ज्योतिषी केशिनी उच्येते । धूमेनाग्नी रजसा च मध्यमः ॥ २६ ॥

तेषामेषा साधारणा भवति—

"त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ ( ऋ० १ । १६४ । ४४ )

त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ॥

भा०—अथ आदित्याद् भिन्ने ये ज्योतिषी पार्थिवोऽग्निः, मध्यमश्च विद्युदग्नी वायुः केशिनी उच्येते । अग्निस्तु धूमेन धूमः केशोऽस्य, मध्यमो रजसा रजःकणस्तरङ्गो वा तेन ।

मन्त्रार्थः—

अयं केशिनं ऋतुथा काले काले विचक्षतेऽभिविपश्यन्ति—स्वस्वकार्यं प्रज्ञापयन्ति—अनुगृह्णन्ति वा, एषामेकोऽयं पार्थिवोऽग्निः संवत्सरे पृथिवीं वपते दहति, यास्कवचनसामर्थ्यादिह वपधातुर्दहनार्थे । भोजनपाकेनाग्निहोत्रेण यत्र तत्र जङ्गलेषु पर्वतेषु तृणानां वंशानां दहनेन, संवत्सरे यथाकालं दहति । एक आदित्यः शचीभिः "शची कर्मनाम" ( निघं० २ । १ ) कर्मभिः प्रेरणादिभिरनुगृह्णाति, एकस्य विद्युत्कस्य वायोर्ध्राजिर्गतिर्ददृश्यते न रूपं यो मध्यमोऽस्ति ।

अदेवतात्वे प्रयोगः—"आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये । ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥" ( ऋ० ८ । १ । २४ ) इन्द्रदेवत्ये ॥

वृषाकपिः ॥ १६ ॥
अथ यद् रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति वृषाकम्पनः ॥ २७ ॥ तस्यैषा भवति—

"पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥" ( ऋ० १० । ८६ । २१ )

पुनरेहि वृषाकपे सुप्रसूतानि [ यः, वः ] * कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥

भा०—'वृषाकपिः' इति पृथ्वीस्थानं देवतापदम् । वृषाकपिः—वृषाकम्पनः "वृषु सेचने" ( भ्वादि० ) "वृष शक्तिबन्धे" ( चुरादि० ) ततः "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" ( उणा० १ । १५६ ) इति कनिन् प्रत्ययः, वृषा । "कपि चलने" ( भ्वादि० ) ततः "कुण्ठिकम्प्योर्नलोपश्च—इः" ( उणा० ४ । १४४ ) इः प्रत्ययः कपिः । वृषभिः प्रकाशस्य वर्षकैः रश्मिभिः सहास्तं गच्छति प्राणिनोऽभिप्रकम्पयन् प्रकाशाभावेऽन्धकारे कम्पन्ते हि भयात् । तस्माद् वृषाकम्पनः सन् वृषाकपिः 'वृषन्' इत्यस्य—आकारश्छान्दसः ।

मन्त्रार्थः—

---

* "सुप्रसूतानि" इत्यस्याग्रे दुर्गभाष्यस्थे मूले 'यः' इति पाठः, अजमेरस्थे वैदिकयन्त्रालये प्रकाशिते निरुक्ते च 'वः' पाठः प्रामादिकः प्रतिभाति ।

हे वृषाकपे ! अस्तं गन्तुमुद्यत ! आदित्य ! त्वं पुनरेहि पुनरागच्छ सुविताबि सुप्रसूतानि शोभनैश्वर्यसाधनानि विहितानि यज्ञादीनि कर्माणि कल्पयावहै—आवामृत्विग्यजमानौ सम्पादयाव । य एष त्वं स्वप्ननंशनः—उदयेन स्वप्नान् विविधान् निद्रासंस्कारान्—निद्रालस्यजाड्यशिथिलत्वानि नाशयसि, स त्वं पथा गमनागमनरूपेण मार्गेण पुनरस्तं गच्छसि पुनरुदेषि च तस्मात् पुनरेहि । विश्वस्मादुत्तर इन्द्रः, इत्यत्र 'वृषाकपिमादित्यं ब्रूम' वृषाकपिरादित्योऽस्ति । एवमस्तं गच्छन्नादित्योऽत्र वृषाकपिरुक्तः ॥

यमः ॥ १७ ॥

यमो व्याख्यातः ॥ २८ ॥ तस्यैषा भवति—

"यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥"
(ऋ० १० । १३५ । १)

यस्मिन् वृक्षे सुपलाशे स्थाने वृतक्षये वापि वोपमार्थे स्याद् वृक्ष इव सुपलाश इति । वृक्षो व्रश्चनात् पलाशं पलाशनाद् देवैः सङ्गच्छते यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा, पालयिता वा पुराणाननुकामयेत ॥

भा०—'यमः' इति द्युस्थानं देवतापदम् । यमो व्याख्यातः "यच्छतीति सतः" ( निरु० अ० १० । खं० २१ ) यच्छति नियच्छति रश्मीन् सङ्गृह्णाति जीवांश्च नियच्छति—अस्तं गच्छन् कालं गणयित्वा ।

मन्त्रार्थः—

यस्मिन् वृक्षे वृतक्षये वृतानां सत्कर्मणि परमात्मोपासने वर्तमानानां मुक्तिप्राप्तये क्षये क्षियन्ति निवसन्ति यस्मिन् तस्मिन् तथा सुपलाशे सुपलाशने सुपलस्य—सुगतेः सुकर्मणः सुकृतफलस्याशनेऽश्यते यस्मिन् तस्मिन् स्थाने द्युमण्डले । वर्तन्ते ये ते वृताः "इगुपधज्ञाप्रीकिरः कः" ( अष्टा० ३ । १ । १३५ ) इति कर्तरि कः । यद्वा सुपलाशे सुपर्णे वृक्षे—इव व्रश्चनशीले यतः फलं व्रश्च्यते तस्मिन् स्थानेऽस्तमने यस्मिन्नादित्यो गतः पुनरावर्तते तस्मिन् पुनरावृत्तिनिमित्ते स्थाने यमोऽस्तङ्गत आदित्यो देवैः—रश्मिभिः सम्पिबते सङ्गच्छते, यास्कस्य विधानात् प्रसङ्गबलाच्च सम्पिबतिः सङ्गत्यर्थे । अत्र—तत्र विश्पतिः सर्वस्य पाता पालयिता वा नोऽस्मान् पुराणान् जीर्णान् गतायुष्कान् वेनति—अनुकामयेत । "वेनति कान्तिकर्मा" ( निघं० २ । ६ ) स्वकीयास्तोदयाभ्यां कृतकृत्यान् प्राप्तप्रापणीयान् कृतात्मनो मुमुक्षून् कुर्यादिति काङ्क्षा ॥

अज एकपात् ॥ १८ ॥
अज एकपादजन एकः पादः । एकेन पादेन पातीति वा ।
एकेन पादेन पिबतीति वा । एकोऽस्य पाद इति वा ।
"एकं पादं नोत्खिदति" ( अथर्व० ११ । ४ । २१ )
इत्यपि निगमो भवति ॥ २९ ॥

भा०—'अज एकपात्' इति द्युस्थानं देवतानाम । अज एकपात्—अजनः—एकः पादः—गमनः—एकः पादः 'अज गतौ' ततः पचादिलक्षणोऽच् "अजेर्व्यघञपोः" ( अष्टा० २ । ४ । ५६ ) इत्यनेन प्राप्तस्य वेरभावश्छान्दसः । एकश्चासौ पादश्च—एकपात्, अज एकपात् । "संख्यासुपूर्वस्य" ( अष्टा० ५ । ४ । १४० ) अबहुव्रीहावपि पादस्य—अकारलोपश्छान्दसः । उक्तं च "तदेतच्चतुष्पाद् ब्रह्म''' अग्निः पादो वायुः पादः—आदित्यः पादो दिशः पादः" ( छान्दो० ३ । १८ । २ ) तस्माद् एकपात्—एकः पादः पादरूप आदित्यः—इत्येकः पक्षः कर्मधारयसमासे । अथ द्वितीयः पक्षः—एकेन पादेन पाति रक्षति जगत्, 'एक' शब्दोपपदात् "पा रक्षणे" ( अदादि० ) अतिप्रत्यय औणादिको बाहुलकात् ( उणा० २ । ८५ ) यद्वा—एकेन पादेन पिबति रसान् पूर्ववत्—अतिप्रत्ययः । इत्युपपदतत्पुरुषे समासे रूपम् । पुनश्च—एकः पादोऽस्य—एकपात्—इति बहुव्रीहौ समासे । एवम् 'एकपात्' इत्यस्य द्वौ पक्षौ जातौ, कर्मधारयसमासे—एकः पादः—एकपात् पाद एवादित्यः, इत्येकः पक्षः । उपपदतत्पुरुषे—एकेन पादेन पाति पिबति रक्षति वा यः पादादन्यः पाता आदित्यः, तथा बहुव्रीहौ—एकः पादो यस्य च एकपात् ततोऽप्यन्यः पदार्थः—आदित्यः पादवान्, इति द्वितीयः पक्षः । अज एकपादस्ति सूर्यः "अज एकपातुदगात् पुरस्तात्''''तं सूर्यं देवमजमेकपादम्" ( तै० ३ । १ । २ । ८ ) तत्र द्वयोः पक्षयोः समर्थनाय यास्को मन्त्रमुदाहरति "एकं पादं नोत्खिदति ।"

समग्रमन्त्रस्तदर्थश्च—

एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन् । यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यान्न रात्री नाहः स्यान्न व्युच्छेत् कदा चन ॥

हंस आदित्यो हन्ता तमसां हंससदृशः शुभ्रो लोकदृष्ट्या—उत्पतनशीलः । ज्योतिर्मयः प्राणः सूर्यः "प्राणः प्रजानामुदयत्येष सूर्यः" ( प्रश्नो० १ । ८ ) सलिलात् सलिलादिव सरणशीलाज्जगतः—एकः पादो यस्तस्य प्रसिद्धस्तं नोत्खिदति नोद्धरति नोत्थापयति—उच्चरन्—ऊर्ध्वं गच्छन् । अस्मिन् पार्श्वे नास्ति तर्हि

परस्मिन् पार्श्वे तु तस्य पादोऽस्ति । तस्य पादस्तु स्थिर एव पृथिव्या अस्मिन् पार्श्वे वा परस्मिन् पार्श्वे भवति पृथिव्या भ्रमणात् । अत्र हे जिज्ञासो ! यदि स तमुत्खिदेत्—उद्धरेदुत्थापयेत्, नाद्य—सम्प्रतिकालो न श्वो न परकालः स्यात्, न रात्रिः स्यान्न आहर्भवेत्, न कदाचन व्युच्छेदुषाः प्रातर्वेला स्यात् ।

उक्तमन्त्रे—आदित्यस्यैकः पादो दर्शितो येन स एकपात् । अत्र 'अजः' इति शब्दो विशेषणभूतो नास्ति । 'अजः' इति विशेषणयुक्त एकपाद् यस्तद्विषये कथयति—

तस्यैष निपातो भवति वैश्वदेव्यामृचि—

"पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः । विश्वे देवासः शृणवन् वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥" (ऋ० १०।६५।१३)

पविः शल्यो भवति यद्विपुनाति कायं तद्वत्पवीरमायुधं तद्वानिन्द्रः पवीरवान् ।

"अतितस्थौ पवीरवान्" ( ऋ० १० । ६० । ३ ) इत्यपि निगमो भवति । तद्देवता वाक् पावीरवी, पावीरवी च दिव्या वाक्, तन्यतुस्तनित्री वाचोऽन्यस्या अजश्चैकपाद् दिवो धारयिता च सिन्धुश्चापश्च समुद्रियाश्च सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु वचनानीमानीति ॥

भा०—तस्य 'अज एकपात्' इत्यस्य वैश्वदेव्यां विश्वदेवदेवत्यायामृचि निपातोऽस्वतन्त्रदेवतात्वेन प्रयोगोऽस्ति । स मन्त्रः "पावीरवी तन्यतु·····।" मन्त्रगतं 'पावीरवी' इति शब्दं प्रथमं निर्ब्रवीति यत् पविः शल्यो भवति लोहक-शल्यं भवति यत् कायं विपुनाति छिनत्ति विदारयति, तद्वत्—मतुपि 'पवीरम्' इरन् मत्वर्थीयश्छान्दसः "काण्डाण्डादीरन्नीरचौ" ( अष्टा० ५ । २ । १११ ) पवीरमायुधं तद्वान् पवीरवान् भवतीन्द्रः । इन्द्रः पवीरवान्—इति मन्त्रे दर्शितम्, मन्त्रः "अतितस्थौ पवीरवान्०" प्रथमं च व्याख्यातव्यः ।

सम्प्रति मन्त्रस्तदर्थश्च—

यो जनान् महिषाँ इवातितस्थौ पवीरवान् ।

उतापवीरवान् युधा ॥

य इन्द्रः पवीरवान्—आयुधवान् महिषान् महतो जनान् योद्धन् । 'इव' अनर्थकः "इवोऽपि दृश्यते" ( निरु० अ० १ । खं० ११ ) युधा युद्धेन—अतितस्थौ—अतिक्रम्य तिरस्कृत्य तिष्ठति, अपीरवान् सन्नपि ।

इत्थं पवीरवान्—इन्द्रः । तद्देवता वाक्—तस्य सम्बन्धिनी देवता वाक् पावीरवी, पावीरवी वाक् च सा दिव्या वाक् ।

अथ यास्कोदाहृतस्य "पावीरवी तन्यतु०" इति मन्त्रस्यार्थः—

पावीरवी दिव्या वाक् स्तनयित्नुलक्षणा तन्यतुः—तनित्री तनयित्री विस्तारयित्री कस्येति जिज्ञासायाम्—अन्यस्या वाचो विस्तारयित्री, उक्तं हि पूर्वम् "तां विश्वरूपाः पशवो वदन्ति" ( निरु० ११ । २९ ) एकपात्—अजः, अज एकपाद् यः खलु दिवो द्युलोकस्य धर्ता धारयिताऽऽदित्यः सिन्धुः स्यन्दनशीलो मेघः, समुद्रियाः समुद्रगामिन्य आपो वृष्टिधाराः, विश्वेदेवाः सर्वे देवाः—ऋतवः "ऋतवो वै विश्वेदेवाः" ( शत० ७ । १ । १ । ४३ ) सरस्वती—सर उदकं तद्वती माध्यमिका खलूदकस्वामिनी द्योतमाना विद्युत्, इत्येते देवाः किल धीभिः कर्मभिः सह प्रयुक्तानि "धीः कर्मनाम" ( निघं० २ । १ ) पुरन्ध्या स्तुत्या सह प्रयुक्तानि वचांसि वचनानि शृण्वन्तु—स्वीकुर्वन्तु खल्वभीष्टपूर्तये सुखशान्तिप्रदानाय ॥

'अज एकपात्' इति देवतापदं निपातरूपेण बहुदेवत्यासु खल्वृक्षु त्वनेकत्रागच्छति, यथा "शन्नो अज एकपाद् देवो अस्तु०" ( ऋ० ७ । ३५ । १३ ) तथा ( ऋ० २ । ३१ । ६, ६ । ५० । १४, १० । ६४ । ४, ६६ । ११ ) यास्केनोदाहरणाय—एतानि स्थलान्युपयुक्तानि न मतानि यतोऽत्र नामधेयेनैव वर्णनमस्ति न स्वरूपमुच्यते, यास्कोदाहृते मन्त्रे तु स्वरूपमुक्तमस्ति "एकपादजो दिवो धर्ता" इति 'दिवो धर्त्ता' विशेषणं तत्स्वरूपं वर्णयति, द्युस्थानश्च स इत्यपि स्पष्टम् ॥

पृथिवी ॥ २९ ॥

पृथिवी व्याख्याता ॥ ३० ॥

तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि—

"यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥" ( ऋ० १ । १०८ । १० )

इति सा निगदव्याख्याता ।

भा०—'पृथिवी' इति द्युस्थानं देवतापदम्। पृथिवी व्याख्याता "दर्शनेन पृथुः" ( निरु० अ० १ ख० १४ ) तस्या निपातोऽस्वतन्त्रदेवतात्वेनैन्द्राग्नेये मन्त्रे प्रयोगोऽस्ति।

मन्त्रार्थः—

हे वृषणौ सुखवृष्टेः कर्तारौ—इन्द्राग्नी तापप्रसारणशक्तिमयौ देवौ ! युवां परमस्यामुत्तमायां पृथिव्यां द्युलोकरूपायां द्युलोके, मध्यमस्यां मध्यमायां पृथिव्यामन्तरिक्षरूपायामान्तरिक्षेऽथावमस्यामस्यामेव भूम्यामपि स्थः, युवामत्रास्मिन् यज्ञे सोमयागे पर्यायातं परितः सर्वत आगच्छतम्, आगत्य सुतस्य सोमस्य—सुतं सोममौषधं रसं सारं वृष्टिहेतवे होतव्यं पिबतं सेवथामुपयुक्तं कुरुतम्। अत्र पृथिवी 'परमा पृथिवी' द्यौरेव॥

समुद्रः॥ २०॥

समुद्रो व्याख्यातः॥ २१॥

तस्यैष निपातो भवति पावमान्यामृचि—

"पुवित्र॑वन्तः॒ परि॒ वाच॑मासते पि॒तैषां॑ प्र॒त्नो अ॒भि र॑क्षति व्र॒तम्। म॒हः स॑मु॒द्रं वरु॑णस्ति॒रो द॑धे॒ धीरा॑ इच्छेकु॒र्धरु॑णेष्वा॒रभ॑म्॥" ( ऋ० ९। ७३। ३ )

पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचम्। मध्यमः पितैषां प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म। महः समुद्रं वरुणस्तिरोन्तर्दधात्यथ धीराः शक्नुवन्ति धरुणेषूदकेषु कर्मण आरभमारब्धुम्॥

भा०—'समुद्रः' इति द्युस्थानं देवतापदम्। समुद्रो व्याख्यातः "समुद्रवन्त्यस्मात्...." ( निरु० अ० २ ख० १० )। तस्य निपातोऽस्वतन्त्रो देवतात्वेन प्रयोगो भवति पवमानसोमदेवत्ये मन्त्रे।

मन्त्रार्थः—

पवित्रवन्तो रश्मिवन्तः—रश्मिमन्तः "रश्मयः पवित्रमुच्यन्ते" ( निरु० अ० ५। ख० ६ ) रश्मिमन्तो रश्मियुक्ता माध्यमिका देवगणा अभ्रमेघमरुतः, रश्मिभिरुत्थापिता ह्यापोऽभ्राणि भवन्ति पुनर्मरुद्भिर्धार्यमाणा मेघाः सम्पद्यन्ते, एवमभ्रमेघमरुतो माध्यमिका देवगणाः संक्षेपेण जलकणा रश्मिमन्तो वाचं माध्यमिकां वाचं विद्युतं वैद्युतशक्तिं परिवार्यासते तस्याः परितः संसृज्यन्ते संसर्गं कुर्वन्ते ताम् खल्वेषां पिता पाता पुराणः पूर्वतो वर्तमानो मध्यमो वरुणोऽपां

स्वामी सूक्ष्मजलयुक्तो वायुर्वृष्टेः प्रेरको देवो व्रतं कर्म वृष्टिकर्माभिरक्षति । स वरुणोऽपां स्वामी सूक्ष्मजलयुक्तो वायुर्महान्तं समुद्रं द्युस्थानं देवमादित्यं तिरोदधेऽन्तर्दधाति–आदित्यमाच्छादयति, अथानन्तरं वृष्टिर्भवति, धरुणेषु वृष्टेषूदकेषु धीराः कर्मण आरभं शेकुः कृष्यादिकर्मारब्धुं शक्नुवन्ति । "धरुणमुदकनाम" ( निघ० १ । १२ ) 'आरभम्' आङ्पूर्वात् "रभ राभस्ये" ( भ्वादि० ) ततस्तुमर्थे छान्दसः कः प्रत्ययः, नुमोऽभावश्च ॥

अज एकपाद् व्याख्यातः । पृथिवी व्याख्याता । समुद्रो व्याख्यातः ॥ ३२ ॥

तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि—

"उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥" ( ऋ० ६ । ५० । १४ )

अपि च नोऽहिर्बुध्न्य शृणोत्वजश्चैकपात् पृथिवी च, समुद्रश्च, सर्वे च देवाः सत्यवृधो वा, यज्ञवृधो * वा, हूयमाना मन्त्रैः स्तुता मन्त्राः कविशस्ता अवन्तु मेधाविशस्ताः ॥

भा०—अस्मिन्नेव खण्डे 'अज एकपात्' द्युस्थानो व्याख्यातः, 'पृथिवी' द्युस्थाना व्याख्याता, 'समुद्रः' द्युस्थानो व्याख्यातः । तेषां निपातोऽकेवलदेवतात्वेन प्रयोगोऽस्मिन् बहुदेवत्ये मन्त्रेऽस्ति ।

मन्त्रार्थः—

उतापि बुध्न्योऽहिः–आन्तरिक्षोऽहिर्मेघः, अज एकपात्–अस्तङ्गत आदित्यः पृथिवीगोलस्यैकस्मिन् पार्श्वे गतः, पृथिवी–परमा पृथिवी द्यौः, समुद्रः–रश्मीनां समुत्प्रेरक आदित्यो दिविस्थितो नोऽस्मान् शृणोतु–आश्रृणोत्वङ्गीकरोतु यद्वाऽस्माकमभीष्टं सुवृष्टिप्रकाशादिकार्थं याचनं स्वीकरोतु, ऋतावृधः सत्यस्य वर्धयितारो यद्वा यज्ञस्य वर्धयितारो विश्वे देवाः सर्वे देवाः–ऋतवः "ऋतवो वै विश्वे देवाः" ( शत० ७ । १ । १ । ४३ ) तेऽपि हुवाना अस्माभिर्हूयमानाः सेव्यमानास्तथा ये कविशस्ताः–मेधाविप्रेरिता ऋत्विग्भिरुच्चारिता मन्त्रास्तैर्मन्त्रैः स्तुताश्च नोऽस्मानवन्तु रक्षन्तु ॥

---

* 'उदकवृद्धो वा' इति पाठान्तरम् ।

दध्यङ् ॥ २१ ॥

दध्यङ् प्रत्यक्तो ध्यानमिति वा प्रत्यक्तमस्मिन् ध्यानमिति वा ।

अथर्वा ॥ २२ ॥

अथर्वा व्याख्यातः ।

मनुः ॥ २३ ॥

मनुर्मननात् ॥ ३३ ॥

तेषामेष निपातो भवत्यैन्द्र्यामृचि—

"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।

तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥" ( ऋ० १ । ८० । १६ )

यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत तस्मिन् ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च सङ्गच्छन्तामर्चन्योऽनूपास्ते स्वाराज्यम् ॥ ३४ ॥

भा०—'दध्यङ्' इति द्युस्थानं देवतापदम् । दध्यङ् ध्यानं प्रत्यक्तः प्रतिगतः प्राप्तो यः । यद्वा ध्यानं प्रत्यक्तं प्रतिगतमस्मिन् सः । उभयत्र ध्यानशब्दोपपदात् "अञ्चु गतिपूजनयोः" ( भ्वादि० ) गत्यर्थोऽत्र गृह्यते । क्विन् प्रत्ययश्छान्दसो भूते काले "क्विन्प्रत्ययस्य कुः" ( अष्टा० ८ । २ । ६२ ) पूर्वत्र कर्तरि क्विन्, उत्तरत्राधिकरणे । पृषोदरादित्वाद् रूपसिद्धिः । ध्यानशब्दस्य दधिभावः ॥ 'अथर्वा' इति द्युस्थानं देवतापदम् । अथर्वा व्याख्यातः "थर्वति गतिकर्मा तत्प्रतिषेधः" ( निरु० अ० ११ । ख० १८ ) ॥ 'मनुः' द्युस्थानं देवतापदम् । मनुर्मननात् । "मनु अवबोधने" ( तनादि० ) ततः "शस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" ( उणा० १ । १० ) त्रयोऽपि भिन्नभिन्नार्थविधानाद् भिन्नभिन्नतयाऽऽदित्यस्य वाचकाः । दध्यङ् ध्यानी जन इव रसाहरणे ध्यानकारित्वात् स आदित्यो दध्यङ् । थर्वति गतिकर्मा तस्य प्रतिषेधात् सोऽचलः—आदित्यः—अथर्वा । मनुः—अवबोधयिता प्रकाशेन जनानां प्राणिनाम् । तेषामत्र स्वतन्त्रदेवतात्वेनैन्द्रे मन्त्रे प्रयोगः ।

मन्त्रार्थः—

'तस्मिन्' शब्दः साकाङ्क्षः स आकाङ्क्षति 'यस्मिन्' इति शब्दम् । तद्विशेष्यश्च 'इन्द्रे' इति शब्दः । यस्मिन्निन्द्रे राज्ञि राष्ट्रपती भूपती नृपती वा,

अथवा अर्केन्द्रे स्थितोऽर्को य आदित्यः स्वाश्रयेऽन्येभ्योऽबलत्वशक्तिप्रदः, मनुः पिता अग्रकाशेन प्राणिनो बोधयिता तमसः पाता—त्राता—आदित्यः, दध्यङ् रसाकर्षाहरणे लोकानामाकर्षणे प्राप्तध्यानो नियतकृत्यः—आदित्यः। यां धियं यां प्रज्ञां स्थिरत्वज्ञानध्यानात्मिकां बुद्धिमतनुत विस्तारितवन्तः तन्वन्ति प्रसारयन्ति प्रवेशयन्ति अनास्तस्मिन् पूर्वथा पूर्वः स चेन्द्रः पूर्वेन्द्रस्तस्मिन्निति पूर्वेन्द्रे श्रेष्ठे—इन्द्रे, तथाविधगुणवन्तं प्राप्य तस्मिन् हे राजाभिषेकस्य कर्तारः-ऋत्विजः प्रजाजनाः! ब्रह्माणि कर्माणि वेदोक्तानि कर्माणि—उक्थानि प्रशस्तानि मन्त्रात्मकानि वचनानि स्तोत्राणि च समग्मत सङ्गच्छन्तां फलन्तु फलन्ति, स इन्द्रो राजाऽर्चन् परमात्मानं तान् गुणांश्चार्चयन् स्तुवन् धारयन् स्वाराज्यं स्वराजत्वं स्वाराज्यफलमनुपास्तेऽनुकूलत्वेनोपास्ते सेवते।

निरुक्तयः—'अतत' "तनु विस्तारे" (तनादि०) ततो लङि प्रथमबहुवचनम् "बहुलं छन्दसि" (अष्टा० २।४।७३) इति विकरणस्य लुक् "तनिपत्योश्छन्दसि" (अष्टा० ६।४।९९) इत्युपधालोपः। 'समग्मत' सम्पूर्वाद् गमधातोर्लुङि "समो गम्यृच्छिभ्याम्" (अष्टा० १।३।२९) इत्यात्मनेपदम्, "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" (अष्टा० २।४।८०) इति च्लेर्लुक्। "गमहनजनखनघसां लोपः क्ङित्यनङि" (अष्टा० ६।४।९८) उपधालोपः॥

इति द्वादशाध्यायस्य तृतीयः पादः।

---

## चतुर्थः पादः

---

अथातो द्युस्थाना देवगणाः।
तेषामादित्याः प्रथमागामिनो भवन्ति।
आदित्याः॥ ३४॥
आदित्या व्याख्याताः॥ ३५॥
तेषामेषा भवति—
"इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि। शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः॥" (ऋ० २।२७।१)
घृतस्नूर्घृतप्रस्राविण्यः, घृतसारिण्यः, घृतसानिन्य इति वा।

आहुतीरादित्येभ्यश्चिरञ्जुह्वा जुहोमि चिरं जीवनाय चिरं राजभ्य इति वा, शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोंऽशश्च। अंशोंऽशुना व्याख्यातः ॥

भा०—अथेदानीमितो द्युस्थाना देवगणा बहुवचनेन प्रोच्यमानाः स्वरूपेण बहुसंख्यकाः स्वतरङ्गैरवयवैः सजातीयैर्वा प्रवर्तमानास्ते तथाभूताः—वक्ष्यन्ते। तेषामादित्याः पाठक्रमानुरोधेनोपयोगक्रमानुरोधेन च प्रथमागामिनः प्राथम्यं प्राप्यमाणाः सन्ति। आदित्या व्याख्याताः "आदित्य आदत्ते रसान्...." (निरु० अ० २। खं० १३) अत्र बहुवचने—आदित्याः। तेषाम् "इमा गिरः...." इति मन्त्रः।

मन्त्रार्थः—

आहुतीः—घृतस्नूः—घृतप्रस्राविण्यः—घृतं प्रस्रावयन्ति यास्ताः, घृतसारिण्यः—या घृतं सारयन्ति च्यावयन्ति ताः, यद्वा घृतसानिन्यः—या घृतं सनयन्ति सम्भाजयन्ति ता आहुतीः—राजभ्यो राजमानेभ्यः सनात्—चिरात् प्रकाशमानेभ्यः—आदित्येभ्यो जुह्वा स्रुचा जुहोमि, सनात्—चिरं यावज्जीवनं वा जुहोमि। ते खल्वादित्याः—मित्रः, अर्यमा, भगः, तुविजातो बहुजातो धाता, दक्षः, वरुणः, अंशः, आदित्यश्चैते सर्वे पूर्वं व्याख्याताः, अंशस्तु खल्वंशुना व्याख्यातो विज्ञेयः "अंशुः शमष्टमात्रो भवति, अननाय शम्भवतीति वा" (निरु० अ० २ खं० ५) एतेषां प्रत्येकं नोऽस्माकं गिरो वाचोऽभीष्टसाधनाय प्रार्थनाः स्तुतीर्वा शृणोतु स्वीकरोतु पूरयतु।

निरुक्तयः—'घृतस्नूः' घृतशब्दोपपदात् "ष्णु प्रस्रवणे" (अदादि०) ततः क्विप्—घृतस्नुः, पुनः स्त्रियाम् "ऊङुतः" (अष्टा० ४। १। ६६) इत्यूङ्॥

सप्त ऋषयः ॥ २५ ॥

सप्त ऋषयो व्याख्याताः ॥ ३६ ॥ तेषामेषा भवति—

"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम्। सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ॥" (यजु० ३४। ५५)

सप्त ऋषयः प्रतिहिताः शरीरे रश्मय आदित्ये सप्त रक्षन्ति सदमप्रमादं संवत्सरमप्रमाद्यन्तः सप्तापनास्त एव स्वपतो

लोकमस्तमितमादित्यं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्यावित्यधिदैवतम् ।

अथाध्यात्मम्—सप्त ऋषयः प्रतिहिताः शरीरे षडिन्द्रियाणि विद्या सप्तम्यात्मनि सप्त रक्षन्ति सदमप्रमादं शरीरमप्रमाद्यन्ति सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्त्यत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ प्राज्ञश्चात्मा तैजसश्चेत्यात्मगतिमाचष्टे ॥ ३७ ॥

भा०—'सप्त ऋषयः' द्युस्थानो देवगणः । सप्त ऋषयो व्याख्याता अवयवशः "सप्त सृप्ता संख्या" ( निरु० अ० ४ खं० २६ ) "ऋषिर्दर्शनात्" ( निरु० अ० २ खं० ११) अत्र तु जगति सर्पणशीला दृश्यमाना दर्शनहेतवो रश्मयो द्युस्थाना आधिदैविके क्षेत्रे । विषयेषु सर्पणशीलानि विषयाणां दर्शयितृणीन्द्रियाणि द्युसदृशे शिरसि स्थितानीत्याध्यात्मिके क्षेत्रे ।

मन्त्रार्थः—

सप्त ऋषयो रश्मयः शरीरे—आदित्ये प्रतिष्ठिताः सन्ति, सप्त रश्मयः सदं संवत्सरमप्रमाद्यन्तो रक्षन्ति सप्त—आपना व्यापनशीला रश्मयः स्वपत आदित्यस्यास्तं गच्छतस्तस्य लोकमस्तं मण्डलमीयुर्यन्ति, अत्र यावस्वप्नजौ न स्वप्नो जायते ययोस्तौ सत्रसदौ यज्ञसादिनौ वाय्वादित्यौ जागृतः । इत्यधिदैवतम् ।

अथाध्यात्मम्—सप्त ऋषयः षडिन्द्रियाणि मनःसहितानि चक्षुरादीनि विद्या—बुद्धिश्च सप्तमी शरीरे देहे प्रतिहितानि प्रतिष्ठतानि सदं शरीरं बाल्यमप्रमाद्यन्ति रक्षन्ति सप्तेमान्येवापनानि विषयेषु व्यापनशीलानि स्वपतो जीवात्मनो लोकमस्तमितमात्मानं यन्ति, अत्रास्वप्नजौ सत्रसदौ शरीरयज्ञसदौ देवौ प्रज्ञात्मा तैजसश्चात्मा प्राणश्च जाग्रतः ॥

तेषामेषापरा भवति—

"तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥ *"

तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन् यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुरित्यधिदैवतम् ।

* "....तस्मिन् यशो....तदासत....' इति पाठो अथर्ववेदे (अथर्व० १०।८।९)

अथाध्यात्मम्-तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन् यशो निहितं सर्वरूपमत्रासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तॄणि महतो बभूवुरित्यात्मगतिमाचष्टे ॥

मन्त्रार्थः—

भा०—तिर्यग्बिलो रश्मीनां प्रसारणाय तिर्यञ्चि बिलानि प्रेरणानि यस्मिन् स चमसो रसानां चमिता-अत्ता ग्रहीता "चमु अदने" ( भ्वादि० ) "अत्यविचमि'''महिभ्योऽसच्" (उणा० ३।११७) अनेन-असच् । स आदित्य ऊर्ध्वबुध्नः-ऊर्ध्वं दिवि बुध्नं बन्धनं यस्य तथाभूतो यद्वा-ऊर्ध्वः सन् बोधनः स्वप्रकाशेन बोधयिता यस्मिन् सर्वरूपं सर्वान् रूपयति निरूपयतीति सर्वरूपं यशो यशस्करं तेजो निहितमस्ति-अत्रास्मिन्नादित्ये सप्त रश्मयः सहासते तिष्ठन्ति । अस्य महत आदित्यस्य ये गोप्तारः परित आवरकाः सन्ति । इत्यधिदैवतम् ।

अथाध्यात्मम्—तिर्यग्बिलः-अनूर्ध्वबिलः-इन्द्रियाणां विषयेषु प्रेरणाय प्राप्तो निम्नछिद्रश्चमसः-इन्द्रियाणां विषयरसानां प्रापयिता चमसो देह ऊर्ध्वबुध्न ऊर्ध्वबन्धनः शिरोरूपं बुध्नं यस्य तथाभूत ऊर्ध्वः सन् बोधनो बोधयिता, यस्मिन् यशो यशस्करं ज्ञानं सर्वरूपं सर्वस्तुजातस्य स्वरूपं निरूपयति तत्-निहितमस्ति । अस्य महत इन्द्रियेभ्यो महत्त्वमापन्नस्येन्द्रियाणि गोप्तॄणि बभूवुर्भवन्ति ॥

देवाः ॥ २६ ॥

देवा व्याख्याताः ॥ ३८ ॥ तेषामेषा भवति—

"देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥" ( ऋ० १ । ८९ । २ )

देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृतुगामिनामिति वा, देवानां दानमभि नो निवर्ततां देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरञ्जीवनाय ॥

भा०—'देवाः' इति बहुस्थानं गणदेवतापदम् । देवा व्याख्याताः "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा" ( निरु० अ० ७ खं० १५ ) अत्र देवाः सूर्यरश्मयः "देवा उदिताः सूर्यस्य" ( ऋ० १ । ११५ । ६ )

मन्त्रार्थः—

वयं देवानां सूर्यरश्मीनामृजूयतामृजुगामिनामृजुगतिमतां सर्वेभ्यः समानभावेन प्रकाशप्रदानाय गच्छतां यद्वा—ऋतुगामिनामृतूननु गच्छतां यथर्तु प्रगतिं कुर्वतां सुमतौ कल्याण्यां मतौ स्याम तदुपयोगात् कल्याणं प्राप्नुयाम । तथा तेषां देवानां रातिर्दानं च नोऽस्मान् प्रति निवर्तताम् निवर्तेत नितरां प्राप्नुयात् । वयं तेषां सख्यं समानख्यानं तद्वत्प्रकाशवत्त्वं ज्ञानप्रकाशेन प्रकाशवत्त्वमुपसीदेमोपगच्छेम, ते देवा रश्मयो जीवसे दीर्घजीवनाय नोऽस्माकमायुः प्रतिरन्तु प्रवर्धयन्तु ।

'मनुष्यवद्देवताभिधानम्' इति वचनाद् ये मनुष्या ज्ञानप्रकाशवन्त ऋजवः सन्ति ते देवास्तेषां सुमतिर्जनेभ्यः कल्याणकरी स्यात् तत्र जनैर्वर्तितव्यं च ।

निरुक्तिः—'ऋजूयताम्' यास्कमते 'ऋजु' यद्वा 'ऋतु' उपपदात् 'इण् गतौ' धातोः शतृप्रत्यये षष्ठ्यां रूपम्, ऋजूभावश्च ।

अदैवतत्वे प्रयोगः—"त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् । त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥" (ऋ० १।११।५) इन्द्रदेवत्ये नामधेयेन ।

विश्वेदेवाः ॥ २७ ॥

विश्वेदेवाः सर्वे देवाः ॥ ३९ ॥ तेषामेषा भवति—

"ओमासश्चर्षणीधृतो विश्वे देवास आ गत ।

दाश्वांसो दाशुषः सुतम् ॥" ( ऋ० १ । ३ । ७ )

अवितारो वावनीया वा, मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति ॥

भा०—'विश्वेदेवाः' इति द्युस्थानं गणदेवतापदम् । विश्वेदेवाः सर्वे देवाः सर्वदेवगुणसम्पन्नाः, यद्वा तेषां श्रेष्ठ्यात् सर्वे देवाः—विश्वेदेवाः सूर्यरश्मयः "एते वै विश्वेदेवा यत्सर्वे देवाः" ( गो० उ० १ । २० ) "एते वै रश्मयो विश्वेदेवाः" ( शत० १२ । ४ । ४ । ६ ) ।

मन्त्रार्थः—

हे—ओमासोऽवितारोऽवनीया रक्षणीया वा चर्षणीधृतश्चर्षणीनां मनुष्याणां धारकाः "चर्षणयः—मनुष्यनाम" ( निघं० २ । ३ ) विश्वेदेवाः सूर्यरश्मयो दाश्वांसो दत्तवन्तः पूर्वत एव दत्तदानाः प्रकाशादिदानं कृतवन्तो यूयं दाशुषो दत्तवतो हविष्कृतो यजमानस्य सुखवृष्टिकामस्य सुतं सम्पादितं हविः सेवनायागच्छत प्राप्नुत ।

निरुक्तय:—'ओमासः' "अव रक्षणे" (भ्वादि०) ततः "अविसिविसि-शुषिभ्यः कित्-मन्" (उणा० १ । १४४) मन् प्रत्ययः । "ज्वरत्वरस्रिव्य-विमवामुपधायाश्च-ऊठ्" (अष्टा० ६ । ४ । २०) ऊठि कृते पुनर्गुणो बाहुल-कात्, ओमाः-ओमासः "आज्जसेरसुक्" (अष्टा० ७ । १ । ५०) । 'आगत' आङ्पूर्वात् "गम्लृ गतौ" (भ्वादि०) ततो लोटि मध्यमबहुवचने "बहुलं छन्दसि" (अष्टा० २ । ४ । ७३) शपो लुक् "अनुदात्तोपदेशवनतितनोत्या-दीनामनुनासिकलोपो झलि क्ङिति" (अष्टा० ६ । ४ । ३७) ।

तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिद् बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्व-लिङ्गमिति शाकपूणिः । अनत्यन्तगतस्त्वेष उद्देशो भवति बभ्रुरेक इति दश द्विपदा अलिङ्गाः । भूतांशः काश्यप आश्विनमेकलिङ्गम् । अभितष्टीयं सूक्तमेकलिङ्गम् ॥

भा०—तदिदमेव वैश्वदेवं गायत्रीछन्दस्कं तृचमृचां त्रिकं दशतयीषु दशमण्ड-लविभक्तास्वृक्षु-ऋग्वेदेऽस्ति । यदपि किञ्चिद् बहुदैवतं सूक्तं भवेत् तत् सूक्तं वैश्वदेवानां विधीनां स्थाने प्रसङ्गे यज्ञे कर्मकाण्डे युज्यते विनियुज्यते पठ्यते वा, इति यास्कमतम् । यदेव विश्वलिङ्गं साक्षाद् विश्वशब्दयुक्तं तदेव युज्येत पठ्येतेति शाकपूणिर्मन्यते । इदं मतं यास्को निराकरोति यदेष उद्देशः पक्षोऽनत्यन्त-गतोऽनैकान्तिकः, अत्यन्तगतः पूर्णत्वं गतो यथार्थः सिद्धः, नात्यन्तगतोऽनत्यन्त-गतोऽसिद्धोऽयुक्तो व्यभिचरितः । यतः "बभ्रुरेको विषुणः सूनरो" (ऋ० ८ । २९) इति दश द्विपदा ऋचोऽलिङ्गाः सन्ति तासु "योनिमेकः····" (२) "वाशीमेको····" (३) "वज्रमेको····" (४) "सद्यो द्वा चक्राते····" (९) "अर्चन्त एके····" (१०) इत्येकः, एकः, सप्तकृत्वः द्वा, इति द्विः, एके-इत्येवोक्तमस्ति न देवता निर्दिष्टाऽस्ति परन्तु तत्सूक्तं वैश्वदेवमस्ति । "वैश्व-देवं····बभ्रुर्दश" (ऋग्वेदीयसर्वानुक्रमणी) "उभा उ नूनं····" (ऋ० १०।१०६) इति सूक्तम् "उभौ भूतांशः काश्यप आश्विनम्" (ऋग्वेदीयसर्वानुक्रमणी) आश्विनमस्ति तदेतल्लिङ्गमपि, एकस्यामेवान्तिमायामेकादश्यामृचि हि लिङ्गं देव-ताया अस्ति "यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ।" (११) तथा-अभितष्टीयं सूक्तमेकलिङ्गम् "अभितष्टेव····" (ऋ० ३ । ३८) "अभितष्टेव दश····इन्द्रः" (ऋग्वेदीयसर्वानुक्रमणी) इन्द्रदेवत्यं सूक्तमस्ति तत्रान्तिमायामेव दशम्यामृचि हि लिङ्गमिन्द्रस्य "शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।" (ऋ० ३ । ३८ । १०) ।

अदेवतात्वे प्रयोगः—"आ वां रथं दुहिता सूर्यस्य काष्मेवातिष्ठदर्वता जयन्ती। विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥" (ऋ० १ । ११६ । १७) आश्विने सूक्ते ॥

साध्याः ॥ २८ ॥

साध्या देवाः साधनात् ॥ ४० ॥

तेषामेषा भवति—

"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥" (ऋ० १ । १६४ । ५०)

यज्ञेन यज्ञमयजन्त देवाः। अग्निनाग्निमयजन्त देवाः। 'अग्निः पशुरासीत्तमालभन्त तेनायजन्त' इति च ब्राह्मणम्। 'तानि धर्माणि प्रथमान्यासन्' ते ह नाकं महिमानः समसेवन्त * यत्र पूर्वे साध्याः सन्ति देवाः साधनाः †। द्युस्थानो देवगण इति नैरुक्ताः। पूर्वं देवयुगमित्याख्यानम् ॥

भा०—'साध्याः' इति द्युस्थानं गणदेवतापदम्। साध्याः—देवाः साधनात्—साधकाः "साध संसिद्धौ" (स्वादि०) "ऋहलोर्ण्यत्" (अष्टा० ३।१।१२४) "कृत्यल्युटो बहुलम्" (अष्टा० ३ । ४ । ११३) इति कर्तरि ण्यत् प्रत्ययः। अत्र द्युस्थानप्रसङ्गे ते साध्याः सूर्यरश्मयः सन्ति। सूक्ते च साध्यास्ताद्दशैर्द्दिव्यपदार्थैः सह पठ्यन्ते साध्याः 'संवत्सरात्मा कालः, सरस्वती, सूर्यः' एते पूर्वं पठ्यन्ते तथा 'पर्जन्यः, द्यौः, सरस्वान् आदित्यः' एते पश्चात् पठ्यन्ते मध्ये साध्याः। तस्मात् ते सूर्यरश्मयः। तथा "साध्याः—रश्मिनाम" (निघ० १।५)।

मन्त्रार्थः—

देवाः सूर्यरश्मयो यज्ञेनाग्निना सौरेण तेजसा यज्ञमग्निं पार्थिवमग्निमयजन्तावर्धयन्त तानि धर्माणि कर्माणि प्रथमान्यासन्, यतः पूर्वं मनुष्या याजका नासन्, न च यजनीयः पशुः पाकोऽग्निपक्वः पुरोडाश आसीत् "पशवो वै पुरोडाशः" (तां० २१।१०।१०, तै० १।८।३।३) तदा सौरोऽग्निरेव पुरोडाश आसीत् "अग्निः पशुरासीत् तेनायजन्त" (तै० सं० ५ । ७ । २६) ते ह

---

* 'संसेव्यन्त' इति क्वचित्।

† 'साधनात्' इति क्वचित्।

महिमानो महत्त्ववन्तो नाकं दिवं द्युलोकं सचन्त समसेवन्त यत्र पूर्व साध्याः साधनाः साधका देवाः—आदित्ये तेनादित्येन सह रश्मिप्रचारात् पूर्वं निहिताः सन्ति—आसन्। साध्याः—द्युस्थानो देवगणः, इति नैरुक्ताः। पूर्वं देवयुगम्—इत्याख्यानमाख्यानी—आलङ्कारिकी चर्चा। भवतु सा खल्वाध्यात्मिकी चर्चा तत्रेत्थं व्याख्यातुं युज्यते मन्त्रो यत्—

देवाः—आदिविद्वांसो वैदिकपरमर्षयोऽग्निप्रभृतयो मानसेनाऽध्यात्मेन यज्ञेन यज्ञं यजनीयं परमात्मानमयजन्त तानि धर्माणि—अग्निहोत्राणि—अध्यात्मकर्माणि प्रथमान्यासन् तेषामनुष्ठातारस्ते देवा मुमुक्षवो महत्त्वप्राप्ता नाकम्—अकं दुखं यत्र न तं मोक्षं सचन्त सेवन्ते यत्र पूर्वे साध्याः सिद्धाः सन्ति विराजन्ते।

अदेवतात्वे प्रयोगाः—"अहमेवास्म्यमावास्या मामावसन्ति सुकृतो मयीमे। मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे॥" ( अथर्व० ७।७९।२ ) अमावास्यादेवत्ये नामधेयेन। "वशायां दुग्धं पीत्वा साध्या वसवश्च ये। ते वै ब्रध्नस्य विष्टपि पयो अस्या उपासते॥" ( अथर्व० १०।१०।३१ ) वशा-देवत्ये नामधेयेन॥

वसवः ॥ २९ ॥

वसवो यद् विवसते सर्वमग्निर्वसुभिर्वासव इति समाख्या, तस्मात् पृथिवीस्थानाः। इन्द्रो वसुभिर्वासव इति समाख्या, तस्मान्मध्यस्थानाः। वसव आदित्यरश्मयो विवासनात् तस्माद् द्युस्थानाः॥ ४१॥ तेषामेषा भवति—

"सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि॥" *

स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि जुषाणाः खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि॥ ४२॥

* उपलब्धशाखासु यथास्थं सर्वः पाठो न लभ्यते। अल्पपाठभेदेन तैत्तिरीय-संहितायां लभ्यते, तत्र—"स्वगा वो देवाः सदनमकर्म य आजग्मुः सवनेदं जुषाणाः॥" (तै० सं० १।४।४४) अवस्पङ्क्तिस्तु यथास्थम्। क्वचिद् विनष्टायाः संहितायाः पाठः स्यात्।

भा०—'वसवः' द्युस्थानं गणदेवतापदम् । वसवः सन्ति त्रिस्थानाः परन्तु देवतात्वं तु द्युस्थाने हि भजन्ते । कस्मादेते वसवो यदेते सर्वं लोकत्रयं यद्वा स्थानत्रयं विवसते विभज्यात्मानं वसते—आच्छादयन्ति । 'वसते' इति वसवः । "वस आच्छादने" ( अदादि० ) ततः "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनि-भ्यश्च—उः" ( उणा० १ । १० ) इति वसधातोः 'उः' प्रत्ययः, बहुवचने वसवः । 'विवसते सर्वम्' इति कथनाद् द्युलोके तमसो विवासनादपि वसवो रश्मयो बहुवचने । कथं सर्वं स्थानत्रयं विवसते वसव इति दर्शयति यास्कः—पृथिवीस्थानोऽग्निर्वासव उच्यते वसुभिः सह सम्बन्धवत्त्वात्—वसुभिर्योगात् तस्याग्नेः 'वासवः' इति समाख्या यौगिकी संज्ञा तस्मात्—अग्नेर्वसुभिः सह सम्बन्धं दर्शयति ब्राह्मणम् "अग्निर्वसुभिरुदक्रामत्" ( ऐ० १ । २४ ) अग्नेः सम्बन्धिनो वसवः पृथिवीस्थानाः । इन्द्रो वसुभिः सह सम्बद्धत्वाद् वासव इति तस्य समाख्या यौगिकी संज्ञा, इन्द्रस्य वसुभिः सह सम्बन्धं दर्शयति ब्राह्मणम् "अथैनम्…इन्द्रं प्राच्यां दिशि वसवो देवा…अभ्यषिञ्चन् साम्राज्याय" ( ऐ० ८।१४ ) । द्युस्थाने तु वसव आदित्यरश्मयो विवासनात् तमसो विवास-नात् तमो विवासयन्ति हि रश्मयस्तस्माद् द्युस्थानाः—द्युस्थाने स्थिताः ।

मन्त्रार्थः—

हे वसव आदित्यरश्मयो देवाः ! युष्मभ्यं सुपथानि सु शोभनाः पन्थानो येषु तानि सुपथानि सुगा सुगानि स्वागमनानि सुगमतया—आगमनं भवति यैस्तानि गवाक्षाख्यानि काचवातायनानि—अकर्म वयमकुर्म कृतवन्तः 'अकर्म' इति विकरणस्य लुक् छान्दसः "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७३ ) 'य आजग्मुः' इति पुरुषव्यत्ययेन प्रथमो मध्यमस्य स्थाने, तैर्यूयमागच्छत इदं सवनम्' वचनव्यत्ययः, इमानि सवनानि यज्ञस्थानानि जुषाणाः सेवमानास्तत्र सर्वे हवींषि खादितवन्तः पीतवन्तो वसूनि स्वास्थ्यसुखवृद्धिरूपाणि धनानि अस्मास्तु धत्त धारयत ॥

तेषामेषापरा भवति—

"ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक् पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥" ( ऋ० ७ । ३९ । ३ )

ज्मया अत्र वसवोऽरमन्त देवा ज्मा पृथिवी तस्यां भवा उरौ चान्तरिक्षे मर्जयन्त गमयन्त शुभ्राः शोभमाना

अर्वाच एनान् पथो बहुजवाः कुरुध्वं शृणुत दूतस्य जग्मुषो नो अस्याग्नेः ॥

भा०—वसूनां स्थानत्रयप्रदर्शिकर्गेषा ।

मन्त्रार्थः—

अत्र उमया उमा पृथिवी "उमा पृथिवीनाम" ( निघ० १ । १ ) तस्यां भवाः ! 'उमया' इति सप्तम्यां याच् प्रत्ययश्छान्दसः "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः" ( अष्टा० ७ । १ । ३९ ) भवार्थे वा यः प्रत्ययश्छान्दसः । हे वसवो देवाः ! यूयमत्र पृथिव्यां रन्त—अरमन्त, उरौ महति विस्तृतेऽन्तरिक्षे मर्जयन्तो गमयन्तः स्वात्मानम् "मार्ष्टि गतिकर्मा" ( निघ० २ । १४ ) उरुक्रयो बहुजवाः शुभ्राः शोभमानाः प्रकाशमानाश्चार्वाक् पथः—अर्वाचः—एनान् पथो मार्गान् पृथिवीस्थानान्तरिक्षस्थानद्युस्थानरूपान् मार्गान् कृणुध्वं कुरुध्वं स्वगमनागमनार्थं सम्पादयत तैर्निरन्तरमागच्छत गच्छत च नोऽस्माकं दूतस्याग्नेरऽग्रगन्तुर्ब्रह्मणो होतुर्युष्मान्—उपयोगार्थं जग्मुषः प्राप्तवतः श्रोत शृणुताभीष्टम् ।

निरुक्तयः—'उरुक्रयः' उरुशब्दोपपदात् "जवति गतिकर्मा" (निघ० २।१४) ततः "सृवः क्रिः" ( उणा० ४ । ६४ ) इति बाहुलकात्—क्रिः प्रत्ययः, उरुक्रिः ।

अदेवतात्वे प्रयोगाः—"तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।" ( ऋ० ७ । १ । २ ) अग्निदेवत्ये । "य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ॥" ( ऋ० १ । ७ । ९ ) इन्द्रदेवत्ये नामधेयेन । "सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ।" ( ऋ० १।१२३।४ ) उषोदेवत्ये नामधेयेन । "अपि ष्टुत सविता देवो अस्तु यमा चिद्विश्वे वसवो गृणन्ति ।" ( ऋ० ७ । ३८ । ३ ) सवितृदेवत्ये ॥

वाजिनः ॥ ३० ॥

वाजिनो व्याख्याताः ॥ ४३ ॥ तेषामेषा भवति—

"शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥" ( ऋ० ७ । ३८ । ७ )

सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे मितद्रवः सुमितद्रवः । स्वर्काः स्वञ्चना इति वा, स्वर्चना इति वा स्वर्चिष इति वा । जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवा देवाश्चा इति वा ॥

भा०—'वाजिनः' इति द्युस्थानं गणदेवतापदम् । वाजिनो व्याख्याताः "वाजी वेजनवान्" ( निरु० अ० २ खं० २८ ) बहुवचनमित्येव विशेषोऽत्र। देवाश्वाः सूर्यदेवस्याश्वा वा रश्मयः ।

मन्त्रार्थः—

वाजिनो रश्मयो देवाश्वाः सूर्यदेवस्याश्वाः, उक्तं ह्यन्यत्र वेदे "भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥" ( ऋ० १ । ११५ । ३ ) मितद्रवः सुमितद्रवः शोभनं मितमेकरसं ये द्रवन्ति गच्छन्ति ते शोभनैकरसगामिनः स्वर्काः स्वञ्चनाः सु शोभनमञ्चनं प्रापणं लक्ष्यस्य येषां ते शोभनगमनोद्देशाः, यद्वा स्वर्चनाः शोभनस्तुतिभागिनः स्वर्चनीयाः, अथवा स्वर्चिषः शोभनार्चिष्मन्तः शोभनदीप्तिकास्ते देवताता देवतातौ यज्ञे "देवताता यज्ञनाम" ( निघं० ३ । १७ ) हवेषु ह्वानेषु—आयोजनेषु नोऽस्मभ्यं शं भवन्तु सुखाः सुखयितारो भवन्तु । तत्कथं सुखा भवन्तु, यत्—अहिं हन्तारं घातकं सर्पं तत्सदृशं विषयुक्तं जन्तुं तथा वृकं स्तेनम् "वृकः स्तेतनाम" ( निघं० ३ । २४ ) रक्षांसि रहसि तमसि यानि क्षिण्वन्ति तानि दंशमशकादीनि सूक्ष्मसत्त्वानि तथाऽमीवाः—रोगकृमिजातीश्च "अमीवा दुर्णामा क्रिमिर्भवति" ( निरु० अ० ६ । खं० १२ ) जम्भयन्तो नाशयन्तः "जभि नाशने" ( चुरादि० ) सनेमि—क्षिप्रमस्मत्तो युयवन्—यावयन्तु दूरीकुर्वन्तु ।

निरुक्तयः—'देवताता'—देवतातिः—देवान् दिव्यगुणान् तनोति येन स यज्ञः, देवशब्दोपपदात् "तनु विस्तारे" ( तनादि० ) ततः क्तिचि "तनोतेर्यकि" ( अष्टा० ६ । ४ । ४४ ) छन्दसि खल्वयकि च नकारस्य—आकारादेशः "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति वचनादविहिताः खल्वपि भवन्ति । पुनः सप्तम्यामाकारादेशश्छान्दसः । स्वर्काः पूर्वं व्याख्याताः 'युयवन्' "यु—अमिश्रणे" ( अदादि० ) णिजन्तात्—लुङि चङि "दीर्घो लघोः" ( अष्टा० ७ । ४ । ९४ ) इति—अभ्यासस्य दीर्घत्वं प्राप्तं तदभावश्छान्दसः, अडभावश्चापि छान्दसः ।

अदेवतात्वे प्रयोगः—"स नो बोधि सहस्य प्रशंस्यो यस्मिन्त्सुजाता इषयन्त सूरयः । यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥" ( ऋ० २ । २ । ११ ) अग्निदेवत्ये ॥

देवपत्न्यो देवपत्न्यः ॥ ३१ ॥

देवपत्न्यो देवानां पत्न्यः ॥ ४४ ॥ तासामेषा भवति—

"देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥" (ऋ० ५ । ४६ । ७)

देवानां पत्न्य उशत्योऽवन्तु नः प्रावन्तु नस्तुजयेऽपत्यजननाय चान्नसंसननाय च याः पार्थिवासो या अपामपि कर्मणि व्रते ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् ॥ ४५ ॥

भा०—'देवपत्न्यः' इति द्युस्थानाः स्त्रीलिङ्गा गणदेवताः । देवपत्न्यो देवानां पत्न्यः पालयितव्याः पालयित्र्यो वा याः शक्तयः ।

मन्त्रार्थः—

याः—देवानां पत्न्यः शक्तय उशत्योऽस्माभिः कामयितव्याः, कर्मणि शतृप्रत्ययो व्यत्ययेन । नोऽस्मानवन्तु तथा तुजये "तुक्—अपत्यनाम" (निघं० २ । २ ) तज्जननाय 'तुक्' उपपदात्—जनधातोः "सर्वधातुभ्य इन्" ( उणा० ४ । ११८ ) डिच्च बाहुलकात् । पूर्वपदस्यान्तलोपः । सोऽपि बाहुलकादेव । वाजसातयेऽन्नसंसननायान्नस्य सम्भजनाय भोजनस्य बलप्राप्तये याः—यूयं पार्थिवासः पृथिवीसम्बन्धिन्यः, अपामन्तरिक्षस्य सम्बन्धिन्योऽपि "आपोऽन्तरिक्षनाम" ( निघं० १ । ३ ) तत्कर्मणि—अन्तरिक्षस्य व्रते वृष्टिकर्मणि "व्रतं कर्मनाम" ( निघं० २ । १ ) ता देव्यः सुहवाः सुह्वानाः साधुभावेनाह्वातव्याः—नोऽस्मान् शर्म शरणं यच्छत यच्छन्तु ।

अदेवतात्वे प्रयोगः—"अस्मा इदु ग्नाश्चिद् देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः । परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥" ( ऋ० १ । ६१ । ८ ) इन्द्रदेवत्ये ॥

तासामेषाऽपरा भवति—

"उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥" ( ऋ० ५ । ४६ । ८ )

अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्न्यग्नाय्यग्नेः पत्न्यश्विन्यश्विनोः पत्नी राट् राजते । रोदसी रुद्रस्य पत्नी वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः

कामयन्तां य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् ॥ ४६ ॥

भा०—तासां देवपत्नीनामेषाऽन्या ऋगस्ति । पूर्वस्यां तु सामान्येनोक्ता अस्यां विशिष्टैर्नामभिः स्तूयन्ते ।

मन्त्रार्थः—

उत–अपि च सामान्यापेक्षया विशिष्टाः खलु ग्नाः स्त्रियः "ग्ना इति स्त्रीणाम्''''गच्छन्त्येनाः" (निरु० अ० ३ खं० २१) देवपत्न्यः कास्ता उच्यन्ते–इन्द्राणी–इन्द्रस्य विद्युद्देवस्य पालयितव्या शक्तिर्धारा, अग्नायी–अग्नेः पत्नी रक्षणीया शक्तिर्ज्वाला, अश्विनी–अश्विनोः शक्तिर्ज्योतीरसमयी च शक्तिः, रोदसी रुद्रस्य पत्नी–स्तनयित्नुदेवस्य गर्जनशक्तिः, वरुणानी वरुणस्य पत्नी पालयितव्या वृष्टिकरणशक्तिः । जनीनां स्त्रीणां मध्ये 'राट्' इति प्रत्येकमभिसम्बध्यते–एकैका गृहे राजमानाऽस्ति, आश्रृणोतु–अस्माकमभीष्टमाश्रृणोतु स्वीकरोतु–अस्माकं गृहे–ऋतुः कालो यो जायानां तदाऽस्माकं पत्नीषु सन्तानप्रजननं व्यन्तु कामयन्ताम् । तथा मनुष्यवद्देवताभिधानादस्माकं पत्नयस्तथा देवपत्न्यो भवन्तु ।

निरुक्तयः—'जनीनाम्' "जनिघसिभ्यामिण्" ( उणा० ४ । १३० ) ततः "कृदिकारादक्तिनः" वा० ( अष्टा० ४ । १ । ४५ ) इति वार्तिकसूत्रेण ङीष् स्त्रियाम् ।

अदेवतात्वे प्रयोगः—"यो न जीवोसि न मृतो देवानाममृतगर्भोऽसि स्वप्न । वरुणानी ते माता यमः पिता ररुर्नामासि ॥" ( अथर्व० ६ । ४६ । १ ) स्वप्नदेवत्ये । अदेवतात्वे रोदस्याः प्रयोगः दर्शितः पूर्वम् ( निरु० अ० ११ खं० ५० ) अग्नाय्यश्विनीन्द्राणीनामदेवतात्वे प्रयोगा वेदेषु न सन्ति ॥

इति द्वादशाध्यायस्य चतुर्थः पादः ।

द्वादशोऽध्यायश्च समाप्तः ॥

दैवतं काण्डं च पूर्तिं गतं स्वामिब्रह्ममुनिकृते "निरुक्तसम्मर्शः" इत्याख्ये निरुक्तभाष्ये ॥

---

# अथ परिशिष्टम्

## त्रयोदशोऽध्यायः

### तत्र

### प्रथमः पादः

अथेमा अतिस्तुतय इत्याचक्षते। अपि वा सम्प्रत्यय एव स्यान्माहाभाग्याद्देवतायाः॥

भा०—अथेदानीमिमा वक्ष्यमाणाः स्तुतयो यास्ता अतिस्तुतय इत्याचक्षते कथयन्ति मन्यन्ते नैरुक्ताः। अपि वा—यद्वा सम्प्रत्ययः सम्यक् प्रत्ययो यथार्थं हि गुणप्रत्यायनं गुणज्ञापनं भवेद् या अतिस्तुतयोऽतिक्रम्यावधिं स्तुतयः प्रतीयन्ते, यतो देवतायाः खलु माहाभाग्यात्—महागुणवत्त्वात्—न ता अतिस्तुतयोऽत्युक्त्या स्तुतयः। ऋचा या गुणस्तुतय उक्तास्ताः सर्वाः खलु देवतायां सङ्गच्छन्ते। उक्तं हि "इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः॥" (ऋ० १०।२२।२) "स्तूयते वज्र्यृचा समः" (निरु० ६।२३) तस्माद् गुणानुसारिण्यो हि स्तुतय ऋचि॥

सोऽग्निमेव प्रथममाह—

"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः" (ऋ० २।१।१)

इति यथैतस्मिन् सूक्ते॥

भा०—दैवतकाण्डे स्तुतिप्रसङ्गेन प्रथमोऽग्निरुक्तः, अत्रातिस्तुतिप्रसङ्गेऽप्यग्निरेव प्रथममुच्यते। "त्वमग्ने द्युभिः...." इति कृतव्याख्याना खल्वृगेषा षष्ठाध्यायस्यारम्भे हि (निरु० अ० ६ पा० १ ख० १ शं० १) तत्र—ऋचि तु स्तुतयः साधारणा आसन्, अग्निः कस्मात् कस्मात् पदार्थात् प्रकटी भवति परन्तु सूक्ते तु सन्त्यतिस्तुतयः, तत्र सूक्ते 'ब्रह्मा, इन्द्रः, वरुणः, मित्रः, रुद्रः, पूषा, सविता, अदितिः' इत्यादिनामभिः स्तुतोऽग्निः। अग्नेरुपयोगाधिक्याद् सर्वदेवगुणानां मात्राधिष्ठानत्वात्, उक्तं यथा ब्राह्मणे "अग्निर्वै सर्वा देवताः" पुनरध्यात्मदृष्ट्या परमात्माऽग्निरस्ति तत्र त्वेताः स्तुतयो मनाक् सङ्गच्छन्ते। "एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" (ऋ० १।१६४।४६)

"न हि त्वदारे निमिषश्चन नेशे" ( ऋ० २ । २८ । ६ )
इति वरुणस्य ॥ १ ॥

भा०—"न हि त्वदारे....." इति मन्त्रे वरुणस्यातिस्तुतिः ।

समग्रोमन्त्रस्तदर्थश्च—

अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।
दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्च नेशे ॥

हे वरुणदेव ! वरयितर्देव परमात्मान् ! त्वं भियसं भयमाध्यात्मिकमाधिदैविकमाधिभौतिकं च सर्वप्रकारकं भयं मत्तः सु सम्यक्—अपम्यक्ष—अपगमय दूरं कुरु "म्यक्षति गतिकर्मा" ( निघ० २ । १४ ) हे ऋतवन् सम्राट् सत्यवन् विश्वस्य सम्राट् स्वामिन् ! सर्वत्र राजमान परमात्मन् ! त्वं मानुगृभाय मामनुगृहाण "छन्दसि शायजपि" ( अष्टा० ३।१।८४ ) वा० "हग्रहोर्भश्छन्दसि" । दामेव वत्साद् यथा गोवत्साद् दोग्धा रज्जुबन्धनं विमुञ्चति तथैव मत्तोंऽहः पापं विमुमुग्धि विमुञ्च "बहुलं छन्दसि" ( अष्टा० २ । ४ । ७६ ) इति शपः श्लुः । त्वदारे त्वत्तो दूरे न च निमिषः समक्षं च न—ईशे न हीशे विश्वम् ॥

अथैषेन्द्रस्य—

"यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ।"
( ऋ० ८ । ७० । ५ )

यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युर्न त्वा वज्रिन् सहस्रमपि सूर्या न द्यावापृथिव्यावप्यभ्यश्नुवीतामिति ॥ २ ॥

भा०—हे इन्द्र—ऐश्वर्यवन् परमात्मन् ! शतं द्युलोका उतापि शतं भूमयोऽपि स्युः, ते प्रतिमानानि तव समत्वं प्राप्तानि न भवन्ति, न च सहस्रं सूर्या रोदसी द्यावापृथिव्यौ खल्वपि त्वां नाष्ट न व्यश्नुवीताम् । अन्यत्रापि वेदे खलूक्तमस्ति "इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् । इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥" ( ऋ० ८ । ३ । ६ ) उपनिषदि खल्वप्युक्तम् "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवः" ( छान्दो० ३ । १४ । ३ )

अथैषादित्यस्य—

"यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।

क्व स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ।" ( ऋ० १० । ८६ । २२ )

यदुदश्वो वृषाकपे गृहमिन्द्राजगमत क्व स्यः पुल्वघो मृगः स बह्वादी मृगः। मृगो मार्ष्टेर्गतिकर्मणः । कमगमदेश जनयोपनः सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥ ३ ॥

भा०—हे वृषाकपे ! आदित्य ! यदा त्वमुदङ्मुखः सन् गृहमगच्छस्तदा पृच्छन्ति स पुल्वघो बह्वादी बहुभक्षी मृगः सर्वस्य भक्षयिता कुत्र गतो न किमपि दृश्यतेऽत्र स कं देशं गतो जनयोपनो जनानां मोहकः प्रकाशेन, तथा तस्य गमनाद्यान्धकारेण मुग्धा जाताः सर्वे । सर्वस्मादुत्तर इन्द्रः ।

निरुक्तयः—मृगः "मार्ष्टि गतिकर्मा" ( निघं० २ । १४ ) । ततः "इगुपधज्ञाप्रीकिरः कः" (अष्टा० ३ । १ । १३५) इति कः प्रत्ययः । गच्छति प्राप्नोति हि स्वरश्मिभिः सर्वान् ॥

अथैषाऽऽदित्यरश्मीनाम्—

"वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥" ( ऋ० १० । ८६ । १ )

व्यसृक्षत हि प्रसवाय न चेन्द्रं देवममंसत यत्रामाद्यद् वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु मत्सखा मम सखा मदनसखा ये नः सखायस्तैः सहेति वा सर्वस्माद् य इन्द्र उत्तरस्तमेतद् ब्रूमः आदित्यम् ॥ ४ ॥

भा०—सोतोर्विश्वस्य प्रसवनाय प्रकटीभावार्थं रश्मयो व्यसृक्षत विसृष्टाः 'व्यसृक्षत' कर्मणि कर्तृप्रत्ययो व्यत्ययेन । तदा ते रश्मय इन्द्रमैश्वर्यवन्तं परमात्मानं देवं नामंसत नामन्यत न मन्यन्ते यत्र यस्मिन्नाश्रितः सन् वृषाकपिरादित्योऽमदत्—तै रश्मिभिर्हर्षं प्राप्तो विकसितः प्रकाशमयो जातः । तेषु हि पुष्टेषु रश्मिषु प्रकाशं लब्धवान्, "इन्द्रः सूर्यमरोचयत्" ( ऋ० ८ । ३ । ६ ) स मत्सखा मम सखा पतिर्यद्वा मदनसखा मदनाय हर्षाय सखा यद्वा येऽस्माकं सखायस्तैः सह वर्तमानः स विश्वस्मादुत्तर उत्कृष्टतरः परमात्मेति—इन्द्राण्या ईश्वरवाक्यमलङ्कारेण । अत्र रश्मीनामतिस्तुतिरुक्ता नैरुक्तानाम् ॥

अथैषाग्निमी:—

"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥"
( ऋ० १० । १०६ । ६ )

सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता च तथाश्विनौ चापि भर्तारौ, जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारौ 'नैतोशेव तुर्फरी पर्फरीका' नितोशस्यापत्यं नैतोशं नैतोशेव तुर्फरी क्षिप्रहन्तारौ । 'उदन्यजेव जेमना मदेरू' उदन्यजेवेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसे वेति । जेमने जयमने । जेमना मदेरू । 'ता मे जराय्वजरं मरायु' एतज्जरायुजं शरीरं शरदमजीर्णम् ॥ ५ ॥

भा०—अश्विनोरतिस्तुतिः ।

मन्त्रार्थः—

सृण्या–इव सृण्याविव दात्र्याविव, सृणिर्द्विविधा भवति भर्त्ता च हन्ता च, दोषाणां हन्ता गुणानां भर्ता च । तथाश्विनौ भर्तारौ तु जर्भरी हन्तारौ तुर्फरीतू, नैतोशेव नितोशते हन्तीति नितोशः पचाद्यच्–दूरप्रहारकशस्त्रकं तस्यापत्यं तदधिकप्रहर्तारावित्र तोशति वधकर्मा वैदिको धातुः "सुत्रा त्वं पुरुष्टुत एको वृत्राणि तोशसे" ( ऋ० ८ । १५ । ११ ) "तोशसे हिनस्सि तोशति वधकर्मा" (सायणः) "तोशा वृत्रहणा हुवे" ( ऋ० ३।१२।४ ) तोशा हिंसन्तौ (सायणः) प्रस्तुतमन्त्रे च "नितोशति वधकर्मा नितोशयतीति नितोशः, तस्यापत्यं नैतोशः" ( सायणः ) तुर्फरी पर्फरीकौ क्षिप्रहन्तारौ विदारयितारौ । उदन्यजेव–उदकजे रत्ने सामुद्रे चान्द्रमसे मुक्तामुक्तिके रत्ने इव जेमने जयशीलौ मदेरू हर्षयितारौ–आनन्दकरौ तौ मे मम मरायु जरायुजं मरायु मरणशीलं शरीरं शरदं–शारीरं दुःखं तस्य दातारमजरमजीर्णं कुरुतम् ॥

निरुक्तः—'जर्भरी' 'भृञ् धारणपोषणयोः' ततो यङ्लुगन्तात्–औणादिकः "अच इः" ( उणा० ४ । १३९ ) लिङ्ग बाहुलकात् 'तुर्फरी' 'तृफ हिंसायाम्' धातोरस्मात् ततः 'रिः' प्रत्यय औणादिकः, ऋकारस्य–उत्वं रपरम् । 'पर्फरीका' "फल विशरणे" ( भ्वादि० ) अस्मात् "पर्फरीकादयश्च" ( उणा० ४ । २० ) ईकप्रत्ययान्तो निपात्यते । 'जेमना' "जि जये" ( भ्वादि० ) ततः "अन्येभ्योऽपि दृश्यन्ते" ( अष्टा० ३ । २ । ७५ ) इति मनिन् दीर्घाभावश्छान्दसः । 'मदेरू' "मदी हर्षे" ( दिवादि० ) एरुः प्रत्ययः ॥

॥ ॥

अथैषा सोमस्य—

"तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥" ( ऋ० ९ । ५८ । १ )

तरति स पापं सर्वं मन्दी य स्तौति धावति गच्छत्यूर्ध्वां गतिम् । 'धारा सुतस्यान्धसः' धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य ॥ ६ ॥

भा०—अथ सोमस्यौषधेरन्यपक्षेऽतिस्तुतिर्यास्कपक्षे यथार्था स्तुतिः परमात्मनः सोमस्य ।

मन्त्रार्थः—

स मन्दी स्तोता "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" ( भ्वादि० ) यः स्तौति धारा धारया वाचा स्तुत्या "धारा वाङ्नाम" ( निघ० १ । ११ ) सुतस्य निष्पादितस्यान्धसः—आध्यानीयस्य "अन्ध इत्याध्यानीयं भवति" ( निरु० अ० ५ । ख० १ ) आध्यातव्यस्य मन्त्रपूतस्य सोमस्य परमात्मनः स्तोता स तरत् पापं तरति धावति गच्छति प्राप्नोति चोर्ध्वां परमां गतिम् ॥

अथैषा यज्ञस्य—

"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥" ( ऋ० ४ । ५८ । ३ )

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयो अस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त छन्दांसि । त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः । वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्याँ आविवेशेत्येष हि मनुष्यानाविशति यजनाय ॥७॥

भा०—यज्ञस्य द्वे शीर्षे यास्कोक्ते प्रायणीयोदयनीये संवत्सरस्यातिरात्रे दक्षिणायनोत्तरायणे, मासस्य दर्शपौर्णमासौ, अहोरात्रस्य प्रातःसायन्तने होमे च । मन्त्रब्राह्मणकल्पैः—संहितामन्त्रेण, ब्राह्मणेन तद्विधिव्याख्यानग्रन्थेन, कल्पेन विधिनिदर्शकेन सूत्रग्रन्थेन च । अन्यत् स्पष्टम् ॥

तस्योत्तरा भूयसे निर्वचनाय—

"स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥"
( यजु० १७ । ६८ अथर्व० ४ । १४ । ४ )

स्वर्गच्छन्त ईजाना वा नेक्षन्ते तेऽमुमेव लोकं गतवन्त-मीक्षन्तमिति। 'आ द्यां रोहन्ति रोदसी।' यज्ञं ये विश्वतो-धारं सर्वतोधारं सुविद्वांसो वितेनिर इति ॥ ८ ॥

मन्त्रार्थः—

भा०—ये सुविद्वांस आध्यात्मिकविद्वांसः सर्वतोधारं यज्ञं परमात्मपरं वितनितवन्तस्ते स्वर्यन्तो नितान्तसुखरूपं मोक्षधाम गच्छन्तो यद्वा-ईजाना यजन्तो नेक्षन्तेऽन्यत्र, द्यां द्युलोकं दीप्तं मोक्षधाम रोहन्ति-आरोहन्ति, या द्यौ रोदसी रोधसी दुःखस्य निरोधिकाऽस्ति ॥

अथैषा वाचः प्रवल्हितेव—

"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥" ( ऋ० १ । १६४ । ४५ )

चत्वारि वाचः परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मेधाविनो गुहायां त्रीणि निहितानि नार्थं वेद-यन्ते। गुहा गूहतेः तुरीयं त्वरतेः कतमानि तानि चत्वारि पदानि ? ओङ्कारो महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यवहारिकीति याज्ञिकाः। ऋचो यजूंषि सामानि चतुर्थी व्यवहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। अथापि ब्राह्मणं भवति "सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे यान्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि सादित्ये सा बृहती सा स्तनयित्नौ। अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति ॥" ( मै० सं० १ । ११ । ५ ) ॥ ९ ॥

भा०—अथैषा—ऋक् खलु वाचो विषये प्रवह्लिता प्रगल्भिता—अतिस्तुतिपूर्णाऽस्ति। "वह्ल प्राधान्ये" (भ्वादि०)।

मन्त्रार्थः—

वाक्—वाचः "सुपां सुलुक्...." (अष्टा० ७।१।३९) इति ङसो लुक्। चत्वारि पदानि परिमितानि परिमाणं प्राप्तानि तानि ये मनीषिणो मेधाविनो ब्राह्मणाः सन्ति ते विदुर्जानन्ति त्रीणि पदानि गुहायां बुद्धौ निहितानि धृतानि नेङ्ग्यन्ति नार्थं वेदयन्ते नोपयोगं लभन्ते किन्तु वाचस्तुरीयं चतुर्थं पादं मनुष्या वदन्ति॥

वाचो ह्येतानि चत्वारि पदानि कतमानि सन्त्यत्र यास्को भिन्नभिन्नमतानि प्रदर्शयति। 'ओङ्कारो भूर्भुवः स्वः' इत्यार्षं मतमृषीणां परमात्मदर्शिनां मतं तत्र भूरिति वै प्राणस्तस्य प्राणस्वरूपत्वात् परमात्मनो नाम स चराचरस्य प्राणः। नामाख्यातोपसर्गनिपाताः सन्ति पदानि वाच इति वैयाकरणा मन्यन्ते, नामादीनि प्रथमेऽध्याये वर्णितानि। मन्त्रो ब्राह्मणं कल्पो व्यवहारिकी च वागिति याज्ञिकाः खलु मन्यन्ते व्यवहारिकीं सर्वे जानन्ति। ऋचो यजूंषि सामानि व्यवहारिकी च नैरुक्ता मन्यन्ते व्यवहारिकीं वाचं जनाः साधारणा अपि वदन्ति। सर्पाणां वयसां—पक्षिणां क्षुद्रस्य सरीसृपस्य व्यवहारिकी मानुषी चेत्येके ये प्राणिजीविनो वन्या जनाः—व्यावहारीकीं मानवीं जानन्ति। ग्राम्यपशुषु तूणवेणु—वन्धुवत्सु पक्षिषु वादित्रेषु—वाद्येषु च, वन्यपशुषु, स्वात्मनि मानवी, आत्मप्रवादाः—वाचाऽऽत्मानं जीवात्मानं ये प्रवदन्ति। यास्केन ब्राह्मणवचनं च दत्तं तत्र लोकेषु त्रिषु पृथिव्यामन्तरिक्षे दिवि, या पृथिव्यां साऽग्नौ देवे रथन्तरे सामगाने च, याऽन्तरिक्षे सा वायौ वामदेव्ये सामगाने च, या दिवि साऽऽदित्ये बृहतीसामगाने च। चतुर्थी या—अपां लोके मेघे सा स्तनयित्नौ। तथा ततो याऽतिरिक्ताऽवशिष्टा सा पशुषु पश्यत्सु मनुष्येषु—अस्ति तां ब्राह्मणेषु धारितवन्तो देवाः, तस्माद् ब्राह्मणा उभयविधां वाचं वदन्ति देवानां मनुष्याणां च॥

अथैषाऽपरस्य—

"ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद् विदुस्त इमे समासते॥" (ऋ० १।१६४।३९)

ऋचो अक्षरे परमे व्यवने यस्मिन् देवा अधिनिषण्णाः सर्वे यस्तन्न वेद किं स ऋचा करिष्यति य इत्तद् विदुस्त

इमे समासत इति विदुष उपदिशति—कतमत्तदेतदक्षरमो-
मित्येषा वागिति शाकपूणिः। ऋचश्च ह्यक्षरे परमे व्यवने
धीयन्ते नानादेवतेषु च मन्त्रेषु। एतद्ध वा एतदक्षरं यत्
सर्वां त्रयीं विद्यां प्रतिप्रतीति च ब्राह्मणम्॥ १०॥

भा०—अथैषाक्षरस्य—अतिस्तुतिः "ऋचो अक्षरे....।"

मन्त्रार्थः—

यस्मिन् परमे व्योमन्–व्योमनि "सुपां सुलुक्...." ( अष्टा० ७।१।३९ ) इति सप्तम्या लुक्। विशिष्टरक्षानिधानेऽक्षरे 'ओम्' इत्यक्षरे ब्रह्मणि शाकपूणिमतेन "देवा वै मृत्योर्बिभ्यतः....स्वरे प्राविशन्....ओमिति....स्वरः" ( छान्दो० अ० १ खं० ४। २–४ ) देवानां तदाश्रये रक्षणश्रवणात्। ऋचो नानादेवताका मन्त्राः, तथा विश्वे सर्वे देवाः–अग्निवाय्वादित्यप्रभृतयोऽधिनिषेदुः–निषण्णाः–अन्तःप्रविष्टाः सन्ति तदक्षरं ब्रह्म यो न वेद न जानाति न ज्ञातवान् स ऋचा–ऋगध्ययनेन किं करिष्यति न किमपि, ये तदक्षरं ब्रह्म विदुर्जानन्ति ते हि खल्विमे तदक्षरे समासते सुखेनासते तिष्ठन्ति समागमं लभन्ते। अक्षरमोङ्कारं खलु त्रयीं सर्वां विद्यां प्रति प्राप्तमिति च ब्राह्मणं वदति। अक्षरमोमिति शाकपूणिपक्षीयोऽर्थः॥

आदित्य इति पुत्रः शाकपूणेरेषर्गभवति यदेनमर्चन्ति
प्रत्यृचः सर्वाणि भूतानि तस्य यदन्यन्मन्त्रेभ्यस्तदक्षरं
भवति रश्मयोऽत्र देवा उच्यन्त य एतस्मिन्नधिनिषण्णा
इत्यधिदैवतम्॥

भा०—शाकपूणेरयं पुत्रः स मन्यते यदादित्योऽत्राक्षरम्, अत्र–ऋचः सन्ति सर्वाणि भूतानि सर्वे प्राणिनो यतस्तानि खल्वर्चन्ति प्रशंसन्ति हि तमादित्यं मन्त्रेभ्योऽन्यदक्षरमोङ्कारस्तथा भूतेभ्योऽन्यदक्षरमादित्यः। मन्त्रेषु देवास्ते रश्मय उच्यन्ते येऽस्मिन्नादित्ये निषण्णाः सन्ति, अन्यत्समानमेव। यस्तं न वेद स एकेन रश्मिना किं करिष्यति ये जानन्ति ते सम्यक् तज्ज्ञाने स्थिरीभवन्ति॥

अथाध्यात्मम्–शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः
सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं भवती-
न्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नधिनिषण्णानीत्यात्म-
प्रवादाः॥ ११॥

भा०—ऋगत्र शरीरं यत एनेन–एनं प्राप्यार्चन्ति सर्वाणीन्द्रियाणि यद्

विनाशिधर्मं चेतनतत्त्वं तदक्षरम्, इन्द्रियाणि देवाः शरीरे निषण्णानि सन्ति । [इत्यात्मप्रवादा मन्यन्ते ।

अक्षरं न क्षरति न क्षीयते वाऽक्षरं * भवति वाचोऽक्ष इति वा । अक्षो यानस्याञ्जनात् तत्प्रकृतीतरद्वर्तनसामान्यादित्ययं मन्त्रार्थचिन्ताऽभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्यः । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात् । मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति, तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूढं तस्माद् यदेवं किञ्चानूचानोऽभ्यूहत्यार्षं तद् भवति ॥ १२ ॥

भा०—इदानीमक्षरस्य निर्वचनं क्रियते–अक्षरं नक्षरति न क्षीयते वा "क्षर सञ्चलने" (भ्वादि०) ततः पचादिलक्षणोऽच्–क्षरम्, न क्षरम्–अक्षरम् । यद्वा न क्षीयते तदक्षरम् "क्षि क्षये–नाशे" (भ्वादि०) ततः "सरक्' प्रत्ययो बाहुलकात् कर्मणि तदक्षरं भवति । दुर्गस्कन्दयोर्भाष्ये 'वाक् क्षयः' वाचः क्षयो निवासोऽक्षरम् । अथवा 'वाचोऽक्षः' वा–अक्षरम् । यस्मिन् निवसति तिष्ठति वोभयत्रार्थनिर्देशने 'वाक्' शब्दोऽध्याह्रियते । अक्षो यानस्य भवति 'अञ्जनात्' "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" (भ्वादि०) अक्षे चक्रं समक्तं भवति, 'अञ्जूक्सः' बाहुलकात्–अक्षः । इतरत् तत्प्रकृति यथा चक्रधारणस्वभाववानक्षः । वाग्धारणस्वभाववदक्षरं वर्तनसामान्यात्–अक्षस्याश्रये चक्रं गतिं करोति तथाक्षरस्याश्रये सर्वा वाक् चक्रवत् प्रवर्तते ॥

अयं मन्त्रार्थचिन्तनस्याभ्यूहोऽभिविचारोऽभ्यूढो दृढो निश्चितो भवति श्रुतितः सम्यक्श्रुतितः, तर्कतोऽपि । पृथक्त्वेन मन्त्रा न निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः । न हि खल्वेषु मन्त्रार्थः प्रत्यक्षं भवति किलानृषेः, अतपसोऽतपस्विनो वा । किन्तु पारोवर्यवित्सु वेदितृषु भूयोविद्योऽधिकविद्यो विद्वान् प्रशस्य उपयुक्तो भवति–इति पुरस्तादुक्तम् । मनुष्या ऋषिषूत्क्रामत्सु देवान् विदुषोऽब्रुवन्नपृच्छन्

* 'अक्षरं भवति' पाठो होशियारपुरस्थवैदिकशोधसंस्थानस्थायां १७५ संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) बड़ौदास्थप्राच्यविद्यामन्दिरस्य च ४५३० संख्याकायां हस्तप्रतिकायाम् । समीचीन एषः पाठः । क्वचित् 'वाऽक्षयः। इति न सम्यक् ।

कोऽस्माकं मध्ये ऋषिर्भविष्यतीति, तेभ्यस्तर्कमृषिं प्रायच्छन् कस्तर्क इति मन्त्रार्थचिन्तनस्याभिविचारस्तस्य पुनः पुनरभ्यूहं श्रुतितस्तर्कं प्रायच्छन्। तस्माद् य एवमनूचानोऽभ्यूहति तद्दृष्टमार्षं भवति ॥

"हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥" ( ऋ० १० । ७१ । ८ )

हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा। सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पारमीप्सितव्यं तदिदमायुरिच्छता न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्याः। अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति ॥

भा०—मनसो मनसां जवेषु प्रजवेषु मनांसि प्रजवन्ति मननं कुर्वन्ति येषां तेषु वेदार्थेषु तथा हृदा बुद्ध्या तष्टेषु निष्पादितेषु निदिध्यासितेषु वेदार्थेषु, एवं श्रवणानन्तरं मननं तदनु निदिध्यासनं च विधाय सखायः समानख्याना ज्ञानवन्तो यतो वेदा अपि ज्ञानवन्तः—एवं ज्ञानवन्तो ब्राह्मणा ब्रह्मविदो ब्रह्मयज्ञस्य—ऋत्विजः संयजन्ते वेदार्थेषु सङ्गच्छन्ते तान् साक्षात्कारं कुर्वन्ति "यज देवपूजासङ्गतिकरणदानेषु" ( भ्वादि० ) सङ्गतिकरणमत्रार्थः। अत्र सङ्गतिप्रसङ्गे साक्षात्कारे ते वेदार्थास्त्वमेकमसखायमब्राह्मणं विजहुस्त्यजन्ति स्वरूपप्रदर्शनाय "बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति" ( महाभारते आदि० १ । २६८ ) "अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्।" (ऋ० १०।७१।५) वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः—त्वे—एके—ओहब्रह्माण—ऊहब्रह्माण ऊह एषां ब्रह्मेति—तर्कप्रधानास्तर्काश्रितास्तत्र वेदार्थेषु वेदज्ञानेषु विचरन्त्येव।

सेयं विद्या श्रुतिः श्रवणं मतिर्मननं बुद्धिः—निदिध्यासनं तस्याः श्रवणमनननिदिध्यासनरूपाया विद्यायास्तपसा पारमीप्सितव्यम्। तस्मादायुरिच्छताच्छन्दःसु शेषाः—श्रवणमननसाक्षात्करणविचाररहिताः—उपेक्षितव्यास्तेभ्यो निरुक्तशास्त्रं न निर्वक्तव्यम्। अथागमो वेदो मन्त्रो वा यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यं तन्मयत्वं तत्स्वरूपमनुभवति ॥

इति त्रयोदशोऽध्यायः ( तत्प्रथमपादो वा ) समाप्तः ॥

स्वामिब्रह्ममुनिकृते 'निरुक्तसम्मते' निरुक्तभाष्ये

## चतुर्दशोऽध्यायः

### अथवा त्रयोदशस्यैव द्वितीयादित्रिपादी

तत्र

### द्वितीयः पादः

---

व्याख्यातं दैवत यज्ञाङ्गं चाथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः। सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टाऽथैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्ग्गणः प्रवदतीन्द्रं * मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ( १ ) ॥ १४ ॥

भा०—दैवतं दैवतकाण्डं यज्ञाङ्गं यज्ञश्च यज्ञाङ्गानि च यस्मिन् तत् त्रयोदशाध्यायात्मकं प्रकरणं च व्याख्यातम्। दैवतं तु षडध्यायात्मकमासीत् यज्ञाङ्गं प्रकरणं त्रयोदशाध्यायरूपमनन्तरं पूर्वं गतं तस्मिन् यज्ञस्यातिस्तुतिस्तदङ्गानामोङ्काराग्निसोमवागादीनां वर्णनमतिस्तवनमासीत्। अथेदानीमतः खलूर्ध्वमार्गगतिं मोक्षदामाध्यात्मिकीं व्याख्यास्यामः। "....सूर्य आत्मा जगतस्तस्थुषश्च" ( ऋ० १।११५।१ ) इति मन्त्रो व्याख्यातः ( निरु० अ० १२ पा० २ ख० १६ ) अत्र स सूर्यश्चराचरस्य जगत आत्माऽऽत्मभूतः परमात्मा स उदितस्य—संसारे आगतमात्रस्य कर्मद्रष्टा कर्मणो द्रष्टास्ति तस्य सर्वान्तर्यामित्वात्। अथेत्थं प्रवदन्ति परमात्मवादिनः, अथैतं महान्तमात्मानं परमात्मानमेषर्गणः प्रवदति "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः...." ( ऋ० १।१६४।४६ ) इति मन्त्रो व्याख्यातः ( निरु० अ० ७ पा० ४ ख० १८ ) तत्राग्नित्वेन वर्णितो देवोऽत्र स आत्मा महान् परमात्मैव मन्तव्यः। अथात्मजिज्ञासया स्वात्मानं ज्ञापयितुमिच्छया, अन्तर्गतणिजर्थे प्रयोगः 'आत्मजिज्ञासया'। "अग्निरस्मि जन्मना जातवेदाः" ( ऋ० ३।२६।७ ) "अहमस्मि प्रथमजा" ( तै० ब्रा० २।८।८।१, तै० आ० ९।१०।६, तै० उ० ३।१०।६) इत्येताभ्यामुक्त्वा प्रोवाच। आचार्येणाम्नितौ मन्त्रौ सङ्केतितौ तत्रेत्थं स्तः—

---

* 'प्रवदन्ती' इति क्वचित् प्रमादपाठः।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।

अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥

मन्त्रार्थः—

अहं स्वतो जन्मना स्वयंसत्तया जातवेदा जातानां जडजङ्गमानां सर्वेषां वेत्ता ज्ञाता ज्ञानप्रकाशेन प्रकाशमानोऽग्निरस्मि, घृतं यत् किञ्च दीप्तं सूर्यादिकं वस्तु "घृ क्षरणदीप्त्योः" ( जुहोत्यादि० ) मम चक्षुरस्ति, अमृतं मोक्षाख्यं ममासन्–आस्ये मुखे स्वरूपे वर्त्ततेऽहमर्कोऽर्चनीयो लोकत्रयस्य धर्त्ताऽस्मि रजसो लोकमात्रस्य विमानो विमाता विशेषेण माता नितान्तं निर्माताऽस्मि, अजस्रो घर्मः–निरन्तरं यजनीयः प्रदीप्तो यज्ञोऽस्मि, हविर्होतुमादातुं ग्रहीतुं स्मर्तुं योग्यं नामास्मि ॥

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः * ।

यो मा ददाति स इदेव मावा अहमन्नमन्नमदन्तमद्मि ॥

अहमृतस्य सत्यज्ञानस्य वेदस्य प्रथमजाः प्रथमो जनयिताऽस्मि, देवेभ्यो मुक्तात्मभ्योऽमृतस्य पूर्वं पूर्वो नाभिः केन्द्रभूतोऽस्मि, यो मा मह्यं ददाति स्वात्मानं समर्पयति स खलु हि माऽऽवाः–मामावृणोति प्राप्नोति । अहमन्नमदनीयमुपासकानां भोग्यमस्मि, अन्नमदन्तं जातमात्रं चाद्मि संहरामि, यतो भुञ्जान एव मां न मन्यते ॥

तथा—

"अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥" ( ऋ० १ । १६४ । ३१ )

आवरीवर्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तदव्यक्तं तदस्पर्शं तदरूप तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके । यत् क्षेत्रं तज्ज्ञानात् † क्षेत्रज्ञमनुप्राप्य निरात्मकम् ‡ ॥ १५ ॥ ( २ )

---

* 'नाम' इति क्वचित् ।

† 'तदज्ञानात्' इति क्वचित् पाठः (बडौदास्थप्राच्यविद्यामन्दिरस्य हस्तप्रतिकायां च, संख्या २४८) दुर्गभाष्यप्रसङ्गे मूलत्वेन मुद्रिते निरुक्ते च ।

‡ 'निरात्मजम्' इति पाठो होशियारपुरस्थवैदिकशोधसंस्थानस्य १५५ इति-

मन्त्रार्थः—

भा०—पथिभिर्मार्गैर्जन्मधारणायाचरन्तं पराचरन्तं च शरीरबन्धनाद् बहिर्गच्छन्तं मोक्षं प्रति गच्छन्तं गोपामिन्द्रियस्वामिनमनिपद्यमानमविनश्वरं जीवात्मानमपश्यं पश्यामि जानामि। स जीवात्मा सध्रीचीः सहयोजनीयाः पुण्यवासनास्तथा विषूचीर्विरुद्धवासना धारयमाणो भुवनेषु लोकेषु—अन्तर्योनिषु आवरीवर्ति पुनः पुनरावर्तते ॥

स पुनः पुनरावर्तमानः—महानात्मा सत्त्वलक्षणो जीवलक्षणोऽस्ति। पूर्वत्र महानात्मा विभुलक्षणः परमात्माऽऽसीत्। तत् परमुत्कृष्टं तद् ब्रह्म तत् सत्यं तत् सलिलमेकरसं तदव्यक्तमशरीरं तदस्पर्शं स्पर्शगुणरहितं रूपरहितं रसरहितं गन्धरहितं तदमृतं तच्छुक्लं शुद्धं तन्निष्ठस्तदधीनो भूतात्मा भूतानामात्माऽव्यक्तरूपो जगत उपादानपदार्थोऽस्ति। सैषा भूतप्रकृतिरित्येके मन्यन्ते। तत् क्षेत्रं चोच्यते क्षेत्रे यथा विविधा ओषधयो जायन्ते तथा प्रकृतौ क्षेत्रे विविधा सृष्टयः पदार्था वा जायन्ते तज्ज्ञानात् तद्दोषज्ञानात् क्षेत्रज्ञं जीवात्मानं जीवन्मुक्तमनुप्राप्य निरात्मकं निर्बलमकिञ्चित्करं भवति * ॥

अथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति। सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी। रज इति कामो द्वेषस्तम इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते प्रतिभातिलिङ्गो † महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्ततोऽपि [ तमोऽपि ? ] निश्चयलिङ्ग आकाशः ( ३ ) ॥ १६ ॥

भा०—अथैष तृतीयो महानात्मा भूतात्मा प्रकृतिरूपस्त्रिविधो भवति सत्त्वं रजस्तम इति "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" ( सांख्य० १ । ६१ )

---

संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्) बडौदा प्राच्यविद्यामन्दिरस्य २४८१, ४४४०, ११७६७ इति संख्याकासु हस्तप्रतिकासु च।

* "दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत्" (सांख्य० ३। ७०)
"विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत्" (सांख्य० ६। ४३)

† 'प्रतिभातिलिङ्गः' इति पाठो बडौदाप्राच्यविद्यामन्दिरे २४८१, ४५४०, ११७ ६७ इति संख्याकासु हस्तप्रतिकासु। ह्रोशियारपुरस्थे वैदिकशोधसंस्थाने १७५ इति संख्याकायां हस्तप्रतिकायां च। दुर्गभाष्ये तु मूलत्वेन 'परिमतिलिङ्गः' इति पाठः।

तेषां सत्त्वरजस्तमसां सत्त्वं विशुद्धं तु मध्ये रजस्तमसोर्मध्ये तिष्ठति रजस्तमसी तस्य सत्त्वस्याभितः—उभयतः पार्श्वयोस्तिष्ठतः। यथा 'प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणं हि चित्तं प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टम्' (योगदर्शने व्यासभाष्यम् ) रजः कामः—रागः, तमो द्वेषः, रागद्वेषयोर्योगः सृष्टिः, उक्तं हि सांख्ये "रागविरागयोर्योगः सृष्टिः" (सांख्य २।९) अविज्ञातस्य—अव्यक्तस्य क्षेत्रस्य प्रकृत्याख्यस्य सत्त्वरजस्तमांसि गुणान् विशुध्यतो विशोधयतो विश्लेषयतस्तदग्रे विभूतिं स्वविभूतिं महदहङ्कारतन्मात्रादिरूपां विकृतिं सृष्टिं कुर्वतस्तत उपादानतः क्षेत्रज्ञस्य जीवात्मनः पृथक्त्वाय पृथक्करणाय तत्र लीनावस्थातः पृथक्करणाय तद् ब्रह्म कल्पते समर्थं भवति। तदनन्तरं व्यष्टौ प्रतिभातिलिङ्ग आकृतिलिङ्गोऽनुभूतिलक्षणो रजोमात्रावान्—अहमात्मा—अहङ्कारात्माऽन्तःकरणस्य प्रथमभागः—उत्पद्यते पुनर्महानात्मा तमोलिङ्गस्तमोमात्रावान् चित्तात्माऽन्तःकरणस्य द्वितीयो भागः, पश्चाद् विद्या प्रकाशलिङ्गो बुद्धिप्रकाशलक्षणो रजोगुणतमोगुणमात्राभ्यामग्रे गतो यः प्रकाशो बोधस्तदात्माऽन्तःकरणस्य तृतीयो भागः। ततोऽप्यनन्तरं निश्चयलिङ्गो मनः सङ्कल्पात्माऽन्तःकरणस्य चतुर्थभागः खलूत्पन्नः, इत्यन्तःकरणसृष्टिश्चतुर्धा वैदिकप्रक्रियातो दर्शिता न तु सांख्यप्रक्रियातः। वेदे—उक्तमेव "मनसे चेतसे धिय आकूतय उत चित्तये। मत्यै श्रुताय चक्षसे विधेम हविषा वयम्॥" ( अथर्व० ६।४१।१ ) 'मनोबुद्धिचित्ताहङ्काराः' इति क्रमोऽवरदृष्ट्या प्रसिद्धः—उपनिषत्स्वपि। पूर्वदृष्ट्या तु अहङ्कारः पुनश्चित्तं ततो बुद्धिः पश्चान्मनः। पुनर्भूतसृष्टौ प्रथम आकाश उत्पन्नः।

> आकाशगुणः शब्द आकाशाद् वायुर्द्विगुणः स्पर्शेन, वायोर्ज्योतिस्त्रिगुणं रूपेण, ज्योतिष आपश्चतुर्गुणा रसेन, अद्भ्यः पृथिवी पञ्चगुणा गन्धेन, पृथिव्या भूतग्रामाः स्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्ति तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति भूतग्रामाः पृथिवीमपियन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वायुं वायुराकाशमाकाशो मनो मनो विद्यां विद्या महान्तमात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्तेते स कालस्तदेतदहर्भवति।
>
> "युगसहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः।

रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः *॥" (४)॥१७॥

भा०—आकाशस्य गुणः शब्दः, आकाशाद् वायुरुत्पद्यते स द्विगुणः स्पर्शेन शब्देन च, वायोरग्निरुत्पद्यते त्रिगुणो रूपेण शब्दस्पर्शाभ्यां च, अग्नेराप उत्पद्यन्ते चतुर्गुणा रसेन शब्दस्पर्शरूपैश्च, अद्भ्यः पृथिवी खलूत्पद्यते पञ्चगुणा गन्धेन शब्दस्पर्शरूपरसैश्च पृथिव्याः—भूतग्रामाः, स्थावरजङ्गमा उत्पद्यन्ते, तदेतदहर्युग-सहस्रं जागर्ति तस्य युगसहस्रस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति प्रतिसङ्क्षिपति महात्मा त्रिगुणः प्रकृत्याख्यः। तत्क्रमः—भूतग्रामाः स्थावरजङ्गमाः पृथिवीमपि यन्ति पृथिव्यां समाविशन्ति, पृथिवी खल्वप्सु समाविशति, आपोऽग्नौ समा-विशन्ति, अग्निर्वायौ, वायुराकाशे समाविशति, आकाशो मनसि, मनो विद्यायां बुद्धौ, विद्या बुद्धिर्महत्यात्मनि चित्ते, महानात्मा चित्तं प्रतिभायामहङ्कारे, प्रति-भाऽहङ्कारः प्रकृतौ समाविशति प्रकृतिः स्वपिति युगसहस्रम्, सा रात्रिस्ताव-होरात्रौ निरन्तरं क्रमेण परिवर्तेते स कालोऽहर्भवति, युगसहस्रपर्यन्तं ब्रह्मणोऽ-हस्तथा युगसहस्रपर्यन्तां रात्रिमहोरात्रविदो जना विदुः।

तं परिवर्तनमानमन्योऽनुप्रवर्तते स्रष्टा द्रष्टा विभक्ताऽति-मात्रोऽहमिति गम्यते, स मिथ्यादर्शनादेवमपावके [ दर्शे-नेदं पावकम् ? ] महाभूतेषु चिरोण्वाकाशाद् वायोः प्राणान् [ प्राणाः ? ] चक्षुश्च वक्तारं च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्तिः पार्थिवांस्त्वष्टौ गुणान् विद्यात्, त्रीन् मातृतस्त्रीन् पितृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशो-णितानि मातृतोऽन्नं पानमित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि क्लृप्तः (५)॥ १८॥

भा०—तं परिवर्तमानं तथाविधं सृष्टिकालमनु खल्वन्यो जीवात्मा 'स्रष्टा कर्मणां कर्ता द्रष्टा कर्मफलस्यानुभविता भोक्ता विभक्ता विवेकशीलोऽतिमात्रो-ऽणुमात्रोऽणुपरिमाणः † 'अहम्' इति यो गम्यते लक्ष्यते तथा चोक्तम् "तमणु-मात्रमात्मानुविद्यास्मीति सम्प्रजानीते" ( योगदर्शने व्यासः ) स जीवात्मा मिथ्यादर्शनादेवमपावकेऽपवित्रे देहे तथा संसारे महाभूतेषु मग्नः सन्—आकाशात्-चिरोणु—चयनच्छिद्रं मांसास्थ्नां संयोजनावकाशं "चि चयने" ( स्वादि० ) ततः "शुसिचिमीनां दीर्घश्च—क्रन्" ( उणा० २ । २६ ) चीरं वल्कलं त्वक्, बाहुल-

---

* (मनु० १ । ७३ अल्पभेदेन, सम्प्रति गीता० ८ । १७)

† अतिक्रान्तो मात्राम्—अतिमात्रः—अणुरित्यर्थः।

कादृदीर्घत्वं चिरम् । यद्वा रक् प्रत्ययः ( उणा० २ । १३ ) बाहुलकात्–चिरः– उपचयकारि–ऊनु छिद्रम्–चिरोणु "ऊन परिहाणे" ( चुरादि० ) वायोः प्राणान् तेजसोऽग्नेश्चक्षुश्च वक्तारं–वाचं च, अद्भ्यः स्नेहं पृथिव्याः–मूर्तिः–मूर्तिं स्थूलत्वं तथाऽन्यांश्च पार्थिवानष्टौ गुणान् विद्यात्–विन्दते तत्र त्रीन् मातृतस्त्रीन् पितृतः, अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसशोणितानि मातृतः, इति षट् तथाऽन्नं च पानं चेत्यष्टौ, सोऽयं पुरुषः सर्वमयः सर्वभूतमयः शरीरेण सर्वज्ञानः स्वज्ञानवत्तया क्लृप्तः सम्पन्नः ॥

स यदनुरुध्यते * [ यद्यनुरुध्यते ? ] तद् भवति, यदि धर्ममनुरुध्यते तद्देवो भवति, यदि ज्ञानमनुरुध्यते तदमृतो भवति, यदि काममनुरुध्यते संच्यवत इमां योनिं सन्दध्यात् तदिदमत्र मतं श्लेष्मा रेतसः सम्भवति, श्लेष्मणो रसः, रसाच्छोणितम्, शोणितान्मांसम्, मांसान्मेदः, मेदसः स्नावा, स्नाव्नोऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातो रेतः, तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति । शुक्रातिरेके पुमान् भवति, शोणितातिरेके स्त्री भवति, द्वाभ्यां समेन नपुंसको भवति, शुक्रेण भिन्नेन यमो भवति, शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं संयम्यते, सौम्यो भवत्येकरात्रोषितं कललं भवति, पञ्चरात्राद् बद्बुदाः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्बुदः, पञ्चविंशतिरात्रः स्वस्थितो घनो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशः, मासचतुष्केण त्वग्व्यादेशः, पञ्चमे मासे नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्वाङ्गसम्पूर्णो भवति ॥

भा०—स पूर्वोक्तः पुरुषो मनुष्यो यत्किञ्चिदनुरुध्यतेऽनुतिष्ठति–अभ्यस्यति तद् भवति तत्कर्मफलभाग्भवति । यदि धर्ममनुरुध्यतेऽनुतिष्ठति तदा देवो भवति मुमुक्षुर्भवति, यदि ज्ञानं ब्रह्मज्ञानमनुतिष्ठति तदाऽमृतो भवति यदि काममनुतिष्ठति तदा सञ्च्यवते नीचैः पतितो भवति, स इमां योनिं सन्दध्यात् सम्प्राप्नु-

---

* 'यद्यदनुरुध्यते' इति वा स्यात् ।

पात्। कथं स योनिं गतः स्वरूपं स्वदेहं वा प्राप्नोतीत्यत्र—प्रथमं च रेतसोऽन्नात् * श्लेष्मा द्रवो लसो भाषायां 'घोल'—इति भवति, श्लेष्मणो रसो भवति, रसाच्छोणितं भवति पुनः शोणितान्मांसं भवति, मांसान्मेदो मांसोपरि स्निग्धं वस्तु, मेदसः स्नावा भवति, स्नाव्नोऽस्थीनि भवन्ति, अस्थिभ्यो मज्जा तदन्तर्गतः स्नेहो भवति, मज्जातो रेतः प्राणिबीजं तदिदं योनौ सिक्तं पुरुषः—देहः सम्भवति, सम्पद्यते। शुक्राधिक्ये पुमान् बालको भवति शोणिताधिक्ये स्त्री बालिका भवति, द्वाभ्यां समेन—द्वाभ्यां समाभ्यां यद्वा द्वयोः समत्वेन नपुंसको भवति, भिन्नेन विभक्तेन शुक्रेण यमो युगलं सन्तानद्वयं भवति। शुक्रशोणितसंयोगात् तथा मातापितृसंयोगाच्च कथमिदं शरीरं परं संयम्यते सम्पिण्ड्यते सम्यक् पिण्डीभवति—इति क्रमोऽधुना प्रदर्श्यते—गर्भाशये गतं शुक्रं शोणितेन युक्तं सौम्यो भवति सौम्यस्वरूपः सरलरसात्मको भवति, तत्र गर्भाशय एकस्यां रात्रावुषितं सत् कललं द्रवरूपं भवति, पञ्चरात्राद् बुद्बुदाः फेनिलाः, सप्तरात्रात् पेशी मांसलं कल्कं भवति, द्विसप्तरात्रादर्बुदः किञ्चिदुच्छ्रितपिण्डं मांसमयं भवति, पञ्चविंशतिरात्रि गतः स्वस्थितघनो भवति, मासे कठिनो भवति, मासद्वयाभ्यन्तरे तस्य शिरः सम्पद्यते, मासत्रये गते स ग्रीवालिङ्गो भवति, मासचतुष्टये गते त्वग्लिङ्गो भवति तस्य त्वग् व्यक्ता भवति, पञ्चमे मासे नखरोमप्रादुर्भावः, षष्ठे मुखनासिकाक्षिश्रोत्रमिन्द्रियचतुष्कं सम्भवति, सप्तमे मासे हि चलनसमर्थो भवति, अष्टमे बुद्ध्या विचारयति, नवमे सर्वाङ्गपूर्णो भवति ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः।
नाना योनिसहस्राणि मयोषितानि यानि वै ॥
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः।
साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम् ॥

इति, ततश्च दशमे मासे प्रजायते। जातश्च वायुना स्पृष्टस्तत्र स्मरति जन्ममरणमन्ते च शुभाशुभं कर्म ॥ (६) ॥ १९ ॥

---

* 'रेतः' शब्दो विशेषतः प्राणिबीजस्य वाचकः, अत्र 'सामान्यतोऽन्नार्थः प्रतिभाति। उक्तं चान्यत्र "रेतो वा अन्नम्" (गो० पू० ३। २३)

भा०—'मृतश्चाहं....' इति सुगमं न व्याख्यायोग्यम् ।

एतच्छरीरस्य प्रामाण्यम्—अष्टोतरं सन्धिशतमष्टकपालं शिरः सम्पद्यन्ते षोडशवपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणामर्द्धचतस्रो रोमाणि कोटयो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थगुदपाय्वेतन्मूत्रपुरीषं कस्मादाहारपानसिक्तत्वानू [ सिक्तादनु ? सिक्तत्वादनु ? * ] पचितकर्माणावन्योऽन्यं जयेते इति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यज्ञानतमसि मग्नो जरामरणक्षुत्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभिभूयमानः [ यदा ] सोऽस्मादार्जवबीजभावान्निर्मुच्यते [ जवीभावानां तन्निर्मुच्यते ? ] सोऽसमापन्नान्म [ सोऽस्मापान्नंम ?] हाभूमिकावच्छरीरा† न्निमेषमात्रैः प्रक्रम्य प्रकृतीरधि [ प्रकृतिरधि ] परीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यते ( ७ ) ॥ २० ॥

भा०—एतदनन्तरं वक्ष्यमाणं शरीरस्य प्रामाण्यं प्रमाणमेव प्रामाण्यं स्वार्थे ष्यञ् प्रत्ययः । यत्—अष्टाधिकशतसन्धिकं शरीरं शरीरेऽष्टोत्तरशतमस्थिसञ्चयः, अष्टकपालं शिरः, शिरसि घटकपालवत् कपालानि खल्वष्ट सन्ति, षोडश वपापलानि वपायाः पलानि रक्षकमांसस्थानानि षोडश सन्ति येषु मांसस्थानेषु वपा तिष्ठति शरीरे, स्नायूनां शतनवकं स्नायवो वातवाहिन्यो नाड्यो नवशतानि सन्ति । पुरुषदेहस्य मर्माणि सप्तोत्तरं शतम्, अर्द्धचतस्रः कोटयो रोमाणि सन्ति देहस्य ? अष्ट कपालानि हृदयं हृदयस्य, द्वादश कपलानि विभागा अवयवा जिह्वायाः, अष्टसुपर्णौ वृषणौ—अण्डकोशौ खल्वष्टशुक्रप्रेरणाङ्कौ स्तः, तथा

---

* 'सिक्तत्वावनु' इति पाठो बड़ौदास्थप्राच्यविद्यामन्दिरस्य सं० ४५४०, ११७६७ तथा होशियारपुरस्थ वैदिकशोधसंस्थानस्य सं० १७५ हस्तप्रतिकासु । 'सिक्तत्वनु' मुद्रितदुर्गभाष्ये तथा बड़ौदाप्राच्यविद्यामन्दिरस्य ८८६ इति संख्याकायां हस्तप्रतिकायाम् ।

† 'शरीरे' इति पाठो होशियारपुरस्थ वैदिकशोधनसंस्थानस्य ६८१३ इति हस्तप्रतिकायाम् ।

योपस्थगुदपायु—एतत् खलु मूत्रपुरीषं मूत्रपुरीषयोः स्थानम् । आहारस्य भोजनस्य पानस्य पातुं योग्यस्य दुग्धादिकस्य सिक्त्वानूपचितकर्माणौ सिक्त्वं पूरितत्व-मनु—अपचितकर्माणौ—उपस्थगुदपायू शरीरभागौ खल्वम्योऽम्यं शरीराद् दोषं दूरीकर्तुं जयेते अयतः । तं पुरुषं देहिनं विद्याकर्मणी ज्ञानकर्मणी जन्मार्थमनु-प्रवर्तयतः, पूर्वप्रज्ञा पुरातनी वासना च । स पुरुषो महति खल्वज्ञानान्धकारे मग्नो जरामरणबुभुक्षापिपासाशोकक्रोधलोभमोहमदभयगर्वहर्षखेदेर्ष्यानिन्दारूपै-र्द्वन्द्वैर्दोषैरभिभूयमानो यदा सोऽस्मादार्जवबीजभावात् सारल्येन बीजभावो यस्य तथाभूतादस्माच्छरीरात्—निर्मुच्यते सोऽसमासात्—महाभूमिकावच्छरीरात्-विशाल-भूमिकावतः क्षिप्रं यस्यान्तो नास्ति तथाभूताच्छरीरात् खलु निमेषमात्रैः क्षणा-त्रयैरल्पक्षणैः प्रक्रम्य वर्तमानशरीरात्—उत्क्रम्यः निःसृत्य प्रकृतीः संस्कारान-ध्याश्रित्यानुसृत्य तैजसं सूक्ष्मं शरीरं कृत्वा—आदाय कर्मणोऽनुरूपं कर्मानुसारि फलमनुभूय तस्य संक्षये कर्मफलस्य समाप्तौ पुनरेतं पृथिवीलोकं प्राप्नोति ॥

अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षम्, अपक्षीयमाणपक्षाद् दक्षिणायनं दक्षिणायनात् पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्च [ एतत् ? ] भूत्वा तस्य संक्षये पुनरेवेमं लोकं प्रतिपद्यते ( ८ ) ॥२१॥

भा०—अथ च ये हिंसामाश्रित्य कर्मकाण्डमाश्रित्य विद्यां च त्यक्त्वा चिरं महत्तपस्तप्तवन्तो वेदोक्तानि च कर्माणि यज्ञादीनि कुर्वन्ति ते धूमं प्राप्नुवन्ति धूमाद्रात्रिं रात्रेः कृष्णपक्षं कृष्णपक्षाद् दक्षिणायनं दक्षिणायनात् पितृलोकं पितृ-लोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं प्राप्नुवन्ति वृष्टेरोषधयो भूत्वा तत्पुण्य-कृतमार्गक्षये पुनरेवैतं लोकं मर्त्यं जन्मार्थं प्राप्नुवन्ति । इति पितॄणां कर्म-काण्डिनाम् ॥

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानो-क्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षा-दुदगयनम्, उदगयनाद् देवलोकम्, देवलोकादादित्यम्, आदित्याद् वैद्युतम्, वैद्युतान्मानसम्, मानसाः पुरुषा भूत्वा ब्रह्मलोकमभिसम्भवन्ति ते न पुनरावर्तन्ते शिष्टा

धूम्रस्थूका यत इदं न जानन्ति तस्मादिदं वेदितव्यम् ॥ ९ ॥ ( २२ )

भा०—अथ पुनर्ये हिंसाप्रमुखं कर्मकाण्डं त्यक्त्वा विद्यां ब्रह्मविद्यामाश्रित्य महत्तपस्तपन्ति ज्ञानोत्तमानि च योगाभ्यासादीनि कर्माणि कुर्वन्ति तेऽर्चिज्योतिः प्राप्नुवन्ति ज्योतिषोऽहरह्नः शुक्लपक्षं शुक्लपक्षादुत्तरायणम्, उत्तरायणाद् देवलोकमादित्यम्, आदित्याद् वैद्युतं वैद्युतान्मानसं मानसाः साङ्कल्पिकाः पुरुषा भूत्वा ब्रह्मलोकमभिसम्भवन्ति प्राप्नुवन्ति ते न पुनरावर्तन्ते । इति देवयानमार्गः । इतः पितृयाणमार्गदेवयानमार्गाभ्यामन्यत्र भोगपरायणाः 'जायस्व म्रियस्व' इति प्रवृत्तिमन्तो धूम्रस्थूकाः कृमिकीटादयो भवन्ति, यत इदं जगत्स्वरं तन्निगमभूतं न जानन्ति तस्माज्ज्ञातव्यम् ॥

अथाप्याह—

"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥"
( ऋ० १० । ८२ । ७ )

न तं विद्यथ विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिमन्यद् युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः क्षेत्रज्ञमनुप्रवदन्त्यथाहो विद्वांसः । क्षेत्रज्ञोऽनुकल्पते तस्य तपसा सहाप्रमादमेत्यथाप्तव्यो भवति तेनासन्ततमिच्छेत् तेन सख्यमिच्छेदेष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति । ज्ञाता कस्माज्ज्ञायतेः, सखा कस्मात् सख्यतेः, सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि, प्रज्ञया कर्म कारयतीति वा तस्य यदापः प्रतिष्ठाशीलमुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतः ॥ १० ॥ ( २३ )

भा०—हे साधारणजना ! विद्यया तं विदुषो युष्मान् विद्वांसो न मन्यतेऽर्थाश्रवणमात्रेण तं यूयं विदितवन्त इति ब्रह्मवादिनो न मन्यन्ते । कं न विदितवन्तः ? उच्यते—यमित्थं स्वरूपतो विदितवन्तो ब्रह्मवादिनो ब्रह्मणस्पतिं वेदज्ञानस्य स्वामिनमक्षरमविनश्वरमोमाख्यं परमात्मानं वदन्ति । यतो युष्माक-

मन्तरमन्यदस्ति तथैषां साक्षात्कर्तॄणां ब्रह्मविदामन्तरमन्यदस्ति । यद् युष्माक-मन्तरे वागभ्यासः, ब्रह्मविदामन्तरे योगाभ्यासः । अविद्वांसो नीहारेण तुषारेण तमसाऽज्ञानान्धकारेण प्रावृताः प्राच्छादिता जल्पप्रवीणा वाचाला असुतृपाः प्राणानां तर्पका उक्थशासः कर्मकाण्डे मन्त्रपाठिनः प्राणं सूर्यं मन्यमानास्तत्पथ-[ त्पथ ? ] गामिनश्चरन्ति ते क्षेत्रज्ञं जीवमिष्टमनु प्रवदन्ति, अथाहो विद्वांसो ब्र क्षेत्रज्ञं जीवमिष्टमनुप्रवदन्तीत्यर्थः, ते खलु यः क्षेत्रज्ञ [ ज्ञोऽनु ] मनुकल्पते यो जीवात्मानमनुयुङ्क्तेऽनुयुक्तोऽनुप्रविष्टोऽस्ति परमात्मा—उक्तं यथान्यत्र "जीवेना-त्मनाऽनुप्रविश्य" ( छान्दो० ६ । ३ । २ ) तं परमात्मानमिष्टमनुप्रवदन्ती-त्याशयः । तस्य तपसा सहोपासनेनाप्रमादं सावधानभावं स्वात्मत्वमेति प्राप्नोति । अथ स परमात्माऽऽसक्यः प्राप्तव्यो भवति, तेन सह—आसन्नतं सान्निध्यमिच्छेत् तेन सह सख्यमिच्छेत्, यत एष हि श्रेष्ठः सखा भूतं वर्तमानं भविष्यदिति सर्वं सञ्जानाति । ज्ञाता ज्ञाधातोः, सखा सख्यतेः समानस्य कृतसकारो निर्देशः, समानशब्दपूर्वकात् "ख्या प्रकथने" ( अदादि० ) धातोः "समाने ख्यः स चोदात्तः" ( उणा० ४ । १३७ ) महाभूतानि भूतैः स्थूलभूतैः सह—इन्द्रियाणि इन्द्रियशक्तयः—इन्द्रियैः—गोलकैः सह शेरते शरीरे संवर्तन्ते । शरीरी जीवात्मा प्रज्ञया कर्म प्रज्ञया कारयति तस्य यस्य जीवात्मनः—आपः—आपनीयः प्राणः, प्रतिष्ठा, शरीरम्, शीलं स्वभावः, मनः, उपशमः शान्तिः, आत्मा, इति सर्वस्वं ब्रह्मैवास्ति, स ब्रह्मभूतो भवति ब्रह्मरूपत्वं गतो भवति । साक्षिमात्रः सन् व्यवतिष्ठतेऽबन्धो मोक्षो ज्ञानकृतो ज्ञानसम्भूतोऽस्ति ॥

अथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः—

भा०—अथ परमात्मनो यानि भूतानामधेयानि भूतपरकाणि परमात्म-नामानि तानि खण्डितो वर्णयिष्यामः, तानि चेमानि—

हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः । विभुः । प्रभुः । शम्भुः । राभुः । वधकर्मा । सोमः । भूतम् । भुव-नम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः । स्वर्णीकम् । स्मृतीकम् । स्वृतीकम् । सतीकम् । सतीनम् । गहनम् । गभीरम् । गह्वरम् । कम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । हविः । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् ।

अमृतम् । इन्दुः । हेम । स्वः । सर्गाः । शम्बरम् । अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्वा । पुष्करम् । सागरः । समुद्रः । तपः । तेजः । सिन्धुः । अर्णवः । नाभिः । ऊधः । वृक्षः । तत् । यत् । किम् । ब्रह्म । वरेण्यम् । हंसः । आत्मा । भवन्ति । वधति । अध्वानम् । यद्वाहिष्ठ्या । शरीराणि । अव्ययश्च । संस्कुरुते । यज्ञः । आत्मा । भवति । यदेनं तन्वते ॥ ११ ॥ ( २४ )

भा—एषु कानिचिन्नामानि द्विरुक्तानि सन्ति, भिन्नार्थकगणान्तर्गतत्वात् । तत्र 'घर्मः' इत्यारभ्य 'मेधः' इति पर्यन्तानि चत्वारि यज्ञनामानि । 'भूतम्' इत्यारभ्य 'शम्बरम्' इत्यन्तं द्विचत्वारिंशत्—उदकनामानि । 'अम्बरम्' इत्यतः 'समुद्रः' इति पर्यन्तं पञ्चदश—अन्तरिक्षनामानि । अन्यानि विशेषणपराणि तत्रात्मनामानि त्रिविधपदानि च परमात्मनामानि मन्त्रेषु भवन्ति ॥

अथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचाऽनुप्रवदन्ति—

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥" ( ऋ० ९ । ९६ । ५ )

सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः । सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणामादित्यरश्मीनां दिवो द्योतनकर्मणामादित्यरश्मीनां पृथिव्याः प्रथनकर्मणामादित्यरश्मीनामग्नेर्गतिकर्मणामादित्यरश्मीनां सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनामिन्द्रस्यैश्वर्यकर्मणामादित्यरश्मीनां विष्णोर्व्याप्तिकर्मणामादित्यरश्मीनामित्यधिदैवतम् । अथाध्यात्मम्—सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूततम आत्मेत्यात्मगतिमाचष्टे ॥ १२ ॥ ( २५ )

भा०—अथ—एतं महान्तं सत्त्वात्मानं विश्वात्मानं परमात्मानमेतानि वक्ष्यमाणानि सूक्तानि ( ऋ० ९ । ९७ ) इत्यादीनि तथैता अनन्तरा ऋचोऽनुप्रवदन्ति "सोमः पवते:…" ।

मन्त्रार्थः—

१—सोमः पवते सोमः सुनोत्युत्पादयति यः स सोम उत्पादकः परमात्मा पवते सर्वत्र प्राप्तोऽस्ति विभुगत्या प्रवहति वा स मतीनां मननशीलानां मेधाविनां प्रारम्भिकवैदिकर्षीणाम् "मतयो मेधाविनाम" ( निघ० ३ । १५ ) जनयिता—उत्पादयिता, द्युलोकस्य जनयिता—उत्पादयिता, पृथिव्या उत्पादयिताऽग्नेरुत्पादयिता सूर्यस्योत्पादयिता, इन्द्रस्य विद्युत उत्पादयिता, विष्णोर्व्यापनशीलस्य प्रसृतस्याणुसमूहस्य सूक्ष्मभूतसङ्घप्रकृत्युत्पादयिताऽस्ति । इति सामान्या दृष्टिः परमात्मविषयिका ।

२—सोमः पवते सूर्यः सोऽपि प्रसुनोति प्रेरयति स पवते सर्वत्रालोकेन प्राप्तो भवति, स मतीनां प्रकाशकर्मणां प्रकाशस्य कर्तॄणां 'मतिर्मन्यतेः कान्तिकर्मणः' "मन्यते कान्तिकर्मा" ( निघ० २ । ६ ) रश्मीनां जनयिता प्रकटयिता स दिवो दीप्तिकर्मणामादित्यरश्मीनां जनयिता, पृथिव्याः प्रथनकर्मणां रश्मीनां जनयिता, अग्नेः—गतिकर्मणां रश्मीनां जनयिता, सूर्यस्य स्वीकरणकर्मणां रश्मीनां जनयिता, विष्णोर्व्याप्तिकर्मणां रश्मीनां जनयिता—इत्याधिदैविकदृष्टिः ।

३—सोमः—आत्मा मतीनामिन्द्रियाणां जनयिता विषयेषु प्रेरयिता दिवः कर्मणामिन्द्रियाणां जनयिता—इत्यादि पूर्वप्रक्रियया योजनीयः, सर्वाभिर्विभूतिभिर्विभूततमः—इत्यात्मदृष्ट्या ॥

"ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥" ( ऋ० ९ । ९६ । ६ )

ब्रह्मा देवानामित्येष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनां पदवी कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनां महिषो मृगाणामित्येष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणः, गृध्र आदित्यो भवति गृध्यतेः

मण्डलस्य श्येनो गन्ता स्वस्थाने गमनशीलः । स्वधितिर्वनानामेष सोमः सूर्यः स्वधितिः स्वयं कर्माणि धत्ते तस्मात् स्वधितिरादित्यः स्वाश्रितो वनन-कर्मणां रश्मीनां स सोमः सूर्यः पवित्रं रश्मीनां पवित्रीकर्ता रेभन् स्तूयमानोऽ-त्येति-रश्मीनतिक्रम्य प्राप्नोति-इति सर्वमश्नुते [ अक्षरम् ? ]-इत्यधिदैवतम् ।

अथाध्यात्मम्—स एव सोमः-आत्मा ब्रह्मा देवानां देवनकर्मणामिन्द्रियाणां विषयाणां प्रकाशीकर्तृणाम्, पदवीश्च कवीनामिन्द्रियाणां निरुक्तिसम्बन्धौ पूर्व-वदन्यत्रापि विज्ञेयौ स्तः।······श्येनो गृध्राणां श्येन आत्मा "श्यैङ् गतौ" ( भ्वादि० ) गतेस्त्रयोऽर्थाः-ज्ञानगमनप्राप्तयः, ततो ज्ञानार्थोऽत्र गृह्यते । श्येनो ज्ञाता स आत्मा गृध्राणीन्द्रियाणि गृध्यतिरत्र ज्ञानार्थे, विषयज्ञानस्य साध-नानि,···पवित्रं स आत्मा-इन्द्रियाण्यत्येति-अतिक्राम्यति रेभन् स्तूयमानः-इत्यात्मगतिमाचष्टे मन्त्रः ॥

"तिस्रो वाचं ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥" ( ऋ० ९ । ९७ । ३४ )

वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमत्तीत्यधिदैवतम् ।

अथाध्यात्मम्—वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमत्तामृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगतिमाचष्टे ॥२४॥ (२७)

मन्त्रार्थः—

भा०—वह्निः-आदित्यः खलु तिस्रो वाच ऋग्यजुः सामाख्याः प्रेरयति, उदिते सति ह्यादित्ये जना यज्ञमनुतिष्ठन्ति यज्ञे तिस्रो वाच ऋत्विज उच्चारयन्ति तेन लक्षणया खल्वादित्यः प्रेरयति, ऋतस्य-आदित्यस्य धीतिं कर्माणि ब्रह्मणः-मनीषां मनीषाः-मतानि प्रार्थनावचनानि चैष आदित्यः प्रेरयति । इत्थं गावो रश्मयः पृच्छमाना अर्चन्तः "पृच्छति-अर्चतिकर्मा" ( निघ० ३ । १४ ) गोपतिं रश्मिपतिमादित्यं प्राप्नुवन्ति वावशानाः स्तुवन्तो मेधाविनः स्तोतारः-इव सोमं सूर्यं ते रश्मयः प्राप्नुवन्ति-इत्याधिदैवतम् ।

अथाध्यात्मम्—वह्निरात्मा तिस्रो वाचः-विद्यामतिबुद्धिमतां विद्या श्रवणं मतिर्मननं बुद्धिर्निदिध्यासनमिति, तिस्रो विद्यामतिबुद्धीः प्रेरयति, ऋतस्य स्वस्य-

आत्मभूतस्य कर्माणि ब्रह्मणो मतानि प्रार्थनीयवचनानि च प्रेरयति—इत्थं गाव इन्द्रियाणि पृच्छमाना अर्चन्ति सन्ति खल्वात्मानं प्राप्नुवन्ति वावशानाः स्तुवन्तो मतयो मेधाविनः स्तोतार इव ॥

"सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः । सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सन्नवन्ते ॥" ( ऋ० ९ । ९७ । ३५ )

एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः कामयमाना आदित्यं यन्त्येवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्त्येवमेव सोमः सुतः पूयते अज्यमान एतमेवार्काश्च त्रिष्टुभश्च सन्नवन्ते तत एतस्मिन्नादित्य एकं भवन्तीत्यधिदैवतम् ।

अथाध्यात्मम्—एत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्त्येवमेव सोमः सुतः पूयते अज्यमान इममेवात्मा च सप्त ऋषयश्च सन्नवन्ते तानीमान्येतस्मिन्नात्मन्येकं भवन्तीत्यात्मगतिमाचष्टे ॥ १५ ॥ ( २८ )

भा०—धेनवो गावः—एते हि प्रीणयितारः पूरयितारो गावो रश्मयो वावश्यमानाः कामयमानाः सोममादित्यं यन्ति, एवमेव विप्रा रश्मयो मतिभिः कान्तिभिर्दीप्तिभिः पृच्छमानाः कामयमानाः—आदित्यं प्राप्नुवन्ति, एवमेव सुतः सोमः स रश्मिभिः सम्पन्नः सोम आदित्योऽज्यमानस्तै रश्मिभिः सिच्यमानः प्रकाश्यमानः पूयते निर्मलीक्रियते, सोमेऽस्मिन्नादित्ये—अर्काः—अर्चींषि प्रकाशधर्मा रश्मयः—त्रिष्टुभस्त्रीन् लोकान् स्तोभयितारो रश्मय आकर्षणधर्माः सन्नवन्ते सङ्गच्छन्ते—एकीभवन्ति ।

अथाध्यात्मम्—धेनवः प्रीणयितॄणि गाव इन्द्रियाणि कामयमानानि—आत्मानं प्राप्नुवन्ति, एवमेव विप्राः—शक्तिरूपाणीन्द्रियाणि मतिभिः कमनीयैः कामैर्वा कामयमानानि—आत्मानं प्राप्नुवन्ति, इन्द्रियैः सम्पन्न आत्मा सिच्यमानः—तृप्यमाणश्चेतते, इममात्मानमेवार्काः सप्त ऋषयः प्राणनामतः प्रसिद्धाः "सप्तशीर्षण्याः प्राणाः" ( जै० उ० २ । ५ । २ ) "सप्त वै शीर्षन्प्राणाः" ( ऐ० १ । १ । १७ ) तस्मिन्नेकीभवन्ति ॥

"अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः॥" ( ऋ० ९। ९७। ४० )

अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुरित्यधिदैवतम्।

अथाध्यात्मम्—अत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे ॥ १६ ॥ ( २९ )

भा०—समुद्रः—आदित्यः प्रथमे परमे विधर्मन् विधारके व्यवने विरक्षण-स्थाने गगनेऽत्यक्रमीत्—मेघानतीत्य—अक्रमीत्, प्रकाशितोऽभूत्, वर्षकर्मणा प्रजाः प्रजनयन् स भुवनस्य सर्वस्य राजा वृषा सुखवर्षी; सानौ—उच्छ्रिते द्युलोकेऽव्ये पवित्रेऽधि सोमः—प्रेरक आदित्यः सुवानः स्त्रयमाण इन्दुर्दीप्तिमान् बृहत्—महद् वावृधे प्रवृद्धो जातः। इत्यधिदैवतम्।

अथाध्यात्मम्—समुद्रः—आत्मा परमे व्यवने हृदये सुखोऽभावे मेघादीनतीत्य प्रकटितवान् ज्ञानकर्मणा प्रजाः सन्तानानि जनयन् भुवनस्य सर्वस्येन्द्रियगणस्य स्वामी पवित्रेऽव्ये सानावधि मस्तिष्के शिरसि ज्ञानेन दीप्तो वर्धते—इत्यात्मगतिः॥

"महत्तत् सोमो महिषश्चकारापां यद् गर्भोऽवृणीत देवान्। अदधादिन्द्रे पवमान ओजोऽजनयत् सूर्ये ज्योतिरिन्दुः॥" ( ऋ० ९। ९७। ४१ )

महत् तत् सोमो महिषश्चकारापां यद् गर्भोऽवृणीत देवानामाधिपत्यमदधादिन्द्रे पवमान ओजोऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा ( १७ ) ॥ ३० ॥

भा०—अत्र यास्केन 'अवृणीत देवान्' इत्यस्य 'अवृणीत देवानामाधि-पत्यम्' इति—अर्थः कृतः, 'इन्दुः' इत्यस्याधिदैवते—आदित्यः; अध्यात्मे—आत्मा-अर्थः। सर्वो मन्त्रो यथास्थमेव न व्याख्येयो यतोऽव्याख्यतीयोऽर्थो भविष्यति॥

"वि॒धुं द॑द्रा॒णं सम॑ने बहू॒नां यु॒वा॑नं॒ सन्तं॑ पलि॒तो ज॑गार । दे॒वस्य॑ पश्य॒ काव्यं॑ महि॒त्वाद्या म॒मार॒ स ह्यः समा॑नः ॥" ( ऋ० १० । ५५ । ५ )

विधुं विधमनशीलं दद्राणं दमनशीलं युवानं चन्द्रमस पलित आदित्यो गिरति सद्यो म्रियते स दिवा समुदेते [ समुदिते ? ] त्यधिदैवतम् ।

अथाध्यात्मम्—विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति रात्रौ म्रियते [ रात्रिः ? ] समुदेते [ समुदिते ? ] त्यात्मगतिमाचष्टे (१८) ॥ ३१ ॥

भा०—विधुं विधमनशीलमस्थिरमनेकस्थितिकं दद्राणं दमनशीलं बहूनां नक्षत्राणां मध्ये युवानं पूर्णकायं पूर्णकलं सन्तमपि चन्द्रमसं पलित आदित्यो गिरति कलाशोऽमावस्यायां सति समने संग्रामरूपे संसर्गे, य आदित्यो दिवा दिने समुदेता समुदयनशीलः, स चन्द्रमाः सद्यस्तदैव म्रियते देवस्य परमात्मनः काव्यं शिल्पं पश्य रे जिज्ञासो ! यत्तस्य महित्वा महत्त्वेने च चन्द्रमा यो ह्यः गते काले शुक्लपक्षे समानः पूर्ण आसीत् सोऽद्य मृतो नष्टः । एवं योऽद्य मृतः स ह्योऽपरेद्युः पुनः समानस्तथैव भवति । युवानमपि मृत्युर्मारयति "को हि जानाति कस्याद्य मृत्युकालो भविष्यति" ( महाभार० शान्ति० मोक्ष० अ० २७७ । १४ ) । अथवा—सोऽप्येतादृश आदित्यो दिवा दिने समुदेता समुदयनशीलः प्रत्यमावस्याक्रमेण संद.:—अवसरे सर्वसूर्यग्रहणकाले म्रियते ह्यो गते काले यः समानः स्वरूपे स्वस्थ आसीत् । एवं योऽद्य मृतः स ह्योऽपरे काले पुनः समानो भवति । देवस्य परमात्मनो महत्त्वेन यत् काव्यं शिल्पं तत् पश्य हे जिज्ञासो ! यद्वा स एतादृश आदित्यो यश्चन्द्रमसं पूर्णमपि निगरति दिवा दिने समुदेता समुदयनशीलः सोऽद्य रात्रौ म्रियते—मृत इवादृश्यो भवति यो ह्यो गते काले समानो यथावत् प्रकाशमान आसीत् सोऽद्य मृतः । एवं योऽद्य मृतः स ह्योऽपरेद्युः पुनः समानो भवति । देवस्य परमात्मनो महत्त्वेन सम्भूतं काव्यं शिल्पं पश्य जिज्ञासो ! इति रात्रिदिवसौ पर्यावर्तेते ययोरन्तरे सूर्यसदृशोऽपि दृश्योऽदृश्यो भवति ।

अथाध्यात्मम्—विधुं विधमनशीलमस्थिरं चञ्चलं दद्राणं दमनशीलं बहूनामिन्द्रियाणां मध्ये युवानमजरं बलवन्तं महान्तमन्तःकरणात्मानं पलितश्चेतन

आत्मा जीवात्मा निगिरति रात्रौ समने तत्संसर्गे शयने सोऽन्तःकरणात्मा म्रियते, दिवा दिने समुदेता समुदयनशीलो जागरणशीलो भवतीति देवस्य परमात्मनो महत्त्वेन यत् काव्यं शिल्पं तत् पश्य जिज्ञासो ! ह्यो गते दिने-दिने यः समानः कार्यकरणाय स्वकीयरूपे वर्तमान आसीत् सोऽद्य रात्रौ मृतो मृत इवाकिञ्चित्करो-जातः। एवं योऽद्य मृतः स ह्योऽपरदिने पुनः समानस्तथैव भवति। यद्वा य आत्मान्तःकरणं निगिरति निरोधेन सोऽपि रात्रौ म्रियते-मृत इवाकिञ्चित्करो भवति, यो दिवा दिने समुदेता समुदयनशीलो भवति। देवस्य परमात्मनो महत्त्वेन जातं काव्यं शिल्पं पश्य जिज्ञासो ! यद् यो ह्यो गते काले समानः सर्व-प्रकारेण सावधान आसीत् सोऽद्य सम्प्रति मृत इव जातो यद्वा देहं त्यक्तवान्। एवं योऽद्य मृतः स ह्योऽपरे काले पुनः समानस्तथैव जायते। इति जीवात्मनो जन्ममरणयोः प्रेरयिता स परमात्मा॥

"साकञ्जानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः॥" ( ऋ० १। १६४। १५)

सहजातानां षण्णामृषीणां रश्मीनामादित्यः [ ऋषीणा-मादित्यः, ऋषीणामादित्यरश्मयस्तेषामिष्टानि ? * ] सप्तमस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा-[ † अद्भिः सह सम्मोदन्ते यत्रैतानि सप्त ऋषीणानि ज्योतींषि तेभ्यः पर आदित्य-स्तान्येतस्मिन्नेकं भवन्तीति ?.]ऽधिदैवतम्।

अथाध्यात्मम्-सहजातानां षण्णामिन्द्रियाणामात्मा सप्त-मस्तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वे-[ ‡ अन्नेन सह सम्मोदन्ते यत्रे-मानि सप्त ऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तान्ये-तस्मिन्नेकं भवन्ती ] त्यात्मगतिमाचष्टे ( १९ )॥ ३२॥

---

* होशियारपुरस्थवैदिकशोधसंस्थानस्य हस्तप्रतिकायां लभ्यते। बडौदा-स्थितप्राच्यविद्यामन्दिरे संख्या ४५४० (अस्य समयः १७०५ शके०) २३३८, ११७९७ हस्तप्रतिकासु च।

(†, ‡) पाठौ दशमाध्यायस्य 'विश्वकर्मा' (श० सं० १६) इति शब्दंत इष्टानि, शब्दस्य व्याख्याप्रसक्तानि, अत्रान्यथोद्धृतानि सन्ति।

मन्त्रार्थः—

भा०—साकञ्जानां सहजातानां षण्णामृषीणां रश्मीनां ये खल्वेकाः षड् यमा ऋषयो देवजाः—युगलत्वेन प्रवृत्ता यमनशीला वा रश्मयो देवजा देवादादित्याज्जाताः सन्ति तेषां सप्तमो देव आदित्यस्तद्रूपो रश्मिः सप्तमोऽस्ति तेषां रश्मीनामिष्टानि कान्तानि—कमनीयानि वा क्रान्तानि—क्रमणानि वा गतानि—गमनानि वा मतानि—मननीयानि लक्ष्याणि वा मतानि—प्रवर्तनानि वा विहितानि तेनादित्येन नियतानि भिन्नभिन्नरूपतो विकृतानि स्थात्रे स्थावराय स्थावरे रेजन्ते क्रमन्ते गच्छन्ति । इत्यधिदैवतम् ।

अथाध्यात्मम्—सहजातानां षण्णामिन्द्रियाणां मनःसहितानां ज्ञानेन्द्रियाणां ये खल्वेकाः षड् यमा देवजाः—विषयाणां यमनशीलाः—इन्द्रियप्राणाः—आत्मरूपाद् देवाज्जाताः, तेषामात्मा सप्तमश्चेतनोऽस्ति तेषामिन्द्रियाणामिष्टानि कान्तानि—क्रमणानि वा गतानि—गमनानि वा मतानि—मननीयानि वा मतानि—गन्धादिग्रहणानि वा विहितानि तेनात्मना नियतानि रूपशो भिन्नभिन्नविषयग्रहणाद्रूपात् स्थात्रे स्थावरे विषयमभिलक्ष्य रेजन्ते गच्छन्ति ॥

इति चतुर्दशाध्यायस्य प्रथमः पादः ॥
यद्वा त्रयोदशस्यैव द्वितीयः पादः समाप्तः ॥

---

## अथ चतुर्दशस्य द्वितीयः पादः *
यद्वा
## त्रयोदशस्यैव तृतीयः पादः

---

"स्त्रियः स॒तीस्ताँ उ॑ मे पुं॒स आ॑हुः पश्य॑दक्ष॒ण्वान् न वि चे॑तद॒न्धः । क॒विर्यः पु॒त्रः स ई॒मा चि॑केत॒ यस्ता वि॑जा॒नात् स पि॒तुष्पि॒ता स॑त् ॥" ( ऋ० १।१६४।१६ )
स्त्रिय एवैताः शब्दस्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्देन निराह [ निराहारः † ] प्राण इति पश्यन् कष्टान्न विजानात्यन्धः कविर्यः पुत्रः स इमा जानाति । यः

---

* होशियारपुरस्थवैदिकशोधसंस्थाने ६८४७ इति संख्याकायां हस्तप्रतिकायाम् ।

† 'निराहारः' होशियारपुरस्थ वै० शो० संस्थाने १७५ इति संख्याकायां हस्तप्रतिकायाम् ।

स इमा जानाति स पितुष्पितासदित्यात्मगतिमाचष्टे ॥ २० ॥ ( ३३ )

भा०—इन्द्रियाणि तु शब्दस्पर्शरूपरसगन्धहारिण्यः स्त्रिय एव खल्वेताः सन्ति, अमुं प्राणं पुंशब्देन निराह—ऋषिः कथयति, प्राण इति स पुमान्। यद्वा प्राणः पुमान् निराहारः शब्दादिविषयग्रहणरहितः । इत्थं स पश्यन् जानाति सर्वमिन्द्रियविषयं किन्त्वन्धः कष्टान्नेत्राभावकष्टात् खलु न जानाति तथेन्द्रियाणि न जानन्ति स्वस्वविषयान् यः कविः पुत्रः स इमा इन्द्रियरूपाः स्त्रीर्जानाति यो जानाति स पितुरपि पिता भवति—इत्यात्मनो वर्णनम्। मन्त्र एष सम्यग्व्याख्यातः पञ्चमाध्याये ( निरु० अ ५ ख० ६ ) 'अन्धः' सं० ६ इति शब्दप्रसङ्गे तत्रैतस्य व्याख्यानं द्रष्टव्यम् ॥

"सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि। ते धीतिभिर्मनसा ते विपश्चितः परि भुवः परि भवन्ति विश्वतः ॥" ( ऋ० १। १६४। ३६ )
सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोऽर्द्धशब्दो [ मध्यस्थानोर्ध्वशब्दो ] यत * एतस्मिंस्तिष्ठन्ति ते [ तानि ? ] धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः † परिभवति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतम्। अथाध्यात्मम्—सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोऽर्द्धशब्दो यत एतस्मिंस्तिष्ठन्ति तानि धीतिभिश्च मनसा च विपर्ययन्ति परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे ॥ २१ ॥ ( ३४ )

भा०—सप्तार्धगर्भाः सप्तरश्मीनामर्द्धे मध्यस्थाने गर्भा गरिता निगरिता येषां ते सप्तार्धगर्भाः, तान् रश्मीन् खल्वयमादित्यो गिरति निगिरति यतो रश्मय एतस्मिन् तिष्ठन्ति, ते रश्मयो भुवनस्य ब्रह्माण्डस्य रेतोभूतास्तस्य विष्णोरादित्यस्य प्रदिशा प्रदेशनेन निर्देशनेन विधर्मणि जगद्धारणकर्मणि तिष्ठन्ति, ते धीतिभिः कर्मशक्तिभिर्मनसा च विपश्चितः प्रकाशकस्य परिभुवः परिभूतस्यादित्यस्य सर्वाणि कर्माणि वृष्टिकर्मणा विश्वतः सर्वतः परिभवन्ति विपरियन्ति—इत्यधिदैवतम् ॥

---

* 'यतः—यानि' होशियारपुरस्थ वै० शो० संस्थाने १७५ इति संख्याकायां हस्तप्रतिकायाम्।

† 'परिभूणि' इत्यधिकः पाठः क्वचित्।

अथाध्यात्मम्—इमानि सहेन्द्रियाणि मनोबुद्धिसहितानि ज्ञानेन्द्रियाणि गिरति निगिरति आत्माऽहं मध्यस्थाने शरीरस्य मध्यस्थाने हृदयप्रदेशे समनस्कः तत्र तिष्ठन्ति हि तानि शरीरस्य रेतोभूतानि शक्तिभूतानि तस्यात्मनः प्रवेशनेन शरीरधारणकर्मणि तिष्ठन्ति तानि धीतिभिः कर्मशक्तिभिर्मनसा मननेन च विपश्चितो ज्ञानवतः परिभुवः स्वामित्वं कुर्वतः—आत्मनः सर्वाणि कर्माणि ज्ञानकर्मणा विश्वतः सर्वतः परिभवन्ति पर्याचरन्ति ॥

"न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि । यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥" ( ऋ० १ । १६४ । ३७ )

न हि विजानन् बुद्धिमतः पुष्टिः पुत्रः परिवेदयन्ते * । अयमादित्योऽयमात्मा ॥ २२ ॥ ( ३५ )

भा०—'न विजानामि.....' इत्यस्य मन्त्रस्य व्याख्याभागो भूयान् विलुप्तो वर्तते न तथा पूरयितुं शक्यते मन्त्रेऽत्र—आदित्यश्चात्मा च लक्षितः । आत्मा तु स्पष्टोऽस्ति यदहं स्वात्मानं न विजनामि 'यदिव' अहमस्मि यतोऽहं निण्यः शरीरेऽन्तर्हितोऽस्मि मनसा चाच्छादितश्चरामि । परन्त्वादित्यः खलु न विजानन् प्रकाशते प्रकाशवानपि जडप्रकाशवत्त्वात्, स आत्मानं न विजानीयात्, बुद्धिमतो जनस्य पुत्रोऽपि—आत्मा न जानाति स्वात्मानं तथाऽऽदित्योऽपि बुद्धिमतः परमात्मनः स्वप्रकाशकस्य पुत्रो न जानाति पुष्टिरेष पोषको रश्मिपोषं पुष्यति आत्मानं परन्तु न जानाति ॥

"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥" ( ऋ० १ । १६४ । ३८ )

अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन चन्द्रमसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं च चन्द्रमसमित्यधिदैवतम् । अथाध्यात्मम्—अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यात्मानं न मन इत्यात्मगतिमाचष्टे ॥ २३ ॥ ( ३६ )

* 'परिवेदयते' क्वचित् पाठः ।

भा०—अमर्त्यं आदित्यो मर्त्येन चन्द्रमसा सह सयोनिः समानस्थानः स्वधया स्वधृत्या गृहीतो नियन्त्रितोऽपाञ्चयति—अपगमयति—अस्तं नयति, प्राञ्चयति—प्रगमयति—उदयं प्रापयति ह्यात्मानम् । तौ शश्वन्तौ शश्वद्गामिनौ सदागामिनौ विषूचीनौ विश्वगामिनौ सर्वत्र गामिनौ वियन्तौ बहुगामिनौ स्तः, अन्यं चिक्युः, अन्यं न निचिक्युः—अन्यमादित्यं पश्यति द्रष्टा पशुरपि चन्द्रं न पश्यति रात्रौ शयनकारणात् । इत्यधिदैवतम् ।

अथाध्यात्मम्—अमर्त्यं आत्मा मर्त्येन मनसा सह सयोनिः समानस्थानो भूत्वा स्वधया स्वधारणया निजवासनया गृभीतो गृहीतो निगृहीतः—सन्—अपाञ्चयति—अपगमयति निम्नं गमयति, प्राञ्चयति—प्रकृष्टं मोक्षं गमयति स्वात्मानम्, तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ स्तः, जनो द्रष्टाऽऽत्मानं पश्यति जानाति मनो न जानाति । इत्यात्मगतिः ॥

"तदिदा॑स॒ भुव॑नेषु॒ ज्येष्ठं॒ यतो॑ ज॒ज्ञ उ॒ग्रस्त्वे॒षनृ॑म्णः ।
स॒द्यो ज॑ज्ञा॒नो नि रि॑णाति॒ शत्रू॒नन॑ु॒ यं विश्वे॒ मद॒न्त्यूमाः॑ ॥" ( ऋ० १० । १२० । १ )

तद् भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो दीप्तिनृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति, निरिणातिः प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं विश्व ऊमा इत्यधिदैवतम् ।

अथाध्यात्मम्—तद् भवति भूतेषु ज्येष्ठमव्यक्तं यतो जायत उग्रस्त्वेषनृम्णो ज्ञाननृम्णः सद्यो जज्ञानो निरिणाति शत्रूनिति । निरिणातिः* प्रीतिकर्मा दीप्तिकर्मा वानुमदन्ति यं सर्व ऊमा इत्यात्मगतिमाचष्टे ॥ २४ ॥ ( ३७ )

भा०—भुवनेषु भूतेषूत्पन्नेषु तद् भवति ब्रह्म पूर्वतो वर्तते, यतो ब्रह्मण आदित्यः [आदित्यम् ?] जज्ञे जातः, स आदित्य उग्रस्तीक्ष्णस्त्वेषनृम्णो दीप्तिनृम्णो दीप्तिबलः "नृम्णं बलम्" ( निघ० २ । ९ ) स सद्यो जज्ञानो जायमान एव शत्रून् निरिणाति शत्रूनपि प्रीणयति पूर्णयति प्रकाशेन शत्रूणामपि खल्वन्धकारं नाशयति विश्वे सर्वे—ऊमाः—रक्षका रक्षणीयाश्च जीवा मदन्ति हृष्यन्ति "भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति" ( ऐ० ब्रा० १ । ३ । ४ ) इत्यधिदैवतम् ।

* 'रिणाति' इत्येव क्वचित् पाठो निरुपसर्गः ।

अथाध्यात्मम्—भुवनेषु भूतेषु तदव्यक्तं ब्रह्म पूर्वतो भवति वर्तते यतो ब्रह्मण उग्रस्त्वेषनृम्णो ज्ञाननृम्णो ज्ञानबलो जीवात्मा जायते जन्म धारयति स सद्यो जायमानः शत्रून् निरिणाति प्रीणाति निजज्ञानप्रदानेन तर्पयति यमनुसृत्य-ऊमाः सर्वे प्राणिनो मदन्ति हृष्यन्ति । इत्यात्मगतिः ।

"को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् । आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥" ( ऋ० १ । ८५ । १६ )

क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि सुखभूनि य इमं सम्भृतं वेद कथं स जीवतीत्यधिदैवतम् ॥

अथाध्यात्मम्—क आत्मा धुरि गा युङ्क्त इन्द्रियाणि कर्मवन्ति भानुमन्ति दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूतानि सुखभूनि य इमानि सम्भृतानि * वेद चिरं स जीवतीत्यात्मगतिमाचष्टे † ॥ २५ ॥ ( ३८ )

भा०—ऋतस्य समष्टियज्ञरूपस्य रथस्य धुरि कः—आदित्यो गाः—रश्मीन् युङ्क्ते कथम्भूतान् रश्मीन्—इत्युच्यते—शिमीवतः कर्मवतो भामिनः—भानुमतः प्रकाशवतो दुर्हृणायून्—दुराधर्षान् । य आदित्य आसन्निषून्—असूनिषून्—असून्—सुन्वन्ति, इषून्—इषूनि—इषूणि सुन्वन्ति [ हृत्स्वसः—हृदयस्पर्शीनि ] मयोभून् मयोभूनि सुखभूनि भृत्याम्—भृत्यानि भरणीयानि—ऋणधत् समर्धयति य इमं सम्भृतं साधनसम्पन्नं [ रथम् ] वेद जानाति स जीवात् कथं जीवति—जीवति हि, अत्र कथं प्राबल्येऽर्थे । इत्यधिदैवतम् ।

अथाध्यात्मम्—ऋतस्य शरीरयज्ञरूपस्य रथस्य धुरि, आत्मा गाः—इन्द्रियाणि युङ्क्ते तानि कर्मवन्ति भानुमन्ति विषयग्रहणे दीप्तिमन्ति दुराधर्षान् 'दुराधर्षाणि' असून्—असुनवन्ति, इषून्—इषूनि—इषूणि सुनवन्ति मयोभूनि सुखभूनि य इमानि सम्भृतानि वेद स चिरं जीवति—इत्यात्मगतिः ॥

"क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति । कस्तोकाय क इभायोत रायेऽधि ब्रवत् तन्वे३ को जनाय ॥" ( ऋ० १ । ८४ । १७ )

---

* 'इमं सम्भृतं वेद' इति क्वचित् पाठः, स न सम्यक् ।

† अत्र मन्त्रव्याख्या पाठो भ्रष्टः प्रतिभाति ।

क एव गच्छति को ददाति को बिभेति को मंसते सन्त-
मिन्द्रं कस्तोकायापत्याय महते च नो रणाय रमणीयाय
दर्शनीयाय ॥ २६ ॥ ( ३९ )

भा०—अत्र कः–एव–ईषते–गच्छति, तुज्यते–ददाति, बिभाय–बिभेति, मंसतेऽयम्, अन्ति सन्तमिन्द्रं पश्यन् तथा कः–तोकाय–अपत्याय कः–इभाय–महते राये रणाय रमणीयाय दर्शनीयाय, तन्वे जनाय च, अधिब्रवत्–'अधि-ब्रूयात्–याचेत प्रार्थयेत–अन्ति सन्तमिन्द्रम् स इन्द्रः स्वयं ध्याता विधाता रक्षकोऽस्माकम्' इन्द्रशब्देनात्र निरुक्तक्रमे–आदित्यो वाऽऽत्मा वा लक्ष्यते ॥

"को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभि-
र्ध्रुवेभिः। कस्मै देवा आ वहानाशु होम को मंसते
वीतिहोत्रः सुदेवः ॥" ( ऋ० १ । ८४ । १८ )

क आदित्यं पूजयति * हविषा च घृतेन च स्रुचा यजाता
ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आ वहानाशुहोमार्थान् को
मंसते वीतिहोत्रः सुदेवः कल्याणदेव इत्यधिदैवतम्।
अथाध्यात्मम्—क आत्मानं पूजयति हविषा च घृतेन च
स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु
होमार्थान् को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञ
इत्यात्मगतिमाचष्टे ॥ २७ ॥ ( ४० )

भा०—अत्र 'अग्निम्' इत्यस्य स्थानेऽधिदैवते 'आदित्यम्', अध्यात्मपक्षे 'आत्मानम्' इत्येव परिवर्तितम्, मन्त्रार्थः स्पष्टः, तत्र 'यजातै–यजेत्, आवहान–आवहन्तु, वीतिहोत्रः–वीतिः प्राप्तिर्होत्रस्य हवनस्य हवनज्ञानस्य कृता येन स वीतिहोत्रः प्राप्तहोत्रः प्राप्तहोत्रज्ञानो वा ॥

"त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥"
( ऋ० १ । ८४ । १९ )

त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन्
पाता वा पालयिता वा जेता वा सुखयिता वा, इन्द्र
ब्रवीमि ते वच इति स्तुतिसंयुक्तम् ॥ २८ ॥ ( ४१ )

भा०—अत्र हे शविष्ठ ! अतिशयेन बलवन् ! इन्द्र ! त्वं देवो द्योतमानः

---

* 'पूरयति' इति पाठः क्वचित्।

सम् मर्त्यं मरणधर्मिणं मनुष्यं देहं वा प्रशंसिषः प्रशंसीः प्रशंसितवान् त्वदन्यो मघवन् ! मर्डिता पाता वा पालयिता वा शत्रूणां दोषाणां च जेता वा सुखयिता नास्ति तुभ्यं स्तुतिसंयुक्तं वचनं ब्रवीमि । अत्र निरुक्तप्रसङ्गे—इन्द्रशब्देन—आदित्यो वाऽऽत्मा वा लक्षितः ॥

"हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥" ( ऋ० ४ । ४० । ५ )

हंस इति हंसाः सूर्यरश्मयः परमात्मा परं ज्योतिः पृथिवी व्याप्नेति व्याप्तं सर्वं व्याप्तं वननकर्मणानभ्यासेनादित्यमण्डलेनैति त्ययतीति लोको त्ययतीति हंसयन्तीति [ हंसयन्त्ययतीति ? ] हंसाः परमहंसाः परमात्मा सूर्यरश्मिभिः प्रभूतो गभीरं वसतीति त्रिभिर्वसतीति वा रश्मिर्वसतीति * वा वह्निर्वसतीति वा सुवर्णरेताः पूषा गर्भा रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभन्तान्तरिक्षा चरत्पथान्तरिक्षा चरदिति दिवि भुवि गमनं वा सुभासुः सप्रभूतो होतादित्यस्य गता भवन्त्यतिथिर्दुरोणसत् सर्वं दुरोणसद् द्रवं सर्वं रसा विकर्षयन्ति रश्मिर्विकर्षयति वह्निर्विकर्षयति वननं भवत्यश्वगोजा अद्रिगोजा धरित्रिगोजाः सर्वं गोजा ऋतजा बहुशब्दा भवन्ति निगमो निगमव्यति भवत्यूषे निर्वचनाय ॥ २९ ॥ ( ४२ )

भा०—अत्र भूयान् पाठोऽप्रासाङ्गिकः कुतश्चिदन्यग्रन्थादन्यप्रकरणात् प्रमादादुद्धृतः कल्पितो वा तान्त्रिकेण केनचित् ।

'हंसः' इति परमात्मा परं ज्योतिः स सर्वत्र व्याप्तत्वात् 'शुचिषत्' आदिनामभाक् । 'हंसः' बहुवचनं व्यत्ययेन हंसाः सूर्यरश्मयस्तेषां समूहः, प्रत्ययस्य लोपश्छान्दसः, हंसः सूर्यरश्मिसमूहः । सोऽपि सर्वत्र तैजसधर्मेण व्याप्तत्वात् 'शुचिषत्' इत्यादिनामभाक् । तेन परमेण ज्योतिषा परमात्मना यद्वा सूर्यरश्मिसमूहेनादित्यमण्डलेन च पृथिवी व्याप्ता तेन वेदिषत्, शुचि द्युस्थानं व्याप्तं तेन शुचिषत्, अन्तरिक्षं व्याप्तं तेनान्तरिक्षसत्, एवं सर्वं व्याप्तम्, होता वेदिषत् ।

* 'रश्मिभिर्वसतीति' क्वचित् पाठः ।

मन्त्रोक्तं वस्तुमात्रं व्याप्तं तेन स 'द्युषित्-अन्तरिक्षसत्-वेदिषत्' इत्यादि काव-भाक् । अन्यपदानां व्याख्या तु यास्कबाह्या, सा स्वयमूह्या विद्वद्भिः ॥

इति चतुर्दशाध्यायस्य द्वितीयः पादः ॥

यद्वा त्रयोदशस्यैव तृतीयः पादः ॥

---

## अथ तृतीयः पादः ( चतुर्दशे ) *
## यद्वा चतुर्थः पादः ( त्रयोदशे )

---

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व-जाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥" ( ऋ० १ । १६४ । २० )

द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ दुष्कृतं पापं परिसा-रकमित्याचक्षते । सुपर्णा सयुजा सखायेत्यात्मानं दुरा-त्मानं परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्ष रक्षः शरीरं वृक्षं पक्षौ प्रविष्ठापयति तयोरन्यद्भु-क्त्वान्नमनश्नन्नन्यो सरूपतां सलोकतामश्नुते य एवं विद्वाननश्नन्नन्यो अभिचाकशीतीत्यात्मगतिमाचष्टे ॥३०॥

( ४३ )

भा०—अत्रापि मन्त्रस्य व्याख्यानं स्वल्पस्पष्टम्, उक्तं च सायणेनापि "द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ 'निरु० १४।३०' इत्यादि निरुक्ते गतम्, अस्य मन्त्रस्य व्याख्यामनुसन्धेयम्" ( सायणः ) अत्र व्याख्याने प्रथमः 'द्वौ' इति शब्दः प्रतीकार्थः, पुनः—द्वौ प्रतिष्ठितौ सत्तात्मकौ सुपर्णौ सुकृतौ धर्मकर्तारौ स्याताम् । स्वरूपतः पुण्यात्मनौ स्तः, प्रसक्तानुप्रसक्तमुच्यते सुकृतस्य प्रतिद्वन्द्वि दुष्कृतं पापं परिसारकं परिसारयति स्वरूपतो यद्वा परिसारयति परिक्षिपति सुजनवर्गात् । तत्र 'सुपर्णा सयुजा सखाया—इत्यात्मानं दुरात्मानम्' इति पाठोऽ-नावश्यकोऽसम्बद्धश्च कुतश्चित् प्रमादादागतः । यदा पूर्वमुक्तं 'सुकृतौ धर्मकर्तारौ', पुनः 'दुरात्मानम्' कथम् । यद्वा 'दुरात्मानम्' इति भवतु तदा 'जीवात्मानम्' इत्यस्य स्थाने 'दुर्' इति दुःखे ( अव्ययार्थनिबन्धनम् ) दुःखं हि भुङ्क्ते जीवात्मा

---

* होशियारपुरस्थे वैदिकशोधसंस्थाने ६८४७ इति संख्याकायां हस्त-प्रतिकायाम् ।

संसारे भोगे प्रवर्तनात् । एवं जीवात्मानं परमात्मानं च प्रत्युत्तिष्ठति प्रति प्रवर्तते मन्त्रः शरीरे हि तज्जायते जीवात्मा वृक्षं रक्षः–रक्षस्–रक्षितव्य आत्माऽस्मात्, वृक्षं शरीरं शरीरस्याश्रये ह्यात्मा तिष्ठति यद्वा तस्मिन् वसति पक्षौ प्रतिष्ठापयति पक्षिवत् पक्षौ ज्ञानकर्मणी प्रसारयति, तयोरन्यो भुक्त्वा पिप्पलमन्नं तिष्ठति, अनश्नन्नन्यः सरूपतां सलोकताम्–अश्नुते सेवते न तु भुङ्क्ते समानस्थानत्वमेव भजते परमात्मा, य एवं विद्वाननश्नन्नन्योऽभिचाकशीति पश्यतीति स परमात्मा–इत्यात्मगतिः ॥

"आयाहीन्द्र पृथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जह्रु * र्मातुळस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥" ( ऋ० ७।५५।६ खिल सू० )

आगमिष्यन्ति शक्रो देवताभिस्तीर्थेभिः शक्रप्रतरैरी- ळितेभिस्त्रिभिस्तीर्थैर्यज्ञमियं नो यज्ञं भागधेयमग्नीषोम- भागाविन्द्रो जुषस्व तृप्तामेव मातुलयोगकन्या भागं सर्व- केव सा या देववास्तास्तास्तत्स्थाने शक्रं निदर्शनम् † ॥ ३१ ॥ ( ४४ )

भा०—व्याख्या विलक्षणा प्रतिभाति, व्याख्यायाः प्रथमभागोऽपि–ऋग्व- दस्ति 'तीर्थेभिः शक्रप्रतरैरीळितेभिः' व्याख्यायां तु 'तीर्थैः, ईळितैः' इति पाठाभ्यां भवितव्यम्, तस्मात् 'आगमिष्यन्ति' इत्यारभ्य 'ईळितेभिः' इति

---

* 'तृप्तां जह्रुः' इति पाठो होशियारपुरस्थे वैदिकशोधसंस्थाने १७५ इति संख्याकायां ६८१३ इति संख्याकायां च हस्तप्रतिकायाम् । तथैव बडोदास्थे प्राच्यविद्यामन्दिरे ८५ इति संख्याकायां १३३८ इति संख्याकायां च 'तृप्तां जह्रुः' एव पाठः ।

'जह्रुः' इति पाठो मुम्बापुर्यां निर्णयसागरयन्त्रालये १८९१ खिस्ताब्दे मुद्रिते- ऋग्वेदमन्त्रपाठे, मुम्बापुर्यां मुद्रिते–ऋग्वेदीयब्रह्मकर्मसमुच्चये, मुम्बापुर्यां १८०७ शके मुद्रिते पञ्चामृताद्यभिषेकसूक्ते, जुनागढलिखितपुस्तके, मॅक्समुल्लरमहोदयेन प्रकाशितायां सभाष्यऋग्वेदसंहितायां पक्षेण मतः, दुर्गभाष्येऽपि मूलपाठे मुद्रिते खलूपलभ्यते । 'जह्रुः' इति पाठः, एष युक्तः स चास्माभिरङ्गीकृतः । एष एव पाठो वैदिकशोधसंस्थाने स्वीकृतो मुद्रितश्च वर्तते सांहितिकपदसूच्याम् क्वचित् 'जुहुः' इति पाठः प्रामादिकः ।

† 'आयाहीन्द्र' इत्यतः 'निदर्शनम्' इति पर्यन्तं भागोऽनेकेषु पुस्तकेषु नास्ति ।

पर्यन्तं भागो व्याख्याता बाह्यो मन्त्रभागः पुरातनः । तदग्रे च 'तीर्थैः' इत्यनू-
द्यते च स्वभाषायाम् ।

मन्त्रार्थः—

'आयाहीन्द्र' इन्द्रस्यागमने खल्विन्द्राय प्रलोभनं दीयते हे शक्र ! उ निश्चय
एव यदत्र तास्ता विविधा देवता आगमिष्यन्ति त्रिभिस्तीर्थैः पृथिव्यन्तरिक्ष-
द्युस्थानैः शक्रप्रतरैः—शक्रस्य प्रतराः—शक्रप्रतराः शक्र इन्द्रः प्रतरति प्रसरति
यैस्तैस्तीर्थैस्तरणमार्गैः, अतस्त्वमीडितैः प्रस्तुतैः प्रशस्तैर्मार्गैरिममस्माकं यज्ञ-
मागच्छ भागधेयं खल्वग्नीषोमात्मकं गार्हस्थ्यस्य निर्वाहकं विवाहरूपं जुषस्व सेवस्व,
आगतासु कामपि योग्यां देवतां स्वीकुरु—उपयच्छस्व । परन्तु तासु तृसाम्—भुक्त-
गृहस्थभोगां वानप्रस्थां परिव्राजिकां यावदायुषं धृतब्रह्मचर्यां च जहुस्यजन्ति मातु-
लस्य योषा—इव मातुलयोगकन्या यथा विवाहे वर्जनीया भवति न वोढव्या भवति
तथा सा तृसा त्याज्या । पुनश्च पैतृष्वसेयी वपामिव—पैतृष्वसेयीव वपां त्यज,
वपा वपति पतिः सन्तानबीजं यस्यां सा वपा विवाहिताऽन्येन देवेन सह तामपि
त्यज तैतृष्वसेयीव यथा पैतृष्वसेयी विवाहे त्याज्या भवति तथा विवाहितामपि
त्यज । एवं निवृत्तभोगवासनायाः संयमव्रतं न भङ्गीकर्तव्यम्, न च सपतिकायाः
पतिव्रतभङ्गः कार्यः, एवमेव मातुलस्य कन्या पितृष्वसुः कन्याऽपि न वोढव्या
ते उभे भगिन्यौ स्वसारौ स्तः ॥

"विप्रं विप्रासोऽवसे देवं मर्तास ऊतये ।
अग्निं गीर्भिर्हवामहे ॥" ( ऋ० ८ । ११ । ६ )

विप्रं विप्रासोऽवसे विदुर्वेद विन्दतेर्वेदितव्यं विमलशरी-
रेण वायुना विप्रस्तु हृत्पद्मनिलयस्थितमकारसंहितमुकारं
पूरयेन्मकारनिलयं गतं विप्रं प्राणेषु विन्दुसिक्तं विकसितं
वह्नितेजःप्रभं कनकपद्मेष्वमृतशरीरममृतजातस्थितममृत-
वाचामृतमुखे वदन्ति । अग्निं गीर्भिर्हवामहे । अग्निं
सम्बोधयेदग्निः सर्वा देवता इति ॥ ३२ ॥ ( ४५ )

भा०—विप्रं मेधाविनमुपास्यं देवं वेदितव्यं प्राप्तव्यं विप्रासो विप्रा उपासका
मेधाविनो मर्त्या मनुष्या अवसे रक्षणाय विदुर्लब्धवन्तः प्राप्तवन्तः प्राप्नुवन्ति,
'विदुः' इति 'वेद' इति वा "विदॢ लाभे" ( तुदादि० ), प्राप्तेः प्रकार—विमल-
शरीरेण वायुना प्राणायामेन च विप्रो मेधावी हृदयकमलप्रदेशस्थितम्—अकारेण
सह संहितं सन्धि प्राप्तम्—उकारम् 'ओ' इति सम्पन्नं पूरयेत् संयोजयेत् 'मकारं'
निलयं गतं हृदयप्रदेशगतं तदा 'ओम्' इति विप्रमुपास्यं प्राणेषु—अन्तर्इन्द्रियेषु

बिन्दुसिक्तं बिन्दुवद् सिक्तं घृतं सूक्ष्मं विकसितं सदभ्यासेनाग्नितेजःप्रभं सुवर्णकमलेष्वमृतशरीरममृतरूपेण स्थितममृतवाचाऽमृतमुखे यद् वदन्ति तज्ज्ञास्तमग्निमोङ्कारं परमात्मानममृतत्वे प्राप्तये गीर्भिः स्तुतिभिर्हवामहे त्वां हे अग्ने परमात्मन् ! ॥

तस्योत्तरा भूयसे निर्वचनाय—

"जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥" ( ऋ० १ । ९९ । १ )

जातवेदस इति जातमिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेनाच्छाय * सुनवाम सोममिति प्रसवेनाभिषवाय सोमं राजानममृतमरातीयतो यथार्थमिति स्मो निश्चये निदहति दहति भस्मीकरोति सोमो ददादित्यर्थः। स नः पर्षदति दुर्गाणि दुर्गमनानि स्थानानि नावेव सिन्धुं यथा कश्चित् कर्णधारो नावेव सिन्धोः स्यन्दनान्नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि † तारयति ॥ ३३ ॥ (४६)

भा०—जातवेदसे—य इदं सर्वं जातं चराचरं जगत्—उत्पत्तिस्थितिप्रलयक्रमेणाच्छायाच्छेद नियम्य यद्वा दकारो लिपिप्रमादात् त्यक्तो भवेल्लेखे, अथवा आस्थाय स्वायतीकृत्य यो विद्यते स जातवेदः—जातानि परिवेष्ट्य यो विद्यते तस्मै जातवेदसे सोमं योऽभिषवाय प्रसवेन सम्पद्यते तं सोमं गुणप्रकाशनशीलममृतं वयं सुनवाम समर्पयेम; यो जातवेदाः परमात्मा—अरातीयतः—यथार्थं शत्रुतामाचरतो जनस्य वेदो धनं निश्चये—निःसन्देहं निदहाति—दहति भस्मीकरोति सोमो ददत्—दीयमानो भवेद् यदि तस्मै जातवेदसे। स जातवेदा अग्निः परमात्माऽस्मान् सर्वाणि दुर्गाणि दुर्गमनानि स्थानानि—अतिपर्षत्—पारयति तारयति, यथा नावा कश्चित् कर्णधारः सिन्धुं स्यन्दमानां नदीं जलदुर्गां महाकूलां तारयति तथा सोऽग्निर्दुरितानि तारयति ॥

तस्यैषाऽपरा भवति—

---

* 'आस्थाय' इति दयानन्दाभिमतः पाठः। 'आच्छाय' इति होशियारपुरस्थवैदिकशोधसंस्थानस्य १७५ इति संख्याकायां हस्तप्रतिकायाम् (१६४६ शके प्रतिलिपितायाम्)।

† दयानन्दाभिमतः पाठः 'दुरितानि' अन्यत्र 'तानि'।

इदं तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः *। सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥" इदं तेऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति सर्पो जीर्णामिव सर्पस्त्वचं त्यजति पापं त्यजन्ति † ॥ ३४ ॥ (४७)

भा०—"इदं ते....." अज्ञातस्थानो मन्त्र एषः, प्रकरणाभावाच्च सम्यग् व्याख्यातुं योग्यः, निरुक्तवचनानि च नार्थस्पष्टीकरणयोग्यानि, सामान्यतोऽर्थावभास एष यत्-अन्याभिरसमानम्—असमानाभिः-विविधाभिः-अद्भिः, काभिरद्भिः ? उच्यते—याः काश्च नद्यः सिन्धुं समुद्रं पतिं प्रति प्रवहन्ति तासामद्भिः—इदं ते पापं पापरोगं रक्तक्षय राजयक्ष्म वाऽहं चिकित्सको दूरं करोमि यथा सर्पः सशिरस्कः शिरःपर्यन्तं गतां शिरःसहितां जीर्णां त्वचमभ्युपेत्य तां जहाति त्यजति तथाहीदं पापतक्म त्वां त्यक्ष्यति । अन्ये रोगिणश्च पापं रोगं त्यजन्ति मच्चिकित्सया ॥

आपो आप्नोतेः ।

तासामेषा भवति—

"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥"

(ऋ० ७ । ५९ । १२)

त्र्यम्बको रुद्रस्तं त्र्यम्बकं यजामहे सुगन्धिं सुष्ठुगन्धिं पुष्टिवर्धनं पुष्टिकारकमिवोर्वारुकमिव फलं बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व माम् ॥ ३५ ॥ (४८ ॥

भा०—त्र्यम्बकं रुद्रं त्रीणि स्थूलसूक्ष्मकारणानि शरीराणि-अम्बकानि कुम्भाजकानि यस्य प्राणस्य मुख्यप्राणस्य तं त्र्यम्बकं त्रिषु स्थूलसूक्ष्मकारण० शरीरेषु वर्तमानं मुख्यप्राणं सुगन्धिं पुण्यस्य कर्मणो गन्धेन युक्तम् "यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति" (तै० आ० १० । ९) पुष्टिवर्धनमात्मनो मम पोषणं वर्धयितारं यजामहे परमात्मोपासने शमदमादिषु च सङ्गमयामः संयोजयामः समर्पयामः । यतः शरीरत्रयात्—मृत्योर्मृत्युरूपात्—उर्वारुकफलं पक्वरक्तकर्कटीफलमिव बन्धनाद् वृन्ताद् यथा मुच्यते तथाहं मृत्योर्मुक्षीय मुक्तो भवेयं न त्वमृतात्—मोक्षानन्दात्, तथा त्वं वर्तस्व रुद्र प्राण ! मुञ्चस्व माम् ॥

---

* केषुचित् पुस्तकेषु नोपलभ्यते ।

† इदं वचनप्रकरणमनेकेषु पुस्तकेषु न विद्यते ।

कस्मादित्येषामितरैषा भवति—

"शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्। शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥" ( ऋ० १० । १६१ । ४ )

"शतं जीव शरदो वर्धमानः" ( अथर्व० ३ । ११ । ४ ) इत्यपि निगमो भवति । शतमिति । शतं दीर्घमायुर्मरुत एना वर्धयन्ति शतमेनमेव शतात्मानं भवति शतमनन्तं भवति शतमैश्वर्यं भवति शतमिति शतं दीर्घमायुः ॥ ३६ ॥ ( ४९ )

भा०—निरुक्तव्याख्या न पूर्णा न च स्पष्टा । हे रोगविमुक्त जन ! त्वं शतं शरद ऋतून् शतं हेमन्तानृतून् शतं वसन्तानृतून् वर्धमानो जीव । इन्द्राग्नी वायुरन्तरिक्षस्थानः, अग्निः पृथिवीस्थानः, सविता—सूर्यो द्युस्थानः, बृहस्पतिर्मेघस्थानः स्तनयित्नुशब्दकारी देवः, अन्ये च मरुतो देवाः शतमायुषा, सेवितेन हविषा च यथायोग्यचर्यया पुनरिमं दत्तवन्तः । शतमित्यनेकार्थकं शतं दीर्घायुः, शतं शतवर्धनम्, शतं शतात्मानम्—शतबलम्, शतम्—अनन्तम्, शतम्—ऐश्वर्यम्, सर्वं शतं दीर्घायुमित्येवास्मिन्मन्त्रे भवति ।

"शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम् ॥"
( अथर्व० ३ । ११ । ४ )

अल्पभेदेन मन्त्र एषोऽर्थे न भेदः, चतुर्थे पादे 'इमं पुनर्दुः' इत्यस्य स्थाने 'आहार्षमेनम्' मृत्युमुखादाहृतवानहं चिकित्सकः—इत्येव विशेषः ॥

"मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदा चना दभन् । विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥" ( ऋ० १ । ८४ । २० )

मा च ते धामानि मा च ते कदा चन रेषिषुः [सरिषु ? *] सर्वाणि प्रज्ञानान्युपमानय [नाथ ? *] मनुष्यहितोऽयमादित्योऽयमात्माऽथैतदनुप्रवदन्ति । अथैतं महान्तमात्मानमेषर्गणः प्रवदति वैश्वकर्मणी-

* होशियारपुरस्य वैदिकशोधसंस्थानस्य १७५ इति संख्याकायाम् ।

"देवानां नु वयं जाना" (ऋ० १०।७२।१)
"नासदासीन्नो सदासीत्तदानीम्" (ऋ० १०।१२९।१)
इति च सैषात्मजिज्ञासा सैषा सर्वभूतजिज्ञासा, ब्रह्मणः सारिष्टं सरूपतां सलोकतां गमयति य एवं वेद [ * नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय नमो यास्काय ब्रह्म शुक्लमशीय [ सीय ? * ] ब्रह्म शुक्लमशीय † ] ॥ ३७ ॥ ( ५० )

भा०—हे वसो ! वासयितः ! इन्द्र ! ते राधांसि धामानि मा दभन् मा रेषिपुर्न हिंस्युः, मा च कदाचन ते—ऊतयः—तव धाम्नो रक्षका हिंस्युः, हे मानुष ! मनुष्याणां हितकर ! विश्वानि वसूनि सर्वाणि प्रज्ञानानि नोऽस्मभ्यं चर्षणिभ्यो मनुष्येभ्यः—उपमिमीहि—उपमानय—उपसम्पादय । कस्त्वं योऽयमादित्यः, अथ-आत्मा वा अभिप्रायः सर्वेषामित्यनुप्रवदन्ति मन्त्राः प्रथममण्डलस्य चतुरशीति-तमसूक्तगताः ( १६–२० ) मन्त्राः ।

अथैतं महान्तमात्मानं परमात्मानं वैश्वकर्मणे विश्वरचनकर्मप्रकरणे स्वसू-क्तगणः प्रवदति—"देवानां नु वयं जाना प्र वोचाम विपन्यया ।…प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत् ( ऋ० १० । ७२ । १–९ ) तथा "नासदासीन्नो सदा-सीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।…यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥" ( ऋ० १० । १२९ । १–७ ) इत्येषा स्वात्म-जिज्ञासा परमात्मनो जिज्ञासा सर्वभूतजिज्ञासा चैतस्मिन्नृग्गणे । य एवं परमा-त्मानं शार्वं चैतद् वेद स सारिष्टं रिष्टं दुःखम्, अरिष्टं सुखं सारिष्टं सुखेन युक्तं पूर्णममृतं परमात्मना सह तद्रूपतां सलोकतां समानलोकतां च स्वात्मनि गम-यति प्रापयति ॥

इति चतुर्दशाध्यायः, परिशिष्टं च समाप्तम् ।

समाप्तश्च 'निरुक्तसम्मर्शः' इत्याख्यो निरुक्तभाष्यसन्दर्भः स्वामिब्रह्ममुनिविरचितः ।

---

* होशियारपुरस्थवैदिकशोधसंस्थानस्य १७५ इति संख्याकायाम् ।

† [नमो…मशीय] इति कोष्ठान्तर्गतः पाठः केषुचित् पुस्तकेषु न विद्यते । 'इति निरुक्तस्य त्रयोदशाध्यायः' होशियारपुरस्थवैदिकशोधसंस्थानस्य १७५ संख्याकायां हस्तप्रतिकायाम् । 'त्रयोदशाध्याय उत्तरषट्कः समाप्तः' इति-अलवरस्य प्राच्यविद्यामन्दिरस्य हस्तप्रतिकायाम् ।

# निरुक्ते यास्केन व्याख्यातानां पदानां वर्णानुक्रमेण सूचिः

# विशिष्टानामशुद्धीनां शोधनपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
| --- | --- | --- | --- |
| ····नाचष्टे | ····ऽऽचष्टे | १२ | ६ |
| ····ष्योऽन्ये | ····भ्योऽन्ये | १२ | १८ |
| ····भ्यान्तरे | ····भ्यन्तरे | १३ | २० |
| स्वादिकप्रवृत्तौ | स्वदिकप्रवृत्तौ | १३ | २५ |
| वणणधामहे | वणधामहे | १४ | २८ |
| सर्वत्रारख्याते | सर्वत्राख्याते | १६ | २२ |
| अन्यो | मन्यो | १७ | ५ |
| वेद | वेदे | १८ | २१ |
| प्राणकुलेषु | प्रायःकुलेषु | १८ | ३० |
| वायना | वातायना | १९ | ४ |
| चित् | ननु | १९ | ९ |
| बृहत् महत् | बृहन् महन् | १९ | १८ |
| इहि | इति | २१ | ३० |
| प्रकाशयन्तीः | प्रकाशयन्त्यः | २३ | ४ |
| अपिन्वन् | अपिन्वत् | २३ | १३ |
| असिञ्चन् | असिञ्चत् | २३ | १३ |
| दशतेः | दाशतेः | २८ | २२ |
| उद्गता | उद्गाता | ३२ | ४ |
| दास्यते | दस्यते * | ३६ | १५ |
| रपष्टो | स्पष्टो | ३९ | ७ |
| ज्ञातारर्थानि | ज्ञातार्थानि | ४२ | २७ |
| तर्प्यतेऽनेन | तर्प्यतेयत् | ४३ | २ |
| पूर्वस्य पूर्वस्य | पूर्वस्य | ४३ | २३ |
| धैरन्यः | धैरन्यैः | ४६ | १ |
| छिनन्ति | छिनत्ति | ४७ | २९ |
| योनिमुप···· | योनिरुप···· | ५६ | ९ |
| एतावन्तो | एतावन्तः | ६१ | २ |
| अध्याये | पूर्वाष्टके | ६४ | २३ |
| वर्णासामान्य | वर्णसामान्यः | ६६ | २९ |
| ह्रस्य | ह्रस्वस्य | ६९ | २९ |
| 'तर्कुं' | 'तर्कुः' | ७० | ४ |
| स | सः | ७१ | १५ |
| अश्वःकक्षं | कक्षं | ७५ | २४ |
| क्षरतेः | क्षीरं क्षरतेः | ८१ | २६ |
| महैवता | मद्देवता | ९० | ३ |
| अभिवृता | अभीवृता | ९१ | ४ |
| तद्वये | मन्त्रद्वये | ९९ | २७ |
| घृत्स्नूः | घृतस्नूः | १०१ | १८ |
| स्नतो | स्नुतो | १०४ | १२ |
| प्रहितुं | प्रहीतुं | १०४ | १४ |
| क्रान्त्वा | क्रान्त्वा स्थिता | १०६ | १७ |
| काष्ठोच्यते | काष्ठोच्यते क्रान्त्वा * | १०७ | २९ |
| अशयत् | आशयत् | १०८ | २ |
| तद्धितरीत्याः | तद्धिरीत्या | ११३ | २ |
| प्रत्यरूपं | प्रत्ययरूपं | १०८ | १० |
| न्त्यरिक्ष्येण | न्तरिक्षेण | ११८ | २२ |

* 'दस्यते' इति पाठः स्यात् इति टिप्पणी त्याज्या वैदिकयन्त्रालयीयं निरुक्तं दृष्टाऽन्यथा जाता ।

* स्थितो भवति, अपोऽपि काष्ठा उच्यन्ते ।

| | | | |
|---|---|---|---|
| गुणावि | गुणानि | १२३ | ३ |
| नोलभ्यते | नोपलभ्यते | १२३ | २७ |
| अथानन्तरं | अथानन्तरं | १३१ | ७ |
| अस्य | अस्याः | १३७ | २९ |
| ञ्न्य···· | ····रन्थ | १३९ | १० |
| तं | ते | १४१ | २२ |
| शत्रुणां | शत्रूणां | १४५ | ४ |
| भवानि | भवामि | १४८ | २७ |
| * | | १०५ | ८,९ |
| आघातो | आघातं | १५२ | ७ |
| ग्राहितुं | ग्रहीतुं | १५३ | १ |
| खल्वुच्यते | खलूच्यते | १५३ | ९ |
| ····कर्माणौ | ····कर्माणो | १५८ | ५ |
| विधाद्धेति | विधावनाद्धेति | १६० | १७ |
| देवनशीलोः | देवनशीलो | १६१ | ५ |
| ····श्वरः भाष्ये | ····श्वरभाष्ये | १६१ | ३० |
| विविधारागाः | विविधधारागाः | १६९ | ५ |
| विपर्येण | विपर्ययेण | १७१ | १० |
| ऋक्षम् | ऋक्षः | १८० | १ |
| सम्भवस्तारं | सम्भक्तारं | १८० | १८ |
| गृह्णान् | गृह्णन् | १८१ | ११ |
| वैदयागा···· | वेदयागा···· | १८४ | ५ |
| व्यवस्थास्ते | व्यवस्थातस्ते | १८४ | ६ |
| मे | ये | १८७ | ३ |
| ····द्विलोपः | ····पिलोपः | १९१ | २७ |
| छन्द पूर्व्यथ | छन्दः पूर्व्यर्थः | १९८ | २७ |
| कृत्सु | कृत्सु | १९९ | १३ |
| तद्वा | यद्वा | २०३ | १८ |
| रस···· | रसस्य | २०३ | ३० |
| स्वात्मानि | स्वात्मनि | २११ | १२ |
| पुनरागामिनीनाम् † | | २१४ | ८ |
| प्राप्तो इन्द्रो | प्राप्त इन्द्रो | २२७ | २६ |
| यज्ञिनां | यज्ञियानां | २२७ | ३० |
| याल यद्वा' | 'यद्वा 'पाल' | २३७ | २८ |
| परम ··· | पदम···· | २४० | ८ |
| गतस्वम् | गतस्वम् | २४४ | २ |
| राज्ञ | राज्ञे | २४५ | १७ |
| निहतवान् | निहंतवान् | २४५ | १७ |
| सममन्यत | सममन्यन्त | २४६ | ७ |
| अंहति | अंहतिः | २४८ | ७ |
| अंहस् | अंहः | २४८ | १० |
| प्रकाशत्मका | प्रकाशात्मकाः | २५० | १२ |
| स्थानाल् हे | स्थानात्, हे | २५२ | २३ |
| पादनार्थं | पानार्थं | २५४ | २२ |
| पकारलोपे | वकारलोप | २५६ | ११ |
| वायुमार | वायुमार्गं | २५७ | १० |
| अमान्नु अदन्ति | अमा-अदन्ति | २६५ | २१ |
| प्राप्तेवं···· | प्राप्तौ वः | २७३ | २ |
| मेघोऽभिधेये | मेघेऽभिधेये | २७९ | १० |
| प्राक्रमवान् | पराक्रमवान् | २८० | २२ |
| 'ड:' | 'पत' यद्वा 'पद' धातोः 'ड:' | २८१ | १९ |
| वराहेः | वराहैः | २८१ | २४ |
| आङ्गिरसः | अङ्गिरसः | २८१ | २५ |
| मूताग् | भूतान् | २८३ | १० |
| धन्वमन्त···· | धन्वान्त···· | २९० | ६ |

* 'अम्बुमद् भवति इति वा अम्बुमद् भवति वा इति लेखोन्यथा क्षिप्तोऽस्ति ।

† स्वपतो बोधयन्ती शाश्वतिकतमाऽऽगाद् पुनरेयुषीणां पुनरागामिनीनाम् । (इति पाठस्त्वक्तः)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ऽर्थाः पृते···· | ऽर्था पृते···· | २९४ | २० | न प्रज्ञया | तं प्रज्ञया | ४१३ | २७ |
| नाशाय | नाशय | २९९ | १३ | तौ | तौं | ४१४ | १० |
| प्रसिद्धस्पर्द्धया | प्रतिस्पर्द्धया | ३११ | १५ | उशन्तो | उशतो | ४१४ | १० |
| तस्मै | तद्स्मै | ३१६ | १७ | अन्तरिक्षं | अन्तरिक्षस्य | ४५५ | २७ |
| जले सारिणी | जलसारिणी | ३१७ | ३ | ज्ञास्य | ज्ञानस्य | ४५९ | १७ |
| अनुष्टुया | अनुष्ठुया | ३२४ | १४ | कवासखाः | कवासखः | ४६४ | १० |
| सूद | सूदय | ३२९ | १४ | दधाति | बलानिदधाति | ४६६ | ३ |
| क्षयितारौ | क्षेतारौ | ३३७ | २० | उपदिशति | उपदिशन्ति | ४९३ | २६ |
| जोषवाकमपरि | जोषवाकंपरि | ३३८ | ५ | या आ गल्दा | या गल्दाः | ४९८ | ६ |
| घोषं | घोषः | ३४६ | १ | कद्रू | कद्रू | ५०१ | १२ |
| हजते | हजतेः | ३६२ | २१ | ····दृषं | ····द्वार्षं | ५०२ | ८ |
| परमात्मानः | परमात्मनः | ३६७ | १५ | तक्षन्तु | तक्षन्तु | | |
| ओषधिः | ओषधीः | ३६८ | २ | | कुर्वन्तु | ५०६ | १४ |
| जयन्ध्यो | जयन्स्यो | ३६८ | ७ | न्धीनाम···· | ····न्धिनीनां | ५०९ | ११ |
| नवतगयः | नवगतयः | ३६९ | २ | आस्कः | यास्कः | ५१३ | ११ |
| छन्दः | छान्दसः | ३६९ | २१ | ····गत्वे | ····गतत्वे | ५१४ | ८ |
| ····स्वाजा | ····स्वजाः | ३७१ | १२ | राष्ट्रद्वा | राष्ट्राद्वा | ५२० | २६ |
| उदधि | उदधिः | ३७८ | २ | सदान्दे | सदान्वे | ५२० | २९ |
| वसुः | कसुः | ३८१ | ९ | टिस्वाद् | डिस्वाद् | ५२२ | २९ |
| घ्रतार्थे आ···· | घृतार्थे-आ···· | ३८५ | ३ | वरूळती | करूळती | ५२६ | १४ |
| वयश्चि···· | वयश्चि···· | ३९७ | २० | मेघनगर्यः | मेघनगरी | ५२८ | २२ |
| ····रूपं | ····रूपां | ३९९ | २० | इन्द्र | इन्द्रः | ५३४ | १६ |
| बहुधानस्य | बहुधनस्य | ४०० | २३ | सामगायनं | सामगानम् | ५४९ | २७ |
| स्यात | स्यात्तं | ४०२ | १३ | धनानिलौकि० | ० | ५५३ | २६ |
| प्रत्येकः | प्रत्येकं | ४०२ | १९ | जालस्य | जलस्य | ५५४ | १२ |
| खाण्डानि | खण्डानि | ४०५ | २१ | उस्पस्थाने | उपस्थाने | ५५७ | २० |
| धातुप्रत्ययो | धातुप्रत्यययो | ४०६ | ६ | तस्तुद्वैते | वस्तुद्वैते | ५६४ | १७ |
| स्ववना | स्ववान् | ४०६ | ३१ | षड्भिः | षड्भिः | ५६७ | १३ |
| कृमिः | क्रिमिः | ४०८ | २ | ····सवर्द्धैः | ····सम्बर्द्धैः | ५६७ | २५ |
| दुस् | दुर् | ४०९ | ४,८ | लीक···· | लोक···· | ५७५ | ७ |
| निमन्त्रणं | निमंन्त्रणं | ४१२ | १३ | सूर्याः | सूर्या | ५७५ | १३ |

| | | | |
|---|---|---|---|
| वाप्वादित्यौ | वाय्वादित्यौ | ५७९ | १४ |
| आभिप्रवन्त | अभिप्रवन्त | ५९० | १० |
| स्थाने | स्थाने | ५९१ | २६ |
| द्वदश | द्वादश | ६०० | २४ |
| किमपि | किमिति | ६२८ | १३ |
| आसुष्वयन्ती | सुष्वयन्ती | ६३० | २६ |
| कारु | कारू | ६३१ | २६ |
| शकुले | शकुने | ६५१ | १४ |
| चतुरः पदः | चतुरः पदः | ६५६ | ९ |
| आतः | जाताः | ६५७ | ५ |
| रुपं | रूपं | ६५७ | २५ |
| शत्रूं | शत्रुं | ६७१ | २३ |
| | * | ६७२ | २७ |
| प्रधनम् | प्रधनः | ६७६ | २१ |
| ,, | ,, | ६७६ | २२ |
| मुद्गिलः | मुद्गगिलः | ६७८ | १८ |
| विप्राशनाद्वा | विपाशनाद्वा | ६८२ | ५ |
| विपापणाद्वा | विप्रापणाद्वा | ६८२ | ६ |
| दृश्यये | दृश्यते | ६९६ | ९ |
| समीमासाः | समीपमासाः | ७०२ | २२ |
| यज्ञस्याष्ठ···· | यज्ञस्याष्टः···· | ७०४ | २४ |
| सम्भधनाय | सम्भजनाय | ७०७ | २७ |
| यास्कवनम् | यास्कवचनम् | ७११ | २० |
| इति लकि | इति लुकि | ७१५ | २१ |
| 'इन्द्र' | 'इन्द्रः' | ७१८ | २१ |
| ज्ञाषयति | ज्ञापयति | ७२१ | २६ |
| धारयुक्तो | धारायुक्तो | ७२५ | १९ |
| मूळती···· | मूळाती···· | ७२६ | ६ |
| वसुतोर्नि···· | वसतेर्नि···· | ७२८ | ३० |
| त्वङ्गिरसो | त्वाङ्गिरसो | ७५१ | २९ |
| ऽनुभति | अनुभवति | ७५२ | ६ |
| ज्वाल्वासमूहः | ज्वालासमूहः | ७५२ | १५ |
| त्वमाङ्गिरसो | त्वामङ्गिरसो | ७५२ | १८ |
| प्रजा | प्रज्ञा | ७५९ | १४ |
| लोद्भत्वात् | लोद्भवत्वात् | ५७९ | २८ |
| मन्य | मन्म | ७६० | १९ |
| यया | यथा | ७६५ | ३ |
| प्रह्माणः | ब्रह्माणः | ७७१ | १३ |
| पात्राणि | पत्राणि | ७७३ | २२ |
| ····मुच्छ्रेत् | ····मुदश्रेत् | ७८१ | ३ |
| स्वकः | स्वकैः | ७८६ | १ |
| अविकारे | अधिकारे | ८०४ | ६ |
| ····भिमानं | ····भिधानं | ८०९ | २६ |
| वति | भवति | ८१८ | १० |
| ····विर्मिमाय | ····निर्मिमाय | ८१८ | १० |
| अन्ये | अध्न्ये | ८२२ | २ |
| देवनां | देवानाम् | ८२७ | १६ |
| तथाभूथं | तथाभूतं | ८३० | २७ |
| अधो | अन्धो | ८४७ | ६ |
| ····स्तथुश्च | स्तस्तस्थुषश्च | ८४८ | १ |
| निर्वक्तव्यः | निर्वक्तव्याः | ८८६ | ७ |
| पीड्यमानो | पीड्यमानो | ८९७ | २३ |
| मुख्यप्राणास्य | मुख्यप्राणस्य | ९१२ | २३ |

* "जघने जङ्घन्यते: । अश्वानि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय" (लेखकप्रमादादमुद्रितः)

# धन्यवाद और वक्तव्य

धन्यवाद—

इस "निरुक्तसम्मर्शः" ग्रन्थ के अनुसन्धानपूर्वक रचनार्थ बड़ोदा, जोधपुर, अलवर, होश्यारपुर के ग्रन्थभण्डारों में हस्तलेखों के देखने की यात्रा तथा भाष्य-करने, सुलेख प्रेसकापी और प्रकाशन आदि में सब व्यय पन्द्रह सहस्र रूपए पड़ते हैं। जिनमें लगभग ९ सहस्र रूपए सहायतारूप में हमें प्राप्त हुए हैं उन सहायता दाताओं का हम हार्दिक धन्यवाद करते हैं, उनमें निम्न विशेष सहायतादाताओं का मैं बहुत आभारी हूं—

१—श्री० महात्मा आनन्द स्वामीजी सरस्वती से १०००)

२—श्री० महात्मा प्रभु आश्रितजी रोहतक ( स्वाश्रम ) से १०००)

३—,, ,, ,, ,, ,, द्वारा ( स्वभक्तों ) से १३५०)

४—श्री० पं० सुखदेवजी दर्शनोपाध्याय गुरुकुलकांगड़ी विश्वविद्यालय द्वारा श्रीमती जसवन्त कौर सेठानी कलकत्ता से १०००)

५—उक्त पण्डित जी द्वारा ही अन्य जनों से संगृहीत ४००)

६—श्री हंस राज जी गुप्त नई दिल्ली से प्रेसकापी बनवाने के लिये १०००)

७—श्रीमती सत्यवतीजी सेठानी देहरादून से ५००)

८—श्री० मोती लालजी ( तीतरोंवाले ) सहारनपुर से ३५०)

९—श्री० खुशीराम जी आर्य ब्रह्मनगर अमृतसर से ३००)

१०—श्री० विजय कुमारजी १७ बारह खम्बा रोड नई दिल्ली से २००)

११—श्रीमती कौशल्या सेठी वानप्रस्था पुत्री प्रिंसिपल दीवानचन्दजी से १७५)

१२—श्री० सेठ प्रताप सिंहजी शूरजी वल्लभ बम्बई से १५०)

वक्तव्य—

ऐसे अनुसन्धान कार्य बहुधनसाध्य हैं, इसमें सहायतादाता धनी अत्यन्त न्यून हैं, ईंट पत्थरों पर लाखों रूपए लगाने वाले दानी सेठ तो मिलते हैं, अन्य स्थान से भी कुछ न मिले * तब ऐसे कार्य कैसे हो सकें? अब तो ६२ ग्रन्थों को लिखकर मेरी अंगुलियों में लिखने की शक्ति नहीं रही। अतः अब मेरे द्वारा अनुसन्धान कार्य करना समाप्त ही है। अब कहीं बैठकर पढ़ाना चाहता हूं।

स्वामी ब्रह्ममुनि परिव्राजक विद्यामार्तण्ड।

---

* महात्माओं विद्वानों की विशिष्ट धनसहायता से यह पुस्तक प्रकाशित हो सकी।